# SARASVATI BHAVANA GRANTHAMALA

VOL. 88

**GENERAL EDITOR :—**
Kshetresachandra Chattopadhyaya
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi



# PADAVĀKYARATNĀKARA

*by*

GOKULANĀTH UPĀDHYĀYA

*With*

Gūḍhārthadīpika of Yadunāth Mishra



VARANASI
1960

सरस्वतीभवन-ग्रन्थमाला

(८८)

गोकुलनाथोपाध्यायविरचितः

# पदवाक्यरत्नाकरः

यदुनाथमिश्ररचितगूढार्थदीपिकासंवलितः

सम्पादकः

श्रीनन्दिनाथमिश्रो न्यायसाहित्याचार्य्यः

वाराणस्याम्

१८८२ तमे शकाब्दे

॥ श्रीः ॥

वाग्देवीं मनसा ध्यात्वा
पदवाक्यविबोधिनीम् ।
पदवाक्यप्रमाणज्ञ-
गोकुलनाथसत्कृतिम् ॥ १ ॥

**पदवाक्य**-द्वयस्यैव
**रत्नाकर**-संज्ञिताम् ।
टीकया यदुनाथस्य
प्रसिद्धिं गमयाम्यहम् ॥ २ ॥

गम्भीरार्थस्त्वयं ग्रन्थो
द्विः प्राकाश्यमुपागतः ।
पुनः प्रकाश्यतेऽस्माभि-
र्व्याख्यानेन समावृतः ॥ ३ ॥

वीक्षन्तां पुस्तकमेत-
च्छब्दशास्त्रे कृतादराः ।
प्रार्थनं काशिकापुर्यां
**क्षेत्रेशचन्द्रशर्मणः** ॥ ४ ॥

# आमुखम्

महान् प्रमोदावसरोऽद्य व्युत्पित्सूनां व्युत्पन्नानाञ्च कृते यन्मुद्राप्य प्रकाश्यते बहुलतमगम्भीरविचारपूर्णं टिप्पणटीकोपेतं पदवाक्यरत्नाकराख्यं ग्रन्थरत्नम् ।

ग्रन्थस्यास्य निबन्धा कवितार्किकशिरोमणिरुपाध्यायापरनामको महामहोपाध्यायपदभूषितो मिथिलामहीमण्डनो मण्डन इव त्रयीमन्थनकुशलो वाचस्पतिरिव निखिलदर्शनाचार्य्यो विद्वद्वर्य्यो गोकुलनाथशर्मा । यद्विषये च प्रसिद्ध्यति पद्यमदः—

१ "मातर्गोकुलनाथनामकगुरोर्वाग्देवि ! तुभ्यं नमः ।
पृच्छामो भवतीं महीतलमिदं त्यक्त्वैव यद् गच्छसि ॥
भूलोके वसतिः कृता मम गुरौ स्वर्गे तथा गीष्पतौ ।
पाताले फणिनायके भगवति ! प्रौढिः क लब्धाधिका ॥"

अयञ्चाधिनिमिजनपदं प्रसिद्धतमे दरभङ्गामण्डलान्तर्गत-मङ्गलवनी-(मङ्गरौनी) समाख्यग्रामे [2] फणदहनामके मैथिलब्राह्मणवंशेसीमविद्यानिधि-महामहोपाध्याय-श्रीपीताम्बरशर्म्मण उमादेव्यां लब्धजन्मा श्रीनगरे चन्द्रशेखर-सुन्दरीचरणारविन्दमकरन्देन्दिराविलासमन्दिराणां फत्तेशाहाभिधनृपवराणां राजधान्यां गुरुरिव निवसन् वादिवृन्दैरसमाधेयान् बहुविधान् ग्रन्थान् कृतवान दर्शने स्मृतौ साहित्ये च, यानद्यापि मैथिलाः सगौरवं पठन्ति पाठयन्ति च ।

फणदहकुलस्य प्रसिद्धिर्मिथिलायामद्याप्यस्ति । लिखितञ्च तदमृतोदय-नाटकान्ते ग्रन्थकर्त्रापि । तथाहि—"श्रुतिः-वत्से ! आन्वीक्षिकि ! सत्यमाह गिरां देवी, भवन्त्येवंविधा एव फणदहद्विजाः, पश्य—

---

१ एतच्च पद्यं तस्मिन् विद्वत्प्रकाण्डे देवकल्पे नवतिसमदेशीयेधिवाराणसि निर्वाणपदमुपेयुषि तच्छिष्येण केनचिदुपनिबद्धमिति श्रूयते ।

२ 'फन्नावार' इति मैथिलपञ्जीप्रसिद्धं नामास्य समुद्द्योतते । अमुमेव चार्थममृतोदय-नाम्नो नाटकस्यापवर्गप्रतिष्ठानामकेङ्के एकावलीग्रन्थावतारिकायाञ्च स्वयमेव ग्रन्थकर्त्ता विस्तरेणाह । तत्र —

"सुभाषितेर्ष्याकलुषसुलोचनविषानलैः ।
फणं दहन्ति शेषस्य ततः फणदहा मताः ॥"

इति पद्येन फणदहनाम्नो वंशस्य महिमा प्रपञ्चितः ।

"तत्र वंशे विद्यत एव विद्यानिधिः पीताम्बरो नाम, यः किल—

प्रकृतिगहने वैशेषिके विवृतिं व्यधा—
दकुरुत चतुर्वर्गव्याख्यामृतानि च भारते ॥
भरतवचसा तत्त्वख्यात्यै निबन्धमभाषत ।
व्यतनुत तथा तिस्रो वाणीविलासकविः कथाः ॥"

इति पीताम्बरनाम्ना स्वपिता प्रशंसितः।

"भगवति ! अस्ति तस्य परापरब्रह्ममीमांसनमांसलशासनस्य सकलसारस्वतसंसारसरणिविभागविदो विद्यानिधेः पीताम्बरस्य चतुर्णां पुत्राणामेकतमो गोकुलनाथो नाम ।" इत्यमृतोदयगद्येन गोकुलनाथनाम्नः स्वस्य पीताम्बरपुत्रत्वं व्यक्तीकृतम् ।

पीताम्बरपुत्रेषु त्रिलोचन-धनञ्जय गोकुलनाथ-जगद्धरसंज्ञकेष्वयं गोकुलनाथस्त्रिलोचनकवि-धनञ्जययोरनुजः जगद्धरस्याग्रजन्मा इति च —

"यो जन्मतश्च गुणतश्च मतः कनिष्ठः ।
श्रीमत्त्रिलोचनकवेश्च धनञ्जयाच्च ॥
स श्रीजगद्धरधरातिलकाग्रजन्मा ।
निर्मास्यति प्रगुणतत्त्वरसं प्रबन्धम् ॥"

इत्यमृतोदयपद्येन व्यक्तीकृतम् ।

अनेन च स्वपितुः पीताम्बरादेव सर्वाणि शास्त्राण्यधीतानि । तदुक्तममृतोदयान्ते

"अधिगतमुपाध्यायाद्विद्यानिधेरनुचिन्तितम् ।
विरलविषयग्राहिण्यपि स्वया जडया धिया ॥
बहुलमथवा स्तोकं यद्यन्मया श्रुतमर्जितम् ।
परिणतिरियं तस्य प्रीतस्तयास्तु परः पुमान् ॥" इति ।

उमादेवीसुतत्वं फत्तेसाहनृपवराश्रितत्वञ्चास्य स्वकृतैकावलीग्रन्थावतारिकातोऽवगम्यते । तत्र—

"वृत्तसागररत्नाना सारमुद्धृत्य निर्मिता ।
एकावली फतेसाह ! तव कण्ठे लुठत्वसौ ॥"
"विद्यानिधिक्षीरधिपारिजातमुमासुतं गोकुलनाथधीरम् ।
एकावली सङ्घटनानिवेशे न्ययुङ्क्त फत्तेपतिसाहभूपः ॥"

इति लिखितमस्ति ।

¹निगमसरसो माने दण्डाः प्रमत्तसरस्वती-
स्खलनपतनारम्भे हस्तावलम्बनयष्टयः ॥
सुकृतसदनोपादानन्ते भवन्ति भजन्ति ये ।
रुचिपतिकवेर्वंशस्तम्बप्ररोहकरीरताम् ॥"

इति । रुचिपतिश्च गोकुलनाथात्पूर्वं पञ्चमस्थाने आसीदिति पञ्जीप्रबन्धादव-सीयते । रुचिपतिमारभ्यैव वाग्देवता मन्त्रसिद्धा प्रकाशयति कुलमेतत् । अद्या-प्येतद्वंशजा भूषयन्ति मिथिलास्थं ²मङ्गलवनी-( मङ्गरौनी )-ग्रामम् । वर्त्तमान-दरभङ्गामहाराजस्य श्यालकाः श्रीकृष्णमणिझाप्रभृतयः गोकुलनाथात्परतः सप्तमस्थाने सन्ति इत्यपि पञ्जीप्रबन्धादेवावसीयते । वत्सगोत्रस्य शुक्लयजुर्वे-दान्तर्गतमाध्यन्दिनशाखाध्यापकस्य कात्यायनश्रौतसूत्र-पारस्करगृह्यसूत्रानुयायि-ग्रन्थकर्त्तुः 'कन्दह खनाम' इति मूलग्राम आसीदिति च पञ्जीप्रबन्धादेवासीयते ।

अयञ्च कविः पञ्चदशाधिकषोडशशततमशालिवाहनशकाब्दे मिथिला-मलङ्कुर्वन्नासीदिति तदीय–³मासमीमांसाख्यग्रन्थादवसीयते । महानुभावस्यास्य समकालीनो मिथिलाधिपतिरिदानीन्तनराजकीयखण्डवलाकुलावतंसमहाराजश्री-राघवसिंहाभिधो देवदेव आसीदिति श्रूयते ।

किंवदन्ती चैषा यदधीतसर्वशास्त्रो गोकुलनाथोपाध्यायः शरयन्त्र-( तदानीन्तनसर्वज्ञतोपाधि ) प्राप्तये दरभङ्गामण्डलान्तर्गतकोइलखग्रामनिवासिना

---

१ ये रुचिपतिकवेर्वंशस्तम्बस्याङ्कुरता भजन्ति, ते दण्डवन्निगमसरसोगाधता प्रमि-ण्वन्ति अनवहितसरस्वतीपदसञ्चारपतनाद्यक्षणे हस्तावलम्बनार्था यष्टयो वंशप्ररोहेण सदना-रम्भ इव पुण्यगृहस्य साधनभूताश्च भवन्तीति तात्पर्य्यम् ।

२ ग्रामेऽस्मिन् त्रिकोणयन्त्र विशदाकार बहुकालाद्विद्यते । ग्रामीणाना वसतिश्च तदाकारेणैवास्ति । त्रिकोणयन्त्रस्य त्रिषु भागेषु मन्दिराणि सन्ति, तेषु देवीमूर्त्तयः प्रति-ष्ठिता विराजन्ते । इयञ्च पद्धतिः कामाख्याक्षेत्र विहायात्रैवास्तीति मिथिलाभूमेः हृदयस्थान-मेतदिति वदन्ति वृद्धाः ।

३ भागलपुरनगरस्थ-व्यासयन्त्रालयतः प्रकाशितायाः मासमीमासाया १८ पृष्ठे क्षयमास-विचारप्रसङ्गे "अस्मिन्नेवैकत्रिंशदधिकषोडशशताङ्किते १६३१ (अतीते) शककाले वैशाखो मलमासः" "तदधुनापि सम्भवत्येव, सम्प्रति हि शकाब्दाः एकत्रिंशत्षोडशशती" इति पङ्क्तिद्वयं विद्यते । तेनास्य लिपिकालो ग्रन्थकर्त्तुश्च तत्पूर्वंस्थित्या समयः सुनिश्चितः प्रतिभाति ।

[1]सकलविद्यापारङ्गतानामुमापत्युपाध्यायानां गृहं गतवान्। तदन्तिके च परीक्षावधि-षण्मासान् यापितवान्। तन्मध्य एव क्षयमासविषये विदुषामैकमत्यं सम्पादयितुं महाराजराघवसिंहेन भौराग्रामे धर्मसभा आहूता। तस्याश्च माध्यस्थ्याय सर्वतो वृद्धा उमापत्युपाध्याया निवेदिताः। ते चातिजरतित्वात् वर्षासमये रामपट्टी-ग्रामस्थ-कमलानदीमेकवाहिन्या नौकयाप्युत्तरितुमसमर्था गोकुलनाथं निर्णयाय [2]पत्रोत्तरेण सह प्रैषयन्। तदनन्तरममुमेवार्थं सिद्धान्तयितुं मासमीमांसाख्यं धर्मनिबन्धं गोकुलनाथो व्यरचयत्।

एतन्निर्मिताश्च परश्शता ग्रन्थाः, येषु साम्प्रतमुपलभ्यमानाः कतिचनात्र नामतो निर्दिश्यन्ते। १—चक्ररश्मिः, २—विद्योतम्, ३—न्यायसिद्धान्ततत्त्वम्, ४—मिथ्यात्वनिरुक्तिः, ५—पदवाक्यरत्नाकरः, ६—दिक्कालनिरूपणम्,

---

१ इमे च महानुभावाः पारिजातहरण शुद्धिनिर्णय-पदार्थीयदिव्यचक्षुःप्रमाणप्रमोदाद्यनेकग्रन्थनिर्मातारस्तदानीं विद्वत्समाजे ज्ञानवृद्धा वयोवृद्धाश्चासन्।

२ पत्रोत्तरे मिथिलाभाषायामुपनिबद्धमस्वीकारात्मकं प्रसिद्ध्यति पद्यमदः—

"एकठा नाव नदी मरखाहि।
हम अतिवृद्ध चढ़व नहिं ताहि॥
गोकुलनाथ कहैछथि जैह।
हमरो सम्मति जानव सैह॥
नहिं क्षयमास कहैछथि जत।
से सभ जानव कबिराहाक मत॥"

१—रश्मिचक्रमित्यपि नाम विद्यते। एष च तत्त्वचिन्तामणिव्याख्यानभूतो ग्रन्थः।
२—दीधितिविद्योत इत्यपि नाम दृश्यते। एष च तत्त्वचिन्तामणिदीधितेष्टीकाग्रन्थः।
३—अस्य नाम स्वयमेव ग्रन्थकर्त्रा पदवाक्यरत्नाकरस्य पञ्चमीविवरणे निर्दिष्टम्। एष च ग्रन्थो न्यायसिद्धान्तभूतपदार्थाना सङ्कलनात्मकोतीव विस्तरोमुद्रित एवास्ति।
४—मिथ्यात्वनिर्वचनमित्यपि नाम समुपलभ्यते। अत्र चाल्पीयसा सारगर्भेण वाक्येनाद्वैतमतं स्थापितम्। एष च ग्रन्थोद्वैतसिद्धिग्रन्थात् साधिक विशिष्यते।

**ग्रन्थकर्त्तुर्वंशस्तम्भो यथा—**

| | |
|---|---|
| सर्वस्वदाता महामहोपाध्याय-रघुनाथः | महामहोपाध्याय लक्ष्मीनाथः |

| | | | |
|---|---|---|---|
| अवलम्बसरस्वतीपदाङ्कित-त्रिलोचनः | महामहोपाध्याय-धनञ्जयो दण्डपाणिर्वा | टीकाकारमहामहोपाध्याय-गोकुलनाथः | महामहोपाध्यायजगद्धरो जगन्नाथो वा |

धीरेन्द्रः

लाखा

१ मदनः

| | | | | |
|---|---|---|---|---|
| पण्डितराजपदाङ्कितमहामहोपाध्याय मधुसूदनः | विद्यानिधिपदाङ्कितमहामहोपाध्याय-नैष्ठिकप्रवर-पीताम्बरः | महापाध्यायो-मानन्दः | महोपाध्याय-वागीशः | विद्यासिन्धुपदाङ्कित-त्रिदण्डी सन्यासी रतीशः |

सदुपाध्याय-रामचन्द्रः

| | | | |
|---|---|---|---|
| मुकुन्दः | कोशी | होरीनः | हरिहरप्रसिद्ध-सदुपाध्याय-नीकारः |

महामहोपाध्याय-रामेन्द्रसन्यासी रुचिपतिः

गोढि झा मूलपुरुषः

१ अस्य पूर्णन्नाम मदनोपाध्याय इत्यासीत्। अनेन प्रतिष्ठिता मङ्गलवनी-( मङ्गरौनी ) ग्रामस्य दक्षिणदिगि अष्टभुजामूर्त्तिर्विद्यते। तन्त्रबलेन सर्वविधमैश्वर्य्यमनेन प्राप्तमिति पारम्परिकी जनश्रुतिः।

७—कुसुमाञ्जलिविवरणम्, ८—बौद्धाधिकारविवरणम्, ९—रसमहार्णवः, १०—काव्यप्रकाशविवरणम्, ११—लाघवगौरवरहस्यम्, १२—शक्तिवादः, १३—मुक्तिवादः, १४—कुण्डकादम्बरी, १५—कादम्बरी, १६—कादम्बरीप्रश्नोत्तराणि, १७—कादम्बरीकीर्त्तिश्लोकाः, १८—एकावली, १९—वृत्ततरङ्गिणी, २०—शुद्धिविवेकः, २१—अशौचनिर्णयः, २२—शिवस्तुतिः, २३—मासमीमांसा, २४—सूक्तिमुक्तावली, २५—आलोकविवरणम्, २६—अमृतोदयनाटकम्।

---

७-कुसुमाञ्जलिप्रकरणस्य व्याख्यानभूतोयं ग्रन्थः कुसुमाञ्जलिटीकेति नाम्नापि व्यपदिश्यते। ८-अस्य च नाम ग्रन्थकर्त्रैव ग्रन्थे द्वितीयाविवरणे धृतम्। आत्मतत्त्वविवेकटीकेत्यपरञ्च नामान्यत्र दृश्यते। ९—अस्य च नाम प्रसङ्गात्प्राप्तेलङ्कारप्रस्तावेस्यैव ग्रन्थस्य द्वितीयाविवरणे निर्दिष्टम्। १०—एष च ग्रन्थो वाराणसेयसंस्कृतविश्वविद्यालयीयानुसन्धानविभागेन प्रकाश्यमानो विद्यते। ११—लाघवगौरवज्ञानयोः प्रतिबन्धकत्वादिविचारो विस्तरतो निर्दिष्टः। १२—अयञ्च गादाधरीयात्समधिकं विशिष्यतेल्पतमश्च लेखतः सारबहुलत्वात्। १३—मुक्तिविमर्श इत्यपि नाम दृश्यते। १४—कादम्बरीनाम्नी कन्यास्य बाल्य एव दैवाज्जाह्नवीजले निमज्य परासुर्बभूवेति तद्वात्सल्येन कतिपये ग्रन्था अनेन निर्मिताः, येषु कियन्तोत्र नामग्राहन्निर्दिष्टाः समुपलभ्यन्त इदानीम्। तत्र कुण्डकादम्बरीभूमिकाया यथा—

"आरम्भाव प्रकृतिकृपणा बाधिभिर्बाध्यमानैः।
विक्रोशारः करुणवचनं पुत्रि! कादम्बरीति॥
कोयं लोकः क इव विषयः किं पुर को निवासः।
यस्मिन्नस्मद्विमुखहृदया त्वं निलीय स्थितासि॥"
"कुण्डकादम्बरीनाम्ना ग्रन्थोयन्तव कीर्त्तये।
मया गोकुलनाथेन सोपपत्तिर्निबध्यते॥"

१५—अयञ्च द्वैतनिर्णयटीकाग्रन्थः। १८—छन्दोग्रन्थः फत्तेसाहनृपाज्ञया लिखितोतिरमणीयः।

२०—एष ग्रन्थो रुद्रधरोपाध्यायकृतात्समधिकं विशिष्यते।

२२—शिवशतकमिति नामान्तरमप्यस्ति, काव्यमालातः प्रकाशितोयं ग्रन्थः। २३—क्षयमासविवादे प्रचलिते महाराजराघवसिंहाज्ञया निर्मितोयं ग्रन्थः। २४—वाराणसेयसंस्कृतविश्वविद्यालयीयानुसन्धानविभागेन प्रकाश्यमानास्ति। २५—तत्त्वचिन्तामणिव्याख्यानभूतस्य पक्षधरकृतालोकस्य टीकाग्रन्थः। २६—समस्तनिगमसारोपनिषत्प्रतिपाद्यं वस्तु नाटकमुखेनोपनिबद्धमस्मिन् ग्रन्थे अयञ्च केवलः सटीकश्च मुद्रितोस्ति।

## टीकाकर्तृपरिचयः

दरभङ्गामण्डलान्तर्गततलालगञ्जग्रामवास्तव्यजयनाथमिश्रात्मजन्मा [1]श्रीयदुनाथमिश्रः [2]सोदरपुरनामके मैथिलश्रोत्रियवंशे पञ्चाशीत्यधिकाष्टादशशततमे ख्रैष्टे वर्षे जन्म लेभे। एष महानुभावः प्रथमं महावैयाकरणश्रीजुडानझाशर्म्मसकाशाच्छब्दशास्त्रमधीत्य दरभङ्गामण्डलान्तर्गतगङ्गौलीग्रामवास्तव्यमहामहोपाध्यायश्रीलोकनाथझाशर्म्मणः सकाशात् कुलक्रमागतं तर्कशास्त्रं श्रमक्रमाभ्यामध्यैष्ट। समधीत्य तर्कशास्त्रमयं दरभङ्गामहाराज्ञ्या लक्ष्मीपुरविद्यालयेऽध्यापनाय नियुक्तः। तदारभ्य श्रौतस्मार्त्तकर्म्मनिपुणो दर्शनपारदृश्वा शब्दानुशासनकुशलो बहुकालं यावच्छात्रानध्यापयामास। परश्शतच्छात्रेष्वेकतमः श्रीराधाकृष्णझामहोदय आसीत्, यस्य कतिपये छात्रा इदानीमध्यापयन्ति प्रख्यापयन्ति च गुरुयशोगाथाम्। प्रारम्भत एवार्थसङ्कटे सत्यपि स्वकुलोचित नित्यं नैमित्तिकञ्च कर्म्म सम्पादयन् अध्ययनाध्यापनयोर्ग्रन्थलेखने च सलग्नचित्तः स्ववैदुष्यं प्रावर्द्धयत्।

विदुषानेन व्यञ्जनावादः समासशक्तिवादः पदवाक्यरत्नाकरस्य गूढार्थदीपिकानाम्नी टीका [3]न्यायसूत्रप्रदीपश्चेति ग्रन्थचतुष्टयी निर्मिता। दैवदुर्विलसितेन चाकस्मादेवाष्टाविंशत्यधिकोनविंशतिशततमे ख्रैष्टे वर्षे वर्षीयस्या जनन्या सह विद्वत्समुदायाय पारिवारिकजनाय च नितरामसहनीयं शोकाभिभवं समुत्सृज्याल्पीयस्येव वयसि त्रिदिवपथातिथिरभावि। एषु ग्रन्थेषु व्यञ्जनावादो विहारसंस्कृतसमित्यवयवीभूतशास्त्रविचारपरिषदा १९२६ ख्रैष्टाब्दे पुरस्कृतः प्रकाशितश्च वर्त्तते। समासशक्तिवादाख्यो निबन्धो वाराणसेयसंस्कृतविश्वविद्यालयस्य सारस्वतीसुषमायां प्रकाशितः। एष च टीकाग्रन्थः पुरतो मनीषिणां समुपस्थाप्यते।

---

१ अयञ्च मम सपिण्डः पितृव्यपुत्र आसीत्, बाल्यकाले स्वपुत्रेण सह शपथेन सख्यमकारयत्, स्मृत्वा चेदानीं यथामति तन्निर्वहामि।

२ वंशस्यास्य मूलपुरुषोऽयाचीप्रसिद्ध-भवनाथमिश्रः शङ्करमिश्रस्य पितेति वंशस्तम्भादग्रे व्यक्तीभविष्यति।

३ ग्रन्थोऽयमपूर्णो नातिविस्तरश्च वर्त्तते। यस्यादौ पद्यमदः—

"जगद्विदितवैदुष्यशङ्करान्वयजन्मना।<br>न्यायसूत्रप्रदीपोऽयं यदुनाथेन तन्यते॥" इति।

## टीकाकर्त्तुर्वंशस्तम्बो यथा—




१—अयञ्च भारतीयदर्शनटीका-निबन्धकर्त्ता बालत एव प्रतिभासम्पन्न आसीत्। यद्विषये कञ्चिद् राजानं प्रत्युत्तरमदः पद्यं प्रसिद्ध्यति—

"बालोऽहं जगदानन्द ! न मे बाला सरस्वती।
अपूर्णे पञ्चमे वर्षे वर्णयामि जगत्त्रयम्॥" इति।

आचारतरङ्गिण्यवतारिकायामपि एतद्वंशजेन ग्रन्थकृता रविनाथमिश्रेण स्ववंशवर्णन-प्रसङ्गे पद्यमदो व्यलेखि—

"अलङ्कृताभून्मिथिला यदेषा ।
धीरेण श्रीशङ्करशङ्करेण ॥
भूत्वातिभीतास्सुगतास्स्वकीयम् ।
मत विहायास्तिकता प्रचक्रुः ॥"

शाण्डिल्यगोत्रस्य लाट्यायनश्रौतसूत्रगोभिलगृह्यसूत्रानुयायिनः सामवेदान्तर्गतकौथुमी-शाखीयस्यास्य 'सोदरपुरिए सरिसव' इति मूलग्राम आसीत्, सरिसवग्रामे च चतुर्दिग्भ्यः समागतानां परःसहस्राणा छात्राणामध्यापनाय 'चौपाडि' इति नाम्ना प्रसिद्ध विद्याकेन्द्रमासीत् । भक्तवत्सलः भगवाञ्छङ्करः शङ्करमिश्रस्य वसतावङ्कुरितः 'मङ्गलमहेश' इति नाम्ना प्रसिद्धस्तदारभ्य पूजा प्राप्नोति नित्यशस्तद्ग्रामीणैः । शङ्करमिश्रेण प्रतिष्ठिता सिद्धेश्वरी-मूर्त्तिरपि सम्प्रति तत्रैव विराजमाना मङ्गलमातनोति समभ्यर्थिभ्यः । स्थानद्वयमिदानीमपि सुसंस्कृत विद्यते ।

२—अस्य दूबेमिश्र इत्यपि नामान्तरमस्ति । एतद्वंशजेन रविनाथमिश्रेण कृतायामा-चारतरङ्गिण्यवतारिकायामित्थं दृश्यते—

"हरिहरपदलीनः कर्म्मकाण्डे प्रवीणः ।
सदसि गुणिगणाना वेदवादे धुरीणः ॥
सुरपुरगतकीर्तिर्याचनाशून्यवृत्तिः ।
प्रविदितमिथिलाया कोपि दूबे बभूव ॥" इति ।

मीमासानयविवेकस्य रचयितुरस्यानेकग्रन्थरत्नाना नामानि श्रूयन्ते, परन्त्वद्यापि नोपलभ्यन्ते । लौकिकमर्य्यादया सह सर्वशास्त्रज्ञत्वमस्य स्वसुतशङ्करमिश्रकृतवैशेषिकसूत्रो-पस्कारस्याद्य पद्यमन्यच्च व्यनक्ति । तत्र च—

"याभ्या वैशेषिके तन्त्रे सम्यग् व्युत्पादितोस्म्यहम् ।
कणादभवनाथाभ्या ताभ्या मम नमस्सदा ॥" इत्यस्ति ।

शङ्करेण च तत्त्वचिन्तामणिमयूख-वैशेषिकोपस्कार कण्ठाभरण-कणादरहस्यादिषु ग्रन्थेषु "अत्र पितृचरणाः" इत्यपि लिखितमस्ति ।

अथेदानीमस्य ग्रन्थस्य प्रतिपाद्यविषयं विचारप्रणालीञ्च दिङ्मात्रं प्रदर्शयामि। ग्रन्थेस्मिन् त्रयोविंशतिप्रकरणानि सप्तषष्ठ्यधिकैकशतं कारिकाश्च सन्ति। प्रकरणानां नामानि प्रारम्भे तत्सूच्या द्रष्टव्यानि। कारिकाणा व्याख्यानं विवरणसंज्ञकं ग्रन्थकारकृतमेव। कारिकाविवरणयोर्व्याख्यानं टीकाकृता विहितम्। यद्यपि मूले 'इति प्रयोजनसम्बन्धाधिकारिविवरणम्—' इत्येवमादिका पुष्पिका न दृश्यते, तथापि तत्र तत्रावान्तरप्रकरणोपसंहार-कारिकाविवरणानां दर्शनात् क्वचित्प्रकरणसमाप्तिसूचकलिपिसङ्केतस्योपलम्भाच्च व्याख्यात्रा मया च प्रकरणविभाग इहादृतः। तेषु च समानतन्त्राणा प्रतितन्त्राणाञ्च मतानि निराकृत्य पदवाक्यविषये प्रकृतिप्रत्ययार्थावलम्ब्य न्यायसिद्धान्तो निर्दिष्टः। विचारप्रणाली तु शब्दशक्तिप्रकाशिकावत् कारिका-विवरणाभ्यां स्फुटतया पदार्थप्रकाशनमेव। शब्दोत्पत्तिविषये सङ्केतविषये स्फोटे च परमतिरिच्यते शब्दशक्तिप्रकाशिकायाः पदवाक्यरत्नाकरस्य विचारः। परन्तु ग्रन्थरचनाशैली विचारप्रणाली च सैवादृता गोकुलनाथेन।

तत्र प्रथमप्रकरणे प्रथमकारिकया तद्विवरणेन च ईश्वरकृतेर्ज्जीवादिगुणा-वृत्तिधर्म्मैर्ल्लौकोत्तरत्वं प्रतिपादयता कार्य्यमात्रं प्रतीश्वरकृतेः कारणत्व सिद्धान्तितम्। सुतरा तदाश्रयस्येश्वरस्योत्कर्षातिशयध्वननादुत्कर्षज्ञानानुकूल-व्यापारस्य च प्रणमत्यर्थत्वादुक्तकारिकात्मकपद्यस्य नमस्क्रियात्मकमङ्गल-प्रतिपादकत्वेन ग्रन्थादौ मङ्गलकरणस्य शिष्टाचारपरम्परापि सुरक्षिता।

---

१ कारिकाद्याक्षरस्य नकारस्यामङ्गलबोधकतया ग्रन्थादावुत्कीर्त्तन शिष्टाचारपरम्परा-विरुद्धमिति पदव्यत्ययेन प्रथमकारिका पपठुर्गङ्गाधरशास्त्रिपादास्तद्यथा —

"विभोर्यो विश्वविषयो नान्यसाधारणो गुणः।
तस्यैषा शक्तिरखिलप्रपञ्चस्य प्रकाशने॥"

इति म० म० मुकुन्दझावख्सीशर्म्माणः प्रोचुः। परन्तु नशब्दस्य समासघटकतया पर्य्युदासबोधकत्वान्न स दोष इति टीकाकारस्वरसात्

"नान्यसाधारणो विश्वविषयो यो विभोर्गुणः।
तस्यैषा शक्तिरखिलप्रपञ्चस्य प्रकाशने॥"

इत्येव पाठो मया धृतः।

"सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धस्सप्रयोजनः ॥"

(श्लो० वा० १।१।१।१७) इति कुमारिलभट्टोक्त्या विषयप्रयोजनसम्बन्धाधिकारिणां निरूपणस्यावश्यकत्वध्रौव्ये द्वितीयतृतीयप्रकरणयोः प्रथमकारिकयैव ग्रन्थस्य विषयः शब्दः, प्रयोजनमात्यन्तिकदुःखनिवृत्तिर्मोक्षः, सम्बन्धः प्रयोज्यप्रयोजकभावादिः, मोक्षकामोऽधिकारीति प्रतिपादयता वर्णलक्षणस्याकाशगुणस्य शब्दस्याखिलवस्तुविषयकशाब्दबोधानुकूलशक्तिमत्त्वादखिलप्रपञ्चप्रकाशनसामर्थ्यं ग्रन्थप्रतिपाद्यत्वञ्च व्यञ्जनया प्रदर्शितम् । शब्दतत्त्वज्ञानस्य च "एकः शब्दः सम्यग् ज्ञातः स्वर्गे लोके च कामधुग् भवति" इति फणिभाष्योक्त्या मोक्षहेतुत्वं विस्तरेण प्रत्यपादि ।

चतुर्थपञ्चमप्रकरणयोः वर्णलक्षणस्य शब्दस्याखिलप्रपञ्चप्रकाशनसामर्थ्यं तदैव सम्भवेत्, यदा अभिधानामवृत्तिः घटादिपदेषु तिष्ठेत्, तदेवासम्भवम्—अभिधायाः प्रत्येकपरिसमाप्तत्वे घश्रवणमात्रेण कलसावगमप्रसङ्गः, समुदायव्यासक्तत्वे वर्णानामुत्पत्त्यादियौगपद्यप्रसङ्ग इत्याशङ्क्य कियता कालेन कारणेन च वर्णाः जायन्ते पदत्वञ्च प्राप्नुवन्तीत्यवतारयता पूर्ववर्णात् परोवर्णः चतुर्भिः पञ्चभिर्वापि क्षणैर्व्यवहितः पदत्वं प्राप्नोति । एवञ्च चतुष्पञ्चक्षणसाधारणमव्यवहितोत्तरत्वं निरुच्य सम्बन्धविशेषेण घकारविशिष्टटकारे घटत्वप्रकारकशाब्दबोधानुकूलसामर्थ्यमस्तीति द्वितीयकारिकया सिद्धान्तितम् । मध्ये यानि मतानि प्रनिषिद्धानि तान्यक्षरानुक्रमणिकया निर्दिष्टानि सूच्यावलोकनीयानि ।

षष्ठप्रकरणे घकारादिभिस्तद्ध्वंसेन च विशिष्टेषु वा टकारादिषु प्रपञ्चप्रकाशनसामर्थ्यं तदैव निर्वहेत्, यदि ततो घटादेरर्थस्य प्रकाशस्स्यात्? स एव न सम्भवति, अज्ञायमानानां पदानामर्थस्य प्रकाशकत्वे सर्वदैव तेषां सत्त्वाद् घटत्वप्रकारकशाब्दबोधापत्तिः, ज्ञायमानानां तेषां तज्ज्ञानानां वा तेषां भिन्नविषयकत्वादर्थस्मारकत्वाभावः, समानविषयकयोरेवानुभवस्मरणयोः कार्य्यकारणभावादित्याशङ्क्य तद्विषयकस्मरणं प्रति तद्विषयकानुभव इव द्वयोस्सम्बन्धिनोः सम्बन्धस्य च पूर्वं ज्ञाने तज्जन्यसंस्कारे च सति तयोरेकज्ञानमुद्बोधकमासाद्यापरस्मरणमित्यस्यावश्याभ्युपेयतया पदज्ञानमप्युद्बोधकविधयैव पदार्थस्मारकमिति तृतीयकारिकया सिद्धान्तितम् । संस्कारविशेषस्यार्थस्मरणोपधायकत्वं विशेषकार्य्यकारणभावनिर्वाह्यम्, न तु क्लृप्तकार्य्यकारणभावनिर्वाह्यमिति च दर्शितं विवरणमुखेन । मध्ये स्मरणान्वयबोधयोः

पदपदार्थसङ्गतित्रितयविषयकत्वमभ्युपगच्छतां विशेषकार्य्यकारणभावमन्तरेण सामान्यकार्य्यकारणभावेन स्मरणमुपपादयतां शाब्दिकानां मतं त्रितयविषय-कत्वमन्वयबोधस्यासम्भवीति तर्कप्रमाणाभ्यां खण्डितञ्च ।

सप्तमप्रकरणे पदपदार्थयोः सम्बन्धसत्त्व एव तज्ज्ञानस्योद्बोधकविध-यार्थस्मारकत्वं सम्भवति, ततश्च शाब्दबोधजनकत्वमपि पदस्योपपन्नं भवेत्तदेव न, विशेषाभावकूटस्य सामान्याभावसाधकतायाः प्रसिद्धत्वात् संयोगादिविशेषा-भावकूटवत्त्वेन पदस्य पदार्थे सम्बन्धसामान्याभावसिद्धेः विशेषाभावकूटस्य च पूर्वं सिद्धत्वादित्यवतार्य्य पदस्यार्थेन सङ्केत एव सम्बन्ध इति चतुर्थकारिकया सिद्धान्तितम्। सङ्केतश्च अस्माच्छब्दादयमर्थो बोद्धव्यः एतत्पदममुमर्थं वा बोधयत्वित्याकारकेश्वरेच्छारूपः ।

मध्ये च 'ज्ञाने पदानां शक्तिर्न त्वर्थे' इति वादिना मीमांसकविशेषाणा मते पदे बोधजनकत्वशक्तिः स्थापिता, प्रमाणिता च भर्तृहरिवाक्याद् बोधजन-कत्वशक्तेर्योग्यतारूपत्वम्। एवं सत्यप्यपभ्रंशानां वाचकत्वापत्तिस्तेषु तादृश-शक्त्यस्वीकारादेवापसरति। तेभ्यो बोधश्च साधुशब्दस्यानुमित्या स्मृत्या वा भविष्यत्येवेत्यपि हरिवाक्यात् प्रदर्श्य पक्षान्तरेण ज्ञापकत्वलक्षणस्य वाचकत्वस्य सत्त्वेपि क्रतूपकारकत्वलक्षणस्य साधुत्वस्यासिद्धत्वं भट्टोजिदीक्षितवाक्यान् प्रतिपादितम्, परन्तु जनकत्वशक्तेः परिभाषाशब्दे पूर्वमग्रहेपि पाणिनिसङ्केतस्य ज्ञानमात्रादेव तत्तदर्थबोधोदयेन नैतन्मतं समीचीनमित्यप्याह विवरणमुखेन ।

ईश्वरसङ्केतस्य पदपदार्थयोः सङ्गतित्वं व्यवस्थाप्य ५–७ तमकारिकाभिः शक्यतावच्छेदकभेदेन नित्यत्वजन्यत्वाभ्याञ्च सङ्केतस्य दृष्टान्तद्वारा वैचित्र्यं प्रत्यपादि। नित्यसङ्केतोभिधानाम ईश्वरसमवेतः जन्यश्च परिभाषानाम जीव-समवेतः तयोरेकरूपेणैव पदार्थस्मारकत्वमनुभावकत्वञ्चेत्यपि कथितम् । "एकादशे द्वादशेहनि वा पिता नाम कुर्य्यात्" इति श्रुतिघटकनामपदस्या-भिधानिरूपकपरत्वात् पित्रादिसङ्केतितचैत्रादिपदेष्वभिधैवेति केषाञ्चिन्मतं "द्व्यक्षरम्..." इत्यादिनामप्रकरणस्थपारस्करगृह्यवाक्याद् दृढीकृत्य आजानिक-प्रयोगविरहस्याभिधाबाधकत्वेन परिभाषयैवोपपत्तिस्तत्रेत्युक्तम् ।

निरुक्तश्रुतिघटकनामपदस्य प्रातिपदिकपर्य्यायतया तद्रक्षार्थे वृत्ति-मत्त्वस्वरूपमर्थवत्त्वं पित्रादिसङ्केतितचैत्रादिपदेष्वावश्यकम्, वृत्तिश्च शक्ति-लक्षणान्यतररूपा। एवञ्चाधुनिकनाम्नामशक्तत्वे प्रातिपदिकसंज्ञानुपपन्नैव स्यादिति मणिकारमतं टिशब्दादीनां प्रातिपदिकत्वबोधकप्रमाणाभावेनार्थवत्त्वाभावात्प्राति-पदिकसंज्ञानुपपत्त्या 'टेः' इत्यादिप्रयोगानुपपत्तिरित्यस्वरसेनोपेक्षितप्रायम् ।

ईश्वरसङ्केतस्य पदपदार्थयोः सङ्गतित्वेपि तादृशसङ्केतस्येन्द्रियायोग्यत्वाद-नुमानादिनैव तद्ग्रहो वाच्यः। स च—

"शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥"

इत्यभियुक्तोक्त्या व्याकरणादिना सङ्केतत्वेन सामान्यरूपेण विशेषरूपेण वा गृह्यत इत्याशङ्कायां ८-११ तमकारिका अवतारिताः। विवेचितश्चानुमानादिभिः वाच्यताग्रहे परस्परवैलक्षण्यं विवरणमुखेन। अन्वयबोधे वाच्यताग्रहस्येव वाचकताग्रहस्यापि विनिगमनाविरहेण प्रयोजकत्वाद् वाचकताग्राहकाणि व्याकरणादिप्रमाणानि १२ तमकारिकया व्युत्पादितानि।

एवं सति 'भूसत्तायाम्' इत्यादिवाक्यस्य निर्विभक्तिकभूपदघटितत्वेना-साधुतया सप्तम्यर्थवाचकत्वस्य कथं तत्र बोध इत्याशङ्कायां स्ववाच्यवाचके लक्षणयैव निर्वाह इत्यभिहितं १३ तमकारिकया। तत्र श्रोत्रोपस्थिते भूशब्दादौ सत्तावाचकत्वान्वय इति शाब्दिकमतञ्च खण्डितं विवरणमुखेन।

स्वरूपबोधकानां भ्वादिपदानां धातुत्वे "भुवो वुक्" इत्यादावपि स्वरूपस्यैव बोधकत्वाद्धातुत्वेन प्रातिपदिकसंज्ञाविरहे सुबनुपपत्तिप्रसङ्गाद् 'भुवः' इत्यादिषष्ठ्यन्तत्वं तस्य कथमित्याशङ्कायां परिभाषया भ्वादिपदानां प्रातिपदिकत्वं १४ तमकारिकया व्यवस्थापितम्। "गवित्याह..." इत्यादौ तु इतिशब्दपरामर्श-बीजमनुभवं सम्पादयितुं प्रयुक्तो गोशब्दो न वृत्तिमानिति न प्रातिपदिकसंज्ञः, आहेतिब्रूधातोर्वचनस्येतिनिपातोत्तरलुप्तद्वितीयातः कर्म्मत्वस्य चोपस्थित्या इतिशब्दपरामृष्टः श्रोत्रोपस्थितश्च गोशब्दः वचनकर्म्मेति १५-१६ तमकारिका-भ्यामुक्तम्। "पचति पाकं करोति..." इत्यादिविक्रियमाणविवरणवाक्ययोः पचतीतिपदस्य पदानुपस्थितत्वेपि प्रतिपाद्यत्वलक्षणया परस्परमन्वय एकार्थ-कत्वञ्च निर्वहत्येवेति १७-१९ तमकारिकाभिर्व्यवस्थापितम्। पुनः विवरणा-दिभिः शक्तिग्रहस्योपसंहारः २०-२३ तमकारिकाभिः कृतः। विवरणमुखेन तु लाघवाद्धरिवाक्यप्रामाण्याच्च शाब्दबोधमात्रस्य शब्दविषयकत्वमभ्युपगच्छतां शाब्दिकानां मते सङ्केतसंसर्गेण पदपदार्थवैशिष्ट्यावगाही गौर्गोपदवान् गोपदं वा गोमदित्याकारकसङ्गतिग्रहस्य पदार्थस्मारकत्वं व्यवस्थाप्य शक्तिलक्षणाभ्यां विलक्षणां व्यञ्जनावृत्तिमभ्युपगच्छतामालङ्कारिकाणां मतेपि शाब्दबोधस्य पदविषयकत्वं दृष्टान्तैः दृढीकृत्य चोभयमपि मतं स्वसिद्धान्तविरोधादनुपपत्तीना-मन्यथासमाधानाच्चोपेक्षितम्।

एकपदजनितया पदार्थस्मृत्या सह द्वितीयपदजनितायास्तस्या मेलकाभावात्कथमुभाभ्यां पदार्थान्वयधीरित्याकाङ्क्षया २४ तमकारिकामवतार्य्य प्रत्येकपदानुभवजन्यसंस्काराद् घटमित्यादिसमूहालम्बनात्मकस्मृत्यैव पदार्थान्वयबोध इति सिद्धान्तितम्।

अष्टमप्रकरणे चाभेदभेदाभ्यामन्वयस्य द्वैविध्यं व्यवस्थाप्य 'निपातार्थेन सार्द्धमितरस्य संसर्गतया प्रायेणाभेदो न भासते' इति २५ तमकारिकया व्यक्तीकृत्य इवैवनञ्वाकाराणां निपातानामर्थेभेदस्य क्वचिद् भानाच्च निरुक्तनियमस्य प्रायिकत्वमुक्तम्। नित्यसक्रियवाक्यवादिवैयाकरणास्तु निपातार्थे नामार्थाभेदान्वयं क्वचिदपि न स्वीकुर्वन्तीत्युक्तनियमस्य सार्वत्रिकत्वमेवेत्यपि विवरणमुखेनोक्तम्।

अभेदश्च नाम्नो नाम्ना धातुना विभक्त्या तद्धितेन चाथवा नाम्नैव भवति। नाम्नोरभेदे समानविभक्तिकत्वादेस्तन्त्रत्वमिति २६ तमकारिकया विविच्य विभिन्नलिङ्गकाभेदस्यापि क्वचित्साधुत्वं २७ तमकारिकयोक्तम्। नाम्नाभेदान्वयबोधे समानलिङ्गकत्ववत् समानवचनकत्वस्यापि प्रयोजकत्वे प्रायिकत्वं दृष्टान्तमुखेन २८ तमकारिकयोक्तम्। नाम्नो धातुना सहाभेदे धात्वर्थविशेषणस्य प्रायेण क्लीबत्वमनुशासनसिद्धमेवेति २९ तमकारिकया शाब्दिकमतेन सिद्धान्तितम्। विभक्त्या सह प्रातिपदिकस्याभेदो द्रोणो व्रीहिः एकं ब्रह्म, प्रादेशः कुश इत्यादौ एकादिनाम्नामेकत्वादिवाचकतया प्रथमार्थसङ्ख्यात्वावच्छिन्ने तादात्म्येनान्वय इति शाब्दिकमतं विस्तरेणोपपाद्य खण्डितम्। तद्धितेन सह प्रातिपदिकस्याभेदश्च स्वरूपार्थकस्य तलः कनश्च तद्धितस्यार्थे देवस्य यावस्य चान्वयाद्देवता यावक इत्यादौ शाब्दिकमतेन दर्शितः। विशेषणविभक्तीनामभेदार्थकतया तद्द्वारैव नीलादिपदार्थानां घटादावन्वय इति प्रकारतावादिमतं "किं वा नाम्नैव केवलम्" इति कारिकांशेन सविस्तरमुपपादितं विवरणग्रन्थे।

. नवमप्रकरणे प्रातिपदिकेन सह सुपां तद्धितानां निपातानां धात्वंशप्रत्ययानामाकाङ्क्षा भवति। तत्र तत्र प्रातिपदिकार्थस्य भेदेनान्वयश्च भवति। क्वचिच्च नाम एव लिङ्गबोधकटाबादिप्रत्ययेन तिङा सुपा तद्धितेन निपातेन कृता धातुलवेन च व्यपेक्ष्यते। एतावता भेदान्वयस्य नामार्थप्रकारकत्वं नामार्थविशेष्यकत्वञ्चोभयं ३०-३१ तमकारिकाभ्यां दर्शितं भवति। एवं सुपां नामार्थविशेष्यकस्वार्थलिङ्गप्रकारकभेदान्वयसाकाङ्क्षतया तस्य लिङ्गवाचकत्वञ्च व्यवस्थापितं भवति विवरणमुखेन।

दशमप्रकरणे प्रकृतिप्रत्ययादीनां तत्तदर्थवाचकत्वेनैकस्यापरत्राभेदेन भेदेन वा संसर्गेणान्वयस्तदैव सङ्गच्छेत, यदि शाब्दिकमतसिद्धस्य स्फोटस्याप्रामाणिकत्वं व्यवस्थितं भवेत्? तस्य प्रामाणिकत्वे तु सर्वमिदमसङ्गतमेव स्यात्, पदादिव्यञ्जनीयस्य स्फोटस्यैवार्थवाचकत्वादित्यतस्तस्याप्रामाणिकत्वं व्यवस्थापयितुमादौ वर्णस्फोटस्यावश्यकतां विवरणमुखेन प्रदर्श्य ३२–३३ तमकारिकाभ्यां वर्णस्फोटस्यालीकत्वं व्यवस्थापितम्। एवं पदस्फोट-वाक्य-स्फोटाखण्डस्फोटा अपि ३४–३८ तमकारिकाभिः शाब्दिकमतप्रदर्शन-पुरस्सरं निरस्ताः।

एकादशतमप्रकरणे वाचकशब्देषु प्रकृतिः प्रत्यय इति पाणिनेः परिभाषा। प्रकृतिर्द्विधा प्रातिपदिकं धातुश्च। सुपः स्त्रीप्रत्ययस्तद्धितमिति त्रिविधाः प्रातिपदिकप्रकृतिकाः प्रत्ययाः। तिङ्कृदिति द्विविधा धातुप्रकृतिकाः। तत्र सुपः किंलक्षणाः कतिविधाः किमर्थाश्चेति प्रस्तावक्रमेण सुपः प्रथमादयः सप्तधा विभागाः कृताः। एकैकस्य च लवस्यावयवास्त्रिशो भवन्ति। एवमेकैकस्या विभक्तेस्त्रीणि त्रीणि वचनानि भवन्ति। वचनानाञ्चैकत्वादिसङ्ख्यावाचकत्वं सुत्वादिना, न तु स्वमूटाप्रभृतिसप्तकानुगतधर्म्मेण, तस्यानुगतस्यानतिप्रसक्तस्य दुर्लभत्वात् सुत्वादीनां वाचकतावच्छेदकत्वे लाघवाच्चेति ३९–४२ तमकारिकाभिर्व्यवस्थाप्य इगादिप्रत्याहाराणामित्वादिजातिभिरेवेकाराद्युपस्थापकत्ववत् प्रत्याहारपरिभाषाया अननुगतप्रवृत्तिनिमित्तकत्वे सुप्प्रत्याहारस्यापि सुत्वादिनैव स्वाद्युपस्थापकतयैकवचनत्वादिकं नैकत्वादिवाचकतावच्छेदकमिति सविस्तरमुक्तं विवरणमुखेन। पुनश्च सदृशान्तरवर्जितैकत्वस्यैव स्वादिवाच्यत्वम्, न तु सामान्यत एकत्वस्य, तस्य केवलान्वयितयाव्यावर्त्तकत्वादिति ४३–४४ तमकारिकाभ्यां प्रसाध्य बहुवचनानां बहुत्वत्वजात्या त्रित्वादौ शक्तिरिति ४५ तमकारिकया व्यवस्थापितम्। एकवचनाद्यर्थानां प्रकृत्यर्थे प्रकृत्यर्थतावच्छेदके वान्वय इति प्रतिपादयतैव सङ्ख्यावाचकशब्दाः निरूपिता एकवचनादीनां क्वचित्साधुत्वमात्रञ्च प्रयोजनं प्रदर्शितं ४६–५२ तमकारिकाभिः।

द्वादशतमप्रकरणे सम्बोधनप्रथमाया अभीष्टप्रत्ययात्मकमाभिमुख्यं ज्ञानमिच्छा चेत्यर्थद्वयं प्रतिपाद्य वक्तुश्चेतनस्य च सम्बोध्यत्वं ५३-५६ तमकारिकाभिर्व्यवस्थापयतैव प्रसङ्गाद् वार्त्तिककारकात्यायनमहर्ष्यनुसारिवैयाकरणमते सम्बोध्यत्वस्य क्रियायामेवान्वयः, न तु प्रकृत्यर्थे इति मतमुपपाद्य भाष्यकारैरनेकतिङन्तघटितस्यापि वाक्यत्वोपगमाद् 'एकतिङ् वाक्यम्' इति कात्यायननियमं भाष्यानुयायिमतेन निराकृत्य च शाब्दिकदार्शनिकमतयोः

क्रमेण धात्वर्थप्रथमान्तार्थयोः सम्बोध्यत्वान्वय इति ५७–५८ तमकारिकाभ्यां सिद्धान्तितम् । आमन्त्रणप्रथमाभिन्ना प्रथमा पुंस्त्वादिलिङ्गमेकत्वादिसङ्ख्या चेत्येवाभिधत्ते, न तु प्रातिपदिकार्थादिमिति ५९–६४ तमकारिकाभिस्तार्किक-सिद्धान्तोपि दर्शितः । समभिव्याहृततिङाद्युक्तकर्त्तृकारकाणामेव प्रथमार्थत्व-मिति कालापमतञ्च ६५–६६ तमकारिकाभ्यां खण्डयता अभेदान्वयबोधस्य तद्धर्म्मभेदप्रयोज्यत्वञ्च सविस्तरमुपपादितं विवरणमुखेन ।

त्रयोदशतमप्रकरणे कारकद्वितीयायाममादीनां वाचकतावच्छेदकममत्वादि-कमिति निरूप्य सर्वधातूनां फलव्यापारयोः शक्तिरिति प्रदर्शयतैव द्वितीयार्थो-धिकरणं तच्च फलगामीति शाब्दिकसिद्धान्तो दर्शितः, निरुक्तस्मृत्या च धात्वर्थमुख्यविशेष्यकत्वमन्वयबोधस्येत्यपि तन्मतानुसारेण व्यवस्थापितम् ।
प्रसङ्गान्मध्ये हरिकारिकामाधारीकृत्य कर्म्मणो भेदं (निर्वर्त्त्यादिकं) निरूपयतैव फलान्वयिनोधिकरणत्वस्य निरूपकतयाधेयत्वस्य वा द्वितीयार्थत्वं प्रथमान्तार्थमुख्यविशेष्यकत्वमेवान्वयबोधस्येति न्यायसिद्धान्तः शाब्दिक-मतनिरसनपुरस्सरं दर्शितः । निरुक्तस्मृतिश्च समर्थिता न्यायमतेन ।

आख्यातार्थभावनायां कारकान्वयः, कारकन्तु कर्म्मकर्त्तृत्वाद्यखण्ड एव पदार्थ इति भाट्टदर्शनसिद्धान्तोपि दर्शितः । सर्वञ्चैतत् ६७–९३ तमकारिका-भिरुपपाद्य मतत्रयस्योपसंहारः सविस्तरमुपपादितो विवरणमुखेन । इत्थं द्वितीयार्थनिर्वचने सामान्यतः फलव्यापारौ प्रत्येकं मिलितौ वा धातुवाच्याविति प्रपञ्चयित्वा दुहादीनां द्व्यर्थकानां समभिव्याहारे विभागादिधात्वर्थाधेयत्वादि-द्वितीयार्थौ निरूपितौ । एवं कर्म्मसंज्ञाविधायकस्य "अकथितञ्च"—"कर्त्तृ-कर्म्मणोः कृति" इत्याद्यनुशासनस्य शाब्दिकदार्शनिकोभयमते सार्थक्य-मुदाहरणानाञ्च तत्तन्मते वाक्यार्थबोधश्च ९४–१०७ तमकारिकाभिः प्रदर्शितः ।

चतुर्दशतमप्रकरणे अकारकद्वितीयार्थस्य नामार्थान्वयित्वम् "उभसर्वतसोः कार्य्या..." इत्याद्यनुशासनमनतिक्रम्य व्यवस्थापयतैवोदाहरणघटकपार्श्वादि-पदानामर्थाः वैशद्येन निरूपिताः । कर्म्मप्रवचनीयसंज्ञकप्रादियोगे विहिताना द्वितीयानामाकाङ्क्षाद्योतकत्वमात्रं हेतुत्वादिरेव प्रादीनामर्थः, जपमनु प्रावर्ष-दित्यादौ हृष्टत्वादित्युक्तम् । "कालाध्वनोरत्यन्तसंयोगे" इत्यनुशासनविहित-द्वितीयाया अधिकरणत्वमर्थस्तस्यैवानन्यलभ्यत्वात्, तस्य च 'मासमधीते' इत्यादौ मासत्वावच्छेदेनान्वयः क्रोशत्वादिकमप्यध्वपरिमाणविशेष इति १०८–१०९ तमकारिकाभ्यां विवेचितम् ।

पञ्चदशतमप्रकरणे टाभ्याम्भिसस्तृतीयासंज्ञा टस्यानुबन्धतया कचिदप्य-श्रूयमाणत्वादात्वादिना कारकतृतीयावाच्यत्वमिति व्यवस्थापयता तृतीयायाः कर्त्ता करणञ्चार्थ इति, आश्रयांशस्य तृतीयाप्रकृतिलभ्यत्वादनन्यलभ्यतरमाश्र-त्वमाधेयत्वं वा, प्रयत्नस्य च धात्वर्थत्वाभावे स एव तृतीयार्थ इति, पच्यत इत्यत्र पाकः क्रियत इति कृत्वा विवरणात् कर्म्मलकारस्य कृत्यादिस्वरूपा भावनैवार्थस्तदन्वयिकर्त्तृत्वमखण्डं तृतीयार्थ इति च क्रमेण शाब्दिकतार्किक-मीमांसकमतेषु तार्किकसिद्धान्तं विविच्य विपयित्वादीनामप्युदाहरणमुखेन तृतीयार्थो विवेचितः। शाब्दिकमतेन करणलक्षणमुपपाद्य करणतृतीयार्थे प्रकृत्यर्थस्य जन्यजनकभावसंसर्गेणैवान्वय इत्यप्युक्तम्। "दिवः कर्म्म च" इत्यनुशासनेन संज्ञाद्वयस्य समावेशे दिव्यतेः करणत्वमभिदधती द्वितीया तृतीया च साधुरेवं चतुर्थ्यर्थे विहिततृतीयायाः सम्प्रदानत्वमर्थ इत्येतत्सर्वं ११०-११४ तमकारिकाभिर्विवेचितम्।

षोडशतमप्रकरणे प्रकृत्यादिगणविहितोपपदतृतीयायास्तादात्म्यावच्छेदकत्व-वृत्तिप्रकारत्वपरिच्छिन्नत्वादिरर्थः। प्रकृत्या चारुरित्यत्र सुखजनकसाक्षात्कार-विषयधर्म्मवाँश्चारुपदार्थः, यावदाश्रयभावी स्वाधिकरणनिष्ठात्यन्ताभावाप्रति-योगी स्थूलकालावच्छेदेन स्वाश्रये वर्त्तमानस्यात्यन्ताभावस्याप्रतियोगी वा धर्म्मः प्रकृतिरित्युच्यते, सतो जातिरीश्वरस्य सार्वज्ञ्यं जलस्य शैत्यं पृथिव्या गन्धो गुणस्य द्रव्यसमवेतत्वं प्रकृतिरिति प्रयोगादिति ११५तमकारिकया प्रदर्श्य "सहयुक्तेप्रधाने" इति सूत्रविहिततृतीयार्थस्सहार्थः, स च सामाना-धिकरण्यं प्रतियोगित्वमभेदः कारकञ्चेति भेदेनानेकविध इत्युपपादयता सूत्रस्य सहयुक्तक्रियान्वयिनोस्तुल्यजातीययोः कारकयोर्मध्ये यदप्रधानं प्रधान-क्रियाकारकं तस्मिन्नभिधेये तृतीयेत्यर्थो निर्दिष्टः। एवञ्च सहयुक्ते द्वे क्रिये, एका सहार्थं प्रति विशेषणमपरा विशेष्यम्, यस्य च कारकस्य प्रधानक्रियायां नान्वयः तज्जातीयं गुणक्रियान्वयितृतीयया न प्रतिपाद्यते, ग्रामेण सह चैत्रो गच्छतीत्यस्याप्रयोगात् ग्रामेण सह गृहं गच्छति चैत्र इत्यस्य प्रयोगाच्च। एकैव क्रिया सहार्थान्वयिनीति मतञ्च श्लेषभित्तिकसहोक्त्यलङ्कारेऽन्वयबोधा-नुपपत्त्यानुपपन्नमित्यादिकं ११६ तमकारिकया निरूपितम्।

"येनाङ्गविकारः" इति सूत्रे "येनाङ्गेनाङ्गिनो विकारस्तत्र तृतीया" इति सिद्धान्तकौमुदीवृत्तेः—यत्समवेतत्वप्रयुक्तो महाशरीरत्वजातेरभावः खण्डशरीरे ततस्तृतीयेत्यर्थं विवृण्वता तत्तृतीयाया विकारोर्थः, स च कचिन्नाशः, कचि-दुपघातः कचिच्छापादिरिति ११७तमकारिकयोक्तम्। "हेतौ तृतीया" इत्य-

नुशासनेन हेतुत्वे तृतीयावाच्यत्वमनुशिष्यते। हेतुश्च जनकं ज्ञापकश्चेत्युदाहरणमुखेन प्रदर्श्य ज्ञापकत्वं न तृतीयार्थः चक्षुषा रूपमिति प्रसङ्गादिति मणिकारमतं जन्यत्वं ज्ञाप्यत्वञ्च तृतीयार्थ इत्येकदेशिमतञ्च खण्डितम्।

सादृश्यवाचकपदसव्यपेक्षा "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इत्यनुशिष्टा तृतीया षष्ठी च सादृश्यान्वितं प्रतियोगित्वमभिधत्ते। सादृश्यमतिरिक्तमनतिरिक्तं वेत्यन्यदेतत्। साधर्म्यार्थकसदृशादियोगेपि वृत्त्यन्वितनिरूपकत्वार्थिका तृतीया, 'रामरावणयोर्युद्धं रामरावणयोरिव' इत्यादौ रामरावणयोर्युद्धं रामरावणयोर्युद्धेन सदृशमित्यनन्वयालङ्कारे प्रयोगदर्शनात्।

"इत्थम्भूतलक्षणे तृतीया" इति सूत्रानुशिष्टप्रकारत्वार्थिकां तृतीयां निरूपयतैव प्रकारस्य द्वैविध्ये पक्षधरशिवादित्यमणिकारमतानि सम्यग् दर्शितानि। अह्ना क्रोशेन वानुवाकोधीत इत्यदावह्नस्त्वक्रोशत्वादिव्यापिकीं कालिकीं दैशिकीमाधारताम् "अपवर्गे तृतीया" इत्यनुशिष्टा तृतीया ब्रूते, यदि फलवती क्रिया धातूपात्तेत्यप्यभिहितम्।

सप्तदशतमप्रकरणे कारकचतुर्थ्याः सम्प्रदानत्ववाचकत्वमेत्वादिना व्यवस्थाप्य दार्शनिकमते दानफलस्वत्वनिरूपकत्वं चतुर्थ्याः मुख्यार्थ इति निरूपयता ददातेः स्वत्वध्वंसजनको व्यापारस्स्वत्वानुकूलस्त्यागो वार्थ इति १२३ तमकारिकया सिद्धान्तितम्, दर्शितञ्च ददातेः स्वत्वध्वंसः स्वत्वञ्च फलविधयार्थः चतुर्थी तु धात्वर्थफलान्वयिप्रीत्यादिफलान्तरमभिधत्ते इति शाब्दिकमतम्। एवं "रुच्यर्थानां प्रीयमाणः"—"परिक्रयणे सम्प्रदानमन्यतरस्याम्" इत्याद्यनुशासनविहितचतुर्थ्यर्थोपि १२४—१२८ तमकारिकाभिर्वैशद्येनोक्तः।

अष्टादशतमप्रकरणे "मन्यकर्म्मण्यनादरे" इत्यनुशिष्टाकारकचतुर्थ्याः प्रतियोगित्वमर्थः, तच्च न त्वां तृणं तृणाय वा मन्ये इत्यत्र मन्यतिकर्म्मान्वयि। सादृश्यमपकर्षो वा नञर्थः। अनादरस्य व्यञ्जनया लक्षणया वा बोधः। सादृश्यवचना चतुर्थी नञ्पदविनिर्मुक्तापि "सदृशत्वम्..." इत्यापिशलिस्मरणात् भट्टिप्रयोगाच्च प्रमाणमिति १२९तमकारिकया प्रदर्श्य नमः-पदाद्यर्थस्य चतुर्थ्यन्तनमोन्तवाक्ये मन्त्रत्वस्य मन्त्रवाक्ये शिवादीनां देवतात्वस्य च निरूपणं १३०-१३१ तमकारिकाभ्यां तद्विवरणाभ्याञ्च कृतम्। एवं "तादर्थ्ये चतुर्थी वाच्या" "तुमर्थाच्च भाववचनात्" "उत्पातेन ज्ञापिते च" इत्यनुशिष्टचतुर्थीनां शाब्दिकमतप्रदर्शनमुखेन १३२-१३४ तमकारिकाभिरर्थाः कथिताः।

एकोनविंशतितमप्रकरणे कारकपञ्चम्या अस्त्वादिना अपादानत्ववाचकत्वम्, अपायत्वं ध्रुवत्वञ्चेत्यपादानत्वम्। तथा च तत्क्रियानधिकरणत्वे सति तत्क्रियाजन्यविभागाश्रयत्वपर्य्यवसिते हरिवाक्यानि प्रमाणीकृत्यानन्यलभ्य-विभागजनकत्वभेदप्रतियोगितावच्छेदकत्वयोः पञ्चम्यर्थत्वं सिद्धान्तितम्। विभागमात्रस्य पञ्चम्यर्थत्वोपपादयतां शाब्दिकानां मतं १३६–१३९ तम-कारिकाभिः पूर्वोत्तरपक्षाभ्यां खण्डयतैव स्वसिद्धान्तः समर्थितः। "जुगुप्सा-विरामप्रमादार्थानामुपसङ्ख्यानम्" "भीत्रार्थानां भयहेतुः" "पराजेरसोढः" इत्याद्यनुशासनविहितपञ्चमीनां विषयत्वं क्वचिद्धेतुत्वञ्चार्थ इति १४० तम-कारिकया निरूपयता विरमेर्निवृत्तिः गुपेर्गर्हानाम द्वेषविशेषः प्रमाद्यतेरनुद्बुद्ध-संस्कारः बिभेतेरनिष्टस्य भावित्वेन चिन्तनमनिष्टानुत्पत्त्यनुकूलो व्यापारः द्वेषाधीना निवृत्तिः पराजेरर्थ इत्यप्युक्तं विवरणमुखेन। प्रस्तुतविचारे परेतु-प्रभृतीनां मतानि च सम्यग् खण्डितानि।

"वारणार्थानामीप्सितः" इत्यनुशासनविहितपञ्चमी कारकमभिधत्ते। पतनाभावप्रयोजकव्यापारस्य वारयत्यर्थत्वात् फलाधिकरणस्य कर्म्मसंज्ञा फलीभूताभावप्रतियोगिक्रियाकारकस्यापादानसंज्ञेति निरूप्य "अन्तर्द्धौ येनादर्शनमिच्छति" 'भुवः प्रभवः" "आख्यातोपयोगे च" "जनिकर्तुः प्रकृति." "ल्यब्लोपे कर्म्मण्यधिकरणे च" इत्याद्यनुशासनविहितपञ्चमीनामर्थाः समभिव्याहृतधात्वर्थाश्च १४१–१४४ तमकारिकाभिर्निरूपिताः।

विंशतितमप्रकरणे अकारकपञ्चमीनां "यतश्चाध्वकालनिर्माणं ततः पञ्चमी..." इत्याद्यनुशासनविहितानामवधिमत्त्वप्रतियोगित्वाधेयत्वहेतुत्व-ऋणत्वज्ञापकत्वाधिकरणत्वादयोर्थाः नामार्थान्वयिनो भवन्ति। एवं योजन-मासान्याद्यपाङ्परिप्रतिवहिरल्पकृच्छ्रादिशब्दानामनुशासनक्रमेणार्थाः निरू-पिताः। धूमादग्निमानित्यादौ पञ्चम्या मणिकार-नवीन-प्रभाकर-स्वमतान्या-लभ्यार्थोपि विवेचितो विवरणमुखेन। सर्वञ्चैतत् १४५–१५० तमकारिकाभिः प्रत्यपादि।

एकविंशतितमप्रकरणे शेषपदार्थं निरुच्य षष्ठ्याः सम्बन्धत्वेन प्रवृत्ति-निमित्तता, सम्बन्धत्वमनुयुक्तत्वादिर्धर्म्मः स च यतस्समवाये वाय्वाद्यनुयोगि-कत्वावच्छिन्नरूपप्रतियोगिकत्वविरहान्न वायौ रूपमिति प्रतीतिव्यवहारौ, तद्रूप एव। "एकशतं षष्ठ्यर्थाः" इति फणिभाष्यपरिभाषणन्तु प्रवृत्तिनिमित्ता-नामपरिमितत्वं न ग्राहयति, किन्तु विशेषव्यक्तीनामेवेति १५१ तमकारिकया प्रतिपादितम्। इयं मातुः स्मरतीत्यादौ न कारकषष्ठी, किन्तु प्रतिपदविहितैव

षष्ठी। अतएवाष्टसूत्र्या शेषषष्ठीनियमप्रतिपत्तिद्वारा लुक्प्रयोजकसमासनिषेध-प्रतिपत्तिरिति हरिवाक्यानुसारेणोपवर्ण्य अष्टसूत्रीविहितायाः षष्ठ्याः समास-निषेधमात्रप्रयोजनकत्वे काशिकावृत्तौ तत्तदुदाहरणं तिङन्ततत्तद्धातुयोगे विरुद्धमिति यत्तुमतञ्च प्रदर्शितं विवरणमुखेन। एवं पदयोगनिमित्तानां षष्ठीनां तत्तदनुशासनविहितानामर्थाः १५२-१६१ तमकारिकाभिर्न्निरूपिताः। मध्ये च "कर्त्तृकर्म्मणोः कृति" इत्यनुशासने कृतीत्युपादाने शाब्दिकसमाधानं भाट्टमतसमाधानं स्वमतसमाधानञ्च सविस्तरमुपपादितं विवरणमुखेन।

द्वाविंशतितमप्रकरणे कारकसप्तम्या इत्यादिना अधिकरणत्वाधेयत्वादि-वाचकत्वमाधेयत्वञ्च धात्वर्थसङ्गतमधिकरणत्वञ्च क्रियासिद्धावुपकुर्वद् वस्तु इति प्राचा संवादेन द्रढयता १६२ तमकारिकया सिद्धान्तितम्। एवं विषयार्थकधातुसंवलिता सप्तमी विशेष्यतानिरूपकप्रकारतास्वरूपामाधेयता दूरान्ति-कार्थकशब्दसमभिव्याहृता सप्तमी आधारमिष्टादिपदोत्तरेन्प्रत्ययसमभिव्याहृता सप्तमी कर्म्माभिधत्ते इति १६३-१६५ तमकारिकाभिः प्रकाशितम्।

त्रयोविंशतितमप्रकरणे अकारकसप्तम्याः "निमित्तात्कर्म्मसंयोगे" इत्य-नुशासनसिद्धायाः चतुर्थीवत्तादर्थ्यमथवा तृतीयावन्निमित्तत्वमर्थः, कर्म्मणा संयोगसमवायादीनां स्वरूपसतामेव सप्तमीप्रयोजकत्वं कर्म्म च धात्वर्थ-फलवत्, तेन संयोगः क्वचित्समवायः क्वचित्संयोगः द्वीपिनः कर्म्मणश्चर्म्मणि समवायात् कुञ्जरस्य दन्तयोः संयोगादिति शाब्दिकमतमुक्तम्। दार्शनिकमते तु क्रियासम्बन्धे निमित्तवाचकात्सप्तमीत्येवानुशासनार्थः, ततश्च 'अविद्या-रजनीक्षये यदुदेति, इत्यादौ सप्तम्युपपद्यते, अविद्यारजनीक्षयस्योदयक्रिया-प्रयोजकत्वात्। संयोगादीना स्वरूपसता सप्तमीप्रयोजकत्वे तु तदनुपपत्ति-रेवेत्युक्तम्। एवं "यस्य च भावेन भावलक्षणम्" इत्यनुशिष्टसप्तम्याः काल-वृत्तित्वं कालमात्र वार्थ इति प्रतिपादयतैव सूत्रार्थवर्णनमुखेन सप्तम्यर्थस्य नामार्थान्वयित्वमुपदर्शितम्। विशेषस्तु टीकाटिप्पणीभ्यामवधेयः।

कारकविषयमवलम्ब्य न्यायसिद्धान्तानुसारिणः जयरामरामभद्रयोः कारकवादः रुद्रभट्टाचार्य्यस्य कारकव्यूहः रामकान्तस्य शब्दरहस्यं भवानन्दतर्कवागीशस्य कारकाद्यर्थनिर्णयः कारकचक्रञ्च जगदीशतर्कालङ्कारस्य शब्दशक्तिप्रकाशिका गदा-धरभट्टाचार्य्यस्य व्युत्पत्तिवाद इत्यादयो बहवः ग्रन्थाः सन्ति, परन्तु तेष्वांशिको विचारः प्रादर्शि ग्रन्थकृद्भिः, परमत्रातिरिच्यन्त एव शब्दोत्पत्तिविवरणपद-विवरणवृत्तिग्रहविवरणस्फोटनिरासविवरणानि सर्वेभ्यः। ग्रन्थकारो हि कारिका-

तद्विवरणाभ्यां पदार्थप्रदर्शने जगदीशतर्कालङ्कारस्य क्रममेवानुसृतवान्, शब्दशक्तिप्रकाशिकायां पुनः समासविचारः एतस्मात् स्वातन्त्र्यमावहति, परन्तु कारकेषु अन्येषु च वैशद्येन नूतनत्वेन चास्य विचारः औत्कर्ष्यमादधत् ग्रन्थकृद्वैशिष्ट्यमाविष्करोत्येवेत्यत्र नास्ति सन्देहः। विवेचनाय च विदुषामुपरि न्यस्तभारोहमिदानीमेतद्विषये विरमामि।

पुस्तकमेतन्मूलमात्रं काञ्चीतः सम्पूर्णं दरभङ्गातः शब्दोत्पत्तिविवरणान्तं शिलाक्षरेषु काशीतश्च सम्पूर्णं प्रकाशितमस्ति। परन्तु काञ्चीतः प्रकाशितपुस्तकादत्र बहुत्र पाठभेदोस्ति। प्रकाशितपुस्तके विवरणपाठः कारिकापाठे कारिकापाठः विवरणपाठे अनेकत्रास्ति। तेन कारिकासङ्ख्याने द्वयोः पुस्तकयोः न्यूनाधिकभावः प्रथमतो भवति। क्वचिदक्षराणि त्रुटितानि क्वचित् पदानि वाक्यानि च भिन्नार्थकानि च बहुत्र सन्ति, तानि सर्वाण्यादर्शपुस्तकसाहाय्येन व्याख्यास्वारस्येन स्वबुद्ध्या च यथामति संशोध्य पाठो निरणायि। पाठभेदश्च 'मु० पु०' इति सङ्केतेनाधस्ताद् व्यलेखि।

यानि पुस्तकान्यवलम्ब्याहमेतस्य शोधनमकरवम्, तान्युच्यन्ते। एकं तावट्टीकाकृता बहूनि पुस्तकानि दृष्ट्वा लिखितं मूलमात्रमतीव शुद्धम्। द्वितीयं स्वकीयमेव शुद्धप्रायम्। तृतीयं मूलकारसम्बन्धिगृहात् प्राप्तमसम्पूर्णं शुद्धप्रायम्। चतुर्थं टीकाकारेण लिखितं सव्याख्यं यन्त्रालयोपयोगि च। तदेवं मूलस्य हस्तलिखितानि चत्वारि पुस्तकानि प्रकाशिते द्वे टीकायाश्चैकमेवामुद्रितं पुस्तकमुपलभ्य प्रवृत्तोहमस्य सम्पादनकार्य्ये।

आदर्शपुस्तकस्य ( व्याख्यायुतस्य ) कानिचित्पत्राणि निरङ्काणि अक्रमाङ्काणि विशृङ्खलितानि चादितः पूर्वं प्राप्तानि। मन्येस्य कारणं टीकाकारेण लिखितं व्याख्यायुतं पुस्तकद्वयमासीत्। दिवङ्गते हि तस्मिन्ननेके विद्वांसः प्रकाशयितुमयतन्त, परन्तु साफल्यं नाप्नुयुः। तत्रैव पत्राणां व्यतिक्रमो जातः। पुस्तकमेतत् प्राप्यापि सहसास्य सम्पादनकार्य्ये प्रवृत्तिर्न्नाभूत्, परन्तु दिवङ्गतानां पितृचरणानां न्यायाचार्य्यश्रीजगदीशमिश्राणां शुभाशिषा निर्देशेन च पुस्तकस्यास्य पत्राणि मूलग्रन्थमनुसृत्य यथास्थानं कृतानि। पुनश्च कीटभक्षितान्यक्षराणि अव्याख्यातमूलानि अपूर्णव्याख्यानानि च पूरितानि। मर्मस्थलेषु टिप्पणकार्य्यञ्च व्युत्पत्तिवाद-शक्तिवाद-शब्दशक्तिप्रकाशिका-विभक्त्यर्थनिर्णय-तत्त्वचिन्तामणि-सिद्धान्तकौमुदी-काशिकावृत्ति-पारस्करगृह्यसूत्र-काव्यप्रकाशप्रभृतीन् ग्रन्थानाकलय्याकारि। विषयाणां सुखबोधायान्ते अक्षरानुक्रमेण सूच्यपि निर्दिष्टा।

यथा हि प्रत्येकविषये समुदितविचार एकत्रैवोपलभ्येत। अक्षरानुक्रमनिर्दिष्ट-सूच्या सह शुद्धिपत्रमपि निवेशितम्, यदवलोक्य पठिष्यन्ति पाठयिष्यन्ति च विद्वांसः। अक्षरानुक्रमणिकायाः सङ्केतविवरणञ्च वि० = विवरणे, टी० = टीकायाम्, टि० = टिप्पण्याम्, का० = कारिकायाम्, पृ० = पृष्ठे, इत्थमवधार्य्यावश्यमाकलयिष्यन्ति सूचीं दिदृक्षवः।

तदेतस्य पुस्तकस्य संपादनकार्य्यभारः वाराणसेयसंस्कृतविश्वविद्यालयीय-पुस्तकालयाध्यक्षाणां डा० श्रीसुभद्रझामहोदयानां निर्देशकत्वे वाराणसेयराजकीय-संस्कृतमहाविद्यालयस्य प्राधानाचार्य्यैः (इदानीं वा० सं० वि० स्य प्रस्तोतृभिः) प० श्रीकुबेरनाथजीशुक्लमहोदयैः मह्यं प्रादायि। झामहोदयाश्च प्रतिदिन-मधिककार्य्यभारव्यस्ता अपि यथावसरं शोधनादिनिर्देशं कुर्वन्त एव अद्या-वधि यतमाना आसन् सन्ति च। मन्ये तेषामेवोत्साहेन प्रेरणया चास्मिन् कार्य्ये प्रवृत्तोहं भारं निरवहम्। न्यायशास्त्रस्यातिगूढत्वात् सम्पादनकार्य्यभार-मिमं निर्वोढुं कियान् समर्थोभवमित्यत्र विद्वांस एव प्रमाणम्।

तदत्रास्मादृशाल्पजनसुलभेन मतिदोषेण जनितानि स्खलितानि सुविमृश्य शोधयन्तु प्रबोधयन्तु च विचक्षणवरा येन कृतज्ञताप्रकाशनपुरस्सरं यतिष्ये अचिरमुपस्थापयिष्यमाणायां विस्तृतभूमिकायामस्य संशोधनाय, क्षन्तारश्च गुणैकपक्षपातिनो दूषणवाचंयमाः सुधियः शीशकाक्षरदोषेणास्मदीयदृष्टिदोषेण चोपनता अशुद्धीरिति निश्चिन्वन् विरमामि निरर्थकाद्विस्तारादिति निगदति—

विदुषामाश्रवः
**श्रीनन्दिनाथमिश्रः**
न्यायसाहित्याचार्य्यः
वाराणसेयसंस्कृतविश्वविद्यालयस्य
सरस्वतीभवनस्थः।
कार्त्तिकीपूर्णिमा। १५।११।१९५९ ई०।

# प्रकरणसूची


| | |
|---|---|
| १— मङ्गलविवरणम् | पृ०— १—८। |
| २— विषयविवरणम् | पृ०— ८—१०। |
| ३—प्रयोजनसम्बन्धाधिकारिविवरणम् | पृ०— ११—१२। |
| ४—शब्दोत्पत्तिविवरणम् | पृ०—१२—३०। |
| ५— पदविवरणम् | पृ०—३०—५०। |
| ६— पदार्थस्मृतिविवरणम् | पृ०—५१—५६। |
| ७—वृत्तिग्रहविवरणम् | पृ०—५७—२३२। |
| ८—अभेदान्वयविवरणम् | पृ०—२३३—२९३। |
| ९—भेदान्वयविवरणम् | पृ०—२९४—३३१। |
| १०—स्फोटनिरासविवरणम् | पृ०—३३२—४०४। |
| ११— वचनार्थविवरणम् | पृ०—४०५—४३९। |
| १२—प्रथमाविवरणम् | पृ०—४४०—४९२। |
| १३—कारकद्वितीयाविवरणम् | पृ०—४९३—६२२। |
| १४—उपपदद्वितीयाविवरणम् | पृ०—६२३—६३६। |
| १५—कारकतृतीयाविवरणम् | पृ०—६३७—६४७। |
| १६ उपपदतृतीयाविवरणम् | पृ०—६४८—६९८। |
| १७—कारकचतुर्थीविवरणम् | पृ०—६९९—७२३। |
| १८— अकारकचतुर्थीविवरणम् | पृ०— ७२४—७४१। |
| १९— कारकपञ्चमीविवरणम् | पृ०—७४२—७७२। |
| २०— अकारकपञ्चमीविवरणम् | पृ०—७७३—७९१। |
| २१—षष्ठीविवरणम् | पृ०—७९२—८२६। |
| २२— कारकसप्तमीविवरणम् | पृ०—८२७—८३१। |
| २३—अकारकसप्तमीविवरणम् | पृ०—८३२—८३८। |


। इति ।

गूढार्थदीपिकासहितः

# पदवाक्यरत्नाकरः

नान्यसाधारणो विश्वविषयो यो विभोर्गुणः ।
तस्यैषा शक्तिरखिलप्रपञ्चस्य प्रकाशने ॥ १ ॥

विभोः संयोगेन मूर्त्तद्रव्यसामान्यमनादिनिधनेन चैतन्येन सकलमपि वस्तु व्याप्नुवतो भगवतो भवस्य यो गुणो

धृत्वाम्बापदयुग्ममान्तरनमो भानुप्रभम्मानसे
नत्वा श्रीगुरुपितृपादकमलं सच्छेमुषीदायकम् ।
भूयो गोकुलनाथधीरसुगिरां भावं विभाव्य त्मना
दुर्बोधं प्रविकाशयत्यवनतस्सन्मैथिलो भूसुरः ॥

अथ तत्रभवान् गोकुलनाथमहामहोपाध्यायश्शक्तस्वरूपाणां पदानां परस्परसाकाङ्क्षतादृशपदसमूहरूपाणां वाक्यानाञ्च पदमात्रज्ञानस्य प्रवृत्तिनिवृत्त्याद्यप्रयोजकत्वेपि गामानयेत्यादिवाक्यज्ञानं प्रत्येकं गवादिपदमविज्ञाय दुश्शकमित्युभयोरेव निखिलव्यवहारमूलत्वेनाखिलप्राणभृदुपादेयतयात्युत्कृष्टत्वेन रत्नत्वेनाध्यवसितानामुत्पत्त्यवच्छेदकदेशत्वाभावेपि तदुत्पत्तितत्सामर्थ्यतज्जन्यान्वयबोधानां प्रतिपादकतयाधिकरणत्वेनाकरमिवाकरं कारिकातदर्थप्रदर्शनोभयात्मकं ग्रन्थं चिकीर्षुः प्रारिप्सितसमाप्तिप्रतिबन्धकदुरितजातनाशकं सकलशिष्टाचारपरम्परानुमितश्रुतिबोधितकर्त्तव्यताकं परमेश्वरकृत्यादीनाञ्जीवकृत्यादित उत्कर्षप्रदर्शनेनाधेयोत्कर्षेणाधारस्योत्कर्षातिशयध्वननेन परमेश्वरप्रणतिरूपम्मङ्गलमादौ शिष्यशिक्षार्थं निबध्नन्नेव "सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । ग्रन्थादौ तेन वक्तव्यस्सम्बन्धस्सप्रयोजनः ॥" इत्यभियुक्तोक्त्या

श्रोतृप्रवृत्तये विषयप्रयोजनसम्बन्धाधिकारिणो दर्शयति—**नान्येत्यादिना** ।

विभोर्य्यो नान्यसाधारणो विश्वविषयो गुणस्तस्याखिलप्रपञ्चस्य प्रकाशने एषा शक्तिरित्यन्वयः । कारिकास्थं प्रतिपदं स्वयमेव विवृणोति—**विभोरित्यादिना** ।

विभुपदस्य व्यापकत्वावच्छिन्नार्थकतया वृत्त्यभाववत ईश्वरस्य कथं विभुत्वमित्याकाङ्क्षानिवृत्तये व्यापकताघटकसम्बन्धमाह-**संयोगेनेति** । वृत्त्यनियामकसंयोगेनेति तदर्थः । वृत्तिनियामकसंयोगेन गगनादिविभूनामसम्बन्धित्वस्याव्यापकत्वस्य च सिद्धान्तलक्षणादौ व्यवस्थापितत्वात् *। तृतीयार्थश्च संसर्गतानिरूपिततत्त्वरूपमवच्छिन्नत्वम् । तस्य धात्वर्थैकदेशाधेयतायामन्वयः । उक्तसंयोगस्याधिकरणताद्यनवच्छेदकत्वेपि व्यापकताघटकाधिकरणत्वादीनां सम्बन्धितात्वेनैव निवेशान्न तत्सम्बन्धेन व्यापकत्वाप्रसिद्धिः । गुणादौ संयोगेन कस्याप्यवृत्तेर्विभुद्वयसंयोगास्वीकारे च तत्सम्बन्धेन मूर्त्तद्रव्येतरवृत्तित्वमीश्वरादेर्नास्तीत्यत आह—**मूर्त्तद्रव्यसामान्यमिति** । मूर्त्तञ्च तद्द्रव्यम्मूर्त्तद्रव्यन्तस्य सामान्यञ्जातिः, "जातिर्जातञ्च सामान्यम्" इत्यमरात् । तथा च मूर्त्ताभिन्नद्रव्यनिष्ठाया द्रव्यत्वजातेर्लाभो मूर्त्तत्वस्य साङ्कर्य्यभयेन जातित्वानङ्गीकारात् । अत्र मूर्त्तसामान्यमित्येतावन्मात्रोक्तावप्यभिमतार्थलाभसम्भवाद् द्रव्यपदं स्पष्टप्रतिपत्त्यर्थम् । मूर्त्तत्वविशिष्टद्रव्यत्वस्य स्वनिष्ठसमवायसम्बन्धावच्छिन्नमूर्त्तत्वविशिष्टद्रव्यत्वत्वावच्छिन्नत्वसम्बन्धेन संसर्गमर्य्यादालभ्ये तद्द्वितीयार्थनिरूपकत्वेन्वयः । तेन विशिष्टस्य शुद्धानतिरेकेपि नाकाशादेस्तदधिकरणत्वम् । द्रव्यपदस्य परिचायकत्वे सामान्यपदस्य धर्ममात्रार्थकत्वेन मूर्त्तत्वरूपधर्मस्य निष्ठत्वसम्बन्धेनैव द्वितीयार्थनिरूपकत्वेन्वयो बोध्यः । द्वितीया-

---

* "एवञ्च संयोगेन गगनादेरपि द्रव्यत्वव्याप्यत्वम्, वृत्त्यनियामकसंयोगमात्रस्याभावप्रतियोगितावच्छेदकसम्बन्धरूपत्वे साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वमपि, तदभाववतोपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात् । सिद्धिरपि तस्य तथैव, न तु वृत्तिनियामकसम्बन्धेन, तेनासम्बन्धित्वाद्व्यापकत्वाच्च" इति सिद्धान्तलक्षणीय १५० पृष्ठस्थदीधितिकृदुक्त्या सामानाधिकरण्यादौ सम्बन्धित्वस्य प्रवेशे द्रव्यं गगनात्, गगनवान् पृथिवीत्वादित्यादौ वृत्त्यनियामकसंयोगेन व्याप्यत्वव्यापकत्वयोर्निर्वाहेपि वृत्तिनियामकसंयोगेन न गगनादेर्व्याप्यत्वव्यापकत्वे सम्भवतः । तथा च यादृशसम्बन्धेन साध्यस्य हेतुव्यापकत्वं तेनैव सम्बन्धेन साध्यसिद्धेः फलत्वाद् वृत्तिनियामकसंयोगेन गगनादेर्हेतुव्यापकत्वाभावेन तादृशानुमितेर्न प्रमात्वमपि सम्भवतीति ध्वन्यते ।

र्थस्य च **व्याप्नुवत** इत्यत्राधिकरणतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावात्मकव्याप्नोत्यर्थैकदेशेधिकरणतायां तादृशावच्छेदकत्वे च **संयोगेनेति** तृतीयान्तलभ्यसंयोगसम्बन्धावच्छिन्नत्वस्यान्वयः। अखण्डस्तादृशाभावश्च केवलान्वयिवृत्तिरेव प्रसिद्धः। "लटः शतृशानचावप्रथमासामानाधिकरण्ये" इति सूत्रे लडित्यनुवर्त्तमाने पुनर्लड्ग्रहणस्याधिकविधानार्थकतयाप्रथमासामानाधिकरण्याभावेपि विहितस्य शतुराश्रयोर्थस्तदैकदेशाश्रयतायाञ्च तादृशाभावस्य निरूपितत्वेनान्वयो बोध्यः।

यद्यप्यन्यत्र "तदुत्तरानुमितिसामान्ये"... इत्यादौ तात्पर्य्यानुपपत्तिमूलकलक्षणया सामान्यपदस्य व्यापकत्वार्थकं दृष्टम्, तथाप्यत्र तस्य धातोरेव लाभादुक्तार्थतैवेति। एकदेशान्वयानङ्गीकारेधिकरणत्वं वृत्तित्वं भेदः प्रतियोगित्वमवच्छेदकत्वमभावश्च खण्डश एव धात्वर्थः। तेषाञ्चैकपदार्थानामपि परस्परमन्वयो व्युत्पत्तिवैचित्र्याभ्युपगमेनैकतिङुपात्तयोः कृतिवर्त्तमानकालयोरिव न विरुद्धः।

विभुपदस्योक्तार्थकत्वे दिक्कालजीवानामपि तादृशविभुत्वस्य सत्त्वादीश्वरस्य ततो वैलक्षण्यन्न लब्धमित्यतो जीवादिव्यावृत्तस्य व्यापकत्वस्य लाभायान्यं व्यापकताघटकं सम्बन्धमाह—**अनादिनिधनेन चैतन्येनेति**। आदिश्च निधनञ्चादिनिधने उत्पत्तिविनाशौ अविद्यमाने ते यस्येति विग्रहे "नञोस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति वार्त्तिकेन बहुव्रीहिसमासे विद्यमानपदलोपे चानादिनिधनपदसिद्धेः। नञ्पदस्य द्वन्द्वादौ श्रूयमाणतया तद्बोध्याभाववदेकदेशस्याभावस्य व्युत्पत्तिवैचित्र्याद्द्वन्द्वघटकार्थेनादिना निधनेन चान्वयादुत्पत्त्यभाववत्त्वे सति विनाशाभाववाननादिनिधनपदबोध्यः स च नित्य एव। चैतन्यञ्च ज्ञानमेवेति नित्येन ज्ञानेनेति समुदितार्थः। **अनादिनिधनेने**त्यनेन च ज्ञानविशेषणेनेश्वरज्ञानस्य चक्षुरादिकरणाजन्यत्वेनैकत्वसूचनेन ज्ञानभेदप्रयुक्तविषयताभेदप्रयुक्तो विषयतया ज्ञानस्य सकलवस्तुवृत्तित्वाभाव इति शङ्का निरस्ता। तृतीयार्थस्तत्रयान्वयश्च पूर्ववद्बोध्यः। ज्ञानस्य घटादिनिरूपिताश्रयतावच्छेदकत्वं विषयतया बोध्यम्। तथा च स्वनिष्ठज्ञानविषयतावच्छेदकत्वमेव व्यापकताघटकसम्बन्धः। अत्र च पक्षेधिकरणस्य **वस्तुपदा**देव लाभ इति तदघटित एव धात्वर्थो बोध्यः। अथवा सर्वपदपर्य्यायसकलपदसमभिव्याहाराद्धात्वर्थो वृत्तित्वमात्रम्। **सकलपदार्थश्च** स्वार्थान्वयिता-

वच्छेदकवस्तुत्वव्यापिका वस्तुत्वावच्छिन्नान्वयितावच्छेदकवृत्तितात्वावच्छिन्न-व्याप्या या पर्य्याप्तिस्तत्प्रतियोगियावत्त्वावच्छिन्नः। तादृशपर्य्याप्तौ वस्तुत्व-व्यापकत्वस्य वृत्तित्वव्याप्यत्वस्य च लाभे वस्तुत्वव्यापकत्वमपि वृत्ति-त्वेर्थाल्लभ्यते। वृत्तित्वञ्च सम्बन्धित्वमेवेति न भगवति तद्बाधः। वस्तुत्व-व्यापकत्वं वस्तुत्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वम्। सम्बन्धित्वव्याप्यत्वञ्च व्यभिचारित्वसम्बन्धावच्छिन्नप्रतियोगिताकसम्बन्धि-त्वाभाववत्त्वम्, नातोभिधेयत्वादिकं तादृशात्यन्ताभावप्रतियोगितानवच्छेदकं धर्ममादाय यत्किञ्चित्पर्य्याप्तेरपि वस्तुत्वव्यापकत्वम्। न वा सम्बन्धितायाः केवलान्वयितया तदभावघटितव्याप्यत्वाप्रसिद्धिः। व्यभिचारित्वसम्बन्धस्य वृत्तिनियामकतयाभावप्रतियोगितावच्छेदकत्वस्य "इहोपाधिर्नेहोपाधिः"...इत्या-दिप्रतीतेस्सर्वानुभवसिद्धतया दीधितिकारादिभिरङ्गीकृतत्वात्। व्यभिचारित्व-सम्बन्धस्य च सम्बन्धिताया व्यधिकरणतया तत्सम्बन्धावच्छिन्नतदभावस्य संयोगसम्बन्धावच्छिन्नप्रतियोगिताकस्य गुणाभावादेरिव केवलान्वयित्वात्। कचित्तु **वस्तुपदं** भावप्रधानतया वस्तुत्वपरं **सकलपदञ्च** तादृशार्थे तात्पर्य्यग्राहकं धात्वर्थः पूर्ववद्व्यापकत्वमित्याहुः। **भगवतः** "ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥" इति व्यासो-क्तैश्वर्य्यादिषट्कशालिनः। **भवस्य** भवत्यस्माज्जगदिति व्युत्पत्त्या जगत्कर्त्तृ-त्वावच्छिन्नस्य भवत्वजात्यवच्छिन्नस्य वा। **नान्यसाधारण** इत्यस्य अन्यस्य जीवादिगुणस्य साधारणस्सदृशो नेति नान्यसाधारणः। "अमानोनाः प्रति-षेधवचनाः" इत्यनुशासनसिद्धेनान्योन्याभावार्थकनशब्देन समासान्नकारलोपा-भावात्, "नलोपो नञः" इति सूत्रेण नञ्पदावयवस्यैव नकारस्य लोपवि-धानात्। न चोक्तानुशासनेन नशब्दस्यात्यन्ताभावात्मकप्रतिषेधार्थकत्वबोध-नात्साधारणशब्दस्य च धर्म्मिबोधकत्वात्तदर्थमदृशात्यन्ताभावस्य जीवादि-गुणेपि सत्त्वान्नाभिमतार्थसिद्धिरिति वाच्यम्, *"गमिकर्म्मीकृतनैकनीवृता"

---

* "सरसीः परिशीलितुम्मया गमिकर्म्मीकृतनैकनीवृता।
अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी॥"

इति दमयन्तीगुणवर्णनां कुर्वाणं हंसं प्रति—एवम्भूता सा त्वया कथं ज्ञाता? इति नलेन पृष्टस्य हंसस्योत्तरमिदम्। **सरसीः = सरांसि, परिशीलितुम् = अवगाहितुम्, गमेर्धातोः कर्म्मीकृताः = गतिविषयीकृताः, नैकाः = अनेकाः नीवृतो देशाः येन तथाभूतेन मया**

**नित्यसविषयकत्वावन्ध्यत्वादिना जीवादिगुणव्यावृत्तेन धर्म्मेण लोकोत्तरः विषयतया विश्वमभिव्याप्य* वर्त्तते ।**

इत्यादिश्रीहर्षादिप्रयोगेष्वन्योन्याभावात्मकपर्य्युदासवाचकस्यापि नशब्दस्य दृष्टत्वादुक्तानुशासने प्रतिषेधपदस्यान्योन्याभावस्याप्युपलक्षकत्वात् ।

तथा च जीवादिगुणसदृशभिन्न इति तत्पदलभ्यान् सादृश्यघटकधर्मान् प्रदर्श्य पर्य्यवसितमर्थमाह—**नित्यसविषयकत्वेत्यादिना लोकोत्तर** इत्यन्तेन । नित्यसविषयकत्वं नित्यत्वे सति सविषयकत्वम् । तत्र यद्यपि विषयेण सहेति विग्रहे वैशिष्ट्यार्थकेन सहशब्देन समासे वैशिष्ट्यस्य च निरूपकतात्मकतया विषयनिष्ठनिरूप्यतानिरूपितनिरूपकताश्रयार्थकसविषयकपदार्थोत्तरभावप्रत्ययेन तद्धर्म्मलाभात्तादृशनिरूपकताश्रयत्वं सविषयकत्वम्, तथापि प्रकृतेधिकस्य वैयर्थ्याद्विषयतानिरूपकत्वमात्रं लाघवादावश्यकत्वाच्च विवक्षितम् । विशेष्यमात्रस्य जीवादिगुणेष्वपि रूपाद्विशेषणमात्रस्य च जलादिपरमाणुरूपादावपि सत्त्वादुभयोरुपादानम् । केचिच्च **सर्वविषयकत्वेति** पाठः । स न समीचीनः, विश्वविषय इत्यनेनैव तदर्थलाभे सादृश्यघटकत्वेनापि तस्योपादाने पौनरुक्त्यापत्तेः । अवन्ध्यत्वञ्च फलजनकत्वाभावाभावः, न तु फलजनकत्वम्, तस्य जीवादिगुणेष्वपि बहुधा दृष्टत्वात् । अभावद्वयोपादाने तु तेषु फलजनकत्वाभावोपि बहुधा दृष्ट इति न तत्सामान्याभावस्तेष्विति तद्व्यावृत्तिः । **आदिना** रागद्वेषाद्यसामानाधिकरण्यस्योपग्रहः । **जीवादिगुणव्यावृत्तेनेति** । अनित्यवन्ध्यास्मदादिगुणावृत्तिनेत्यर्थः । **धर्म्मेणेति** तृतीयार्थो धान्येन धनवानित्यादाविवाभेदः तस्य चोक्तधर्म्मान्वितस्य लोकोत्तरपदार्थैकदेशे वैजात्येन्वयः, तस्य तदवृत्तिधर्म्मस्वरूपत्वात् । नित्यसविषयकत्वाद्यभिन्नजीवादिगुणावृत्तिधर्म्मवानिति फलितोर्थः । विश्वं विषयो यस्येति बहुव्रीहिलभ्यो विश्वनिष्ठविषयतानिरूपको **विश्वविषयपदार्थः** । तावन्मात्रस्य विवक्षितत्वे च विश्वस्य द्रव्या-

---

सदसतोरस्ति नास्तीति संशयस्तस्य, गोचरो विषय उदरं यस्यास्सा भैमी दृशोरतिथित्वम् = दृग्गोचरत्वम्, अनायि = आनीता इत्यर्थः । तत्र नैकेत्यत्र नकारलोपभिया नशब्देनैव समासस्य वक्तव्यतया तस्य चात्यन्ताभावार्थकत्वे एकाभाव एव लभ्येत, नैकभिन्न इति तस्य भेदार्थकत्वस्यैवोपेयत्वादिति भावः ।

* अभिव्यावर्त्तते इति । मुद्रितपुस्तके पाठः ।

## तस्य द्वैताप्रतिहतस्य प्रयत्नस्य जन्यजातजननानुकूलं सामर्थ्यम्* ।१।१।

दिपदार्थसमूहरूपतया तदन्तर्गतयत्किञ्चित्पदार्थस्यापि विश्वत्वेन तन्निष्ठविषयतामादाय विश्वविषयत्वञ्जीवादिगुणेष्वपीति तत्पदस्य तात्पर्य्यार्थमाह—**विषयतयेत्यादिना**। तृतीयार्थः पूर्ववदवच्छिन्नत्वम् । तस्य धात्वर्थवृत्तावन्वयः । **विश्वमिति** द्वितीयार्थो वृत्तिस्सा **चाभिव्याप्ये**त्यत्राभिव्याप्त्यर्थे यावदवयवसम्बन्धेन्विता । अवयवाश्चात्र यत्समुदायो विश्वपदार्थस्त एव, तत्सम्बन्धश्च तावत्पदार्थपर्य्याप्तियावत्त्वव्यापकत्वम्, तत्र यावत्त्वस्याधिकरणस्य च विश्वपदाद् वृत्तित्वस्य द्वितीयातो लाभाद् भेदप्रतियोगितावच्छेदकत्वमभावश्चेतिद्वयमेवाभिव्याप्तेरर्थः। क्त्वाप्रत्ययार्थो यद्यप्यन्यत्रोत्तरकालस्तथाप्यत्र तस्य बाधात "मुखं व्यादाय स्वपिति" "नेत्रे निमील्य हसति" "ॐ नमः सर्वभूतानि विष्टभ्य परितिष्ठते"... इत्यादिषु बहुधा समानकालेपि तस्य प्रयोगदर्शनात् समानकाल एवात्रापि तदर्थस्तस्य च वृतुधात्वर्थे वृत्तौ, तस्याश्चाख्यातार्थाश्रयत्वे, तस्य प्रथमान्तपदार्थे प्रयत्नात्मके गुणेन्वयाद् द्रव्यादियावत्पदार्थनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावसमानकालीनवृत्तिमान् यो गुण इति बोधः। तत्र यद्यपि तादृशाभावसमानकालीनवृत्तेर्जीवादिगुणेष्वपि सत्त्वान्नोक्तविशेषणतो जीवादिगुणवैलक्षण्यमीश्वरकृतेर्लब्धम्, तथापि विशिष्टवैशिष्ट्यावगाहियथोक्तबोधस्वभाववैचित्र्यादविधेयतावच्छेदकस्य तादृशाभावस्याप्युद्देश्ये गुणेन्वयाज्जीवादिगुणे च तस्यावृत्तित्वादीश्वरकृतेर्वैलक्षण्यमुक्तविशेषणतो लब्धमिति भावः।

यद्यपि नित्ये परमाणुगगनादौ प्रयत्नीयसाध्यत्वाख्यविषयता नास्ति, तथापि परमाणुद्वयसंयोगशब्दादिसाध्यकपरमाणुगगनाद्युपादानकेश्वरप्रयत्नस्योपादानत्वाख्यविषयता तत्राप्यस्त्येव, विषयतायाश्च विषयतात्वेनैव व्यापकतावच्छेदकसम्बन्धत्वान्न व्यापकत्वहानिः। जीवानाञ्चोपादानपरमाण्वादिप्रत्यक्षाभावान्न तादृशः प्रयत्न इति बोध्यम्।

**तस्य** इत्यत्रैकवचनस्य विवक्षितार्थकत्वात्ततोपि वैलक्षण्यमीश्वरकृतेरित्याह—**तस्य द्वैतेति**। द्वयोर्भावो द्विता, सैव द्वैतम्, स्वार्थेण्प्रत्ययात्। तेना-**प्रतिहतस्य** तत्सम्बन्धाभाववतः। प्रतिघातस्याभिघातादिस्वरूपस्यात्र बाधात्सम्बन्धमात्रार्थकत्वात्प्रतिहन्तेः। सम्बन्धश्च स्वभिन्नत्वस्वसामानाधिकरण्यो-

* इदं कृत्स्नजन्यजातजननानुकूलसामर्थ्यम्। इति मु० पु० पा०।

भयसम्बन्धेन स्वाधिकरणकृतिविशिष्टत्वम् । तस्य चेश्वरकृतेरैक्यात्तत्रैवाभावो न तु जीवादिगुणेष्वपीतिभावः ।

यद्यप्युक्तद्वित्वसम्बन्धाभावो नैकवचनार्थः, एकत्वस्यैव तत्त्वात्, तथापि सामान्यत एकत्वस्य केवलान्वयित्वेनाव्यावर्त्तकतया न तस्यैकवचनार्थता, किन्तु सजातीयद्वितीयरहितत्वस्यैव, तच्चोक्तद्वित्वसम्बन्धाभाव एवेति बोध्यम् ।

**प्रयत्नस्येति** । यद्यप्युक्तविशेषणानामीश्वरज्ञानेच्छयोरपि निराबाधात् प्रयत्नादिरिति वक्तुं युक्तम्, तथापि समवायेन कार्य्यं प्रति विशेष्यतासम्बन्धेनान्वयव्यतिरेकाभ्यां कृतेरेव कारणत्वम् । ज्ञानेच्छयोस्तु कृतिसाध्यत्वादिज्ञानचिकीर्षात्मकयोः कृतावेव कारणत्वात् कार्य्यमात्रं प्रति तयोरन्यथासिद्धत्वमित्यभिप्रायेण प्रयत्नमात्रोपादानम् । यदि चैवं सति सकर्त्तृकत्वमपि कृतिजन्यत्वमेवेति तस्याः कृतेर्द्रव्याश्रितत्वानुमानेन नित्यकृतिमदीश्वरसिद्धावपि नित्यज्ञानं नित्येच्छा च नेश्वरे सिद्ध्येताम्, तेषां कार्य्यकारणभावाभावादेव कार्य्येण कारणानुमानमपि तत्र न सम्भवतीति कार्य्यमात्रं प्रति नित्यज्ञानेच्छयोरपि कारणत्वमावश्यकमिति विभाव्यते, तदा प्रयत्नपदं तयोरप्युपलक्षकं बोध्यम् । वस्तुतस्तु यः करोति, स जानाति, स इच्छतीति व्याप्त्या कृतिमात्रस्यैव ज्ञानेच्छाव्याप्यत्वम्, न तु जन्यकृतेरेवेति कृतिमात्रस्य कार्य्यमात्रं प्रति कारणत्वेपि कृत्यैव ज्ञानेच्छयोरप्यनुमानादीश्वरे सिद्धिः । "यः सर्वज्ञः स सर्ववित्" "स ऐक्षत बहु स्यां प्रजायेयम्"... इत्यादिश्रुत्यैव तयोरीश्वरे सिद्धेर्य्यथाश्रुतमेव सम्यगिति बोध्यम् ।

व्यक्तीकरणार्थकपचिधातोः कर्त्तर्य्यच्प्रत्ययेन निष्पादिते पञ्चशब्देनोत्पत्त्याश्रयार्थकेन सह प्रशब्दस्य समासात् प्रपञ्चशब्दस्योत्पत्त्याश्रयो जन्यः, सर्वपर्य्यायस्याखिलशब्दस्य यावत्त्वविशेषाश्रयः, षष्ठ्याः निष्ठत्वम्, भावल्युडन्तप्रकाशतेरुत्पत्तिः, सप्तम्या निरूपितत्वम्, शक्तिपदस्य सामर्थ्यम्, तच्च नैयायिकमते कारणत्वादिरूपम्, मीमांसकमतेतिरिक्तं वार्थः, तदेतत्सर्वमभिप्रेत्या**खिलेत्यादेः** पर्य्यवसितमर्थमाह—**जन्यजातजननानुकूलं सामर्थ्यमिति ।**

**एषेत्य**स्यानुमीयमानत्वेन बुद्धिविषयेत्यर्थः । "इदमः प्रत्यक्षगतम्"... इत्यादौ प्रत्यक्षादिपदानां परिचायकमात्रतया बुद्धिविषयमात्रस्योपलक्षकत्वात् । "क्रमादमुं नारद इत्यबोधि सः" "अमुं पुरः पश्यसि देवदारुम्"... इत्यादौ प्रत्यक्षेप्यदसः प्रयोगदर्शनात् । तथा च समवायसम्बन्धावच्छिन्नकार्य्यत्वावच्छिन्नकार्य्यता-

**अथ च शब्दत्वेनानुगतीकृतस्सन्नेक इव व्यवह्रियमाणः गगनेतरत्र**

निरूपितविशेष्यतासम्बन्धावच्छिन्नकारणत्वमुक्तकृतिनिष्ठमिति बोधस्समुदायवाक्यतः फलितो ज्ञेयः। नैयायिकनये वाक्ये क्रियापदस्यानावश्यकत्वात्तस्यात्र विरहेऽपि न क्षतिः। क्रियापदरहितस्य वाक्यत्वाभाववादिनये चास्तिपदाध्याहारेण बोध ऊह्नीयः। ध्वंसस्यापि कार्य्यतया तस्य समवायेन कुत्राप्यसत्त्वात् तं प्रतीश्वरकृतेः कारणत्वोपपत्तये तु स्वरूपसम्बन्धस्यापि कार्य्यतावच्छेदकत्वम्, तच्च तयोरन्यतरत्वेनैव, नोभयत्वेन। तेन घटादेः स्वरूपेणावृत्तित्वेऽपि न क्षतिरिति बोध्यम्। अथवा ध्वंससाधारण्याय कालिकसम्बन्धस्यैव कार्य्यतावच्छेदकत्वम्। न च समवायेन कार्य्यं प्रति स्वनिष्ठकृतिविशेष्यतया कृत्याश्रयस्येश्वरस्यैव कारणत्वम्, न तु कृतेर्निष्प्रयोजनत्वादिति वाच्यम्, तस्य कारणत्वे कृतेस्तदवच्छेदकत्वस्य कृतित्वस्य च तदवच्छेदकतावच्छेदकत्वस्यावश्यं वक्तव्यतया सम्बन्धस्य च गुरुशरीरस्यैव तदवच्छेदकतया गौरवात् कृतित्वस्य स्वरूपतः कारणतावच्छेदकत्वे एव लाघवात्।

ननूक्तकार्य्यकारणभावे मानाभावः। कुलालादिकृतितः पटादिकार्य्योत्पत्तिवारणाय पटादितत्तद्विशेषकार्य्यं प्रति तन्तुवायादितत्तत्कृतेः कारणत्वस्यावश्यं वक्तव्यतया सामान्यकार्य्यकारणभावस्यानावश्यकत्वात्। "यद्विशेषयोः कार्य्यकारणभावस्तत्सामान्ययोरपि स" इति नियमस्याप्रयोजकत्वादिति चेन्न, कारणतावच्छेदकावच्छिन्नाभावस्यैव कार्य्यतावच्छेदकावच्छिन्नाभावप्रयोजकत्वेन विशिष्यैव कारणत्वेनन्यगतिकतयासर्वज्ञदुर्ज्ञेयानन्ततत्तत्कृत्यभावकूटस्यैव कार्य्यसामान्याभावप्रयोजकत्वस्य वक्तव्यतया कृतित्वावच्छिन्नसामान्याभावस्यैकस्य तत्प्रयोजकत्वापेक्षयातिगौरवात्। एवमीश्वरकृतेर्ज्ञानादिगुणावृत्तिधर्म्मैर्लोकोत्तरत्वप्रतिपादनेनोत्कर्षज्ञापनेन तदाश्रयस्येश्वरस्योत्कर्षातिशयो द्योत्य इति तं प्रति प्रणतोऽस्मीति लाभः। उत्कर्षज्ञानानुकूलव्यापारस्यैव प्रणमत्यर्थत्वादुक्तपद्यस्य नमस्क्रियात्मकमङ्गलप्रतिपादकत्वमिति बोध्यम्। १। १।

इदानीमुक्तपद्यस्य विशेषणानामन्यार्थकतां प्रदर्श्य विषयप्रयोजनसम्बन्धाधिकारिप्रदर्शनपरत्वं दर्शयति—**अथ चेत्यादिना**। **अथ** पूर्वोक्तबोधानन्तरम्, **चो** वक्ष्यमाणबोधसमुच्चायकः। **तस्ये**त्येकवचनार्थैकत्वस्य सजातीयद्वितीयराहित्यस्य शब्दानामनेकत्वात्तत्राभावमाशङ्क्याह—**शब्दत्वेनेति**। "इत्थ-

**समवायेनावर्त्तमानो जगति विषये विवर्त्तमानव्यापारः अनवच्छिन्नप-**
म्भूतलक्षणे" इति सूत्रविहिततृतीयाया वैशिष्ट्यमाधेयत्वस्वरूपम्, अनुगमेरे-कत्वम्, निष्ठाप्रत्ययस्याश्रयः, "कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः" इति सूत्रेण "अभूततद्भाव इति वक्तव्यम्" इति वार्त्तिकसहकृतेन विहितस्य च्वेरभूततद्भावः, स चात्राभूतस्य साक्षात्सम्बन्धेनैकत्वादिरहितस्य तद्भावः स्वाश्रयशब्दत्ववत्त्व-रूपपरम्परासम्बन्धेनैकत्वादिस्तद्धर्म्मः । अथवाभूतो धर्म्मिणि साक्षादविद्य-मानः, तद्भावः परम्परया तद्वृत्तिरेकत्वादिः, तत्राभूतत्वस्य संसर्गमर्य्यादया लब्धसंसर्गतया तद्भावमात्रमेकत्वादिरेव, कृञश्चाश्रयत्वम्, लक्षणया निष्ठायाश्चा-श्रयोर्थः । तत्र तृतीयार्थस्य निरूपितत्वेन प्रकृत्यर्थान्वितस्य धात्वर्थैकत्वे, तस्य च निष्ठार्थैकदेशाश्रयत्वे उक्तपरम्परया, निष्ठार्थस्य च च्व्यर्थैकत्वे आधेयत्वसाक्षा-त्सम्बन्धावच्छिन्नप्रतियोगिताकस्वनिष्ठाभावप्रतियोगित्वोभयसम्बन्धेन, तस्य निरूपितत्वेन कृञर्थाश्रयत्वे, तस्य निष्ठार्थेन्वयात् शब्दत्वनिरूपिताधेयताव-देकत्वाश्रयविशिष्टैकत्वनिरूपिताश्रयतावानिति **शब्दत्वेनानुगतीकृत** इत्यतो बोधः । 'कर्म्म गच्छति'इत्यप्रयोगान् नद्धर्म्मे तद्धर्म्मविशिष्टस्याधेयतामात्रेणान्वयो विरुद्धः, नत्वाधेयताघटितोभयादिसम्बन्धेन, व्युत्पत्तिवैचित्र्यात्। अतो न च्वि-प्रकृत्यर्थस्य च्व्यर्थेन्वयानुपपत्तिः । शब्दत्वस्य जातित्वात्सङ्ख्यात्मकस्यैकत्वस्य तत्राभावेप्यपेक्षाबुद्धिविशेषविषयत्वस्वरूपस्य तद्व्यक्तित्वरूपस्य वा तस्य साक्षात्सम्बन्धेनैव तत्र वृत्तिर्न्निराबाधा । **सन्** वर्त्तमानः, **एकः** साक्षादेकत्व-वान् गगनादिः, तस्य स्वकर्म्मकव्यवहारप्रतियोगिकत्वसम्बन्धेन **इवा**र्थसादृश्ये, तस्य **व्यवह्रियमाण** इत्यत्र धात्वर्थव्यवहारेनुयोगित्वेन, तस्य कर्म्मकृदर्थ-कर्म्मणि, परम्परया तस्य **यो गुण** इत्यत्र गुणेन्वयः । सादृश्यस्य निपातार्थ-तया तस्य भेदेनापि नामार्थान्वयस्य व्युत्पत्तिसिद्धत्वात् । तथा च गगनादि-कर्म्मकव्यवहारसदृशव्यवहारकर्म्मीभूतस्तादृशो गुण इति समुदितवाक्यज-बोधः । एवञ्च **तस्ये**त्येकवचननार्थः स्वाश्रयशब्दत्ववत्त्वसम्बन्धेनैव गुणेन्वित इति बोध्यम् । **नान्यसाधारण** इत्यस्य पूर्वोक्तार्थस्याकाशे बाधादन्यादृशं पर्य्यवसितमर्थमाह—**गगनेतरत्रेति** । अन्यस्मिन् गगनादित्यर्थतः साधारणो वृत्तिमान्नेति विग्रहेणोक्तार्थो बोध्यः । कालिकावच्छेदकतादिसम्बन्धेन काल-कण्ठताल्वादौ शब्दस्य वृत्तेः **समवायेने**त्युक्तम् । ईश्वरभिन्नेष्वपि जीवेषु कृतेस्सम-वेतत्वान्न पूर्वमीदृशोर्थः कृतः । निर्विषयस्य शब्दस्य विश्वनिष्ठविषयताकत्वं साक्षान्न सम्भवतीत्यत आह—**विवर्त्तमानव्यापार** इति । तथाच शब्दजन्यो-

**रिणामस्याकाशस्य वर्णलक्षणो गुणस्तस्य सर्वधर्म्मिबोधाय प्रभवत्य-भिधानामवृत्तिरिति । १ । २ ।**

पस्थितेश्शब्दव्यापारस्य जगति सर्वस्मिन्नेव विषयतासम्बन्धेन वर्त्तमानत्वात् स्वजन्योपस्थितिविषयत्वं विश्वनिष्ठं शब्दनिरूपितं विषयत्वम्, शब्दस्य च विश्वनिष्ठविषयतावदुपस्थितिप्रयोजकत्वं विश्वनिष्ठविषयताकत्वम्, इयमेव च व्यापारानुबन्धिनी विषयतेत्युच्यत इति बोध्यम् । विश्वपदार्थसमालोचनेन निष्क-र्षश्च पूर्ववद्बोध्यः । शब्दजन्योपस्थितिविषयताया अपि केवलान्वयित्वात् ।

मूर्त्तद्रव्यत्वव्यापकत्वरूपं विभुत्वं पूर्वोक्तं यद्यपि गगनस्यापि सम्भवति गगनादिचतुर्णामेव सकलमूर्त्तसंयोगित्वात् , तथापि विभुद्वयसंयोगानङ्गीकारे सकलवस्तुवृत्तित्वन्तस्य न सम्भवतीति विभुपदस्याप्यन्यादृशमेवार्थमाह— **अनवच्छिन्नेति । परिमाणे**नवच्छिन्नत्वं कुतोप्यपकृष्टत्वाभावः । इदञ्च विभुत्वमीश्वरस्यापि निराबाधमिति लाघवादिदमेव विवक्षणीयमुभयत्रापीति ध्येयम् । मृदङ्गादिजन्यस्य शब्दप्रभेदस्य ध्वनेश्शाब्दबोधजनकशक्त्यभावादाह— **वर्णलक्षण** इति । अकारादिपञ्चाशद्वर्णस्वरूप इत्यर्थः । उत्तरार्द्धं व्याचष्टे— **तस्येत्यादिना । तस्य** वर्णात्मकशब्दस्य, षष्ठ्यर्थो निष्ठत्वन्तस्य च शक्ति-पदार्थे**भिधानामवृत्ता**वन्वयः । **अखिलप्रपञ्चपदं** पूर्ववदेव जन्यमात्रबोध-कञ्चेत् ? नित्यानां प्रागभावस्य च शब्दजन्यबोधविषयत्वन्न लब्धमतो विस्तारवचनार्थकप्रपञ्चेरच्प्रत्ययान्तप्रपञ्चशब्दस्य जननानुकूलव्यापाराश्रयार्थक-त्वान्नित्यानामपि द्व्यणुकादिजननानुकूलव्यापारवत्त्वात्तत्पदेन बोधसम्भवात् । **अखिलपदस्य** सर्वपर्य्यायत्वात् **प्रकाशनञ्च** बोध एवेत्याह—**सर्वधर्म्मि-बोधायेति ।** चतुर्थी च **प्रभवती**त्यस्य समर्था भवतीत्यर्थकतया "नमः स्वस्ति"... इत्यादिसूत्रेलम्पदस्य व्याख्यानात् पर्य्याप्त्यर्थकार्थत्वात् "दैत्येभ्यो हरिरलम्प्र-भुस्समर्थश्शक्तः" "तस्मै प्रभवति सन्तापादिभ्यः"इत्यत्रेव साधुः । कारिकास्थ-शक्तिपदस्याभिधानामवृत्त्यर्थकत्वेन पर्य्याप्त्यर्थकत्वाभावात् तद्योगे चतुर्थ्य-प्रसक्त्या वैषयिकाधारवाचकात्प्रकाशनपदात्सप्तम्येव । पूर्वपक्षे शक्तिपदस्य सामर्थ्यवाचकत्वेपि धर्म्मिवाचकपदयोग एव चतुर्थ्याः विधानात्सामर्थ्यात्म-कधर्म्ममात्रवाचकाच्छक्तिपदयोगे न चतुर्थीति बोध्यम् । तदर्थश्च निरूपितत्वं,

**विश्वेश्वरस्य कृतिरिवाकाशस्य शब्दोपि तत्त्वतो ज्ञातः संसारान्मोचयतीति प्रयोजनसम्बन्धध्वनिः । १ । ३ ।**

तस्य प्रभवत्यर्थे प्रयोजकत्वात्मकसामर्थ्ये तिङर्थाश्रयत्वान्विते तादृशाश्रयत्वस्य च शक्तिपदार्थे**भिधानामवृत्ताव**न्वयः । अत्रैव **चैषा**पदबोध्यस्यानुपदन्निर्वक्ष्यमाणत्वेन समीपतरवर्त्तित्वप्रकारकबुद्धिविषयाभेदस्याभेदेन तादृशविपयस्य वान्वयो बोध्यः । तथा च सर्वधर्म्मिविपयताकशाब्दबोधनिरूपितप्रयोजकतावती समीपतरवर्त्तित्वप्रकारकबुद्धिनिरूपितविषयतावदभिन्नाभिधानाम्नी वृत्तिरिति बोधः फलित इति । अत्र **नान्यसाधारणादि**पदानां श्लिष्टतया प्रकरणादेरशक्तिनियन्त्रकस्याभावेनोभयार्थस्य बोधो नानुपपन्न इति बोध्यम् । १ । २ ।

एतद्ग्रन्थप्रतिपाद्यपदवाक्ययोर्म्मोक्षप्रयोजकत्वेन स्वप्रतिपाद्यशब्दज्ञानद्वारा मोक्ष एवास्य ग्रन्थस्य प्रयोजनमिति दर्शयति—**विश्वेश्वरस्य कृतिरिवेत्यादिना** । अयमाशयः यद्यपि "प्रमाणप्रमेय"...इत्यादिसूत्रेण "धर्म्मविशेषप्रसूताद्द्रव्यगुणकर्म्म".. इत्यादिसूत्रेण च भगवताक्षपादेन कणादेन च प्रमाणादिषोडशपदार्थानां द्रव्यादिसप्तपदार्थानाञ्च तत्त्वज्ञानस्य मोक्षहेतुत्वं प्रतिपादितम्, न केवलं नित्यकृतिशब्दतत्त्वज्ञानस्यैवेति तयोर्विशेपतस्संसारमोचकत्वेनोपादानन्नोचितम्, तथापि कार्य्यत्वादिहेतुकसकर्त्तृकत्वादिसाध्यकानुमानात्मकेश्वरमनने साध्यघटककृत्यादेः सर्वविपयकत्वाद्यात्मकतत्त्वज्ञानाभावे तदाश्रयेश्वरजन्यत्वस्य तज्जन्यत्वस्य वा साध्यस्य कार्य्यमात्रे ज्ञानासम्भवादुक्तमनानुपपत्त्या तत्प्रयोज्यमोक्षानुपपत्तिरिति तदीयकृतेस्तत्त्वज्ञानं यथा मोक्षप्रयोजकम्, यथा चाकाशसमवेतस्य शब्दस्य प्रमाणाद्यखिलपदार्थबोधकसम्बन्धवत्त्वात्मकतत्त्वज्ञानाभावे "श्रोतव्यो मन्तव्यः"...इत्यादिश्रुत्या "श्रोतव्यः श्रुतिवाक्येभ्यः".. इत्यादिस्मृत्या च बोधितस्य श्रुतिवाक्यजन्यशाब्दबोधात्मकेश्वरश्रवणस्यानुपपत्तिरिति शब्दस्यापि तत्त्वज्ञानं मोक्षप्रयोजकम्, न तथा तदन्यद्रव्यादिपदार्थज्ञानमिति विशिष्य तयोरेव संसारमोचकत्वध्वनिर्दर्शिता । वेदान्तमते च "जन्माद्यस्य यतः" इति सूत्रप्रतिपादितजगत्कर्त्तृत्वादिविशिष्टब्रह्मणः प्रथमतो ज्ञाने कृतिज्ञानमवश्यमपेक्षणीयमिति तदीयकृतेस्तत्त्वतो ज्ञातायाः मोक्षप्रयोजकत्वन्तदितरपदार्थविलक्षणन्निराबाधम् । शब्दस्य च तत्त्वतो ज्ञानाभावे

**ननु घटादिवर्णानां प्रपञ्चप्रकाशनसामर्थ्यन्न प्रत्येकपरिसमाप्तम् ,**

वेदान्तवाक्येभ्यो बोधासम्भवेन तत्परिशीलनजन्यतत्त्वमसीत्यादिमहावाक्यजन्याखण्डबोधासम्भवेन च मोक्षासम्भवात् शब्दतत्त्वज्ञानम्मोक्षप्रयोजकमिति बोध्यम् ।

ननु न्यायमते देहादावात्मभेदसाक्षात्कारस्यात्मनि देहादिभेदसाक्षात्कारस्यैव वा स्वात्मनि देहादितादात्म्यज्ञानाद्यात्मकमिथ्याज्ञानोन्मूलनक्षमत्वेन तत्त्वज्ञानतया तस्यैव मोक्षजनकत्वम् , न त्वीश्वरमननस्य । न च स्वात्मविषयकतादृशसाक्षात्कारस्येव ईश्वरमननस्यापि पृथगेव मोक्षजनकत्वमिति वाच्यम् , "आत्मा वारे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यः" इति श्रुत्या मन्तव्येन सह साक्षात्कर्त्तव्यस्याभेदप्रतिपादनान यद्विषयकः साक्षात्कारो मोक्षहेतुस्तद्विषयकस्यैव मननस्य मोक्षजनकत्वावगमादीश्वरविषयकस्यान्यात्ममात्रविषयकस्य वा साक्षात्कारस्य तत्तद्विषयकमिथ्याज्ञाननाशकत्वेपि तादृशमिथ्याज्ञानस्य संसारहेतुत्वाभावात् तद्धेतुभूतस्वात्मविषयकतादृशमिथ्याज्ञाननाशकत्वासम्भवेन मोक्षजनकत्वाभावादिति चेन्न, "तमेव विदित्वातिमृत्युमेति" इति श्रुत्या प्रकरणादीश्वरस्यैव तत्पदादुपस्थितस्य ज्ञानोत्तरं मृत्युमत्येति दुःखेनात्यन्तं विमुक्तो भवतीत्यर्थकतया ईश्वरज्ञानस्यापि मोक्षहेतुत्वावगमात् । "द्वे ब्रह्मणी वेदितव्ये" इति श्रुतौ ज्ञानमात्रस्याकाङ्क्षितत्वेन प्रकृतत्वात् विदित्वेत्यनेन मननस्यापि लाभात् । तस्योक्तमिथ्याज्ञाननाशकत्वाभावेपि "स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोति" इति श्रुत्या स्वात्मसाक्षात्कारप्रयोजकत्वेनैव तस्य मोक्षहेतुत्वम् । यद्वा श्रुत्या मोक्षहेतुत्वे प्रतिपादितेनायत्यादृष्टद्वारैव तस्य तद्धेतुत्वमिति । शब्दतत्त्वज्ञानस्य मोक्षहेतुत्वम् "एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति"... इत्यादिना पातञ्जले महाभाष्ये स्वर्गतुल्यमोक्षप्रतिपादनाच्च बोध्यम् । एवञ्चास्य ग्रन्थस्य विषयः शब्दः, प्रयोजनञ्चात्यन्तिकदुःखनिवृत्तिर्मोक्षः, सम्बन्धश्च विषयप्रयोजनयोः प्रयोज्यप्रयोजकभावः, विषयग्रन्थयोश्च प्रतिपाद्यप्रतिपादकभावः, मोक्षकामोधिकारीति ध्वनितमुक्तपद्येनेति दिक् । १ । ३ ।

यदुक्तं वर्णलक्षणस्याकाशगुणस्याखिलवस्तुविषयकशाब्दबोधानुकूलशक्तिमत्त्व**मखिलप्रपञ्चप्रकाशनसामर्थ्य**मिति तत्र तादृशशक्तेर्घटादिपदेषु प्रत्येकं घकारादौ घकाराकारटकारादिसमुदाये वा सत्त्वासम्भवादसङ्गतं तदित्याशङ्कते—**नन्वित्यादिना । न प्रत्येकपरिसमाप्तमिति । प्रत्येकं** घत्वाद्येकधर्म्मावच्छेदेन,

**घश्रवणमात्रेण कलसावगमप्रसङ्गात्। नापि समुदायव्यासक्तम्, क्षणद्वयमात्रप्राणनस्य तेन पुरुषेणोच्चरितस्य घकारस्य तत्पुरुषोच्चारयिष्यमाणेन टकारेण सह यौगपद्येनोत्पत्तेरसम्भवात्,**

**परिसमाप्तं** पर्य्याप्तिमन्नेत्यर्थः। तथा च घटत्वादिप्रकारकशाब्दबोधानुकूला शक्तिः घत्वाद्येकधर्म्मावच्छिन्नपर्य्याप्तिप्रतियोगिभिन्नेत्यर्थः। तत्र हेतुमाह—**घश्रवणेति**। मात्रपदेन टकारादिश्रवणव्यवच्छेदः। **कलसावगमप्रसङ्गादिति**। घकारमात्रेपि तादृशशक्तेः पर्य्याप्ततया तच्छ्रवणेनापि घटत्वप्रकारकोपस्थितिशाब्दबोधयोः प्रसङ्गादित्यर्थः। एवं टकारोच्चारणानर्थक्यञ्च, अभिमतबोधस्य घकारमात्रेणैव जननादित्यपि बोध्यम्। उक्तसमुदायत्वावच्छिन्ने तादृशशक्तेः सत्तान्निराकरोति—**नापीत्यादिना। समुदायव्यासक्तमिति**। समुदायत्वावच्छिन्ननिरूपितव्यासज्यवृत्तितावन्नेत्यर्थः। तथा च व्यासज्यवृत्तेरतस्याः प्रत्येकमसत्त्वादुक्तदोषद्वयाभावेप्यनुपदं वक्ष्यमाणदोषभियैव न समुदायव्यासक्तत्वमपि तस्या इति भावः। तमेव दोषमाह—**क्षणद्वयेत्यादिना**। प्राणिनि वर्त्तते प्राणनः, नन्द्यादित्वात्कर्त्तरि ल्युः, क्षणद्वयमात्रं प्राणनस्तस्य। अथवा क्षणद्वयमात्रं प्राणनं वृत्तिर्य्यस्य तस्येत्यर्थः, भावे ल्युड्विधानात्। प्राणवायुसंयोगानुकूलव्यापारार्थकस्यापि प्राणितेरचेतने घटादौ तदर्थस्य बाधाद् वृत्तित्वमात्रार्थकत्वात् तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वात्मकक्षणिकत्वाश्रयस्येत्यर्थः। मात्रपदेन तृतीयक्षणवृत्तित्वाभावलाभात् योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वनियमात् स्वोत्तरतृतीयक्षणोत्पन्नेन टकारेण कार्य्यसहवर्त्तिना नाशस्यावश्यकत्वात्। इदञ्च वक्ष्यमाणे तयोर्यौगपद्येनोत्पत्तेरसम्भवे हेतुः। **तेन पुरुषेणोच्चरितस्य** तत्पुरुषकर्त्तृकभूतकालीनोच्चारणकर्म्मीभूतस्य। **तत्पुरुषोच्चारयिष्यमाणेन** तत्पुरुषकर्त्तृकभविष्यत्कालीनोच्चारणकर्म्मणा। घकारटकारयोर्विशेषणाभ्यामाभ्याञ्च तयोरुच्चारणयोर्भूतभविष्यत्कालवृत्तित्वप्रतिपादनेन पौर्वापर्य्यलाभात् कारणपौर्वापर्य्यस्य च कार्य्यपौर्वापर्य्यनियामकत्वाद् घकारटकारयोर्यौगपद्येनोत्पत्तेरसम्भवे हेतुः प्रदर्शितः। तत्रापि तत्पदद्वयेनैकपुरुषोच्चरितेन घकारेणान्यपुरुषोच्चरितघकारोत्तरोच्चारयिष्यमाणेनापि टकारेण यौगपद्येनोत्पत्तिसम्भवादेककर्त्तृकस्य भूतस्याप्युच्चारणस्यान्यकर्त्तृकभविष्यदुच्चारणेन यौगपद्यसम्भवेप्युच्चारणकर्त्तृपुरुषस्यैकत्वप्रतिपादनात् तादृशयोर्यौगपद्यन्न सम्भवतीत्युक्तम्। **यौगपद्यञ्च** स्वा-

**विभिन्नपुरुषोच्चरितघकारटकारव्यतिकरेणार्थप्रत्ययाभावाच्च ।**

धिकरणक्षणवृत्तित्वं स्वोत्पत्त्यधिकरणक्षणोत्पत्तिकत्त्वं वा । तृतीयार्थवैशिष्ट्यञ्च स्वरूपं सामानाधिकरण्यरूपं वा । तत्र प्रथमासम्भवे क्षणिकत्वम्, द्वितीयासम्भवे तेनेत्यादिर्हेतुर्बोध्यः । तथा च सामान्यतो घकारटकारगतसमुदायत्वावच्छिन्ने तादृशशक्तिस्वीकारे कालान्तरीणदिवसान्तरीयघकारटकारयोरपि तादृशसमुदायत्ववत्त्वात्तदवच्छिन्नज्ञानादपि घटत्वप्रकारकशाब्दबोधापत्तिरतः स्वाधिकरणक्षणवृत्तित्वेन स्वोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वेन वा सम्बन्धेन घकारविशिष्टे टकारे एव तादृशशक्तेरभ्युपगन्तव्यतया घप्रतियोगिकोक्तसम्बन्धयोश्चोक्तहेतुभ्यां टकारानुयोगिकत्वासम्भवादुक्तसमुदायेऽपि नोक्तशक्तेस्सम्भव इति भावः ।

ननु माभूदेकपुरुषोच्चरितघकारेण टकारस्योक्तसम्बन्धवत्त्वम्, भिन्नपुरुषोच्चरितयोस्तु तयोस्तद्वत्त्वे बाधकाभाव इत्यत आह—**विभिन्नेति ।** **व्यतिकरेण** सम्बन्धेन स च सम्बन्धः उक्त एव । तृतीयार्थप्रयोज्यत्वस्यार्थप्रत्ययेऽन्वयः । घटत्वादिप्रकारकशाब्दबोधाभावादित्यर्थः । **चकारः** पूर्वोक्तं हेतुं समुच्चिनोति । तथा-चोक्तान्यतरसम्बन्धमात्रेण घकारविशिष्टटकारे घटत्वप्रकारकशाब्दबोधानुकूलशक्तिस्वीकारे चैत्रोच्चरितघकारेण तादृशवैशिष्ट्यस्य मैत्रोच्चरितटकारेऽपि सत्त्वात्तयोरपि ज्ञानात् सर्वानुभवविरुद्धस्य घटत्वप्रकारकशाब्दबोधस्यापत्तिरतस्स्वोच्चारकोच्चरितत्वसहितस्यैवोक्तान्यतरस्य वैशिष्ट्यनियामकत्वं वाच्यमिति नोक्तोभयसम्बन्धस्य घकारप्रतियोगिकस्य टकारे सम्भव इति भावः ।

ननु माभूच्चैत्रोच्चरितघकारेण तदुच्चारयिष्यमाणस्य टकारस्योक्तोत्पत्तियौगपद्यम्, घकारटकारयोरेकक्षणे चैत्रेणोच्चारणस्य सम्भवात्तयोरुत्पत्तियौगपद्यन्निराबाधम् । एवञ्चैत्रकर्तृकघकारोच्चारणाव्यवहितोत्तरक्षणेऽपि तत्कर्तृकटकारोच्चारणस्य तदुच्चरितटकारस्य च वृत्तित्वसम्भवादपि तयोरुत्पत्तियौगपद्यमव्यवधानेन पौर्वापर्य्यं वा निराबाधम् । तच्च स्वप्रयोजकपुरुषप्रयोज्यतावच्छेदकवैजात्याश्रयत्वम् । तेन चैत्रोच्चरितघकारस्य मैत्रादिकर्णसमवेतत्वाभावात् परम्परया तत्प्रयोज्यस्यैव घकारस्य तत्कर्णे उत्पन्नतया तत्प्रत्यक्षस्य मैत्रादेरसम्भवः । यस्य च घकारस्य मैत्रप्रत्यक्षविषयत्वं तत्र स्वोच्चारकोच्चरितत्वाभावेऽपि चैत्रोच्चरितघकारादौ तेन परम्परया जनितेषु च घकारादिषु घत्वादिव्याप्यवैजात्यस्यानुभवसिद्धत्वात्तदादायैवोक्तसम्बन्धसत्त्वं तत्रादौ बोध्यम् । अन्यथा उच्चारक-

**नचैकपुरुषोच्चरितयोरेव घकारटकारयोः स्थित्युत्पत्तियौगपद्यमव्यवधानेन पौर्वापर्य्यं वा समुदितत्वमित्यपि सम्भवति ।**

पुरुषभेदेन वर्णेषु वैजात्यास्वीकारे भित्त्याद्यन्तरितचैत्राद्युच्चारितघकारपरम्परा-जनितघकारश्रवणानन्तरं तादृशघकारोच्चारकत्वहेतुना चैत्रादेरनुमित्यनापत्तिस्स्यादतः पुरुषभेदेन घत्वादिव्याप्यजातयोपि पृथगेवावश्यमभ्युपगम्या इति दिक् ।

तथा च स्वोच्चारकोच्चरितत्वसहितेन स्वोत्पत्तिक्षणोत्पत्तिकत्वेन स्वाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणवृत्तिकत्वेन वा सम्बन्धेन घकारवैशिष्ट्यस्य टकारे सम्भवात् तादृशत्वमेव च घकारटकारयोस्समुदितत्वमिति न तत्समुदाये शक्तिस्वीकारे कोपि दोष इत्यत आह—**नचैकेति । स्थित्युत्पत्तियौगपद्यमिति न सम्भवतीत्य**नेनान्वितम् । स्थितेरुत्पत्तेश्च यौगपद्यं स्थित्या सहोत्पत्तर्यौगपद्यमिति च तदर्थः । * तथा च घकारटकारयोरुत्पत्तेः स्थितेर्वा यौगपद्यम्, घकारस्थित्या टकारोत्पत्तेर्वा यौगपद्यम्, तत्रोत्पत्तियौगपद्ये लब्धे स्थितियौगपद्यमर्थत एव लब्धमतोविवक्षितत्वैव तद्द्वे एव यौगपद्ये विवक्षिते । **अव्यवधानेने**त्यनेन च तृतीयं लब्धमिति बोध्यम् ।

भवेदेवं यदि घकारटकारयोरुत्पत्तेः सामग्र्या वेकक्षणेऽव्यवहितक्षणयोः क्षणैकमात्रव्यवहितेपि वा क्षणे संवलिते भवेताम्, तदेव न, परस्परं विलक्षणयोस्तयोरेकानन्तरमपरसमवधाने द्वादशक्षणानामन्तरावश्यकत्वादिति कथं घकारटकारयोरुक्तसम्बन्धैर्वैशिष्ट्यमिति दर्शयितुं शब्दोत्पत्तिप्रक्रियामाह—**तथाहीत्यादिना । हि** हेतौ, **तथा** यथा तयोः स्थित्युत्पत्तियौगपद्यन्न सम्भवति तथा दर्शयामीति शेषः । कार्य्यमात्रं प्रति प्रवृत्तिरूपायाः कृतेः कारणत्वादीश्वरकृतेरसाधारणकारणास्मदादिकृतिसहकारमन्तरेण दृष्टकार्य्यानुत्पादकत्वस्य "यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥"... इत्यादिना प्रतिपादनादस्मदादिकृतिं प्रति च चिकीर्षाकृतिसाध्येष्टसाधनत्वज्ञानोपादानप्रत्यक्षाणां कारणत्वात्, उपायेच्छात्मकचिकीर्षां प्रति फलेच्छायाः, सुखदुःखध्वंसात्मकफलेच्छां प्रति च सुखत्वदुःखध्वंसत्वप्रकारकज्ञानमात्रस्य कारणत्वाद्

---

*घकारोत्पत्त्या टकारोत्पत्तेः, घकारस्थित्या टकारस्थितेः, घकारस्थित्या टकारोत्पत्तेर्वा यौगपद्यन्न सम्भवतीति तात्पर्य्यम् ।

**तथाहि—प्रथमं स्वतःपुरुषार्थतावच्छेदकसुखदुःखाभावत्वादिविशेषित-सुखादिज्ञानात्**

घकारादिसाध्यकचेष्टासाध्यकप्रवृत्तेरप्युक्तसामग्र्यभावेनुत्पत्त्या तत्सामग्रीसम्पादनाय भूमिकामारचयति—**प्रथमं स्वत इत्यादिना । प्रथमपदं** प्रथमक्षणपरम् । तेन कालवाचकात्तस्मादत्यन्तसंयोगे द्वितीया । तदर्थस्य व्यापकत्वस्य स्वरूपेणाधिकरणत्वस्य वा निरूपकत्वेन **सुखादिज्ञानादि**त्यत्र ज्ञानपदार्थेन्वयः । प्रकृत्यर्थतावच्छेदकप्रथमक्षणत्वस्याधिकरणतायाश्चैत्रादिकर्तृकज्ञानाधारतात्वव्याप्यधर्म्मावच्छिन्नावच्छेद्यत्वेन स्वरूपसम्बन्धरूपेणान्वयाद्द्वितीयाया अत्यन्तसंयोगार्थकत्वोपपत्तिः । अथवात्यन्तसंयोगाविवक्षायामपि तथा प्रयोगदर्शनात् **प्रथमपदं** प्रथमक्षणवृत्तिपरम् । तस्य चाभेदेन ज्ञाधात्वर्थज्ञानक्रियाविशेषणत्वाद्द्वितीयान्तत्वम् । क्षणे प्रथमत्वञ्च सुषुप्त्याद्यव्यवहितोत्तरत्वम् । गुर्वादेः सुषुप्त्याद्यनन्तरं शौचाद्यर्थञ्जलाद्यानयनाय घटेन जलमाहरेत्यादिवाक्यं शिष्यादिप्रेरणात्मकं प्रयोक्तुमावश्यकम् । प्रयोगश्च कण्ठताल्वाद्यभिघातरूपमुच्चारणमेव । तत्र च परम्परया कण्ठचेष्टायाः, तस्याश्च कण्ठोपादानकचेष्टासाध्यकप्रयत्नस्य, तत्र कण्ठतालुसंयोगरूपेष्टसाधनत्वप्रकारकचेष्टाविशेष्यकज्ञानादिजन्यचेष्टाचिकीर्षायाः कारणत्वात् । तादृशचिकीर्षायाः कृतिसाध्यत्वप्रकारतानिरूपितचेष्टाविशेष्यताकेच्छारूपायाश्चेष्टादीनामन्येच्छाविषयत्वरूपोपायत्वेनोपायेच्छा प्रति च फलेच्छायाः कारणत्वात्तत्फले कण्ठतालुसंयोगे इच्छावश्यकी । तस्याश्च शब्दात्मकफलेच्छायास्तदात्मकेष्टसाधनत्वज्ञानकृतिसाध्यत्वज्ञानयोः कारणत्वात्, शब्देच्छायाश्च शिष्यादिसमवेतशाब्दबोधरूपेष्टसाधनताज्ञानादेः स्वफलशाब्दबोधेच्छायाश्च कारणत्वात्, शाब्दबोधेच्छायाश्च सुखदुःखध्वंसात्मकेष्टसाधनताज्ञानादेः स्वफलसुखदुःखध्वंसान्यतरेच्छायाश्च जनकत्वात्, सुखदुःखध्वंसयोश्च स्वतः फलत्वेनान्येच्छानधीनेच्छाविषयत्वात्तयोरिच्छायां सुखत्वादिप्रकारकज्ञानमात्रस्यैव जनकत्वात्, तस्य चानुभवस्य स्मृतेर्वा स्वकारणात्मसंयोगादितः सुषुप्त्यव्यवहितोत्तरज्ञनने बाधकाभावात्तदधिकरणक्षणस्य प्रथमत्वं बोध्यम् ।

**स्वतः पुरुषार्थतावच्छेदकेति**विशेषणात्तयोरिच्छाया अन्येच्छानधीनस्वप्रतिपादनेनोपायत्वाभावप्रतिपत्तेरुपायेच्छामात्रं प्रत्येव फलेच्छायाः कारण-

**स्वस्य सुखे दुःखाभावे वा तत्साधनताप्रतिसन्धानात्* परस्य वाक्यार्थबुद्धौ तत्कारणत्वाकलनाच्छब्दे तदुपायत्वप्रत्ययात्**

त्वात्तदन्येच्छानुसरणस्यानावश्यकत्वम् । ततश्च न तदर्थं पुनरिष्टसाधनत्वादिज्ञानापेक्षेत्यतो नानवस्थेति सूचितम् । स्वतः पुरुषार्थतावच्छेदकत्वञ्चान्येच्छानधीनेच्छाविषयतावच्छेदकत्वं स्वतादात्म्यस्वभिन्नजन्येच्छाप्रयोज्यत्वाभाववत्त्वोभयसम्बन्धेन इच्छाविशिष्टेच्छाविषयतावच्छेदकत्वात्मकम् । सुखं दुःखध्वंसो वा भवत्वितीच्छयोर्जन्येच्छाया अप्रयोजकत्वाद् भोजनादीच्छानाञ्च भोजनजन्यसुखेच्छाप्रयोजकत्वान्नाव्याप्त्यतिव्याप्ती । ईश्वरेच्छायाः कार्य्यमात्रजनकत्वादसम्भववारणायेच्छायाञ्जन्यत्वं विशेषणम् । सुखञ्च दुःखाभावश्चेति द्वन्द्वात्परस्य भावप्रत्ययस्य प्रत्येकमन्वयात् **विशेषितपदस्य** प्रकारताकत्वावच्छिन्नबोधकत्वात् सुखत्वादिप्रकारताकसुखादिविशेष्यताकज्ञानादित्यर्थः । **अभावपदञ्च** जन्यत्वविशिष्टाभावत्वावच्छिन्नलाक्षणिकतया ध्वंसबोधकन्न त्वत्यन्ताभावबोधकम्, तस्य नित्यत्वेन सिद्धत्वात् सिद्धे विषये इच्छानुदयात् । तत्सम्बन्धे स्वानुयोगिकत्वस्यासिद्धत्वेन सिद्धधनादिविषयेसिद्धन्तदनुयोगिकस्वप्रतियोगिकस्वत्वमादायेच्छावत् दुःखाभावेप्यसिद्धं तत्सम्बन्धमादायैवेच्छेति चेत् ? परकीयदुःखस्यात्यन्ताभावस्तत्सम्बन्धश्च स्वतः सिद्ध एव, दुःखसामान्यात्यन्ताभावश्चासम्भवीति तत्र तत्सम्बन्धे वा कृतिसाध्यताज्ञानासम्भवात्तत्रेच्छाया असम्भव इत्यादिकं दुःखध्वंसस्य मुक्तित्वं सिद्धान्तयता मणिकृता मुक्तिवादे "अपरे तु"... इत्यादिनोक्तमनुसन्धेयं विस्तरभयान्नेहास्माभिस्तन्यते ।

परकीयसुखादेः स्वं प्रति स्वतः पुरुषार्थत्वासम्भवात्**स्वस्ये**त्युक्तम् । **सुखे** इत्यादिसप्तम्यर्थविशेष्यत्वस्य **वक्तुरिच्छे**त्यत्रेच्छायामन्वयः । एवमग्रेपि **वाक्यार्थबुद्धावित्यादौ** बोध्यम् । **दुःखाभावे वेति** वाकारेण प्रत्येकमेव तयोः पुरुषार्थतया प्रत्येकमेव तदिच्छायाः शाब्दबोधप्रयोजकत्वमिति सूचितम् । फलेच्छात्मिकायाः सुखादीच्छायाः तदुपायशिष्यादिसमवेतवाक्यार्थबुद्धीच्छां प्रति कारणतयेच्छासामान्यकारणस्येष्टसाधनताज्ञानस्य शिष्यादिवाक्यार्थबुद्धौ सुखादिसाधनताज्ञानसत्त्वे सम्पन्नतया सुखेच्छासत्त्वे शिष्यवाक्यार्थबुद्धिविषयिणीच्छा जायत इत्याह—**तत्साधनतेति** । सुखादिसाधनताज्ञानादित्यर्थः । **परस्य**

---

* इच्छायां तत्साधनप्रतिसन्धानात् । इति मु० पु० पा० ।

**कण्ठतालुसंयोगे** *वक्तुरिच्छा। ततश्चेष्टा कण्ठतालुसंयोगसाधनं मदीये-

शिष्यादेः। **वाक्यार्थबुद्धौ** घटकरणकजलकर्म्मकानयनमाशंसाविषय इत्याद्य-न्वयबुद्धौ। कृतिसाध्यताज्ञानस्य च चिकीर्षां प्रत्येव कारणत्वात् प्रकृते न तदपेक्षे-त्यतः तदनुपादानम्। एवमुत्तरत्रापि तत्तत्सामग्रीप्रदर्शनेन तत्तदिच्छोत्पत्तिर्दर्शिते-ति बोध्यम्। **तत्कारणत्वाकलनात्** शाब्दबोधकारणत्वज्ञानात् **शब्दे इच्छे-**त्यन्वयः। इदञ्च शब्दस्य ज्ञायमानकरणतापक्षे। ज्ञानकरणतापक्षे च स्वज्ञानेन स्वजन्योपस्थितिद्वारा शाब्दबोधकारणत्वं बोध्यम्। **तदुपायत्वेति**। घकारादि-शब्दजनकत्वज्ञानादित्यर्थः। († **कण्ठतालुसंयोग इति**। न चाग्रे **घकारादिः शब्दो जन्यते** इति वक्ष्यमाणत्वेन घकारस्य च कण्ठमात्रजन्यत्वस्य शिक्षादावुक्त-त्वात् कण्ठस्य तालुना संयोगस्य घकारोत्पत्तानपेक्षितत्वात् कण्ठस्य तालुना संयोगार्थमेतावानायासो व्यर्थ इति वाच्यम्, अकुहविसर्गाणा कण्ठस्थानजन्यतया तेषाञ्च सर्वेषामेकदेशावच्छेदे-[नोत्पत्तेरभ्युपगमे सति ककारोच्चारणकाले घकारा]-दीनामप्युच्चारणं कारणवैलक्षण्यानभ्युपगमे स्यात्, समर्थस्य क्षेपायोगाद्तम्तत्र कण्ठावयवावच्छेदेनाकारादिविसर्गान्ततत्तद्वर्णोत्पत्तिरित्यवश्यमभ्युपगमनीयम्। तथा च घकारोत्पत्तिस्थानन्तालुसमीपवर्त्त्येव कण्ठावयवः, तन्मात्रस्य च घकारजनकत्वे सर्वदैव घकारोच्चारणप्रसङ्ग इति तस्य ताल्ववयवेन सह संयोगस्यैव घकारजनकत्वमवश्यमभ्युपेयमित्याशयात्। कण्ठतालुपदे च स्वस्वावयवपरे बोध्ये।)

**कण्ठतालुसंयोग** इति। न चाग्रे **घकारादिः शब्दो जन्यते** इत्यत्र घकार-स्यैव पूर्वमुपादानात् कण्ठस्थानीयस्य तस्योत्पत्तौ तालुना कण्ठस्य संयोगोन-पेक्षणीय एवेति कृतमेतावतायासेनेति वाच्यम्, व्याकरणाध्ययनप्रयोजनान्वा-ख्यानावसरे "अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव" इति श्रुतिव्याख्यानपरं "तद्यथा—शोभनाभूमि सुषिरामग्निरन्तः प्रविश्य दहति, एवं ते सप्तसिन्धवः सप्तविभक्तयस्ताल्वनुक्षरन्ति" इति पातञ्जलमहाभाष्यं "सप्तनदीस्वरूपास्सप्त-विभक्तयः, काकुर्जिह्वा सास्मिन्नुद्यते इति काकुदं तालु तदनुक्षरन्ति तदनुप्राप्य

---

* अथ चेष्टायास्तन्निमित्तत्वप्रतिसन्धानं स्वीयेदानीन्तनकृतिसाध्यताप्रतिसन्धानसम-वहितम्। इत्यधिकः मु० पु० पा०।

† कोष्ठान्तर्गतं टीकाकर्त्तुरेव व्याख्यान्तरमसंलग्नपत्रे प्राप्तमत्र संयोजितं पूरितश्चैतस्य-मध्ये चिह्नान्तर्गतो विलुप्तः पाठः।

**दानीन्तनकृतिसाध्या चेति प्रतिसन्धानम् ।**

प्रकाशन्ते" इति विवृण्वता कैयटेन पञ्चाशतोपि वर्णानाङ्कण्ठादिस्थानकर्म्मणा जनितेन कण्ठादिभिस्सह तालोस्संयोगेनैवोत्पत्तेः श्रुतिसिद्धत्वज्ञापनात्। यत्कर्म्मजन्यसंयोगजत्वं वर्णानां तत्स्थानीयत्वेनैव व्यपदेशस्यौचित्याच्छिक्षादावकुह- विसर्गादीनाङ्कण्ठादिमात्रस्थानीयोक्तिः सङ्गता । अत एव येषामेकारादीनामुभयकर्म्मजन्यसंयोगजत्वम्, तेषां विनिगमनाविरहात्कण्ठतालव्याद्युभयस्थानीयत्वेनैवोक्तिः । उक्तश्रुतौ सूर्म्मीमिति प्राप्ते "अमि पूर्वः" इत्यत्र "वा छन्दसि" इत्यनुवृत्त्या यणादेशे सूर्म्यमिति प्रयोगः । काकुदमिति वदेरधिकरणे घञर्थे कः, शकन्ध्वादित्वात्पररूपम्, पृषोदरादित्वाद्दैकस्योकारस्य लोपः । यद्वा नुदेरधिकरणे कः, पृषोदरादित्वान्नुलोपः । अनेकार्थत्वाद्धातूनामुत्क्षिप्यत इति तदर्थः । सूर्म्मि शोभनामयःप्रतिमाम्, सुषिराम् "ऊषि सुषि". इत्यादिना रप्रत्ययेन सच्छिद्रां प्रविश्याग्निर्य्यथा तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति, एवं तालुदेशे प्रकाशं प्राप्य विभक्तयः विभक्त्यन्ताः शब्दाः शारीरं पापमपावृर्वन्तीत्यर्थः **वक्तुरिच्छेति** । घकाररूपेष्टसाधनताज्ञानस्य घकारेच्छात्मकफलेच्छायाश्च स्वकारणस्य सत्त्वात् कण्ठतालुसंयोगो जायतामित्याकारिका वक्तुर्गुर्वादेरिच्छेत्यर्थः ।

कण्ठतालुसंयोगस्य प्रतियोग्यनुयोग्यन्यतरकर्म्मव्यतिरेकेणानुत्पत्तेर्वर्णानाञ्च यत्कर्म्मजसंयोगजत्वं तत्स्थानीयत्वमेव शिक्षादावुक्तमिति तादृशसंयोगप्रतियोगिकण्ठकर्म्मणैव जनितेन संयोगेनाकारादिकण्ठस्थानीयवर्णानामुत्पत्तिरित्यस्यावश्यं वक्तव्यतया शरीरतदवयवकर्म्मणाञ्च प्रयत्नवदात्मसंयोगासमवायिकारणकत्वेन चेष्टात्वाच्छरीरावयवकर्म्मणोपि तत्त्वमेव । तां प्रति च प्रयत्नस्य प्रवृत्त्यात्मकस्यैव साध्यत्वाख्यविषयतासम्बन्धेन कारणत्वम् । तत्र च विशेष्यतयेष्टसाधनत्वकृतिसाध्यत्वज्ञानयोः चिकीर्षाया उपादानप्रत्यक्षस्य च वक्ष्यमाणरूपेण कारणत्वात् चेष्टासाध्यिकां प्रवृत्तिं सम्पादयितुं तस्याः कारणानि सम्पादयति **ततश्चेष्टेति । तत** इति तदनन्तरमित्यर्थको न तु तत इच्छाया इत्यर्थकः, प्रतिसन्धाने इच्छाया अकारणत्वात् । इच्छाविषयत्वात्प्रकृते कण्ठतालुसंयोगस्यैवेष्टत्वमिति **तत्साधनताज्ञान**मिष्टसाधनताज्ञानमिति बोध्यम् ।

भावियौवराज्ये प्रवृत्तिवारणायेदानीन्तनत्वं पर्वतारोहणादावन्यदीयकृतिसाध्यताज्ञानेपि स्वस्य प्रवृत्त्यभावान्मदीयत्वं कृतिविशेषणतयोपात्तम् । **प्रतिसन्धानं** स्मरणम् । चेष्टायाङ्कण्ठतालुसंयोगसाधनत्वस्यान्वयव्यतिरेकाभ्यां पूर्वं

अथ मदीयेदानीन्तनकृतिसाध्यायाः कण्ठतालुसंयोगसाधनस्य चेष्टायास्समवायी कण्ठ इति कण्ठांशे लौकिकमुपनीतचेष्टाद्यंशे पुनरलौकिकं त्वाचप्रत्यक्षमुत्पद्यते; अन्तर्भागावच्छिन्नत्वच एवान्तःशरीरावयवग्राहकत्वात् ।

गृहीतत्वात्तज्जन्यसंस्कारवतस्तत्स्मरणे बाधकाभावात् । एतेन तादृशेष्टसाधनत्वकृतिसाध्यत्वविशिष्टचेष्टासमवायित्वप्रकारकप्रत्यक्षकारणस्य विशेषणज्ञानस्य सम्पत्तिरपि दर्शितेति बोध्यम् ।

उपादानप्रत्यक्षं तत्कारणं दर्शयति—**अथेति** । तादृशस्मरणानन्तरमित्यर्थः । तादृशस्मरणात्पूर्वमस्य न सम्भवः, कारणस्य विशेषणज्ञानस्याभावादतस्तदनन्तरमस्योपदर्शनम् । **चेष्टासमवायी कण्ठ** इत्येतावन्मात्रेणाप्युपादानप्रत्यक्षलाभेपि तत्पूर्वोत्पन्नयोः कृतिसाध्येष्टसाधनत्वज्ञानयोश्चिकीर्षाकाले विनाशात्तदुत्तरं प्रवृत्तेऽनुत्पादप्रसङ्ग इति चेष्टायां तादृशकृतिसाध्येष्टसाधनत्वे विशेषिते । नियतलिङ्गकस्थले विशेष्यविशेषणपदयोस्समानवचनकयोरपि समानलिङ्गकत्वस्यातन्त्रत्वात् **साधनस्य चेष्टायाः** इति भिन्नलिङ्गकयोस्सामानाधिकरण्यन्नानुपपन्नम् । क्रियाविशेषात्मिकायाश्चेष्टायाः लौकिकप्रत्यक्षविषयत्वेपि तत्प्रत्यक्षकालावच्छेदेनैव विषयसत्त्वं तादृशप्रत्यक्षेपेक्षितमित्युत्पत्स्यमानया चेष्टया समवायित्वेन विशिष्टस्य कण्ठस्य प्रत्यक्षे चेष्टाद्यंशे लौकिकत्वासम्भवादाह—**कण्ठांश इति । उपनीतत्वं** ज्ञानलक्षणात्मकोपनयसन्निकर्षवत्त्वम् । **चेष्टादीत्या**दिपदेन इदानीङ्कालसाध्यसाधनत्वानां परिग्रहः, तेषामपि बहिरिन्द्रियायोग्यतया लौकिकविषयत्वाभावात् । **त्वाचप्रत्यक्षमिति** । तादृशचेष्टायास्समवायिकारणस्य कण्ठस्योद्भूतरूपवत्त्वेप्यन्तःशरीरावयववत्त्वाच्चक्षुरालोकयोस्संयोगस्य तत्रासम्भवाद्रसनादीनां द्रव्यग्राहकत्वासम्भवात् , त्वचश्च शरीरव्यापकत्वात् स्वावच्छिन्नत्वक्संयोगस्य स्वस्मिन्नपि सम्भवात् त्वाचमेव प्रत्यक्षन्तस्येत्यभिप्रेत्य **त्वाचेत्युक्तम्** । तत्र प्रत्यक्षे चक्षुरादीनामिव बाह्यशरीरावच्छिन्नाया अपि त्वचो न करणत्वम् , किन्त्वन्तःशरीरावच्छिन्नाया एवेत्याह—**अन्तर्भागेति** । स्वात्मकान्तरवयवावच्छिन्नेत्यर्थः । हस्तादिबाह्यशरीरावयवावच्छिन्नत्वचा सह कण्ठाद्यन्तश्शरीरावयवानां संयोगोस्मदादीनां योगिभिन्नानामसम्भवः, स्वावच्छिन्नत्वचा स्वस्य संयोगश्च सुशकः, बाह्यविषयकत्वाचप्रत्यक्षे स्वभिन्नदेशावच्छिन्नत्वक्संयोगस्यैव कारणत्वेपि कण्ठा-

**अत एवान्तर्न्नाडीमालम्ब्य* मनोनोदनादिगोचराः प्रयत्ना उत्पद्यन्ते। तेनेष्टसाधनत्वकृतिसाध्यत्वे चेष्टायामवगाहनेन उपादानस्य कण्ठस्य त्वाचप्रत्यक्षेण चेष्टाचिकीर्षाञ्जनयित्वा कण्ठावच्छेदेन कण्ठोपादानिका चेष्टासाध्यिका प्रवृत्तिर्ज्जन्यते। इष्टसाधनसमवायितयोपादानप्रत्यक्षस्य तदुपादानकप्रवृत्तौ जनकत्वात्।**

दितत्तदन्तरवयवविषयकत्वाचप्रत्यक्षं प्रति तदन्यथानुपपत्त्या स्वावच्छिन्नत्वक्संयोगस्य कारणत्वमिति भावः। **अत एव** स्वावच्छिन्नत्वक्संयोगस्यान्तरवयवत्वाचप्रत्यक्षकारणत्वादेव। **अन्तर्न्नाडीं** मिद्धापुरीतदादिकाम्। **आलम्ब्य** अवच्छेदकतयाधारीकृत्य। **मनोनोदनादिगोचराः** शब्दाहेतुस्वप्नसुषुप्त्यादिहेतुमनस्संयोगसाध्यकाः। **आदि**पदेन रेचनादिस्वरूपतत्तत्कर्म्मणा परिग्रहः। तथा च स्वात्मकान्तर्भागावच्छिन्नत्वक्संयोगस्य स्वविषयकत्वाचप्रत्यक्षाजनकत्वे स्वप्नसुषुप्त्यादिहेतवो मिद्धापुरीतदाद्यवच्छेदेन मिद्धापुरीतदाद्युपादानकमनस्संयोगजनकप्रयत्नाः न स्युः, तत्कारणमिद्धापुरीतदाद्युपादानविषयकप्रत्यक्षस्यासम्भवादिति भावः। कृतिसाध्यत्वप्रकारकेच्छायाश्चिकीर्षायां कृतिसाध्येष्टसाधनत्वज्ञानयोर्हेतुत्वादुक्तप्रत्यक्षस्यैव च तादृशत्वात्तदुत्तरश्चिकीर्षाया अवश्यम्भावात्तद्द्वारैव च दर्शितप्रत्यक्षस्य प्रवृत्तिकारणत्वमिति तथैव दर्शयति— **तेनेत्यादिना तेन** अनुपदं दर्शितेन प्रत्यक्षेण। **इष्टसाधनत्वकृतिसाध्यत्वे** इत्यत्र द्वितीयार्थो निष्ठत्वमवगाहतेरर्थे प्रकारत्वे, **चेष्टायामिति** सप्तम्यर्थो विशेष्यत्वञ्च तत्रैवान्वितम्। ज्ञानजर्थो निरूपकत्वात्मकसम्बन्धाश्रयो भेदेन त्वाचप्रत्यक्षेणान्वितः। **उपादानस्य** समवायिकारणस्य। **चेष्टाचिकीर्षा** चेष्टा कृतिसाध्या भवत्वित्याकारिकेच्छाम्। तस्याः प्रवृत्तेः कण्ठोपादानकत्वे हेतुमाह— **इष्टसाधनेत्यादिना।** उपादानत्वाख्यविषयतासम्बन्धेन प्रवृत्तिं प्रति इष्टसाधनसमवायित्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन प्रत्यक्षस्य कारणत्वादुक्तप्रत्यक्षस्य च तादृशसम्बन्धेन कण्ठे सत्त्वात्प्रवृत्तेः उक्तकार्य्यतावच्छेदकसम्बन्धेन तत्रोत्पत्तेः कण्ठोपादानकत्वं तस्या अर्थवशसम्पन्नमिति भावः। **उपादानप्रत्यक्षस्य** इत्यत्रोपादानपदं समवायिकारणपरिचायकमात्रम्, न तु तस्य कारण-

---

* अवलम्ब्य। इति मु० पु० पा०।

**शरीरावयववृत्त्यवच्छेदकतासम्बन्धेन चेष्टासाध्यकप्रवृत्तौ चेष्टोपादानत्वेनावयवत्वाचस्य * विशिष्य कारणत्वाच्च । परशरीरमिष्टसाधनचेष्टावदित्येवं बाह्यत्वाचसत्त्वेपि न परशरीरावच्छेदेन प्रवृत्तिः,**

तावच्छेदकत्वम्, कण्ठताल्लुसंयोगसाधनचेष्टासमवायी दन्त इति भ्रमात्मकादपि प्रत्यक्षाद्दन्तोपादानकप्रवृत्त्युत्पत्तेः । तस्या एव प्रवृत्तेः कण्ठावच्छेद्यत्वे हेतुमाह— **शरीरावयवेत्यादिना ।** अवच्छेदकतासम्बन्धेन चेष्टासाध्यकप्रवृत्तेर्निजमहाशरीरेपि सत्त्वात्तत्रावयवत्वाचस्य कारणस्यासत्त्वाद्व्यभिचार इति **शरीरावयववृत्तित्वमवच्छेदकता**विशेषणम् । उपादानत्वस्य समवायिकारणत्वस्वरूपस्य यत्समवेतं कार्य्यं भवति तत्त्वात्मकतया यत्त्वतत्त्वकार्य्यत्वघटितत्वादनुगमासम्भवात् सामान्यत उपादानत्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन कारणत्वमसम्भवीत्यतस्तत्तदुपादानकत्वमेव कारणतावच्छेदकसम्बन्धघटकं वाच्यम् । तथा च कार्य्यतावच्छेदके तत्तदिष्टसाधनसाध्यकत्वानुपादाने एकेष्टसाधनसमवायित्वेन प्रत्यक्षस्यान्येष्टसाधनसाध्यकप्रवृत्तिजनकत्वापत्तिरतस्तत्तदिष्टसाधनसाध्यकत्वमेव कार्य्यतावच्छेदकं वाच्यमित्याशयेन **चेष्टासाध्यकत्वेन प्रवृत्ति**र्विशेषिता । तच्च साध्यत्वाख्यविषयतासम्बन्धेन चेष्टावत्त्वमेव । **चेष्टोपादानत्वेनेति ।** चेष्टासमवायित्वेनेत्यर्थः । **विशिष्येति ।** उक्तविशेषधर्म्मेणेत्यर्थः । तथा च शरीरावयववृत्त्यवच्छेदकतासम्बन्धेन चेष्टावत्प्रवृत्तिं प्रति चेष्टासमवायित्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन समवायेन चेष्टाप्रकारतानिरूपितविशेष्यतासम्बन्धेन वावयवत्वाचप्रत्यक्षस्य कारणस्य सत्त्वादुक्तप्रवृत्तेः कण्ठावच्छेद्यत्वमिति भावः । उक्तकारणत्वस्वीकारे परशरीरबाह्यावयवत्वाचप्रत्यक्षस्योक्तसम्बन्धेन परशरीरे सत्त्वात्परशरीरावच्छेदेनापि स्वस्य प्रवृत्तिः स्यादित्याशङ्क्य क्लृप्तकारणान्तराभावादेव न सेत्युत्तरयति-**परशरीरमित्यादिना ।** शरीरावयवस्यापि शरीरत्वात्**परशरीरमि**त्युक्तम् । परकीयमहाशरीरे कार्य्यतावच्छेदकसम्बन्धाभावादेव तदनापत्तेः । **इष्टसाधनचेष्टावदि**त्यस्य चेष्टासमवायि समवायेन चेष्टावदिति वार्थः । **एवमु**क्तरूपेण कारणत्वस्वीकारे । **बाह्येति ।** बाह्यावयवहस्तादीत्यर्थः । **बाह्यत्वाचसत्त्वेपी**त्यनेनोक्तकारणसत्त्वं दर्शितम् । **न प्रवृत्तिरि**त्यत्र

* चेष्टाविशेषणतानिरूपितविशेष्यतासम्बन्धेन । इत्यधिकः मु० पु० पा० ।

**अवच्छेदकतया तदात्मीयविशेषगुणे तदात्मीयादृष्टस्यावच्छेदकतासंसर्गेण कारणत्वात्।**

हेतुमाह-**अवच्छेदकतयेति**। तथा च परशरीरस्य तदात्मीयादृष्टावच्छेदकत्वाभावान्न तत्रावच्छेदकतया तदात्मीयविशेषगुणस्य प्रवृत्तेरुत्पत्तिरिति भावः। तदधिकरणस्यैव तन्निष्ठधर्म्मावच्छेदकतया परशरीरेषु तदात्मनस्संयोगसत्त्वेपि तत्संयोगस्य वृत्त्यनियामकत्वेन तेन तस्य तदधिकरणत्वासम्भवान्न तस्य तदात्मसमवेतादृष्टावच्छेदकत्वम्। तच्छरीरे च तत्संयोगस्य वैलक्षण्याभ्युपगमेन वृत्तिनियामकतया तेन तस्याधिकरणत्वसम्भवात्तदवच्छेदकत्वम्। अत एव "ममेदं शरीरं न तु तच्छरीरम्..." इत्यादिप्रत्ययस्तत्तदात्मनामिति। अत्र कार्य्यतावच्छेदके तदात्मीयत्वानिवेशे परकीयात्मप्रवृत्तेरपि परशरीरावच्छेदेनोत्पत्तिर्न्न स्यात्, तदात्मीयादृष्टस्यावच्छेदकतया परशरीरेभावात्। कारणतावच्छेदके तदनिवेशे चोक्तप्रवृत्तेरेव न वारणम्, परकीयात्मसमवेतादृष्टस्य परकीयशरीरेवच्छेदकतया सत्त्वादित्युभयत्र तदात्मीयत्वनिवेशः। तादृशप्रवृत्तित्वमात्रस्य कार्य्यतावच्छेदकत्वे तदात्मीयज्ञानादिधर्म्माधर्म्मभावनानां परशरीरावच्छेदेनोत्पत्तेर्वारणाय कारणत्वान्तरङ्कल्प्यमतो-गौरवम्, तदर्थं गुणत्वमात्रस्य कार्य्यतावच्छेदकत्वे च संयोगादिसामान्यगुणानामपि परशरीरावच्छेदेनोत्पत्तिर्न्न स्यात्तस्य नित्यानित्यवृत्तितया कार्य्यतावच्छेदकत्वमप्यसम्भव्येवातो विशेषगुणत्वस्य कार्य्यतावच्छेदकत्वलाभाय **विशेषगुण** इत्युक्तम्। तच्च बुद्ध्यादिषट्कधर्म्माधर्म्मभावनान्यतमत्वमेव। तदप्यखण्डोपाधिस्तत्तद्भेदनवकावच्छिन्नभेदो वा। नातस्तत्तद्भेदानां मिथो विशेष्यविशेषणभावे विनिगमनाविरहात्कार्य्यतावच्छेदकबहुत्वम्।

* "पृथिवीवृत्तिपृथिवीत्वरहितवृत्तिवृत्तित्वरहितगुणत्वव्याप्यजातिमत्त्वम्" लक्षणावल्यां न्यायाचार्य्यैरुक्तं "भावनान्यवायुवृत्तिवृत्तिस्पर्शावृत्तिधर्म्मसमवायिभिन्नत्वे सति गुरुत्वनैमित्तिकद्रवत्वान्यगुणत्वं वा" दिनकर्य्युक्तं विशेषगुणत्वन्नात्र कार्य्यतावच्छेदकतया प्रविष्टम्, प्रथमे पृथिवीपदस्थाने जलादिपदस्य द्वितीये वायुपदस्थाने पृथिव्यादिपदस्य प्रक्षेपेणापि तथात्वसम्भवात्तेषां सर्वेषां विनिगमनाविरहेण कार्य्यतावच्छेदकत्वेतिगौरवप्रसङ्गात्। कारणतावच्छेदकन्तदात्मी-

---

* द्वयोरेव लक्षणयोः प्रतिपदव्यावृत्तिस्तत्र तत्रैवानुसन्धेया विस्तरभयात्प्रकृतानुपयुक्तत्वाच्च नेहास्माभिर्दर्शिता।

**उत्पद्यते च *परशरीरोपादानकचेष्टासाध्यिका प्रवृत्तिर्न्निजमहाशरीरे, न त्ववच्छेदकतया शरीरावयवे । भवतु वोपादानत्वविशिष्टावच्छेदकतैव**

यत्वविशिष्टधर्म्माधर्म्मान्यतरत्वमेव, उभयसाधारणादृष्टत्वस्यैकस्य जात्यादेः प्रमाणाभावेनानभ्युपगमात् । महाप्रलयोत्तरं सृष्टिवारणाय कालिकेन कार्य्यमात्रं प्रति कालिकेनादृष्टस्य सामान्यतः कारणत्वेपि न ततो दर्शितापत्तिवारणमिति दर्शितकार्य्यकारणभावानुसरणम् । तत्तद्विशेषकारणकूटाभावादेव तत्र सृष्टिवारणेपि "यद्विशेषयोः" इति नियमेन कूटत्वस्य कार्य्यसामान्याभावप्रयोजकतावच्छेदकत्वे गौरवेण च सामान्यकार्य्यकारणभावस्याप्यावश्यकतेति बोध्यम् ।

न चावच्छेदकतयादृष्टं प्रति यागादेर्ब्रह्मवधादेश्चावच्छेदकतया कारणत्वे जन्मान्तरीयशरीरेषु स्वर्गिनारकिशरीरेषु चादृष्टोत्पत्तेरसम्भवात्तत्रावच्छेदकतया यागादेरभावाददृष्टकार्य्यसुखदुःखयोस्तेष्वनुत्पाद इति वाच्यम्, स्वावच्छेदकशरीरवृत्तिसमानकालीनानेकावृत्तिजातिमत्त्वस्यैव सम्बन्धविधया यागादिजनकतावच्छेदकत्वात् । तस्याश्चैत्रत्वाद्यात्मिकायास्तत्तद्भोगान्यथानुपपत्त्या जन्मान्तरीयचैत्रीयतत्तच्छरीरेष्विव स्वर्गादिशरीरेष्वपि सत्त्वान्मैत्रीयतच्छरीरावृत्तित्वाच्चानुपपत्तेरभावात् । समानकालीनानेकावृत्तित्वञ्चोपलक्षणमेव जातौ, न तु विशेषणमतो न कायव्यूहस्थलेप्यनुपपत्तिरिति बोध्यम् ।

उपदर्शितकारणबलात्तादृशप्रवृत्तेर्न्निजमहाशरीरे उत्पत्तिरित्याह—**उत्पद्यते चेति । न त्ववच्छेदकतयेति ।** कारणस्यादृष्टस्यावच्छेदकतया निजमहाशरीरावयवे सत्त्वान्न तदवच्छेदेन प्रवृत्तिरुत्पद्यत इत्यर्थः ।

ननूक्तकार्य्यकारणभावाभ्युपगमे उत्पतनादिस्वीयचेष्टासाध्यकप्रवृत्तेर्न्निजमहाशरीरावच्छेद्यत्वन्न स्यादवयवावच्छेद्याया एव तस्या उत्पत्तेरित्यतः पूर्वोक्तादृष्टकारणत्वानभ्युपगमेपि परशरीरावच्छेदेन स्वीयप्रवृत्तेर्वारणाय च निरुक्तावयवत्वाचनिरूपितजन्यतायामेवोभयसम्बन्धावच्छिन्नत्वन्निवेशयति—**भवतु वेत्यादिना ।**

---

* परशरीरोपादानिक । इति मु० पु० पा० ।

**निरुक्तत्वाचजन्यतावच्छेदकस्सम्बन्धः। तेन महाशरीरावच्छेदेनोत्पतनादिचेष्टासाध्यकप्रयत्नोत्पत्त्यभ्युपगमेऽपि न क्षतिः।**

**यत्तु कण्ठाद्यन्तरवयवावगाहिनामन्धकारे "वक्राङ्गुलिः प्रविरलाङ्गुलिरेष हस्तः"... इत्यादिबाह्यावयवावगाहिनाञ्च प्रत्यक्षाणां न त्वाचत्वम्, तद्गतपरिमाणमार्दवादेरपि ग्रहणप्रसङ्गात्। अपि त्वात्मत्वेन**

तथा च परशरीरस्य तादृशप्रवृत्त्यनुपादानत्वान्न तदवच्छेदेन तदुत्पत्तिः। शरीरावयववृत्तित्वस्यावच्छेदकतायामनिवेशादुत्पतनादिसाध्यकप्रवृत्तेर्न्निजमहाशरीरोपादानत्वतदवच्छिन्नत्वयोश्च नानुपपत्तिरिति भावः। उत्पतनादिसाध्यकप्रवृत्तेर्न्निजमहाशरीरावच्छेद्यत्वे मानाभावः, तत्कार्य्यस्योत्पतनादेस्तत्तदवयवावच्छेद्यप्रवृत्तेरपि सम्भवादित्याशये**नोत्पत्त्यभ्युपगमेपी**त्यपिपदमुपात्तम्। एवञ्च तदर्थमुक्तोभयसम्बन्धावच्छिन्नत्वस्य कार्य्यतायामनावश्यकत्वेपि निरुक्तादृष्टकारणत्वान्तराकल्पनप्रयुक्तलाघवादेव तत्र तदावश्यकमिति बोध्यम्।

स्वविषयकत्वाचप्रत्यक्षं प्रति स्वभिन्नदेशावच्छिन्नत्वक्संयोगस्यैव कारणत्वम्, तदसत्त्वे कण्ठाद्यन्तरवयवानां मम कण्ठः इत्यादीनामन्धकारे वक्राङ्गुलिर्हस्त इत्यादीनाञ्च प्रत्यक्षाणां न त्वाचत्वं किन्तु मानसत्वमेवेति वदतो मतं दूषयितुमुपन्यस्यति—**यत्त्विति। कण्ठादीत्यादि**पदेन तात्वादीनामन्तरवयवानां परिग्रहः। आलोके तद्गतपरिमाणादेर्ग्रहणमपि चक्षुषा भवत्येवेति तत्प्रसङ्गो न दोषायेत्य**न्धकार** इत्युक्तम्। **वक्राङ्गुलिरित्यपि** हस्तविशेषणमेव, **वक्राः** कुटिलाः अङ्गुलयो यत्रेति बहुव्रीहिसमासात्। **प्रविरलत्वं** मिथो विभक्तत्वम्। तेषां त्वाचत्वेतिप्रसङ्गमाह—**तद्गतेति। मार्द्दवं** मृदुत्वं स्पर्शविशेषः। यद्द्रव्यं येनेन्द्रियेण गृह्यते तद्गतगुणादीनामपि तदिन्द्रियग्राह्यत्वनियमात् स्वाश्रयावच्छिन्नत्वक्संयुक्तसमवायसन्निकर्षस्य तेष्वपि सत्त्वात्तेषामपि प्रत्यक्षापत्तिः। स्वभिन्नदेशावच्छिन्नत्वक्संयोगजन्यतादृशहस्तादिप्रत्यक्षे तेषामपि प्रत्यक्षत्वस्येष्टत्वादिति भावः। न च मार्द्दवपदस्याल्पाच्त्वाद्द्वन्द्वे तस्यैव पूर्वप्रयोगनियमात् **परिमाणमार्द्दवादेः** इत्यसाधुरिति वाच्यम्, "लक्षणहेत्वोः क्रियायाः" इति सूत्रनिर्देशात् "अल्पाच्तरम्" इत्यस्यानित्यत्वज्ञापनात्। परिमाणसहितम्मार्द्दवमिति मध्यमपदलोपिसमासाद्वा तादृशप्रयोगात्। ननु तर्हि स्वभिन्नदेशावच्छिन्नत्वक्संयोगाभावेन्धकारे जायमानानां तादृशप्रत्यक्षाणां किमात्मकत्वमित्यत आह—**अपि त्वात्मत्वेनेति**। ननु सुखादीनामेव मनोजन्यप्रत्यक्ष-

**कण्ठहस्ताद्यवगाहिमानसत्वमेव, योग्यधर्म्मपुरस्कारेणायोग्यानामपीन्द्रिययोग्यत्वाभ्युपगमात्। अत एव दधिधवलमाकाशमिति नायनो निश्चय इति ।**

विषयत्वात्मकं मनोयोग्यत्वम्, तदभाववतां कण्ठादीनां कथं मनसा ग्रहणमित्यत आह—**योग्यधर्म्मेति । योग्यधर्म्मपुरस्कारेण** तत्तदिन्द्रियजन्यप्रत्यक्षविषयधर्म्मप्रकारेण । **अयोग्यानां** तत्तदिन्द्रियजन्यप्रत्यक्षाविषयाणाम्। तेन हस्तादीनाञ्चक्षुर्य्योग्यत्वेपि नायोग्यत्वोक्तिरसङ्गता । **इन्द्रिययोग्यत्वाभ्युपगमादिति ।** तत्तदिन्द्रियजन्यप्रत्यक्षविषयत्वस्वीकारादित्यर्थः । तथा चात्मत्वस्य मानसत्वात्तत्प्रकारेण कण्ठादिविशेष्यकस्यापि प्रत्यक्षस्य न मानसत्वानुपपत्तिरिति भावः। अत्रानुभवं प्रमाणयति—**अत एवेति**। तत्तदिन्द्रियजन्यप्रत्यक्षविषयधर्म्मप्रकारेण तत्तदिन्द्रियजन्यप्रत्यक्षाविषयस्यापि तत्तदिन्द्रियजन्यप्रत्यक्षविषयत्वाभ्युपगमादेवेत्यर्थः। **दधिधवलमिति ।** दधिसमवेतधावल्यसदृशधावल्यवदित्यर्थः। **नायनः** चाक्षुषः। सूर्य्यकिरणानां दधिधावल्यसदृशात्यन्तभास्वरशुक्लरूपवतां प्रत्यक्षविषयत्वात्तद्वृत्तिधावल्यानामतिदूरत्वदोषेण गगने भ्रमात्तेषाञ्चाक्षुषप्रत्यक्षविषयत्वात्तत्प्रकारकाकाशविशेष्यकस्याप्युक्तप्रत्यक्षस्य चाक्षुषत्वम्। एवं तर्हि नीलं नभ इति कथं प्रत्यक्षम्? सूर्य्यकिरणानां नीलरूपाभावात्तद्भ्रमस्य वक्तुमशक्यत्वादिति चेत्? सुमेरोर्दक्षिणस्यां दिशि स्थितस्येन्द्रनीलमयशिखरस्य प्रभां पश्यतां गगने तद्भानात्। केचित्तु अतिदूरङ्गच्छच्चक्षुः परावृत्त्यागच्छत्स्वकनीनिकायामेव संयुक्तङ्गगनन्नीलमिति प्रत्यक्षञ्जनयतीत्याहुः। तदसत्, पिङ्गलकनीनिकावच्चक्षुषामपि तादृशप्रत्ययात्। नचोक्तप्रत्यक्षस्य चाक्षुषत्वे बीजाभावः? "एकतारन्नभो दृष्ट्वा" इति स्मृतेरेव बीजत्वात्। तत्र दृशधातोर्लौकिकप्रत्यक्षविषयत्वार्थकत्वाच्चक्षुस्संयोगाभावे एकतारन्नभः, नीलन्नभः, दधिधवलन्नभः, इत्यादिप्रत्यक्षाणामनुत्पादस्य च बीजत्वात्। इदमुपलक्षणम्। "दधानो* निध्वानमश्रूयत पाञ्चजन्यः" इति माघप्रयोगस्यापि श्रुधातोः श्रावणप्रत्यक्षार्थकत्वात् पाञ्चजन्यशङ्खस्य च तदयोग्यत्वात्तद्योग्यनिध्वानात्मकशब्दप्रकारकत्वादेव तस्यापि श्रावणत्वादेवोपपत्तिः। नच तत्र श्रुधातोः "श्रोतव्यो मन्तव्यः" इत्यत्रेव शाब्द-

---

* प्रवृद्धमन्दाम्बुदधीरनादः कृष्णार्णवाभ्यर्णचरैकहंसः । मन्दानिलापूरकृतन्दधानो निध्वानमश्रूयत पाञ्चजन्यः ॥ इति सम्पूर्णश्लोकः ।

**तन्न, मम कण्ठ इति प्रतीत्यात्मत्वेन कण्ठो गृह्यत इत्यस्यानुभवबाधितत्वात्, "वक्राङ्गुलिर्हस्तः"... इत्यादौ* वक्रत्वादीनामग्रहप्रसङ्गाच्च।**

**तया कण्ठावच्छिन्नया कण्ठोपादानिकया प्रवृत्त्या कण्ठसमवेता चेष्टा जन्यते। उपादानविषयत्वावच्छेदकत्वोभयसम्बन्धेन प्रवृत्तेः समवायेन**

बोधार्थकत्वमेवेति वाच्यम्, पदज्ञानादिशाब्दबोधकारणाभावात्तत्र तदुत्पत्तेरसम्भवात्तात्पर्य्यानिर्वाहाच्च। एतेन दधिधवलमाकाशमित्यस्य भ्रमत्वान्न ततोर्थसिद्धिरिति परास्तम्। उपदर्शितोभयप्रयोगयोः प्रमात्मकज्ञानजनकत्वेन प्रमाणत्वादिति बोध्यम्।

मतमेतद्दूषयति-**तन्नेति**। कण्ठाद्यन्तरवयवावगाहिनां प्रत्यक्षाणामहङ्कण्ठ इत्यादिवाक्याभिलाप्यत्वे आत्मत्वप्रकारकत्वसम्भवेपि मम कण्ठ इत्यादिवाक्याभिलाप्यत्वमेव तेषाम्। तत्र च ममपदबोध्यस्यात्मसम्बन्धस्यैव कण्ठाद्यंशे प्रकारत्वम्, न त्वात्मत्वस्येति भावः। अनुभवस्य विवादग्रस्तत्वात् प्रत्यक्षे पदजन्योपस्थितिविषयस्य प्रकारत्वाभावाच्च दूषणान्तरमाह-**वक्राङ्गुलिर्हस्त** इति। अङ्गुल्यादीनाम्मनोयोग्यत्वविरहेण तत्प्रकारीभूतस्याङ्गुलित्वादीनाम्मनसा ग्रहणासम्भवादित्यर्थः। एवञ्चाकामेनापि तादृशप्रत्यक्षाणां त्वाचत्वोपगमावश्यकत्वेन तदनुरोधेन स्वावच्छिन्नत्वक्संयोगस्यापि स्वविषयकत्वाचप्रत्यक्षे कारणत्वमवश्यमेव वाच्यमित्याशयः। अत एव सान्निपातिकादिज्वरातुरस्य स्वभिन्नदेशावच्छेदेन त्वक्संयोगाभावेप्यन्तर्म्मे दाह इत्यन्तरवयवावच्छेदेनोष्णस्पर्शस्य दाहस्य त्वाचप्रत्यक्षमप्युपपन्नमिति ध्येयम्।

एतावता सोत्पत्तिकं प्रवृत्तेः कण्ठावच्छेद्यत्वङ्कण्ठोपादानकत्वञ्च व्यवस्थाप्य तदुत्तरङ्कारादिजननार्थं प्रकृतमनुसरति-**तयेति। कण्ठावच्छेदेन कण्ठोपादानिका चेष्टासाध्यिका प्रवृत्तिर्जन्यत** इत्यत्रोक्तयेत्यर्थः। तस्याश्च विषयान्तरव्यवहितत्वात्तत्पदमात्रेण पूर्वबुद्धिस्थवाचकेन परामर्शो द्राङ् न सम्भवतीत्यतः **प्रवृत्त्ये**त्युक्तम्। तावन्मात्रोक्तौ च तस्यां चेष्टाजनकतावच्छेदकसम्बन्धयोर्द्राग् लाभो न भवेदित्यतः **कण्ठावच्छिन्नये**त्याद्युभयं प्रवृत्तिविशेषणमुपात्तम्। कुतस्तस्याः प्रवृत्तेश्चेष्टा जन्यत इत्यपेक्षायामाह-**उपादानेति**। उपादानत्वाख्यविषयते-

---

* च। इत्यधिकः मु० पु० पा०।

**चेष्टां प्रति कारणत्वात्। परशरीरचेष्टासाध्यकप्रवृत्त्या उपादानतया विषये परशरीरे स्वावच्छेदके महति शरीरे चेष्टाया अजननात्।**

**कण्ठचेष्टया च विभागपूर्वसंयोगनाशौ जनयित्वा तालुना कण्ठस्य संयोगो जन्यते। तेन स्वाश्रयावच्छिन्नत्वसंसर्गेणाकाशे प्रत्यासीदता घकारादिश्शब्दो निजाश्रयावच्छेदेनोत्पाद्यते।**

त्यर्थः। निरुक्तकारणतावटकद्वितीयसम्बन्धप्रयोजनमाह—**परशरीरेति। परशरीरे** इत्यस्य **चेष्टाया अजननादित्य**नेनान्वयः। तथा चोपादानत्वमात्रस्य कारणतावच्छेदकत्वे परशरीरचेष्टासाध्यकप्रवृत्त्या उपादानत्वसम्बन्धेन परशरीरे सत्त्वात्तदवच्छेदेन चेष्टोत्पत्तिस्स्यात्। तदुपादाने चावच्छेदकत्वसम्बन्धस्य परशरीरे सत्त्वान्न तदुत्पत्तिरिति भावः। तत्रोपादानत्वसम्बन्धस्य प्रयोजनमाह—**स्वावच्छेदके** इति। तथा चोक्तप्रवृत्तेर्निजमहाशरीरेपि सत्त्वात्तत्रापि चेष्टोत्पत्तिस्स्यात्। तदुपादाने तस्य तदुपादानत्वविरहान्न तदापत्तिरिति भावः। प्रवृत्तौ परशरीरचेष्टासाध्यकत्वञ्च परशरीरावच्छेद्यत्वे बोध्यमन्यथा तु तत्र तदुपलक्षणमेवेति। कण्ठचेष्टायाः साक्षात्संयोगकारणत्वविरहात्पूर्वदेशेन सह विभागं तत्संयोगनाशञ्च विनोत्तरदेशेन तालुना कण्ठस्य संयोगासम्भवात्तदुभयोत्पादनद्वारैव तस्यास्तज्जनकत्वम्। संयोगनाशकगुणस्य विभागत्वात्संयोगनाशं विना तस्यासम्भवात्प्रथमं विभागजननम्, तेन च संयोगनाशस्ततस्तालुसंयोग इत्याह—**कण्ठचेष्टया चेति।** शब्दस्याकाशसमवायिकारणकत्वात्समवायेनाकाश एवोत्पत्तिर्वाच्या। तत्र च तन्मात्रस्य कार्य्यतावच्छेदकसम्बन्धत्वे कण्ठताल्वादिसंयोगादितस्सर्वत्रैवाकाशे घकारादिशब्दोत्पादापत्तिः। अवच्छेदकतासंसर्गेण घकारादिशब्दं प्रति समवायेन तस्य कारणत्वे कण्ठाद्यवच्छेदेनैव तस्योत्पत्तिसम्भवेप्याकाशे तस्यानुत्पादान्न्यायसिद्धान्तविरोध इत्यतस्स्वाश्रयावच्छिन्नत्वविशिष्टस्यैव समवायस्य कार्य्यतावच्छेदकसम्बन्धत्वं वाच्यम्। तथा सति समवायस्य कारणतावच्छेदकसम्बन्धत्वे कार्य्यकारणयोस्सामानाधिकरण्यविरहप्रसङ्ग इत्यतः स्वाश्रयावच्छिन्नत्वस्यैव तथात्वमवश्यं वाच्यमतस्तेन सम्बन्धेन कारणस्य कण्ठतालुसंयोगस्य कण्ठाद्यवच्छिन्नाकाश एव सत्त्वमिति तत्रैवोक्तसम्बन्धेन घकाराद्युत्पत्तिरित्याह—**तेनेत्यादिना। तेन** कण्ठतालुसंयोगेन, निमित्तकारणीभूतेनेति शेषः। स्वपदनिजपदे तादृशसंयोगपरे। **प्रत्यासीदता** वर्त्तमानेन। इदञ्च भावकार्य्यस्यासम-

**ताल्वादिप्रेरितो वायुश्च यथायथं कदम्बगोलकन्यायेन बीचीतरङ्गन्यायेन वा शब्दान्तरं बाह्यदेशावच्छेदेनोत्पादयन् प्रसारयतीति शब्दोत्पत्तिप्रक्रिया । २ । १ ।**

**तथा च घप्रयोजकचेष्टागोचरप्रयत्नकाले पूर्वेषां सर्वेषामेव ज्ञानानां**

वायिकारणजन्यत्वनियमस्यानभ्युपगमे । तदभ्युपगमे च कण्ठताल्वादीनामाकाशसंयोगमसमवायिकारणङ्कनयित्वैव शब्दजनकत्वं बोध्यम् ।

ननु कण्ठताल्वाद्यवच्छेदेनैव घकारादीनामुत्पत्तौ तेषां श्रोत्रदेशावच्छिन्नत्वाभावात्सन्निकर्षासम्भवेन स्वस्य परस्य वा कथं तत्प्रत्यक्षं स्यादित्यत आह— **ताल्वादीति** । ताल्वाद्यात्मकस्पर्शवद्द्रव्यसंयोगविशिष्ट इत्यर्थः । तथा चोक्तसंयोगविशिष्टो वायुरेव निमित्तकारणीभूय वक्ष्यमाणरीत्या स्वस्य परस्य च श्रोत्रादिदेशपर्य्यन्तमनेकं शब्दमुत्पादयति । तेष्वन्तिमस्यैव शब्दस्य तत्तच्छ्रोत्रसन्निकर्षात्प्रत्यक्षन्नानुपपन्नमिति भावः। **कदम्बगोलकन्यायेनेति** । यथा कदम्बपुष्पे एककालावच्छेदेनैव सर्वावयवेषु केसराणामुत्पत्तिस्तथाद्यशब्देन कण्ठादिदेशावच्छिन्नेनैव दशदिगवच्छेदेन दशशब्दा एककालावच्छेदेनैवोत्पाद्यन्ते, तैश्च प्रत्येकं दशदिगवच्छेदेन दशशब्दान्तराण्युत्पाद्यन्ते, इत्येवं क्रमेण श्रोत्रदेशपर्य्यन्तं शब्दोत्पत्तिरित्यर्थः । तत्र च निमित्तकारणमुक्तो वायुः पूर्वपूर्वशब्दश्च, समवायिकारणन्तत्तद्देशावच्छिन्नमाकाशमेवेति बोध्यम् ।

अत्रानेकशब्दोत्पत्तिकल्पनेन गौरवमत आह—**वीचीतरङ्गेति** । यथैकया बीच्या अधिकदेशावच्छिन्न एकस्तरङ्गो जन्यते, तेनापि तादृश एकस्तरङ्ग इत्येवं क्रमेण तीरपर्य्यन्तमनेकानेकाधिकाधिकतरङ्गोत्पत्तिस्तथाद्यशब्देनैकेन दशदिगवच्छिन्न एकश्शब्दस्तेनापि तादृश एकश्शब्दो जन्यते इत्येवङ्क्रमेणैव श्रोत्रदेशपर्य्यन्तं शब्दोत्पत्तिरित्यर्थः । **इति शब्दोत्पत्तिप्रक्रियेति । इतिः** समाप्तौ, वर्णात्मकशब्दोत्पत्तिप्रक्रिया समाप्तेत्यर्थः । तेन ध्वन्यात्मके शब्दे कण्ठताल्वादिसंयोगस्यैव कारणत्वाभावेपि न क्षतिः । २ । १ ।

उक्तशब्दोत्पत्तिप्रक्रियाप्रदर्शनेन प्रकृते किमायातमित्याह— **तथा चेत्यादिना** । उक्तक्रमेण सुखादिज्ञान१– सुखादीच्छा२– सुखादिसाधनताज्ञान ३ – शिष्यवाक्यार्थबुद्धीच्छा ४ – शिष्यवाक्यार्थबुद्धिसाधनताज्ञान ५ – शब्देच्छा६-शब्दसाधनताज्ञान७–कण्ठतालुसंयोगेच्छा८- कण्ठतालुसंयोगसाधनताकृतिसाध्यताज्ञान९–उपादानप्रत्यक्ष१०–चिकीर्षा११–प्रवृत्ती१२नाम्मध्ये पूर्वपूर्वेषा-

विनष्टत्वात् तदनन्तरं सुखादिज्ञानतदिच्छाक्रमेण टकारप्रयोजकचेष्टागोचरप्रयत्नोत्पत्तिं यावद्यावन्तः क्षणास्तावत्क्षणान्तरेणैव घकारोत्पत्त्यनन्तरं टकारोत्पत्तिरिति क्व तयोर्यौगपद्यमव्यवधानं वेति चेत्? उच्यते—

चतुर्भिः पञ्चभिर्वापि प्रायेणान्तरितः क्षणैः ।
पूर्ववर्णात्परोवर्णः पदत्वं प्रतिपद्यते ॥ २ ॥

सुखेच्छानन्तरं सुखसाधनं शिष्यवाक्यार्थबुद्धिरिति स्मरणेन जनिता

मुत्तरोत्तरकारणत्वात् विभुविशेषगुणानाञ्च ज्ञानेच्छादीनां यौगपद्येनोत्पत्तेरसम्भवात् क्रमेणैवोत्पत्त्या तत्तत्कार्य्याणामपि क्रमेणैवोत्पादस्य सिद्धौ चेत्यर्थः। **घप्रयोजकेति** । परम्परया घजनकचेष्टासाध्यकप्रवृत्तिक्षण इत्यर्थः। **ज्ञानानामिति** । इच्छाया अप्युपलक्षणम्, तस्या अपि विनाशात्। विभुविशेषगुणानामेव न यौगपद्यञ्चेष्टादीनां यौगपद्ये बाधकाभावाद् घप्रयोजकचेष्टादिकालेपि टप्रयोजकचेष्टादिसम्भवाद्धकारोत्पत्तिमप्रतीक्ष्य घप्रयोजकचेष्टाकाल एव टप्रयोजकसुखादिज्ञानादिकमारम्भणीयमित्याशयेन **घकारोत्पत्तिकाले** इत्यनभिधाय **प्रयत्नकाल** इत्युक्तम् । **यावन्तः क्षणाः** उपदर्शितरीत्या द्वादशक्षणा अन्तरिताः बोध्याः। **तयोः** घकारटकारयोः। **यौगपद्यमे**ककालवृत्तित्वम् । **अव्यवधानं** पूर्वदर्शितम्। अत्र समूहालम्बनात्मकञ्घकारटकारप्रयोजकं ज्ञानमिच्छाञ्च तादृशीमादाय चतुष्पञ्चक्षणमन्तर्भाव्यैव घकारोत्तरं टकारस्योत्पादस्सम्भवति, तथा च चतुष्पञ्चक्षणसाधारणमव्यवहितोत्तरत्वन्निरुच्य तादृशाव्यवहितोत्तरत्वसम्बन्धेन स्वोच्चारकोच्चरितत्वसम्बन्धसहितेनैव घकारविशिष्टे टकारे घटत्वप्रकारकशाब्दबोधानुकूलसामर्थ्यमस्तीत्याशयेन न्यायरीत्या सिद्धान्तमारभते—**उच्यते** इत्यादिना। **पूर्ववर्णात्** घकारादितः। **परोवर्णः** टकारादिः। **चतुर्भिः पञ्चभिर्वापि क्षणैः, प्रायेण** बाहुल्येन, **अन्तरितः** व्यवहितः, **पदत्वं** शाब्दबोधानुकूलसामर्थ्यवत्पदत्वम्, **प्रतिपद्यते** प्राप्नोतीत्यर्थः। **प्रायेणे**त्यनेन क्वचित्त्रिक्षणैः क्वचिच्च षडादिभिः क्षणैरन्तरितस्य वर्णान्तरस्य तादृशसामर्थ्यवत्त्वेपि न न्यूनतेति दर्शितम्। तयोश्चतुःपञ्चक्षणान्तरितत्वमुपपादयति—**सुखेच्छेति** । **सुखपदं** दुःखध्वंसस्याप्युपलक्षकम्, सुखादिज्ञानादित्यादिः। तेन दुःखाभावज्ञानाज्जायमानदुःखाभावेच्छानन्तरं दुःखाभावसाधनं शिष्यवाक्यार्थबुद्धिरिति स्मरणजन्याया

**बुबोधयिषा सुखमपि विषयीकरोति, उपायेच्छायाः फलविषयकत्वनियमात् । सुखसाधनं बुद्धिरिति ज्ञानस्य सुखेच्छायाश्च सुखनिष्ठफलत्वाख्यविषयतानिरूपितबुद्धिनिष्ठोद्देश्यताकेच्छात्वावच्छिन्नं प्रत्येव जनकत्वात् । अन्यथा दुःखध्वंसजनकताज्ञानदुःखध्वंसेच्छाभ्याञ्जनितायां**

अपीच्छायास्संग्रहान्न न्यूनता । **बुबोधयिषा** बोधयितुमिच्छा । **सुखमपि विषयीकरोतीति** । सुखाय शिष्यवाक्यार्थबुद्धिर्भवत्वित्याकारिकैव बुबोधयिषा जायते, न तु सुखायेत्यपह्नायेत्यर्थः । इदञ्च टकारोत्पत्त्यर्थं पुनः सुखादिज्ञानेच्छासम्पादने क्षणविलम्बो मा भूदित्येतदर्थम् । आवश्यकञ्च शिष्यवाक्यार्थबोधादिरूपोपायविषयकेच्छायाः सुखाद्यात्मकफलविषयकत्वम् , तादृश्या एवानुपदवक्ष्यमाणकारणतानिरूपितकार्य्यतावच्छेदकाक्रान्तत्वादित्याह—**उपायेच्छाया** इति । अत्र षष्ठ्यर्थो निरूपितत्वमन्वयश्च तस्य **फलविषयकत्वनियमात्** इत्यत्र फलविषयकत्वस्य नियम इति षष्ठीसमासलभ्यफलविषयकत्वनिष्ठनिपूर्वकयमधात्वर्थव्यापकत्वे । **नियमादिति** पञ्चम्यर्थो ज्ञानजन्यज्ञानविषयत्वम् , तस्य **विषयीकरोती**त्यस्यार्थे विषयत्वेन्वयः । तथा च तादृशीच्छा उपायेच्छानिरूपितफलविषयकत्वनिष्ठव्यापकताज्ञानजन्यज्ञानविषयसुखनिष्ठविषयताकेति शाब्दबोधः । उक्तेच्छायाः फलविषयकत्वव्याप्यत्वे हेतुमाह—**सुखसाधनमित्यादिना** । **अन्यथेति** । फलेच्छाफलसाधनताज्ञानयोस्तत्तदुपायमात्रविषयकेच्छां प्रति जनकत्वे इत्यर्थः । फलस्य सुखदुःखध्वंसभेदेन द्वैविध्यादेकफलेच्छातत्साधनताज्ञानाभ्याञ्जनिताया उपायेच्छायाः पूर्वमपरतदिच्छातत्साधनताज्ञानयोरसत्त्वेन व्यभिचारात् कारणत्वन्न स्यात् । तत्तत्फलनिष्ठफलत्वाख्यविषयतानिरूपिततत्तदुपायनिष्ठोद्देश्यताकेच्छात्वावच्छिन्नं प्रति तत्तत्फलेच्छायाः फलसाधनताज्ञानस्य च कारणत्वे सुखाय शिष्यवाक्यार्थबुद्धिर्भवत्वित्याद्याकारिकाया एवेच्छायाः कार्य्यतावच्छेदकाक्रान्तत्वात्तत्कारणीभूतस्य सुखसाधनन्तादृशी बुद्धिरिति ज्ञानस्य सुखेच्छायाश्च तत्र सत्त्वाद्व्यभिचाराप्रसङ्गात् ।

**बुद्धीच्छायां व्यभिचारप्रसङ्गात्। फलत्वाख्यविषयता च * सुखाय धनमिच्छामीत्यनुभवसिद्धा।**

**भवतु वा सुखसाधनताज्ञानस्यापि सुखज्ञानत्वात् तज्जनितेच्छा सुख-तदुपायोभयसमूहालम्बनस्वरूपा। एवं वर्णगोचरमिष्टसाधनतास्मरणमपि**

केयं फलत्वाख्यविषयतेत्यत आह—**फलत्वाख्येति**।

ननु प्रसिद्धविषयतातिरिक्तफलत्वाख्यविषयतायाम्मानाभावः ? दर्शित-व्यभिचारवारणञ्च कार्य्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशस्यैव करणीयमिति नोक्तेच्छायाः सुखविषयकत्वं सम्भवतीत्यतोऽन्यथा तस्याः सुख-विषयकत्वमुपपादयति—**भवतु वेत्यादिना**। विषयतयेच्छां प्रति विषयतया ज्ञानस्य कारणत्वात् सुखसाधनताज्ञानस्य सुखाविषयकत्वे तज्जनितेच्छया कथं सुखमप्यवगाहनीयमित्यत आह—**सुखसाधनतेति**। तज्ज्ञानस्य साधनतांशे निरूपितत्वसम्बन्धेन सुखप्रकारकत्वात्तस्यापि सुखविषयकज्ञानत्वरूपं सुखज्ञान-त्वमक्षतमिति विषयतासम्बन्धेन तस्यापि सुखे सत्त्वादिच्छायास्सुखविषयकत्वम-व्याहतमिति भावः। **सुखतदुपायोभयेति**। शिष्यवाक्यार्थबुद्धिः सुखञ्च भवत्वि-त्याकारिकेच्छेत्यर्थः। उपायेच्छां प्रति फलेच्छायाः फलसाधनताज्ञानस्य च कार-णत्वाच्छिष्यवाक्यार्थबुद्धिविषयिण्यामुपायेच्छायाञ्जातायाङ्घकारादिवर्णेषु तादृश-बुद्धिसाधनताज्ञानादेव तेष्विच्छा भविष्यति, तस्य च केवलतादृशबुद्धिसाधन-त्वावगाहित्वे तज्जनितेच्छाया अपि तन्मात्रावगाहित्वं स्यात्ततश्च क्षणविलम्बो मा भूदित्येतदर्थन्तादृशबुद्धिसाधनङ्घकार इतीष्टसाधनतास्मरणे पूर्वगृहीतस्य तादृश-बुद्धौ सुखसाधनत्वस्य घोत्तरटकारे तादृशबुद्धिसाधनत्वस्य च विषयत्वमा-विष्करोति—**एवं वर्णेत्यादिना**। **इष्टसाधनतास्मरणमिति**। तादृशवाक्यार्थ-बोधात्मकेष्टनिरूपितकारणताया अन्वयव्यतिरेकसहचारसहकृतेनैव प्रत्यक्षादि-प्रमाणेन ग्राह्यत्वस्य वक्तव्यतयोच्चारयिष्यमाणेषु घकारादिष्वन्वयव्यतिरेकसह-चारस्य ग्रहीतुमशक्यत्वात्तादृशकारणतायाः प्रत्यक्षादिकन्न सम्भवति, किन्तु पूर्वं स्वेनान्यैर्वोच्चारितेषु घकारादिष्वन्वयव्यतिरेकसहचारसहकृतप्रत्यक्षादिना घत्वा-द्यवच्छेदेन तादृशकारणतायाः विषयीकृतत्वादिदानीन्तज्जनितोद्बुद्धसंस्कारा-त्स्मरणमेव भवितुमर्हति, नानुभव इत्यतो ज्ञानमित्यनभिधाय **स्मरणमित्युक्तम्**।

---

* मु० पु० पा० ना०।

**पूर्वगृहीतयावदिष्टसाधनतासमूहालम्बनस्वरूपमिति तज्जनितापीच्छा सुखं बुद्धिं वर्णश्चावगाहते। वर्णास्तु विवक्षिता यावन्त एव घत्वघोत्तरटत्वादिना तत्तदिच्छाविषयाः। ततो निरुक्तयावदिष्टसाधनसमूहालम्बनस्वरूपं *प्रत्येकतावद्वर्णसाधनतया तत्तत्स्थानचेष्टाजातमवगाहमानं †स्वकीयकृतिसाध्यतया प्रथमवर्णजनकचेष्टाविषयकं स्मरणम्।**

पूर्वगृहीतेष्वेकस्यापि समूहालम्बनाविषयत्वे क्षणविलम्बस्तदवस्थ एव प्रसज्येतेति **यावदि**त्युक्तम्। **समूहालम्बनस्वरूपं** सुखसाधनं शिष्यवाक्यार्थबुद्धिस्तत्साधनङ्घकारः घोत्तरटकारश्चेत्याकारकम्। **तज्जनिता** तादृशसमूहालम्बनज्ञानजनिता। **सुखं बुद्धिमिति**। सुखं शिष्यवाक्यार्थबुद्धिः घकारः घोत्तरटकारश्च भवत्वित्याकारिकैवेच्छा भवतीत्यर्थस्तादृश्या एव कारणसंवलनादिति भावः। **ततः** तादृशेच्छानन्तरम्। **साधनतयेति** तृतीयार्थो वैशिष्ट्यं **चेष्टाजात**पदार्थे चेष्टासमुदायेऽन्वितम्। **तत्तत्स्थानं** कण्ठमूर्द्धादिकम्। **साध्यतये**त्यत्रापि तृतीयार्थोऽपि वैशिष्ट्यं घकारात्मकप्रथमवर्णप्रयोजकचेष्टायामन्वितम्। जनकत्वञ्चात्र प्रयोजकत्वम्, कण्ठचेष्टायास्साक्षाद्घकाराकारणत्वात्। पूर्वोक्तरीत्या प्रत्यक्षादीनामसम्भवा**त्स्मरण**मित्युक्तम्। तथा च दर्शितेच्छानन्तरं सुखसाधनं शिष्यवाक्यार्थबुद्धिस्तत्साधनङ्घकारः घोत्तरटकारश्च कण्ठचेष्टा घसाधनम्मदीयकृतिसाध्या च मूर्द्धचेष्टा टसाधनमित्याकारकं स्मरणं कण्ठचेष्टायाङ्घकारात्मकेष्टसाधनत्वकृतिसाध्यत्वविषयकत्वात् कण्ठचेष्टासाध्यकप्रवृत्तिजनकचिकीर्षाजनकञ्जायत इति भावः।

अत्र स्मरणे चेष्टांशे घकारसाधनत्वकृतिसाध्यत्वावगाहित्वन्तत्प्रवृत्त्यर्थं बुद्धौ सुखसाधनत्वस्य घकारटकारयोस्तद्बुद्धिसाधनत्वस्य चावगाहित्वन्तत्तदिष्टविषयकेच्छार्थमिच्छायान्तत्तदवगाहित्वं टकारोत्पत्त्यर्थं पुनस्तत्तदिच्छानुसरणे क्षणविलम्बो मा भूदित्येतदर्थम्। एवमग्रेऽपि बोध्यम्।

भावियौवराज्ये प्रवृत्तिवारणायेदानीन्तनत्वस्यान्यदीयकृतिसाध्यत्वज्ञानात्तद्वारणाय मदीयत्वस्य कृतौ विशेषणताया आवश्यकत्वाद्दर्शितस्मरणस्य कृत्यंशे तदनवगाहितया तेन चिकीर्षाजननासम्भवात्कृतौ तदुभयावगाहिज्ञानान्तरं दर्श-

* प्रत्येकम्। इति मु० पु० पा०।
† स्वकीयकृतिसाध्य। इति मु० पा० पु०।

**अथ· पूर्वगृहीतयावदिष्टविषयिणी चेष्टास्विच्छा। ततः प्रथमवर्णानुकूलचेष्टायामिदानीन्तनस्वकीयकृतिसाध्यत्वेष्टसाधनत्वयोर्म्मानसज्ञायमानमनुभूतचराण्यखिलानीष्टतत्साधनानि सुखबुद्धिवर्णचेष्टान्तराणि गोचरीकरोति, उपनायकज्ञानसत्त्वात्। इदानीङ्कालस्तु मनोयोग्यज्ञानादिस्वरूपो लौकिकादपि सन्निकर्षान्मनसा ग्रहीतुं शक्यः। कृत्यधिकरणलवानवगाहिनोपि* स्वाधिकरणकालगोचरस्य कर्त्तव्यताज्ञानस्य प्रवर्त्तकत्वोपगमात्।**

यति—**तत इत्यादिना। मानसमिति**। सुखसाधनं बुद्धिर्बुद्धिसाधनङ्कारो घोत्तरटकारश्च कण्ठचेष्टा घसाधनम्मदीयेदानीन्तनकृतिसाध्या च टसाधनम्मूर्द्ध-चेष्टेत्याकारकम्मानसमित्यर्थः। पूर्वानुभूतस्याखिलस्यैतन्मानसविषयत्वे प्रयोजनं दर्शितमेव। एतन्मानसस्य सर्वांशे लौकिकत्वासम्भवादुक्तस्मरणात्मकज्ञानलक्षणसन्निकर्षजन्यत्वादलौकिकत्वमेवेत्यु**पनायकज्ञानसत्त्वादित्य**नेनोक्तम्।

ननु सुखादीनां साध्यत्वसाधनत्वयोश्चेष्टायाश्च पूर्वानुभूतत्वात्स्मरणसम्भवेन तेनैवोपनायकज्ञानेनालौकिकम्मानसन्तेषाम्भवतु, इदानीङ्कालस्य तु पूर्वाननुभूतत्वेन स्मरणासम्भवात्तस्योक्तमानसे कथं भानमित्यत आह—**इदानीङ्कालस्त्वति**। तस्य क्रियाविशेषात्मकत्वे मनोयोग्यत्वानुपपत्तिरतो **ज्ञानादिस्वरूप** इत्युक्तम्। तस्मिंश्च मनस्संयुक्तसमवायस्य लौकिकस्यैव सन्निकर्षस्य सत्त्वेन तदंशे लौकिकत्वमेव तस्येति भावः। ननु कृताविदानीन्तनत्वमेतत्क्षणवृत्तित्वमेव, भविष्यत्कृत्यधिकरणानाञ्चोत्पत्तेः पूर्वम्मनसा कथं ग्रहणमित्यत आह—**कृत्यधिकरणेति**। **लवः** क्षणः। कृतौ स्वाधिकरणकालमात्रवृत्तित्वं प्रवृत्तिप्रयोजकतयाभिमतम्, न तु तत्तत्क्षणत्वेन तत्तत्क्षणवृत्तित्वमपि तत्रापेक्षितम्। तथा च भविष्यत्कृत्यधिकरणक्षणस्यापि ज्ञानविशेषात्मककालत्वेन मनसा ग्रहणन्नानुपपन्नमिति भावः। **कर्त्तव्यताज्ञानस्य** कृतिसाध्यताज्ञानस्य।

नन्विदानीमादिकालस्य सूर्य्यक्रियात्मकत्वमेव, तामादायैवेदानीन्तदानीमित्यादिव्यवहारात्। तस्याश्च मनोयोग्यत्वाभावात्कथम्मानसं लौकिकम्? तस्य ज्ञानविशेषात्मकत्वेपि पूर्वमगृहीततया तद्विशिष्टकृतिविषयकमानसप्रत्यक्षे विशेषणज्ञानविधया तज्ज्ञानस्यावश्यापेक्षणीय-

* कृत्यधिकरणकालानवगाहिनोपि। इति मु० पु० पा०।

**भवतु वा पूर्वोक्तमिष्टसाधनतास्वकीयकृतिसाध्यतयोः स्मरणमेव कालत्वेन ताद्रूप्येण वेदानीङ्कालविषयकम् । तदुपनीत एव कृत्यधिकरणकालः कर्त्तव्यताघटककृतिविशेषणतया मनसा गृह्यते । अत एव वर्त्तमानस्य ज्ञानस्य मनस्सन्निकृष्टस्यापि पूर्वागृहीतत्वेन कृतिविशेषणतया मानसे भानमनुपपन्नमिति समाहितम् । सम्भवति च कृत्यधिकरणकालस्य ताद्रूप्येण* स्मरणम्, अनवच्छिन्नप्रकारताकत्वेनानुभवस्य स्मरणं प्रति कारणत्वाभावात् ।**

त्वेन च कथन्तद्विशिष्टविषयकं मानसं स्यादित्यत आह—**भवतु वेति । पूर्वोक्तम्** अनुपदोक्तं सुखसाधनं बुद्धिर्बुद्धिसाधनङ्कारो घोत्तरटकारश्च कण्ठचेष्टा घसाधनं स्वकीयकृतिसाध्या च मूर्द्धचेष्टा टसाधनमित्याकारकं स्मरणमेव स्वकीयकृत्यंशे कालत्वेन तद्व्यक्तित्वेन वेदानीङ्कालविषयकं भवत्वित्यर्थः । तथा सति तेनैव स्मरणेनेदानीङ्कालस्यापि विषयीकरणात्तस्यैवोपनायकज्ञानतयालौकिकसन्निकर्षत्वात् क्रियात्मकस्य ज्ञानविशेषात्मकस्य वेदानीङ्कालस्यालौकिकम्मानसन्नानुपपन्नमिति भावः । **कालत्वेन ताद्रूप्येण वे**त्यभिधानङ्कृतौ कालत्वेनेदानीङ्कालविषयकस्य तत्तद्व्यक्तित्वेन वा तद्विषयकस्य ज्ञानस्य कारणत्वमिति पक्षद्वयमभिप्रेत्य । **अत एव** पूर्वस्मरणस्येदानीङ्कालविषयकत्वादेव । **मानसे भानमनुपपन्नमिति** । विशेषणज्ञानस्याभावादित्यादिः । **समाहितमिति** । तज्ज्ञानसम्पादनेनेत्यादिः ।

ननूक्तस्मरणस्य ताद्रूप्येण कथं तत्तत्कालविषयकत्वम् ? कालिकसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणतावच्छेदकधर्म्मत्वेनैव सामान्यलक्षणया तत्तत्कालवृत्तीदन्त्वादीनां पूर्वानुभवप्रकारतया निरवच्छिन्नप्रकारताकस्मरणं प्रति तादृशस्यैवानुभवस्य कारणत्वादित्यत आह—**सम्भवति चेति । कारणत्वाभावादिति** । तथा च तादृशकारणताया एवानभ्युपगमात्किञ्चिद्धर्म्मप्रकारकानुभवादपि निरवच्छिन्नप्रकारताकस्य स्मरणस्योत्पत्तौ बाधकाभाव इति ।

---

* तद्रूपेण । इति मु० पु० पा० ।

**कालिकाधिकरणतावच्छेदकधर्म्मवानित्यनुभवेन विषयीकृतानां *काल-वृत्तीदन्तानामुद्बोधकविशेषबलादनवच्छिन्नयापि प्रकारतया स्मरणेन ग्रहणे बाधकाभावात् ।**

**उद्बोधकविशेषबलादिति** । तादृशाधिकरणतावच्छेदकधर्म्मांशे उद्बोधका-भावस्येदन्त्वांशे उद्बोधकस्य बलादित्यर्थः । **स्मरणेन ग्रहणे इति** । ग्रहधात्वर्थोत्र विषयतामात्रम्, तृतीयार्थो वाभेद इति बोध्यम् ।

ननु तादृशकारणत्वाभावे कदाचिज्जातिमानित्याकारकङ्घटत्वाद्यंशे जातित्व-प्रकारकम्, कदाचिच्च तदंशे निष्प्रकारकमेव घट इत्याकारकं स्मरणमिति नियमो न स्यात्सर्वदोभयाकारकमेव स्यादिति चेदत्र केचित्—दर्शितकारणतास्वीकारेपि जातिमानित्याकारकेण घट इत्याकारकेण च जनितस्य संस्कारद्वयस्य सत्त्वे दर्शितोभयविधस्यैव स्मरणस्यापत्तिः । न च भगवदक्षपादादिदर्शितेपु प्रणिधान-निबन्धाभ्यासादिपु स्मरणनिमित्तेषूद्बोधकेपु यदंशे एकस्याप्युद्बोधकस्य समव-धानन्तस्यैव स्मरणम्, न तु तत्तदुद्बोधकासमवहितस्याप्यंशस्येति कल्पनेन यदा जातित्वविशिष्टे उद्बोधकसमवधानं तदैव तद्विशिष्टस्य स्मरणमन्यदा शुद्धघटत्व-स्यैवेति न सर्वदोभयविधस्मरणापत्तिरिति वाच्यम्, तथा सत्युक्तकारणत्वा-स्वीकारेपि तद्रीत्यैव तदुभयनियमोपपत्तेरुक्तकारणताया अप्रामाणिकत्वात् । अत एवास्मदाद्यदृष्टशरीरादिविशेपनिष्ठविशेपणान्तरानवच्छिन्नजातिविशेपावच्छिन्न - वाचकेभ्यो रामरावणदशरथादिपदेभ्यो निर्विशेपणकातीन्द्रियधर्म्मत्वाधर्म्मत्व-मनस्त्वादिजात्यवच्छिन्नवाचकेभ्यश्च धर्म्माधर्म्ममनःपदादिभ्यः स्वरूपतस्त-त्तत्प्रकारकः शाब्दबोधोस्माकमुपपन्नः । अन्यथा स्वरूपतस्तत्तज्जातिप्रकारक-स्मृतौ कारणीभूतस्य स्वरूपतस्तत्तज्जातिप्रकारकशक्तिग्रहस्य तज्जन्यसंस्कारस्य च स्वरूपतस्तत्तज्जात्यवच्छिन्नस्यास्मदाद्यननुभूतत्वेनासम्भवात् तादृशशाब्द-बोधो न स्यादस्माकम् । तादृशकारणत्वाभावे च जातित्वादिना यत्किञ्चिद्घ-टत्वादिजातिप्रत्यक्षानन्तरं सामान्यलक्षणया निखिलजातिविपयकालौकिक-प्रत्यक्षस्य सम्भवात्तेन जातित्वावच्छिन्नजातिप्रकारकसंस्कारजननात्तेन च संस्कारेण जातित्वांशं मोषयित्वा शुद्धतत्तज्जातिप्रकारकस्मरणे बाधकाभाव-स्तत्तत्पुराणकोपादिभ्यस्तत्तद्दशरथादिपदेषु शक्तिग्रहस्य सुशकत्वान्न तादृशशाब्द-बोधोनुपपन्न इत्याहुः । तन्न, उद्बोधकविशेपस्य प्रयोजकतामाश्रित्य स्मरण-

* कालेदन्तानाम् । इति मु० पु० पा० ।

**तेन च प्रथमवर्णानुकूलचेष्टायामिष्टसाधनत्वस्वकीयेदानीन्तनकृति-साध्यत्वे वर्णान्तरतदनुकूलचेष्टादौ चेष्टसाधनतामात्रमवगाहमानेन मानसेन प्रथमवर्णानुकूलचेष्टाचिकीर्षा, *अन्यत्र चेच्छामात्रञ्जन्यते ।**

प्रकारताया निरवच्छिन्नत्वसावच्छिन्नत्वयोरुपपादने तस्यैव प्रयोजकतामाश्रित्य प्रकारत्वविशेष्यत्वयोरपि नियमनसम्भवात्प्रकारत्वाद्यन्तर्भावेणापि संस्कारानुभवयोः कारणताविलयप्रसङ्गात् । केवलं कदाप्यननुभूतस्य स्मरणवारणाय विषयतामन्तर्भाव्येव तयोः कारणत्वकल्पनाया औचित्यात् ।

यदि चोद्बोधकानां सर्वत्राननुगतत्वेन तैः प्रकारविशेष्यत्वयोर्न्नियमनं न सम्भवत्यतस्तत्प्रकारकस्मृतौ तत्प्रकारकसंस्कारानुभवयोः कारणत्वमावश्यकमित्युच्यते ? तदा तुल्ययुक्त्या प्रकारतायान्निरवच्छिन्नत्वसावच्छिन्नत्वयोर्न्नियामकत्वमपि तेषां न सम्भवतीत्यतस्स्वरूपतस्तत्प्रकारकस्मृतौ तादृशसंस्कारानुभवयोः कारणत्वमावश्यकम् । दशरथादिपदेभ्यो लक्षणया दशरथादिपदवाच्यत्वप्रकारको बोधो यथा सूपपदस्तथाग्रे निर्वक्ष्यते । वस्तुतस्तु संस्कारानुभवयोः स्मरणं प्रति समानविषयतामात्रेण कारणत्वे पर्वतो वह्निमानिति विशिष्टानुभवजन्यविशिष्टसंस्कारात् पर्वतोवह्निश्चेत्यविशिष्टस्मरणापत्तिरुद्बोधकविशेषस्यापि प्रयोजकतामालम्ब्य वारयितुमशक्या। प्रकारत्वाद्यन्तर्भावेण कारणत्वे तु तादृशविशिष्टस्मरणस्यैव तादृशविशिष्टसंस्कारकार्य्यतावच्छेदकाक्रान्तत्वान्नोक्तसमूहालम्बनस्मरणापत्तिरतोनुगतानां सुस्मूर्षितचिह्नज्ञानचित्रादिधर्म्मिकसादृश्यज्ञानाद्युद्बोधकानान्तत्तद्विषयकस्मरणं प्रति सुस्मूर्षिततत्तदर्थचिह्नज्ञानत्वेन तादृशसादृश्यज्ञानत्वेन वैकरूपेणैव कारणतया तत्रोद्बोधकविशेषेण प्रकारतायान्निरवच्छिन्नत्वसावच्छिन्नत्वयोरुपपादनस्यासम्भवात्स्वरूपतस्तत्प्रकारकस्मृतौ स्वरूपतस्तत्प्रकारकसंस्कारानुभवयोः कारणत्वमावश्यकमिति दिक् ।

**तेन चेत्यादि** । **तेने**त्यस्याग्रिमेण **मानसेने**त्यनेनान्वयः । तादृशमानसे**नुभूतचराण्यखिलानीत्यादिना** विशेषणानां पूर्वमुक्तत्वेपि मध्ये विषयान्तरव्यवधानेन तत्पदेन तादृशविशेषणविशिष्टस्यैव परामर्शः कदाचिन्न भवेदपीति पुनस्तानि विशेषणानि तस्मिन् मानसे उपात्तानीति बोध्यम् । **चिकीर्षेति** । सुखं शिष्यवाक्यार्थबुद्धिः षकारः टकारः कण्ठचेष्टा

* प्रथमवर्णचेष्टायां चिकीर्षा । इति मु० पु० पा० ।

**जन्यतां वा संस्कारविशेषोद्बोधकप्रभवेण* कालिकाधिकरणतावच्छेदकधर्म्मवत्कालिकस्वकीयकृतिसाध्यत्वानुभवसमुत्थेना ‡ पमुषितकालिकाधिकरणतावच्छेदकत्वस्वरूपतत्तोपलक्षणधर्म्मेण प्रथमवर्णानुकूलचेष्टायामिदानीन्तनस्वकीयकृतिसाध्यत्वमन्यत्र चेष्टसाधनतामात्रमवगाहमानेन स्मरणेनैव निरुक्ता चिकीर्षा ।**

मदीयेदानीन्तनकृतिसाध्या भवतु मूर्द्धचेष्टा भवत्वित्याकारिकेच्छेत्यर्थः। "अधिकं प्रविष्टन्न तद्धानिः" इति न्यायेन सुखादेरधिकस्यावगाहित्वेपि कृतिसाध्यत्वप्रकारकत्वाव्याघातान्नोक्तेच्छायाश्चिकीर्षात्वहानिः। **ततो निरुक्तयावदिष्टेत्यादिना** पूर्वमुक्ते स्मरणे एव कृत्यंशे मदीयत्वेदानीन्तनत्वावगाहित्वमभ्युपगम्य तेनैव चिकीर्षाजननसम्भवादुक्तमानसकल्पनं नावश्यकमित्याह—**जन्यतां वेति**। **संस्कारविशेषः** कृतिनिष्ठेदन्तायां कालिकाधिकरणतावच्छेदकत्वानवगाही, तस्योद्बोधकः **प्रभवः** कारणं यस्य तेन। **कालिकेत्यादि**। कालिकसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणतावच्छेदको **धर्म्मः** कालत्वं तत्तद्व्यक्तित्वाद्यात्मकेदन्त्वादिर्वा, **तद्वत्कालिका** तत्तद्धर्म्मवत्कालिकी या मदीया कृतिस्तत्साध्यत्वप्रकारकात् तादृशधर्म्मवत्कालवृत्तिमदीयकृतिसाध्या कण्ठचेष्टेत्याकारकादनुभवात् **समुत्थेन** जातेनेति स्मरणविशेषणम्। तस्यैवापरमपि विशेषणमाह—**अपमुषितेति**। **अपमुषितो** विपर्यीकृतस्तादृशावच्छेदकत्वस्वरूप**स्तत्तायाः**स्तत्तद्व्यक्तित्वरूपेदन्ताया उपलक्षणधर्म्मो येन तत्तथेत्यर्थः। **प्रथमवर्णानुकूलचेष्टायां** घकारप्रयोजककण्ठचेष्टायाम्। **अन्यत्र** टकारप्रयोजकमूर्द्धचेष्टायाम्। कृताविदानीन्तनत्वं स्वकीयत्वञ्चोत्तरक्षणे तादृशप्रवृत्त्युत्पत्तये, तद्विशिष्टाया एव कृतेः साध्यत्वज्ञानं प्रवर्त्तकमित्यस्योक्तत्वात्। **इष्टसाधनतामात्रमिति**। मात्रपदेन मदीयेदानीन्तनकृतिसाध्यत्वस्य व्यवच्छेदः।

---

* संस्कारोद्बोधकविशेषप्रभवेन। इति मु० पु० पा०।

‡ प्रमुषित। इति मु० पु० पा०।

जनितायान्तु निरुक्तमानसेन कथितस्मरणेन वा सकलेष्टपरम्परावगाहिन्यां प्रथमवर्णचेष्टाचिकीर्षायां तादृशकृतिसाध्यत्वेष्टसाधनत्वविशिष्टप्रथमवर्णानुकूलचेष्टावान् कण्ठ इत्युपादानप्रत्यक्षन्त्वाचम्।

अत्र च द्वितीयादिवर्णचेष्टानिष्ठेष्टसाधनत्वमप्युपनीतं विषयः। इष्टसाधनद्वितीयवर्णजनकचेष्टादीनां पूर्वकालीनत्वादिसंसर्गेण प्रथमवर्णचेष्टायाम्भानसम्भवात्। *

तदंशेपि तस्यावगाहने युगपत्प्रवृत्तिद्वयस्यासम्भवाच्चेष्टाद्वयसाध्यकप्रवृत्तिद्वयस्य कारणसत्त्वाच्च सत्प्रतिपक्षस्थल इवैकस्या अपि प्रवृत्तेरनुत्पादः प्रसज्येतेति भावः। **कथितस्मरणेन वेति**। सुखसाधनं बुद्धिस्तत्साधनङ्कारो घोत्तरटकारश्च कण्ठचेष्टा घसाधनं मदीयेदानीन्तनकृतिसाध्या च मूर्द्धचेष्टा टसाधनमित्याकारकेण पूर्वोक्तेन स्मरणेनेत्यर्थः। पूर्वोक्तमानसस्याप्युपनायकज्ञानरूपकारणसत्त्वादुत्पत्तिरावश्यकी। तस्यापि चिकीर्षाकारणत्वमुक्तमेवेत्याशयेन **मानसेनेत्युक्तम्**। तस्याः प्रवृत्तेः कारणमुपादानप्रत्यक्षं दर्शयति—**तादृशकृतिसाध्यत्वेति**। मदीयत्वेदानीन्तनत्वविशिष्टकृतिसाध्यत्वेत्यर्थः।

अत्र च प्रत्यक्षे उत्पत्स्यमानाया अपि टकारसाधनमूर्द्धचेष्टाया विषयत्वमावश्यकम्। अन्यथा प्रथमवर्णानुकूलचेष्टोत्पत्तिक्षणे द्वितीयवर्णानुकूलचेष्टाविषयिणीच्छा न स्यात्तत्कारणीभूतस्य तस्यामिष्टसाधनताज्ञानस्य तदानीमभावादिति तस्या अपि पूर्वकालीनत्वसम्बन्धेन चेष्टायामुपलक्षणत्वमिति दर्शयति—**अत्र चेत्यादिना**। **उपनीतमिति**। प्रथमवर्णजनकचेष्टाया अप्युत्पत्स्यमानतया कण्ठांशे लौकिकविषयत्वासम्भवः, किं पुनर्द्वितीयवर्णजनकचेष्टानिष्ठेष्टसाधनत्वस्य तादृशचेष्टायामिति ज्ञानलक्षणासन्निकर्षाश्रयस्यैवत स्योक्तप्रत्यक्षविषयत्वमित्यर्थः। तथा च पूर्वकालीनत्वसंसर्गेण टसाधनमूर्द्धचेष्टाविशिष्टमदीयेदानीन्तनकृतिसाध्यघसाधनचेष्टावान् कण्ठ इत्याकारकं त्वाचप्रत्यक्षमिति भावः। विभिन्नकालीनयोस्तयोस्सामानाधिकरण्यं पूर्वकालीनत्वसंसर्गेणैव न तूत्तरकालीनत्वेन, द्वितीयवर्णचेष्टातः पूर्वमुत्पन्नायां तस्यान्तस्यासम्भवादित्यतः **पूर्वकालीनत्वसंसर्गेणेत्युक्तम्**।

---

* प्रथमचेष्टायां विशेषणतया भानसम्भवात्। इति मु० पु० पा०।

ततः* उपादानीभूतकण्ठावच्छेदेन प्रथमवर्णानुकूलचेष्टासाध्यकः प्रयत्नः। तज्जनितचेष्टोत्पत्तिकाले तु द्वितीयादिवर्णानुकूलचेष्टादिष्विच्छा, प्रथमचिकीर्षास्वरूपफलेच्छासमानकालीनस्योपादानप्रत्यक्षात्मकस्येष्ट-साधनताज्ञानस्य पूर्वं सत्त्वात् ।

अत एव फलेच्छा न स्वत उपायेच्छाजनिका, किन्त्विष्टसाधन-

**तत इति** । उक्तत्वाचप्रत्यक्षानन्तरमित्यर्थः । **उपादानीभूतेति** । घकारानुकूलचेष्टा-जनकः प्रयत्नः कण्ठावच्छिन्नः कण्ठोपादानकश्चेत्यर्थः । **इष्टसाधनसमवायितये-**त्यादिना **शरीरावयववृत्त्यवच्छेदकतेत्यादि**ना चोक्तकारणताद्वयकार्य्यतावच्छेद-काक्रान्तत्वं तादृशस्यैव प्रयत्नस्येति भावः । ननूक्तायाः घकारानुकूलचेष्टा-चिकीर्षायाः मूर्द्धचेष्टाविषयकत्वेपि दर्शितोपादानप्रत्यक्षेण प्रयत्नेन च तस्या विच्छेदाट्टकारानुकूला चेष्टा कथं स्यादित्यत आह—**तज्जनितेति** । उक्तप्रयत्न-जन्यचेष्टोत्पादक्षणे इत्यर्थः । ननु तद्विपयकेच्छाकारणीभूतस्य तस्मिन्निष्ट-साधनताज्ञानस्य प्रथमवर्णानुकूलचेष्टाकारणस्योक्तोपादानप्रत्यक्षस्य चेष्टांशे पूर्व-कालीनत्वसंसर्गेण द्वितीयादिवर्णसाधनमूर्द्धादिचेष्टाविपयकतया सत्त्वेपि फले-च्छाया अप्युपायेच्छाकारणतया तस्याश्चोक्तचेष्टापूर्वचतुर्थक्षण एव जातत्वा-त्कार्य्याव्यवहितप्राक्क्षणे असत्त्वात्कथमुक्तक्षणे द्वितीयादिवर्णानुकूलचेष्टाया-मिच्छेत्यत आह— **प्रथमचिकीर्षेत्यादि** । प्रथमवर्णानुकूलपूर्वोक्तचिकीर्षात्मक-फलेच्छायाः समानकालीनत्वस्योक्तोपादानप्रत्यक्षे सत्त्वात्तस्य चेष्टसाधनत्वाव-गाहितयैवोक्तचेष्टेच्छाकारणसंवलनमित्यर्थः ।

ननूक्तफलेच्छायास्तादृशप्रत्यक्षसमानकालीनत्वेपि कार्य्याव्यवहितप्राक्क्षणे-सत्त्वात्कथङ्कारणत्वमित्यत आह—**अत एवेति** । यत्रोक्तरीत्या प्रथमश्चिकीर्षा, तत उपादानप्रत्यक्षम्, ततःकारणसत्त्वेवश्यङ्कार्य्यमिति नियमात् विभुविशेष-गुणानां यौगपद्येनोत्पत्तेरसम्भवाच्च प्रवृत्तिरेव स्यात्, न पुनरिच्छा, ततश्चेष्टो-त्पत्तिक्षणे द्वितीयेच्छाया असम्भवादेवेत्यर्थः। **न स्वतः** न कार्य्याव्यवहित-प्राक्क्षणावच्छेदेन। **किन्त्विष्टेति** । तथा च समानकालीनत्वसम्बन्धेनावच्छेदक-

---

* ततः । इति मु० पु० पा० ना० ।

**ताज्ज्ञानोपलक्षणीभूय जनकतावच्छेदिकेति सम्प्रदायः।**

**ततः प्रथमचेष्टाजनितविभागकाले मदीयेदानीन्तनकृतिसाध्या द्वितीयवर्णजनकचेष्टा* मदिष्टसाधनमित्याकारकमखिल‡परम्पराणामग्रिमवर्णचेष्टानाश्चेष्टसाधनत्वाद्यवगाहिस्मरणम्।**

**अथ प्रथमचेष्टाजनितपूर्वदेशसंयोगनाशकाले द्वितीयवर्णचेष्टाचिकीर्षा सकलेष्टावगाहिनी। ततः प्रथमचेष्टाजनितोत्तरदेशसंयोगदशायां द्वितीयवर्णचेष्टोपादानस्य स्थानस्य त्वाचप्रत्यक्षमुपनीतप्रथमवर्णतदनुकूलचेष्टेतरयावदिष्टतत्साधनविषयकम्।**

त्वमेव तस्या इति भावः। अत्र चेष्टसाधनताज्ञाने फलेच्छायास्तद्बुद्धयसमानकालीनत्वे सति तद्बुद्धिप्रकारतयोपलक्षणत्वमेव, न विशेषणत्वम्, तस्य तद्बुद्धिसमानकालीनत्वे सति तद्बुद्धिप्रकारत्वात्मकतया कार्य्याव्यवहितप्राक्क्षणे तादृशेच्छाया अविद्यमानत्वादित्याशयेनो**पलक्षणीभूये**त्युक्तम्। **स्मरणमिति।** अत्र स्मरणे चिकीर्षाकारणत्वोपपत्तये कृतिसाध्यत्वेष्टसाधनत्वयोरग्रिमाग्रिमकार्य्यसम्पत्तये चाखिलपूर्वोक्तफलपरम्पराणामवगाहनमिति दर्शयितुं **मदीयेदानीन्तनेत्यादिचेष्टानाश्चेत्यन्त**मुक्तम्।

उक्तस्मरणानन्तरं द्वितीयवर्णचेष्टाचिकीर्षायाः सामग्रीसत्त्वेनोत्पाद इत्याह—**अथ प्रथमचेष्टेत्यादिना।** अत्रापि चिकीर्षायाः सकलेष्टपरम्परानवगाहनेग्रिमकार्य्यं न स्यादिति तदवगाहित्वञ्चिकीर्षायामुक्तम्। एकेनैव कर्म्मणा विभागपूर्वदेशसंयोगनाशोत्तरदेशसंयोगानामुत्पादस्य सिद्धान्तितत्वादाह—**ततः प्रथमचेष्टेत्यादि। स्थानस्य** मूर्द्धादेः। प्रथमवर्णानुकूलचेष्टाया जातत्वादत्र प्रत्यक्षे तस्यास्तत्प्रयोज्यवर्णस्य चावगाहनन्निष्प्रयोजनकमतः **प्रथमवर्णतदनुकूलचेष्टेतरे**त्युक्तम्। **यावदिष्टेति।** सुखबुद्धिटकारादिकमित्यर्थः।

इदानीं प्रथमवर्णोत्पादकसामग्र्याः द्वितीयवर्णानुकूलचेष्टासाध्यकप्रयत्न-

---

* द्वितीयवर्णचेष्टा। इति मु॰ पु॰ पा॰।

‡ अखिलाना फलपरम्पराणाम्। इति मु॰ पु॰ पा॰।

अथ प्रथमवर्णोत्पत्तिकाले द्वितीयवर्णानुकूलचेष्टासाध्यकस्तदुपादानस्थानान्तरावच्छेदेन प्रयत्नः। ततस्तत्स्थानचेष्टाविभागपूर्वदेशसंयोगनाशोत्तरदेशसंयोगोत्पत्तिक्षणचतुष्टय*मन्तरा व्यतिक्रम्य द्वितीयशब्दोत्पत्तिः। एवमुत्तरोत्तरेषामपि वर्णानाम्।

यदि च स्मरणञ्च चिकीर्षाजनकमपि† तु तन्मूलकम्मानसं तदा पञ्चक्षणाः शब्दयोरन्तराले पतिताः। प्रायिकश्चेदम्। अतः क्वचिदधिकविलम्बेपि न क्षतिः।

सामग्र्याश्च सत्त्वादुत्तरक्षणे तयोरुत्पाद इत्याह--**अथेत्यादिना**। **अथ** तादृशत्वाचप्रत्यक्षानन्तरम्। **प्रथमवर्णस्य** घकारस्य। **द्वितीयोवर्णः** टकारादिस्तत्प्रयोजकचेष्टाजनकः। तद्वर्णोपादानं यन्मूर्द्धादि तदवच्छेदेन प्रयत्न इत्यर्थः। योग्यविभुविशेषगुणानां समानाधिकरणानामेव यौगपद्यं विरुद्धम्, शब्दप्रयत्नयोर्वैयधिकरण्यान्न यौगपद्यं विरुद्धमिति भावः। **क्षणचतुष्टयमिति**। प्रयत्नानन्तरक्षणे टकारानुकूला चेष्टेत्येकः क्षणः, ततः पूर्वदेशविभाग इति द्वितीयः क्षणः, ततः पूर्वदेशसंयोगनाश इति तृतीयः क्षणः, तत उत्तरदेशसंयोग इति चतुर्थः क्षणः। एवं क्षणचतुष्टयानन्तरं टकारादेर्द्वितीयवर्णस्योत्पत्तिरिति भावः। **एवमिति**। त्रिचतुरादिवर्णघटितकलसादिपदेष्वपि कादिवर्णेभ्यः पूर्वपूर्वेभ्यः क्षणचतुष्टयानन्तरमेव लकारस्य ततस्तावत्क्षणानन्तरमेव सकारादीनामुत्पत्तिरिति भावः। **पञ्चभिर्वापि** इत्युक्तं सङ्गमयति—**यदि चेति**। पूर्वोक्तरीत्या स्मरणोत्तरं कारणसंवलनाच्चिकीर्षामपनोद्य मानसस्यैवोत्पादे तदुत्तरमेव टकारादेरुत्पत्तिसम्भव इति क्षणैकाधिक्यात् **पञ्चभि**रित्युक्तमिति भावः। तादृशस्मरणोत्तरं यत्र क्वचित्प्रतिबन्धकादिवशान्मानसं न जातम्, चिकीर्षा तु तत्रापि भवत्येवेति तदर्थश्चिकीर्षायां स्मरणस्यैव कारणत्वम्, न तु मानसस्यापीत्यभिप्रेत्य **यदि चे**त्युक्तम्। ननु यत्र कारणविघटनवशात् प्रतिबन्धवशाद्वा कारणीभूतोक्ततत्तज्ज्ञानादीनां समुच्चयो न जातस्तत्र कथञ्चतुष्टयस्य पंचतयस्यैव वा क्षणस्य व्यवधायकत्वम्? ततोप्यधिकस्य तस्य तत्सम्भवादित्यत आह—**प्रायिकश्चेद-**

---

* क्षणचतुष्कमन्तरा। इति मु० पु० पा०।

† अथ तु। इति मु० पु० पा०।

**द्रुतं विलम्बितं वा वदतीत्यनुभवस्य सर्वजनीनत्वात्। श्रोता तु घकारोत्पत्तेरनन्तरञ्जातिव्यक्ती साक्षात्कृत्य घत्वेन घकारविकल्पका* दनन्तरं घविशेषितं ध्वंसं साक्षात्कुरुते, स्मरति च टकारोत्पत्तिकाले ।**

**मिति** । इदन्तावत्क्षणानां व्यवधायकत्वम्। **प्रायिकं** प्रायेण बाहुल्येन वर्त्तत इति प्रायिकम्, न तु सार्वत्रिकमित्यर्थः । अत्रानुभवं प्रमाणयति—**द्रुतं विलम्बितं वेति** । तत्तद्वर्णोत्पत्तिकारणज्ञानादीनां समूहालम्बनात्मकत्वे चतुः-पञ्चक्षणानामेव व्यवधायकत्वेन द्रुतत्वम्, तेषां समूहालम्बनानात्मकत्वे विलम्बित-त्वम् । तत्रापि कस्यचित्केनचित्समं समुच्चये केनचिदसमुच्चये क्षणविलम्ब-तारतम्यमनुभवसिद्धमूहनीयम् । एवं सति घटत्वादिप्रकारकान्वयबोधानुकूला शक्तिर्घध्वंसवट्टत्वावच्छेदेनैवास्तीति तस्याः ज्ञानं सुशकमिति सिद्धान्तयितु-माह—**श्रोतेति** । विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वाद् घकारोत्पत्त्य-व्यवहितोत्तरक्षणे घत्वज्ञानाभावाद् घत्वविशिष्टघकारप्रत्यक्षमसम्भवीति तत्क्षणे घघत्वे इति निर्विकल्पकम्, ततो घत्वविशिष्टप्रत्यक्षं घकारनाशश्च, प्रत्यक्षे विषयस्य कार्य्यसहभावेनैव न कारणता, किन्तु कार्य्याव्यवहितप्राक्क्षणावच्छे-देनापीति तदानीङ्घकारस्य नाशेपि क्षतेरभावस्ततो घविशिष्टध्वंसप्रत्यक्षम्, ततष्टकारोत्पत्तिकाले तस्य स्मरणमित्यादिक्रमेण तत्र शक्तिज्ञानमित्याह—**घकारोत्पत्तेरित्यादिना । घकारध्वंसेति** । शब्दस्य तृतीयक्षणवृत्तिध्वंस-प्रतियोगित्वाद्द्वितीयवर्णानुकूलचेष्टाजन्यविभागक्षणे प्रथमवर्णस्य स्वप्रत्यक्षेण नाशात् ततः पूर्वदेशसंयोगनाशक्षणे प्रतियोगितया घविशिष्टध्वंसस्य साक्षात्कारः, तत उत्तरदेशसंयोगक्षणे स्मरणकारणस्य तत्साक्षात्कारजन्य-संस्कारस्य सत्त्वाट्टकारोत्पत्तिक्षणे घध्वंसस्य स्मरणम्, ततष्टत्वनिर्विकल्पकम्, ततष्टत्वविशिष्टसाक्षात्कारः, ततोऽव्यवहितोत्तरत्वसम्बन्धेन घध्वंसविशिष्टटकारस्य साक्षात्कारः, ततो घविशिष्टध्वंसविशिष्टटत्वावच्छेदेन घटत्वाद्यवच्छिन्ननिरूपित-शक्तिज्ञानं सुशकमित्यर्थः। नष्टस्य घकारस्योक्तसाक्षात्कारे लौकिकविषयताया असम्भवात्स्मरणोपनीतत्वं तत्र ध्वंसे विशेषितम् । ननु घरटादिपदप्रत्यक्षेपि टकारांशे घध्वंसवत्तायाः भानात्ततोपि घटादिशाब्दबोधप्रसङ्ग इत्यत आह—

---

* घकारविकल्पानन्तरम्। इति मु० पु० पा० ।

**नव्यास्तु ज्ञानयोरेव यौगपद्यं सिद्धान्तविरुद्धम्, न तु**

स च शब्दानित्यतावादे तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वात्मकाव्याप्यवृत्तित्वं शब्दानां स्वीकृतम्। तच्च घकारोत्पत्त्यव्यवहितोत्तरक्षणे एव टकारस्योत्पत्तौ सम्भवति, द्वितीयक्षणे नाशकस्य टकारस्य सत्त्वात्तृतीयक्षणे घकारनाशसम्भवात्। स्वप्रतियोगिसमवायसम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वप्रतियोग्यव्यवहितोत्तरवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन तादृशगुणस्य कारणत्वात् घकाराद्युत्पत्तेश्चतुर्थपंचक्षणव्यवधानेनैव टकारादेरुत्पादे तस्योक्तोभयसम्बन्धविरहेण तृतीयक्षणे नाशकाभावाद्घकारादिनाशानुपपत्तिः । वर्णानां पंचषक्षणवृत्तित्वस्यापि स्वीकारे घवत्त्वस्यैवाव्यवहितोत्तरत्वसम्बन्धेन टकारे सम्भवात् **क्षणद्वयमात्रप्राणनस्य** इत्यादिशङ्कोत्तरग्रन्थासङ्गतिप्रसङ्गो न्यायसिद्धान्तविरोधश्च । तदर्थं प्रथमवर्णनाशे द्वितीयवर्णभिन्नस्य तत्साक्षात्कारस्य तृतीयक्षणमात्रस्य वा कार्य्यसहभावेन कारणत्वं कल्पनीयमिति बहुव्याकोप इति ।

शङ्काग्रन्थोक्तं घकारटकारयोरव्यवधानेनोत्पादमेव साधयितुं नव्यमतमाह— **नव्यास्त्वित्यादिना । सिद्धान्तविरुद्धमिति ।** न्यायसिद्धान्तविरुद्धमित्यर्थः। अयम्भावः—चाक्षुषादितत्तत्प्रत्यक्षं प्रति चक्षुरादितत्तदिन्द्रियेण सह मनस्संयोगस्य कारणतायाः क्लृप्ततयाणोर्मनसः एकक्षणेनेकेन्द्रियसंयोगस्यासम्भवादेकक्षणेनेकं ज्ञानन्नोत्पत्तुमर्हतीति । यत्रापि दीर्घशष्कुलीभक्षणादौ शष्कुल्या दीर्घतया चक्षुस्संयोगस्य, तद्गतगन्धेन घ्राणसंयुक्तसमवायस्य, तद्गतरसेन रसनासंयुक्तसमवायस्य, तद्गतोष्णस्पर्शादिना त्वक्संयोगसमवायस्य, तज्जन्यशब्देन श्रोत्रसमवायस्य, तद्भोजनजन्यसुखेनात्मसमवायस्य, चैकदैव क्षणे संवलनात्षड्विधमपि प्रत्यक्षमेकक्षण इव जायमानमनुभूयते, तत्राप्यतिवेगवतो मनसश्शीघ्रसञ्चारात्क्षणभेदेनैव तत्तदिन्द्रियसंयोग इति सिद्धान्तो यथा कमलशतपत्राणां सूच्या भेदने समकालमेव सर्वेषाम्भेद इत्यस्यापाततोनुभूतत्वेपि प्रथमपत्रभेदानन्तरमेव द्वितीयस्य, ततस्तृतीयस्य भेद इत्यादिक्रमेणैव तेषान्तत्र भेद इत्यस्यैव यौक्तिकत्वेन तत्र क्षणभेद आवश्यकस्तथा प्रकृतेपीति न ज्ञानयौगपद्यसम्भवः । इच्छाद्यात्मविशेषगुणेषु च तत्तदिन्द्रियमनस्संयोगस्याकारणत्वाज्ज्ञानकारणात्ममनस्संयोगादीनाम् इच्छादिकारणेष्टसाधनत्वज्ञानैस्सहोत्पत्तौ ज्ञानेन सहेच्छादीनां।यौगपद्येनोत्पत्तौ बाधकाभाव इत्याह—**न तु योग्यात्मेति।**

**योग्यात्मविशेषगुणसामान्यस्य, तथा च घकारप्रयोजकचेष्टाचिकीर्षाकाले* टकारजनकचेष्टायामिष्टसाधनत्वमदीयेदानीन्तनकृतिसाध्यत्वे मूर्द्धादिस्थाने तु तादृशचेष्टासमवायित्वमवगाहमानं त्वाचमुपादानप्रत्यक्षम्, पूर्वं तेषामुपस्थितत्वात् ।**

प्रत्यक्षविषयजीवात्मविशेषगुणत्वावच्छिन्नबुद्धिसुखदुःखात्मकस्येत्यर्थः । अतीन्द्रियात्मविशेषगुणानां धर्म्माधर्म्मभावनानां सामान्यगुणानां संख्यादीनाञ्च यौगपद्येनोत्पत्तौ न कस्यचिद्विमतिरतो **योग्यात्मविशेषगुणसामान्यस्ये**त्युक्तम् । ज्ञानेच्छादीनां यौगपद्येनोत्पत्तेः सिद्धान्ताविरुद्धत्वादेव गौतमसूत्रे वैशेषिकसूत्रे च "युगपज्ज्ञानानुपपत्तिर्मनसो लिङ्गम्" "प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम्" इत्यत्र ज्ञानमात्रस्यैवायौगपद्यमुक्तं न तु ज्ञानेच्छादीनामपि । तदनुसारिणा विश्वनाथेनापि "अयौगपद्याज्ज्ञानानाम्" इत्येवोक्तम् । उक्तस्थलेषु ज्ञानादीत्यादिपदकल्पने प्रमाणाभावो द्वितीयसूत्रे "प्रयत्नायौगपद्यात्" इत्यस्य वैयर्थ्यञ्चेति बोध्यम् । **तथा चेति** । ज्ञानेच्छयोर्य्यौगपद्येनोत्पत्तेः सिद्धान्ताविरुद्धत्वे चेत्यर्थः । **घकारप्रयोजकेति** । सुखं शिष्यवाक्यार्थबुद्धिर्घकारः टकारः कण्ठचेष्टा मदीयेदानीन्तनकृतिसाध्या भवतु मूर्द्धचेष्टा भवत्विति पूर्वोक्तघकारप्रयोजकचेष्टाचिकीर्षोत्पत्त्यधिकरणक्षणे इत्यर्थः **टकारजनकचेष्टायाम्** । मूर्द्धचेष्टायामित्यर्थः । **इष्टसाधनत्वेति** । मूर्द्धचेष्टा टसाधनम्मदीयेदानीन्तनकृतिसाध्या च मूर्द्धस्थानं तादृशचेष्टावदिति त्वाचप्रत्यक्षमपि तस्मिन्नेव क्षणे जायत इत्यर्थः । अत्र हेतुः—**पूर्वं तेषामिति । तेषाम्** उक्तसमूहालम्वनविषयसुखादीनाम् । **उपस्थितत्वात्** स्मृतिविषयत्वात् । तथा चोक्तसमूहालम्बने विशेषणादिज्ञानविधया कारणानां पूर्वं सत्त्वात्तदुत्तरक्षणे तादृशसमूहालम्बनमिति भावः ।

अत्रैव क्षणे टकारानुकूलप्रयत्नजनकचिकीर्षाया अप्यभ्युपगमे उत्तरक्षणे घकारटकारयोरनुकूलयोः प्रवृत्त्योः कारणसत्त्वात्प्रयत्नयौगपद्यं पूर्वोक्तवैशेषिक-

---

* घकारजनकचेष्टा चिकीर्षाकाले । इति मु० पु० पा० ।

**अथ प्रथमकृत्युत्पत्तिकाले द्वितीयचिकीर्षा, तदनन्तरं द्वितीय*-कृतिरिति कृत्योरव्यवधानवशात्सम्भवत्येककर्णावच्छेदेनाव्यवधानेन घकारटकारयोरुत्पत्तिः। प्रतिसन्धीयते च घविकल्पानन्तरं विकल्प-विषये‡ टकारेऽव्यवहितोत्तरत्वस्वरूपं घवैशिष्ट्यम्, तच्च स्वकालीनप्राग-भावप्रतियोगित्वं स्वावच्छेदकावच्छेद्यत्वं कालिकविशेषणता चेत्येतत्त्रि-**

सूत्रविरुद्धमापद्येतेति तादृशत्वाचप्रत्यक्षानन्तरं तादृशचिकीर्षेत्याह—**अथेत्या-दिना**। **अथ** उक्तत्वाचप्रत्यक्षानन्तरम्। **प्रथमकृत्युत्पत्तिकाले** घकारानुकूल-प्रवृत्त्युत्पत्तिक्षणे। **द्वितीयचिकीर्षा** टकारानुकूलचिकीर्षा। **द्वितीयकृतिः** टकारानुकूला प्रवृत्तिः। कारणस्य कृतिसाध्यत्वेष्टसाधनतयोर्ज्ञानस्य पूर्वं सत्त्वात् कृतीच्छयोर्य्यौगपद्येनोत्पत्तौ विरोधाभावाच्च घकारानुकूलकृत्यनन्तरं टका-रानुकूला कृतिरित्यर्थः। **सम्भवत्येकेति**। घकारानुकूलचेष्टाजन्यविभागकाले टकारानुकूला चेष्टा, ततस्तत्पूर्वदेशसंयोगनाशकाले टकारजनकमूर्द्धदेशस्य पूर्वदेशविभागः, ततस्तत्तालुसंयोगकाले मूर्द्धदेशस्य पूर्वसंयोगनाशः, ततो घकारोत्पत्तिक्षणे मूर्द्ध्नस्तालुसंयोगः, ततष्टकारोत्पत्तिः सम्भवतीति तयोरव्यवधानेनैककर्णावच्छेदेन वैशिष्ट्यं निराबाधमित्यर्थः। **प्रतिसन्धीयते चेति**। घकारोत्पत्त्यनन्तरं घत्वनिर्विकल्पकम्, ततो घविकल्पो घत्ववि-शिष्टविषयकप्रत्यक्षात्मकः, ततस्तस्मिन्नेव क्षणे टत्वनिर्विकल्पकम्, तदनन्तरं टत्वविशिष्टप्रत्यक्षविषये टकारे वक्ष्यमाणाव्यवहितोत्तरत्वस्वरूपं घवैशिष्ट्यं स्मर्य्यत इत्यर्थः। अव्यवहितोत्तरत्वस्य स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वमात्ररूपत्वेऽन्यदीयकर्णावच्छिन्नघकारवैशि-ष्ट्यस्य स्वीयटकारे दुर्वारता स्यात्। तत्रैव स्वावच्छेदकावच्छिन्नत्वस्यापि प्रवेशे गौरवमतोऽन्यथा तद्विवक्षितमित्याह—**तच्चेति**। **स्वकालीनः** स्वाधिकरणकाल-वृत्तिर्य्यः प्रागभावस्तत्प्रतियोगित्वमित्यर्थः। स्वाधिकरणकालवृत्तिप्रागभाव-प्रतियोगित्वस्वावच्छेदककर्णावच्छेद्यत्वस्वाधिकरणकालवृत्तित्वैतत्त्रितयसम्बन्धेन घवैशिष्ट्यं टत्वावच्छिन्ने विवक्षितम्। कालपदञ्च सर्वं क्षणपरम्। तेन स्थूलकालमादाय चिरान्तरितेऽपि टकारे न घवैशिष्ट्यमिति भावः। स्वयमेव सम्बन्धव्यावृत्तीरनुपदं दर्शयिष्यति।

---

* द्वितीया कृतिरिति। इति मु० पु० पा०।

‡ घविकल्पविषये। इति मु० पु० पा०।

तयस्वरूपम् । कालमुद्रया स्वस्वध्वंसोभयाधिकरणत्वे सति स्वावच्छेद्-कावच्छिन्नत्वं वा । तेन घकाराच्चिरान्तरितस्य घकारस्याव्यवहितपूर्व-काले उत्पत्तिकाले* वोत्पन्नस्य घकारानवच्छेदककर्णावच्छिन्नस्य च

संसर्गतावच्छेदकांशे लाघवादाह-**कालमुद्रयेति** । तथा च कालिकसम्बन्धेन स्वाधिकरणत्वस्वध्वंसाधिकरणत्वस्वावच्छेदकावच्छिन्नत्वैतत्त्रितयसम्बन्धेन घवै-शिष्ट्यं वाच्यमित्यर्थः । प्रथमे तृतीयस्य द्वितीये प्रथमस्य संसर्गस्य फलमाह—**तेनेति** । **चिरान्तरितस्य** चिरकालव्यवधानेनोत्पन्नस्य टस्य व्युदास इत्य-न्वयः । घकाराच्चिरान्तरिते टकारे घकाराधिकरणकालवृत्तित्वस्य कालिकसंस-र्गेण घकाराधिकरणत्वस्य वाभावान्न तत्र घकारवैशिष्ट्यम् । उभयत्रोभय-संसर्गमात्रोपादाने तूत्पत्स्यमानटकारप्रागभावस्य घकाराधिकरणक्षणे सत्त्वाद् घध्वंसाधिकरणत्वघकारावच्छेदककर्णावच्छेद्यत्वयोस्तत्र सत्त्वात्तस्यापि संग्रहो दुर्वारः स्यादिति भावः । प्रथमे प्रथमस्य द्वितीये द्वितीयस्य फलमाह—**घकारस्याव्यवहितेति** । अस्योत्**पन्नस्ये**त्यनेनान्वितस्य **टस्य व्युदास** इत्य-नेनान्वयः । घकाराद्व्यवहितपूर्वकालोत्पन्नटकारे स्वाधिकरणकालवृत्तित्व-स्वाधिकरणत्वयोरभावादेव तद्व्युदाससम्भवादाह—**अव्यवहितेति** । तथा च तत्र टकारे दर्शितोभयसंसर्गेण घवैशिष्ट्यप्रसङ्गवारणायैव प्रथमे प्रथमस्य द्वितीये द्वितीयस्य संसर्गस्योपादानमिति भावः । चैत्रीयघकारोत्पत्तिकालेपि मैत्रीयटकारस्योत्पत्तिसम्भवात्तत्रापि तयोर्व्याप्तिस्सम्भवतीत्याह—**उत्पत्ति-काले वेति** । घकारस्येति पूर्वेणान्वितस्य **टस्य व्युदास** इत्यग्रिमेणान्वयः । समकालोत्पन्नटकारे घध्वंसाधिकरणत्वाभावात्तद्व्युदासो बोध्यः । प्रथमे द्वितीयस्य द्वितीये तृतीयस्य फलमाह—**घकारानवच्छेदकेति** । तथा च तदनु-पादाने चैत्रीयकर्णावच्छिन्नघकारवैशिष्ट्यस्य मैत्रीयकर्णावच्छिन्ने टकारे प्रसङ्ग इति तदुपादानमिति भावः ।

ननु तथापि यत्र चैत्रोच्चरितघकाराद् वीचीतरङ्गादिन्यायेनोत्पन्नाद्देवदत्त-कर्णावच्छिन्नघकाराद्व्यवधानेनैव मैत्रोच्चरितटकारतस्तादृशन्यायेन तत्कर्णावच्छे-देनोत्पन्नस्तत्रोक्तसंसर्गैर्घवैशिष्ट्यस्य तादृशटकारे निराबाधतया तज्ज्ञानादपि

* अनुत्पत्तिकाले । इति मु० पु० पा० ।

टस्य व्युदासः। यदि च चैत्रीयघकाराव्यवधानेनैकस्मिन्नेव श्रवसि समुत्पन्नो* मैत्रीयष्टकारोपि† व्यावर्त्तनीयः, तदैकपुरुषप्रयोज्यतावच्छेदिका घत्वटत्वव्याप्यजातय‡ एव घत्वटत्वस्थाने प्रवेशनीयाः।

एवञ्च निरुक्ताव्यवहितोत्तरत्वसंसर्गेण घविशिष्टटत्ववत्त्वमेव घट-

घटत्वप्रकारकशाब्दबोधस्स्यादित्यत आह-**यदि चेति**। **श्रवसि** कर्णे। अवच्छेदकत्वं सप्तम्यर्थस्तस्य समुत्पन्नपदार्थैकदेश उत्पत्तावन्वयः। **व्यावर्त्तनीय इति**। अयम्भावः—तत्रोक्तसंसर्गैर्घवैशिष्ट्यज्ञानेपि शाब्दबोधस्यानानुभविकत्वे तस्य वारणाय विजातीयघकारवैशिष्ट्यं विजातीयटकारे विशेषणञ्चेदीयेत? तदा चैत्रादितदुच्चारकभेदेनैव प्रत्येकं वर्णेषु वैजात्यस्याभ्युपगमस्य भित्त्याद्यन्तरितचैत्राद्युच्चरितघकारपरम्पराजनितघकारश्रवणानन्तरं तादृशघकारे चैत्रोच्चरितत्वानुमितेस्तादृशवैजात्यहेतुकाया एव दर्शनेनावश्यकतया उच्चारकपुरुषाणामानन्त्याच्छक्ततावच्छेदकानन्त्यप्रसङ्ग इत्यतो घत्वावच्छिन्नवैशिष्ट्यमेव टत्वावच्छिन्ने देयम्, तथा सति घत्वटत्वयोरनुगमाच्छक्ततावच्छेदकानुगमः। उक्तापत्तिवारणाय चोक्तवैशिष्ट्यनियामकसम्बन्धेषु स्वप्रयोजकतावच्छेदकधर्म्मावच्छिन्ननिरूपितप्रयोज्यतावच्छेदकजातिमत्त्वमन्तर्भावनीयं तावतैव विभिन्नपुरुषोच्चरितघकारटकारयोर्वैशिष्ट्यस्याप्रसङ्गात्। एवञ्च **तदैकपुरुषप्रयोज्यते**त्यादिमूलस्यापि घत्वटत्वव्याप्यजातीनां सम्बन्धकुक्षावेव निवेशे तात्पर्य्यम् न तु विशेष्यविशेषणयोः, तथा सत्यननुगमप्रसङ्गस्य दर्शितत्वादिति। नर्त्तनादिकालीनगानेषु पञ्चषवर्णानुच्चार्य्यान्तरान्तरा विरते नर्त्तकादिषु तदितरमार्दङ्गिकादिभिस्तदुत्तरवर्णोच्चारणेपि सभ्यानां शाब्दबोधस्यानुभविकत्वादेकपुरुषोच्चरितजातीयत्वं न शाब्दबोधानुकूलत्वे प्रयोजकमित्यभिप्रेत्य **यदि चे**त्युक्तम्। नव्यास्त्वित्यत्रानोक्तमर्थमुपसंहरति—**एवञ्चेति**। उक्तक्रमेण घकारोत्पत्तिद्वितीयक्षणे टकारस्यौत्पत्तौ चेत्यर्थः। **निरुक्तेति**। स्वाधिकरणत्वस्वध्वंसाधिकरणत्वस्वावच्छेदकावच्छिन्नत्वस्वनिरूपितप्रयोजकतावच्छेदकधर्म्मावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावच्छेदकजातिमत्त्वैतच्चतुष्टयात्मकेत्यर्थः। **घटपदत्वं** घटत्वप्रकारकशाब्दबोधानुकूल-

* उत्पन्नः। इति मु० पु० पा०।

† अपि। इति मु० पु० पा० ना०।

‡ घत्वटत्वव्याप्या जातयः। इति मु० पु० पा०।

**पदत्वम्, व्यवहितोच्चरिते तद्भ्रमादेव पदार्थप्रतिसन्धानन्न तु तदनुरोधेन बहुक्षणसाधारणाव्यवधानं प्रकृते प्रवेशनीयं गौरवादित्याहुः* ।२।२।**

**ननु प्रतिपद्यतामुपनीतवर्णेन† तद्ध्वंसेन वोत्तरो वर्णः पदत्वम्, तथापि पदं स्वरूपसदेवार्थस्य‡ न स्मारकमतिप्रसङ्गादतः पदज्ञानमेव तथेति वक्तव्यम् ।**

शक्तिमद्घटपदत्वमित्यर्थः । तेन तादृशशाब्दबोधाननुकूलघटपदत्वस्य व्यवहितोच्चरितघकारटकारयोरपि सत्त्वेपि न क्षतिः । ननु **अत एव चित्रकाव्यादौ** इत्यादिपूर्वग्रन्थेन व्यवहितोच्चरितवर्णसमुदायादपि शाब्दबोधस्य स्वीकृतत्वादत्र मते तस्यानुपपत्तिरित्यत आह—**व्यवहितोच्चरित इति । तद्भ्रमादेव** निरुक्ताव्यवहितोत्तरत्वसंसर्गेणोत्तरोत्तरवर्णेषु पूर्वपूर्ववर्णवैशिष्ट्यभ्रमादेव । **पदार्थप्रतिसन्धानं** पदार्थस्मृतिः । **तदनुरोधेन** चित्रकाव्यादिस्थलीयव्यवहितोच्चरितवर्णसमुदायज्ञानजन्यपदार्थस्मरणानुरोधेन । **बहुक्षणेति** । स्वध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वादिघटितमव्यवधानमित्यर्थः ।२।२।

घटादिभिस्तद्ध्वंसेन च विशिष्टेषु वा टकारादिषु प्रपञ्चप्रकाशनसामर्थ्यं तदैव निर्वहेत् यदि ततो घटादेरर्थस्य प्रकाशस्स्यात्, स एव न सम्भवति, अज्ञायमानानां पदानामर्थस्य प्रकाशकत्वे सर्वदैव तेषां सत्त्वाद्घटत्वप्रकारकशाब्दबोधापत्तेः । ज्ञायमानानां तेषां तज्ज्ञानानां वा तेषां भिन्नविषयकत्वादर्थस्मारकत्वाभावस्समानविषयकयोरेवानुभवस्मरणयोः कार्य्यकारणभावादित्याशङ्कते—**नन्वित्यादिना । उपनीतपूर्ववर्णेनेति** नव्यमते । **तद्ध्वंसेन वेति** प्राचीनमते । **पदत्वं** शक्त्याश्रयत्वम् । **स्वरूपसदेव** स्वेन रूपेण घविशिष्टटत्वादिना **सदेव** विद्यमानमेव । एवकारेण तादृशटत्वादिप्रकारकज्ञानविषयत्वव्यवच्छेदः । **अतिप्रसङ्गात्** पदानामज्ञानेपि स्मरणप्रसङ्गात् । इदमुपलक्षणम् । विद्यमानस्यैव पदस्यार्थस्मारकत्वेतीतानागतपदेभ्यस्तज्ज्ञानाज्जायमानं स्मरणमनुपपन्नं स्यात्, अविद्यमानेभ्योपि तेभ्योर्थस्मरणोपगमे दिवसान्तरोच्चरितेभ्योपि घटादिपदेभ्यो घटत्वप्रकारकस्मरणापत्तिरित्यपि बोध्यम् । **पदज्ञानमेव** न तु स्वरूपसदित्येवकारलभ्योर्थः । **तथेति** । अर्थस्मारकमित्यर्थः । तथा च नोक्तापत्त्यनुपपत्ती इति

---

* प्राहुः । इति मु० पु० पा० । † उपनीतपूर्ववर्णेन । इति मु० पु० पा० ।
‡ पदस्वरूपमेवार्थस्य । इति मु० पु० पा० ।

**तच्चानुपपन्नं भिन्नविषयकज्ञानेन स्मरणाजननादिति चेत्? उच्यते—**

**पूर्वानुभूत्या संस्कारशेषया स्वार्थगोचरा।**

**जन्यमाना स्मृतिश्शब्दमुद्बोधकमपेक्षते॥ ३॥**

**आसीत्पूर्वं विषये गवादौ गौरित्येवमाकारकोनुभवो* व्यवहारा-भावः।** **तच्च** पदज्ञानस्य पदार्थस्मारकत्वञ्च। **अनुपपन्नमिति**। असमान-विषयकयोरपि स्मरणानुभवयोः कार्य्यकारणभावोपगमे घटज्ञानात्पटस्मरणं स्यादिति तद्वारणाय समानविषयकत्वमेवानुभवस्य स्मरणजनकत्वे तन्त्रमित्युपेयं तथा सति प्रकृते पदज्ञानादर्थस्मरणमनुपपन्नमेवेति भावः। तद्विषयकस्मरणं प्रति तद्विषयकानुभव इव द्वयोस्सम्बन्धिनोर्मध्ये एकज्ञानमपरस्मरणं प्रति जनकमिति तन्निर्वाहाय सम्बन्धिनोस्सम्बन्धस्य च पूर्वं ज्ञाने तज्जन्यसंस्कारे च सति तयोरेकज्ञानमुद्बोधकमासाद्यापरस्मरणमित्यस्यावश्याभ्युपेयतया पदज्ञानमप्यु-द्बोधकविधयैव पदार्थस्मारकमित्याशयेनोत्तरयति—**उच्यत इत्यादिना**। **संस्कारशेषया** संस्कारः शेषो जन्यतयोत्तरकालवृत्तिर्य्यस्यास्तया। **पूर्वानुभूत्या** जनकत्वेन पूर्वकालवृत्तिना अनुभवेन। **स्वार्थगोचरा** स्वमनुभवस्तद्विषय-विषयिणी। **उद्बोधकं शब्दं** ज्ञानद्वारा**पेक्षते** स्वोत्पत्त्यव्यवहितपूर्वक्षणवृत्ति-त्वेन स्वकारणतयावलम्बत इत्यर्थः।

कारिकां विवृणोति—**आसीत्पूर्वमित्यादिना**। **विषये गवादाविति**। **गवादावि**त्येतावन्मात्रोक्तौ गवादौ पदे इत्यपि भ्रमो भवेदतो **विषय** इत्युक्तम्। विषयस्सास्नादिमान्। **गौरित्येवमिति। आकारः** गोत्वप्रकारतानिरूपितगोनिष्ठ-विशेष्यतानिरूपकत्वं तद्यस्य स तथा। आकारपदशक्यार्थस्यावयवसंयोगविशेष-स्यामूर्त्तेनुभवादौ बाधादुक्तार्थे तस्य लाक्षणिकत्वात्। **व्यवहारादिनेत्यादिना** व्याकरणकोषादीनां परिग्रहः। † "शक्तिग्रहम्".. इत्यादौ शक्तिग्राहकपरि-गणनवाक्ये यद्यपि व्याकरणस्य पूर्वमुपादानमस्ति, तथापि व्यवहारस्यैव शक्तिग्राहकशिरोमणित्वेन पूर्वैरङ्गीकृतत्वाद् गोपदशक्तिग्रहस्य तेनैव सम्भूतत्वात्र

---

* गौरयमित्येवमाकारकोनुभवतः। इति मु० पु० पा०।

† शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

**दिना गोपदसम्बन्धग्रहश्च। तस्य चेदानीमविद्यमानस्यापि गवानुभवस्य व्यापारो भावनानाम स्मरणोपधाने प्रभवति। तत्सहकारितया तु पदज्ञानमुद्बोधकं स्मृत्या जनकत्वेनापेक्ष्यते।**

व्यवहारस्यैवोपादानं शब्दतः कृतम्। अत एव शक्तिग्राहकहेतुगणकथनावसरे कणादसूत्रोपस्कारे तत्रभवच्छङ्करमिश्रपादैरपि "स च समयः क्वचिद् व्यवहारात्"... इत्यादिना तस्यैव प्रथममुपादानं कृतमिति बोध्यम्। **गोपदसम्बन्धग्रहश्चेति**। गौर्गोपदनिरूपितसम्बन्धवतीत्याद्याकारकज्ञानञ्चेत्यर्थः। चकारः पूर्वोक्तमनुभवं समुच्चिनोति। तृतीयक्षणवृत्तिध्वंसप्रतियोगिनोनुभवस्य दिवसमासाद्यन्तरितस्मरणे साक्षात्कारणत्वासम्भवेपि स्वजन्यसंस्कारात्मकव्यापारद्वारैव कारणत्वमित्याह—**तस्येति**। **तस्य** अनुभवस्य। **व्यापारः** तदनुभवजन्यत्वे सति तदनुभवजन्यस्मरणजनकः। 'व्यापारेण व्यापारिणो नान्यथा सिद्धिः' इत्यनुभवस्यापि स्मरणजनकत्वं निष्प्रत्यूहम्। **भावनानामेति**। त्रिविधसंस्कारान्तर्गतेत्यादिः। अत्र नामपदमतिप्रसिद्धार्थकमव्ययम्। यथा— "हिमालयो नाम नगाधिराजः"... इत्यादौ। तथा चातिप्रसिद्धा भावनेत्यर्थः। अतिप्रसिद्धत्वञ्च तस्याश्चिरकालीनानुभवविपयाणामप्यर्थानामुद्बोधकविशेपसहकारेण सार्वजनीनस्मरणजनकत्वादेवेति बोध्यम्। नामपदस्याख्यार्थकत्वे प्रकृत्यादित्वात्ततस्तृतीयापत्तेः। **स्मरणोपधाने** स्मरणजनने। **प्रभवति** समर्था भवति। स्मृतित्वावच्छिन्नकार्य्यतानिरूपितकार्य्याव्यवहितप्राक्क्षणघटितफलोपधायकत्वस्वरूपकारणताश्रयो भवतीति यावत्। **प्रभवते**रत्रोक्तकारणताश्रयत्वरूपं सामर्थ्यमेवार्थो न तु कार्य्यताघटितोपि, तस्या **उपधान**पदेनैव लाभादनन्यलभ्यस्यैव शब्दार्थत्वात्। तेनोपधानपदान्निरूपितत्वार्थिका सप्तम्येव, कार्य्यानाघटितसामर्थ्यबोधकप्रभवत्यादियोग एव "नमः स्वस्ति"... इत्यादिना चतुर्थीविधानात्। अथवा "स एषां ग्रामणीः"... इत्यादिनिर्देशात्प्रभ्वादियोगे षष्ठ्या अपि विधानवत्सप्तम्या अपि साधुत्वम्। भावनामात्रान्न स्मरणं जन्यते, तथा सति तद्विपयकानुभवजन्यभावनावतस्सर्वदैव तद्विपयकस्मरणापत्तेरतो भावनया स्मरणे जननीये भगवता गौतममहर्षिणा पूर्वोक्तप्रणिधानादीनां भगवता प्रशस्तपाददेवेन च "लिङ्गदर्शनेच्छार्थस्मरणाद्यपेक्षात्"... इत्यादिनोक्तानामपेक्षणस्यावश्यकत्वमुक्तमतः प्रकृतेपि प्रणिधानाद्यन्तर्गतस्य सम्बन्धस्य पदेपि सत्त्वात्तज्ज्ञानसहकारेणैव तस्यास्तदर्थस्मारकत्वमित्याह—**तत्सहकारितयेति**। सह-

**यद्धर्म्मावच्छिन्नसम्बन्धो यद्धर्म्मविशिष्टे पूर्वं गृहीतस्तद्धर्म्मावच्छिन्नगोचरसंस्कारे तद्धर्म्मावच्छिन्नदर्शनस्य नियतोद्बोधकत्वात् ।**

**दृष्टा हि गजे हस्तिपकसम्बन्धग्रहाहितसंस्कारसहकृतेन हस्तिपकदर्शनेन गजस्मृतिः । यद्यपि स्मरणसामान्ये संस्कारोद्बोधकानि नानुगतानि, तथापि गोपदज्ञानविशिष्टगोस्मरणत्वावच्छिन्नं प्रति गोपदज्ञानत्वेन सम्भवत्येव* यावत्सम्भविन्यायादनुगता कारणता ।**

कारित्वञ्च तद्धर्म्मावच्छिन्ने तद्धर्म्मावच्छिन्नस्य स्वावच्छिन्नासमवधानप्रयुक्तफलोपधायकत्वाभाववत्तद्धर्म्मावच्छिन्नत्वम् ।

एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वं निर्वक्ति—**यद्धर्म्मावच्छिन्नेत्यादिना** । प्रथमं **यद्धर्म्मपदं** गोपदत्वाद्येकधर्म्मपरम् । द्वितीयं गोत्वादिपरम् । व्यक्तीनामानन्त्यात्तद्घटितत्वेननुगमोसर्वज्ञ दुर्ज्ञेयत्वञ्चेत्युभयत्रैव **धर्म्म**पर्य्यन्तानुधावनम् । तथा च गोपदत्वादितद्धर्म्मावच्छिन्ननिरूपितसम्बन्धप्रकारतानिरूपितगोत्वादितत्तद्धर्म्मावछिन्नविशेष्यताशाल्यनुभवजन्यसंस्कारे गोपदत्वादितत्तद्धर्म्मावच्छिन्नविषयताकस्य ज्ञानस्य नियमत एवोद्बोधकत्वमित्यर्थः ।

अस्य नियतोद्बोधकत्वं दृष्टान्तप्रदर्शनेन द्रढयति—**दृष्टा हीत्यादिना** । **हि** हेतौ निश्चये वा । यतो निश्चयेन वा गजस्मृतिर्दृष्टेत्यर्थः । **दृष्टा** अनुव्यवसायविषयीकृता । **आहितः** जनितः । यथा हस्तिहस्तिपकयोः पाल्यपालकभावसम्बन्धानुभवजन्यसंस्कारस्य हस्तिनो हस्तिपकस्य वा दर्शनं नियमत एवोद्बोधकं तस्मिन् सति गजस्मृतिर्नियता, तथा गोगोपदयोर्वाच्यवाचकभावसम्बन्धानुभवजन्यसंस्कारस्य गोपदज्ञानेन नियमत एवोद्बोध इति तस्मिन्नपि सति गोरूपार्थस्य नियमत एव स्मृतिरित्याशयः । **संस्कारोद्बोधकानि** प्रणिधानादीनीति । तेषामनुगमोसम्भवीत्यर्थः । तथा च सामान्यतः स्मरणत्वावच्छिन्नं प्रति प्रणिधानादीननुगमय्यैकरूपेण तज्ज्ञानस्योद्बोधकत्वन्न सम्भवतीत्यर्थः ।

**गोपदज्ञानविशिष्टेति** । वैशिष्ट्यं स्मरणत्वावच्छिन्ने समवायघटितसामानाधिकरण्यस्वाव्यवहितोत्तरत्वसम्बन्धाभ्यां बोध्यम् । अथवा स्मरणत्वे एव तादृशसामानाधिकरण्यघटितसामानाधिकरण्याव्यहितोत्तरवृत्तित्वाभ्यां तद्बोध्यम् ।

---

* भवत्येव । इति मु० पु० पा० ।

न च संसर्गकुक्षौ स्वत्वस्य परिचायकमात्रस्याप्रवेशेन ध्वंसाधिकरणसमयध्वंसानधिकरणत्वघटितमेवाव्यवहितोत्तरत्वं संसर्गतया वाच्यम्, तस्य च सर्वेषामेव यत्किञ्चिद्ध्वंसाधिकरणसमयध्वंसाधिकरणतया तदनधिकरणत्वाप्रसिद्धयाप्रसिद्धिरिति वाच्यम्, कालिकसम्बन्धेन गोपदादिज्ञानविशिष्टक्षणध्वंसविशिष्टक्षणध्वंसनिष्ठनिरूपकतानिरूपिताधिकरणत्वं नास्तीत्याकारकाभाववत्त्वस्वाधिकरणक्षणध्वंसाधिकरणत्वोभयस्यैव द्वितीयसम्बन्धार्थत्वात्। तादृशाभावस्य संसर्गता च कालिकसम्बन्धावच्छिन्नावच्छेदकताभिन्नक्षणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता या कालिकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितक्षणत्वनिष्ठावच्छेदकतानिरूपिता प्रतियोगित्वसम्बन्धावच्छिन्नक्षणनिष्ठावच्छेदकता तादृशावच्छेदकताभिन्नध्वंसत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता प्रतियोगित्वसम्बन्धावच्छिन्नक्षणनिष्ठावच्छेदकतानिरूपिता ध्वंसत्वनिष्ठावच्छेदकतानिरूपिता कालिकसम्बन्धावच्छिन्नध्वंसनिष्ठावच्छेदकता तादृशावच्छेदकताभिन्नक्षणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता कालिकसम्बन्धावच्छिन्नध्वंसनिष्ठावच्छेदकतानिरूपिता क्षणत्वनिष्ठावच्छेदकतानिरूपिता प्रतियोगित्वसम्बन्धावच्छिन्नक्षणनिष्ठावच्छेदकता तादृशावच्छेदकताभिन्नध्वंसत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता प्रतियोगित्वसम्बन्धावच्छिन्नक्षणनिष्ठावच्छेदकतानिरूपितध्वंसत्वनिष्ठावच्छेदकतानिरूपिता निष्ठत्वसम्बन्धावच्छिन्नध्वंसनिष्ठावच्छेदकता तादृशावच्छेदकताभिन्ननिरूपकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता निष्ठत्वसम्बन्धावच्छिन्नध्वंसनिष्ठावच्छेदकतानिरूपितनिरूपकतात्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नकालिकसम्बन्धावच्छिन्ननिरूपकतानिष्ठावच्छेदकता तादृशावच्छेदकताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता निरूपितत्वसम्बन्धावच्छिन्नकालिकसम्बन्धावच्छिन्ननिरूपकतानिष्ठावच्छेदकतानिरूपिताधिकरणतात्वनिष्ठावच्छेदकतानिरूपिता प्रतियोगिता तन्निरूपकाभावत्वेन। वैशिष्ट्यं सर्वत्र कालिकेनैव। अतस्तदनुसारेणावच्छेदत्वप्रदर्शमतो नोक्ताप्रसिद्धिः। अथवोक्तोभयसम्बन्धयोः स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वमेव प्रथमसम्बन्धः।. अवच्छेदकताघटकसम्बन्धस्य वृत्त्यनियामकतया प्रतियोगिताया अनवच्छेदकत्वेपि तदवच्छेदकतावच्छेदकत्वं "चैत्रो न पचति"... इत्यादौ कृतावनुकूलतया पाकादेस्तस्याश्च प्रतियोगितया नञर्थाभावेन्वये तस्यानुकूलत्वस्य प्रतियोगितावच्छेदकताच्छेदकत्व एवोपपद्येतेति वृत्त्यनियामकसम्बन्धस्य तथात्वमावश्यकम्।

**अगृहीतपदपदार्थसङ्गतिकानां पदज्ञानादर्थस्मरणानुदयात् गौर्गो-पदसङ्गतेत्यनुभवजनितसंस्कारोपि पदज्ञानसहकारित्वेनापेक्ष्यते । तस्य च शुद्धगोत्वप्रकारकस्मरणोपधायकत्वन्न क्लृप्तकारणतानिर्वाह्यमिति गोपदसङ्गतिसंस्काराव्यवहितोत्तरोत्पन्नशुद्धगोस्मरणं प्रति संस्कारत्वेन***

ननु तर्हि गोपदादिज्ञानमेव गोत्वादिप्रकारकानुभवजनकमस्तु, कृतं **गौर्गोपदसङ्गते**त्यनुभवजन्यसंस्कारस्य तत्सहकारित्वकल्पनयेत्यत आह— **अगृहीतेति** । तथा च तादृशगोसंस्कारशून्यायां गोपदज्ञानसत्त्वेपि स्मरणानुदयात्तस्य सहकारित्वमावश्यकमिति भावः ।

ननु तत्प्रकारकस्मरणं प्रति तत्प्रकारकसंस्कारस्य सामान्यतः क्लृप्तैव कारणतेति प्रकृते **गौर्गोपदसङ्गते**त्याकारकस्य संस्कारस्य गवांशे गोत्वप्रकारकत्वाद्गोत्वप्रकारकस्मरणोपधायकत्वं स्यादिति कृतं निरुक्तकार्य्यकारणभावान्तरकल्पनयेत्यत आह—**तस्य चेति** । गौर्गोपदसङ्गतेत्यनुभवजन्यसंस्कारस्येत्यर्थः । **शुद्धगोत्वेति** । **शुद्धत्वं** धर्म्यंशे गोत्वान्याप्रकारकत्वं तच्च स्मरणविशेषणम् । अथवा स्वभिन्नविशेषणासामानाधिकरण्यं तद् गोत्वस्य विशेषणम् । गौर्गोपदसङ्गतेत्यनुभवजन्यसंस्कारस्य गोत्वे गोपदसामानाधिकरण्यात् तस्य न शुद्धगोत्वप्रकारकस्मरणोपधायकत्वम्, किन्तु गौरित्याकारकस्य शाब्दबोधातिरिक्तानुभवजन्यसंस्कारस्य तादृशानुभवे एकत्वादीनां गवांशेभानात् । एकत्वाद्यंशे उपेक्षात्मकात्तादृशशाब्दबोधाज्जायमानस्य वा तादृशसंस्कारस्य तथात्वम्, तादृशादनुभवाच्छुद्धगोत्वप्रकारकस्यैव संस्कारस्योत्पत्तेः । तद्विषयकसंस्कारे तदंशे उपेक्षानात्मकस्यैव तद्विषयकानुभवस्य जनकत्वात् । अत एव † "पुरोपेक्षाज्ञाने स्मरणमपि नोद्बोधकशतैः ।" इत्यभियुक्तोक्तिरपि सङ्गच्छते । तथा च धर्म्यंशे तद्धर्म्मान्याप्रकारकतत्प्रकारकस्मरणं प्रति तादृशस्यैव संस्कारस्य कारणत्वम्, गौर्गोपदसङ्गतेत्यनुभवजन्यसंस्कारस्य गवांशे गोत्वभिन्नगोपदसङ्गतिप्रकारकतया शुद्धगोत्वप्रकारकस्मृतेस्ततोनिर्वाहाद् गोपदत्वावच्छिन्ननिरूपितसङ्गतिप्रकारता-

---

* तादृशसंस्कारत्वेन । इति मु० पु० पा० ।

† नदीयं कालिन्दी बहुविततशाखस्तरुरयम् ।
समीपे घोषोयं व्रजपथिकवृन्दावनमिदम् ॥
इति श्राव्यो नाथो मधुपुरगतो मैवमथवा ।
पुरोपेक्षाज्ञाने स्मरणमपि नोद्बोधकशतैः ॥ इति पूर्णश्लोकः ।

पृथगेव कार्य्यकारणभावः कल्प्यते, तेनोद्बोधकान्तरजनितस्मरणे† न व्यभिचारः ।

शाब्दिकास्तु गोपदज्ञानस्य गोस्मरणत्वमेव* जन्यतावच्छेदकम्, तदवच्छिन्ने च गौर्गोपदसङ्गतेति संस्कारस्य क्लृप्त एव कार्य्यकारणभावः । अत एव पदपदार्थोभयविषयकमेव प्रतिसन्धानं वाक्यार्थबोधश्चेति प्राहुः । ३ ।

निरूपितगोत्वावच्छिन्नविशेष्यताशाल्यनुभवजन्यसंस्कारत्वेन शुद्धगोत्वप्रकारकस्मृतिं प्रति पृथगेव कारणत्वमावश्यकमिति भावः । गोपदज्ञाननिरूपितकार्य्यतावच्छेदककुक्षौ गोपदज्ञानवैशिष्ट्यनिवेशस्य प्रयोजनमाह—**तेनोद्बोधकान्तरेति** । **तेन** गोपदज्ञानविशिष्टायामेव गोस्मृतौ गोपदज्ञानस्य कारणत्वकल्पनेन । **उद्बोधकान्तरम्** अनड्वहमाह्वयेत्यादिपदं प्रणिधानादिकं वा । **न व्यभिचार** इति । माह्वयेत्यादिपदज्ञानजन्यगोस्मृतौ गोपदज्ञानवैशिष्ट्यविरहादिति भावः ।

स्मरणान्वयबोधयोः पदपदार्थसङ्गतित्रितयविषयकत्वमभ्युपगच्छतां निरुक्तकार्य्यकारणभावमन्तरेण सामान्यकार्य्यकारणभावे स्मरणमुपपादयता कार्य्यतावच्छेदककोटौ कारणानन्तर्य्यमप्रवेशयतां शाब्दिकानां मतं दर्शयति—**शाब्दिकास्त्वित्यादिना** । **गोस्मरणत्वमेवेति** । एवकारेण गोत्वान्याप्रकारकत्वस्य कार्य्यतावच्छेदकत्वव्युदासः । **तदवच्छिन्ने चेति** । गोपदसङ्गतगोस्मरणत्वावच्छिन्नेपीत्यर्थः । चकारस्याप्यर्थकत्वात् । **क्लृप्त एवेति** । तद्विषयकस्मरणे तद्विषयकसंस्कारस्य सामान्यत एव कारणतायाः क्लृप्तत‌या तयैव प्रकृते निर्वाहादतिरिक्ता कारणता न कल्पनीयेति भावः । **अत एव** गोपदसङ्गतगोस्मरणत्वावच्छिन्नस्य तादृशसंस्कारजन्यत्वादेव । **प्रतिसन्धानं** स्मरणम् । **प्राहुरिति** । अत्रास्वरसः—वक्ष्यमाणे स्मरणे समानाकारकत्वमन्वयबोधस्येति शाब्दिकमते दर्शयिष्यते । ३ ।

ननु पदपदार्थयोः सम्बन्धसत्त्व एव तज्ज्ञानस्योद्बोधकविधयार्थस्मारकत्वं सम्भवति, ततश्च शाब्दबोधजनकत्वमपि पदस्योपपन्नं भवेत्तदेव नेत्याशङ्कते—

† उद्बोधकान्तरजनितगोस्मरणे । इति मु० पु० पा० ।

* गोपदसगतगोस्मरणत्वमेव । इति मु० पु० पा० ।

**स्यादेतत्, यदि पदस्यार्थेन सह सङ्गतिस्स्यात् । न त्वेवम्, नहि पदमर्थेन सह संयोगसमवायतद्घटितव्याप्त्यादिभिस्सङ्गतम्, अन्नाग्निवासीशब्दैश्मुखस्य पूरणप्रदाहपाटनापत्तेः ।**

**न चाभिधानामार्थेन सह पदस्य सङ्गतिः सप्तभ्यः पदार्थेभ्यो-**

**स्यादेतदित्यादिना ।** एतत् अनुपदोक्तं पदज्ञानस्यार्थस्मारकत्वम् । **स्यादि**त्युभयत्र हेतुहेतुमतोर्लिङ्, सङ्गतिसत्त्वस्य स्मारकत्वसत्त्वप्रयोजकत्वात् । **सङ्गति**स्सम्बन्धमात्रम्, न त्वनन्तराभिधानेत्यादिलक्षणलक्षिता, तस्यात्रानुपयोगादप्राप्तेश्च । **न त्वेवमिति** । पदस्यार्थेन सह सम्बन्धो नास्तीत्यर्थः । तथा च पदमर्थनिरूपितसम्बन्धसामान्याभाववत् संयोगादिविशेषाभावकूटवत्त्वादिति फलितम्, विशेषाभावकूटस्य सामान्याभावसाधकतायाः प्रसिद्धत्वात् । पदे विशेषाभावकूटं साधयति—**अन्नाग्नीत्यादिना ।** तथाश्च पदपदार्थयोरसंयोगादिसम्बन्ध-( स्वीकारे )-अन्नपदोच्चारणे तत्संयुक्त-( तत्समवेततद् )-व्यापकस्य भक्तरूपार्थस्यापि मुखे सम्बन्धप्रसङ्गान्मुखपूरणमापद्येत । एवमग्न्यादिपदोच्चारणेपि तत्तदर्थस्य मुखेन सह सम्बन्धप्रसङ्गात्प्रदाहपाटने अप्यापद्येतामिति भावः ‡ ।

**न चाभिधानामेति । नामपदं** सम्भावनार्थकम् । तथा चार्थनिरूपितपदनिष्ठसङ्गतिनिष्ठाभेदसम्बन्धावच्छिन्नप्रकारताकसम्भावनाविषयोभिधेत्यर्थः । सम्भावना चोत्कटकोटिकस्संशयः । यस्मिन्नेकस्मिन् कोटौ सन्देह्मीत्यनुव्यवसायविलक्षणं सम्भावयामीत्यनुव्यवसायसाक्षिकं विषयताविशेषात्मकं जातिविशेषो वौत्कट्यम् । अत्राभिधाया एवाग्रे सङ्गतित्वेन सिद्धान्तयिष्यमाणत्वात्तदंश एवौत्कट्यम् । नामपदस्याख्यार्थकतया तेन सममभिधापदस्य बहुव्रीहौ

---

श्च अन्नाग्निवाशीशब्दैः । इति मु० पु० पा० ।

श्च अत्र पङ्क्तौ कोष्ठान्तर्गतान्यक्षराणि कीटकवलितानि पूरितानि सन्ति ।

‡ शब्दस्य गुणत्वे सयोगस्य तत्रासम्भवेपि मीमासकैस्तत्र द्रव्यत्वाभ्युपगमात् तन्मतानुसारेण, एव पदपदार्थयोस्समवायसम्बन्धस्य सत्त्वे "अयुतसिद्धयोरेव समवायः" इति नियमादेकसत्त्वेपरसत्त्वस्य, व्याप्तिसम्बन्धस्य सत्त्वे व्याप्यसत्त्वे व्यापकसत्त्वस्य चावश्यकतया चोक्तापत्तिर्बोध्या । अन्नादिपदोच्चारणे मुखेन सह पदस्यावच्छेदकत्व भक्तादिरूपार्थस्य च संयोगो बोध्यः । विस्तरस्तु—गौतमसूत्रस्य ( २।१।५४ ) वात्स्यायनभाष्ये द्रष्टव्यः ।

**तिरिच्यत इति वाच्यम्, मानाभावात्। पारिभाषिकटिघुभादिशब्दाना-* मङ्गुल्याद्यभिनयानामप्यर्थेन सहातिरिक्तसङ्गतिसिद्धिप्रसङ्गात्।**

**यत्तु गोबुद्धिजनकतैव गोपदस्य गवि सङ्गतिः, सैव शक्तिः।**

वैकल्पिकडाप्प्रत्यये च **अभिधानामा सङ्गतिरिति** वार्थः। **अतिरिच्यत इति।** मीमांसकमते। **मानाभावादिति।** पदात्पदार्थबोधान्यथानुपपत्तेरेव मानत्वं त्वाह—**पारिभाषिकेति।** पाणिन्याद्याधुनिकसङ्केतेन। अचामन्त्याजादिदाधा-स्वरूपकप्रत्ययावधियकाराद्यजादिसर्वनामस्थानभिन्नप्रत्ययाव्यवहितपूर्ववर्त्तिवर्ण-बोधकानामनन्यार्थकानां टिघुभादिशब्दानां कामसूत्राद्युक्तचतुःषष्टिकलान्तर्ग-ताक्षरमुद्रिकाकथनाख्यकलाभेदनिराभासभूतमुद्राख्याङ्गुल्यादिसंयोगविशेषाणा-मङ्गुल्याद्यभिनयानाञ्चेत्यर्थः। **टिघुभादीत्या**दिना घिफीडादीनामनन्यार्थ-कानां परिग्रहो न तु नदीवृद्ध्यादिपदानाम्, तेषामर्थान्तरे सङ्गतिमत्त्वस्य सर्वा-नुमतत्वात्। निराभासभूतमुद्रा च—

"मुष्टिः किसलयश्चैव च्छटा च त्रिपताकिका।
पताकाङ्कुशमुद्राश्च मुद्रावर्गेषु सप्तसु॥
अङ्गुल्यश्चाक्षराण्येषां स्वराश्चाङ्गुलिपर्वसु।
संयोगादक्षरं युक्तं भूतमुद्रा प्रकीर्त्तिता॥"

इति लक्षणलक्षिता।

अत्र 'ज्ञाने पदानां शक्तिर्न्न त्वर्थे' इति वादिनां मीमांसकविशेषाणा-म्मतं निराकर्त्तुमुत्थापयति—**यत्त्वित्यादिना। गोबुद्धिजनकतैवेति।** गोपदं तत्तदर्थोपलक्षणम्। एवं **गोपदमि**त्यत्रापि गवादिपदेत्यर्थः। **गवीत्यस्य** गवादावित्यर्थस्तेन घटादावपि घटादिपदानामुक्तसङ्गतेरेव लाभान्न न्यूनता। **गोबुद्धीत्यत्र बुद्धिपदं** शाब्दबोधपरम्। तेन चक्षुस्संयोगादेर्गवादिविषयक-प्रत्यक्षादिजनकत्वेऽपि न गवादिवाचकत्वापत्तिः। **गोपदस्ये**त्यत्र षष्ठ्यर्थो निष्ठत्वं **गवीति** सप्तम्यर्थो निरूपितत्वं गवादितत्तदर्थविषयकबुद्धिजनकता गवादिनिरूपिता गवादिपदनिष्ठा सङ्गतिरित्यर्थः। तथा च तादृशसम्बन्ध एव पदस्य पदार्थ-स्मारकत्वप्रयोजक इति भावः। शक्तिरपि सैव न ततोऽतिरिच्यत इत्याह—**सैवेति।** अयम्भावः—एतन्मते कालिकेन गवादिविषयकशाब्दबोधं प्रति गवादि-

* पारिभाषिकघुनादिशब्दानाम्। इति मु० पु० पा०।

विषयकशाब्दबोधानुकूलशक्तिविशिष्टज्ञायमानगवादिपदत्वेन कारणत्वम् । पदे शक्तिवैशिष्ट्यं स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन । कारणतावच्छेदकोपि कालिक एव सम्बन्धस्तदनुसारेण तद्विपयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रकारतावद्धर्म्मवत्त्वं तद्वाचकत्वम् । अवच्छेदकत्वं संसर्गसाधारणम् । तेन प्रकारतायाः संसर्गतावच्छेदकत्वेपि न क्षतिः । स च धर्म्मः शक्तिस्वरूप एव । न च तादृशजन्यतातिप्रसक्तस्य तद्विपयकत्वस्य कथं तदवच्छेदकत्वमिति वाच्यम्, तावन्मात्रस्यातिप्रसक्तत्वेपि तद्विपयकत्वशाब्दत्वोभयत्वेनानतिप्रसक्ततयावच्छेदकत्वात् । एतन्मते घटोस्तीत्यादिवाक्यादस्तितावान् घटः अस्तित्वेन घटमहञ्जानामीत्याकारकसमूहालम्बनात्मकस्यैव शाब्दबोधस्योत्पत्तेस्सर्वत्रैव ज्ञाने ज्ञानतद्वतोर्भानेपि ज्ञानसामान्यसामग्र्या एव तयोर्भासकत्वम्, न तु तद्विशेपसामग्र्याः, तथा सति पटादिपदजन्यशाब्दबोधेपि तयोर्भानाद्व्यभिचारप्रसङ्गादिति घटादिपदकारणतानिरूपितकार्य्यतावच्छेदककुक्षौ घटादिविषयकत्वशाब्दत्वोभयस्यैव प्रवेशो न तु ज्ञानतद्विपयकत्वस्यापीति न घटादिपदानां ज्ञानतद्वतोर्वाचकत्वापत्तिः । न च 'कार्य्यान्वितस्वार्थे पदानां शक्तिः' इति मते कार्य्यताविपयतानिरूपितघटादिविपयताकशाब्दबोधं प्रत्येव घटादिपदानां कारणत्वात् कार्य्यताविषयकत्वस्य तत्कार्य्यतावच्छेदकत्वात् घटादिपदानां कार्य्यतावाचकत्वापत्तिरिति वाच्यम्, तद्विपयकत्वनिष्ठावच्छेदकतायां निरूपितत्वनिष्ठावच्छेदकत्वानिरूपकत्वस्य विशेपणीयत्वात् । कार्य्यताविषयत्वनिष्ठावच्छेदकतायाश्च घटादिविपयतानिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपकत्वेनातथात्वात् । न च विनिगमनाविरहेण विशेष्यविशेपणनिष्ठावच्छेदकत्वयोः परस्परनिरूप्यनिरूपकभावसत्त्वाद् घटादिविपयतानिष्ठावच्छेदकताया अपि कार्य्यताविषयतानिष्ठावच्छेदकतानिरूपकनिरूपितत्वनिष्ठावच्छेदकतानिरूपितत्वाद् घटादिपदानां घटादिवाचकत्वस्याप्येवं सत्यनुपपत्तिरिति वाच्यम्, तयोः परस्परनिरूप्यनिरूपकभावाभ्युपगमेवच्छेदकतायाः निरवच्छिन्नत्वं कुत्रापि न स्यात् । अवच्छेदकत्वानिरूपितत्वस्वरूपस्य तस्य दण्डिमद्भूतलमित्याकारकज्ञानीयदण्डत्वादिनिष्ठाया अवच्छेदकताया अपि विशेष्यदण्डादिनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्त्वात्तदभावप्रसङ्गात् । तदनिर्वचने च घटवदिति बुद्धिं प्रति जातित्वेन घटत्वाद्यवगाहिजातिमदभाववदिति निश्चयस्यापि तत्त्वेन प्रतिबन्धकत्वापातादिति विशेपणनिष्ठावच्छेदकतानिरूपितत्वमेव. विशेष्यनिष्ठावच्छेदकतायां न तन्निरूपकत्वमपीत्यस्यावश्यमभ्युपेतव्यत्वादुक्तानुपपत्तिविरहात् । न च तथापि विनिगमनाविरहेण कार्य्यत्वविषयतानिरूपित-

घटविषयताशालिशाब्दबोधं प्रति घटविपयतानिरूपितकार्य्यत्वविषयताशालिशाब्दबोधं प्रति च घटपदस्य कारणत्वाद्द्वितीयजन्यतायां कार्य्यत्वविपयतानिष्ठावच्छेदकताया अपि निरूपितत्वनिष्ठावच्छेदकत्वानिरूपकत्वमेवेति घटादिपदानां कार्य्यतावाचकत्वापत्तिर्दुर्वारैवेति वाच्यम्, निरूपितत्वनिष्ठावच्छेदकतानिरूपितकार्य्यताविपयत्वनिष्ठावच्छेदकताभिन्नत्वस्यापि तद्विपयत्वनिष्ठावच्छेदकतायान्निवेशनीयत्वात्। लिङादिपदानां कार्य्यतावाचकत्वोपपत्तये निरूपितत्वान्तं कार्य्यताविपयत्वनिष्ठावच्छेदकतायां विशेपणम्। तेन विशिष्टभेदस्य विशेष्यमात्रेपि सत्त्वान्नानुपपत्तिः। घटकलसादिसकलपर्य्यायशब्देपु शक्तेरेकस्या एवैतन्मतेभ्युपगमात् तद्विपयकशाब्दानुकूलशक्तिविशिष्टपदत्वेनैकरूपेणैवाखिलपर्य्यायपदानां कारणत्वात् पर्य्यायशब्दान्तरजन्यबोधे व्यभिचाराभावात् कारणानन्तर्य्यस्य कार्य्यतानवच्छेदकत्वेन विपयस्य तत्र निवेशस्यावश्यकत्वेन तद्विषयतायाः कार्य्यतावच्छेदकत्वन्निराबाधम्। न चैवमपि तत्तदप्रामाण्यज्ञानानामुत्तेजकत्वस्यावश्यकतया तेषाञ्चानेकविधानामनुगमासम्भवात् परस्पराभावाव्यवहितोत्तरजायमानबोधे व्यभिचारवारणायैव कारणानन्तर्य्यस्य कार्य्यतावच्छेदककुक्षावावश्यकतेति वाच्यम्, मीमांसकैर्ज्ञानानां स्वतः प्रामाण्यवादिभिः भ्रमज्ञानानङ्गीकारेणाप्रामाण्यज्ञानासम्भवेन तदभावनिवेशस्यानावश्यकत्वात्। पदानाञ्च तन्मते नित्यतयातीतानागतपदानामभावेन ज्ञायमानत्वविशिष्टपदस्य कारणत्वेपि न किञ्चिदनुपपन्नमिति। न चोक्तशाब्दबोधजनकत्वस्यैव शक्तित्वे गङ्गादिपदानां तीरादेरपि बोधकत्वात्तत्रापि शक्त्यैव निर्वाहसम्भवेन लक्षणोच्छेदप्रसङ्ग इति वाच्यम्, इच्छाशक्तिवादिभिरपि गङ्गादिपदविशेष्यकतीरादिबोधजनकत्वप्रकारकेच्छायाः शक्तित्वानङ्गीकारवद्बोधकत्वशक्तिवादिनापि गङ्गादिपदनिष्ठतीरादिबोधकत्वस्य शक्तित्वानङ्गीकाराल्लक्षणाया आवश्यकत्वात्। कोषादिना 'यद्बोधकत्वस्य यत्सम्बद्धता ज्ञापिता तस्यैव तच्छक्तित्वम्' इति व्यवस्थासम्भवात्। यद्वा शक्तिलक्षणयोरभेद एव, तत्र तत्पदप्रसिद्धार्थविपयकबोधजनकत्वं तत्पदशक्तित्वेन, तत्पदशक्यसम्बन्धित्वेन गृहीताप्रसिद्धार्थविपयकबोधजनकत्वं तत्पदलक्षणात्वेन व्यवह्रियते। परैरपि सङ्केतनियामकत्वेन प्रसिद्ध्यादेरेव वाच्यत्वात्। प्रसिद्धिश्च तत्तत्पदानां तत्तदर्थे प्रचुरप्रयोग एवेति दिक्।

नन्वेवं गोज्ञाननिरूपितशक्तेः पदे सत्त्वेपि गोनिरूपितशक्तेस्तत्राभावात्तन्निरूपकत्वमादाय पदार्थे गवादौ गोपदशक्यत्वव्यवहारस्सार्वजनिकोनुपपन्न

**गोज्ञानस्य शक्यत्वमेव गोपदार्थेप्युपचर्य्यते । तद्बुद्धिजनकतया गृहीतं पदं तमर्थं स्मारयति धूम इव वह्निम् , तथाविधसङ्गतेरेव* संस्कारेण पदज्ञानसहकृतेन जनितं पदार्थस्मरणं अनुभवं प्रति हेतुः ।**

**यदाहुरभियुक्ताः—**

**"इन्द्रियाणां स्वविषयेष्वनादिर्य्योग्यता यथा ।**
**अनादिरर्थैश्शब्दानां सम्बन्धो योग्यता तथा ।" इति ।**

**सा च बुद्धिजननयोग्यता† भाषायामसत्यपि आधुनिकैरारोपिता**

इत्यत आह—**गोज्ञानस्येति** । तन्मते मुख्यं तत्पदशक्यत्वं तज्जन्यत्वमेव, तच्च गवादिविषयकशाब्दबोध एव न तु गवादौ, तत्र गोपदजन्यत्वस्याभावात् । उक्तव्यवहारश्च जन्यबोधविषयत्वावच्छिन्ने शक्यपदस्य लक्षणामभ्युपगम्योपपादयितव्य इत्यर्थः । तद्विषयकयत्किञ्चिज्ज्ञानजनकत्वेन गृहीतस्य तद्विषयकज्ञानान्तरजनकत्वमुभयवादिसिद्धमेवेत्याह—**तद्बुद्धीति** । **धूम इवेति** । वह्निविषयकानुमित्यात्मकज्ञानजनकत्वेन गृहीतो धूमो यथा वह्निविषयकस्मरणजनकस्तथा प्रकृतेपि गवादिविषयकशाब्दबोधजनकत्वेन गृहीतं गवादिपदं गवादिविषयकस्मरणजनकमित्यर्थः । **तथाविधसङ्गतेरेव** बोधजनकत्वस्वरूपसम्बन्धस्यैव । **संस्कारेण** तदनुभवजन्येन । **अनुभवः** शाब्दबोधः । उक्तार्थे स्वोत्प्रेक्षितत्वशङ्कानिरासाय प्राचां संवादमाह—**यदाहुरित्यादिना** । इन्द्रियाणां चक्षुरादीनाम् । स्वविषयेषु स्वजन्यप्रत्यक्षविषयेषु रूपादिषु । अनादिः स्वाश्रयाधिकरणकालवृत्त्यभावाप्रतियोगिनी पुरुषप्रयत्नानपेक्षा वा योग्यता घटादिविषयकप्रत्यक्षकारणतावच्छेदकधर्म्मवत्त्वम् । तथा शब्दानां गवादिपदानाम् । अर्थैः गवादिभिस्सह । अनादिर्य्योग्यता तत्तदर्थविषयकशाब्दबोधजनकतैव सम्बन्ध इत्यर्थः । एतच्च तादृशयोग्यतायाः स्मृतिहेतुत्वलाभायेति बोध्यम् ।

ननु तद्बुद्धिजनकत्वस्यैव तच्छक्तित्वेपभ्रंशशब्देभ्यः शाब्दबोधोपगमे तेषामपि वाचकत्वं स्यात् । ततश्च शाब्दबोधानुपगमेव्युत्पन्नानामविशेषदर्शिनां पामराणां गाव्यादिशब्दश्रवणानन्तरं गां शाब्दयामीत्यनुव्यवसायस्य सर्वजनसिद्धस्यापलाप इत्यत आह—**सा चेत्यादि** । तथा चेच्छात्मकसङ्केतस्य

---

* तथाविधं सङ्गतेरेव । इति मु० पु० पा० ।

† तद्बुद्धिजननयोग्यता । इति मु० पु० पा० ।

**गाव्यादिशब्देभ्यो बोधं जनयति ।**

**व्युत्पन्नास्तु गाव्यादिशब्दैर्गवादिशब्दमनुमाय स्मृत्वा वा तत**

शक्तित्ववादिनापि यथापभ्रंशादिषु शक्तिर्न स्वीक्रियते, पामरादीनामपभ्रंशादिभ्यः शाब्दबोधश्च केनचिद्गोशब्दे प्रयोक्तव्ये प्रमादादिपुरुषसाधारणदोषवशाद्गावीशब्दे प्रयुक्ते व्युत्पन्नस्तेन शब्देन गोशब्दमनुमाय स्मृत्वा वा गां प्रतीत्य व्यवहृतवान्, समीस्थो व्युत्पित्सुः पापरश्च गावीशब्दादेव अयं गां प्रतीतवानित्यवगत्य गावीपदं गोशक्तमित्याकारकाद् गवादिपदनिष्ठगोनिरूपितशक्तेर्गाव्याद्यपभ्रंशेषु भ्रमादेव गां शाब्दयति, तथा बोधकत्वशक्तिवादिनापि तेषु तस्यानङ्गीकारादेव न तेषां वाचकत्वमित्यस्य वक्तुं शक्यत्वात् किमनुपपन्नम्। गोपदशक्यो गौरित्यादिज्ञानस्य शक्तिप्रकारताकत्वेन शाब्दबोधोपयोगित्वन्न सम्भवति, शक्तिसंशये शाब्दबोधवारणाय शक्तिनिश्चयत्वस्यैव कारणतावच्छेदकत्वस्य विवक्षणीयतया गोनिरूपितशक्तित्वावच्छिन्नाभाववबहुवर्णघटितगावीपदत्वावच्छिन्नाभावाप्रकारताकत्वगोनिरूपितशक्तित्वघटिततयातिगौरवात्, किन्तु शक्तिसम्बन्धेन गोपदत्वावच्छिन्नप्रकारताकनिश्चयत्वेनैव तद्वाच्यम्, तथा सति संसर्गांशे विशेष्यतावच्छेदकांशे च संशयत्वानभ्युपगमेन शक्त्यभावगावीपदाभावयोः कारणतावच्छेदकेऽप्रवेशाल्लाघवादिति विभावनीयम्।

ननु गावीपदन्न गोशक्तं गौर्वा न गावीपदशक्येति विशेषदर्शनवतो व्युत्पन्नस्योक्तभ्रमासम्भवेन तेषां गाव्यादिपदात्कथं गवादिशाब्दबोध इत्यत आह— **व्युत्पन्नास्त्विति ।** आकाङ्क्षाज्ञानविशेषकार्य्यकारणभावज्ञानवन्त इत्यर्थः। एतेन स्वाद्यन्तगोपदे एव गवादिविषयकशाब्दबोधानुकूलाकाङ्क्षायाः तैर्ज्ञाततया गाव्यादिपदेषु तदभावनिश्चयादुक्त मस्य तेषामसम्भव इति सूचितम्। **गाव्यादिशब्दैरिति ।** तृतीयार्थः प्रयोजकत्वमात्रम्। तेन वक्ष्यमाणानुमितौ गाव्यादिशब्दानां पक्षतया हेतुत्वाभावेपि न क्षतिः, पक्षस्यापि विशेष्यज्ञानद्वारानुमितिप्रयोजकत्वात् । अत एव "कार्य्यायोजनधृत्यादेः .." इत्यादावायोजनादेः साध्यपक्षान्तर्गतत्वेपि पञ्चमीप्रयोगः। **गवादिशब्दमनुमायेति ।** एतद्गावीशब्दः स्वार्थगोत्वप्रकारकशाब्दबोधेच्छाप्रयोज्योच्चारणकर्म्मत्वसम्बन्धेन गोशब्दवान् गोत्वनिरूपितशक्त्यभाववत्त्वे सति तादृशशाब्दबोधेच्छयोच्चरितत्वात् यो यत्पदार्थनिरूपितशक्त्यभाववत्त्वे सति यादृशशाब्दबोधेच्छयोच्चरितः स तत्पदार्थनिष्ठप्रकारताशालिशाब्दबोधप्रयोज्येच्छाप्रयोज्योच्चारणकर्म्मत्वसम्बन्धेन तत्पदवानिति सामान्यमुखीं व्याप्तिमवगत्य गावीशब्दपक्षकगोपदसाध्यकानुमिति

एव गवादिकं प्रतियन्ति ।

यदाह हरिः—

"ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः ॥
न शिष्टैरनुमन्यन्ते पर्य्याया इव साधवः ।
न यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः ॥
अम्माम्मेति यदा बालः शिक्ष्यमाणः प्रभाषते ।
अव्यक्तं तद्विदां तत्र व्यक्ते भवति निर्णयः ॥
एवं साधौ प्रयोक्तव्ये योपभ्रंशः प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोभिधीयते ।" इति ।

कृत्वेत्यर्थः । तथा च तेषां तादृशशाब्दबोधो न गाव्यादिपदात्, किन्तु तत्पक्षकानुमितिविषयगोपदादेवेति भावः । अनुमितिकारणीभूतव्याप्तिज्ञानादेः शाब्दबोधात्पूर्वं सर्वत्र सत्त्वे मानाभावादाह—स्मृत्वा वेति । गावीशब्दप्रतियोगिकनिरुक्तसाध्यतावच्छेदकसम्बन्धस्य गोपदे सत्त्वादेकसम्बन्धिज्ञानविधयैव गोपदं स्मृत्वेत्यर्थः । तत एव गवादिपदादेव । प्रतियन्ति शाब्दबोधं कुर्वन्ति ।

अत्रापि स्वमात्रोत्प्रेक्षितत्वनिरासाय हरिसंवादमाह—यदाहेत्यादिना । ते अपभ्रंशशब्दाः । साधुषु तदर्थबोधजनकशब्देषु । अनुमानेन अनु पश्चात् परामर्शात् अनुभवाद्वा मानं ज्ञानमिति व्युत्पत्त्यानुमित्या स्मृत्या वेत्यर्थास्तेन व्याप्तिज्ञानाद्यसत्त्वेप्यपभ्रंशाच्छाब्दबोधस्य नानुपपत्तिर्न्नवा स्मृत्वा वेत्युक्तस्य स्वोत्प्रेक्षितत्वम् । अनुमानेनेत्यस्य च ज्ञातेष्विति शेषः । तत्र तृतीया प्रकृत्यादिविहितत्वादभेदार्थिका, तदर्थाभेदस्य च शेषीभूतज्ञातेष्वित्यत्र धात्वर्थज्ञानेन्वयः । सप्तमी च "यस्य च भावेन..." इत्यादिसूत्रेण विहितेत्यनुमित्याद्यात्मकज्ञानविषयेषु साधुशब्देषु सत्स्वित्यर्थलाभः । प्रत्ययः शाब्दबोधात्मकः । तस्योत्पादे हेतवः प्रयोजकाः, तेन पदज्ञानस्यापि करणत्वे न हेतुत्वक्षतिः प्रयोजकत्वस्य जनकजनकतावच्छेदकसाधारणत्वात् । संस्कारस्य स्मरणकारणस्याप्यसार्वत्रिकत्वात्स्मरणस्यापि सर्वत्रासम्भवात्पक्षान्तरमाह—तादात्म्यमुपगम्यैवेति । एवकारो वाकारार्थे । तादात्म्यं तदर्थबोधजनकसाधुशब्दवृत्त्यसाधारणधर्म्ममानुपुर्वी-

**भवतु वापभ्रंशेष्वपि ज्ञापकत्वलक्षणं वाचकत्वम्। व्याकरणेन तु**

विशेषम्। उपगम्य प्राप्य। तत्प्राप्तेस्स्वरूपसम्बन्धरूपाया अपभ्रंशेष्वभावेपि स्वप्रकारकज्ञानविषयतारूपायास्तस्यास्तेषु सम्भवान्नानुपपत्तिः। प्रकाशकाः शाब्दबोधप्रयोजकाः। तथा च गवादिपदतादात्म्यज्ञानविषयतायाः गाव्याद्यपभ्रंशेष्वपि सम्भवात्तेभ्यो गवाद्यर्थविषयको बोध इति भावः। क्वचित्तादात्म्यमुपगम्येवेतीवशब्दघटितः पाठस्तत्रेवशब्दस्य तत्तादात्म्योपगमे भ्रमत्वसूचकत्वं बोध्यम्। अपभ्रंशानामवाचकत्वे हेतुमाह—**न शिष्टैरिति**। शिष्टैः वेदप्रामाण्याभ्युपगन्तृभिः आप्तैर्म्मन्वादिभिः। अपभ्रंशाश्शब्दा गाव्यादयः। पर्य्यायाः गोपदपर्य्यायसुरभिशब्दादय इव। साधवः गवाद्यर्थबोधकशक्तिमन्तः। नानुमन्यन्ते नानुमतिविषयीक्रियन्ते। यथा गवादिशब्दास्साधवो यथा च तत्पर्य्यायशब्देष्वपि साधुत्वं शिष्टानुमतिविषयस्तथापभ्रंशेषु न तदित्यर्थः। अत्रापि हेतुमाह—नयत इति। **स्मृतिशास्त्रेण** धर्म्मबोधकमन्वाद्युक्तशासनविशेषेण, यतो नानुमन्यन्ते इति पूर्वेणान्वयः। एवञ्च मन्वाद्युक्तधर्म्मसंहितासु यज्ञादौ तेषामुच्चारणे निन्दास्मरणात् तेषां पर्य्यायशब्दवन्न साधुत्वमिति भावः। उक्तमर्थमुपसंहरति—**तस्मादिति**। अपभ्रंशशब्दश्रवणे साधुशब्दानुमानेनैव शाब्दबोध इत्यत्र दृष्टान्तमाह—अम्मांम्मेति। शिक्ष्यमाणः बोध्यमान उपदिश्यमानो वा बालो यदा अम्म! अम्म! इत्यस्फुटं प्रभाषते तत्र तद्विदाम् अम्माम्मेत्यव्यक्तशब्दश्रावणप्रत्यक्षवताम्। तेनाव्यक्तशब्देन व्यक्ते स्फुटे, अम्बाशब्दे स्मृते सतीति शेषः निर्णयः शाब्दबोधो मात्रादिविषयको जायत इत्यर्थः। एवं पूर्वोक्तप्रकारेण। साधौ गवादिशब्दे, प्रयोक्तव्ये सतीति शेषः। योपभ्रंशः गाव्यादिशब्दः प्रयुज्यते। तेन गाव्यादिशब्देन। साधुव्यवहितः साधुशब्दस्मरणोत्तरस्मरणविषयीभूतः। कश्चिदर्थः गवादिः। अभिधीयते शाब्दबोधविषयीक्रियत इत्यर्थः।

अव्युत्पन्नानां शक्तिभ्रमं साधुशब्दस्मरणञ्च विनैवापभ्रंशशब्देभ्यश्शाब्दबोधोदयाद्बोधकत्वरूपायाश्शक्तेस्तेष्वपि सत्त्वात्तेषामपि वाचकत्वं यज्ञकर्म्मप्रयोगार्हतासम्पादकं साधुत्वञ्चान्यादृशमेवेति न तेषां तत्र प्रयोग इति पक्षान्तरमाह—**भवतु वेति**। **ज्ञापकत्वलक्षणं** बोधजनकत्वरूपम्। न त्वर्थविषयकबोधजनकत्वप्रकारकेश्वरसङ्केतविषयत्वं तस्य तत्रानङ्गीकारात्। नन्वपभ्रंशेष्वपि वाचकत्वस्वीकारे व्याकरणेन कथन्न तेषु प्रकृतिप्रत्ययविभागो दर्शितः वाचकशब्दानां प्रकृतिप्रत्ययविभागव्युत्पादनार्थमेव तस्य प्रणयनादित्यत आह—

**दैवीनां वाचां क्रतूपकारकत्वलक्षणं साधुत्वमेव व्याक्रियते। "नापभ्रंशितवै न म्लेच्छितवै" इति श्रुत्यापभ्रंशानां परिसङ्ख्यानात्। यदाहुः—**

**"प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते।**
**वाचकत्वाविशेषेपि नियमः पापपुण्ययोः॥" इति**

**मतम्*। तन्न, परिभाषाशब्देन† तदर्थबुद्धिजनकतामगृहीत्वापि व्याकरणेन त्विति।** **दैवीनां** देवसम्बन्धिनीनां संस्कृताभिधानामिति यावत्। **वाचां** शब्दस्वरूपाणाम्। **क्रतूपकारकत्वं** यज्ञकर्म्मसु प्रयोगार्हत्वम्। **व्याक्रियते** व्युत्पाद्यते। तथा च व्याकरणस्य यज्ञकर्म्मप्रयोगार्हत्वरूपसाधुत्वज्ञापकत्वादपभ्रंशानां वाचकत्वेपि वक्ष्यमाणश्रुत्या यज्ञकर्म्मणि प्रयोगानर्हतया तेषां प्रकृतिप्रत्ययविभागाभावेपि न न्यूनता। प्रयोजनमपि व्याकरणस्योक्तसाधुत्वज्ञापनमेवेति भावः। अपभ्रंशानां यज्ञादौ प्रयोगानर्हत्वज्ञापिकां श्रुतिमाह— **नापभ्रंशितवै** इति। तव्यार्थे तवैप्रत्ययादपभ्रंशशब्दैर्म्लेच्छमात्रसङ्केतितशब्दैश्च यज्ञे न भावितव्यमित्यर्थः। **परिसङ्ख्यानादिति।** साधुपदानामपभ्रंशपदानाञ्च यज्ञादौ प्रयोगप्राप्तौ साधुपदानामेव तत्र प्रयोगः, नापभ्रंशानामित्यस्योक्तश्रुत्या बोधनादिति भावः।

अत्रार्थे भट्टोजिदीक्षितकारिकासंवादमाह—**यदाहुरिति।** प्रतिपादकता बोधजनकत्वरूपं वाचकत्वम्। तन्मात्रम्। मात्रपदेन क्रतूपकारकत्वव्यवच्छेदः। म्लेच्छेष्वपि म्लेच्छमात्रसंकेतितशब्देष्वपि, अपभ्रंशानामप्युपलक्षकमेतत्। अन्यथा न्यूनतापत्तेः। वाचकत्वस्योक्तस्याविशेषेपि साधुपदम्लेच्छपदादिसाधारण्येपि। पुण्यपापयोर्न्नियमः साधुशब्दानां यज्ञे प्रयोगस्य विहितत्वादपभ्रंशादीनाञ्च निषिद्धत्वाद् वेदविहितक्रियाजन्यस्य वेदनिषिद्धक्रियाजन्यस्य च गुणस्यैव पुण्यत्वात् पापत्वाच्चेति साधुशब्दप्रयोगे पुण्यं म्लेच्छादिशब्दप्रयोगे च पापमिति नियमज्ञापनार्थमेव व्याकरणमिति भावः। उक्तमतन्निरसितुमाह— **तन्नेति। परिभाषाशब्देन** आधुनिकपाणिन्यादिसंकेतितटिघुभादिशब्देन। **तदर्थबुद्धिजनकतामिति।** अचामन्त्याजादिस्वरूपतदर्थविषयकशाब्दबोध-

* नाप [ भ्रंशि ] भाषितवै। इति मु० पु० पा।
* मतम्। इति मु० पु० पा० ना०।
† परिभाषाशब्दे। इति मु० पु० पा०।

जनकत्वस्य तत्तच्छब्दे पूर्वमग्रहेपि पाणिनिसङ्केतस्य ज्ञानमात्रादेव तत्तदर्थबोधादित्यर्थः।

अयम्भावः—बोधे तत्तदर्थविषयकत्वमनिवेश्य तज्जनकत्वमात्रस्य वाचकतारूपत्वे गवादिपदादपि कदाचिदश्वादिबोधस्योदयादश्ववाचकत्वस्य तत्रापि प्रसङ्ग इति तत्तदर्थविषयकत्वविशिष्टबोधजनकत्वमेव तद्वाच्यम्, तस्य च गोपदादश्वादिविषयकबोधस्य कदाचिदुदयेपि तज्जनकत्वस्य गोपदेनङ्गीकारादेव न तस्य तद्वाचकत्वमित्यस्योक्तत्वेप्याधुनिकसंकेतितटिघुभादिपदेपु चैत्रादिपदेपु च तत्तदर्थविषयकशाब्दबोधात्पूर्वं तादृशशाब्दबोधजनकत्वज्ञानस्यासम्भवेन तत्तच्छाब्दबोधानुपपत्तिः। न च कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वात्मकफलोपधानरूपायाः कारणतायाः पूर्वं ज्ञानासम्भवेपि स्वरूपयोग्यतारूपायास्तस्यास्तदानीमपि ज्ञातुं शक्यत्वेनानुपपत्तिविरह इति वाच्यम्, तस्या अपि कारणतावच्छेदकधर्म्मात्मकतया बोधजनकत्वे जनकतावच्छेदकधर्म्मवत्त्वस्वीकारे जनकताज्ञाने तदवच्छेदकज्ञानं तदवच्छेदकत्वज्ञाने जनकताज्ञानमित्यात्माश्रयापत्तेः।

अथ जनकत्वं पदार्थान्तरमेव, न तु जनतावच्छेदकादिरूपम्। तथा च प्रत्यक्षेण तद्ग्रहे तदवच्छेदकग्रहस्यापेक्षितत्वेप्यनुमानादिना तस्यानपेक्षणात्तेनैवापभ्रंशादिपदेषु सादिदेवदत्तादिपदेष्वाधुनिकसंकेतज्ञानमिव बोधकत्वमनुमेयम्, संकेतशक्तिवादिनापि व्यवहारादिना बोधकत्वज्ञानादेव संकेतानुमानमित्यस्यावश्यं वाच्यत्वादिति चेन्न, पदानामर्थबोधजनकत्वोपपत्त्यर्थमेवार्थेन सह सम्बन्धः कल्पनीयस्तदभावे पदेन पदार्थस्मरणासम्भवादन्वयबोधानुपपत्तेः कुतस्तज्जनकत्वं तेषां स्यात्।' स च सम्बन्धो यदि बोधजनकत्वस्वरूप एव स्यात्तर्हि स्वार्थमेव स्वकल्पनमित्यात्माश्रयो दुर्व्वारः। अत एव "प्रत्याय्य प्रत्ययाद्वाचकत्वज्ञानं सहकारि" इत्युक्तम्महार्णवे। तदर्थश्च प्रत्यायकत्वोपपादकतया वाचकत्वज्ञानस्योपयोग इति। न चाधुनिकसंकेतितटिघुभदेवदत्तादिपदादपि तत्तदर्थबोधोपपत्त्यर्थमाधुनिकसङ्केतस्य ज्ञानमावश्यकम्। स च सङ्केतस्तत्तदर्थविषयकबोधजनकत्वप्रकारताकाधुनिकेच्छारूप एवेति तज्ज्ञानमपि सविषयविषयकज्ञानस्य स्वविषयविषयकत्वनियमाद् बोधजनकत्वविषयकमेवेति **तदर्थबुद्धिजनकतामगृहीत्वापी**त्युक्तिरसङ्गतेति वाच्यम्, सविषयविषयकज्ञानस्य स्वविषयविषयकत्वाभ्युपगमेपि स्वसमानप्रकारविशेष्यकत्वानभ्युपगमात्। अन्यथा स्वयं तद्विषयेभ्रान्तस्याप्यन्यस्य तद्विपयकभ्रमज्ञानतः पुरुपस्य

सङ्केतमात्रज्ञानादन्वयमतेरुत्पत्तेः । शक्तिसङ्केतज्ञानयोर्वैकल्पिकत्वे गौरवादिति ।

उच्यते—

तादृशार्थावगाहित्वतत्पदप्रभवत्वयोः ।
एकत्र बुद्धौ सङ्केतश्शब्दस्यार्थेन सङ्गतिः॥ ४ ॥

गवादिपदजन्यत्वगोत्वादिविशिष्टविषयकत्वोभयमेकस्यां बुद्धावेकत्रद्वयन्यायेन विशिष्टवैशिष्ट्यरीत्या वावगाहमानो गोपदाद्

तद्विषये भ्रान्तत्वापत्तेरिति तदर्थविषयकबोधजनकत्वप्रकारकेच्छाविषयत्वज्ञानसमानप्रकारविशेष्यकस्य तदर्थबोधजनकत्वज्ञानाभावेपीत्यत्रैवोक्तग्रन्थस्य तात्पर्य्यादसङ्कतेरभावात् ।

शक्तिसङ्केतज्ञानयोरिति । उक्तानुपपत्तिवारणाय बोधजनकत्वरूपशक्तेः उक्तेच्छाविषयत्वरूपसङ्केतस्य च ज्ञानयोस्स्वस्वाव्यवहितोत्तरशाब्दबोधौ प्रति कारणत्वकल्पने त्वीश्वरीयत्वमनुपादाय तादृशेच्छाविषयत्वज्ञानस्यैककारणत्वाभ्युपगमादेव सर्वत्रोपपत्तौ गौरवं परमवशिष्यत इति भावः । न्यायमते ईश्वरसङ्केतस्यैव पदपदार्थयोस्सङ्गतित्वमिति सिद्धान्तयितुमाह—उच्यत इति । तादृशार्थेति । षष्ठ्यर्थप्रकारत्वस्य सङ्केते निरूपकत्वेनान्वयः । तादृशेत्यस्य गोत्वादिविशिष्टगवादीत्यर्थः । एकत्र बुद्धाविति । सप्तम्यर्थविशेष्यत्वस्यापि निरूपकत्वेनैव सङ्केतेन्वयात् प्रकारत्वविशेष्यत्वयोश्च विशिष्टवैशिष्ट्यबोधमहिम्ना निरूप्यनिरूपकभावाद् गोत्वविशिष्टगोविषयत्वगोपदजन्यत्वोभयप्रकारतानिरूपितबोधनिष्ठविशेष्यताकसङ्केतस्य लाभः । तदेव निष्कर्षयति वृत्तौ—गवादिपदेत्यादिना । एकत्रद्वयन्यायेन एकधर्म्मावच्छिन्ने द्वयं प्रकार इति न्यायेनेत्यर्थः । तथा च गवादिपदजन्यत्वत्वावच्छिन्नप्रकारतानिरूपिता गोत्वादिविशिष्टविषयकत्वत्वावच्छिन्नप्रकारतानिरूपिता च या बुद्धित्वावच्छिन्नविशेष्यता तच्छालिनीच्छेत्यर्थः । विशिष्टवैशिष्ट्यरीत्या वेति । एकधर्म्मविशिष्टेपरधर्म्मवैशिष्ट्यमिति रीत्येत्यर्थाद् गवादिपदजन्यत्वविशिष्टबुद्धौ गोत्वादिविशिष्टविषयकत्वं विनिगमनाविरहाद् गोत्वविशिष्टविषयकबुद्धौ वा गवादिपदजन्यत्वमव-

२ वैकल्पिजनकत्वे । इति मु० पु० पा० ।

**गोत्वविशिष्टविषयिका बुद्धिर्ज्ञायतामित्याकारकसङ्केत एव गोपदस्य गोत्वविशिष्टेन सह सङ्गतिः ।**

**गोत्वविशिष्टविषयता च गोत्वप्रकारतानिरूपितविशेष्यतास्वरूपा***

गाहमान इत्यर्थः । अन्यत्र विशिष्टवैशिष्ट्यावगाहित्वस्यैकधर्म्मविशिष्टस्य वैशिष्ट्यं सम्बन्धस्तदवगाहित्वमिति व्युत्पत्त्या विशेषविशेषणतावच्छेदकोभयसम्बन्धावगाहित्वरूपस्य घटो नास्तीत्यभावबुद्धौ नैयत्यम् । तत्राभावे विशेषणस्य घटादेः प्रतियोगितया तद्विशेषणतापन्नघटत्वादेश्चावच्छिन्नप्रतियोगितयान्वयादुभयसम्बन्धावगाहित्वनियमादभावबुद्धेस्तदनवगाहिन्या अनुभवेनाविषयीकरणात् । रक्तदण्डवानित्यादौ विशेषणदण्डादेस्संयोगस्य तद्विशेषणतापन्नरक्तत्वस्यावच्छिन्नप्रतियोगिताकत्वविशिष्टस्य संयोगस्य च भाने तत्त्वम् । तदुभयस्याभाने संयोगमात्रस्य भाने चातत्त्वात् विशेष्ये विशेषणमिति रीत्यैव रक्तत्वादीनामवगाहित्वं बोध्यम् । प्रकृते च गवादिपदजन्यत्वगोत्वविशिष्टविषयकत्वयोरेकत्रापरस्य विशेषणत्वाभावादुक्तविशिष्टवैशिष्ट्यावगाहित्वस्यासम्भवादन्यथा व्याख्यातम् । तथा च गोत्वविशिष्टविषयकत्वप्रकारतानिरूपिता गोपदजन्यत्वत्वावच्छिन्नप्रकारतानिरूपिता च या बुद्धित्वावच्छिन्नविशेष्यता तन्निरूपकतादृशप्रकारतानिरूपितगोपदजन्यबुद्धित्वावच्छिन्नविशेष्यतानिरूपको गोपदजन्यत्वत्वावच्छिन्नप्रकारतानिरूपितगोत्वविशिष्टविषयकबुद्धित्वावच्छिन्नविशेष्यतानिरूपको वा विनिगमनाविरहेण सङ्केतः । तादृशसङ्केतीया गोत्वादिविशिष्टविषयकत्वप्रकारतानिरूपितबुद्धित्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतारूपा गोत्वविशिष्टविषयकबुद्धित्वावच्छिन्नेच्छीयविशेष्यतानिरूपितजन्यत्वनिष्ठप्रकारत्वाववच्छिन्नविशेष्यतानिरूपिततादृशप्रकारतारूपा गोत्वविशिष्टविषयकत्वप्रकारतानिरूपितजन्यत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतारूपा वा गोपदत्वाद्यवच्छिन्नस्य गोत्वविशिष्टेनार्थेन सह सङ्गतिरित्यर्थः ।

ननु गोत्वविशिष्टविषयकत्वं यदि गोत्वविशिष्टगवादिनिष्ठविषयतामात्रं तदा द्रव्यपदजन्यबोधस्यापि तथात्वाद्द्रव्यपदस्यापि गोत्वविशिष्टेन सह तस्य सङ्गतित्वं स्यादित्यत आह—**गोत्वविशिष्टविषयता चेति ।** तादृशविषयतानिरूपणे तन्निरूपकत्वमेव तादृशविषयताकत्वमिति न पूर्वोक्तविरोधः ।

---

* गोत्वप्रकारतानिरूपितविशेष्यतारूपा । इति मु० पु० पा० ।

**बुद्धिविशेषणत्वेन सङ्केतविषयः । अत एव गोत्वोपलक्षितगोविषयकबुद्धित्वावच्छेदेन द्रव्यपदजन्यत्वावगाह्याधुनिकसङ्केतो न गोत्वेन गोबुद्धावुपयोगी। न वा पारमार्थिकं द्रव्यपदस्य गोत्वविशिष्टे शक्तत्वं* किन्तु द्रव्यत्वविशिष्टे । तद्धर्म्मविशिष्टविषयकबुद्धित्वावच्छेदेन तत्पदजन्यत्वावगाहिनःसङ्केतस्य तद्धर्म्मविशिष्टतत्पदयोस्संसर्गत्वस्वरूपं शक्तित्वमिति व्युत्पत्तेः ।**

**बुद्धिविशेषणत्वेनेति ।** निरूपकत्वसंसर्गेण बुद्धिनिष्ठेच्छीयविशेष्यतानिरूपितविशेषणत्वेनेत्यर्थः। **सङ्केतविषय इति ।** तथा च द्रव्यपदजन्यबुद्धौ गोत्वप्रकारतानिरूपितविशेष्यतायाः निरूपकत्वेन न विशेषणत्वम्, किन्तु द्रव्यत्वप्रकारतानिरूपितविशेष्यताया एवेति न द्रव्यपदे गोत्वविशिष्टनिरूपिता सङ्गतिस्तादृशीति भावः। **अत एव** गोत्वविशिष्टविषयतायाः गोत्वप्रकारतानिरूपितविशेष्यतारूपायाः बुद्धौ विशेषणत्वादेव । गोत्वोपलक्षितत्वं गोनिष्ठविषयत्वे गोत्वसामानाधिकरण्यमात्रं गोत्वनिष्ठप्रकारतानिरूपितत्वाभाववत्त्वमिति यावत्। नित्यसङ्केतेन तादृशविशेषणत्वस्यैव नियमतोवगाहनाद**ाधुनिके**त्युक्तम्। **गोत्वेन गोबुद्धाविति ।** गोत्वनिष्ठप्रकारतानिरूपितगोनिष्ठविशेष्यताशालिबुद्धावित्यर्थः। **उपयोगी** नेत्यन्वयः । तत्पदजन्यतद्धर्म्मप्रकारतानिरूपिततन्निष्ठविशेष्यताशालिशाब्दबोधे निरुक्ततद्धर्म्मविशिष्टविषयताकत्वावगाहितत्पदसङ्केतज्ञानस्यैव कारणत्वात्तदनवगाहिन उक्तसङ्केतज्ञानस्य तादृशशाब्दबोधप्रयोजकत्वन्नेत्यर्थः **न वेति । पारमार्थिकं** नित्यसङ्केतरूपम्। तथा चोक्ताधुनिकसङ्केतस्य गोत्वोपलक्षितगोविशेष्यकबुद्धित्वावच्छिन्नविशेष्यतानिरूपितद्रव्यपदजन्यत्व-प्रकारताकस्य सम्भवेपि तस्य शक्त्यनात्मकतया द्रव्यपदे तस्य सत्त्वेप्युक्तप्रकारतारूपायाः गोत्वविशिष्टनिरूपितशक्तेस्तत्राभावान्न द्रव्यपदं गोत्वविशिष्टशक्तं द्रव्यत्वप्रकारतानिरूपितविशेष्यताकबुद्धित्वावच्छिन्नविशेष्यतानिरूपितद्रव्यपदजन्यत्वप्रकारताकत्वस्य च नित्यसङ्केते सत्त्वात्तदीयोक्तप्रकारतारूपशक्तेर्द्रव्यपदे सत्त्वाद्द्रव्यत्वविशिष्टशक्तमेव तदिति भावः। उक्तार्थे सामान्यनियममाह—**तद्धर्म्मविशिष्टेत्यादिना शक्तित्वमित्यन्तेन । व्युत्पत्तिः** नियमः।

ननूक्तनियमस्वीकारेपि वाहीकत्वावच्छिन्नवाचकत्वं गोसदृशत्वावच्छिन्न-

---

* शक्यत्वम् । इति मु० पु० पा० ।

**अत एव वाहीकादौ सन्नपि गोपदबोध्यत्वगोचरस्सङ्केतो* न शक्तिः। आजानिकप्रयोगस्य कोशव्याकरणादेश्च शक्तिग्राहकस्याभावेन वाहीकत्वविशिष्टे गोसदृशत्वविशिष्टे वा तादृशसङ्केतो न गोपद-सम्बन्ध इत्यवधारणात्।**

वाचकत्वं वा गोपदस्य दुर्वारम्? अयं गौरित्यत्र गोपदस्य वाहीकत्वावच्छिन्नस्य गौर्वाहीक इत्यत्र च गोसदृशत्वावच्छिन्नस्य बोधकतया वाहीकत्वादिप्रकारता-निरूपितवाहीकनिष्ठविषयताकबुद्धित्वावच्छिन्नविशेष्यताशालिसङ्केतस्य वाही-कत्वादिविशिष्टगोपदयोस्संसर्गत्वरूपशक्तेः स्वीकारस्यावश्यकत्वादित्यत आह— **अत एवेति**। वक्ष्यमाणहेतोरेवेत्यर्थः। **न शक्तिः** न नित्यसङ्केतः। तादृशसङ्केतस्य नित्यत्वाभावे हेतुमाह—**आजानिक इति**। जनि-मुत्पत्तिमारभ्य भवतीत्याजानिकः, भवार्थे ठक्प्रत्ययात्। वाहीकाद्युत्पत्तिमारभ्य तत्र गोपदप्रयोगस्य न जनिरुत्पत्तिर्यस्यासावजनिरनादिस्स एवाजानिक-स्स्वार्थे तत्प्रत्ययात्। वाहीकादावनादिगोपदप्रयोगस्य कोशव्याकरणादेश्च तत्तत्पदानां तत्तदर्थे शक्तेर्निश्चायकस्याभावान्न वाहीकगोसदृशयोर्गोपदशक्य-त्वमिति भावः।

**गोपदसम्बन्ध** इत्यस्य गोपदनिरूपितगोत्वविशिष्टार्थस्मारकः शक्तिरूपः सम्बन्ध इत्यर्थः। **वाहीकत्वविशिष्ट इति**। अयं गौरित्यत्र गोपदाल्लक्षणया गोत्वविशिष्टस्य बोधाद् गौर्वाहीक इत्यत्र च गोसदृशत्वावच्छिन्नस्य बोधाद् गोपदजन्यबोधविषयतावान् वाहीको गोसदृशो वा भवत्वितीच्छायास्तत्रापि सम्भवेपि शक्तेरीश्वरेच्छारूपाया अतीन्द्रियत्वेनास्मदादिप्रत्यक्षायोग्यतयाजानिक-प्रयोगस्य कोशव्याकरणादेरेव वा तदनुमापकत्वमवश्यं वाच्यम्। प्रकृते च गोपदशक्यो गवादिरित्याकारकशक्तिग्राहकाजानिकप्रयोगस्य कोशव्याकरणा-देश्चाभावेन वाहीकत्वादिप्रकारताकशाब्दबोधस्य चाधुनिकास्मदादितादृशसङ्केत-ज्ञानेनैवोपपत्तेर्भगवदिच्छायां वाहीकत्वादिप्रकारतानिरूपितवाहीकादिविशेष्यता-शालिबुद्धित्वावच्छिन्नविशेष्यतानिरूपितगोपदजन्यत्वप्रकारताकत्वस्याभाव इत्य-स्य निश्चयादित्यर्थः। तथा च तद्धर्म्मनिष्ठप्रकारतानिरूपितविशेष्यताशालिबुद्धि-त्वावच्छिन्नेत्यादिपूर्वोक्ततद्धर्म्मावच्छिन्नवाचकत्वं न गवादिपदस्येति भावः।

---

* भगवत्सङ्केतः इति मु० पु०पा०।

† गोपदसकेतः। इति मु० पु० पा०।

**भगवदिच्छायास्सर्वविषयकत्वस्य विशृङ्खलविषयताभिरेवोपपत्तौ वाहीकविषयकबुद्धित्वावच्छेदेनाबाधितस्यापि* गोपदजन्यत्वावगाहित्वे प्रमाणाभावात्। वाहीकस्मरणे गोपदस्य तज्ज्ञानस्य वा जनकत्वेपि वाहीकानुभवत्वशाब्दत्वावच्छेदेन† तज्जन्यत्वं बाधितमेव, लाक्षणिक-**

ननु तर्हि भगवदिच्छायास्सर्वविषयकत्वव्याघातो वाहीकत्वादिविशिष्ट-बुद्धेरपि सर्वपदार्थान्तर्गतत्वात् तत्र गोपदजन्यत्वानवगाहनादित्यत आह—**भगवदिच्छया** इति। **विशृङ्खलविषयताभिः** निरूप्यनिरूपकभावानापन्न-गोपदजन्यत्वादिनिष्ठविषयताभिः। **उपपत्ताविति।** बुद्धिर्गोपदजन्या भवतु बुद्धिविषयतावान् वाहीको भवत्वित्याकारकत्वस्य तत्राभ्युपगमाद् बुद्धिगोपद-जन्यत्ववाहीकादीनां सर्वेषामेव तदीयविषयतावत्त्वात्सर्वविषयकत्वस्य तस्यां निराबाधतया वाहीकत्वादिविशिष्टविषयकबुद्धित्वावच्छेदेन तस्याः गोपदजन्य-त्वावगाहित्वे मानाभाव इत्यर्थः। **अबाधितस्यापीत्यपिना**नुपदवक्ष्यमाणमते तत्र तस्य बाधितत्वादेव नातिप्रसङ्ग इति सूचितम्। लाक्षणिकस्याननुभाव-कत्वमते तद्धर्म्मप्रकारताशाल्यनुभवत्वावच्छिन्ना तादृशशाब्दत्वावच्छिन्ना वा या भगवदिच्छीयविशेष्यता तन्निरूपितजन्यत्वप्रकारत्वावच्छिन्नविशेष्यता-निरूपितप्रकारत्वादिमत्त्वमेव तद्धर्म्मावच्छिन्नवाचकत्वम्, गवादिपदस्य तज्ज्ञानस्य वा वाहीकत्वादिविशिष्टविषयकस्मरणं प्रति कारणत्वेपि तादृशानुभवं शाब्दबोधं प्रति वा न कारणत्वमिति तत्रोक्तप्रकारतायाः बाधितत्वादेव न गवादिपदस्य वाहीकत्वादिविशिष्टवाचकत्वमित्याह—**वाहीकस्मरण इत्यादि-वदन्तीत्यन्तेन।** व्याप्यधर्म्मपुरस्कारेण कार्य्यकारणभावसम्भवे व्यापकधर्म्म-पुरस्कारेण तत्कल्पनमनुचितं प्रत्यक्षादिवृत्तितया कार्य्यतातिप्रसक्तञ्च तादृशा-नुभवत्वमिति शाब्दत्वानुधावनम्। **लाक्षणिकस्याननुभावकत्वादिति।** गङ्गायां घोष इत्यादौ लाक्षणिकगङ्गादिपदस्येवायं गौरित्यत्रापि गोपदस्य लाक्षणिकस्य वाहीकादिबोधजनकत्वाभावादित्यर्थः। तत्र वाहीकादिस्मरण-मात्रस्यैव गवादिपदेन जननादित्याशयः। वाहीकाद्यन्वितेदन्त्वाद्यवच्छिन्न-विषयको बोधश्च ज्ञायमानेदमादिपदत्वेनेदमादिपदज्ञानत्वेन वा तादृशबोधं

---

* बाधितस्यापि। इति मु० पु० पा०।

† वाहीकानुभवशाब्दत्वावच्छेदेन। इति मु० पु० पा०।

**स्यानुभावकत्वात्। तदनुभवत्वावच्छेदेन तत्पदजन्यत्वावगाहिसङ्केत एव च* तत्पदशक्तिरित्यपि वदन्ति। ४।**

प्रति कारणत्वाभ्युपगमादेव जायते, इदमादिपदानां शक्ततया लाक्षणिकत्वाभावात्। अथवा लाक्षणिकगवादिपदार्थवाहीकादिनिष्ठविषयत्वानिरूपकशक्तेदमादिपदार्थविषयताक एव बोधस्सर्वस्मादेव लाक्षणिकपदघटितवाक्याज्जायते। लाक्षणिकगवादिपदानान्तु स्वज्ञानद्वारा स्मृतानां वाहीकाद्यर्थानामिदमादिपदार्थे बाधनिश्चयाभावसम्पादनमात्रेणैवोपयोगः। विशिष्टविषयकबोधकार्य्यं प्रवृत्त्यादिकन्तु बाधनिश्चयाभावादिसहकृततत्तच्छक्तपदार्थविषयकबोधस्यैव तादृशप्रवृत्त्यादिकं प्रति कारणत्वादुत्तरकालीनेन तत्तल्लक्ष्यार्थविशिष्टवान्यार्थविषयकेण मानसबोधेनैव वा जायते। तत्तद्वाक्यश्रवणानन्तरं वाहीकादिकं शाब्दयामीत्यनुव्यवसायश्च लक्ष्यार्थस्य शाब्दबोधाभ्युपगमेपि "विधौ न परश्शब्दार्थः" इति जैमिनिसूत्राद्विधेयत्वाख्यविषयतायास्तत्रासम्भवात्। अनुव्यवसायस्य च पर्वतो वह्निमानित्याकारकवह्निविधेयकानुमित्युत्तरं पर्वतं वह्नित्वं वानुमिनोमीत्याद्यनुव्यवसायाभावात् वह्निं वह्निमत्त्वेन पर्वतं वानुमिनोमीत्यनुव्यवसायोदयाच्च विधेयत्वाख्यविषयतानिरूपकनिष्ठविषयताकस्य तादृशविषयतानिरूपितोद्देश्यताख्यविशेष्यतानिरूपकनिष्ठविषयताकस्यैव वा सर्वानुभविकतयासिद्ध एव। उक्तजैमिनिसूत्रार्थश्च विधानं विधिः भावे विदधातेः "उपसर्गे घोः किः" इत्यनेन किप्रत्ययाद् विधेयत्वं विधेयित्वं वा विधिपदार्थः। सप्तम्यर्थो निष्ठत्वसम्बन्धावच्छिन्नमाधेयत्वं निरूपकत्वं वा। परः भिन्नः शक्यार्थादिति प्रकृतम्। शब्दार्थ इति। एवञ्च शक्यार्थभिन्नो लक्ष्यार्थो विधेयत्वनिरूपितनिष्ठत्वसम्बन्धावच्छिन्नाधेयत्वस्य विधेयितानिरूपकत्वस्य वाभाववानिति फलितो ज्ञेय इति। अत्र मते—**वदन्तीत्यनेन** मञ्चाः क्रोशन्तीत्यादौ लक्ष्यार्थमञ्चस्थपुरुषादेः पूर्वाननुभूतत्वे समानविषयकानुभवाभावात्स्मरणासम्भवः। शाब्दबोधे तु समानप्रकारकत्वमात्रेणैवोपस्थितेः कारणत्वात्तदन्वयीतरपदार्थसम्बन्धाबाधरूपयोग्यतावशादेवाननुभूतव्यक्तीनामपि भानसम्भवात्तत्प्रतीतिनिर्वाहः। एवं लाक्षणिकपदसमभिव्याहृतशक्तपदानामेव लक्ष्यार्थविषयतानिरूपितस्वार्थविषयताप्रयोजकत्वे आयुर्घृतं धूमादित्यादिसर्वलाक्षणिकपदघटितवाक्याच्छाब्दबोधानुपपत्तिस्तत्र शक्तपदस्याभावादित्यादिकोस्वरसः सूचितः। ४

---

* च। इति मु० पु० पा०।

**नन्वेवमपि जातिविशिष्टविषयकबुद्धौ* गोपदजन्यत्वावगाही सङ्केतोपि गवि गोपदस्य सङ्गतिस्स्यात् ?**

**न चानवच्छिन्नप्रकारतानिरूपिततादृशधर्म्मविशिष्टविषयताकबुद्ध्यवगाही† सङ्केत एव पदसङ्गतिरिति वाच्यम्, ‡लोमवल्लाङ्गुलत्वावच्छिन्नप्रकारताकपशुविशेष्यताकबुद्ध्यवगाहिनस्सङ्केतस्य पशुपदसङ्गतित्वविरहप्रसङ्गात् ।**

शक्यतावच्छेदकवैलक्षण्येन पदानां शक्तिवैचित्र्यं सिद्धन्तयितुमुक्तसङ्केतस्य सङ्गतित्वे दोषमाशङ्कते—**नन्वेवमपीत्यादिना ।** एवं तद्धर्म्मविशिष्टविषयकत्वतत्पदजन्यत्वत्वावच्छिन्नप्रकारतानिरूपितबुद्धित्वावच्छिन्नविशेष्यताशालिसङ्केतस्य पदनिरूपितसङ्गतित्वस्वीकारे । **जातिविशिष्टेति ।** जातित्वेन गोत्वावगाहिजातिविशिष्टविषयिका बुद्धिर्गोपदजन्या भवत्वित्याकारको गोत्वविशिष्टविषयकत्वगोपदजन्यत्वप्रकारतानिरूपितबुद्धित्वावच्छिन्नविशेष्यताक इत्यर्थः । **सङ्गतिस्स्यादिति ।** उक्तसङ्केतस्य गवादौ गोपदादिनिरूपितसङ्गतित्वं स्यात् । तथा च जातित्वावच्छिन्नगोत्वनिष्ठावच्छेदकतानिरूपितं गोवाचकत्वं गोपदस्य प्रसज्येतेति भावः । **न चेति । वाच्यमिति** परेणान्वितम् । तथा च तद्धर्म्मनिष्ठप्रकारतायां निरवच्छिन्नत्वनिवेशादुक्तसङ्केतीयगोत्वनिष्ठप्रकारतायाः जातित्वनिष्ठावच्छेदकतानिरूपितत्वाद् व्युदास इति भावः । **लोमवदिति ।** पशुपदान्मूषिकादेरबोधाल्लोमविशिष्टं यल्लाङ्गूलं तदवच्छिन्नवाचकत्वमेव पशुपदस्य । मूषिकादिलाङ्गूले च लोमाभावात्तद्बोधस्य ततो व्युदासाल्लोमनिष्ठया लाङ्गूलत्वनिष्ठया चावच्छेदकतया लाङ्गूलनिष्ठप्रकारतायाः निरूपितत्वेन निरवच्छिन्नत्वाभावात्तन्निरूपितपशुविशेष्यताकस्य सङ्केतस्य पशुपदसङ्गतित्वाभावापत्त्या लोमवल्लाङ्गूलावच्छिन्नवाचकत्वं पशुपदस्य न स्यादित्याशयः । एवं निरवच्छिन्नत्वस्य निवेशेनिवेशेपि वा व्योमादिपदस्य शब्दाश्रये गगनादौ निरवच्छिन्नाया एव तदादिसर्वनामपदानाञ्च बुद्धिप्रकारत्वोपलक्षितधर्म्मावच्छिन्ननिरूपिताया एव च शक्तेश्शास्त्रकारीयसिद्धान्तविषयत्वेन शब्दाश्रयत्वबुद्धिप्रकार-

---

* जातिविषयकबुद्धौ । इति मु० पु० पा० ।

† तादृशधर्मविशिष्टवृत्तिविशेष्यताकबुद्ध्यवगाही । इति मु० पु० पा० ।

‡ लोमविशिष्टलाङ्गुलत्वावच्छिन्नप्रकारताक । इति मु० पु० पा० ।

**किञ्च शब्दाश्रयत्वबुद्धिविषयत्वाद्युपलक्षितधर्म्मिविषयकबुद्धयवगाही* सङ्केतः कथमनवच्छिन्ने गगने पर्वतत्वादिविशिष्टे वा व्योमादिपदस्य तदादेर्वा सङ्गतिः ? कथं वैकत्वगोत्वोभयविशिष्टबुद्धौ गोपदजन्यत्वसङ्केतः शुद्धगोत्वावच्छिन्ने गोपदस्य न सङ्गतिः ? गौरित्यत्रैकवचनसहकृतेन गोपदेन तदुभयप्रकारकबुद्धिजननात् ।**

त्वाद्युपलक्षितविषयकबुद्धिविशेष्यताकस्य सङ्केतस्य शब्दाश्रयत्वनिष्ठप्रकारतायाः बुद्धिप्रकारत्वनिष्ठावच्छेदकतायाश्चानवगाहनावगाहनाभ्यां व्योमादिपदसङ्गतित्वाभावप्रसङ्ग इत्याह—**किञ्चेत्यादिना । शब्दाश्रयत्वाद्युपलक्षित** इति । अयमाशयः—व्योमादिपदानां शब्दाश्रयत्वविशिष्टनिरूपितवाचकतावत्त्वे व्योमश्शब्दाश्रय इत्यादिवाक्यस्य घटो घट इत्यादिवाक्येन तुल्ययोगक्षेमत्वप्रसक्त्याप्रामाण्यप्रसङ्गभयेन तेभ्यः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यत्वप्रकारकस्यापि बोधस्याभ्युपगमनीयतया शब्दाश्रयत्वावच्छिन्नेष्टद्रव्यातिरिक्तद्रव्यत्वावच्छिन्ने वा तत्पदस्य शक्तिरित्यत्र विनिगमकाभावात् समनियतनानाधर्म्मावच्छिन्नस्यैकधर्म्मिण एकपदवाच्यताया अननुभूतचरत्वाच्च शब्दाश्रयत्वाद्युपलक्षित एव तत्पदस्य शक्तिः । शाब्दबोधश्चोपलक्षणधर्म्मप्रकारक एव, तस्य वाच्यतानवच्छेदकत्वेपि तत्प्रकारकशाब्दबोधे तदंशे शक्यन्यूनानतिरिक्तवृत्तित्वज्ञानस्यापि कारणत्वादुपपन्न इति प्राचीनमते शब्दाश्रयत्वाद्युपलक्षित एव व्योमाकाशादिपदस्य शक्तिः । एवं तदादिसर्वनामपदेभ्यः पर्वतत्वादितत्तद्धर्म्ममात्रप्रकारताशालिबुद्ध्या प्रयुक्तेभ्यो बुद्धिप्रकारत्वविशिष्टतत्तद्धर्म्मप्रकारताकस्यान्वयबोधस्य पर्वतो नवेत्याकारकशुद्धपर्वतत्वावगाहिसंशयानिवर्त्तकतया वाच्यतावच्छेदकस्य शाब्दबोधीयप्रकारतानियमाच्च बुद्धिप्रकारत्वेनोपलक्षणीभूतेनैव तत्तत्पदशक्यतावच्छेदकपर्वतत्वादिकमनुगमय्य तद्विशिष्ट एव तेषां शक्तिरिति । एवं शक्यतावच्छेदके धर्म्मान्तरमवगाहमानयोर्गोपदपशुपदसङ्केतयोः सङ्गतित्वासङ्गतित्वे सङ्केतीयविषयतानवच्छेदकमपि तज्ज्ञानीयविषयतावच्छेदकं बुद्धिप्रकारत्वमवगाहमानस्य शक्यांशे निरवच्छिन्नविशेष्यताकस्य चासङ्गतित्वं प्रदर्श्य शक्यांशे शक्यतावच्छेदकतदनवच्छेदकोदासीनधर्म्ममवगाहमानस्य सङ्गतित्वप्रसङ्गं दर्शयति—**कथं वैकत्वेति** । गौरित्यादिवाक्यादेकत्वगोत्वोभयप्रकारतानिरूपितगोनिष्ठविशेष्यताकस्यैव शाब्दबोधस्यैकवचनसहकारेणोदयादेकत्वगोत्वोभयविशिष्टविषयिका बुद्धिर्गोपदजन्या भवत्वित्याकारकस्यापि सङ्केतस्य गोत्वनिष्ठनिरवच्छिन्नप्रकारतानिरूपितविशेष्यताकबुद्धित्वावच्छिन्नोद्देश्यताकत्वा-

**तदितरप्रकारत्वानिरूपकतत्प्रकारतानिरूपकतद्विशिष्टविषयताक-बुद्ध्युद्देश्यक एव सङ्केतश्शुद्धतद्विशिष्टे पदसङ्गतिरिति चेत्? शुद्धपद्मत्वावच्छिन्ने पङ्कजपदसङ्गतेरनुपपत्तेः, पङ्कजपदजन्यशाब्दबोधविषयतायाः* पद्मत्वेतरपङ्कजनिकर्तृत्वप्रकारतानिरूपकत्वनियमात्। शुद्धपद्मत्वावच्छिन्नस्मरणावगाहिसङ्केत एव पङ्कजपदसङ्गतिरिति चेत्? एवमपि वाहीकत्वेन वाहीकं गोत्वेन गाश्च स्मारयतु गोपदमिति सङ्केतो गोपद-**

त्तस्यापि शुद्धगोत्वनिरूपितावच्छेदकताकगोपदनिरूपितसङ्गतित्वं स्यादित्यर्थः। उक्तदोषनिरासायाह—**तदितरेति**। तथा च तत्र गोनिष्ठविशेष्यतायाः गोत्वभिन्नैकत्वप्रकारतानिरूपितत्वादेव व्युदासस्तस्येति भावः। **तद्विशिष्टे** इत्यत्र वैशिष्ट्यं विशेषणोपलक्षणान्यतरनिरूपितमेव ग्राह्यम्। तेन व्योमादिपदसङ्गतेरपि लक्ष्यता नानुपपन्ना। **शुद्धपद्मत्वे**। पङ्कजपदात् पद्मत्वतदितरपङ्कजनिकर्तृत्वोभयप्रकारताकस्यैव शाब्दबोधस्योदयेन तज्जनकसङ्केतीयबुद्धिविशेष्यतायाः पद्मत्वेतरप्रकारत्वानिरूपितत्वविरहात्तस्य शुद्धपद्मत्वावच्छिन्नवाचकत्वं न स्यादित्यर्थः। पङ्कजपदाच्छाब्दबोधस्य पङ्कजनिकर्तृत्वपद्मत्वोभयप्रकारताकत्वेपि तज्जन्यस्मरणस्य न तथात्वं गवादिपदाच्च स्मरणसमानप्रकारक एव शाब्दबोध इति तदितरप्रकारत्वानिरूपिततन्निष्ठप्रकारतानिरूपितविशेष्यताकस्मरणविषयकस्यैव सङ्केतस्य तद्विशिष्टे तत्पदसङ्गतित्वोक्तौ नोक्तानुपपत्तिरत आह—**शुद्धपद्मत्वेति**। पद्मत्वपदं पर्वतत्वादिधर्म्माणामप्युपलक्षकम्। **पङ्कजपदसङ्गतिरि**त्यत्र पङ्कजपदमपि तदादिपदानाम्। यथाश्रुते पङ्कजपदमात्रस्यैव सङ्गतौ स्मरणोपादाने **एवमपीत्यादिना** वक्ष्यमाणसङ्केतस्य गोपदसङ्गतित्वापादनस्यासङ्गत्यापत्तेः। **एवमपि** सङ्केते स्मरणस्यैव घटकत्वेन पङ्कजपदेनुपपत्तिवारणेपि। **गोपदसङ्गतिस्स्यादिति**। उक्तसङ्केतस्यापि गवांशे गोत्वमात्रप्रकारताकस्मरणावगाहित्वात्तेनैव लक्ष्यार्थवाहीकादिस्मरणशाब्दबोधयोरुपपत्तौ लक्षणाया उच्छेदप्रसङ्ग इत्यर्थः। पङ्कजपदतदादिपदगवादिपदानां सङ्केतस्य समूहालम्बनानात्मकतया तत्र स्मरणत्वाद्यवच्छिन्नोद्देश्यतायाः न पद्मत्वादिभिन्नपङ्कजनिकर्तृत्वप्रकारकबुद्धित्वावच्छिन्नम्, किन्तु पङ्कजनिकर्तृत्वपद्मत्वोभयप्रकारकस्मरणत्वावच्छिन्नत्वमेव। वाहीकत्वेन वाहीकमित्याद्युक्त

---

* पङ्कजपदजन्यशाब्दबोधीयपद्मविशेष्यतायाश्च। इति मु० पु० पा०।

**सङ्गतिस्स्यात् । बुद्धिवृत्तिसङ्केतोद्देश्यतायां *तदितरधर्म्मप्रकारकबुद्धित्वानवच्छिन्नत्वमपि प्रवेशनीयमिति चेत्? सूर्य्यत्वेन सूर्य्यं चन्द्रत्वेन चन्द्रं बोधयतु पुष्पवन्तपदमिति सङ्केतस्य कुत्राप्यसङ्गतित्वप्रसङ्गादिति‡ मैवम्, प्रवृत्तिनिमित्तवैचित्र्येण सङ्केतानां सङ्गतित्ववैचित्र्यात् । तथाहि—**

स्मरणोद्देश्यकसङ्केतस्य च गोत्वेतरवाहीकत्वप्रकारकबुद्धित्वावच्छिन्नायाः गोत्वप्रकारकबुद्धित्वावच्छिन्नायाश्चोद्देश्यतायाः निरूपकत्वात् तदितरप्रकारकबुद्धित्वानवच्छिन्नत्वमुद्देश्यतायान्निवेश्यैवोक्तापत्तिर्वारणीयेत्याह —**बुद्धिवृत्तीति** । **बुद्धिपदं** स्मरणत्वशाब्दत्वाद्यवच्छिन्नार्थकम् । तेन पङ्कजपदे नोक्तापत्तिः । **सूर्य्यत्वेनेति** । "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इत्यमरकोषेण पुष्पवन्तपदस्य चन्द्रसूर्योभयवाचकत्वबोधनात्तत्सङ्केतस्य सूर्य्यत्वप्रकारिका चन्द्रत्वप्रकारिका च बुद्धिः पुष्पवन्तपदजन्या भवत्वित्याकारकस्यैवाभ्युपगमनीयतया चन्द्रत्वेतरसूर्य्यत्वप्रकारकबुद्धित्वेनापि तदुद्देश्यताया अवच्छिन्नत्वात्तदुभयावच्छिन्ननिरूपितसङ्गतित्वं तस्य न स्यादित्यर्थः । **कुत्रापीत्यनेन** चन्द्रे सूर्य्ये चोद्देश्यतायास्तादृशत्वाभावादेकत्रापि न तस्य सङ्गतित्वसम्भव इति सूचितम् ।

उक्तापत्त्यनुपपत्तीनां तदैव सम्भवो यदि पदानां सङ्केतैरैक्यमभिप्रेतं भवेत्? तदेव न, शक्यतावच्छेदकभेदे एकपदस्याप्यनेकस्या एव सङ्केतस्याभ्युपगमः, किमुत पदभेदे, इत्याशयेनाह—**मैवमिति** । अत्र हेतुः—**प्रवृत्तीति** । **तथाहीति** । सङ्केतवैचित्र्यमेव दर्शयामीत्यर्थः । गोत्वादिप्रकारतानिरूपितविशेष्यताशालिबोधो गोपदादिजन्यो भवत्वित्याद्याकारकेच्छात्मकसङ्केतीयबुद्धित्वावच्छिन्नविशेष्यतानिरूपितविशेष्यतानिष्ठावच्छेदकतानिरूपितनिरूपितत्व-सम्बन्धावच्छिन्नावच्छेदकतात्मकविषयताश्रयप्रकारतानिष्ठावच्छेदकतानिरूपित-निष्ठत्वसम्बन्धावच्छेदकताश्रयो गोत्वादिर्धर्म्मः । क्वचिद्गोपदादिस्थले **शुद्धः**

---

* तदितर प्रकारक । इति मु० पु० पा० ।

‡ कुत्रापि कस्याप्यसङ्गतित्वप्रसङ्गात् । इति मु० पु० पा० ।

**सङ्केतविषयीभूतप्रकारत्वविशेषणम् ।**
**शुद्धं धर्म्मान्तरेणोपलक्षितं तद्विशेषितम् ॥५॥**
**एकं नानैकत्र नानाव्यक्तौ वा बुद्धिगोचरे ।**
**परिच्छेदकमेतेन विचित्रा पदसङ्गतिः ॥६॥**

**सङ्केतोद्देश्यायां बुद्धौ प्रतियोगित्वेन तादृशबुद्धिविशेष्यतायां वा निरूपकत्वेन विशेषणं या प्रकारता तस्यामाधेयतया प्रकारीभूय सङ्केतविषयो धर्म्मः प्रवृत्तिनिमित्तः* ।**

धर्म्मान्तरेणाविशिष्टः । क्वचित्तदादिपदस्थले **धर्म्मान्तरेण** बुद्धिप्रकारत्वादिना उपलक्षितः । क्वचित्पशुपदादिस्थले **धर्म्मान्तरेण** लोमादिना विशिष्टः । क्वचिद्गवादिपदस्थले **एकं** गोत्वादिमात्रम् । क्वचित्पङ्कजपदादिस्थले **नाना** पद्मत्वपङ्कजनिकर्तृत्वादिरूपः । क्वचिद्व्योमपदस्थले एकस्यामाकाशात्मकव्यक्तौ । क्वचिद्गवादिपदस्थले **नानाव्यक्तौ** भिन्नभिन्नगवादौ शाब्दबोधविषयीभूतायाम् । **परिच्छेदकम्** इतरव्यावर्त्तकम् । **एतेन** उक्तेन धर्म्मवैलक्षण्येन । **पदसङ्गतिः** विलक्षणा प्रत्येकस्थले प्रवृत्तिनिमित्तभेदप्रयुक्तभेदवतीति सङ्क्षेपतः कारिकाद्वयार्थं विशेषेण प्रतिपादयितुमादौ प्रवृत्तिनिमित्तलक्षणं तद्वैचित्र्येणैव तद्भेदस्य सिद्धान्तितत्वादाह **सङ्केतावित्यादिना** । **प्रतियोगित्वेन** निरूपकत्वेन । इदञ्च गवादिनिष्ठविशेष्यतानिरूपितगोत्वादिनिष्ठप्रकारतानिरूपको बोधो गवादिपदजन्यो भवत्वित्याकारकस्यापि सङ्केतस्य विनिगमनाविरहेण सङ्गतित्वमभिप्रेत्योक्तम् । पूर्वोक्तसङ्केताभिप्रायेण तु **तादृशबुद्धिविशेष्यतायां वेति । निरूपकत्वेन** निरूपकतानिरूपितनिरूप्यत्वेन । तेन तादृशप्रकारतानिरूपितविशेष्यतायामेव प्रकारतानिरूपकत्वस्यापि सत्त्वेपि नासङ्गतिः । **प्रवृत्तिनिमित्त इति** । सङ्केतोद्देश्यतानिरूपिता निरूपकत्वसम्बन्धावच्छिन्नावच्छेदकतावती निरूपकत्वसम्बन्धावच्छिन्नविशेष्यतात्वावच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावती वा या प्रकारता तन्निष्ठावच्छेदकतानिरूपितनिष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वं प्रवृत्तिनिमित्तत्वमित्यर्थः । आकाशादिपदशक्तेर्न्निरवच्छिन्नत्वे सङ्केतस्य तादृशावच्छेदकताया-

* प्रवृत्तिनिमित्तम् । इति मु० पु० पा० ।

**तन्निष्ठा सङ्केतप्रकारता काचिदनवच्छिन्नैव, यथा गोपदसङ्केतस्य गोत्वनिष्ठा प्रकारता। आधेयत्वसंसर्गावच्छिन्ना प्रकारतानिष्ठविशेष्यता-निरूपिता च न धर्म्मान्तरेणावच्छिद्यते, समवायेतरसंसर्गावच्छिन्नाया जातिप्रकारताया धर्म्मावच्छिन्नत्वनियमे मानाभावात्। अत एव गौरिति बुद्धेरनुव्यवसायेन प्रकारताविशेषणतया शुद्धगोत्वादेः*ग्रहणम्,**

स्तत्रासत्त्वान्न तस्य प्रवृत्तिनिमित्तत्वम्। यद्वा जात्यखण्डोपाध्यतिरिक्तस्य शब्दाश्रयस्याकाशस्य धर्म्मांशे उद्बोधकासत्त्वे स्वरूपतस्स्मरणप्रकारत्वसम्भवेपि निर्द्धर्म्मितावच्छेदककयोग्यताज्ञानस्य बाधनिश्चयाप्रतिबध्यतया सधर्म्मितावच्छेदककस्यैव तस्य स्वीकरणीयतया शाब्दबोधस्य योग्यताज्ञानसमानधर्म्मितावच्छेदककत्वनियमात् आकाशवासी चन्द्र इत्यादौ शाब्दबोधानुपपत्तिरिति शब्दाश्रयत्वस्य प्रवृत्तिनिमित्तत्वमङ्गीकृत्य तद्धर्म्मितावच्छेदककयोग्यताज्ञानेन तादृशशाब्दबोधस्तत्रोपपादनीयः। अत एव प्रकाशस्थे "वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वम्" इति प्रवृत्तिनिमित्तलक्षणे वाच्यविशेषणस्य निष्प्रयोजनकत्वमुक्तं दीधितिकारैः। विशेषतस्तत्तत्पदप्रवृत्तिनिमित्तलक्षणन्तु सङ्केतीयतत्तत्पदजन्यत्वप्रकारताघटितं स्वयमूहनीयम्। **शुद्धमिति विवृणोति—तन्निष्ठेत्यादिना।** ननु जातिनिष्ठप्रकारतायाः समवायसम्बन्धावच्छिन्नाया एव निरवच्छिन्नत्वं तदितरसम्बन्धावच्छिन्नायाश्च सावच्छिन्नत्वमेवेति निष्ठत्वसम्बन्धावच्छिन्ना गोत्वनिष्ठा प्रकारता कुतो धर्म्मान्तरानवच्छिन्ना गोत्वत्वेनैव तस्या अवच्छेदादित्यत आह—**समवायेतरेति।** मानाभावेप्युक्तनियमाङ्गीकारेनुपपत्तिमाह—**अत एव** समवायेतरसम्बन्धावच्छिन्नाया अपि जातिप्रकारताया धर्म्मानवच्छिन्नत्वादेव। **गौरिति बुद्धेरिति।** गोत्वनिष्ठनिरवच्छिन्नप्रकारताशालिबुद्धेरित्यर्थः। **शुद्धगोत्वादेरिति।** तादृशबुद्धेरनुव्यवसायस्य गामहञ्जानामीत्याकारकस्य गोत्वनिष्ठप्रकारतानिरूपितगोनिष्ठविशेष्यताशालिबुद्धिविषयकस्य विषयतावच्छेदकीभूतप्रकारतायां समवायेतरनिष्ठत्वसम्बन्धेन गोत्वस्य विशेषणत्वेपि स्वरूपत एव भानम्, न तु गोत्वत्वादिना, तस्य पूर्वमज्ञानादनुव्यवसायविषयत्वासम्भवादुक्तव्यवसाये च गवि गोत्वस्य समवायेनैव विशेषणतया तत्र गोत्वत्वेनाभानस्योभयसिद्धत्वादिति भावः।

---

* शुद्धस्य गोत्वादेः। इति मु० पु० पा०।

**न तु गोत्वत्वविशिष्टस्य, तथोपनायकस्य व्यवसायस्याभावात्। अत एव*जातिशक्तिवादिनोपि शुद्धगोत्वमेव शक्तिविशेषणत्वेनावगाहमाना**

उक्तनियमस्वीकारे जातिशक्तिवादमते शक्तिज्ञानानुपपत्तिमप्याह—**अत एवेति**। उक्तनियमाभावादेवेत्यर्थः। **जातिशक्तिवादिन इति**। **गोत्वशक्तं गोपदमिति** ज्ञानस्य निरूपितत्वसम्बन्धावच्छिन्नगोत्वनिष्ठप्रकारताशालित्वेन कारणत्वे जातित्वेन गोत्वावगाहिजातिशक्तं गोपदमिति ज्ञानादपि शुद्धगोत्वप्रकारकशाब्दबोधापत्तिस्तद्वारणाय गोत्वत्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नप्रकारताकत्वेन कारणत्वे च गोत्वत्वस्य पूर्वमनुपस्थितौ तादृशज्ञानस्यासम्भवो गवेतरासमवेतत्वविशिष्टसकलगोसमवेतत्वस्वरूपगोत्वत्वस्य बहुतरपदार्थघटितया तादृशज्ञानापेक्षया लघुभूतस्य गोत्वावच्छिन्नशक्तं गोपदमिति ज्ञानस्यैव कारणत्वापातश्चेति निरूपितत्वसम्बन्धेनापि गोत्वस्य स्वरूपतो भानमुपगम्य निरवच्छिन्नगोत्वनिष्ठप्रकारताकत्वेनैव तज्ज्ञानस्य कारणत्वं जातिशक्तिवादिभिरवश्यमुपगन्तव्यमित्याशयः।

इदन्तु बोध्यम्। समवायसम्बन्धावच्छिन्नाया जात्यखण्डोपाधिनिष्ठाया विषयताया अनुल्लिख्यमानत्वे निरवच्छिन्नत्वमेव। उल्लिख्यमानत्वे च सावच्छिन्नत्वमेव। तदितरसम्बन्धावच्छिन्नायाश्च तस्या उल्लिख्यमानतदुभयनिष्ठत्वे विवक्षावशात्सावच्छिन्नत्वं निरवच्छिन्नत्वं वा। अनुल्लिख्यमानतदुभयनिष्ठायाश्च निरवच्छिन्नत्वमेव, न सावच्छिन्नत्वम्। तेन कालिकसम्बन्धावच्छिन्नगोत्वत्वावच्छिन्नप्रकारतानिरूपितकालत्वावच्छिन्नविशेष्यताकत्वेन कालो गोत्ववानित्यस्य प्रमात्वम्। कालो गौरित्याकारके च गोत्वनिष्ठप्रकारताया निरवच्छिन्नतया कालिकसम्बन्धावच्छिन्नत्वस्य तत्र सत्त्वेपि न तज्ज्ञानस्य प्रमात्वं प्रमात्वस्य प्रकारादिभेदेन भिन्नतया कालविशेष्यकगोत्वप्रकारकस्य तस्य गोत्वत्वावच्छिन्नत्वघटितत्वनियमात्। एवं घटस्य पार्थिवतैजससाधारण्येन द्रव्यवृत्तित्वाभ्युपगमे पृथिवीत्वादिना साङ्कर्य्यप्रसङ्गात् कपालद्वयसंयोगसमवेतमेव तदिति मते समवायेन घटत्ववति कपालसंयोगे समवायेन घटत्वप्रकारताकस्य संयोगो घट इति ज्ञानस्य प्रमात्वापत्तिरपि समवायेन घटत्वप्रकारकप्रमाया घटत्वत्वावच्छिन्नत्वेन तदन्यसम्बन्धेन च तस्या घटत्वनिष्ठप्रकारतामात्रेण घटितत्वम्, न तु तत्र सावच्छिन्नत्वनिरवच्छिन्नत्वयोरन्यतरस्यापि प्रवेश इति नियममभ्यु-

---

* च। इति मु० पु० पा०।

**गोत्वशक्तं गोपदमिति प्रतियन्ति। अपरा प्रवृत्तिनिमित्तपरिचायकधर्म्मावच्छिन्ना, यथा बुद्धिविषयधर्म्मप्रकारतानिरूपितबुद्धिविषयवद्वृत्तिविशेष्यताकबुद्धिस्तत्पदजन्येति सर्वनामपदसङ्केतस्य या गोत्वादौ* प्रकारतांशे प्रकारता, सा‡ स्वरूपसद्बुद्धिविषयत्वावच्छिन्ना। नहि तत्र सङ्केतेन प्रकारतायां बुद्धिविषयत्वावच्छिन्नत्वमपि विषयीक्रियते।**

पेत्यैव वारणीया। अनुल्लिख्यमानघटत्वनिष्ठप्रकारतायास्समवायसम्बन्धावच्छिन्नायास्तत्र घटत्वत्वावच्छिन्नत्वाभावात्। एवं सति स्वाश्रयसमवायेनायं घटोयं घटत्ववान् समवायेन घटत्ववान् संयोग इत्येतेषां प्रमात्वमप्युपपन्नम्। न चैवमपि कालो गौरित्यस्य भ्रमत्वानुपपत्तिर्दुर्वारैव कालिकेन गोत्वाभावस्य कालेसत्त्वान्मानाभावेन गोत्वत्वावच्छिन्नप्रकारतायास्तत्र भ्रमत्वेनिवेशादिति वाच्यम्, यथा कालो गौरिति शाब्दबोधे समानविभक्तिकपदोपस्थाप्यत्वेन काले गोरभेदावगाहित्वनियमाद् गवाभेदाभाववति काले गवाभेदावगाहित्वनियमेन भ्रमत्वम्, तथैव प्रत्यक्षेपि गवाभेदावगाहित्वनियमस्य फलबलेन कल्पनीयतया तदनुपपत्तेरभावात्।

धर्म्मान्तरेणोपलक्षितमित्युदाहरति—**अपरेत्यादिना**। **अपरा** पूर्वोक्तप्रकारतातो विजातीया सङ्केतीयप्रकारता। **प्रवृत्तिनिमित्तेति**। तदादिसर्वनामपदशक्यतावच्छेदकगोत्वघटत्वचैत्रत्वादीनामननुगततया तेषामनुगतेन बुद्धिप्रकारत्वेनैकरूपेण निवेशं कृत्वा तदुपलक्षितगोत्वादिधर्म्मप्रकारतानिरूपिततादृशधर्म्मवद्विशेष्यताका बुद्धिस्तदादिपदजन्या भवत्वित्याकारक एव तत्रसङ्केतोभ्युपेयते तदीयगोत्वादिधर्म्मनिष्ठप्रकारतानिष्ठप्रकारतायां बुद्धिप्रकारत्वावच्छिन्नत्वं भासते, गोत्वादिनिष्ठा बोधीयप्रकारता तु निरवच्छिन्नैव, बुद्धिप्रकारत्वस्य गोत्वादावुपलक्षणताया एवाभ्युपगमादित्याशयः। तदेतदाह—**यथा बुद्धिविषयेत्यादिना विषयीक्रियत इत्यन्तेन**। तत्र गोत्वादिनिष्ठप्रकारताया निरवच्छिन्नत्वे हेतुमाह—**नहीति**। अयमाशयः—तत्पदाद्यखिलसर्वनामसंज्ञकपदेभ्यो घटपटादिप्रमेयमात्रस्यैव घटत्वादिना येन रूपेण पूर्वं ज्ञानं यस्य पुंसस्तस्य तादृशबुद्ध्या प्रयुक्तेभ्यस्तेन रूपेण बोधस्सर्वानुभवसिद्धोत एव पाणिन्यादिभिस्सर्वेषां नाम सर्वनामेति विग्रहमादृत्य तेषां सर्वनामसंज्ञा-

---

* गोत्वादेः। इति मु० पु० पा०।

‡ हि। इति मु० पु० पा०।

न्वर्था कृता । तथा च तेषां घटत्वादितत्तदखिलधर्म्मावच्छिन्ननिरूपितनानाशक्तिमत्त्वे हर्य्यादिपदवन्नानार्थत्वापत्तिः । न च चन्द्रत्वसूर्य्यत्वोभयधर्म्मावच्छिन्नवाचकस्यापि पुष्पवन्तपदस्य तदुभयनिरूपिताया एकस्या एव शक्तेस्सत्त्वेन यथा न नानार्थत्वम्, तथैव प्रकृतेपि घटत्वाद्यखिलधर्म्मावच्छिन्नेष्वेकस्या एव शक्तेस्स्वीकरणीयतया न नानार्थत्वं नानाशक्तिमत्त्वाभावादिति वाच्यम्, पुष्पवन्तपदाच्चन्द्रत्वाद्येकधर्म्मं परित्यज्यापरधर्म्मप्रकारकान्वयबोधस्य शक्तिभ्रमादिकं विनानुदयेन तयोरेकस्या एव शक्यतावच्छेदकताया अभ्युपगमात् । तदादिपदाच्च गौरस्ति तामानयेत्यादिवाक्यजन्यान्वयबोधः पूर्वबुद्धिप्रकारीभूतगोत्वाद्येकैकधर्म्मप्रकारकोपि सर्वानुभवसिद्ध इति तत्र तस्या एकत्वासम्भवादवच्छेदकताभेदनियतावच्छेद्यशक्तिभेदस्यावश्यकत्वात् । न च बुद्धिप्रकारीभूतगोत्वादिधर्म्मावच्छिन्नानामेव तदादिपदजन्यबोधविषयतया बुद्धिप्रकारत्वमेकमेव तत्प्रवृत्तिनिमित्तमिति न नानार्थत्वं तन्निष्ठशक्यतावच्छेदकताया ऐक्यादिति वाच्यम्, गौरस्ति तामानयेत्यादिवाक्यजन्यबोधानन्तरमानयनं गोकर्म्मकन्नवेति संशयानुत्पादस्य सर्वसिद्धस्योपपत्तये बुद्धिप्रकारीभूतगोत्वाद्येकैकधर्म्मनिष्ठनिरवच्छिन्नप्रकारताक एव बोधस्तदादिपदेभ्य आवश्यकः, बुद्धिप्रकारत्वादेस्तत्प्रकारीभूतगोत्वादिविशेषणतया भाने गोत्वादिविशेषधर्म्ममात्रावगाहिन्युक्तसंशये बुद्धिप्रकारत्वरूपसामान्यधर्म्मावगाहिनिश्चयस्य सामान्यधर्म्मानवगाहिविशेषधर्म्मावगाहिबुद्धौ सामान्यधर्म्मविशिष्टविशेषधर्म्मप्रकारकनिश्चयस्य विरोधित्वाभावात्प्रतिबन्धकत्वाभावेन तदनुत्पादाभावप्रसङ्गात् । न चैवं हर्य्यादिपदवन्नानार्थत्वमेव तेषामिति नोक्तदोष इति वाच्यम्, तावतापि यद्रूपावच्छिन्नविषयकव्यवहारादिना यद्रूपावच्छिन्ने तदादिपदस्य शक्तिर्य्येन पुंसा न गृहीता तद्धर्म्मावच्छिन्नस्यापि वक्त्रा बुद्ध्या विषयीकरणे सति प्रयुक्तेन तदादिपदेन तद्धर्म्मावच्छिन्नविषयकबोधस्तस्य पुंसोनुभवसिद्धोनुपपन्नस्स्यात् ।

अथ घटत्वादीनां तदादिपदशक्यतावच्छेदकानां बुद्धिप्रकारत्वमेकमेवानुगमकं वाच्यम्, तथा च घटोस्ति तमानय, गौरस्ति तामपसारयेत्यादिवक्तृबुद्धिप्रकारीभूतघटत्वाद्यवच्छिन्नबोधकतत्पदघटितनानावृद्धव्यवहारतस्तटस्थस्य बुद्धिप्रकारत्वेन सामान्यधर्म्मेण घटत्वगोत्वादिकमेकैकं विषयीकृत्य बुद्धिप्रकारवाँस्तत्पदशक्य इति ज्ञानं सामान्यलक्षणाप्रत्यासत्त्यैवाखिलबुद्धिप्रकारीभूतघटत्वादिविषयकं जनयिष्यति । तथा सति पूर्वाननुभूतस्यापि धर्म्मस्य तेन रूपेण ज्ञातत्वात् तत्र तदादिपदशक्तिग्रहः सुलभः । सामान्यलक्षणानभ्युपगमेपि

स्यैक्यादेव शक्तेरैक्यान्न नानार्थत्वम्। हर्य्यादिपदनिरूपितो भगवत्सङ्केतश्च फलबलात् सिंहत्वावच्छिन्नो हरिपदजन्यबोधविषयतावान् हरिपदं वा तादृशबोधजनकं भवत्वित्याकारकस्सिंहत्ववानरत्वादिप्रत्येकधर्म्मान्तर्भावेणैवाभ्युपेयते। बुद्धिप्रकारत्वादेरेकस्य कस्यचित्कथञ्चित् सिंहत्वादिनिष्ठविषयतावच्छेदकत्वस्य सम्भवेपि न तेन रूपेण सिंहत्वाद्यवगाहित्वं सङ्केतस्य। सिंहत्वादिविषयतानाञ्चानैक्यान्न नानार्थोच्छेदप्रसङ्गो हर्य्यादिपदजन्यबोधीयप्रकारत्वस्यापि सिंहत्वादौ सत्त्वात्तेषां विशेषणत्वम्, तदादिपदजन्यबोधीयप्रकारतायाञ्च बुद्धिप्रकारत्वेभावात्तादृशप्रकारतासामानाधिकरण्यमात्रस्यैव तत्र भानात्तस्योपलक्षणत्वम्। शाब्दबोधीयप्रकारताप्रयोजकञ्च सङ्केतीयबोधविषयत्वप्रकारतानिरूपितविषयताश्रयत्वरूपं शक्यत्वमेव, न तु सङ्केतस्य तद्धर्म्मविशिष्टविषयताकत्वरूपम्। तेन घटत्वादीनां सिंहत्वादीनाञ्च सङ्केतीयविषयतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नबोधविषयत्वप्रकारतायास्सत्त्वाच्छाब्दबोधप्रकारत्वं बुद्धिप्रकारत्वे च तदभावान्न तत्त्वमिति तदादिपदजन्यबोधस्य घटत्वादिमात्रप्रकारकत्वं निराबाधम्। जातिमत्त्वेन घटत्वादिप्रकारकबुद्ध्या प्रयुक्ततदादिपदानाञ्च बुद्धिप्रकारतावच्छेदकत्वोपलक्षितधर्म्मविशिष्टावच्छिन्नवाचकत्वम्। तत्र सङ्केतोपि तादृशरीत्यैवोह्यः। बुद्धिप्रकारत्वेन भासमानेपि घटत्वादौ स्वरूपतोन्वयबोधप्रकारत्वञ्च प्रतियोगिविशेषिताभावज्ञानस्य विशिष्टवैशिष्ट्यबोधमर्य्यादातिक्रमाभावनियमेपि प्रकारीकृत्यावच्छेदकतायां गृह्यमाणायां प्रतियोग्यंशे उपलक्षणस्यापि भानस्य वह्न्यभावलिङ्गकधूमाभावानुमितौ धूमव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववानित्याद्याकारकव्यतिरेकव्याप्तिनिश्चयस्य तादृशव्यापकतावच्छेदकत्वोपलक्षितवह्नित्वावच्छिन्नप्रतियोगिताकाभावावगाहित्वेन कारणताया आवश्यकतयोपगन्तव्यत्वात्। न च तत्र तादृशव्यापकतावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावावगाहित्वेनैव कारणत्वं सम्भवति, तथा सत्युल्लिख्यमानवह्नित्वस्य स्वरूपतो भानासम्भवाद्वह्नित्वत्वस्यापि तत्रावच्छेदकत्वे गौरवापातात्, गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्वे लघुवह्नित्वत्वापेक्षया गुरुतादृशावच्छेदकत्वविशिष्टस्य तस्य प्रतियोगितानवच्छेदकत्वेन तादृशप्रतियोगिताया अप्रसिद्धेश्च। तादृशव्यापकतावच्छेदकत्वमात्रेण वह्नित्वस्य भानोपगमे च तादृशव्यापकतावच्छेदकवान्नास्तीत्याकारकस्यैव ज्ञानस्य कारणत्वप्राप्तौ प्रमेयत्वादिरूपधूमव्यापकतावच्छेदकावच्छिन्नस्य सर्वत्र सत्त्वेन विशेषदर्शिनां तादृशज्ञानासम्भवात्। एवञ्चाभावानवगाहिन्यपि तदादिपदसङ्केतज्ञाने विषयता-

वच्छेदकताया बुद्धिप्रकारत्वनिष्ठायाः प्रकारतयैव ज्ञायमानत्वेनोपलक्षणत्वन्निराबाधम्। घटो नास्तीत्यादौ घटत्वादेरवच्छिन्नप्रतियोगिताकत्वसंसर्गेणैवाभावांशे प्रकारतया तन्निष्ठावच्छेदकतायाः संसर्गताघटकतया प्रकारत्वेनागृह्यमाणत्वमिति तादृश एव प्रत्यये प्रतियोग्यंशे उपलक्षणतया भानानभ्युपगमात् प्रतियोगिविशेषितेत्यादिनियमनिर्वाह इति बोध्यम्।

तदादिपदानां जातित्वादिविशिष्टघटत्वादिविशिष्टे स्वरूपतो घटत्वादिविशिष्टे च शक्तत्वेपि जातित्वादिविशिष्टावच्छिन्नोस्य बुद्धिविषय इत्याकारकज्ञानस्य सत्त्वे जातित्वेन घटोस्य बुद्धिविषय इत्याकारकज्ञानस्य च सत्त्वे स्वरूपतो घटत्वादिप्रकारकतदादिपदशक्तिज्ञानात्तत्तदाकारकोन्वयबोध उपपादनीयः। यद्धर्म्मावच्छिन्ने तदादिपदशक्तिग्राहकव्यवहारादिको न जातस्तद्धर्म्मावच्छिन्नेप्युपनयसन्निकर्षजन्यालौकिकमानसशक्तिग्रहस्य तत्पदशक्यत्वबाधनिश्चयाभावसहकृतप्रत्यक्षादिजन्यतद्धर्म्मावच्छिन्नोपस्थितेरेव सम्भवः, मानसशक्तिग्रहे व्यवहाराद्यपेक्षाया अभावात्। न चालौकिकसन्निकर्षेण विपरीतकोटेरप्युपस्थित्या तत्र शक्तिसन्देह एव, न निश्चयः, पित्तादिदोषविरहेपि धूमादौ वह्निव्यभिचारस्य परमाण्वादौ सावयवत्वस्य च सन्देहदर्शनात्तन्निवृत्यर्थं तर्काद्यनुसरणाच्च पित्तादिदोषसहिताया एव विपरीतकोटेस्सन्देहप्रयोजकत्वस्य वक्तुमशक्यत्वादिति वाच्यम्, अत्र घटोस्ति तमानय, अत्र गौरस्ति तामपसारयेत्यादिप्रयोजकवृद्धवाक्याद् घटानयनगवापसारणादौ प्रयोज्यवृद्धस्य प्रवृत्तिमुपलभमानस्समीपस्थः पुरुषः तादृशप्रवृत्तेर्घटादिज्ञानजन्यतया घटादिपदात्तस्य जातत्वेपि घटादिपदार्थस्यास्तिपदार्थेनैवान्विततया प्रथमान्तपदार्थतया चानयने कर्म्मत्वेन बोधासम्भवाद् घटादिकर्म्मताकत्वविशिष्टानयनसाध्यकप्रवृत्तेस्तत उपपादनासम्भवात्तत्पदादेवास्य घटादिज्ञानं जातमिति निश्चिनोति। स चात्र घटोस्तीत्यादिपूर्ववाक्यस्थघटादिपदजन्यबोधविषयस्य घटादेस्तत्पदवाच्यत्वे एवोदेतुमर्हति, नान्यथेति रीत्या कतिपयबुद्धिविषयेषु तत्पदशक्तिं व्यवहारादिनावधारयन् बाधकाभावाद् बुद्धिप्रकारवाँस्तत्पदशक्य इत्याकारिकां बुद्धिप्रकारत्वावच्छेदेनैव तत्पदशक्तिं निश्चिनोति। तदुत्तरं चैत्रोस्य बुद्धिनिरूपितप्रकारतावद्धर्म्मवानिति ज्ञानं तस्य यदा जायते, तदा पूर्वगृहीतसामान्यशक्तिज्ञानजन्यसंस्कारेण तादृशस्मरणस्योदयादवच्छेदकधर्म्मदर्शनविधयोक्तनिश्चयस्य बुद्धिप्रकारतावद्धर्म्मावच्छेदेन तत्पदशक्यत्वनिश्चयविशिष्टबुद्धिप्रकारतावद्धर्म्मप्रकारतानिरूपितचैत्रत्वाद्यवच्छिन्नविशेष्यताशालिनिश्चयत्वेन तत्पदशक्यत्वाभावप्रकारता-

कबुद्धिविरोधितया जलावच्छेदेन वह्न्यभावप्रकारकनिश्चयविशिष्टजलप्रकारकह्रद-विशेष्यकनिश्चयोत्तरं ह्रदो वह्न्यभाववान्नवेति संशय इव चैत्रस्तत्पदशक्यो नवेति संशयस्यासम्भवात् । न चैवं बुद्धिविषयेषु कतिपयेषु तत्पदशक्तिनिश्चयात् बुद्धि-विषयत्वावच्छेदेन तत्पदशक्तिस्वीकारे तुरीतन्त्वादिषु कतिपयद्रव्येषु पटकारणता-निश्चयाद्द्रव्यत्वावच्छेदेनैव तन्निश्चयोऽपि स्यादिति वाच्यम्, तुरीतन्त्वादिपट-कारणभिन्नद्रव्येषु पटव्यभिचारस्यापि निश्चयाद्द्रव्यत्वावच्छेदेन पटकारणत्व-तद्व्यभिचारयोरुभयोरपि निश्चययोः सत्प्रतिपक्षस्थले तत्तदभावानुमित्योरिवो-त्पादासम्भवात् । यत्र तु कतिपयेष्वेव दण्डादिषु घटकारणताज्ञानं तद्व्यभिचार-ज्ञानविरहश्च तत्रेष्यत एव दण्डत्वावच्छेदेनैव घटकारणत्वज्ञानम् । अन्यथा जलाधिकरणाखिलह्रदादीनां ज्ञानस्यासर्वज्ञास्मदादीनामसम्भवेन कतिपयतदधि-करणेषु वह्न्यभाववत्तानिश्चयाज्जलावच्छेदेन वह्न्यभाववत्तासिद्धिः कदापि नोदिया-दिति । न चैवमपि गवादिपदादभ्रान्तस्य शक्त्या सास्नादिमत्त्वप्रकारकान्वय-बोधस्य वारणाय तत्पदजन्यतद्धर्म्मप्रकारकान्वयबोधं प्रति तत्पदे तद्धर्म्मावच्छिन्न-निरूपितवाचकतायास्तत्पदनिरूपितवाच्यताया वा तद्धर्म्मावच्छिन्ने निश्चयस्य कारणतायाः क्लृप्ततया सामान्यधर्म्मानवगाहिविशेषधर्म्मावच्छिन्नविषयताके संशये सामान्यधर्म्मावगाहिविशेषधर्म्मावच्छिन्ननिश्चयस्याविरोधितयोक्तसा-मान्यधर्म्मावगाहिनो वाच्यत्वनिश्चयस्य तत्पदवाच्यत्वं चैत्रत्वावच्छिन्नं नवेति संशयानिवर्त्तकतयोक्तसंशयसत्त्वे तादृशान्वयबोधानुपपत्तिरिति वाच्यम्, उक्तरीत्या तत्तत्पदप्रयोजकबुद्धिप्रकारतावद्धर्म्माश्रये गोत्वघटत्वादिविशिष्टेषु तत्तत्पदवा-च्यतावगाहिज्ञानानन्तरं यद्यत्पदं यादृशयादृशबुद्धिप्रयोज्यं तत्तत्पदं तादृशबुद्धि-प्रकारतावद्धर्म्मावच्छिन्नवाचकं तादृशबुद्धिप्रकारतावद्धर्म्मो वा तत्तत्पदवाच्यता-वच्छेदक इति सामान्यमुखीं व्याप्तिं निश्चिनोति । तदनन्तरं तत्पदवाच्यत्वेना-गृहीतस्यापि चैत्रत्वादिविशिष्टस्य प्रत्यक्षेण ग्रहे तद्विषयकबुद्धिप्रयोज्यत्वस्य तद्-व्यक्त्यात्मके तत्पदे निश्चये एतत्तत्पदं चैत्रत्वावच्छिन्नवाचकं चैत्रत्वं वा एतत्तत्पद-वाच्यतावच्छेदकं चैत्रत्वावच्छिन्नविषयकबुद्धिप्रयोज्यत्वात् स्वप्रयोजकबुद्धि-प्रकारत्वाद्वेत्यनुमित्या तादृशवाचकत्वादेः प्रागज्ञातस्यापि पक्षधर्म्मताबलात् विधेयत्वेनावगाहनस्य सम्भवादेवोक्तसंशयानुदयात् । न च प्रकृतसाध्यसाधन-कानुमितौ प्रकृतसाध्यसाधनयोर्व्याप्तिनिश्चयस्यैव कारणतया तादृशनिश्चयस्य च तयोर्व्यभिचारज्ञानाभावसहकृतेन सामानाधिकरण्यनिश्चयेनैवोत्पत्तुमर्हतया कथं सामान्यसामानाधिकरण्यज्ञानजन्यसामान्यव्याप्तिनिश्चयेनोक्तानुमितिरिति वाच्यम्, प्रकृतसाधनसजातीये प्रकृतसाध्यसजातीयसामानाधिकरण्यनिश्चयस्यापि प्रकृत-

साध्यसाधनयोर्व्याप्तिनिश्चये कारणत्वात् स्वसाध्यकानुमितिप्रयोजकोदाहरण-घटकद्विरुक्तयत्पदतात्पर्य्यविषयत्वस्वरूपस्वसाजात्यस्य घटत्वविशिष्टे सत्त्वात्तद्वा-चकत्वतत्तत्पदत्वतादृशविषयतावच्छेदकघटत्वादितत्पदवाच्यतावच्छेदकत्वयोर्वा सामानाधिकरण्यग्रहस्य सत्त्वात्तेनैव प्रकृतसाध्यसाधनयोर्व्याप्तिनिश्चयस्य सम्भवात्। स्वसजातीयसामानाधिकरण्यग्रहस्य स्वनिरूपितव्याप्तिनिश्चायकत्वा-नुपगमे बालकस्य स्वीयस्तन्यपानप्रवृत्तेः स्वकीयेष्टसाधनत्वकृतिसाध्यताज्ञानो-त्तरमेव जायमानत्वेन यो यत्साध्यकप्रवृत्तिमान् स तद्विशेष्यकेष्टसाधनत्वादिज्ञान-वानिति सामान्यव्याप्तिग्रहेण प्रयोजकवृद्धप्रयुक्तगामानयेत्यादिवाक्यजबोधानन्तरं प्रयोज्यस्य गवानयनादिसाध्यकप्रवृत्तिलिङ्गकगवानयनादिविशेष्यकेष्टसाधनत्वादि-साध्यकतत्पुरुषोद्देश्यकानुमितेस्सर्वानुभवसिद्धाया अपलापापत्तेः, अनुभवस्मरण-योस्समानप्रकारताकत्वमात्रेणैव निरवच्छिन्नत्वाद्यघटितेन कार्य्यकारणभावमते च बुद्धिप्रकारवाँस्तत्पदशक्य इत्याकारकानुगतबुद्धिप्रकारत्वविशिष्टविषयकशक्ति-ज्ञानजन्यतादृशसंस्कारेण बुद्धिप्रकारत्वे उद्बोधकविरहात्तदविषयकस्यापूर्वचैत्र-त्वादिमात्रप्रकारकस्मरणस्य सुलभत्वाच्च।

ननु तथापि सामान्यतो बुद्धिप्रकारत्वस्यानुगमकत्वे जन्यबुद्धिप्रकारत्वस्य वा तत्त्वे नित्यज्ञानीयं कालान्तरीयपुरुषान्तरीयज्ञानीयं वा प्रकारत्वमादा-यातिप्रसङ्गः। वक्तृबुद्धेस्तद्घटकत्वेपि कालान्तरीयबुद्धिमादाय स एव दोषः, तत्कालीनत्वतत्पुरुषीयत्वयोर्बुद्धौ विशेषणत्वोपगमेननुगमतादवस्थ्यमिति चेन्न, स्वोच्चारणप्रयोजकबुद्धिप्रकारतावद्धर्म्मविशिष्टविषयताकत्वस्वजन्यत्वोभयसम्बन्धा-वच्छिन्नतत्पदत्वावच्छिन्नप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यताक एव भगवत्सङ्केतः फलबलकल्प्यः। तत्र च स्वत्वस्य सम्बन्धघटकतया परिचायकता-मात्रम्, न तु तस्य प्रवेशोन्योच्चारणघटितस्यान्यसम्बन्धत्वाभावादेवातिप्रसङ्ग-विरहात्। तत्तत्पदानामपि तत्र न तत्तद्व्यक्तित्वेन प्रवेशः, किन्तु तत्पदवृत्त्यानु-पूर्वीविशिष्टत्वेनैवातो न व्यक्तिभेदमादाय शक्तिभेदप्रसङ्गः, कालान्तरीय-पुरुषान्तरबुद्धीनामेतत्पदोच्चारणाप्रयोजकत्वान्नोक्तदोषः। तादृशसङ्केतज्ञानस्य तत्पदप्रयोजकबुद्धिप्रकारत्वसमानाधिकरणप्रकारताशालिशाब्दबोधं प्रति स्वनिष्ठ-प्रकारतानिरूपितबोधत्वावच्छिन्नेच्छीयविशेष्यतानिरूपितोभयत्वावच्छिन्न-संसर्गतानिरूपितनिरूपितत्वसंसर्गावच्छिन्नावच्छेदकतावद्विषयतावत्त्वसंसर्गाव-च्छिन्नतत्पदत्वावच्छिन्नप्रकारतानिरूपितबुद्धिप्रकारत्वोपलक्षितधर्म्मावच्छिन्न-विशेष्यताशालिनिश्चयत्वेन कारणत्वम्। तत्पदवाच्यत्वं सङ्केतीयतादृशविषयता-

इतरा तु[1] सङ्केतः प्रकारतायां[2] यद्धर्म्मावच्छिन्नत्वमवगाहते तद्धर्म्मावच्छिन्ना । यथा धन्यपदात्पुण्यत्वावच्छिन्नपुण्यप्रकारतानि-

वत्त्वमेव । तत्पदनिष्ठं तद्धर्म्मविशिष्टवाचकत्वन्तु सङ्केतीयबोधत्वावच्छिन्नविशेष्यतानिरूपितोभयत्वावच्छिन्नसंसर्गतानिरूपितविषयत्वनिष्ठावच्छेदकता - निरूपितावच्छेदकतावद्धर्म्मावच्छिन्नविपयकबुद्धिप्रयोज्योच्चारणकर्म्मत्वम् । तदपि स्वोच्चारकोच्चरितत्वोक्तरीत्या तादृशकर्म्मतावत्सजातीयत्वमेवेति न तत्रोक्तदोपावकाशः । एवञ्च रक्तत्वविशिष्टदण्डविषयकबुद्धिप्रयोज्यस्य तत्पदस्य शुद्धदण्डत्वविशिष्टवाचकत्ववारणाय प्रकारताया व्यासज्यवृत्तित्वे स्वोच्चारणप्रयोजकबुद्धिप्रकारतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नविपयतावत्त्वस्य तस्यास्तत्त्वाभावेपि बहुतरासामञ्जस्यभयेनावच्छेदकतायास्तत्त्वस्यावश्यकतया स्वोच्चारणप्रयोजकबुद्धिविपयतावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नत्वस्यैवोभयसंसर्गघटकत्वम्, तावतैवोक्तापत्तिवारणं कर्त्तव्यम् । न चैवं शुद्धघटत्वप्रकारताकबुद्धिप्रयोज्यतत्पदस्य तादृशघटत्वावच्छिन्नवाचकत्वानुपपत्तिस्तादृशविषयतावच्छेदकतायास्तत्राप्रसिद्धेरिति वाच्यम्, विशेष्यतायाः प्रकारत्वावच्छिन्नत्वस्योपगततया तादृशज्ञानीयविशेष्यतानिरूपितावच्छेदकतायाः घटत्वे सम्भवात् । तदनभ्युपगमेपि घटकर्म्मकानयनादिबोधतात्पर्य्येण घटोस्ति तमानयेत्यादिप्रयोगस्यैव दृष्टतया शुद्धघटत्वप्रकारताकबुद्धेस्तत्पदाप्रयोजकत्वादेव तत्रानुपपत्तिर्वारणीयः । न चैवमपि स्वोच्चारणेत्यादिसंसर्गे स्वत्वस्य परिचायकता एवोक्तत्वेन सामान्यत उच्चारणप्रयोजकबुद्धिविपयतावच्छेदकतापर्य्याप्तिः कथं घटत्वे ? पटविपयकबुद्धेरपि तादृशतया तद्विपयतावच्छेदकत्वस्य पटत्वेपि सत्त्वादिति वाच्यम्, बुद्धिविपयनावच्छेदकाखिलघटत्वपटत्वादिनिष्ठाया एकस्याः पर्य्याप्तेः प्रमाणाभावेनाभावादुक्तसंसर्गघटकपर्य्याप्तिपदेन प्रसिद्धाया यत्किञ्चित्पर्य्याप्तेरेव ग्रहणेन घटत्वादेस्तदधिकरणत्वस्याक्षतेः । तादृशबुद्धिविपयता च साक्षात्परम्परासाधारण्येव प्रविष्टा । नातो जातिमत्त्वेन घटविपयकबुद्धिप्रयुक्ततत्पदशक्तंभेद इत्येवं तत्पदसङ्केतस्य बुद्धिविपयत्वाद्यवच्छिन्नत्वविशिष्टविपयतावच्छेदकत्वाभावात् परिचायकीभूतबुद्धिविपत्वावच्छिन्नत्वमिति ।

तद्विशेपितमित्युदाहरति—**इतरा त्विति । पुण्यवृत्तिः प्रकारतेति ।**

---

१ तु । इति मु० पु० पा० ना० ।

२ सङ्केतप्रकारतायाम् । इति मु० पु० पा० ।

**रूपितायां[1] पुण्यवद्विशेष्यतायाः प्रतियोगिनी बुद्धिर्जायतामिति सङ्केतस्य पुण्यवृत्तिः प्रकारता। यथा वा लोमत्वावच्छिन्नलोमप्रकारतानिरूपितलाङ्गूलत्वावच्छिन्नविशेष्यत्वेनाभिन्नावच्छिन्ना वा लोमलाङ्गूल-**

"सुकृती पुण्यवान् धन्यः" इत्यमराद्धन्यपदस्य पुण्यवति शक्ततया जात्यखण्डोपाध्यतिरिक्तस्य पुण्यस्य स्वरूपतोवगाह्यत्वासम्भवादनेकत्वेन शक्यानुगमकत्वासम्भवाच्च पुण्यत्वजात्यैव तस्य तथात्वात् पुण्यनिष्ठसङ्केतीयप्रकारतायास्तदवच्छिन्नत्वात् सङ्केतोपि पुण्यत्वावच्छिन्नप्रकारतानिरूपितपुण्यविशेष्यताकाबुद्धिः पुण्यपदजन्या भवत्वित्याकारक एव तत्रेत्यर्थः। निरवच्छिन्नावच्छेदकताकप्रकारताकं सङ्केतं प्रदर्श्य सावच्छिन्नावच्छेदकताकप्रकारताकं तं दर्शयति—**यथा वेति। विशेष्यत्वेनाभिन्नेति।** "समानाधिकरणयोः प्रकारत्वविशेष्यत्वयोरभेदः" इति मते लोमवल्लाङ्गूलावच्छिन्नविशेष्यताका बुद्धिः पशुपदजन्या भवत्वित्याकारकसङ्केतीयविषयताश्रये लाङ्गूले लोमप्रकारतानिरूपितविशेष्यतायाः आश्रयनिष्ठविशेष्यतानिरूपितप्रकारतायाश्च सत्त्वेन समानाधिकरणयोस्तयोरभेद इत्यर्थः।

अत्र यद्यपि कारणत्वप्रतिबन्धकतावच्छेदकादिकुक्षावेकपदार्थनिष्ठविषयताद्वयनिवेशापेक्षयैकविषयताया एव निवेशाल्लाघवमस्ति, तथापि संयोगेन पुरुषाभावान् दण्ड इति बुद्धिं प्रति संयोगेन पुरुषवान् दण्ड इति निश्चयस्य संयोगसम्बन्धावच्छिन्नपुरुषत्वावच्छिन्नप्रकारतानिरूपितदण्डत्वावच्छिन्नविशेष्यता-शालित्वेनैव प्रतिबन्धकतया तस्य च रक्तदण्डवत्पुरुषवानयमिति ज्ञानेपि दण्डनिष्ठपुरुषविशेष्यतानिरूपितप्रकारतायाः रक्तत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नतया पुरुषनिष्ठेदन्त्वावच्छिन्नविशेष्यतानिरूपितप्रकारतायाश्च दण्डनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नत्वान्निराबाधया तस्यापि तादृशबुद्धिप्रतिबन्धकत्वापत्तिः। तद्वारणाय पुरुषत्वावच्छिन्नप्रकारतात्वावच्छिन्ननिरूपकतानिरूपितदण्डत्वावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूप्यतावद्विशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वोपगमे तत्र धर्म्मिणोर्विशेष्यत्वप्रकारत्वयोरभेदेपि प्रकारतात्वादेर्धर्म्मस्य भेदात् प्रकृते पुरुषवान् दण्ड इति निश्चये पुरुषत्वावच्छिन्नप्रकारतात्वेन दण्डत्वावच्छिन्नविशेष्यतात्वेनैव निरूप्यनिरूपकभावाभ्युपगमात्तस्य प्रतिबन्धकत्वम्। रक्तदण्डवत्पुरुषवानयमिति निश्चये च दण्डत्वावच्छिन्नप्रकारतात्वेन

---

१ पुण्यत्वावच्छिन्नया प्रकारतया निरूपितायाः। इति मु० पु० पा०।

त्वोभयावच्छिन्ना या लोमवल्लाङ्गूलवृत्तिर्प्रकारता[४] तन्निरूपकपशुवृत्ति-विशेष्यताका बुद्धिः पशुपदजन्येति सङ्केतस्य लाङ्गूलादिवृत्तिः प्रकारत्व-विशेषणता प्रकारतावच्छेदकतया भासमानेन पुण्यत्वलाङ्गूलत्वलोमादिना[५] वच्छिन्ना ।

एषा त्रिविधापि प्रवृत्तिनिमित्ते सङ्केतोद्देश्यबुद्धिविशेषणप्रकारत्व विशेषणता क्वचिदेकैव, तदितरप्रकारताकत्वानवच्छिन्ना तत्प्रकारताक-बुद्धित्वावच्छिन्ना सङ्केतोद्देश्यतेति यावत् । तथा च कश्चित्सङ्केतः एक-मात्रधर्म्मप्रकारकबुद्ध्युद्देश्यकः, यथा गोपदस्य तत्पर्य्यायतदादिपदस्य धन्यादिपदस्य च । अपरो नानाधर्म्मप्रकारकबुद्ध्युद्देश्यकः, यथा

पुरुषत्वावच्छिन्नविशेष्यतात्वेनैव निरूप्यनिरूपकभावो न तु तादृशविशेष्यता-त्वादिनापीति न तस्य प्रतिबन्धकत्वापत्तिरित्युक्तौ च महद्गौरवमतोवच्छेद्या-वच्छेदकभाव एव तयोरित्याशयेनाह—**अवच्छिन्ना वेति । एषेति ।** अनुपद-मेवोक्ता निरवच्छिन्ना बुद्धिविषयत्वाद्युपलक्षणधर्म्मावच्छिन्ना शक्यतावच्छेद-कतावच्छेदकपुण्यत्वावच्छिन्नेति भेदत्रयवतीत्यर्थः । एकत्वस्य केवलान्वयित-यैवकारार्थाप्रसिद्धेराह—**तदितरेति । एकमात्रधर्म्मप्रकारकेति ।** अत्र प्रकारता साक्षात्परम्परया वा बोध्या, गोपदजन्यबोधीयविशेष्यताश्रये गोत्वस्य साक्षात् धेनुपदजन्यबोधीयविशेष्यताश्रये पुण्यत्वस्य परम्परया प्रकारत्वात् । **तत्पर्य्या-येति ।** तत्त्वञ्च तत्पदशक्यतावच्छेदकावच्छिन्नशक्तत्वम् । तेन प्रमेयादिपदानां न गोपदपर्य्यायत्वम्, तत्पदजन्यबोधे गोत्वादीनामेकैकेषामेव यथा प्रकारत्वं तथोक्तमधस्तात् ।

कारिकोक्तं **नानेति** सोदाहरणं विवृणोति—**अपरो नानेत्यादिना । यथा धावल्येति ।** "पुण्डरीकं सिताम्भोजम्" इत्यमरात्पुण्डरीकशब्दस्य तदुभयविशिष्टवाचकत्वादित्यर्थः । **आदिना** रक्तत्वपद्मत्वोभयविशिष्टवाचिनः कोकनदपदस्य, पुंस्त्वगोत्वोभयविशिष्टवाचिनो वृषभशब्दस्योपग्रहः । एवमन्ये-

---

४ लोमवल्लाङ्गूलवृत्तिः प्रकारतया । इति मु० पु० पा० ।

५ लाङ्गूलत्वलोमादिना । इति मु० पु० पा० ।

**धावल्यपद्मत्वोभयविशिष्टवाचिनः पुण्डरीकादिशब्दस्य, धानकर्म्मत्व-गोत्वोभयविशिष्टव्यक्तिवाचिनो धेन्वादिशब्दस्य ।**

**स च द्विविधः एकत्र विशेष्ये नानाधर्म्मप्रकारकत्वावगाही, नाना-धर्म्मिणि नानाधर्म्मप्रकारकत्वावगाही* च । आद्य उदाहृतः । अन्त्यो**

षामपि । **धानकर्म्मत्वेति** । "धेनुस्तु नवसूतिका" इत्यमराद्धेनुपदस्य धानकर्म्मत्वगोत्वोभयविशिष्टे शक्तिः । धानकर्म्मत्वञ्च विभागजनकत्वे सति गलाधस्संयोगानुकूलव्यापारात्मकपानार्थकधेड्धात्वर्थतावच्छेदकविभागवत्त्वम् । विभागसंयोगौ द्रवद्रव्यप्रतियोगिकौ ग्राह्यौ । तेन भक्तं धयतीत्यस्य न प्रामाण्यम् । स्तनं धयतीत्यादौ तादृशव्यापारस्वरूपधात्वर्थैकदेशे विभागे द्वितीयार्थाधेयत्वान्वयः । तादृशविभागस्यानुयोगित्वात् स्तनादेः प्रतियोगित्वाच्च दुग्धादेः कर्म्मता । गा धयतीत्यादिव्यवहारस्तु तादृशविभागस्य स्वाश्रयसमवेतत्वसम्बन्धेन गवि सत्त्वादुपपादनीयः । **धेन्वादिपदस्येति** । अत्र केचित् "दाधाभ्यान्नुः" इत्यनुवृत्तौ "धेट इच्च" इत्यौणादिकसूत्रेण धयति सुतान् दुग्धं पाययतीत्यन्तर्भावितण्यर्थे नुप्रत्ययेन धेनुशब्दस्य निष्पन्नतया यौगिकत्वमेव, न तु रूढत्वमित्याहुस्तन्न, उणादिसूत्राणां कथञ्चिद् व्युत्पादनपरत्वेन शक्तिग्राहकत्वाभावात् समुदायशक्तौ लाघवाच्च । अत एव पञ्चपादिकाविहितानुणादिप्रत्ययानेकेनैव "उणादयो बहुलम्" इति सूत्रेण पाणिनिर्विहितवान् । येषु प्रत्ययेषु तत्तदर्थनिरूपिता शक्तिस्तान् प्रत्येकमेव तत्तत्सूत्रेण विहितवानिति बोध्यम् । अत्राप्यादिपदाद्दुःखासम्भिन्नत्वसुखत्वोभयविशिष्टवाचकस्वर्गादिपदपरिग्रहः । **स चेति । चोप्यर्थे** । नानाधर्म्मविशिष्टधर्म्यवगाही सङ्केतोऽपि धर्म्मिभेदाभेदाभ्यां द्विविध इत्यर्थः । द्वैविध्यमेव दर्शयति—**एकत्रेत्यादिना । उदाहृत इति ।** धेनुपुण्डरीकादिशब्दसङ्केतेनैकत्रैव गोपद्मादौ नानाधर्म्माणां धावल्यादीनां प्रकारतया विशेषणत्वेनावगाहनादाद्यस्य धेन्वादिशब्द एवोदाहरणमित्यर्थः । द्वितीयमाह—**अन्त्यो यथेति ।** "नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ" इत्यमरान्नासत्यादिशब्दानां सूर्य्यादश्विनीरूपायां छायायां जाते भ्रातृद्वये शक्तेस्तत्पदसङ्केतस्य धर्म्मिद्वयनिष्ठविशेष्यतानिरूपितधर्म्मद्वयनिष्ठप्रकारताकबुद्ध्युद्देश्यकत्वमिति भावः । तादृशधर्म्मद्वयं दर्शयति—

---

* नानाप्रकारकत्वावगाही । इति मु० पु० पा० ।

**यथा स्वर्वैद्यशरीरद्वयवृत्ति यदेकदानेकावृत्तिजातिद्वयं † तत्प्रत्येक-प्रकारतानिरूपितप्रत्येकविशेष्यताकबुद्धिगोचरो नासत्यपदसङ्केतः ।**

**यथा वा सूर्य्यत्वेन सूर्य्यमिन्दुत्वेनेन्दुमवगाहमाना बुद्धिर्जायता-मिति पुष्पवन्तपदसङ्केतः ।**

**यत्तु पुष्पवन्तपदाच्चन्द्रसूर्य्यवृत्तिद्वित्ववत्त्वैव बुद्धयते । तथा च**

**शरीरद्वयेति** । एकदानेकावृत्तिजातेरप्रसिद्धिरतः **शरीरद्वयवृत्तीति** । चैत्रीयादिसर्वशरीराणामेकशरीरनाशे सत्येवापरशरीरस्योत्पाद इति विभिन्न-कालीनानेकचैत्रीयशरीरमादायैव चैत्रत्वादीनां जातित्वम् । अनेकावृत्तेर्जातित्वा-भावा**देकदेति** । न च देवशरीराणामुपचयापचयाभावेन नाशोत्पादयोरभावा-देकत्वमेव, अत एव देवाना त्रिदशत्वमिति तद्वृत्तिधर्म्मस्य कुतो जाति-त्वमिति वाच्यम्, कल्पभेदेन देवशरीराणामप्यनेकत्वात् । अत एव देवत्वादिकं जातिमादायैव जातिघटितशरीरलक्षणसमन्वयस्तेषु मुक्तावल्या विश्वनाथभट्टा-चार्य्येण कृत इति बोध्यम् । एवं पुष्पवन्तपदस्यापि "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इत्यमराच्चन्द्रत्वसूर्य्यत्वात्मकनानाधर्म्मविशिष्टचन्द्रसूर्य्या-त्मकनानाधर्म्मिवाचकत्वादेकधर्म्मं परित्यज्यापरधर्म्मप्रकारकान्वयबोधानभ्युपग-मात् सूर्य्यत्वप्रकारतानिरूपितसूर्य्यनिष्ठविशेष्यताका चन्द्रत्वप्रकारतानिरूपित-चन्द्रनिष्ठविशेष्यताका च बुद्धिः पुष्पवन्तपदजन्या भवत्वित्याकारकस्यैव सङ्केतस्य तत्राभ्युपेतत्वात् नानाधर्म्मिनिष्ठविशेष्यतानिरूपितनानाधर्म्मप्रकारता तत्राप्यस्तीत्याह—**यथा वेति** । **सूर्य्यत्वेने**त्यादितृतीयाद्वयार्थो निरूपितत्वे-नावगाहत्यर्थविशेष्यत्वान्वितप्रकारत्वम् । **सूर्य्यमिति** द्वितीयाद्वयार्थो निष्ठत्व-द्वयमपि तादृशविशेष्यत्वान्वय्येव ।

पुष्पवन्तपदात्सूर्य्यचन्द्रोभयवृत्तिद्वित्वप्रकारताक एवान्वयबोध इति मते तत्पदसङ्केतो नोक्ताकारकः, किन्तु तादृशद्वित्वप्रकारकबुद्ध्युद्देश्यक एवेति तत्र सूर्य्यचन्द्रोभयनिष्ठविशेष्यतायाः नानाधर्म्मनिष्ठप्रकारताकत्वविरहात्तस्य नोक्तो-दाहरणत्वसम्भव इत्यतस्तन्मतं निरसितुमादौ दर्शयति—**यत्त्वित्यादिना** । द्वित्वस्य समवायेनान्यत्रापि सत्त्वेनातिप्रसक्ततया शक्यतावच्छेदकत्वासम्भवा-दाह—**तथा चेति** । तदुभयवृत्तिद्वित्वस्यैव प्रकारतया बोधे च । **सामाना-**

---

† यज्जातिद्वयम् । इति मु० पु० पा० ।

सामानाधिकरण्येन चन्द्रत्वसूर्य्यत्वाभ्याᳵमवच्छिन्नया द्वित्ववृत्तिप्रकारतया निरूपितायाश्चन्द्रसूर्य्योभयनिष्ठविशेष्यतायाः प्रतियोगिनीं बुद्धिमवगाहमान एव तत्र† सङ्केतः।

तज्जनितस्मरणशाब्दबोधादिकन्तु सामानाधिकरण्येन चन्द्रत्वसूर्य्यत्वाभ्यामवच्छिन्नं द्वित्वमिव चन्द्रत्वसूर्य्यत्वोभयमपि धर्म्मिणि विशेषणतया गृह्णाति, सामानाधिकरण्येन तद्धर्म्मविशिष्टस्य वैशिष्ट्यमवगाहमानाया बुद्धेः सविषयकस्य वा सामानाधिकरण्यघटकसंसर्गेण धर्म्मिणि विशेषणतावच्छेदकीभूततद्धर्म्मवैशिष्ट्यावगाहित्वनियमात्।

अत एव गुणकर्म्मान्यत्वविशिष्टसत्ताया द्रव्ये वैशिष्ट्यमवगाहमाना

धिकरण्येनेति। एवञ्च सामानाधिकरण्यसंसर्गेण चन्द्रत्वसूर्य्यत्वविशिष्टमेव द्वित्वं पुष्पवन्तपदशक्यतावच्छेदकम्। तच्चान्यूनानतिप्रसक्तमेवेति भावः।

ननु तर्हि तत्पदाद् द्वित्वप्रकारताकावेव स्मरणशाब्दबोधावपि स्याताम्, न तु तत्र चन्द्रत्वसूर्य्यत्वयोरपि प्रकारत्वसम्भवस्तयोर्द्वित्वे एव विशेषणत्वादित्यत आह—**तज्जनितेत्यादि। धर्म्मिणि** चन्द्रे सूर्य्ये च। समवायेन रक्तत्वविशिष्टस्य दण्डादेर्वैशिष्ट्यं पुरुषेवगाहमानापि बुद्धिर्न समवायेन रक्तत्ववैशिष्ट्यं पुरुषेवगाहत इत्यतः **सामानाधिकरण्येने**त्युक्तम्। तृतीयाया अभेदार्थस्य वैशिष्ट्यपदार्थे सम्बन्धेन्वयात्सामानाधिकरण्याभिन्नसम्बन्धलाभः। **बुद्धेरिति।** तन्मात्रस्यैव तथावगाहित्वानुभवाभिप्रायेण। इच्छादीनामपि तथात्वानुभवेत्वाह—**सविषयकस्य वेति।** ज्ञानेच्छाद्वेषप्रयत्नभावनानामित्यर्थः। तेन सम्बन्धेनेत्युक्तौ तत्पदपरामर्शनीयसामानाधिकरण्येन चन्द्रत्वादेश्चन्द्रादावभावात्तदवगाहिन्या बुद्धेर्भ्रमत्वापातस्स्यादित्यत**स्सामानाधिकरण्यघटके**त्युक्तम्। उक्तसामानाधिकरण्यस्य स्वाधिकरणे समवायेन वृत्तित्वरूपत्वात् तद्घटकस्समवाय एवात्र संसर्गस्तेनैव चन्द्रत्वादेरुक्तबुद्धौ चन्द्रादिविशेषणत्वमावश्यकमित्याशयः।

उक्तनियमानभ्युपगमेनुपपत्तिमाह—**अत एवेति।** गुणकर्म्मान्यत्वविशिष्ट-

---

ᳵ चन्द्रसूर्यत्वाभ्याम्। इति मु० पु० पा०।

† तत्र। इति मु० पु० पा० ना०।

**बुद्धिर्द्रव्ये गुणान्यत्वादेरपि वैशिष्ट्यमवगाहते, तेन गुणादौ* तादृश-प्रतीतिर्जायमानापि न प्रमाणमिति तन्न, पुष्पवन्तपदाद्द्वित्वबुद्धेरनुभव-विरुद्धत्वात् , "द्वौ पुष्पवन्तौ जगति द्वौ दस्रौ द्वे पुनर्वसू"...इत्यादा-**

सत्तावदिति स्वरूपसम्बन्धेन स्वाधिकरणे समवायेन वृत्तित्वात्मकसामानाधिकरण्यसंसर्गेण गुणकर्म्मान्यत्वस्य वैशिष्ट्यं सत्तायामवगाहते, सत्तायाश्च समवायात्मकवैशिष्ट्यं द्रव्येवगाहत इति सामानाधिकरण्यघटकेन स्वरूप-सम्बन्धेन द्रव्ये गुणान्यत्ववैशिष्ट्यमप्यवगाहत इत्यर्थः । **तेन** धर्म्मिणि तादृश-संसर्गेण गुणाद्यन्यत्वावगाहनेन । **न प्रमाणमिति** । गुणो गुणान्यत्वविशिष्ट-सत्तावानिति बुद्धावप्युक्तनियमात् स्वरूपेण गुणे गुणान्यत्वावगाहिताया आवश्यकत्वात्तस्य च गुणे बाधादप्रामाण्यं तस्या इत्याशयः । उक्तनियमानभ्यु-पगमे तु सत्ताया द्रव्यादित्रिकवृत्तेरैक्याद् गुणे तद्बुद्धेः प्रमात्वमेव स्यादिति बोध्यम् । इदमुपलक्षणम् । उक्तनियमानुपगमेपि सामानाधिकरण्येन चन्द्रत्व-सूर्य्यत्वावच्छिन्नोभयत्वावच्छिन्नस्वनिरूपितशक्तिसम्बन्धेन चन्द्रसूर्य्यवत्पुष्प-वन्तपदमिति शक्तिज्ञाने चन्द्रत्वादेराश्रये भानाच्छाब्दबोधेपि भानसम्भव इति ।

उक्तमतं खण्डयति—**तन्नेति । पुष्पवन्तपदादिति । पुष्पवत्पदमिति** क्वचित्पाठः । "एकयोक्त्या पुष्पवन्तौ" इत्यमरे मतुबन्तस्याकारान्तस्य च ग्रहणात् । तत्राकारान्तोवक्तेरौणादिकझच्प्रत्यये शकन्ध्वादित्वात्पररूपे सिद्धः "प्राक्प्रत्यग्धरणीधरशिखरस्थितपुष्पवन्ताभ्याम्" इत्याश्चर्य्यमञ्जर्य्यां प्रयोग-दर्शनात् । पुष्पवन्ताविति प्रयोक्तव्ये पुष्पदन्तावित्यपि क्वचित्प्रयुज्यते । अनुभवस्य विवादग्रस्ततया दोषान्तरमाह—**द्वाविति** । **द्वे** इति तारकाभि-प्रायेण स्त्रीत्वमन्यथा पुनर्वसुशब्दस्य पुँल्लिङ्गत्वात् द्वाविति स्यात् । "पुनर्वसू द्वे तारे" इति वृद्धानामैतिह्यम् ।

अत एव—"तौ विदेहनगरीनिवासिनाम् ।
गाङ्गताविव दिवः पुनर्वसू ॥
मन्यते स्म पिबतां विलोचनैः ।
पक्ष्मपातमपि वञ्चनाम्मनः ॥"

---

* न । इति मु० पु० पा० ।

**वनन्वयापत्तेश्च । अत एव भिन्नया भिन्नया शक्त्या तत्तदुपस्थापक-नानार्थशब्दात्* पुष्पवन्तपदस्य† वैलक्षण्यद्योतनाय "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इत्यत्र शक्त्यैक्यमेकयोक्त्येत्यनेनोक्तम् ।**

**सङ्केतविषयस्य भेदेऽपि बोधवृत्तेस्सङ्केतोद्देश्यतताया ऐक्येन शक्त्यै-**

इति ११ सर्गे रघुवंशे ३६ श्लोके कालिदासोपि प्रायुङ्क्त । ‡तदेतज्ज्यौतिपविरुद्धम् । **अन्वयानुपपत्तेश्चेति** । उद्देश्यतावच्छेदकस्य पुष्पवन्तादिपदार्थतावच्छेदकद्वित्वस्य द्विपदार्थद्वित्वेन विधेयेन सहाभेदादित्यर्थः । **अत एव** पुष्पवन्तपदस्योक्तसम्बन्धेन चन्द्रत्वादिविशिष्टद्वित्वावच्छिन्ननिरूपितशक्तिविरहादेव । **भिन्नया भिन्नयेति** । एकस्यापि हरिशब्दस्य विष्ण्वादिनानार्थवाचकस्य तत्तदर्थनिरूपिता शक्तिः प्रत्येकं भिन्नैव । पुष्पवन्तपदस्यार्थद्वयवाचकस्यापि तयोरेकैकशक्तिरिति नानार्थपदनिरूपितवैलक्षण्यस्य द्योतनायैवान्यपदेष्वनुक्तस्य "एकयोक्त्या" इत्यस्यात्रोपादानम् । तादृशद्वित्ववति तत्पदस्य शक्तौ तु शक्यतावच्छेदकस्यैक्यादेव तादृशवैलक्षण्यस्य शक्यैक्यस्य च सम्भवात्तदुपादानमनर्थकमेव स्यादित्याशयः । एतेन "द्वौ पुष्पवन्तौ"...इत्यादौ द्वावित्यस्य पुष्पवन्ताविति द्विवचनस्य च तादृशशक्तिग्राहकतया साधुत्वमात्रार्थकतया च तयोरर्थस्यानन्वितत्वेपि न क्षतिरित्यपास्तम् ।

नन्वेवं तत्पदसङ्केतस्य कथमैक्यम् ? शक्यस्य शक्यतावच्छेदकस्य चानेकतया तत्प्रयोजकस्याभावादित्यत आह—**सङ्केतविषयस्येति** । चन्द्रादेश्चन्द्रत्वादेश्चेत्यर्थः । **सङ्केतोद्देश्यतताया इति** । उक्तसङ्केतीयचन्द्रत्वादिप्रकारताकत्वावच्छिन्नबुद्धित्वावच्छिन्नविशेष्यतताया इत्यर्थः । **ऐक्येनेति** । तथा च सङ्केतीयोद्देश्यतताया ऐक्यमेव शक्तेरैक्यप्रयोजकमिति प्रकृतेपि तस्य सत्त्वान्न शक्तेरैक्यानुपपत्तिरिति भावः । ईश्वरेच्छारूपायाः शक्तेरेकत्वस्यैव सत्त्वात्

* तत्तदुपस्थापकान्नानार्थशब्दात् । इति मु० पु० पा० ।

† पुष्पवन्तादिपदस्य । इति मु० पु० पा० ।

‡ मुहूर्तचिन्तामणौ नक्षत्रप्रकरणे—"त्रिव्यगपञ्चाग्निकुवेदवह्नयः शरेषुनेत्राश्विशरेन्दुभूकृताः । वेदाग्निरुद्राश्वियमाग्निवह्नयोऽब्धयः शत द्विद्विरदाभतारकाः ॥" इति सप्तपञ्चाशत्तमेन श्लोकेन पुनर्वसोश्चतसृतारकास्वरूपमुक्तं श्रीरामदेवज्ञेन, न तु तारकाद्वयात्मकत्वमिति तदेव विरुद्धमिति भावः ।

**क्यव्यवहारः। नानार्थपदसङ्केतीयन्तु बुद्धेरुद्देश्यताद्वयं तत्तद्धर्म्मप्रकारक-**

सर्वत्र तस्या एकत्वमेवेति नानार्थकशब्दानामपि शक्त्यैक्यप्रसङ्ग इति स्वरूपत-स्तदैक्यन्न वैलक्षण्यप्रयोजकम्, किन्तु सङ्केतीयोद्देश्यतागततद्व्यक्तित्व-स्वरूपस्यैकत्वस्य परम्परया शक्तिनिष्ठत्वे नानार्थत्वाभावस्तस्य तदनिष्ठत्वे च नानार्थत्वमित्यस्यैव वक्तव्यत्वात्तदभिप्रेत्य शक्त्यैक्यमित्यनुक्त्वा **व्यवहार** इत्युक्तम्।

अथ पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयको बोधो भवत्वित्याकारकाधुनिक-सङ्केतज्ञानाच्छक्तिभ्रमेण वा केवलचन्द्रत्वादिप्रकारकस्यापि बोधस्योदयेन तदनुरोधेन तादृशशाब्दं प्रति पुष्पवन्तपदजन्यत्वप्रकारतानिरूपितचन्द्रत्वा-वच्छिन्नविषयकबोधत्वावच्छिन्नविशेष्यताशालिसङ्केतज्ञानत्वेन कारणताया अवश्योपेयतया सूर्य्यत्वप्रकारताकशाब्दबोधसामग्रीं विनापि विशेषदर्शिनामपि पुष्पवन्तपदात् केवलचन्द्रत्वादिप्रकारको बोधः कुतो न? नित्यसङ्केतस्य केवलचन्द्रत्वावच्छिन्नविषयकबोधाविषयकत्वेपि तत्र चन्द्रत्वावच्छिन्नबोध-विषयताकत्वस्यानपायात् "अधिकं प्रविष्टं न तद्धानिः" इति न्यायादिति चेत्? न, पुष्पवन्तपदजन्यचन्द्रत्वप्रकारताभिन्नप्रकारत्वानिरूपकचन्द्रत्वप्रकारता-शालिशाब्दं प्रति पुष्पवन्तपदजन्यत्वप्रकारतानिरूपिता या चन्द्रत्वावच्छिन्न-विषयकत्वनिष्ठावच्छेदकताभिन्नशाब्दत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपि-तचन्द्रत्वावच्छिन्नविषयकत्वशाब्दत्वैतद्धर्म्मद्वयावच्छिन्नविशेष्यता तच्छालिसङ्केत-ज्ञानत्वेन, तथा चन्द्रत्वप्रकारतानिरूपकत्वे सति सूर्य्यत्वप्रकारताशालि-शाब्दं प्रति तादृशप्रकारतानिरूपिता या चन्द्रत्वावच्छिन्नविषयकत्वसूर्य्यत्वा-वच्छिन्नविषयकत्वशाब्दत्वैतत्त्रितयधर्म्मपर्य्याप्तावच्छेदकतानिरूपितविशेष्यता, तच्छालिसङ्केतज्ञानत्वेन कारणत्वात्। तादृशज्ञानञ्च स्वनिष्ठविषयत्वनिष्ठावच्छेद-कतानिरूपितचन्द्रत्वावच्छिन्नविषयकत्वनिष्ठेत्याद्युक्तेच्छीयविशेष्यतानिरूपित-जन्यत्वप्रकारतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वसम्बन्धाव-च्छिन्नचन्द्रत्वावच्छिन्नप्रकारतानिरूपितपुष्पवन्तपदत्वावच्छिन्नविशेष्यताशालि, एवं द्वितीयेच्छीयचन्द्रत्वावच्छिन्नविषयकत्वादित्रितयपर्य्याप्तावच्छेदकताक-विशेष्यतानिरूपितजन्यत्वप्रकारतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता-वत्त्वसम्बन्धावच्छिन्नचन्द्रत्वसूर्य्यत्वावच्छिन्नप्रकारतानिरूपिततादृशविशेष्यता-शालि च बोध्यम्। तेनोक्तावच्छेदकत्वस्य प्रकारविधयावगाहमानज्ञानस्य पदपदार्थयोः सम्बन्धानवगाहितयार्थस्मारकत्वानुपपत्तिः। पदप्रकारकतदुभय-विशेष्यकस्य च समूहालम्बनात्मकतयैकशक्तिविषयताकत्वानुपपत्तिरित्यादि-

बुद्धित्वावच्छिन्नम् । इह तु यदेवोद्देश्यत्वं सूर्य्यत्वप्रकारकत्वावच्छिन्नम्,* तदेवेन्दुत्वप्रकारकत्वावच्छिन्नमिति विवेकः ।

अत एव "जात्याकृतिव्यक्तयः पदार्थः" इति सूत्रे पदशक्यत्वस्वरूपस्य जात्याकृतिव्यक्तिषु पदार्थत्वस्यैकत्वद्योतनाय पदार्थः इत्येकवचनम् ।

दोषानवकाशः । एवञ्च भगवत्सङ्केतीयोक्तत्रितयधर्म्मपर्य्याप्तायामवच्छेदकतायां चन्द्रत्वादिशाब्दत्वैतद्धर्म्मद्वयपर्य्याप्त्यवगाहिज्ञानं नियमतो भ्रमरूपमेवेति न विशेषदर्शिनां तत्पदात्केवलचन्द्रत्वादिप्रकारको बोधः । आधुनिकसङ्केतीयतादृशावच्छेदकतायाञ्च धर्म्मद्वयमात्रपर्य्याप्ततया न ततोपि तादृशबोधानुपपत्तिरिति दिक् ।

**उद्देश्यताद्वयमित्यु**पलक्षणम् । हर्य्यादिपदस्य विष्णुसिंहवानरभेकाद्यनेकशक्ततया तत्रोद्देश्यताया अनेकत्वात् । **इह** पुष्पवन्तपदसङ्केते । **अत एव** नानार्थकशब्दातिरिक्तशब्दनिरूपितसङ्केतोद्देश्यताया एकत्वादेव । **आकृतिपदं** समवायादिसंसर्गपरम् । **पदशक्यत्वेत्यादि** । न्यायमते गवादिपदशक्तेर्गोगोत्वसमवायादिषु त्रिष्वेव सत्त्वात्तदनुरोधेन तत्पदशक्यत्वं सङ्केतीयतत्पदजन्यत्वप्रकारतानिरूपितबोधत्वावच्छिन्नोद्देश्यतावत्त्वम् । तद्वत्त्वञ्च स्वनिरूपितनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकतावद्विषयतावत्त्वस्वनिरूपितनिरूपकत्वसम्बन्धावच्छिन्नविषयतात्वावच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नाव – च्छेदकतावत्प्रकारतावत्त्वान्यतरसम्बन्धेन । प्रकारतावत्ता च स्वरूपस्वनिरूपितसंसर्गत्वान्यतरसंसर्गेणेति गवादिनिष्ठविषयतानां भेदेपि बोधत्वावच्छिन्नोद्देश्यताया ऐक्यात् तस्या एव पदार्थत्वस्वरूपतया तदन्वितैकत्वार्थकमेवैकवचनं सूत्रस्थमिति । "पदार्थाः" इति बहुवचनान्तप्रयोगे च पदार्थत्वे एकत्वस्यालाभाच्छक्तेर्बहुत्वसम्भावनया सर्वपदानां नानार्थत्वशङ्का न निवर्त्तेतेत्येकवचनमेव भगवता प्रयुक्तमिति बोध्यम् ।

ननु जात्याकृतिव्यक्तिषु पदार्थभेदप्रतीतौ सत्यामेव तासामेकपदार्थत्वं प्रतीयेत ? प्रातिपदिकार्थयोरभेदान्वयबोधश्च तत्रैवेष्टो यत्र समानवचनकपदद्वयजनितोपस्थितिद्वयम् । प्रकृते च जात्याकृतिव्यक्तिपदपदार्थपदयोरसमानवचनकत्वात्तज्जन्योपस्थितितस्तयोरभेदान्वयासम्भव एवेति कथं तासां पदशक्यत्वस्यै-

* अर्कत्वप्रकारकत्वावच्छिन्नम् । इति मु० पु० पा० ।

कस्य लाभः। न चैवं पीतः पटो घटा नील इति वाक्यघटकसमानवचनकपीतपद-प्रटपदद्वयजनितोपस्थितिभ्यां नीलघटयोरभेदान्वयः स्यादिति वाच्यम्, उद्देश्य-तासम्बन्धेन तन्नामप्रयोज्यतादात्म्यसम्बन्धावच्छिन्नविधेयताशालिबोधं प्रति तन्नामपदसमानवचनकपदजन्योपस्थितेः कारणत्वमित्यस्यैव तदर्थत्वात्। समान-वचनत्वञ्च स्वोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्तिप्रकृतित्वम्। विशेष्यत्वप्रकारत्वे उपेक्ष्योद्देश्यत्वविधेयत्वयोरुपादानात् नीलघटः पण्डितब्राह्मण इत्यादौ समासे नीलादिपदोत्तरं विभक्तेरभावेपि न व्यभिचारस्तत्र नीलघटाद्योरुद्देश्यविधेयभाव-विरहात्। समासेप्युद्देश्यविधेयभावेनैवान्वयबोधोपगमे "वषट् कर्त्तुः प्रथम-भक्षाः" इत्यत्र वषट्कर्त्तृसम्बन्धिभक्षाद्युद्देश्येन प्राथम्यस्य न विधिः, किन्तु प्राथम्यविशिष्टस्य भक्षान्तरस्यैवेति मीमांसासिद्धान्तोसङ्गत एव स्यात्। न चैवं "सप्तदशारत्निर्वाजपेयस्य यूपो भवति" "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" "यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्य्या". .इत्यादौ वाजपेययूपारत्नि-मुष्णीषमवत्तञ्चोद्दिश्य सप्तदशत्वलौहित्यपञ्चत्वानां विधेयत्वं तत्सिद्धान्तसिद्धं व्याहन्येत, सप्तदशोष्णीषपञ्चपदानां समासघटकत्वादिति वाच्यम्, तत्र यूपा-रत्न्यूष्णीषाणामतिदेशप्राप्ततयातिदेशशास्त्राद्रुपदेशशास्त्रस्य बलवत्त्वादतिदेशशास्त्रा-कलनात्पूर्वमेवोपदेशशास्त्रेण सप्तदशत्वविशिष्टारत्निविशिष्टयूपलौहित्यविशिष्टोष्णीष-पञ्चत्वविशिष्टावत्तादिविधेयताकान्वयबोधेषु जातेषु पश्चादतिदेशवाक्यार्थपर्य्या-लोचनेनारत्निविशिष्टयूपोष्णीषावत्तानां प्राप्तत्वेन "विधिरत्यन्तमप्राप्तौ" इत्युक्त्या तेषु विधेः प्रसरासम्भवादप्राप्तेषु सप्तदशत्वलौहित्यपञ्चत्वेष्वेव विधेयत्वव्यव-स्थितेः। वषट्कर्त्तृभक्षणस्य च कुतोप्यप्राप्तत्वात्तत्र विधिप्रसरसम्भवे उक्तरीते-रसम्भवात्। किञ्च "न्यक्कारो ह्ययमेव"... इत्यादौ काव्ये काव्यप्रकाशाद्युक्त-स्याविमृष्टविधेयांशत्वस्य दोषत्वं न स्यात्। तद्दोषताप्रयोजको विधेयत्वेन बोधयितुमिष्टस्य वृथात्वादेस्तत्त्वेनान्वयबोधाभाव एव, स च "उद्देश्यवचनं पूर्वं विधेयस्य ततः परम्" "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्"... इत्याद्यभि-युक्तोक्त्या पूर्वनिर्दिष्टस्योद्देश्यत्वं चरमनिर्दिष्टस्य विधेयत्वमिति नियमेनैव निर्वहति। समासेप्युद्देश्यविधेयभावेन बोधस्वीकारे तूक्तनियमस्य नीलघटः पण्डितब्राह्मण इत्यादौ व्यभिचारित्वात्तदुपगमासम्भवेनोक्तपद्यजन्यबोधे "वृथो-च्छूनैः" इत्यत्रोच्छूनत्वावच्छिन्नमुद्दिश्य वृथात्वस्य विधेयत्वेन भानसम्भवाद्दोषता-प्रयोजकस्य विरहेण तस्य तद्दोषदुष्टत्वं न स्यादिति समासे उद्देश्यविधेयभावान-भ्युपगम एव। तन्निर्वाहश्च समासे विशिष्टशक्तिवादिमते तत्तत्पदार्थनिष्ठो-द्देश्यत्वाख्यविषयतासम्बन्धेन शाब्दं प्रति तत्तत्पदजन्यतत्तत्पदार्थनिष्ठमुख्य-विशेष्यताकोपस्थितेः कारणत्वेन, विशिष्टशक्त्यनभ्युपगन्तृणाम्मते तु तादात्म्येन

नीलविधेयकघटाद्युद्देश्यकबोधे स्वाद्यन्तनीलादिपदोत्तरवर्त्तिस्वाद्यन्तघटादिपदज्ञानत्वेन कारणत्वोपगमेनैव सम्भवति। एवञ्चोक्तकार्य्यकारणभावे नीलघट इत्यादिषु न व्यभिचार इत्यभिप्रेत्य **यत्र विशेष्यान्विते**त्याद्यनुक्त्वा **यत्रोद्देश्यान्विते**त्युक्तम्। यदि च समासेऽप्युद्देश्यविधेयभावेन बोधोपगमे क्षत्यभावः। समासे विशिष्टशक्त्यनभ्युपगन्तृमीमांसकानां तत्र पृथगुपस्थितेरसत्त्वात्। "वषट्कर्तुः" इत्यत्र वषट्कर्त्तृसम्बन्धिभक्षोद्देश्यकप्राथम्यविधेयकबोधे कारणीभूतायाः पृथगुपस्थितेरभावान्न तादृशबोध इत्युक्तेरसम्भवात् प्राथम्यविशिष्टभक्षान्तरस्य विधेयताप्रयोजकं बीजान्तरमेव वक्तव्यम्। तच्च समासशक्त्यभ्युपगमे "निषादस्थपतिं याजयेत्" इत्यत्र निषादश्चासौ स्थपतिर्निषादस्थपतिरिति कर्म्मधारयसमास एव, न तु निषादानां स्थपतिरिति षष्ठीतत्पुरुषस्तत्पुरुषादौ पूर्वपदे लक्षणाया आवश्यकत्वेन कर्म्मधारये च तस्या अनावश्यकत्वेन कर्म्मधारयस्य सर्वसमासापेक्षया लघुत्वादिति निषादस्थपत्यधिकरणीयमीमांसासिद्धान्तोसङ्गतः। सर्वत्र समासे शक्तेरेव सत्त्वेन कर्म्मधारयतत्पुरुषयोरविशेषेण लाघवानवकाशादित्युक्तसिद्धान्तस्य नोक्तलाघवमूलकत्वम्, किन्तु वैदिकसमासस्य कर्म्मधारयतत्पुरुषान्यतरत्वसन्देहे कर्म्मधारयत्वमेव, न तु तत्पुरुषत्वमित्यनादिनियममूलकतात्पर्य्यज्ञानमेवेति न तद्विरोधः। यद्वा समासस्य विशिष्टार्थशक्तौ निषादाभिन्नस्स्थपतिस्समासार्थो निषादानां स्थपतिस्त्रैवर्णिको निषादभिन्नो वेति सन्देहे निषादभिन्नोपस्थित्यकल्पनप्रयुक्तलाघवेन पूर्वस्यैव तत्त्वमिति लाघवमेव तन्मूलमिति भवद्भिस्स्वीकरणीयतयास्माभिरपि "वषट् कर्त्तुः प्रथमभक्षाः" इत्यत्र वषट्कर्त्तृसम्बन्धिभक्षोद्देश्यकप्राथम्यविधेयकप्राथम्यविशिष्टभक्षविधेयकत्वं वेति सन्देहे वैदिकसमासस्य विशिष्टविधेयकत्वमेव, न तु विशिष्टोद्देश्यकत्वमिति नियममूलकानादितात्पर्य्यज्ञानमूलकत्वमेवोक्तसिद्धान्तस्याभ्युपगन्तव्यतया विरोधविरहात्।

यद्वा विशिष्टोद्देश्यकत्वे प्राथम्यवषट्कर्त्रोर्द्वयोर्विधेयत्वे वा प्राप्तरयैवोद्देश्यत्वेन वषट्कर्त्तृसम्बन्धिभक्षस्य वचनान्तरेण प्राप्त्यनुसन्धानमावश्यकमिति तदनुसन्धानप्रयुक्तं वाक्यभेदप्रयुक्तञ्च गौरवमिति न वषट्कर्त्तृसम्बन्धिभक्षोद्देश्यकत्वं नवा भक्षोद्देश्येन प्राथम्यवषट्कर्त्रोर्विधेयत्वम्, किन्तु लाघवात् प्राथम्यविशिष्टभक्षान्तरविधायकत्वमेवेति तन्मूलक एवोक्तसिद्धान्त इति न तद्विरोधः। वस्तुतस्तु समासशक्त्यभ्युपगमे विशिष्टशक्तिग्रहजन्याया उपस्थितेः प्रत्येकपदवृत्तिग्रहजन्यप्रत्येकपदार्थोपस्थितिसहकृताया एव विशिष्टशाब्दबोधे कारणत्वमावश्यकम्। अन्यथा राजपुरुष इत्यादौ राजपदस्य चन्द्रनिरूपितशक्तिमत्ताग्रहे

**प्रातिपदिकार्थयोरभेदान्वये तत्रैव तुल्यवचनान्तप्रातिपदिकोप-**

समासस्य नृपसम्बन्धिपुरुषनिरूपितविशिष्टशक्तिमत्ताज्ञानजन्यविशिष्टोपस्थितितोपि नृपसम्बन्धिपुरुषबोधस्यापत्तेः । विशिष्टशक्तिश्च "प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्" इति व्युत्पत्त्या विशिष्टस्याप्रकृत्यर्थत्वे तत्र विभक्त्यर्थान्वयानुपपत्तिभियैव कल्प्यत इति प्रागुक्ताया उद्देश्यविधेयभावेनान्वयबोधकारणीभूतायाः पृथगुपस्थितेस्तत्रापि सत्त्वात् समासेप्युद्देश्यविधेयभावेनैव बोधः । युज्यते चायमर्थः । अन्यथा महावाक्यबोधेवान्तरवाक्यार्थबोधस्य हेतुतया भक्षोद्देश्यकप्राथम्यविधेयकबोधं विना वषट्कर्त्रुद्देश्यकप्राथम्यविशिष्टभक्षान्तरविधेयकबोधस्याप्यनुदयप्रसङ्गादिति विभावनीयम् ।

यदप्युक्तं "न्यक्कारो ह्ययमेव"...इत्यादावविमृष्टविधेयांशस्य दोषत्वं न स्यादिति, तदपि न, "अनुवाद्यमनुक्त्वैव". इत्यादिनियमस्यालङ्कारिकैः समासातिरिक्तस्थल एव स्वीकारात् । अन्यथा विधेयस्यान्यत्रानुपसर्जनत्वे सत्युद्देश्यानन्तरनिर्देशाभावस्य दोषताप्रयोजकत्वम्, समासे विधेयस्योपसर्जनत्वाद्दोषत्वम्, वाक्ये तूद्देश्यानन्तर्य्याभावात्तत्त्वमिति तदुक्तेरसङ्गतिः स्यात् । समासेप्युद्देश्यानन्तरनिर्देशाभावस्यैव दोषताप्रयोजकत्वोक्तेरौचित्यात् । एवञ्चाविमृष्टविधेयांशस्य दूषकताबीजं नोद्देश्यविधेयभावेन बोधाजनकत्वम्, किन्तु पूर्वपदेन स्वार्थे सिद्धत्वस्योत्तरपदेन साध्यत्वस्याभिव्यक्त्यापकर्षादिप्रतीतिरेव, "मिथ्यामहिम्नाम्" "वृथोच्छूनैः"...इत्यादौ मिथ्यात्वादेरुपसर्जनत्वेन सिद्धत्वबुद्ध्या मूर्द्धादीनामपकर्षाभिव्यक्तेः । एवं न्यक्कारस्य पूर्वपदोपात्तस्य सिद्धत्वाभिव्यक्त्याभिमानिनो रावणस्यापकर्षप्रतीतेस्तस्य समासे वाक्ये च दोषत्वम् । एवञ्च नीलघट इत्यादावप्युद्देश्यविधेयभावेनैवान्वयबोधात् तत्र नीलपदोत्तरं विभक्तेरभावाद् व्यभिचारो दुरुद्धर इति विभाव्यते, तदा तन्नामपदविशिष्टपदजन्योपस्थितेरेवोक्तान्वयबोधे कारणत्वं वाच्यम् । पदे पदवैशिष्ट्यञ्च स्वोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्तिप्रकृतित्वस्वाव्यवहितोत्तरत्वस्वाव्यवहित - पूर्ववृत्तित्वैतदन्यतमसम्बन्धेन । सम्बन्धप्रयोजनन्तु नीलो घटः, नीलघटः, गोगृष्टिरित्यादौ क्रमेण बोध्यम् ।

एवञ्च "जात्याकृतिव्यक्तयः पदार्थः" इत्यत्र पदार्थपदेन समानवचनकत्वस्य वैशिष्ट्यस्य वा व्यक्तिपदेभावात्कुतोभेदान्वय इत्याशङ्कामुक्तकार्य्यतावच्छेदककोटौ विशेषणान्तरप्रक्षेपेणापनेतुमाह—**प्रातिपदिकार्थ-**

**स्थाप्यत्वं तन्त्रम्, यत्रोद्देश्यान्वितसङ्ख्याविरुद्धसङ्ख्याया विधेये तद्विशेषणे वान्वयो न विवक्षितः।**

**योरिति । यत्रोद्देश्यान्वितेति ।** उद्देश्यवाचकपदोत्तरविभक्तितात्पर्य्य-विषयीभूतेत्यर्थस्तेन सर्वासां सङ्ख्यानां कथञ्चिदुद्देश्यसम्बन्धित्वरूप-तदन्वितत्वस्य सत्त्वान्न तद्विरुद्धसङ्ख्याया अप्रसिद्धिः । विरुद्धत्वं भिन्नत्वं विवक्षितम्, न त्वेकाधिकरणावृत्तित्वं वैयर्थ्यात्। **विधेय इति ।** "अमानि तत्तेन निजायशोयुगम्" इत्यत्र "उलपाश्छेत्तुं शक्यम्" "चैत्रो मैत्रश्च सुन्दरौ". इत्यादौ विधेयीभूतचिकुरव्यापारसुन्दरादिष्वेव तादृशसङ्ख्यानां बहुत्वद्वित्वै-कत्वानामन्वयस्य वक्ष्यमाणत्वात् । "वेदाः प्रमाणम्" "जात्याकृति". इत्यादौ प्रमाणत्वपदार्थत्वादिष्वेव तदन्वयादाह—**तद्विशेषणे वेति ।** विधेयविशेषणी-भूतपदार्थतावच्छेदके इत्यर्थः। **न विवक्षित इति ।** विशेषणवाचकपदोत्तर-विभक्त्येत्यादिस्तत्र तृतीयार्थो जन्यत्वं तस्य च विवक्षितपदबोध्यैकदेशीभूते बोधविषयतात्वावच्छिन्नप्रकारताकेच्छीयविशेष्यतावद्घटके बोधेन्वयः । **यत्रेति ।** यत्पदं विशेष्यविशेषणबोधकपदघटितवाक्यपरम्, त्रल्प्रत्ययार्थो घटकत्वम्, तस्य चोद्देश्यान्वितपदबोध्योद्देश्यवाचकपदेन्वयः । **तन्त्रमि**त्यस्य प्रयोजकमित्यर्थस्तदेकदेशप्रयोजकत्वेभेदान्वयस्य निरूपितत्वेनान्वयः। **तत्रैवे**-त्येवकारेण यत्र तादृशी सङ्ख्या विवक्षिता तत्र समानवचनकपदजन्योपस्थितेः प्रयोजकत्वव्यवच्छेदः । तथा च तन्नामपदविशिष्टपदार्थनिष्ठाभेदसम्बन्धा-वच्छिन्नविधेयतायां तन्नामपदविशिष्टपदजन्योपस्थितिविषयत्वं प्रयोजकम् । पूर्वत्र पदे पदवैशिष्ट्यं स्वप्रयोज्योद्देश्यतानिरूपिताभेदसम्बन्धावच्छिन्नविधेयता-प्रयोजकत्वस्वोत्तरविभक्तितात्पर्य्यविषयीभूतसङ्ख्याभिन्नसङ्ख्याविषयकबोधजनक-त्वाभाववद्विभक्तिप्रकृतित्वोभयसम्बन्धेन । द्वितीयञ्च तत्पूर्वोक्तमेव। प्रकृते च पदार्थत्वादिषु तादृश्या एकत्वसङ्ख्याया अन्वयस्य विलक्षणान्नोक्तप्रयोज्यता-वच्छेदकाक्रान्तत्वम्। न च दधि सुन्दरमित्यादौ स्वोत्तरविभक्तेरभावाद्दधिपद-वैशिष्ट्यस्य सुन्दरपदेभावात्तत्र समानवचनकपदजन्योपस्थितेरनावश्यकत्वा-पातात् दधि सुन्दराणीत्यपि वाक्यं प्रमाणं स्यात्? एवं समानवचनकत्वस्यापि पूर्वोक्तस्येदं दधीत्यादौ निर्विभक्तिके दधिपदेभावात्ततोन्वयबोधानुपपत्तिश्चेति वाच्यम्, विभक्तौ स्वोत्तरत्वस्य प्रकृतौ विभक्त्यव्यवहितपूर्वत्वस्य च स्वप्रकारकज्ञानविशेष्यत्वार्थकतयोक्तस्थलद्वयेपि दधिपदाव्यवहितोत्तरं सुपदम्,

सुपदाव्यवहितपूर्वं दधिपदमिति ज्ञानयोस्सत्त्वे एवान्वयबोधो नान्यथेत्यनुपपत्त्यादिविरहात् । एवमन्यत्रापि ।

न च तथापि वेदाः प्रमाणमित्यादावेकत्वादेरपि तादृशसमूहालम्बनतात्पर्य्यविषयत्वात्तद्भिन्नत्वविरहेण वेदादिपदसमानवचनकत्वं प्रमाणादिपदानामापन्नमिति वाच्यम्, स्वोत्तरविभक्तिप्रयोजकेच्छीयसङ्ख्यानिष्ठविषयतावच्छेदकधर्म्मभिन्नधर्म्मावच्छिन्नविषयतानिरूपकेच्छाप्रयोज्यत्वाभाववद्विभक्तिप्रकृतित्वस्यैव द्वितीयसम्बन्धतया समूहालम्बनेच्छीयैकत्वादिविषयताया जसादिप्रयोजकत्वाभावादेवापत्तिविरहात् । विशेष्यत्वप्रकारत्वसाधारणविषयतात्वेनोपादानात् विनिगमनाविरहेण सङ्ख्याधर्म्मिकाया विभक्तिधर्म्मिकायाश्चेच्छाया विभक्तिप्रयोजकत्वेपि न क्षतिः ।

अथ सम्बन्धे स्वादीनां विभक्तित्वेनोपादानं किमर्थमिति चेन्न, सुन्दरं वारि बहवो मत्स्या इत्यादौ सौन्दर्य्ये एकत्वविवक्षायां तत्र समानवचनकत्वस्येष्टतया वारिपदोत्तरबहुपदार्थबहुत्वभिन्नैकत्वसङ्ख्याया विवक्षितत्वेन सुन्दरपदस्य वारिपदविशिष्टत्वाभावेन तत्र तदनुपपत्तिप्रसङ्गात् । न च स्वोत्तरत्वस्य स्वोत्तरत्वेनानुसन्धीयमानत्वस्यैवोपगततया तस्य सुपदे एव सत्त्वम्, न बहुपदे, इति स्वर्थैकत्वस्यैकत्वे विरहान्नानुपपत्तिरिति वाच्यम्, तथापि स्कोकमत्त इत्यादौ धातूत्तरतिङर्थभिन्नैकत्वस्य स्तोकेविवक्षितत्वात् तत्र समानवचनकत्वप्रसङ्गवारणाय उद्देश्यवाचकपदे प्रातिपदिकत्वविशेषणापेक्षया तदुत्तरपदे सुप्त्वप्रवेशे लाघवमिति सुप्त्वावच्छिन्नार्थकमेव विभक्तिपदमिति बोध्यम् । विभक्त्यर्थसङ्ख्येत्यपहाय विभक्तितात्पर्य्यविषयीभूतसङ्ख्येत्यभिधानात् वेदाः प्रमाणमित्यादौ जसि सुत्वभ्रमादेकत्वे शक्तिभ्रमाद्वा वेदे एकत्वस्य योग्यताभ्रमेणान्वयस्तत्र स्वोत्तरविभक्त्यर्थीभूतैकत्वसङ्ख्याभिन्नत्वस्यैकत्वे विरहेण तत्र समानवचनकत्वं वारितम् । तदर्थं स्वोत्तरविभक्तिशक्यत्वस्योक्तौ च तात्पर्य्यविषयत्वापेक्षया गौरवमेवेति बोध्यम् । तादृशैकत्वादेः सङ्ख्यात्वेनाप्रवेशे वेदान् प्रमाणं जानातीत्यत्र वेदपदोत्तरविभक्तितात्पर्य्यविषयीभूतं बहुत्वसङ्ख्यावद्विषयत्वस्वरूपं कर्म्मत्वमपि विषयतायाश्च विषयस्वरूपतया सामान्यतो विभक्तितात्पर्य्यविषयभिन्नत्वस्य प्रमाणत्वगतैकत्वेभावात् समानवचनकत्वं स्यादिति तत्त्वेनोपादानम् । न च सङ्ख्यात्वावच्छिन्नभेदस्यैकत्वे विरह एवेति वाच्यम्, सङ्ख्यात्वव्याप्यधर्म्मावच्छिन्नभेदस्यैव विवक्षितत्वात् । भेदानुयोगिनोपि सङ्ख्यात्वेनोपादानं विशेषणविभक्तेरभेदार्थकत्वे तादृशसङ्ख्याभिन्नतादात्म्यस्य सर्वत्र विवक्षितत्वादप्रसिद्धिवारणार्थम् । चरमं विभक्तिपदञ्च तादृशेच्छाप्रयोज्यत्वस्य

विभक्तिनिष्ठत्वस्यैवाभावस्य लाभाय, अन्यथा घटादिपदनिष्ठतादृशेच्छाप्रयोज्यत्वाभावस्य सर्वस्यामेव विभक्तौ सत्त्वादव्यावर्त्तकत्वमेवोक्तसम्बन्धस्य स्यात्।

अथ सङ्ख्याविषयकबोधजनकत्वाभावस्यैव पूर्वं परिष्कृतस्य निवेशोस्तु, कृतं सङ्ख्यायां तादृशसङ्ख्याभिन्नत्वविशेषणेनेति वाच्यम्, वेदत्वसामान्ये एकत्वविवक्षया प्रयुक्ते वेदः प्रमाणमिति वाक्ये प्रमाणपदस्यैकत्वप्रकारकबोधजनकविभक्तिप्रकृतित्वेन तत्र समानवचनकत्वाभावप्रसङ्गात्। तदुपादाने च तादृशैकत्वभेदस्यैकत्वेसत्त्वात् प्रमाणपदस्य वेदपदविशिष्टत्वं निराबाधम्। एवं स्तोकं पचत इत्यादौ स्तोकपदोत्तरविभक्त्या सङ्ख्यासामान्यस्यैवाविवक्षणात् तत्रापि समानवचनकत्वप्रसङ्गः। तदुपादाने च पच्पदाव्यवहितोत्तरत्वस्य शपा व्यवहिते आख्यातेभावान्न तत्र पच्पदवैशिष्ट्यम्। न च प्रातिपदिकार्थयोरभेदान्वये **तुल्यवचनान्तप्रातिपदिकोपस्थाप्यत्वं तन्त्रम्** इति मूले प्रातिपदिकत्वेनैव पदयोरुपादानात् धातुपदनामपदयोरसमानवचनकत्वेपि तदर्थयोरभेदान्वये बाधकाभाव इति वाच्यम्, प्रातिपदिकाना तत्तद्व्यक्तित्वेन प्रवेशे व्यक्तीनामानन्त्यात् युगसहस्रैरप्यसर्वज्ञदुर्ज्ञेयत्वात्। प्रातिपदिकत्वस्य च धर्म्मविशिष्टत्वाद्यात्मकतया गौरवेण तदपेक्षया लाघवेनोद्देश्यान्वितसङ्ख्याभिन्नत्वस्यैव निवेशयितुमौचित्यात्। तत्र वैशिष्ट्यञ्च स्वावच्छिन्नबोधकत्वस्वावच्छिन्नविषयताशालिशाब्दत्वावच्छिन्नजनकतावच्छेदकाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रथमानिष्ठविषयतानिरूपितविषयतावच्छेदकधर्म्मवत्त्वाभ्याम्। प्रथमात्वञ्च मुख्यविशेष्यतानिरूपितसङ्ख्यानिष्ठप्रकारताशालिशाब्दत्वावच्छिन्ननिरूपितजनकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्म्मवत्त्वम्। विभक्तित्वमपि सङ्ख्यात्वव्याप्यजात्यवच्छिन्नशक्तत्वे सति प्रत्ययत्वम्। प्रत्ययत्वञ्च धर्म्मविशिष्टत्वं वैशिष्ट्यं स्वावच्छिन्नबोधकत्वस्वविशिष्टविशेष्यतानिरूपिततिङर्थनिष्ठप्रकारताशालिशाब्दत्वावच्छिन्ननिरूपितजनकतावच्छेदकविषयितानिरूपकतावच्छेदक-धर्म्मशून्यत्वाभ्याम्। सम्बन्धघटकञ्च तत् स्वनिष्ठावच्छेदकतानिरूपितत्वस्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वाभ्याम्। तिभादिपदेतिव्याप्तिवारणाय तद्भिन्नत्वं देयम्। विषयत्वविषयित्वयोरुभयोरेव विनिगमनाविरहेण कार्य्यत्वाद्यवच्छेदकत्वानुरोधेन तयोरुपादानम्। एवञ्च प्रातिपदिकत्वस्य विभक्तित्वस्य च बहुपदार्थघटितया तेन रूपेण निवेशस्यानौचित्यात्। न च रामाणामित्यादावां विभक्तौ नुटा व्यवधानादव्यहितोत्तरत्वं तत्रापि दुर्घटमिति वाच्यम्, "येन नाव्यवधानं तेन व्यवहितेपि" इत्यभियुक्तोक्त्या यद्व्यवधानेनैव प्रकृतिप्रत्यययोरन्वयबोधोपयिकाकाङ्क्षा निर्वाह्यते तत्तद्भिन्नप्रकृत्युत्तरानुत्तरत्वे सति

प्रकृत्युत्तरत्वस्यैवाव्यवहितोत्तरत्वस्य वाच्यत्वात्। स्तोकं पचत इत्यादावपि शपा व्यवधानेपि तथाव्यवहितोत्तरत्वमस्त्येव, स्तोकमत्र इत्यादौ शपो लुकि च सुतरां तथेत्याख्याते धातुवैशिष्ट्यस्य निराबाधतया समानवचनकत्वं भिन्नान्तो-पादानेपि तत्र दुर्वारमेवेति चेत्? भिन्नान्तोपादानसत्त्वे सङ्ख्यानिष्ठविषयतायां स्ववैशिष्ट्यस्यैव विशेषणीयत्वात्। तच्च स्वाव्यहितोत्तरत्वप्रकारकज्ञानविषय-विभक्तिप्रयोजकेच्छीयत्वस्वार्थान्वयित्वविषयतानिरूपितत्वाभ्याम्। आख्यातार्थ-सङ्ख्यायाश्च धात्वर्थान्वयित्वाभावात्तत्रापत्तेरभावात्।

अथ प्रकृत्या चारुभिरित्यत्र तृतीयान्तार्थप्रकृत्यभेदस्य चारुपदार्थेऽन्वयात् प्रकृतिपदार्थे तदुत्तरविभक्त्यर्थसङ्ख्याया अविवक्षितत्वाच्च चारुपदवैशिष्ट्यस्य प्रकृतिपदे सत्त्वात् समानवचनकत्वस्य च सत्त्वाद्व्यभिचारः। न चाभेदस्य संसर्गतास्थल एवोक्तनियमोतएवाभेदसंसर्गावच्छिन्नत्वं विधेयतायान्निवेशित-मिति वाच्यम्, विशेषणविभक्तेरभेदार्थकत्वमते घटो नील इत्यादावपि समान-वचनकत्वानापत्तेरिति चेन्न, विशेषणविभक्तेरभेदार्थकत्वस्याग्रे ग्रन्थकृद्भिर्दूष-णीयत्वात्। अथवा स्वविशिष्टविभक्त्यव्यवहितपूर्वत्वप्रकारकज्ञानविषयत्वमेव द्वितीयसम्बन्धः। विभक्तौ स्ववैशिष्ट्यञ्च स्वविशिष्टसङ्ख्यानिष्ठविषयतावच्छेदक-धर्म्मभिन्नधर्म्मावच्छिन्नविषयतानिरूपकेच्छाप्रयोज्यत्वाभाववत्त्वस्वविशिष्टपदसमा-नानुपूर्वीकपदप्रकृतिकविभक्तिवृत्तिसुब्विभाजकधर्म्मशून्यत्वाभ्याम्। प्रथमं वैशिष्ट्यं सङ्ख्यानिष्ठविषयतायां पूर्वोक्तोभयसम्बन्धेन पदे प्रथमं तच्च स्वोत्तरविभक्ति-वृत्तिसुब्विभाजकधर्म्मशून्यविभक्तिप्रकृतित्वस्ववृत्त्यानुपूर्वीमत्त्वाभ्याम्। द्वितीयं तच्च स्वप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्वार्थविशेष्यकाभेदविषयक-बोधानुकूलाकाङ्क्षाघटकत्वाभ्याम्। भवति च नीलो घट इत्यादौ नीलपदोत्तर-स्वादिविभक्तिरेवंविधा। नीलो घटेनेत्यादौ नीलाभिन्नघटविषयकबोधस्यानुद-येन तादृशसुब्विभाजकतृतीयात्वादिधर्म्मशून्यत्वस्य तत्रावश्यम्भावात्। प्रकृत्या चारुभिरित्यत्र च न तत्सम्भवः, प्रकृत्या चारव इत्यत्रापि प्रकृत्यभिन्नचारुत्ववतो बोधेन तत्र तादृशधर्म्मशून्यत्वविरहात्। एवञ्च स्तोकमत्त इत्यादावप्यनेनैव प्रकारेण वारणसम्भवाद्भिन्नान्तोपादानप्रयोजनं वेदः प्रमाणमित्यत्रैव बोध्यम्। न च सुन्दरा दारा इत्यत्रोद्देश्यवाचकदारपदोत्तरविभक्तितात्पर्य्यविषयीभूत-सङ्ख्याया अप्रसिद्धतया तत्पदवैशिष्ट्यस्य सुन्दरपदोत्तरविभक्तावसम्भवा-दसमानवचनकस्यापि सुन्दरपदस्य साधुतापत्तिरिति वाच्यम्, स्वविशिष्ट-सङ्ख्यानिष्ठविषयतावच्छेदकधर्म्मभिन्नधर्म्मावच्छिन्नविषयतानिरूपकेच्छाप्रयोज्यत्व-सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्यैव द्वितीयसम्बन्ध-

त्वात्। उक्तप्रयोज्यत्वसम्बन्धस्य वृत्त्यनियामकत्वात् प्रतियोगितानवच्छेदकत्वेपि चैत्रो न पचतीत्यादावनुकूलत्वसम्बन्धावच्छिन्नपाकत्वावच्छिन्नावच्छेदकताककृतित्वावच्छिन्नप्रतियोगिताकाभावबोधानुरोधेन वृत्त्यनियामकस्यापि प्रतियोगितावच्छेदकतावच्छेदकसंसर्गत्वमावश्यकम्। तादृशप्रयोज्यत्वस्य च प्रकृते दारपदव्यधिकरणतया तत्सम्बन्धावच्छिन्नदारपदत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकस्य भेदस्य संयोगेन द्रव्यत्वादिमद्भेदस्येव केवलान्वयितया सुन्दरपदोत्तरविभक्तावबाधितत्वात् तत्र समानवचनकत्वस्यावश्यकत्वात्। न चैवमपि यत्र मैथिली दारा इति वाक्ये मैथिल्यन्वयित्वेन विवक्षितैकत्वार्थकैकवचनान्तमैथिलीपदस्य विधेयवाचकत्वम्, तत्राप्युद्देश्यवाचकदारपदवद्भेदस्य मैथिलीपदोत्तरविभक्तावबाधितत्वेन समानवचनकत्वापेक्षा स्यादिति वाच्यम्, उक्तसम्बन्धे सङ्ख्यानिष्ठविषयतायां स्ववैशिष्ट्यमपहाय स्वाव्यहितोत्तरत्वप्रकारकज्ञानविषयविभक्तिवैशिष्ट्यस्यैव निवेशनीयत्वात्। तदवच्छेदकधर्मावच्छिन्नविषयतानिरूपकेच्छाप्रयोज्यत्वाभावस्यैव द्वितीयसम्बन्धत्वेन विवक्षणीयत्वात्। वैशिष्ट्यञ्च स्वप्रयोजकेच्छानिरूपितत्वस्वप्रकृत्यर्थान्वयित्वविषयतानिरूपितत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व - सम्बन्धेन बोध्यम्। प्रकृते मैथिलीपदोत्तरविभक्त्यैकत्वस्य विवक्षितत्वात्तन्निष्ठविषयताया दारपदोत्तरविभक्तिविशिष्टत्वात्तद्विषयतावच्छेदकैकत्वत्वावच्छिन्नविषयतानिरूपकेच्छाप्रयोज्यत्वस्यैव मैथिलीपदोत्तरविभक्तौ सत्त्वेन तदभावस्यासत्त्वान्नापत्तिः। न च मैथिल्यादिपदोत्तरविभक्त्यापि यत्र नैकत्वादिसङ्ख्या विवक्षिता, तत्रोक्तवैशिष्ट्यस्य विभक्तौ निराबाधतया मैथिल्यो दारा इत्यादिप्रयोगस्य साधुताप्रसङ्ग इति वाच्यम्, प्रधानतया विशेष्यवाचकपदस्य पूर्वं प्रयोगार्हत्वेन तद्वाचकपदोत्तरविभक्त्या तद्वृत्तित्वेन सङ्ख्याया विवक्षणस्यावश्यकतया तत्समानाधिकरणविधेयवाचकपदोत्तरविभक्त्या सङ्ख्याया विवक्षणस्य किञ्चिद्विशेषप्रत्ययानाधायकत्वेन घटो नील इत्यादौ तदभावः। यत्र चोद्देश्यवाचकपदोत्तरविभक्त्यर्थसङ्ख्याया अयोग्यत्वेनोद्देश्येन्वयस्यासम्भवस्तत्र विधेयवाचकपदोत्तरविभक्त्यर्थयोग्यसङ्ख्याया विवक्षाभाव इत्यस्य वक्तुमशक्यत्वात्।

ननु तथापि *"मैथिली तस्य दाराः" इत्यत्र दारपदस्य विधेयवाचकत्वात्

---

* शृणुत जनककल्पाः क्षत्रियाः शुल्कमेते दशवदनभुजाना कुण्ठिता यत्र शक्तिः। नमयति धनुरैशं यस्तदारोपणेन त्रिभुवनजयलक्ष्मी मैथिली तस्य दाराः॥ इति महानाटके सम्पूर्णं पद्यम्।

"वेदाः प्रमाणम्" "जात्याकृतिव्यक्तयः पदार्थः" "शक्तिर्व्युत्पत्त्य-

तदुत्तरजस्विभक्त्यर्थबहुत्वस्य चाविवक्षितत्वादुक्तैस्सर्वैरेव सम्बन्धैर्म्मैथिलीपद-वैशिष्ट्यस्य दारपदे सुविभक्तौ च सत्त्वात् तत्समानवचनकत्वस्य च तत्रासत्त्वा-दुक्तप्रयोज्यप्रयोजकभावानुपपत्तिः। न च तत्रापि दारपदस्योद्देश्यवाचकत्वं सम्भवति ? तद्घटितजनकप्रतिज्ञावाक्यस्य दारपदार्थस्य विधेयत्वे एव तात्पर्य्यात्। एवं घटा नील इत्यादावपि जसि सुत्वस्य सौजस्त्वस्य वा भ्रमे नीलाभिन्नघटान्वयबोधस्य ततोऽप्युदयेन तत्रापि समानवचनकत्वव्यभिचार इति चेन्न, अभेदत्वावच्छिन्नविषयताविशिष्टशाब्दबोधीयप्रकारतात्वावच्छेदेन सुप्त्वव्याप्यव्याप्यधर्म्मविशिष्टविषयताशालिज्ञानत्वावच्छिन्नप्रयोज्यत्वव्याप्यत्व-मित्यस्यैव निष्कृष्टानुगतरूपेणोक्तमूलग्रन्थेन विवक्षणात्। प्रकारतायां तादृश-विषयतावैशिष्ट्यञ्च स्वनिरूपकत्वस्वनिरूपितविशेष्यताप्रयोजकपदविशिष्टविभक्ति-विशिष्टत्वाभ्याम्। विभक्तौ तादृशपदवैशिष्ट्यं पूर्वोक्तरूपम्। विभक्तिवैशिष्ट्यञ्च स्ववृत्त्यानुपूर्वीमद्विभक्तिविशिष्टत्वसम्बन्धेन तत्र वैशिष्ट्यञ्च स्वप्रकृतितावच्छेदका-वच्छिन्नत्वस्वप्रकृत्यर्थतावच्छेदकावच्छिन्नबोधकत्वाभ्याम्। मैथिली दारा इत्यत्र दारपदस्य स्त्रीत्वावच्छिन्नवाचकस्य "दाराः पुंसि च भूम्न्येव" इत्यनुशासना-न्नियतबहुवचनान्तया मैथिलीपदोत्तरसुविभक्तिविशिष्टसुविभक्तिप्रकृतितावच्छेद-कावच्छिन्नत्वस्याभावात् दारयन्तीति दारा इति व्युत्पत्त्या दारणकर्त्तृत्वा-वच्छिन्नार्थकदारपदे तत्सत्त्वेपि प्रकृतदारपदार्थतावच्छेदकस्त्रीत्वावच्छिन्नबोधक-त्वाभावान्न मैथिलीपदोत्तरसुविभक्तिविशिष्टत्वम्। विषयतायां सुप्त्वव्याप्य-व्याप्यधर्म्मवैशिष्ट्यञ्च स्वावच्छिन्नाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नविषयता-निरूपितत्वस्वावच्छिन्नाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नविषयतानिरूपितसमभि-व्याहृतत्वविषयतानिरूपितत्वाभ्याम्। घटा नील इत्यादावुक्तभ्रमसत्त्व एव शाब्दबोधोदयात् तत्र च सत्यव्यवहितपूर्वत्वसम्बन्धेन सुपदवन्नीलपदसमभि-व्याहृतं सुपदवद्घटपदमिति ज्ञानस्याप्यवश्यम्भावादनुपपत्तिविरहात्। अव्य-वहितोत्तरत्वाव्यवहितपूर्वत्वे पूर्वोक्तरीत्यानुगमय्य निवेशनीये इति दिक्।

एवं रीत्या समानवचनकत्वनियमव्यवस्थापने जात्येत्यादिसूत्रघटकपदयोः समानवचनकत्वप्रयोज्यतावच्छेदकविरहेण तदभावेपि न क्षतिरेवमन्यत्रापि विशेष्यवाचकपदासमानवचनकविशेषणवाचकपदस्य स्वोत्तरविभक्त्या सङ्ख्याया विवक्षणे साधुत्वमेवेत्याह—**वेदाः प्रमाणमित्यादिना। शक्तिर्व्युत्पत्त्येति।** "शक्तिर्निपुणता लोके काव्यशास्त्राद्यवेक्षणात्। काव्यज्ञशिक्षयाभ्यास इति हेतु-

भ्यासाः काव्यं प्रति हेतुः" "शक्यमौषधिपतेर्विलासिभिश्छेत्तुमग्रनख-

स्तदुद्भवे ॥" इति काव्यप्रकाशकारिकाव्याख्यायां "इति त्रयः समुदिता हेतुः" इति वाक्ये इति पदेन शक्त्यादित्रयाणा परामर्शाच्छक्तिव्युत्पत्त्यभ्यासाः काव्यं प्रति हेतुरित्यस्यैव पर्य्यवसानात्तथाप्रयोगो दर्शितः। तत्र **शक्तिः** कवित्वबीज-भूतः संस्कारविशेषः प्रतिभापरपर्य्यायः। न च "प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता" इत्यनुशासनेन ज्ञानविशेषरूपायाः प्रज्ञाया एव प्रतिभापदवाच्य-तेति वाच्यम्, तत्रापि प्रज्ञापदस्य ज्ञानजन्यसंस्कारलाक्षणिकत्वात्। अन्यथा तस्य सुषुप्त्यादावभावेन प्रतिभावानिति व्यवहारानापत्तेः। **व्युत्पत्तिः** लोक-काव्यशास्त्राद्यवेक्षणप्रयोज्यनिपुणता। **अभ्यासः** काव्यज्ञशिक्षाप्रयुक्तः काव्यस्य करणे तज्जन्यबोधे च पौनःपुन्येन प्रवृत्तिः। **शक्यमौषधीति**। कुमारसम्भवेऽष्टमे सर्गे "शक्यमौषधिपतेर्नवोदयाः कर्णपूररचनाकृते तव। अप्रगल्भयवसूचि-कोमलाश्छेत्तुमग्रनखसम्पुटैः कराः ॥" इति श्लोको दृश्यते। औषधिपतेः चन्द्रस्य, कराः किरणाः, विलासिभिः नायिकासम्बन्धिशृङ्गारभावजन्यक्रीडा-विशेषशीलैः, कर्त्तृभिः, अग्रनखकोरकैः नखस्याग्रमग्रनखं राजदन्तादित्वादग्र-शब्दस्य पूर्वनिपातात्, अग्रनखानि कोरका इवेत्युपमितसमासात् कोरकसदृशा-ग्रनखैः करणभूतैः छेत्तुं शक्यमित्यन्वयः। छिदेरारम्भकसंयोगप्रतिद्वन्द्वि-विभागानुकूलो व्यापारोऽर्थस्तस्यैव द्वैधीकरणरूपत्वात्। "शकधृषज्ञाग्लह"... इत्यादिसूत्रेण विहितस्य तुमुनो भावोऽर्थः। यद्यपि तुमुनः कृत्त्वात् "कर्त्तरि कृत्" इति सूत्रानुसारात् कर्त्तृत्वस्यैव तदर्थत्वं युक्तम्, तथापि "अव्ययकृतो भावे" इति नियमादुक्तोऽर्थः। उत्पत्त्यनुकूलो व्यापारः शक्नोतेरर्थः। उत्पत्त्याश्रयरूपं कर्म्म कृत्यप्रत्ययार्थः। तुमुन्नन्तार्थविभागानुकूलव्यापारात्मकस्य भावस्य निष्ठत्वसम्बन्धेन शक्यर्थैकदेशोत्पत्तावन्वयः। शक्यर्थव्यापारस्य च जन्यत्व-सम्बन्धेन कृत्यप्रत्ययार्थैकदेशोत्पत्तावन्वयस्तादृशकर्म्मणश्च छेदनकर्म्मसुकरेषु तादात्म्यस्यायोग्यत्वेपि स्वाभिन्नच्छेदनकर्मणा तादात्म्यस्याबाधितत्वात्तद्द्वारै-वान्वयः, **सविशेषणे हीति न्यायादित्यादे**रग्रे ग्रन्थकृतैव वक्ष्यमाणत्वात्। तथा च विलासिकर्त्तृकविभागानुकूलव्यापारोत्पत्त्यनुकूलव्यापारोत्पाद्यच्छेदन-कर्म्माभिन्ना औषधिपतिसम्बन्धिकिरणा इत्यन्वयबोधः। स च किरणे उक्त-च्छेदनकर्म्मत्वस्य बाधितत्वेपि कविसमयप्रसिद्ध्यादिना योग्यताभ्रमादेव जायत इति बोध्यम्।

ननु यथा घटो नील इत्यादौ विशेषणविभक्त्यर्थसंख्यायाः प्रकृत्यर्थे-

**कोरकैः कराः"... इत्यादिषु च वेदत्वमप्रमाणे न वर्त्तत इति, जाति-मात्रं व्यक्तिमात्रं वा न पदशक्यमिति,**

न्वये न क्वापि विशेषप्रतिपत्तिर्घटपदोत्तरविभक्त्यैवैकत्वस्य प्रधानीभूते उद्देश्यत्वेनावश्यकप्रथमोपस्थितिविषये घटेऽन्वितत्वेन प्रतिपादनाद् घटद्वयादे-र्व्यावर्त्तनादिति नीलादिपदोत्तरविभक्त्यर्थसंख्यायास्तत्राविवक्षा, तथा वेदाः प्रमाणमित्यादावपि प्रमाणपदोत्तरविभक्त्यर्थसंख्याया अपि विशेषप्रतिपत्त्यना-धायकत्वादविवक्षैवोचितेत्याशङ्कायां प्रमाणत्वादावेकत्वान्वयस्य विवक्षाया विशेषप्रतिपत्त्याधायकत्वं दर्शयति—**वेदत्वमित्यादिना** । अयमाशयः । वेदाः प्रमाणमित्यादावुद्देश्यविधेयभावेनान्वयात् असति बाधके उद्देश्यतावच्छेदका-वच्छेदेनैव विधेयान्वयस्य सर्वसम्मततया वेदनिष्ठयावत्त्वात्मकबहुत्वविशिष्ट-वेदत्वव्यापकत्वं तादात्म्येन विधेये एकत्वविशिष्टप्रमाणत्वावच्छिन्ने लभ्यते, ततश्च तादात्म्यसम्बन्धावच्छिन्नैकत्वविशिष्टप्रमाणत्वावच्छिन्नप्रतियोगिताका-भाववदवृत्तित्वरूपं तादृशप्रमाणव्याप्यत्वं प्रमाणभिन्नावृत्तित्वपर्य्यवसितं वेदत्वे लभ्यते, प्रमाणत्वस्य चानुगतप्रमाव्यवहारानुरोधात् कथञ्चिदनुगतं प्रमात्वं निरुच्य तद्व्याप्यधर्म्मघटितधर्म्मावच्छिन्नकार्य्यतानिरूपितकरणतारूपतया करणतायाश्च करणव्यक्तिभेदेन भेदाभावेऽप्यवच्छेदकभेदेन भेदस्यावश्यकतया तदवच्छिन्नभेदस्यैकस्यासम्भवेन प्रत्यक्षादिप्रमाणभिन्ने शब्दे वेदत्वस्य वृत्तेरुक्त-भेदव्याप्यत्वं व्याहन्येतेति प्रमाणपदस्य शाब्दप्रमाकरणपरत्वमेवास्थेयम् । तस्य च वक्ष्यमाणनिर्दोषवाक्यत्वावच्छिन्नात्मकतया तादृशवाक्यत्वस्याप्यने-कत्वे तदवच्छिन्नभेदस्याप्यननुगतत्वापातादुक्तव्याघातापत्तिरनिवार्य्यैवेति तत्रै-कत्वविवक्षावश्यकी । तथा सत्युक्तैकत्वविशिष्टवाक्यत्वावच्छिन्नभेदस्यैकतया तदधिकरणे वेदत्वस्यावृत्तेरुक्तव्याप्यत्वं वेदत्वे सुघटमिति **वेदत्वमप्रमाणे न वर्त्तत इति** प्रमाणत्वे एकत्वान्वयविवक्षायामर्थतो लब्धमिति । एवं "जात्या-कृतिव्यक्तयः पदार्थः" इत्यत्रापि पदार्थत्वे एकत्वान्वये "सर्वं हि वाक्यं साव-धारणम्" इति न्यायेन जात्यादिगतत्रित्वावच्छिन्न एव पदनिरूपिताया एकस्या-श्शक्तेर्ल्लाभात् त्रित्वावच्छिन्नभिन्ने प्रत्येकगोत्वादौ तदभावस्य लाभाज्जातिमात्रं व्यक्तिमात्रं संस्थानरूपमाकृतिमात्रं वा न पदशक्यमिति विशेषप्रतिपत्ति-र्न्नान्यथेति बोध्यम् । इदञ्च साम्प्रदायिकमते प्रत्येकं त्रिषु विभिन्नशक्तिस्वीकारे विशेष्यविशेषणभावानापन्नानामेव तेषां शाब्दबोधे बाधकाभावेन गौर्न्नित्या गौर्गुण इत्यादितो लक्षणाग्रहं शक्तिभ्रमञ्च विनैव शाब्दबोधस्योदयात्तन्मता-

शक्त्यादिप्रत्येकमात्रन्न काव्योपधायकमिति, विरहिणामिव

नुसारेण बोध्यम्। नव्यास्तु आक्रियते व्यज्यतेनेनेति व्युत्पत्त्यावयवसंयोगविशेषात्मकाकृत्यनुपस्थितौ गोपदात् केवलगोत्वप्रकारकोपि बोधोनुभवसिद्धो विशकलितशक्तिं विना शक्तिप्रमातो न भवितुमर्हतीति जातिव्यक्त्योरेवैका शक्तिः। आकृतौ तु पृथगेव शक्तिः। गोत्वानुपस्थितौ च केवलाकृतिप्रकारक एव बोधः शक्तिप्रमात एव जायते। न चैवं संस्थानव्यक्त्योरेवैका शक्तिः गोत्वादावेव पृथक्शक्तिरित्येव किन्न स्यादिति वाच्यम्, समवायेन गोत्वापेक्षया परम्परया संस्थानवतः शक्यत्वे गौरवाच्छक्यतायाः किञ्चिद्धर्म्मावच्छिन्नत्वनियमेन गोत्वादौ निरवच्छिन्नायास्तस्या असम्भवाच्चेत्याहुः। परे तु सौत्रमाकृतिपदं न संस्थानपरम्, किन्तु निरुक्तव्युत्पत्त्याकारनिरूपकस्य जातिव्यक्त्योस्संसर्गस्य समवायादेरेव बोधकम्। नातस्तस्य गवादिपदार्थत्वाबोधनेन सूत्रकर्त्तुर्न्यूनता। यत्र च गोत्वसंस्थानोभयप्रकारकोन्वयबोधस्स तदुभयविशिष्टे शक्तिभ्रमादिनैवोपपादनीय इत्याहुः। एवं हेतुपदार्थतावच्छेदकस्यापेक्षाबुद्धिविशेषरूपस्य कार्य्योपधायकतावच्छेदकसमुदायत्वस्यैकत्वविशेष्यतया विवक्षायां यथा तृणारणिमणीनां प्रत्येकस्य सत्त्वेपि वह्नेरुत्पत्तिस्तथा न शक्त्याद्येकतरस्य सत्त्वे काव्योत्पत्तिः, तथा सत्येकसमुदायत्वस्य तदुत्पादकत्वासम्भवात्तद्वाक्यलभ्यस्य तथाविधैकसमुदायत्वाश्रयाभेदस्य शक्त्यादिषु बोधस्य भ्रमत्वापातादिति दण्डचक्रादिन्यायेनैव तेषां कारणत्वमित्यस्यार्थतो लाभः। एवं विलासिकर्त्तृकायामुत्पत्त्यनुकूलव्यापाररूपायां शक्यपदबोध्यतावच्छेदिकायां शक्तौ शक्यपदोत्तरविभक्त्यर्थैकत्वस्यान्वये विवक्षिते उत्प्रेक्षितस्यैकव्यापारेण चन्द्रकरच्छेदनस्योत्पत्तौ तत्करसंयोगात्मकस्पर्शस्य नाशोत्प्रेक्षाया अपि सम्भवाद्विलासिनां न खेद इत्यस्य लाभः। उक्तानामर्थविशेषाणां शब्दतस्साक्षादलाभाद् **ध्वनयितुमि**त्युक्तम्। ध्वनिश्च व्यञ्जनोपगमे तद्रूपैव अन्यथा तु मानसव्यापारोनुमानादिः। तुमुनश्चात्रेच्छार्थकतयाव्ययत्वेन तृतीयान्ततया च तादृशव्यापारजन्यबोधजनकत्वप्रकारकेच्छयेति **ध्वनयितुमि**त्यस्यार्थो बोध्यः। अस्य च प्रत्येकं **न वर्त्तत इति न शक्यमिति न काव्योपधायकमिति न खेद इति** चतुर्भिरन्वितस्य **विवक्षित एव** इत्यग्रिमेणान्वयः। **प्रमाणतावच्छेदकेति**। शाब्दप्रमितिकरणतावच्छेदकेत्यर्थस्तत्र प्रमाणपदार्थतावच्छेदकस्य प्रमाकरणत्वस्यापि करणभेदेन

**विलासिनामपि न चन्द्रकरस्पर्शे खेद इति ध्वनयितुं प्रमाणतावच्छेदकनिर्दोषवाक्यत्वादिस्वरूपे प्रामाण्ये गवादिपदार्थत्वे काव्योपधायकतावच्छेदकसमुदायत्वे विलासिकर्त्तृकशक्तौ च सुबर्थैकत्वान्वयो विवक्षित एव ।**

भेदात्तत्रैकत्वस्यायोग्यतया विवक्षितुमशक्यत्वात् **प्रमाणतावच्छेदकवाक्यत्व**-पर्य्यन्तानुसरणम् । तदपि प्रमात्वव्याप्यशाब्दत्वघटितधर्म्मावच्छिन्नं प्रति निर्दोषवाक्यत्वेनैकरूपेणैव करणत्वं तत्र च वाक्यत्वं धर्म्मविशिष्टत्वादिकं कथञ्चिदनुगतन्निर्वाच्यमित्याशयेन । वाक्यत्वस्यैक्यासम्भवे च प्रमाणपदार्थतावच्छेदकप्रमात्वव्याप्यशाब्दत्वघटितधर्म्मावच्छिन्नजन्यतानिरूपितकरणत्वघटकशाब्दत्वजातावेव तदन्वयस्तद्द्वारा तादृशकरणत्वे वा विवक्षणीय इति बोध्यम् । गवादिपदार्थत्वस्य यथैकत्वं तथा प्रतिपादितमधस्तात् । **काव्योपधायकतावच्छेदकत्वं** काव्योत्पत्तिसमानाधिकरणाभावाप्रतियोगित्वरूपस्य काव्योत्पत्तिमद्वृत्त्यभावप्रतियोगित्वरूपस्यातिरिक्तपदार्थस्वरूपस्य वा तदुत्पत्तिप्रयोजकत्वस्यावच्छेदकत्वम् । शक्त्यादित्रयाणां प्रत्येकं काव्यं प्रति तथात्वे केवलशक्तिमतोपि काव्योत्पत्तिप्रसङ्ग इति समुदायत्वस्यैव तथात्वमावश्यकमिति बोध्यम् । न चोक्तत्रयाणां काव्यं प्रति दण्डचक्रादीनाञ्च घटादिकं प्रति तत्तत्समुदायत्वेन कारणत्वमेकमेवास्तु, तथा च काव्यप्रकाशकारिकास्थहेतुपदस्य शक्यतावच्छेदके हेतुत्वे एवैकत्वान्वयस्य सम्भवात्तत्पदस्योक्तसमुदायत्वावच्छिन्ने लक्षणाभ्युपगमो निरर्थक इति वाच्यम्, शक्तिदण्डादिप्रत्येककारणप्रतियोगिकसंसर्गाणां वैलक्षण्येन समुदायत्वस्य चैकविशिष्टापरत्वस्वरूपत्वेनापेक्षाबुद्धिविशेषरूपत्वेतस्या इयं शक्तिरेका अयमभ्यास एकः इयं व्युत्पत्तिरेकेत्याकारकत्वं इयं व्युत्पत्तिरयमभ्यास इत्याद्याकारकत्वं वेति विनिगमनाविरहेण तासां सर्वासामपि विषयतायाः कारणतावच्छेदकत्वे गौरवात् लाघवाच्छक्तित्वादिना दण्डत्वादिना च कारणताया आवश्यकत्वात् । प्रत्येकं तेषां सत्त्वे काव्योत्पादापत्तिश्च परस्परसहकारितामुपेत्य तादृशसमुदायत्वस्योत्पादकतावच्छेदकत्वमभ्युपेत्यैव वारणीया । **विलासिकर्त्तृकशक्तौ** उत्प्रेक्षितायां विलासिकृतिजन्योत्पत्त्यनुकूलव्यापाररूपायां **विवक्षित एवेत्येव**कारेण तत्तत्संख्यानामविवक्षाव्यवच्छेदः ।

ननु विशेष्यनिम्नपदानां प्रातिपदिकान्तरप्रयोज्यविषयतानिरूपिताभेदसम्बन्धावच्छिन्नविषयताप्रयोजकत्वे तत्प्रातिपदिकोत्तरलिङ्गबोधकसुबन्तत्वस्य

**कराश्छेत्तुं शक्यमित्यत्र "शक्यश्वानेन श्वमांसादिभिरपि क्षुत्प्रति-हन्तुम्" इति महाभाष्यसिद्धं[1] सामान्ये नपुंसकत्वम्[2]। पदार्थैकदेशे**

तन्त्रत्वात् भिन्नलिङ्गबोधकसुबन्तयोः करपदविशेष्यनिघ्नशक्यपदयोः कथमुक्त-प्रयोजकत्वरूपं सामानाधिकरण्यमित्यत आह—**शक्यश्वानेनेति**। पातञ्जल-महाभाष्ये "सिद्धे शब्दार्थसम्बन्धे"....इत्यादिना व्याकरणस्य वैयर्थ्यमाशङ्क्य धर्म्मनियमार्थत्वं तस्य व्युत्पादयद्भिर्दृष्टान्तविधयोक्तस्य "पञ्च पञ्चनखा भक्ष्याः".. इत्यादिवाक्यस्य प्रयोजनाभिधानावसरे पतञ्जलिभगवत्पादैरुक्तम्। **प्रतिहन्तुमिती**तिपदस्येत्यादीन्यर्थकतया "शक्यञ्चानेन शालिमांसादीन्यपि व्रतयितुम्" शक्यञ्चानेन यत्किञ्चिदेवकाष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम्" इति तत्प्रकरणस्थयोर्वाक्ययोः संग्रहः। **निर्देशसिद्धमिति**। **शक्यमिति** नपुंसकनिर्देशज्ञापितप्रामाण्यकमित्यर्थः। **सामान्ये नपुंसकत्वमिति**। अय-माशयः। "शकिसहोश्च" इति सूत्रेण कर्म्मत्वरूपसामान्यधर्म्मावच्छिन्ने विवक्षिते यत्प्रत्ययान् पुंस्त्वस्त्रीत्वप्रयोजकधर्म्माभावेन नपुंसकत्वप्रयोजकस्य च तस्यैव सत्त्वेन सामान्यविधिप्राप्तस्य नपुंसकत्वस्यैवौचित्याच्छक्यमिति सिद्धे सति "अशनाया बुभुक्षा क्षुत्" इत्यमरेण साहचर्याद् "भानुः करो मरीचिः" इत्यतश्च स्त्रीलिङ्गपुल्लिङ्गक्षुत्करादिपदसम्बन्धात् प्राप्तयोरपि स्त्रीत्वपुंस्त्वयोः पदान्तरसम्बन्धापेक्षणेन किञ्चिदनपेक्ष्य प्रवर्त्तमानं नपुंसकत्वं प्रति बहिरङ्गतया "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया तयोरसिद्धत्वात् न शक्यपदोत्तरं प्रवृत्तिः। यदा तु शक्यपदसाधनिकायाः पूर्वमेव क्षुत्त्वकरत्वादिविशेषरूपेण कर्म्मणो विवक्षा, तदा तयोर्बहिरङ्गत्वाभावाच्छुदुपहन्तुं शक्येत्यादिकः प्रयोगोपि साधुरेवेति। इममेवार्थं विशेष्यनिघ्ने नियतलिङ्गपदसमानाधिकरणेपि नपुंसक-त्वप्रयोजकत्वेन ग्रन्थकृद्दर्शयिष्यति—**यत्र च लिङ्गानन्वयीत्यादिग्रन्थेन**।

ननु नित्यो घट इत्यस्य घटत्वे नित्याभेदान्वयतात्पर्य्येण प्रामाण्यप्रसङ्ग-वारणाय "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति व्युत्पत्तेरावश्यकतया पदार्थत्वे कथं सुबर्थसंख्यान्वय इत्यत आह—**पदार्थैकदेशे इति**। **जात्या-**

---

१ महाभाष्यनिर्देशसिद्धम्। इति मु० पु० पा०।

२ क्लीबत्वम्। इति मु० पु० पा०।

सुबर्थान्वयेऽपि[1] "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति सूत्रसिद्धः[2]। ५, ६।

एवं प्रवृत्तिनिमित्तवैचित्र्येण सङ्केतवैचित्र्यमुपपादितमिदानीमन्यथापि तद्वैचित्र्यमुपपाद्यते—

**सङ्केतो द्विविधो नित्यो जन्य इत्यादिमोऽभिधा। ❀**
**अपरः परिभाषा तावविशेषेण बोधकौ॥ ७॥**

**ख्यायामिति।** इदं सूत्रम्। **जात्याख्यायां** भावप्रत्ययव्यतिरेकेण प्राधान्येन जातिवाचकत्वे सति, **एकस्मिन्** एकत्ववतो बोधविषयत्वेपि तज्जातिवाचकपदात् विकल्पेन बहुवचनं विधत्ते। उदाहरणं ब्राह्मणाः पूज्याः, ब्राह्मणः पूज्य इत्यादिकम्। तत्र ब्राह्मणपदस्य प्राधान्येन ब्राह्मणत्वजातिवाचकतया जातेश्च तस्या एकत्वेन बहुत्वान्वयायोग्यतयाप्राप्तं बहुवचनमनेन विधीयते। तदर्थबहुत्वस्य च ब्राह्मणत्वैकदेशे ब्राह्मणेन्वयः। ब्राह्मणत्वस्य ब्राह्मणेतरावृत्तित्वे सति सकलब्राह्मणवृत्तित्वस्वरूपस्य ब्राह्मणघटितत्वात्। एवञ्चोक्तव्युत्पत्तेरेतादृशस्थले सङ्कोचनीयत्वान्नानुपपत्तिः। इदञ्च "ब्राह्मणा इति" बहुवचनस्य सार्थकत्वे तस्य निरकर्थत्वस्यैकत्वार्थकत्वस्य चाग्रे दर्शनीयस्योपगमे तु बीजान्तरमेवोक्तव्युत्पत्तिसङ्कोचकमूहनीयम्। ५, ६।

एवमुक्तेन शुद्धत्वधर्म्मान्तरोपलक्षितत्वादिप्रकारेण शक्यतावच्छेदकस्य वैलक्षण्येन सङ्केतानां वैलक्षण्यस्य निरूपणाच्छिष्याणां तादृशसङ्केतभेदज्ञाने जाते इतोऽन्यप्रकारेण सङ्केतानां भेदकं किमीत्याकाङ्क्षायां तन्निवृत्तयेन्यप्रकारेणापि सङ्केतभेदं ज्ञापयितुं अग्रिमकारिकारम्भ इत्याह—**एवं प्रवृत्तीत्यादिना। सङ्केतो द्विविध इति।** विधादिपदसमभिव्याहृतसङ्ख्यावाचकैकद्व्यादिपदानामुद्देश्यतावच्छेदकसमनियतवस्तुविशिष्टान्यसङ्ख्यावाचकत्वात् द्वित्वस्यैव प्रकृते सङ्केतत्वसामनैयत्यं वस्तुविशिष्टान्यत्वञ्चेति न तत्रावान्तरसङ्केतोदासीनघटादिनिष्ठसङ्ख्यामादाय त्रिविध इत्यादीनामापत्तिः। सामनैयत्यं

---

१ सुबर्थसङ्ख्यान्वयेपि। इति मु० पु० पा०।

२ सूत्रसिद्धम्। इति मु० पु० पा०।

❀ इत्यादिमाभिधा। इति मु० पु० पा०।

## नित्यो भगवत्समवेतोभिधेति व्यवह्रियते, जन्यो जीवसमवेतः

स्वव्यापकत्वस्ववृत्तित्वाभ्याम् । स्ववैशिष्ट्यं वृत्तित्वञ्च व्यापकत्वसम्बन्धावच्छिन्नम् । व्यापकता च स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्ना प्रथमा द्वितीया च । तादृशसङ्ख्याया गुणत्वे समवायेनापेक्षाबुद्धिविशेषविषयत्वस्वरूपत्वे स्वरूपेण बोध्या । वस्तुवैशिष्ट्यञ्च स्ववृत्तित्वस्वविशिष्टवृत्तित्वाभ्याम् । सम्बन्धघटकवैशिष्ट्यञ्च स्वभिन्नत्वस्वसामानाधिकरण्याभ्यां बोध्यम् ।

❀ प्रकारार्थकपदसमभिव्याहृतसङ्ख्यापदार्थश्च उद्देश्यतावच्छेदकव्यापकोद्देश्यतावच्छेदकन्यूनवृत्तिमात्रवृत्तिवस्तुमदन्यसङ्ख्यैव । व्यापकताघटकसम्बन्धः स्वाश्रयवत्त्वम् । वस्तुमत्ता च स्ववृत्तित्वस्वभिन्नस्वसमानाधिकरणवृत्तित्वोभयसम्बन्धेन । भवति चैवंविधा सङ्ख्या उद्देश्यतावच्छेदकसमानाधिकरणपरस्परविरुद्धानेकप्रकारवृत्तिरेव । तेन शब्दाश्रयत्वविभुत्वाभ्यामाकाशो द्विविध इति न प्रामाणिकः, तद्द्वित्वस्य वस्तुमत्त्वात् । पृथिवीत्वादिभिर्गुणत्वेन च द्रव्याणि दशविधानीत्यपि न, गुणत्वादिसाधारणदशत्वसङ्ख्याया उद्देश्यतावच्छेदकन्यूनवृत्तीतरगुणत्ववृत्तित्वात् । न चानेनैव शब्दाश्रयत्वविभुत्वगतद्वित्वस्यापि वारणान्नापादेयं वस्तुमदन्यत्वमिति वाच्यम्, तस्य घटत्वसहितपृथिवीत्वादिवृत्तिदशत्वसङ्ख्यावारणार्थकत्वात् । द्रव्यत्वादिगतैकत्वमादाय द्रव्यमेकविधमित्यस्यानिष्टत्वे न्यूनवृत्तित्वं स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम् । अन्यथा सामानाधिरण्यमात्रम् । अनिष्टञ्च वस्तुत आकाशमेकविधमेवेतिवद्द्रव्यमेकविधमेवेत्येव । द्रव्यत्वसहितपृथिवीत्वादिगतदशत्वसङ्ख्यावारणन्तु वस्तुमदन्यत्वविरहादेव ।

यत्तु घटत्वघटान्यपृथिवीत्वसहितजलत्वादिगतदशत्वसङ्ख्यावारणाय वस्तुमत्त्वं स्वन्यूनवृत्तिवृत्तित्वस्वानधिकरणवृत्तिवृत्तित्वोभयसम्बन्धेन वाच्यम्, पृथिवीत्वरूपवस्तुमत्वाच्च तद्वारणम् । घटत्वादिरूपवस्तुमत्त्वस्य पृथिवीत्वादिगतनवत्वे वारणाय स्वसामानाधिकरण्यसहितस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपन्यूनवृत्तित्वोपादानम् । तत्रैव द्रव्यत्वादिरूपवस्तुमत्त्ववारणाय द्वितीयसम्बन्धोपादानम् । एवञ्च द्रव्यत्वसहितपृथिवीत्वादिशतदशत्वसङ्ख्यावारणायोद्देश्यतावच्छेदकन्यूनवृत्तित्वं भेदप्रतियोगितावच्छेदकगर्भमेवो-

---

❀ चिह्नान्तर्गतः विधादिपदसमभिव्याहृतसङ्ख्यापदार्थविचारः टीकाकर्त्तुरेव असंलग्नपत्रेषु प्राप्तः । तस्य समीचीनत्वात् प्रामाणिकत्वाच्चात्र सयोजितः ।

**परिभाषेत्युच्यते, तयोस्सङ्केतत्वेनैव स्मारकत्वमनुभावकत्वञ्चेति युज्यते ।**

**नित्यसङ्केतिताद् गवादिपदादिव पाणिन्यादिना पित्रा वा सङ्केतिताद्*गुणवृद्ध्यादिचैत्रादिपदाद्देङामादेर्चा मनुष्यविशेषस्य च स्मरणमन्वयबोधश्च ।**

पादेयमिति, तदनादेयम्, पृथिवीजलान्यतरत्वमादाय पृथिवीत्वादिगतनवत्वस्यापि वस्तुमत्त्वापातात् । पृथिवीजलान्यतरत्वरसवत्त्वरूपवत्त्वस्पर्शवत्त्वभूतत्वादिसहिततेजस्त्ववायुत्वकालत्वादिगताष्टत्वसप्तत्वषट्त्वपञ्चत्वादिसङ्ख्यानां पृथिवीजलतेजोन्यतमत्वरूपत्वाद्यात्मकवस्तुमत्त्वादिनैव वारणीयतया पृथिवीजलान्यतरत्वादिवारणप्रयासस्याकार्य्यत्वात् । तस्मात् प्रागुक्तमेव वस्तुमत्त्वनियामकं सम्बन्धद्वयमुपादेयम् । प्रागुक्तसङ्ख्यामादाय दशविधत्वसप्तविधत्वादिकमिष्यत एव द्रव्यस्य । अत एव पदार्थस्य भावाभावाभ्यां द्विधाविभागः क्वचित्, क्वचित् सप्तधा, क्वचिच्च षोडशधा, क्वचिच्चेतनाचेतनाभ्यां द्विधेति । षडेव भावाः, नवैव द्रव्याणीत्यादौ न सङ्ख्यान्तरव्यवच्छेदे, किन्तु द्रव्यत्वादिरहिते भावत्वस्य पृथिवीत्वादिरहिते द्रव्यत्वस्य व्यवच्छेदे तात्पर्य्यम् । एतद्विचारश्च न्यायलीलावत्यां द्रष्टव्यः ।

**तौ नित्यजन्यसङ्केतौ अविशेषेण** एकरूपेण बोधयोः स्मरणशाब्दबोधयोः प्रयोजकावित्यर्थः । तयोर्नित्यत्वजन्यत्वघटिततयैकरूपेण जनकत्वं कथमित्यत आह—**सङ्केतत्वेनैवेति** । नित्यत्वजन्यत्वे अपहाय सङ्केतत्वमात्रेणोभयानुगतेनैव तयोः कारणत्वं प्रयोजकत्वञ्चेत्यर्थः । ज्ञायमानस्य सङ्केतस्य कारणत्वं सङ्केतज्ञानस्य च तथात्वे प्रयोजकत्वं बोध्यम् । सङ्केतज्ञानस्य पदार्थोपस्थिति प्रत्येव कारणत्वमिति तु न वाच्यम्, व्यापारेण व्यापारिणोन्यथासिद्धेः कर्त्तुमनौचित्यादतः **स्मारकत्वमनुभावकत्वञ्चेत्यु**क्तम् ।

जन्यसङ्केतादपि नित्यसङ्केतवत् स्मरणादीनामुदयादेव तयोरेकरूपेण कारणत्वमित्याह—**नित्यसङ्केतितादिति** । कर्म्मधारयोत्तरेतच्प्रत्ययान्नित्यसङ्केतविषयादित्यर्थः । **गवादिपदादिवे**त्यस्य **स्मरणमन्वयबोधश्चे**त्यनेनान्वयः । **पाणिन्यादिनेति** तृतीयान्तद्वयं क्रमेण **गुणवृद्ध्यादिचैत्रादिपदाभ्यामन्वि-**

---

* गुणवृद्ध्यादिपदाच्चैत्रादिपदात् । इति मु० पु० पा० ।

**ननु ‡ पितृसङ्केतितपदविशेषस्याप्यभिधैव, अतएव "पिता नाम कुर्य्यात्" इति श्रूयते। तदभिधायकत्वमेव हि तन्नामत्वम्, अत एव "द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तःस्थं दीर्घाभिनिष्ठानं कृतं कुर्य्यान्न तद्धितम्..." इत्यादिगृह्येण वर्गादिद्वयभिन्नैः स्पर्शैर्हकारेण**

तम्। तृतीयार्थश्चाधेयत्वं व्युत्पत्तिवैचित्र्येण सङ्केतितपदार्थैकदेशे सङ्केतेन्वितम्।

गुणादिपदे जन्यसङ्केतोस्तु चैत्रादिपदे तु नित्यसङ्केतरूपाभिधैवेति मतं दूषयितुमुपन्यस्यति—**नन्वित्यादिना। पदविशेषस्य** देवराजादिपदस्य वक्ष्यमाणस्य। षष्ठ्यर्थो निरूपितत्वमभिधापदार्थेन्वितम्। **अतएवे**ति। चैत्रादिपदेष्वप्यभिधायाः सत्त्वादेवेत्यर्थः। "पिता नाम कुर्य्यात्" इति श्रुतौ पुत्रस्येत्यस्याध्याहारः। नामपदार्थोभिधानिरूपकत्वं तच्च चैत्रत्वादिप्रकारतानिरूपितविशेष्यताका बुद्धिश्चैत्रपदजन्या भवत्वित्याकारकसङ्केतीयबुद्धित्वावच्छिन्नोद्देश्यतारूपाया अभिधायाः स्वनिरूपितजन्यत्वप्रकारतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताश्रयत्वरूपम्। तदेकदेश उद्देश्यतायामध्याहृतपुत्रस्येति षष्ठ्यन्तार्थपुत्रनिष्ठत्वस्यान्वयः। **पितेति** प्रथमान्तार्थपितृनिष्ठत्वान्विते कृधात्वर्थप्रयत्ने इष्टसाधनत्वादेर्लिङर्थस्यान्वयः। एवञ्चोक्तश्रुत्या चैत्रादिपदानामुक्ताभिधानिरूपकत्वज्ञापनादेव तत्राभिधेति भावः। तत्रत्यनामपदस्य तदभिधायकत्वानात्मकत्वे सङ्केतितशब्दमात्रपरत्वे वक्ष्यमाणपारस्करगृह्यवाक्यस्यानर्थक्यमित्याह—**अत एवेत्यादिना। अतएव** नामपदस्य नित्यसङ्केतरूपाभिधानिरूपकपरत्वादेव। **"द्व्यक्षरम्"...** इत्यादिपारस्करगृह्यवाक्यं नामकरणप्रकरणस्थम्। द्वे अक्षरे चत्वार्य्यक्षराणि यस्मिँस्तत्। अनयोर्य्यथेच्छमेव विकल्पो वाशब्देन बोध्यते। **घोषवन्ति** बाह्यप्रयत्नान्तर्गतघोषप्रयत्नवन्ति गघङजझञडढणदधनबभमह इत्येतान्यक्षराण्यादौ यस्य तद् **घोषवदादि। अन्तरन्तःस्थम्** अन्तर्म्मध्ये अन्तःस्था यरलवा यस्य तत्। **दीर्घो** गुरुर्ह्रस्वभिन्नो द्विमात्रो वा वर्णोभिनिष्ठाने अन्तेवसाने यस्य तत्। **कृतं** कृत्प्रत्ययान्तं पितामहादिना कृतमिति वा। **न तद्धितं** न तद्धितान्तमिति व्याख्यातं कर्कादिभिस्तदनुसारेणैव तद्वाक्यस्यार्थमाह—**वर्गादीति। वर्गाणां** कचटतपानां पञ्चानाम्। **आदिद्वयेभ्यः** कखचछटठतथपफेभ्यो **भिन्नैः स्पर्शैः** कादिमान्तवर्णैर्गादिभिः पूर्वोक्तैः।

‡ पितृसङ्केतितस्य। इति मु० पु० पा०।

**च घोषवद्भिरादौ यरलवैरन्तःस्थैर्मध्ये दीर्घेणोपान्त्येन घटितं कृदन्तं देवराजादिपदमेवाभिधायकमिति नियम्यते, तदितरत् पित्रादिसङ्केतित-**

**हकारेण च** तस्यापि घोषप्रयत्नवत्तायाः शिक्षादावुक्तत्वात् । **अभिनिष्ठानेत्य-** स्यान्तसमीपार्थकत्वमित्याशयेनाह—**उपान्त्येनेति** । यद्यपि कर्कादिभाष्येष्व-भिनिष्ठानपदस्य "समाप्तिरवसानम्" इति विवरणदर्शनेनान्त एव तस्यार्थ इति प्रतीयते, तथापि तदुदाहृतस्यैव "देवराजशर्मा". .इत्यादिपदस्यान्ते दीर्घाभावादसङ्गतिः स्यादिति, तत्राप्यवसानादिपदानामुपान्त्यबोधकत्वमेवेत्या-शयेनात्रापि तथैवोक्तमिति बोध्यम् । **देवराजादी**त्यादिपदेन जयराज-हरिराजादिकं ग्राह्यम् । **नियम्यते** "पिता नाम कुर्य्याद्" इति श्रुत्या घोषप्रयत्नाभाववतां तद्धितान्तानां चतुरधिकाक्षराणाञ्चाखिलानामेव नामत्वे प्राप्ते द्व्यक्षरादिषूक्तलक्षणलक्षितेष्वेव "तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या-भिधीयते"इत्यनेनोक्तपरिसङ्ख्याविषयत्वं ज्ञाप्यते इत्यर्थः । **तदितरत्पर्य्युदस्यते** इत्यग्रिमवाक्यानुसाराद् उक्ताभिधायकत्वस्वरूपनामत्वस्य पाक्षिकत्वाभावाच्च "नियमः पाक्षिके सति" इति लक्षितस्य नियमस्य प्रकृतेसम्भवात् । **तदितरत्** देवराजादिपदभिन्नम् । **तद्धितान्तादीति** । अयम्भावः निरुक्तगृह्यवाक्येन "न तद्धितम्" इत्यनेन तद्धितान्तस्य "घोषवदादि" इत्यनेनाघोषवदादेरेव पर्य्युदासो न तु ज्यौतिषोक्तं* "नक्षत्रदेवता एता एताभिर्य्यज्ञकर्मणि यजमानस्य

---

* लगधाचार्य्यप्रणीते ज्यौतिषवेदाङ्गनामकग्रन्थे कृत्तिकानक्षत्रमारभ्य सर्वनक्षत्राणां देवता अधस्तनैश्श्लोकैः प्रदर्शितास्तद्यथा—

"अग्निः प्रजापतिः सोमो रुद्रोदितिर्बृहस्पतिः ।
सर्पाश्च पितरश्चैव भगश्चैवार्य्यमापि च ॥३२॥
सविता त्वष्टाथ वायुश्चेन्द्राग्नी मित्र एव च ।
इन्द्रो निर्ऋतिरापो वै विश्वेदेवास्तथैव च ॥३३॥
विष्णुर्वसवो वरुणोज एकपात्तथैव च ।
अहिर्बुध्न्यस्तथा पूषा अश्विनौ यम एव च ॥३४॥"

एतदुत्तरम् "नक्षत्रदेवता एताः" इत्यादि पद्य विद्यते । तदर्थश्च या एता नक्षत्रदेवता उक्ता एताभिर्यन्नाम तद् यजमानस्य यज्ञकर्म्मणि नक्षत्रविशिष्टकालसमुत्पन्नं शास्त्रज्ञैः स्मृतमिति । नक्षत्रदेवतावाचकपदघटितं नाम अग्निदत इत्यादि कार्य्यमिति यावत् ।

**मपि तद्धितान्तादि पर्य्युदस्यते। अन्यथा स्मृतिवैयर्थ्यादिति चेन्न,**

शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम्॥" इत्युक्तस्य नाक्षत्रस्य नाम्नः। "नाक्षत्रं नाम च नक्षत्रपादाक्षरादिकं चूडामणीत्यादि कार्य्यम्" इति वृद्धाः। गृह्यपरिशिष्टे च कचित्तथैवोक्तम्। एतदेव जातकर्म्मप्रकरणे "नक्षत्रनाम च निर्दिशति" "तद्रहस्यं भवति" इत्यापस्तम्बेनोक्तम्। तदेव च "अभिवादनीयञ्च समीक्षेत तन्मातापितरौ विद्यातामौपनयनात्" इत्याश्वलायनेनोक्तम्। नाम चेति चकारेण सांव्यवहारिकनामान्तरसमुच्चयः। रहस्यमिति। अप्रकाश्यमित्यर्थः। "जन्मनाम च गोपयेत्" इति स्मृतेः। नक्षत्रनामैवाभिवादनीयम् अभिवादनप्रयोजनन्नाम रहस्यं कर्त्तव्यम्। तच्च औपनयनाद् आ मौञ्जीबन्धनान् मौञ्जीबन्धनान्तम्। तन्नाम मातापितरावेव जानीयाताम्, उपनयनकाले चानेन नाम्नाभिवादयेति कुमारं प्रति वाच्यम्। अतएव शङ्खेनाप्युक्तम् "कुलदेवतानक्षत्रादिमाससम्बद्धं नाम पिता वा कुर्य्यादन्योपि वा कुलवृद्धः" इति। एवमेव नामकरणे शिष्टानामाचारश्च। तत्तन्नक्षत्रवाचकेभ्यः शब्देभ्यो जातार्थप्रत्यये निष्पन्नं तत्तन्नक्षत्रनामेति केचित्। तत्र "पुत्रस्य नाम गृह्णाति रौहिणाय तिष्याय" इति बौधायनसूत्रं मूलम्। नाम गृह्णातीति। श्रौते कर्म्मण्ययं यजमानोमुकशर्म्मणे पुत्रायायुराशास्ते इत्यादिप्रयोग इत्यर्थः। स च दर्शपूर्णमासयोर्वेदिमध्ये यजमान उपविश्य पुत्राणां नाम गृह्णाति 'अमुकशर्मा शं तनोतु' इत्यादि प्रयुज्यते। आश्वलायना अपि "अनुराधो देवदत्त इति प्रयोक्तव्यम्" इति देवत्रातोक्त्या "निर्दिशेद् यजमानस्य नाम सांव्यवहारिकम्। नाक्षत्रञ्च यथा कृष्णशर्म्मा रौहिण इत्यपि॥" इत्याश्वलायनश्रौतकारिकोक्त्या च तथैवाचार इति, नामकरणेपि तदेव नाक्षत्रं नामेति च वदन्ति। परे तु बौधायनादिवाक्ये रौहिणादिपदं तन्नक्षत्रजातत्वेन तत्तद्देवतानामोपलक्षणम्। एवं हि ज्यौतिषेण तेषामेकमूलकल्पनालाघवं भवति, विकल्पस्यानौचित्यात्, संज्ञापर्य्यायनामशब्देन केवलयौगिकरौहिणादिशब्दानां ग्रहीतुमनौचित्याच्च। अभिवादनं प्रयोजनमस्येत्यर्थकाभिवादनीयशब्देन तस्य वक्तुमशक्यत्वाच्च तस्य साधारणत्वादित्याहुरिति। **पर्य्युदस्यत इति।**

* "पर्य्युदासस्स विज्ञेयो यत्रोत्तरपदेन नञ् ॥
विधेर्य्यत्राप्रधानत्वं प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोसौ क्रियया सह यत्र नञ् ॥"

इत्युक्तोन्योन्याभावात्मकपर्य्युदासस्तद्धितपदेनोत्तरपदेन समभिव्याहृतस्य नञोर्थ इत्याशयेनेदम् । तथा च तद्धितान्तभिन्नं नाम कुर्य्यादिति तदर्थः । न च नञः पर्य्युदासवाचकत्वे वार्त्तिककारेण समासनियमस्योक्तत्वादसमस्तनञः

---

* "प्राधान्य हि विधेर्यत्र प्रतिषेधेप्रधानता ।" इति पूर्वार्द्धं पद्यम् । तदर्थश्च प्रथमान्तप्रतियोगिवाचकपदसमभिव्याहृतेन समासघटकेन वा नञा ( नञ् न एतदन्यतरेण शब्देन ) उत्तरपदार्थेन सह यस्यार्थस्यान्वयो बोध्यते स पर्य्युदास इति । अत्र मणिकाराः प्राहुः—नञ्समासे अब्राह्मणमानयेत्यत्र पर्य्युदासे पूर्वपदे नञ्युत्तरपदार्थसम्बन्धिनि क्षत्रिये लक्षणा, अघटः पट इत्यादौ पर्य्युदासार्थे नञ्यपि सामानाधिकरण्यादभाववल्लक्षणा, न पचतीत्यादौ क्रियासम्बन्धे भूतले न घट इत्यादौ च प्रसज्यप्रतिषेधे तु नञो मुख्यार्थता । "यजतिषु ये यजामह करोति नानुयाजेषु" इत्यत्र पर्य्युदासे नञ् । तेनायमर्थः-नानुयाजेषु अनुयाजव्यतिरिक्तेषु यजतिषु "ये यजामहे" इति मन्त्र करोतीति । अत्रेदमपि बोध्यम् । "नवजलधरः सन्नद्धोय न दृप्तनिशाचरः"...इत्यादौ तत्पुरुषसमासे गुणीभावे नञः पर्य्युदासतया निषेधस्य विधेयतयानवगमः । "जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः । अगृध्नुराददे सोर्थानसक्तः सुखमन्वभूत् ॥"...इत्यादौ अत्रस्तादितामनूद्यात्मगोपनाद्येव विधेयमिति नञः पर्य्युदासतया गुणीभावो युक्त एव । मीमासकास्तु "पर्य्युदासस्स विज्ञेयो यत्र पूर्वपदेन नञ् । प्रतिषेधस्स विज्ञेयो यत्रोत्तरपदेन नञ् ॥" ( मी० न्या० पृ० ६४ ) । अयमर्थः । उत्तरपदं प्रत्ययः । तदन्यत्पूर्वपदम् । तत्र यदा प्रत्ययार्थभावनया सह नञः सम्बन्धस्तदा प्रतिषेधः । यदा तु प्रत्ययार्थभावनाव्यतिरिक्तेन धात्वर्थेन वा पदार्थेन सह नञः सम्बन्धस्तदा पर्य्युदासः । आद्योदाहरणम् "न कलञ्जं भक्षयेत्" इति । अत्र हि लिङ्डर्थप्रवर्त्तनया सह नञः सम्बन्धः । नञश्च स्वभावः स्वसम्बन्धिप्रतिपक्षबोधकत्वम् । तदत्र प्रवर्त्तनाप्रतिपक्षभूता निवर्त्तना प्रतिपादयति । तथा च कलञ्जकर्म्मकभक्षणनिवर्त्तनेति बोधः । द्वितीयोदाहरणन्तु "नेक्षेतोद्यन्तमादित्यम्" इति । अत्र हि धात्वर्थेन सह नञः सम्बन्धः । तथा च नञीक्षतिभ्यामीक्षणविरोधी नेक्षे इत्यनीक्षणसकल्पः प्रतिपाद्यते । वैयाकरणास्तु समासघटकस्य नञो यदोत्तरपदार्थेन सहान्वयस्तदा पर्य्युदासः, यदा च तादृशस्यैव नञः क्रियया सहान्वयस्तदा प्रसज्यप्रतिषेधः, व्यस्तस्य तु नञः क्रिययैवान्वयात्प्रसज्यप्रतिषेध एव इत्याहुः । तदुक्तम् । "पर्य्युदासस्स विज्ञेयो यत्रोत्तरपदेन नञ् । प्रतिषेधस्स विज्ञेयो क्रियया सह यत्र नञ् ॥" इति ।

**परिभाषयैवोपपत्तावभिधाकल्पनायां मानाभावात्, आजानिकप्रयोग-विरहस्याभिधाबाधकत्वाच्च ।**

**नामपदन्तु सङ्केतितशब्दमात्रे शक्तम्, न तु नित्यसङ्केतितशब्दे ।**

कथं तथात्वमिति वाच्यम्, सूत्रकारमते सर्वस्यैव समासस्य महाविभाषाधिकारीयत्वात् । अत एव मीमासकैः "यजतिषु ये यजामहं करोति नानुयाजेषु" "दीक्षितो न जुहोति"... इत्यादावनुयाजभिन्नेषु यागेषु ये यजामहं मन्त्रं करोति, दीक्षितभिन्नो जुहोतीत्यर्थनिर्णयोसमस्तनञोपि पर्य्युदासवाचकत्वोपगमादेवाङ्गीकृतः । अत एव च "वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये । शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवासयत्नः ।।" इति कुमारसम्भवस्थमहाकविकालिदासप्रयोगे तादृशनञः प्रसज्यार्थकत्वासम्भवादन्योन्याभाव एव तदर्थः । अथवा समासनियमेपि "अमानोनाः प्रतिषेधवचनाः" इत्यनुशासनेनान्योन्याभाववाचकेन नशब्देन समासे "नतद्धितम्" इति पदम् । न च तस्य प्रतिषेधस्यात्यन्ताभावस्यैव वाचकत्वम्, न त्वन्योन्याभावस्येति वाच्यम्, "गमिकर्म्मीकृतनैकनीवृता"... इत्यादिश्रीहर्षप्रयोगदर्शनेन प्रतिषेधपदस्यान्योन्याभावस्याप्युपलक्षकत्वमित्यस्याधस्तान्निरूपितत्वात् । **अन्यथा** गृह्यवाक्यस्योक्तनियमाबोधकत्वे **वैयर्थ्यादिति** । श्रुत्या सामान्यतोखिलानामेव नामत्वस्य बोधनाद् घोपवदादिकानामपि तत एव नामत्वस्य प्राप्ततया गृह्यवाक्यस्य निष्प्रयोजनकत्वप्रसङ्गादित्यर्थः । मतमिदं दूषयति **नेत्यादिना । परिभाषयैवेति** । अयमाशयः—दृष्टेन कार्य्यस्यासम्भव एवादृष्टस्य परिकल्पनम्, गवादिपदेष्वनादिष्वाधुनिकानां ततोपि पूर्वेषां केषाञ्चिदपि सास्नादिमदर्थे सङ्केतज्ञापकस्य कस्यचिदभावात्तादृशार्थस्य तेषामपि बोधस्य वेदादितो ज्ञापनादीश्वरसङ्केतस्तत्र कल्प्यते । पित्रादिसङ्केतितपदेषु पुत्रादिबोधकत्वं तत्सङ्केतेनैवोपपन्नमत एवैकानुपूर्वीकादपि देवराजादिपदादन्यान्यपित्रादिसंकेतितादन्यान्यपुत्रादिबोध इति तत्र दृष्टेनैव पितृसंकेतरूपपरिभाषया तत्तदर्थबोधस्योपपत्तौ किमित्यदृष्टेश्वरसङ्केते तद्विषयताकत्वं कल्पनीयमिति । बाधकमपि तत्र दर्शयति—**आजानिकेति** । एवञ्चानादिप्रयोगाभावादपि न तत्राभिधेति बोध्यम् ।

उक्तश्रुतिघटकनामपदस्यापि नाभिधयार्थप्रतिपादकपरत्वम्, किन्तु सङ्केतमात्रेण, तस्य च पित्रादिसङ्केतसत्त्वेप्युपपत्तिरित्याह—**नामपदन्त्विति** । नाम-

"अदेङ्गुणो नाम" इति शास्त्रकारीयपरिभाषामादायापि नामपद-प्रवृत्तेः। घोषवदादिविधिना तु सुतसंस्कारकत्वं क्रतूपकारकत्वं वा पदविशेषस्य नियम्यते, न त्वभिधेति बहवः।

मणिकृतस्तु आधुनिकनाम्नामशक्तत्वे शक्यसम्बन्धरूपलक्षणाया अप्ययोगाद्वृत्तिमत्त्वस्वरूपमर्थवत्त्वमपि न स्यात्। तथा च प्राति-

पदस्य पूर्वोक्तार्थकत्वे बाधकमप्याह—**अदेङामिति**। तथा च तत्राधुनिकस्यैव सङ्केतस्य "अदेङ्गुणः" इति सूत्रेण बोधनात्तत्र नामपदप्रयोगोऽसाधुरेव स्यादिति भावः। गृह्यवाक्यस्यापि वैयर्थ्यमपाकरोति—**घोषवदादीति**। घोषवदादि-कत्वस्य नाम्नि कुतोऽप्यप्राप्ततया नामत्वसामान्यधर्म्मेण देवराजादिपदविशेषाणां "पिता"...इत्यादिश्रुत्या प्राप्तावपि घोषवदादिकत्वादेर्विधेयत्वमेवेत्याशयेन **विधिने**त्युक्तम्। **सुतसंस्कारकत्वमिति**। नामकरणस्य दशविधसंस्कारान्तर्गतस्य प्रयोजकत्वं देवराजादिपदानामेव, न तु तदितरेषामित्येवोक्तगृह्येण परिसंख्यायत इत्यर्थः। **क्रतूपकारकत्वमिति**। यज्ञकर्म्मणि प्रयोगार्हत्वेन तदुप-कारकत्वं बोध्यम्। एवञ्चोक्तप्रयोजनद्वयवत्त्वेन नोक्तवाक्यस्य वैयर्थ्यमिति भावः।

सादिदेवदत्तादिपदेष्वप्यभिधैवास्तीति स्वीकर्त्तॄणां चिन्तामणिकाराणा-म्मतमपि निरसितुमुपन्यस्यति—**मणिकृतस्त्वित्यादिना**। **आधुनिक-नाम्नामशक्तत्व इति**। पित्रादिकृतदेवराजादिपदानां नित्यसङ्केताभाव इत्यर्थः। **प्रातिपदिकसंज्ञेति**। "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इति सूत्रेण शक्तिलक्षणान्यतरवृत्तिमत एवार्थवत्त्वेन प्रातिपदिकसंज्ञाया विधानात्। तदभावाद्यथा गाछमाछादिशब्दस्वरूपाणा प्रातिपदिकसंज्ञाविरहस्तथा देव-दत्तादिपदानामपि तद्विरह एव प्रसज्येत। न चार्थवत्त्वाभावेपि तादृशपदानामपि कथञ्चित् "उणादयो बहुलम्" इत्यनेन व्युत्पादनात् कृदन्तत्वादुत्तरसूत्रेणैव प्रातिपदिकसंज्ञा स्यादिति वाच्यम्, तत्राप्यर्थवदित्यस्योक्तसूत्रादनुवृत्तेरर्थ-वत्त्वाभावे तस्याप्यप्रवृत्तेः। तत्र तदनुवृत्तेरनुपगमे कृत्तद्धितपदयोर्विशेषण-वाचकत्वाभावात् "येन विधिस्तदन्तस्य" इति सूत्रेण तदन्तविधेरप्राप्त्या कृदन्ततद्धितान्तयोस्ततो बोधानुपपत्तेः। न च तदर्थं शब्दस्वरूपमित्येव विशेष्यमध्याहार्य्यं नार्थवदिति वाच्यम्, तत्सूत्रस्य प्रातिपदिकसंज्ञाविधायकत्वे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणापत्त्या "मूलकेनोपदंशं भुङ्क्ते"...इत्यादे-र्मूलकेनेति कारकविशिष्टस्यापि वाक्यस्य प्रातिपदिकसंज्ञापत्तेः। "कृद्ग्रहणे"

व्याकरणव्युत्पाद्यत्वलक्षणं साधुत्वमपि तत्र नानुपपन्नम्, "उणादयो बहुलम्"... इत्यादिना तेषां व्युत्पादनादित्याहुः ।

इत्थमपि टिशब्दादीनां प्रातिपदिकसंज्ञानुपपत्त्या "अव्यय-सर्वनाम्नामकच् प्राक् टेः"... इत्यादौ विभक्त्यनुपपत्त्यापत्तितादवस्थ्यात्, * टिसंज्ञासङ्केतग्राहकवाक्यस्य पञ्चम्यप्रकृतितया तदुपस्थिते † पञ्चमीप्रत्ययार्थान्वयानुपपत्तेश्च । अन्यथा लाक्षणिकशब्दस्य लक्ष्यार्थोपस्थापकत्वाभिनिवेशो मणिकृतामेवानुपपन्नः स्यात् । गङ्गायां

दिपदेषु व्याकरणव्युत्पाद्यत्वलक्षणस्य साधुत्वस्याभावान्न तेषु शक्तिसिद्धिरित्यत आह—**व्याकरणेति** । मतमिदं दूषयति—**इत्थमपीत्या**दिना । प्रातिपदिकसंज्ञान्यथानुपपत्त्यैव शक्तिसिद्धावपीत्यर्थः । **टिशब्दादीनामिति** । तेषां प्रातिपदिकत्वबोधकप्रमाणाभावादर्थवत्त्वाभावेन तत्संज्ञानुपपत्तेरित्यर्थः । प्रातिपदिकसंज्ञानुपपत्तौ पञ्चम्यनुपपत्त्या 'टेः' इत्यादिप्रयोगोऽनुपपन्न एव स्यादित्याह—**अव्ययेति** । ननूक्तसूत्रे टिपदं यथाकथञ्चिदेकाक्षरकोषादिनान्यार्थकमेवेति तस्यार्थवत्त्वान्न प्रातिपदिकसंज्ञानुपपत्तिरित्यत आह—**टिसंज्ञेति** । **वाक्यस्य** "अचोन्त्यादि टि" इति सूत्रस्य । **पञ्चम्यप्रकृतितयेति** । "अव्ययसर्वनाम्नामकच् प्राक् टेः" इति सूत्रस्थटिपदप्रकृतिकपञ्चम्यप्रकृतितयेत्यर्थः । **तदुपस्थिते**- "अचोन्त्यादि टि" इति सूत्रस्थटिपदोपस्थिते अचां मध्ये योन्त्यस्स आदिर्यस्य तदात्मके, ( पञ्चमीप्रत्ययार्थानुपपत्तेश्च ) पञ्चमीप्रत्ययार्थोवधित्वं तस्यान्वयानुपपत्तेः, अकज्विधायकसूत्रस्थटिपदस्यान्यार्थकत्वोपगमादित्याशयः ।

ननु "प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्" इत्यत्र प्रकृत्यर्थत्वं यथाकथञ्चित्प्रकृतिप्रयोज्यस्मृतिविषयत्वमेव, तथा च "टेः" इति टिपदेन स्ववृत्त्यानुपूर्वीमत्त्वसम्बन्धिनोचोन्त्यादि टीति टिपदस्यापि स्मरणेन तदर्थेपि पञ्चम्यर्थान्वयः स्यादेवेत्यत आह—**अन्यथेति** । यथाकथञ्चित्प्रकृतिस्मारितेपि प्रत्ययार्थान्वयोपगमे इत्यर्थः । **लक्ष्यार्थोपस्थापकत्वाभिनिवेशः** गङ्गादिपदानां स्वार्थसम्बन्धितीरादिरूपलक्ष्यार्थोपस्थितिजनकत्वाग्रहः । **अनुपपन्नः**

---

( १ ) व्याकरणव्युत्पाद्यत्वलक्षणसाधुत्वमपि । इति मु० पु० पा० ।

* टिसङ्केतग्राहकवाक्यस्य । इति मु० पु० पा० ।

† पञ्चमीप्रत्ययार्थानुपपत्तेः । इति मु० पु० पा० ।

घोष इत्यादौ पूरस्मारिते तीरे सप्तम्यर्थान्वयसम्भवात् ।

यदि च "टेः" इत्यादिपाणिनिप्रयोगान्यथानुपपत्त्या निरर्थकेष्वपि संज्ञाशब्देषु प्रातिपदिकसंज्ञाविधिराक्षिप्यते, तदा "पिता नाम कुर्य्यात्" इति नामपदप्रयोगान्यथानुपपत्त्या निरर्थकेपि तदाक्षेपसम्भवादिदमनुपपन्नमिव प्रतिभाति ।

स्यात् इत्यत्र हेतुर्गङ्गायामित्यादिः । पूरं प्रवाहः । सप्तम्यर्थान्वयसम्भवादिति । गङ्गापदशक्तिज्ञानात् प्रवाहस्योपस्थितौ तेन सह सामीप्यादिसम्बन्धिनस्तीरस्यैकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वेनैव स्मरणसम्भवात् तत्र सप्तम्यर्थाधेयत्वान्वये बाधकाभावादित्यर्थः । निरर्थकेषु शक्तिलक्षणान्यतरात्मकवृत्तिशून्येषु । संज्ञाशब्देषु अनुगतोपाध्यवच्छिन्नबोधकटिघुभादिशब्देषु आक्षिप्यते अनुमीयते । सूत्रस्थपञ्चम्यादिप्रयोगान्यथानुपपत्त्या शक्तिलक्षणान्यतराभाववतामपि प्रातिपदिकसंज्ञाया आक्षेपे श्रुतिस्थनामपदप्रयोगान्यथानुपपत्त्या देवराजादिपदानामपि तदन्यतराभावेपि प्रातिपदिकसंज्ञाक्षेपः स्यादित्याह— तदेति । इदमुपलक्षणम् ।

"आजानिकश्चाधुनिकः सङ्केतो द्विविधो मतः ।
नित्य आजानिकस्तत्र या शक्तिरिति गीयते ॥
कादाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृतः ।"

इति भर्तृहरिवाक्येन शास्त्रकारादीत्यादिपदग्राह्यपित्रादिसङ्केतस्याप्याधुनिकत्वबोधनाद् देवराजादिपदे नित्यसङ्केतरूपाया अभिधाया न सम्भवः, तच्छक्तिमत्त्वस्य सृष्टिकालत्वव्यापकतदनुभावकताकत्वव्याप्यत्वाद् देवराजादिपदेषु तादृशानुभावकताकत्वस्याभावात्, तत्र शक्तिसिद्धिसम्भवाभावश्चेत्यपि बोध्यम् ।

अत्र मणिकाराणामयमाशयः— प्रातिपदिकसंज्ञाप्रयोजकमर्थवत्त्वं न शक्तिलक्षणान्यतरात्मकवृत्तिमत्त्वम्, किन्तु सङ्केतलक्षणान्यतरात्मकतद्वत्त्वम्, टिघुभादिशब्देष्वपि पाणिनिसङ्केतसत्त्वान्न तेषां तत्संज्ञानुपपत्तिः ।

न चैवं देवराजादिशब्दानामपि पित्रादिसङ्केतवत्त्वेनैव सेति वाच्यम्, तेषां यज्ञादिकर्म्मसु प्रयोगार्हतया तत्त्वस्य च "नापभ्रंशितवै न म्लेच्छितवै"... इत्यादिश्रुत्या साधुशब्देष्वेव नियमनाद् व्याकरणव्युत्पाद्यत्वादिरूपस्य साधुत्वस्य देवराजादिपदेष्वेव सत्त्वम्, न तु टिघुभादिपदेषु, साधुसंस्कृत-

**यदपि "स्वं रूपं शब्दस्याशब्दसंज्ञा" इति व्याकरणबलेन सर्वशब्दानां स्वरूपे शक्तिरिति प्रतीयते । तथा च देवराजादिशब्दानां * निरूढलक्षणैव गृह्यसूत्रेण ग्राह्यते । शक्यार्थस्वरूपेण सह पितृसङ्केतस्यैव लक्ष्यार्थसम्बन्धत्वादिति न प्रातिपदिकसंज्ञाद्यनुपपत्तिरिति ।**

पदेषु च नित्यसङ्केतरूपायाश्शक्तेस्सर्वैरेवोपगमात् किमिति तादृशेष्वपि देवराजादिपदेषु तस्या अनुपगमः । तच्छक्तिमत्त्वस्येत्यादिनियमस्य चाप्रयोजकत्वात्, श्रुतिस्थनामपदस्य देवराजादिपदेषु लक्षणाया एवोपगमात्, तेष्वपि सृष्टिकालत्वव्यापकतदनुभावकत्वकस्य सत्त्वाद्वा, तेपामप्यभिधैवेति । एतदभिप्रेत्यैवा**नुपपन्नमि**त्यनभिधाया **अनुपपन्नमिव प्रतिभाती**त्युक्तम् ।

देवराजादिपदानां शब्दस्वरूपे एव शक्तत्वेनार्थवत्त्वात् प्रातिपदिकसंज्ञोपपन्नेत्यपि न समीचीनमित्यादर्शयितुमाह—**यदपीति** । **प्रतीयत** इति । यद्यपि तेन सूत्रेण व्याकरणस्थे "अग्नेर्ढक्"...इत्यादिसूत्रेग्निपदस्य वह्न्यर्थकत्वे वह्निशब्दादपि ढक्प्रत्ययप्रसङ्ग इति तत्राग्निपदं स्वरूपपरमेव, न त्वर्थपरमित्येव बोध्यते, न तु सर्वत्र सर्वेषां पदानां तत्त्वम्, तथाप्यशब्दसंज्ञेत्यनेन व्याकरणशास्त्रसङ्केतितगुणादिपदाना स्वरूपपरत्वाभावप्रतिपादनेन सर्वेपामेव शब्दानां तत्त्वं द्योत्यते, अन्यथा "अदेङ्गुणः"...इत्यादिना गुणादिपदानामदेङामेव बोधकत्वेन स्वरूपबोधकत्वस्याप्राप्तेर्निषेधायोगात्, प्राप्तस्यैव निषेधस्यौचित्यादित्यर्थः । **तथा च** उक्तरीत्या सर्वेषा शब्दाना स्ववृत्त्यानुपूर्व्यवच्छिन्नात्मकस्वरूपबोधकत्वे च **निरूढलक्षणैवेति** । अन्यथा देवराजादिपदेभ्यो मैत्रादेर्बोधो दुरुपपाद एव स्यादित्याशयः । शक्यसम्बन्धस्य लक्षणात्वात् देवराजादिपदशक्येन तत्स्वरूपेण सह मैत्रादीना सम्बन्धं दर्शयति—**शक्यार्थस्वरूपेणेति** । **पितृसङ्केतस्यैवेति** । सङ्केते पित्र्यत्वं परिचायकमात्रम्, न तु तेन रूपेण संसर्गता । तथा च स्वजन्यत्वप्रकारतानिरूपितसङ्केतीयबुद्धित्वावच्छिन्नोद्देश्यतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपित - निष्ठत्वसंसर्गावच्छिन्नावच्छेदकतावत्त्वमेव देवराजादिपदशक्येन देवराजेत्यादिस्वरूपेण सह मैत्रादेः सम्बन्ध इत्यर्थः । दृश्यते च सङ्केतस्य शक्यसम्बन्धत्वं द्विरेफद्विकादिपदे इति भावः ।

---

* मनुष्यविशेषे इत्यधिकः मु० पु०पा० ।

**तन्न, "अशब्दसंज्ञा" इत्यनेन पर्य्युदस्तानां टिघुभादीनामेव वृत्तिमत्त्वानुपपत्तितादवस्थ्याद् "गवित्याह"...इत्यादौ गोपदस्य स्वरूपपरतया[1] प्रातिपदिकसंज्ञापत्तेश्चेति। अधिकमुपरिष्टात्। ७।**

**ननु भवतु सङ्केतो नाम पदस्यार्थेन सङ्गतिः, सा किं सङ्केतत्वेन, उत गोत्वविशिष्टबुद्धौ[2] गोपदजन्यत्वावगाहिसङ्केतत्वेन ज्ञाता गवानुभव-**

मतमिदं दूषयति—**तन्नेति**। **अशब्दसंज्ञेत्यनेनेति**। टिघुभादिशब्दानां स्वरूपे शक्त्यभावस्य तेन प्रतिपादनात्तेषां वृत्तिमत्त्वाभावस्य तादवस्थ्यादित्यर्थः। स्वरूपपरत्वे वृत्तिमत्त्वादर्थवत्त्वे भाष्यप्रयोगानुपपत्तिमपि दर्शयति—**गवित्याहेत्यादाविति**। **उपरिष्टादिति**। अत्रैव ग्रन्थे पदधर्म्मिकवाचकताग्राहकप्रमाणव्युत्पादनावसरे इत्यर्थः। ७।

एतावतानादिगवादिपदानां सास्नादिमत्स्वर्थेष्वीश्वरसङ्केतस्य सङ्गतित्वं व्यवस्थाप्य तादृशसङ्केतस्येन्द्रियायोग्यत्वादनुमानादिनैव तद्ग्रहो वाच्यः स च—

"शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥"

इत्यभियुक्तोक्त्या व्याकरणादिना सङ्केतत्वेन सामान्यरूपेण गृह्यते, विशेषरूपेण वा—इत्याशङ्कते—**नन्वित्यादिना**। **सङ्केतो नामे**त्यत्र नामपदं सम्भावनार्थकमेव, न त्वभिधानार्थकम्, तथा सति "प्रकृत्यादिभ्यः" इति वार्त्तिकेन "नाम्ना सुतीक्ष्णः"...इत्यादाविव तृतीयाप्रसङ्गात्। सङ्केतज्ञानस्य विकल्पितप्रकारद्वयेनापि कारणत्वस्य दूषणीयत्वादिदानीं सङ्केतस्य सङ्गतित्वप्रकारकसम्भावनाविषयत्वस्यैवौचित्यान् नियतलिङ्गकपदद्वयस्य विशेष्यविशेषणभावस्थले समानलिङ्गकत्वस्यातन्त्रत्वाद् विभिन्नलिङ्गयोरपि सङ्केतसङ्गतिशब्दयोस्सामानाधिकरण्यं नानुपपन्नम्। नामपदस्य निपाततया तदर्थस्य विषयतया तत्रान्वयोपि नानुपपन्नः। **सा चे**ति प्राधान्येन सङ्गतिं परामृशतीत्यतस्तत्पदस्य स्त्रीत्वेन निर्देशः। **सङ्केतत्वेने**त्यत्र तृतीयार्थः प्रकारत्वं तस्य **ज्ञाते**त्यत्र ज्ञाने निरूपकत्वेनान्वयः। **उतेति** वाकारार्थे। **बुद्धाविति** सप्तम्यर्थो विशेष्यत्वं **गोपदजन्यत्वावगाहिसङ्केतत्वेनेति** समस्तपदार्थैकदेशे संकेते व्युत्पत्तिवैचित्र्येणान्वितम्। **गवानुभवस्मरणहेतुरिति**। गोत्वप्रकारके स्मरणे तद्द्वारा शाब्दबोधे च

१ स्वरूपपरतायाम् इति मु० पु० पा०।
२ गोत्वविशिष्टविषयकबुद्धौ इति मु० पु० पा०।

स्मरणहेतुः । आद्येतिप्रसङ्गः । द्वितीये ताद्रूप्येणोपमानादिना ग्रहणासम्भवः । तथाहि—प्रथमतोतिदेशवाक्याद्गवयसदृशो गोपदवाच्य इत्याकारकाद् गवयसादृश्यमुपलक्षणीकृत्य गोपदवाच्यत्वं प्रतीयते । तच्च वाच्यत्वं न *गोत्वविशिष्टविषयताकबुद्धित्वावच्छिन्नोद्देश्यताकसङ्केतस्वरूपम्, गोत्वादेः पूर्वमप्रतीतेः । अपि तु गोपदजन्यबुद्धित्वावच्छिन्नोद्देश्यताकसङ्केतविषयत्वमात्रम् । अन्यथातिदेशवाक्यादेव ‡ विशिष्ट-

कारणमित्यर्थः । **आद्येतिप्रसङ्ग** इति । अश्वादिपदसङ्केतज्ञानस्यापि सङ्केतप्रकारताकत्वात् ततोपि तादृशस्मरणादेरुदयप्रसङ्ग इत्यर्थः । **द्वितीये** तादृशस्मरणानुभवौ प्रति गोत्वविशिष्टविषयकबुद्धित्वावच्छिन्नोद्देश्यतानिरूपितगोपदजन्यत्वप्रकारताशालिसङ्केतत्वप्रकारताकज्ञानत्वेन कारणत्व इत्यर्थः । अश्वादिपदसङ्केतस्याश्वादिपदजन्यत्वादिघटितत्वेनातथात्वाद् दूषणान्तरमाह—**ताद्रूप्येणेति** । उक्तविशिष्टसङ्केतत्वेनेत्यर्थः । **उपमानादिने**त्यादिना व्याकरणादीनां परिग्रहः । तत्र तावदुपमानेन तदसम्भवं दर्शयति—**तथाहीति** । **गवयसदृशविति** । इदञ्च वाक्यं गामजानन्तं गवयञ्चमारण्यकं प्रति ग्रामीणस्येति बोध्यम् । **उपलक्षणीकृत्येति** । शक्यतानवच्छेदकस्य सादृश्यस्य विशेषणत्वासम्भवात् । उपलक्षणत्वादिकम् "इत्थम्भूतलक्षणे" इति सूत्रव्याख्यानावसरे ग्रन्थकृतैव निरुक्तमतो नात्र तद्दर्शनीयम् । **तच्च वाच्यत्व**मिति । उक्तातिदेशवाक्यार्थघटकं गोपदवाच्यत्वञ्चेत्यर्थः । **पूर्वमप्रतीतेरिति** । आरण्यकस्यैतत्पूर्वं गोत्वज्ञानाभावादुक्तगोत्वविशिष्टवैशिष्ट्यावगाहिनो ज्ञानस्य गोत्वज्ञानकारणकतयासम्भव इत्याशयः । तर्हि किं तदित्याह—**अपि त्वित्या**दिना । तथा च गोत्वस्य बुद्ध्यंशेप्रकारत्वादेव तस्य पूर्वमप्रतीतावपि नानुपपत्तिरित्याशयः । प्रमेयत्वादिना सामान्यलक्षणयापि कथञ्चिद् गोत्वस्य पूर्वं प्रतीतावुक्तानुपपत्तिविरहादुपमानवैयर्थ्यमेव तथा सति स्यादित्यत आह—**अन्यथेति** । गोत्व-

---

*गोत्वादिविशिष्टविषयताकबुद्धित्वावच्छिन्नोद्देश्यताकसङ्केतस्वरूपम् इति मु० पु० पा० ।

‡ गोत्वविशिष्टशक्तिसिद्धेः इति मु० पु० पा० ।

**शक्तिसिद्धेरुपमानवैयर्थ्यात् । ततो गोत्वावच्छेदेन गवयसादृश्यप्रत्यक्षेण जनितातिदेशवाक्यार्थस्मृतिर्गोत्वावच्छेदेन † स्वविषयीभूतं तादृशसङ्केतविषयत्वमेवोपमाययति । सङ्केते तु गोत्वविशिष्टविषयकबुद्धित्वावच्छिन्नोद्देश्यताकत्वं कथं गमयेदसामर्थ्यात् ।**

**एवं "कोकिलः पिकः" इति कोषोपि कोकिलत्वावच्छिन्ने* पिकपदजन्यबुद्ध्युद्देश्यकसङ्केतविषयत्वमात्रं ग्राहयति । न तु तादृशबुद्धौ कोकिलत्वविशिष्टविषयकत्वमपि, तादृशविशिष्टसङ्केतस्य पूर्वमग्रहे तद्विशिष्टे पिकपदलक्षणाया ‡ अग्रहात् ।**

विशिष्टविषयत्वस्य बुद्धाववगाहने इत्यर्थः । **उपमानवैयर्थ्यादिति** । अतिदेशवाक्यादेव गोत्वावच्छिन्ननिरूपितशक्तिग्रहस्योपपत्तेस्तदर्थमन्योपायानुसरणस्य निष्प्रयोजनकत्वादित्यर्थः । **ततः** गोत्वविशिष्टविषयकत्वानवगाह्युक्तातिदेशवाक्यार्थज्ञानात् । **गोत्वावच्छेदेनेति** । गोत्वावच्छिन्नविशेष्यतानिरूपितगवयसादृश्यप्रकारताशालिना गौर्गवयसदृश इत्याकारकेणेत्यर्थः । **गोत्वावच्छेदेन स्वविषयीभूतमिति** । तृतीयान्तार्थो गोत्वावच्छिन्नविशेष्यतानिरूपकत्वमु**पमाययती**त्यत्रोपमायामन्वितम् । **स्वं** स्मृतिः । **तादृशसङ्केतविषयत्वं** गोत्वविशिष्टविषयकत्वानवगाहिबुद्ध्युद्देश्यकोक्तसङ्केतविषयत्वमित्यर्थः । **कथं गमयेदि**त्यस्य **अतिदेशवाक्यार्थस्मृतिरि**ति पूर्वेणान्वयः । तस्यास्तदगमकत्वे हेतुः **असामर्थ्यादिति** । स्वाविषयविषयकज्ञानान्तरजनने ज्ञानानां कारणत्वाभावादित्यर्थः । उक्तातिदेशवाक्यार्थस्योपमानवैयर्थ्याद्यनुरोधेन गोत्वाद्यघटितविषयकत्वात् स्मृतेरप्यनुभवसमानाकारायास्तथात्वात् तज्जन्योपमितिः कथं तदधिकविषयिणी स्यादित्याशयः ।

एवं कोषादपि न शक्यतावच्छेदकघटितवाक्यार्थज्ञानसम्भव इत्याह— **एवं कोकिल** इति । तत्र पिकपदस्य कोकिलपदस्य च शक्यार्थबोधकत्वे- निराकाङ्क्षत्वम् । स्वरूपपरत्वे "कोकिलः पिक इत्यपि"... इत्याद्यमरवाक्य-

---

† स्वविषयीभूतसङ्केतविषयत्वम् इति मु० पु० पा० ।

* कोकिलात्वावच्छिन्न इति मु० पु० पा० ।

‡ अप्यग्रहात् इति मु० पु० पा० ।

एवं "शीतं गुणे" "मत्सरोन्यशुभद्वेषे"... इत्यादिकोषोपि* शीतपदत्वाद्यवच्छेदेन गुणविशेषत्वविशिष्टविषयकबुद्ध्युद्देश्यकसङ्केतविषयत्वमात्रम्, गुणविशेषार्थकगुणपदसमभिव्याहृतसप्तम्या प्रत्याययति। न तु-शीतपदजन्यत्वावच्छिन्नसङ्केतोद्देश्यत्वमपि तादृशबुद्धौ बोधयितुमीष्टे, विशिष्टस्य कोषप्रवृत्तेः पूर्वमनुपस्थित्या सप्तम्या स्मरणासम्भवात् ।

एतेन "कर्त्तरि कृत्"... इत्यादिव्याकरणमपि व्याख्यातम् । आप्तवाक्यमप्यतिदेशवाक्यवन्न विशिष्टशक्तिं बोधयितुमर्हति । न हि

स्य कोषत्वानुपपत्तिस्ततो वाच्यत्वस्याबोधादिति पूर्वपदं शक्यार्थकं पिकपदं स्ववाच्ये लाक्षणिकमित्येव तत्रोपगन्तव्यम् । तत्र वाच्यत्वं न कोकिलत्वरूपशक्यतावच्छेदकघटितं पूर्वोक्तयुक्तेरित्याशयः ।

लक्षणया वाच्यत्वबोधककोषस्य तादृशसङ्केताग्राहकत्वमुपदर्श्य सप्तम्या तद्बोधकस्य तद्दर्शयति—**एवं शीतमिति** । "गुणे शुक्लादयः पुंसि" इत्यग्रिमकोषस्थादिपदग्राह्यशीतपदस्यापि गुणवाचकस्य पुंस्त्वप्रसक्तेस्तद्व्यावर्त्तनायेदं वाक्यम् । **गुणविशेषत्वविशिष्टेति** । गुणत्वव्याप्यशीतत्वजात्यवच्छिन्नविशेष्यताकेत्यर्थः । **प्रत्याययती**त्यस्य **कोषोपी**ति पूर्वेणान्वयः। "भू सत्तायाम्"... इत्यादिकारिकया कोषस्थसप्तम्या अपि वाचकत्वार्थकत्वस्य वक्ष्यमाणत्वात् । अविदितशीतपदार्थं प्रत्येव तादृशकोषस्य सफलत्वात् शीतत्वविशिष्टविषयकज्ञाने शीतपदजन्यत्वस्यान्यथैव ज्ञाने कोषवैयर्थ्यमेवेत्याशयेनाह—**न तु शीतपदेत्यादि** । **एतेन** सप्तम्या विशिष्टवाचकत्वस्य स्मरणासम्भवेन । **व्याख्यातमिति** । तत्रापि कृत्संज्ञकपदत्वावच्छेदेन कर्तृत्वविशिष्टविषयकबुद्धित्वावच्छिन्नोद्देश्यताकसङ्केतविषयत्वमात्रमुक्तसूत्रेण ग्राह्यते, न तु बुद्धौ कृत्पदजन्यत्वावगाहिसङ्केतविषयत्वमित्यादि पूर्ववद्बोध्यमित्यर्थः । एवमाप्तवाक्यादीनामपि तत्तद्वाच्यतावच्छेदकाद्यज्ञाने तद्विशिष्टविषयकत्वावगाहिसङ्केतेन ग्राहकत्वविरह इति **आप्तवाक्यमि**त्यादिना **किमनुमानेनेति** ग्रन्थेन प्रतिपादितम् । स च निगदव्याख्यात एव ।

---

* इत्यादिकः । इति मु० पु० पा० ।

कलसो घटपदवाच्य इत्यत्र वाच्यपदेन घटत्वविशिष्टविषयकघटपद-जन्यबुद्ध्युद्देश्यकसङ्केतविषयः पदार्थविधया बोधयितुं शक्यते, प्रागनुपस्थितेः। अन्यथोपदेशवैयर्थ्यात्। व्यवहारवाक्यशेषविवरणशब्दान्तर-सामानाधिकरण्यानि तु अनुमानविधयैव सङ्केतग्राहकाणीति व्युत्पाद-यिष्यते। तथा च तत्र यवपदं दीर्घशूकवाचकम्, वृत्त्यन्तरं विना *शिष्टैस्तत्र प्रयुज्यमानत्वादित्याद्यनुमानेनापि यवत्वविशिष्टविषयकयव-पदजन्यबुद्ध्युद्देश्यकसङ्केतघटितं साध्यं यवपदे न साधयितुं शक्यते प्रागनुपस्थितेः। उपस्थितौ † किमनुमानेनेति चेत्?

उच्यते—

गोशब्दजन्यबुद्धौ या सङ्केतोद्देश्यता तया।
निरूपिता विशेष्यत्वे वर्त्तते या प्रकारता॥ ८॥

उक्तरीत्योपमानादीनां विशिष्टविषयकत्वावगाहिसङ्केतग्राहकत्वासम्भवे पद-पदार्थयोस्सङ्गतित्वस्य सङ्केते सत्यपि स्वरूपसतस्तस्य स्मरणाद्यप्रयोजक-त्वात् विशिष्टरूपेण ग्रहे कारणान्तराभावाच्च किं स्वरूपसतापि तेन? इति पूर्वपक्षे— शुद्धबुद्धित्वेनोपमितेः गोत्वादिविशिष्टविशेष्यकबोधोद्देश्यताकसङ्केत-विधेयकत्वेपि विशिष्टवैशिष्ट्यबोधमर्य्यादयैव गोत्वादावपि विधेयावगाहित्वेन विशिष्टसङ्केतज्ञानत्वेन तादृशान्वयबोधाङ्गत्वमिति सिद्धान्तयति–**उच्यते** इत्यादिना। **बुद्धावि**ति सप्तम्यर्थो निष्ठत्वमुद्देश्यतयान्वितम्। **तये**ति तृतीया-र्थोपि तदेव, निरूपकतानिरूपितनिरूप्यतावदात्मकनिरूपितपदार्थैकदेशेन निरूपकतयान्वितम्। **विशेष्यत्वे** इति सप्तम्यर्थो निष्ठत्वं प्रकारत्वेन्वितम्।

---

* आप्तैः। इति मु० पु० पा०।

† वा इत्यधिकः मु० पु० पा०।

**तदवच्छेदकत्वं यद्विषयीभावलक्षणम्।**
**तद्गोपदेन वाच्यत्वं गवादावुपमीयते॥ ९॥**
**विशिष्टवैशिष्ट्यबुद्धिमर्य्यादावशतस्तु सा।**
**अवच्छेदकता गोत्वगोसंसर्गेषु गृह्यते॥१०॥**
**विद्यते हि विशेष्यत्वोपरि संसर्गभेदतः।**
**व्यक्तिसंसर्गजातीनां सङ्केते गोचरीक्रिया॥११॥**

**तदवच्छेदकत्व**मिति तत्पदं प्रकारतापरामर्शकम्। **विषयीभावलक्षणं** विषयतास्वरूपम्। **तद्**िति तत्पदार्थस्तादृशावच्छेदकत्वम्, तच्चाभेदेन वाच्यत्वान्वितम्। **गोपदेनेति** तृतीयार्थो निरूपितत्वं पूर्ववद्वाच्यत्वान्वितम्। **गवादा**विति सप्तम्यन्तार्थोपि गवादिनिष्ठत्वं तेनैवान्वितम्। कर्म्मप्रत्ययार्थविषयत्वमपि तथैवेति युग्मकरूपस्य कारिकाद्वयस्य गोपदजन्यबुद्धित्वावच्छिन्नोद्देश्यतानिरूपितविशेष्यत्वनिष्ठप्रकारतानिरूपितावच्छेदकत्वरूपविषयत्वाभिन्नं गोपदनिरूपितगोनिष्ठवाच्यत्वमुपमितिनिरूपितविषयताश्रय इत्यर्थः। तृतीयचतुर्थ्योस्तु **सावच्छेदकता विशिष्टवैशिष्टयबोधमर्य्यादावशतो** गोगोत्वसमवायेपु गृह्यते। **हि** यतः **व्यक्तिसंसर्गजातीनां संसर्गभेदतः** वक्ष्यमाणैः भिन्नैः भिन्नैः संसर्गैः, "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति न्यायाद् भाववन्तस्यापि भेदपदस्य भेदाश्रयबोधकत्वात्। **सङ्केते गोचरीक्रिया** सङ्केतनिरूपितविशेष्यत्वम्। **विशेष्यत्वोपरि विद्यत** इत्यन्वयः। **जातीनामि**तिषष्ठ्यर्थो **विशेष्यत्वोपरी**तिविशेष्यत्वान्वयिप्रकारत्वम्। **गोत्वगोसंसर्गेष्वि**त्यस्य "लक्षणहेत्वोः क्रियायाः" इत्यत्र बह्वचो लक्षणपदस्य निर्देशाद् "अल्पाच्तरम्" इत्यस्यानित्यत्वज्ञापनाद् गोपदस्य पूर्वनिपाताभावेपि साधुत्वम्। **विशेष्यत्वोपरी**त्यव्ययोत्तरपदकसमासोपि "अनेकमन्यपदार्थे" इतिसूत्रस्थभाष्ये "सर्वपश्चात्" इतिप्रयोगदर्शनेन "पूरणगुण"...इत्यादिसमासनिषेधकसूत्रे पूर्वोत्तरसाहचर्य्यात् कृदन्तरूपाव्ययेनैव समासनिषेधात् साधुः। अतएव "तदुपरि" "यत्कृतेरीन्निगृण्हीमः" "आदेयाः किकृते भोगाः" "ज्ञातिपुरस्तन्तुवायस्य"... इत्यादिप्रयोगा अपि साधवः।

**गौर्गोपदवाच्येत्युपमित्या गोत्वविशिष्टमुद्दिश्य गोपदजन्यबुद्ध्युद्देश्यतया निरूपिता या विशेष्यत्ववृत्तिर्विशेषणता, तन्निरूपितं यद्विषयीभावलक्षणं विशेष्यत्वीयस्वरूपसंसर्गावच्छिन्नमवच्छेदकत्वम्, तेन संसर्गेण सङ्केतः सङ्केतीयः *संसर्गो वा विधीयते । ८ ।**

कारिकोक्तमर्थं क्रमेण विवृणोति—**गौरिति** । उपमितिः पदभेदेन भिन्नैवेत्याशयेन **गोपदवाच्ये**त्युक्तम् । **विशेष्यत्वीय**-(स्वरूप-) **संसर्गावच्छिन्न**मिति । विशेष्यताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नम् । वक्ष्यमाणे गोपदजन्या बुद्धिर्गोविशेष्यताका भवत्वित्याकारके सङ्केते प्रकारीभूतविशेष्यतायां गोः स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन प्रकारतया तत्सम्बन्धावच्छिन्नाधेयतायाश्च तत्सम्बन्धस्वरूपतया गोनिष्ठावच्छेदकतायाः स्वरूपसम्बन्धावच्छिन्नत्वं बोध्यम् । तत्र विशेष्यत्वीयत्वोपादानं गवादेः स्वरूपप्रतियोगित्वाभावेन तन्निष्ठावच्छेदकतायाः स्वरूपसम्बन्धावच्छिन्नत्वाभाव इतिशङ्कानिरासाय । तथा च विशेष्यतायाः स्वरूपेण गवि वृत्तित्वात्तदनुयोगित्वस्य तत्र सत्त्वात् तन्निष्ठावच्छेदकतायाः तथात्वं निराबाधमिति । संसर्गत्वन्तु स्वरूपत्वमात्रेण न तु विशेष्यताप्रतियोगिकत्वविशिष्टेन तेनेति बोध्यम् । **तेन संसर्गेण** स्वीयगोपदजन्यबुद्ध्युद्देश्यतानिरूपितविशेष्यत्वनिष्ठप्रकारतानिरूपिततादृशाधेयत्वसम्बन्धावच्छिन्नावच्छेदकत्वात्मकविषयतासंसर्गेणेत्यर्थः । **सङ्केतः** गोपदनिरूपितः **विधीयत** इत्यग्रिमेणान्वितः । तथा च गोत्वावच्छिन्नोद्देश्यतानिरूपिता या स्वीयगोपदजन्यबुद्धित्वावच्छिन्नोद्देश्यतानिरूपितविशेष्यत्वनिष्ठप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयत्वसंसर्गावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्ना गोपदनिरूपितसङ्केतत्वावच्छिन्नविधेयता तन्निरूपकत्वमुपमितेरित्यर्थः ।

दर्शितसंसर्गस्य वाच्यतारूपत्वे घटो न गोपदवाच्य इत्यादौ तादृशसंसर्गावच्छिन्नप्रतियोगिताकाभाव एव प्रत्येतव्यः, स च वृत्त्यनियामकसंसर्गस्य प्रतियोगितानवच्छेदकत्वेप्रसिद्ध एवेत्यतस्तादृशसंसर्गस्यैव विधेयत्वं वाच्यतारूपत्वञ्चेत्याह—**सङ्केतीय** इति । तथा च स्वरूपसम्बन्धावच्छिन्नोक्ततादृशावच्छेदकत्वत्वावच्छिन्नविधेयताशालिन्येवोक्तोपमितिरिति भावः । एतस्याश्चोपमितेरुद्देश्यतावच्छेदकगोत्वादिप्रकारकं ज्ञानमारण्यकस्यापि मानान्तरजन्यं

---

* तादृशससर्गो इति मु० पु० पा० ।

**तादृशमवच्छेदकत्वमेव हि गोपदसहकृतवाच्यपदप्रवृत्तिनिमित्तमतिदेशवाक्येनोपनीतमुपमितेः पूर्वं सादृश्यविशिष्टपिण्डप्रत्यक्षेण * स्मर्य्यते। विद्यते च गोत्वविशिष्टायां गवि गोविशेष्यिका गोपदजन्या बुद्धिरिति सङ्केतस्य निरुक्तसंसर्गेण †गवि निराबाधत्वात्। ९।**

**नन्वेतादृशसंसर्गेण गवि सङ्केतस्य सङ्केतप्रतियोगिकतादृशसंसर्गस्य**

पूर्वमस्त्येव, परं गोपदजन्यत्वविशिष्टं गोत्वप्रकारकं ज्ञानं तस्य नास्तीत्यतो न तस्य तद्वैयर्थ्यमिति बोध्यम्। ८।

दर्शितोपमितेरतिदेशवाक्यार्थज्ञानसमानाकारकतया तज्ज्ञानीयतादृशावच्छेदकत्वप्रकारकत्वमेव तस्यास्तादृशावच्छेदकत्वावगाहित्वप्रयोजकमिति द्वितीयकारिकोक्तमर्थमुपपादयति—**तादृशमवच्छेदकत्वमेव** ह्रीत्यादिना। **हि** यतः। तादृशावच्छेदकत्वमेव गोपदवाच्य इत्यत्र वाच्यपदशक्यतावच्छेदकमित्यर्थः। इदञ्च वाच्यपदस्य संयोगादिपदवद्रूढत्वे, अन्यथा तु **प्रवृत्तिनिमित्त**मित्यस्य बोध्यतावच्छेदकमित्यर्थो बोध्यः। सामान्यतो वाच्यपदार्थस्य गवाद्यघटितत्वाद् **गोपदसहकृत**त्वं तत्र विशेषितम्। **अतिदेशवाक्येनोपनीत**मिति। अतिदेशवाक्यार्थज्ञानविषयीभूतं **तादृशमवच्छेदकत्वं स्मर्य्यत** इत्यन्वयः। **उपनीतमिति**। तादृशवाक्येन जनितमित्येतावन्मात्रार्थकम्, न तूपनयसन्निकर्षजन्यत्वं विवक्षितं प्रयोजनविरहात्। **पिण्डप्रत्यक्षेण** अयं गवयसदृश इत्याकारकेण। **स्मर्य्यत** इति। उद्बोधकविधयैव तादृशावच्छेदकत्वस्मारकत्वं पिण्डप्रत्यक्षस्य बोध्यम्। **विद्यते चेति गवी**त्यग्रिमेणान्वितम्। तस्य तादृशे गवि वर्त्तमानत्वे हेतुः **गोविशेष्यिके**त्यादिः। **निरुक्तसंसर्गेण** निरुक्तावच्छेदकत्वसंसर्गेणेत्यर्थः। ९।

वक्ष्यमाणरीत्योक्तोपमितेर्गोत्वप्रकारकस्मरणाद्यप्रयोजकत्वाज्जातापि साकिञ्चित्करीत्याशङ्क्य तृतीयकारिकोक्तहेतुना तस्यास्तादृशस्मरणादिप्रयोजकत्वमुक्तमिति दर्शयति—**नन्वि**त्यादिना। **एतादृशसंसर्गेण** निरुक्तावच्छेदकत्वसंसर्गेण। **संसर्गस्य वेति**। उपमितेस्तदन्यतरावगाहित्वस्यैवोक्तत्वादिदम्। **सत्यामप्यु-**

---

* स्मार्य्यते इति मु० पु० पा०।

† वृत्तिः इति "गवि निराबाधत्वात्" इत्यस्य स्थाने मु० पु० पा०।

वा सत्यामप्युपमितौ गोत्वावच्छिन्नविशेष्यताकबुद्धिर्न्न गोपदसङ्केतोद्देश्येति बुद्धेरुत्पत्तौ बाधकविरहात् तदा गोत्वेन *गोः स्मरणशाब्दबोधादेरनुत्पत्त्या नेयमुपमितिरन्वयबोधाङ्गमिति चेन्न।

गोत्वविशिष्टे तादृशसङ्केतप्रकारतावच्छेदकत्वोपमितिर्जायमाना विशिष्टवैशिष्ट्यावगाहिन्या बुद्धेः स्वभाववैचित्र्येण परस्परविश्रृङ्खलित-

**पमिताविति।** उपमितौ सत्यामपीति व्यत्ययेनान्वयः। **बाधकविरहादि**ति। विशेषधर्म्मावच्छिन्नविशेष्यकबुद्धौ सामान्यधर्मावच्छिन्नविशेष्यताकनिश्चयस्याप्रतिबन्धकतया बुद्धित्वसामान्यावच्छिन्ने तादृशोद्देश्यत्वनिश्चयस्य गोत्वविशिष्टविशेष्यकबुद्धित्वावच्छिन्ने तादृशोद्देश्यत्वाभावबुद्ध्यप्रतिबन्धकत्वादित्यर्थः। **तदेति।** उक्तोद्देश्यत्वाभावप्रकारकज्ञानकाल इत्यर्थः। **शाब्दबोधादेरनुत्पत्त्ये**ति। गोत्वप्रकारकबुद्धौ तादृशबुद्धित्वावच्छिन्नोद्देश्यकसङ्केतज्ञानस्यैव कारणतया तस्य तदानीमसम्भवादित्याशयः। **नेयमुपमितिरन्वयबोधाङ्गमिति।** उक्तोपमितेः गोगोत्वसमवायेषु गोपदवाच्यत्वानवगाहित्वान्न समवायेन गोत्वप्रकारकान्वयबोधप्रयोजकत्वम्, तत्त्रितय एव वाच्यताज्ञानस्य तादृशान्वयबोधप्रयोजकत्वादिति भावः।

गोत्वावच्छिन्नविशेष्यतानिरूपिकाया उक्तोपमितेर्विशिष्टवैशिष्ट्यावगाहित्वादेव धर्मितावच्छेदकतत्सम्बन्धयोर्गोत्वसमवाययोरपि तादृशविधेयावगाहितया गोगोत्वसमवायैतत्त्रितयेष्वेव गोपदवाच्यताज्ञानरूपत्वमिति न गोत्वप्रकारकान्वयबोधाङ्गत्वं तस्या अनुपपन्नमित्याशयेन समाधत्ते—**नेत्यादिना।** **स्वभाववैचित्र्येणे**ति। अयमेव तस्या अन्यबोधविलक्षणः स्वभावो यत्तत्तद्धर्म्मतत्सम्बन्धेषु त्रिष्वेव विधेयावगाहित्वम्। अन्यथा तु न विशिष्टवैशिष्ट्यावगाहित्वमिति वक्ष्यते। विषयतायाः विश्रृङ्खलितत्वं परस्परनिरूप्यनिरूपकभावानापन्नत्वम्। एतच्च विशेष्ये विशेषणमितिरीत्या बोधेपि धर्म्मितावच्छेदकनिष्ठतत्तत्संसर्गावच्छिन्नविषयतानिरूपिताया एव धर्म्मिनिष्ठोद्देश्यतायास्तत्तद्विधेयनिष्ठविधेयतानिरूपितत्वाद् विधेयतायाः परम्परया धर्म्मितावच्छेदकादिनिष्ठविषयतानिरूपितत्वस्य तत्रापि सत्त्वाद् विशिष्टवैशिष्ट्यबोधस्य ततो वैलक्षण्यानुपपत्तिवारणायोक्तम्। तथा च गोत्वसमवाययोरुद्दे-

---

*गोस्मरण०—। इति मु० पु० पा०।

**विषयतापन्नेषु गोत्वगोसमवायेषु विधेयधर्म्मं गृह्णाति रक्तदण्डो ज्ञायत इति प्रतीतिरिव रक्तदण्डत्वसमवायेषु ज्ञानविषयताम् । धर्म्मिपारतन्त्र्येण धर्म्मितावच्छेदकादेरपि विशेष्यत्वाभ्युपगमात् । अतएव लम्बकर्ण आनीयताम्, यष्टयः प्रविशन्ति, सपुत्र आगतः, कुटादिर्गणः, * "भूवादयो धातवः"...इत्यादौ धर्म्मि-**

श्यत्वे वक्ष्यमाणसंसर्गाभ्यां साक्षादेव तादृशविधेयतानिरूपिते, अन्यत्र तु न तथेत्यतएवास्य वैलक्षण्यमिति । **विधेयधर्म्मं गृह्णाति** विधेयमुक्तान्यतरस्वरूपं धर्म्मं गृह्णाति, उक्तत्रितयनिष्ठोद्देश्यतानिरूपितविधेयताका भवतीत्यर्थः ।

विशिष्टवैशिष्ट्यावगाहिनो ज्ञानस्योक्तस्वभावो नादृष्टचर इति विषयभेदेनानेकस्थलेषु तादृशस्वभावस्तस्य दृष्ट इति दर्शयति—**रक्तदण्डो ज्ञायत** इत्यादिना । **ज्ञानविषयतामिति** । धातुकर्म्मप्रत्ययाभ्यां ज्ञानस्य विषयतायाश्चोपस्थापनाद् विषयतायां ज्ञानस्य निरूपितत्वेनान्वयाज्ज्ञाननिरूपितविषयतामित्यर्थः । अन्वयश्चास्या **गृह्णाती**ति पूर्वेणैव । **धर्म्मिपारतन्त्र्येणेति** । साक्षात्सम्बन्धेन तत्तद्विधेयस्य धर्म्मितावच्छेदकेभावाद्धर्म्मिघटितपरम्परासंसर्गेणेत्यर्थः । तथा च स्वनिरूपितप्रकारत्वस्वनिरूपितप्रकारतानिरूपितसंसर्गत्वाभ्यां सम्बन्धाभ्यां तादृशविशेष्यत्वस्य गोत्वसमवाययोस्सत्त्वमित्याशयः । **अतएव** धर्म्मिपारतन्त्र्येण धर्म्मितावच्छेदकस्य विशेष्यत्वोपगमादेव । अस्या**नुभवसिद्धमि**त्यग्रिमेणान्वयः । **लम्बकर्ण** इति । लम्बौ कर्णौ यस्येति-बहुव्रीहिः । **यष्टय** इति । तात्पर्य्यानुपपत्तिमूलिका यष्टिपदस्य यष्टिधरे लक्षणा । **सपुत्रः** । पुत्रेण सहित इति बहुव्रीहिः । **कुटादिः** । कुट आदिर्य्येषामिति बहुव्रीहिः । भूश्च वाश्चेति द्वन्द्वानन्तरं भूवावादिर्य्येषामिति बहुव्रीहिः । **धर्म्मिविशेषणतापन्नेष्विति** । उक्तव्युत्पत्तिलभ्येषु लम्बाभिन्नकर्णसम्बन्धियष्टिविशिष्टपुत्रविशिष्टकुटनिष्ठादित्वनिरूपकभूवाविशिष्टादित्वनिरूपकेषु धर्म्मिषु कर्म्मप्रत्ययान्ताङ्पूर्वकनीधातुलभ्यसंयोगावच्छिन्नव्यापारानुकूलव्यापारस्वरूपानयनकर्म्मत्वप्रवेशकर्त्तृत्वागमनकर्त्तृतादात्म्यसमूहत्वविशेषविशिष्टस्वरूपगणतादाम्यधातुत्वविशिष्टतादात्म्यानां विधेयतयान्वये तदंशे विशेषणीभूतेषु कर्णादिष्वपि

* भूवादिर्धातुरि० इति मु० पु० पा० ।

**विशेषणतापन्नेषु ‡कर्णयष्टिपुत्रकुटभूवाप्रभृतिषु †आनयनकर्म्मत्वप्रवेशकर्त्तृत्वागतगणधातुतादात्म्यादि प्रति विशेष्यत्वमनुभवसिद्धम् । १० ।**

**स्यादेतत्, यदि गोपदाद्गोविशेष्यिका बुद्धिर्जायतामिति सङ्केतस्य विशेष्यतावृत्तिप्रकारताया अवच्छेदकत्वं गवेतरत्र *वर्त्तेत ? न चैवम् ।**

तेषामन्वयः । अन्यथा कर्णयष्टिभूवादीनामानयनादीनामनुपपत्तेः । एतदेव बहुव्रीहेस्तद्गुणसंविज्ञानत्वम् । तद्धि तत्र विशेष्ये गुणस्य विशेषणीभूतस्य (गुणप्रधानशब्दयोर्विशेषणविशेष्यवाचकताया बहुत्र दृष्टत्वात्) संविज्ञानं सम्यग् विशेषतो विधेयान्वयित्वेनेति यावत्, ज्ञानं शाब्दबोधो यस्मादितिव्युत्पत्त्या विशेषणीभूतधर्म्मविशेष्यकविधेयप्रकारकान्वयबोधजनकबहुव्रीहिसमासत्वमेव । अतादृशश्च दृष्टसागरादिको बहुव्रीहिरतद्गुणसंविज्ञानः । तत्र समासलभ्यसागरकर्म्मकदर्शनाश्रये विशेषणीभूतस्य सागरस्यायोग्यतया **आनीयता**मित्यादिलभ्यानयनकर्म्मत्वरूपविधेयान्वयाभावादिति । १० ।

गोपदनिरूपितसङ्केतीयबुद्धित्वावच्छिन्नविशेष्यतानिष्ठप्रकारतानिरूपितावच्छेदकत्वस्य गोत्वसमवाययोरपि वृत्तित्वं संसर्गविशेषेणेति चतुर्थकारिकोक्तमर्थं तादृशविशेष्यताया गोमात्रवृत्तित्वेन तत्राधेयत्वेन गोमात्रस्यैव प्रकारतया तादृशावच्छेदकत्वमपि तस्यैव नान्यस्य गोत्वादेरित्याक्षेपपरिहारकत्वेनावतारयति—**स्यादेतदि**त्यादिना । **एतद्** अनुपदोक्तं विशेष्यतावच्छेदकस्यापि विशेष्यत्वम् । **स्यादिति** । अस्धात्वर्थो विद्यमानत्वम्, लिङर्थः सम्भावना । तस्याश्च हेतुहेतुमद्भावसंसर्गेण गवेतरत्र **वर्त्तेते**त्यत्र लिङर्थसम्भावनायामन्वयादुक्तविशेष्यत्वे विद्यमानत्वसम्भावना तादृशावच्छेदकत्वे गवेतरनिरूपितवृत्तित्वसम्भावनाप्रयोज्येतिसमुदायार्थः । अथवा "हेतुहेतुमतोर्लिङ्" इत्यनुशासनात् "कृष्णं नमेच्चेत्सुखं यायात्" इत्यत्रेव हेतुहेतुमद्भाव एव लिङर्थः । तथा चोक्तविशेष्यत्वे विद्यमानत्वं तादृशावच्छेदकत्वनिष्ठगवेतरनिरूपितवर्त्तमानत्वप्रयोज्यमितिसमुदायार्थो बोध्यः । **न चैवमिति** । **एवं** तादृशावच्छेदकत्वस्य गवेतरनिरूपितवृत्तित्वं नेत्यर्थः । तादृशवृत्तित्वस्य तत्सम्भावनाया वा अभावे कुतस्ता-

---

‡ भूवादि इति मु० पु० पा० ।

† तादात्म्यानि च इति मु० पु० पा० ।

* वर्त्तते इति मु० पु० पा० ।

‡शाब्दबोधविशेष्यत्वोपरि गोरिव गोत्वस्याप्याधाराधेयभावेन सङ्केतविषयत्वे बाधात्; न हि शाब्दप्रमितिरपि गोत्वादिविशेष्यिकेति चेन्न।

सङ्केतो हि शाब्दबोधविशेष्यतायामाधाराधेयभावेन गां स्ववृत्तिप्रकारतानिरूपकत्वेन स्वावच्छिन्नप्रकारतानिरूपकत्वेन च गोत्वसमवायावपि विशेषणीकृत्यावगाहते। अवच्छेदकता तु सैव विशेषणता,

दृशविशेष्यत्वस्य तत्सम्भावनाया वा सम्भव इत्याशङ्कितुरभिप्रायः। तादृशावच्छेदकत्वस्य गवेतरावृत्तौ हेतुमाह—**शाब्दबोधे**ति। गोपदजन्यशाब्दबोधस्य गोत्वादिविशेष्यताकत्वे तदुद्देश्यकसङ्केतविषयतावच्छेदकत्वं गोत्वादौ निराबाधम्, तस्य तथात्वञ्च कैरपि नोपेयत इत्याशयः। एतदेवोक्तं **न ही**त्यादिना **हि** हेतौ।

अत्रोत्तरमाह—**नेत्या**दिना। **सङ्केतो हीति**। **हि**रत्रापि हेतौ। यतः सङ्केतः स्वीयविशेष्यतापन्नशाब्दबोधनिरूपितविशेष्यतायाम्, स्वीयप्रकारतापन्नायामिति यावत्, **आधाराधेयभावेन** आधेयतासंसर्गेण **गां विशेषणीकृत्यावगाहत** इत्यन्वयः। तथा तस्यामेव विशेष्यतायां (गोत्वसमवाययोस्सत्त्वमाह)—**स्ववृत्तीति**। गोनिष्ठविशेष्यताया गोत्वनिष्ठप्रकारतानिरूपकत्वात् तत्सम्बन्धेन गोत्वस्य तत्र विशेषणत्वं निराबाधम्। तादृशप्रकारतायाः समवायेन संसर्गविधयावच्छेदात् समवायावच्छिन्नप्रकारतानिरूपकत्वमपि तत्र निराबाधमिति समवायस्यापि तादृशसंसर्गेण तत्र विशेष्यत्वे विशेषणत्वमित्याशयः। तादृशप्रकारतापन्नविशेष्यताया उक्तसंसर्गैः गोत्वादिवृत्तित्वेन तयोस्तत्र विशेषणत्वेपि न तादृशावच्छेदकत्वं विशेषणत्वावच्छेदकत्वयोर्भेदादित्यत आह—**अवच्छेदकतेति**। **सैव** विशेषणतारूपैव। एवकारेण तयोर्भेदव्युदासः। तथा च तादृशविशेषणतायास्तादृशावच्छेदकतारूपत्वादेव नोक्तानुपपत्तिरिति भावः। ननु विशेषणत्वावच्छेदकत्वयोः परस्परं निरूपकतत्त्वावच्छेदकयोर्भेदात् कथमभेदः? तथाहि—गोत्वादिनिष्ठमुक्तसंसर्गावच्छिन्नविशेषणत्वं तादृशविशेष्यतानिष्ठविशेष्यतया निरूपितमिति तन्निरूपकतत्त्वावच्छेदके तादृशविशेष्यत्वनिष्ठविशेष्यत्वविशेष्यतात्वे, सङ्केतीयतादृशावच्छेदकत्वञ्च तादृशविशेष्यत्वनिष्ठ-

‡ विशेष्यत्वांशे इति मु० पु० पा०।

**तन्नियता तदन्या वेत्यन्यदेतत् ।**

**अथवा गौर्गोपदजन्यबुद्धित्वावच्छिन्नसङ्केतोद्देश्यत्वेन निरूपिताया विशेष्यत्वप्रकारताया *अवच्छेदक इत्युपमितौ धर्मितावच्छेदकतया भासमानं गोत्वं स्वप्रकारतावच्छिन्नत्वावच्छिन्नत्वसंसर्गेण विशेष्यत्व-**

प्रकारतया निरूपितमिति तन्निरूपकतत्त्वावच्छेदके प्रकारत्वतत्त्वे इत्यत आह—**तन्नियतेति**। तादृशविशेषणताव्यापिकेति यावत् । यत्र यन्निष्ठ-विशेष्यतानिरूपितविशेषणत्वं तत्र तन्निष्ठप्रकारतानिरूपितावच्छेदकत्वमिति-व्याप्तेस्तादृशविशेषणताया गोत्वादौ सत्त्वे तादृशावच्छेदकताया अप्यवश्यं सत्त्वमित्यर्थः । व्याप्यव्यापकभावस्य भेदनियतत्वात् **तदन्या वे**त्युक्तम् । वाकारोऽप्यर्थे, तदन्यापि तन्नियतैवेत्यर्थः । तथा च तस्यास्तादृशविशेषणतातो-भेदो भेदो वास्तु, उभयथापि गोत्वादौ सा निराबाधैवेति न कापि हानिरिति भावः ।

गोत्वप्रकारताकान्वयबोधप्रयोजकत्वं विनिगमनाविरहेण गोत्वप्रकारता-निरूपकगोनिष्ठविशेष्यताकबुद्ध्युद्देश्यकः सङ्केत इव निरूपकत्वसम्बन्धेन गोत्वप्रकारत्वावच्छिन्नगोविशेष्यताकबुद्ध्युद्देश्यकोपीति प्रथमानुसारेण गोत्वा-दावुपमितिविषयत्वमुपपाद्य द्वितीयानुसारेणोपपादयति—**अथवेत्या**दिना । **धर्म्मितावच्छेदकतया भासमानमिति** । जात्यखण्डोपाध्यतिरिक्ताया गोः स्वरूपतो विशेष्यत्वासम्भवेन गोत्वजात्यैव तस्या भानमिति गोनिष्ठ-विशेष्यतानिरूपितावच्छेदकत्वेन गोत्वस्य तादृशोपमितौ भानमावश्यकमिति भावः । **विशेष्यत्वप्रकारतायामिति** । वक्ष्यमाणसङ्केतीयोद्देश्यतानिरूपिता-वच्छेदकतारूपायां निरूपकत्वसंसर्गावच्छिन्नायां विशेष्यत्वनिष्ठप्रकारताया-मित्यर्थः । सङ्केते प्रकारत्वावच्छिन्नत्वस्य प्रकारमुद्रया भाने तत्संसर्गस्यापि वक्तव्यतया कारणतावच्छेदकगौरवात्तस्य संसर्गत्वमेवोचितमिति गोत्वस्य स्वनिष्ठप्रकारत्वावच्छिन्नत्वसंसर्गेण विशेष्यतायां विशेषणत्वात्तन्निष्ठप्रकारताया-स्तादृशावच्छिन्नत्वावच्छिन्नत्वसंसर्गेण गोत्वनिष्ठावच्छेदकतानिरूपितत्वम् ।

---

* अवच्छेदकम् इति मु० पु० पा० ।

प्रकारतायामवच्छिन्नत्वसंसर्गेणावच्छेदकतायाश्च‡ भासते । †गोत्वप्रकारत्वावच्छिन्नगोविशेष्यताकबुद्धिर्गोपदादित्याकारकश्चोपमितिविषयीभूतस्सङ्केतः ।

दृश्यते हि विशिष्टवैशिष्ट्यबुद्धावुद्देश्यतावच्छेदकधर्म्मेण विधेयस्येव तद्विशेषणस्यापि वैशिष्ट्यावगमः । अतएव गन्धप्रागभावकालीनो घटो गन्धविशिष्टपृथिवीत्ववानिति बुद्धेरप्रामाण्यम्, * गन्धतत्प्राग-

अवच्छेदकतायाश्चेति । विशेष्यत्वनिष्ठप्रकारतानिरूपितनिष्ठत्वसंसर्गावच्छिन्नगोनिष्ठावच्छेदकतायामित्यर्थः । भासत इति । गोनिष्ठावच्छेदकताया गोत्वावच्छिन्नत्वात् । पूर्वोक्तोपमितिविषयीभूते सङ्केते गोत्वप्रकारत्वावच्छिन्नत्वस्याभानात् तदवगाहिसङ्केतमाह—गोत्वेति । प्रकारतापदं प्रकारतानिरूपितत्वपरम् । अवच्छिन्नत्वं वा निरूपकत्वसंसर्गावच्छिन्नावच्छेदकतानिरूपितत्वम् । तेन गोनिष्ठविशेष्यत्वे न तस्य बाधः ।

विधेये उद्देश्यतावच्छेदकसम्बन्धावगाहित्वमेव पूर्वं व्यवस्थापितम्, विधेयविशेषणे तत्सम्बन्धावगाहित्वमपि विशिष्टवैशिष्ट्यावगाहिन्या बुद्धेरावश्यकमितीदानीं व्यवस्थापयति—दृश्यते हीत्यादिना । हि यतः, वैशिष्ट्यस्य संसर्गस्य, अवगमः ज्ञानं दृश्यत इत्यन्वयः । एवञ्च यथोद्देश्यतावच्छेदके गोत्वे तादृशावच्छेदकत्वरूपविधेयविशेषणत्वम्, तथैव गोपदजन्यबुद्धित्वावच्छिन्नोद्देश्यताकगोत्वप्रकारत्वावच्छिन्नगोविशेष्यताक-सङ्केतीयतादृशावच्छेदकत्वविधेयविशेषणविशेष्यत्वेपि तादृशसंसर्गेण गोत्वस्य विशेषणत्वान्नानुपपत्तिरित्याशयः । अतएव विशिष्टवैशिष्ट्यबुद्धौ विधेयविशेषणे उद्देश्यतावच्छेदकसम्बन्धावगमादेव बुद्धेरप्रामाण्यमित्यन्वयः । गन्धप्रागभावेति । अत्र बुद्धौ विधेये पृथिवीत्वे विशेषणीभूते गन्धे उद्देश्यतावच्छेदकीभूतगन्धप्रागभावसम्बन्धानवगाहने गन्धविशिष्टपृथिवीत्वस्य घटे तृतीयक्षणाद्यवच्छेदेन सत्त्वात्तदभाववति तत्प्रकारताकत्वं भ्रमत्वं तस्यानुपपन्नं स्यात्, तादृशावच्छेद्यत्वावगाहने च स्वप्रागभावादिकालावच्छेद्यत्वं स्वस्य विरुद्धमिति

‡ विशेषणीभूय भासते इति मु० पु० पा० ।

† प्रकारता० इति ना० मु० पु० पा० ।

* गन्धगन्धप्रागभावयोः इति मु० पु० पा० ।

भावयोरवच्छेद्यावच्छेदकभावस्य भासमानस्य बाधात् ।

एतेन गौर्गोपदवाच्या *वृत्त्यन्तराभाववत्त्वे सति गोपदजन्यप्रतीतिविषयत्वादित्यनुमानमप्युपमानतुल्यतया व्याख्यातम् । व्याख्याताश्चोपदेशकोषविशेषाः । अनुमानोपमानयोरुद्देश्यविधेयभावेन वाच्यत्वम्, "कोकिलः पिकः"... इत्यादौ तादात्म्येन वाच्यं भासत इति विवेकः । ११ ।

तस्य तन्नानुपपन्नमिति भावः । **अप्रामाण्यं** भ्रमत्वं न तु प्रमात्वसामान्याभावः, पृथिवीत्वाद्यंशे तस्य प्रमात्वात् ।

**एतेन** गोत्वविशिष्टविषयकबुद्धित्वावच्छिन्नोद्देश्यत्वाविषयिकाया अप्युपमितेरुक्तरीत्या गोत्वाद्यवगाहित्वेन विशिष्टान्वयबोधप्रयोजकत्वव्यवस्थापनेन । व्यवहारादीनामनुमानविधयैव शक्तिग्राहकत्वस्योक्तत्वात्तेषां गोत्वविशिष्टविषयकबुद्धित्वावच्छिन्नोद्देश्यत्वाविषयकत्वेपि विशिष्टवैशिष्ट्यबोधमर्य्यादयैव गोत्वादीनां तद्विषयत्वमित्याशयः ।

आप्तवाक्यादीना साक्षादेव वाच्यताग्राहकत्वेपि तज्जन्यान्वयबोधानां विशिष्टवैशिष्ट्यबोधत्वादेव तथात्वमित्याह—**व्याख्याताश्चेति । उपदेशः** कलसो घटपदवाच्य इत्याप्तवाक्यम् । **कोषविशेषः** प्रथमान्तमात्रपदद्वयादिघटितः "कोकिलः पिकः"...इत्यादिः । सप्तम्यन्तपदघटिते "मत्सरोन्यशुभद्वेषे"... इत्यादौ भिन्नप्रकारस्यानुपदं वक्ष्यमाणत्वात् ।

अनुमानोपमितिभ्यां कोषाप्तवाक्ययोर्य्यद् वैलक्षण्यं तदाह—**अनुमानोपमानयोरिति** । तयोः पदजन्योपस्थित्यनपेक्षत्वेन वाच्यत्वस्य स्वरूपतो विधेयत्वम् । कोषादिजन्यबुद्धेश्चान्वयबुद्धित्वेन पदजन्याया उपस्थितेस्तत्रापेक्षावश्यकीति पिकपदलक्ष्यपिकपदवाच्यस्यैव तादात्म्येन विधेयत्वम् । वाच्यत्वस्य नामार्थतया पदार्थतावच्छेदकतया च भेदेन नामार्थेन्वयस्यायोग्यत्वादिति विधेयतत्संसर्गवैलक्षण्यमात्रकृतमुपमित्यादितस्तेषां वैलक्षण्यम्, विशिष्टवैशिष्ट्यावगाहित्वन्तु सर्वेषां समानमेवेति न तेषामेकस्यापि विशिष्टवाच्यताग्राहकत्वानुपपत्तिरित्याशयः । ११ ।

---

* वृत्त्यन्तराजन्यगोपदजन्यप्रतीतिविषयत्वाद् इति मु०पु० पा० ।

एवमर्थविशेष्यकबोधजनकानि वाच्यताग्राहकाणि प्रमाणानि व्युत्पाद्य पदे धर्म्मिणि वाचकताग्राहकाणि व्याकरणादिप्रमाणानि प्रस्तूयन्ते—

**भू सत्तायां कर्त्तरि कृच्छेषे षष्ठी धने वसु।**
**इत्यादौ वाचकत्वार्था सप्तमी भ्वाद्यपेक्षते ॥१२॥**

**[1]विशेष्यतावद्बुद्धित्वावच्छिन्नोद्देश्यतानिरूपितजन्यत्वप्रकारतावच्छेद-**

अन्वयबोधे वाच्यताग्रहस्येव वाचकताग्रहस्यापि विनिगमनाविरहेण प्रयोजकत्वात्तस्यापि कोषादितोसम्भवस्याशङ्कितत्वात् तत्रोत्तरबोधिकाया अग्रिमकारिकाया अवतरणिकामाह—**एवमर्थेति । प्रस्तूयन्ते** प्रसङ्गसङ्गत्या निरूप्यन्ते **भू सत्तायामिति । इत्यादा**वित्यादिपदेन "एध वृद्धौ" "लः कर्म्मणि" "अपादाने पञ्चमी" "शीतं गुणे" "चूर्णे क्षोदः". इत्यादीनां परिग्रहः। **वाचकत्वार्था सप्तमीति ।** वाचकत्वसम्बन्धावच्छिन्नाधेयत्वार्थिकाया अपि तस्यास्तत्संसर्गावच्छिन्नाधेयतायास्तत्सम्बन्धस्वरूपत्वाद् वाचकत्वार्थकत्वम्। तेन वाचकत्वत्वावच्छिन्ने सप्तम्या अनुशासनविरहेपि न क्षतिः। "सप्तम्यधिकरणे च" इतिसूत्रे चकारेण दूरान्तिकार्थेभ्य इव कर्त्तृकर्म्माघटितेनापि सम्बन्धेनावच्छिन्ने आधेयत्वे सप्तम्याः साधुत्वबोधनात्। अतएवोक्तप्रयोगाणां साधुत्वान्यथानुपपत्तिरेव सङ्केतसम्बन्धस्य वृत्तिनियामकत्वे प्रमाणमवसीयते। **भ्वाद्यपेक्षत** इति। अध्याहृते शब्दस्वरूपे भ्वादीत्यस्य विशेषणत्वात् क्लीबद्वितीयान्तं तत्। अपेक्षतेरर्थो विषयतानिरूपितविषयताप्रयोजकत्वम्। तत्र प्रथमविषयतायां भ्वादिप्रयोज्यत्वस्य, तादृशप्रयोजकत्वस्य चाख्यातार्थाश्रयत्वान्वितस्य सप्तमीपदबोध्ये ज्ञावन्वयः।

पूर्वं "ननु भवतु"...इत्यादिना "शीतं गुणे"...इत्यादौ गुणविशेषत्वविशिष्टविषयकशीतपदजन्यबुद्धित्वावच्छिन्नोद्देश्यकसङ्केतीयविषयत्वरूपं वाचकत्वं सप्तम्या बोधयितुं न शक्यम्, बुद्धौ शीतादिपदजन्यत्वस्य गुणविशेषत्वविशिष्टविषयकत्वस्य च पूर्वमेव ज्ञाने कोषादिवैयर्थ्यम्, अज्ञाने च कोषादितस्तादृश-

---

१ जनकत्वप्रकारता इति मु० पु० पा०।

**कत्वस्वरूपा सङ्केतविषयता वाचकता, सैव "भू सत्तायाम्"...इत्यादौ सप्तम्यर्थः। [1]तदेकदेशविशेष्यतायां सत्तात्वादिविशिष्टस्य विशेषणतयान्वयः। [2]सप्तम्यर्थे विशेष्यतया तु भ्वादेः। १२**

बोधस्यैवासम्भव इति कथं तेषां विशिष्टशक्तिग्राहकत्वम् इत्याशङ्कितम्। तत्र विशेष्यतायां गुणविशेत्वादिविशिष्टनिष्ठत्वं गुणादिप्रकृतित एव लब्धम्, जन्यतायां शीतादिपदनिरूपितत्वस्याभानेपि शीतादिपदत्वावच्छेदेन तादृशजन्यत्वप्रकारतावच्छेदकत्वबोधस्यैव शीतपदनिष्ठवाचकताबोधत्वमिति तदनुसारेण तादृशनिष्ठत्वपदनिरूपितत्वाभ्यां विनिर्म्मुक्त एव सप्तम्यर्थ इतिसिद्धान्तमाह— **विशेष्यतावदि**त्यादिना। **सत्तात्वविशिष्टस्येति**। आत्मधारणादिरूपायाः सत्ताया जात्यखण्डोपाधिभिन्नतयोल्लिख्यमानतया च स्वरूपतो भानासम्भवेन सत्तात्वेनैव तस्या भानमित्याशयः। **भ्वादे**रिति। **अन्वय** इति पूर्वेणान्वयः। तथा च सत्तात्वादिविशिष्टनिष्ठविशेष्यतानिरूपकबुद्धित्वावच्छिन्नोक्तसङ्केतीयोद्देश्यतानिरूपितजन्यत्वप्रकारतानिरूपितनिरूपितत्वसंसर्गावच्छिन्नावच्छेदकतावद् भ्वादिपदमिति ज्ञानं सत्तात्वविशिष्टविषयकबोधे भ्वादिपदजन्यत्वस्य पूर्वमज्ञानेपि कोषादितो निराबाधमिति तेषां विशिष्टवाचकताग्राहकत्वमुपपन्नमिति भावः। क्वचित्पुस्तके **तादृशोद्देश्यतानिरूपितजनकत्वप्रकारेति** पाठः। स च यद्यपि भूपदं सत्तात्वविशिष्टविशेष्यताकबुद्धिजनकं भवत्वित्याकारकसङ्केतमादाय न सङ्गमयितुं शक्यः, तत्र सङ्केते बुद्धेरुद्देश्यत्वविरहात्, तत्प्रकारतानिरूपितावच्छेदकताया भूपदेभावाच्च। तादृशविशेष्यिका बुद्धिर्भूपदाद् भवत्वित्याकारकसङ्केतस्य च पञ्चम्यर्थजन्यत्वप्रकारताकत्वानुभवात्। तथापि पञ्चम्यर्थो जनकत्वमेवेत्युपगम्य निष्ठत्वसम्बन्धेन प्रकृत्यर्थान्वितस्य तस्य निरूपकतया भूपदे प्रकारतासम्भवात् तादृशमेव सङ्केतमादाय कथञ्चित्सङ्गमनीयः। यद्यपि च ज्ञानस्यैव शब्दजन्यत्वम्, नत्विच्छायाः, तत्कथं सङ्केतस्येच्छारूपस्य शब्दतो जन्म सम्भवतीति कृतं पञ्चम्यादेरर्थोपवर्णनेन, तथापि "अस्मात्पदादयमर्थो बोद्धव्यः" "इदं पदममुमर्थं बोधयतु" "धूमेन वह्निमनुमिनुयाम्"...इत्यादिवाक्यस्य तादृशतादृशेच्छाभिलापकत्वस्य बहुशो दर्शनात्तत्तद्वाक्यजन्यबोधसमानाकारकत्वमेवेच्छायास्तदभिलप्यत्वमिति नासङ्गतिरिति बोध्यम्। १२

---

१ तदेकदेशे इति मु० पु० पा०।

२ सप्तम्यर्थविषयतायास्तु भ्वादौ इति मु० पु० पा०।

**ननु भूशब्दस्य निर्विभक्तिकत्वेनासाधुत्वात् पदवृत्त्यनुपस्थितत्वाच्च कथं तत्र पदार्थान्वयः।**

**यत्तु भूशब्देन वाच्यवाचकत्वलक्षणया "स्वं रूपं शब्दस्य" इति सूत्रेण ग्राहितसङ्केतेन वा स्मारिते भूधातौ सत्तावाचकत्वान्वयोपि नानुपपन्नः। वृत्त्यार्थप्रतिपादकत्वरूपार्थवत्त्वेपि भुवो न प्रातिपदिकसंज्ञा, "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इत्यत्र धातोः पर्य्युदासादिति।**

"भू सत्तायाम्" इतिवाक्यस्य निर्विभक्तिकभूपदघटितत्वेनासाधुतया कथं तत उक्तबोध इति तटस्थः शङ्कते—**नन्वित्या**दिना। **निर्विभक्तिकत्वेने**ति। "अपदं न प्रयुञ्जीत" इति भाष्यात् सुबन्ततिङन्तयोरेव प्रयोगार्हत्वेन, व्याकरणव्युत्पाद्यत्वरूपसाधुत्वाभावादित्यर्थः। यदि च "साधुभिर्भाषितव्यम्" इतिनियमो यज्ञादिष्वेव, वाचकताग्राहकव्याकरणादौ त्वसाधुशब्दप्रयोगेपि का क्षतिरिति ब्रूयात्तदाप्याह—**पदवृत्त्येति**। कारणान्तरजन्योपस्थितिविषयेष्वर्थेषु पदवृत्त्योपस्थितार्थस्यान्वयानङ्गीकारात्पदस्य च शक्तिलक्षणान्यतरवत एवान्वयबोधप्रयोजकत्वात् तदभाववति भूपदे श्रोत्रोपस्थितिविषयेपि सत्तायामित्यादिपदार्थान्वयस्यासम्भवादित्यर्थः।

भूपदस्य स्वरूपे लक्षणया परिभाषया वोपस्थिते भूशब्दस्वरूपे पदार्थान्तरान्वयो नानुपपन्न इति केनचित्समाहितम्। तन्निरसितुमाह—**यत्त्वि**ति। **वाच्यवाचकत्वेति**। भूशब्दवाच्यं सत्ता, तद्वाचकत्वस्य भूशब्दे सत्त्वात् शक्यार्थसम्बन्धरूपलक्षणायास्तत्र सम्भवात्तयोपस्थापित इत्यर्थः। लक्षणाज्ञानस्य सङ्केतज्ञानव्यवहितोत्पत्तिकतया तदपेक्षणीयसङ्केतज्ञानस्य पूर्वमावश्यकत्वात्तेनैव भूशब्दस्योपस्थितिरित्याह—**स्वं रूपमि**ति। तेन सूत्रेण व्याकरणशास्त्रोपयोगिटिघुभादिसंज्ञाभिन्नशब्दस्वरूपाणां स्वरूप एव सङ्केतो ग्राह्यत इति भूशब्दस्यापि तेन स्वरूपे सङ्केतबोधनात् तेनैव तस्योपस्थितिसम्भवात् तत्र पदार्थान्तरान्वयो नानुपपन्न इत्यर्थः। **वाचकत्वान्वयोपी**त्यपिना तस्य साधुत्वमप्युपपन्नमिति सूचितम्।

नन्वेवं तस्यार्थवत्त्वात् प्रातिपदिकसंज्ञायां सुबाद्युत्पत्तिरपि स्यादित्यत आह—**वृत्त्येति। धातोः पर्य्युदासादिति**। "अधातुः" इत्यस्य धातुभिन्नार्थकतया भूशब्दस्य धातुत्वेन प्रातिपदिकसंज्ञाविरहान्न सुबाद्युत्पत्तिः।

---

१ न्वयाना० । इति मु० पु० पा० ।

**तन्न, "भू सत्तायाम्" इत्यत्र *भूपदस्य स्वरूपे वृत्तिमत्त्वे क्रियावाचित्वाभावेन †धातुपदप्रवृत्त्यभावाद् "अधातुः" इतिपर्य्युदासाप्रसक्तेः सुबुत्पत्तेर्दुर्वारित्वात् ।**

**अन्यथा "भुवो वुक्" "ब्रुवो वचिः" "भाषायां सदवसश्रुवः"... इत्यादावपि तदनुत्पत्त्यापत्तेः । "इक्श्तिपौ धातुनिर्द्देशे" इत्यनेन**

निर्विभक्तिकस्यासाधुत्वमपि विभक्तिस्वरूपयोग्यस्यैव निर्विभक्तिकत्वे साधुत्वाभावः । अत्र च विभक्तिप्रयोजकप्रातिपदिकसंज्ञाविरहेण तत्स्वरूपयोग्यताया अभावेन निर्विभक्तिकत्वेपि नासाधुत्वमित्याशयः ।

मतमेतद्दूषयति—**तन्नेत्या**दिना । **क्रियावाचित्वाभावेनेति** । स्वरूपवाचकस्य भूशब्दस्य क्रियावाचकत्वासम्भवादित्यर्थः । इदञ्च धातुपदनिरूपितसङ्केतवत्त्वाभावे हेतुः । **धातुपदप्रवृत्त्यभावादिति** । "भूवादयो धातवः" इतिसूत्रेण क्रियावाचकस्यैव धातुपदसङ्केतवत्त्वप्रतिपादनेन तदभावे धातुत्वस्य तत्राभावादित्यर्थः । **दुर्वारित्वादिति** । धातुभिन्नत्वस्य तत्र सत्त्वेन प्रातिपदिकसंज्ञाया आवश्यकत्वेन सुबुत्पत्तेर्न्निवारयितुमशक्यत्वादित्यर्थः ।

**अन्यथा** स्वरूपवाचकत्वेपि धातुत्वे । **तदनुत्पत्त्यापत्तेरिति** । भूब्रूश्रुशब्दानामुक्तसूत्रेषु स्वरूपस्यैव वाचकत्वेपि धातुत्वात् प्रातिपदिकत्वविरहेण सुबनुपपत्तेरित्यर्थः । "भू सत्तायाम्" इत्यत्र भूपदस्य स्वरूपपरत्वे दोषान्तरमाह—**इक्श्तिपाविति** । तत्र निर्देशपदेन स्वरूपस्योपस्थितेर्धातुस्वरूपे वाच्ये इक्श्तिपोर्विधानादित्यर्थः । न च "कर्त्तरि शप्" इतिसूत्रेण कर्त्तृवाचके सार्वधातुके परे शपो विधानात् श्तिपश्च शित्त्वात् सार्वधातुकत्वेपि कर्त्तृवाचकत्वाभावात् तस्मिन् परे शपोसम्भवात् भवतिरिति कथं साधुरिति वाच्यम्, "भवतेरः" "ध्यायतेः सम्प्रसारणञ्च" इतिसूत्रवार्त्तिकनिर्देशाभ्यामकर्त्तृवाचकेपि कचिच्छपो विधानज्ञापनात् । एवं क्वचिद्भावकर्म्मवाचिनि सार्वधातुके परे विहितस्य यकोपि श्तिपि परे साधुत्वम्, "विभाषा लीयतेः" इति

---

* भूपदस्वरूपे इति मु० पु० पा० ।

† धातुसंज्ञाप्रवृत्त्यभावात् इति मु० पु० पा० ।

*भुविर्भवतिरिति प्रयोगापत्तेः । भूशब्दस्याग्रहीतशक्तिकत्वेन तद्वाच्य-वाचकलक्षणानुपपत्तेः ।

न च भूशब्दः सप्रवृत्तिनिमित्तकः साधुशब्दत्वादित्यनुमानेन सामान्यतः शक्तिर्गृहीतेति वाच्यम्, शक्तिपदार्थस्य शक्यतावच्छेदक-विशेषघटितत्वेन तदग्रहणे ग्रहासम्भवात् ।

यदि च सर्वनामशब्दानामिव वस्तुत्वमुपलक्षणीकृत्य †वस्तु-

निर्देशात् । तत्र हि "यका निर्देशो न श्यना" इत्युक्तमिति बोध्यम् । **लक्षणानुपपत्तेरिति** । "भू सत्तायाम्" इतिव्याकरणप्रवृत्तेः पूर्वमेव भूशब्दस्य सत्तायां शक्तिग्रहे व्याकरणस्य वैयर्थ्यात् । स्वरूपे वृत्तिश्च तस्याधुनिकीति न तदर्थ-सम्बन्धो लक्षणा, शक्यसम्बन्धस्यैव लक्षणात्वादिति यदुक्तं वाच्यवाचके लक्षणेति तदपि नोपपन्नमिति भावः ।

भूशब्दस्य शक्तिरनुमानेनैव ग्रहीतुं शक्येति न तत्र लक्षणानुपपत्तिरित्याशङ्कते—**न चेति** । **वाच्यमिति** परेणान्वयः । **सप्रवृत्तिनिमित्तक** इति । सहार्थो वैशिष्ट्यम्, तच्च स्वावच्छिन्नवाचकत्वम् । **सामान्यतः** सत्तात्वाद्यनवच्छिन्नशक्यतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नत्वेनेत्यर्थः । शक्यतावच्छेदक-सत्तात्वादेरज्ञाने दर्शितानुमानेनापि वाचकत्वं न शक्यते ग्रहीतुमित्याह— **शक्तिपदार्थस्येति** । उक्तानुमानघटकसाध्यस्येत्यर्थः । सत्तात्वादिविशिष्ट-विषयकत्वं बुद्धावनुपादाय विशेष्यतावद्बुद्धिः पदजन्या भवत्वित्याकारक-सङ्केतीयावच्छेदकत्वमात्रस्य वाचकतारूपत्वे प्रमेयनिष्ठविशेष्यताघटितसङ्केतीय-तादृशावच्छेदकत्वस्य भूपदे सत्त्वात् प्रमेयवाचकं भूपदमित्यस्य प्रामाण्य-प्रसङ्गभिया शक्यतावच्छेदकतत्तद्धर्म्मविशिष्टविषयताकत्वस्य बुद्धाववश्यं निवेशनीयत्वेन तत्तद्धर्म्माज्ञाने तस्य ग्रहणासम्भवादित्यर्थः ।

ननु यथा तदादिसर्वनाम्नां बुद्धिप्रकारत्वोपलक्षितधर्म्मावच्छिन्नवाचकानामपूर्वचैत्रत्वादिषु शक्तिग्रहः, तथैव भूपदस्यापि वस्तुत्वोपलक्षितधर्म्मावच्छिन्नवाचकस्यापूर्वसत्तात्वे शक्तिग्रहः स्यात्, तथा च लक्षणाज्ञानं सुघटमित्याह- **यदि चे**त्यादिना ।

* भुवि भवति इति मु० पु० पा० ।

† वस्तुविशिष्टविशेष्यकभूशब्दजन्यबुद्ध्युद्देश्यकः सङ्केतः इति मु० पु० पा० ।

**विशेष्यकभूशब्दजन्यबुद्ध्युद्देश्यकसङ्केतो विशिष्य प्रवृत्तिनिमित्ताग्रहेपि सुग्रह इत्युच्यते,**

**तदापि * तादृशसामान्यशक्यसम्बन्धस्वरूपा लक्षणा नानुभवौपयिकस्मरणोपयोगिनी। अतएव †च "सर्वनाम्नि न लक्षणा" इति वदन्ति।**

उक्तरीत्या शक्तिग्रहस्य सम्भवेपि सामान्यतो ज्ञानं शक्यसम्बन्धरूपाया लक्षणाया अन्वयबोधाप्रयोजकत्वात् तादृशी लक्षणाकिञ्चित्कर्य्येवेत्याह—**तदापी**त्यादिना। **तादृशसामान्येति**। शक्यतावच्छेदकानुगमकोपलक्षणीभूतवस्तुत्वादिसामान्यधर्म्मेत्यर्थः। तथा च वस्तुत्वादिना शक्यतावच्छेदकसत्तात्वादिकमवगाहमानायास्सङ्केतरूपायाश्शक्तेराश्रयीभूतशक्यसम्बन्धस्वरूपेत्यर्थः। **नानुभवौपयिकेति**। **उपायः** साधनं जनकं तदेवौपयिकं स्वार्थे ठक्प्रत्ययात्[१]। **अनुभवस्य** शाब्दबोधरूपस्यौपयिकमित्यर्थः। शक्यतावच्छेदकविशिष्टशक्यसम्बन्धरूपाया एव लक्षणायाश्शाब्दबोधोपयोगित्वेन तदघटितोक्तलक्षणाकिञ्चित्करीत्यर्थः। शक्यतावच्छेदकाविषयकस्य शक्तिज्ञानस्य लक्षणाया अप्रयोजकत्वे प्राचां संवादोप्यस्तीत्याह—**अतएव चेति**। **सर्वनाम्नि न लक्षणेति**। तत्रापि पूर्वं बुद्धिप्रकारत्वादिधर्म्मेणैवोपलक्षणीभूतेन चैत्रत्वादीनां ज्ञानात्तादृशधर्म्माश्रयसम्बन्धस्य लक्षणात्वासम्भवादित्यर्थः।

**अतएव चे**ति चकारस्सर्वनाम्नामलक्षकत्वे हेत्वन्तरं सिद्धान्तविषयीभूतं समुच्चिनोति। तच्च बुद्धिप्रकारत्वोपलक्षितधर्म्मावच्छिन्ने शक्तिमतां तेषां लक्ष्यार्थत्वेनाभिमतेष्वर्थेष्वपि तादृशानुगमकधर्म्मवदाश्रयत्वसम्भवाच्छक्तेरेव तत्रापि सत्त्वात्, लक्षणायाश्च तत्पदशक्त्यभाववत्त्वे सति तच्छक्यसम्बन्धरूपतायाः सैन्धवादिपदशक्याश्वादिसम्बन्धस्य तत्पदशक्येपि लवणादौ सत्त्वात्, तत्रापि तत्पदस्य लक्षणाप्रसङ्गभयेनावश्याभ्युपेयतया विशेषणीभूतशक्त्यभाववत्त्वस्य कुत्राप्यसम्भवात् यत्र न यस्य बुद्धिस्तत्र लक्षणाया अपि वक्तुमशक्यत्वमेवेति। शक्यतावच्छेदकप्रकारकस्यैव शक्तिज्ञानस्य लक्षणाप्रयोजकत्वमनुभवविरुद्धम्, गङ्गापदशक्यसम्बन्धितीरमित्याद्याकारिकाया एव लक्षणाबुद्धेः

---

* एतादृशसामान्यशक्यसम्बन्धस्वरूपा इति मु० पु० पा०।

† च इति मु० पु० पा० ना०।

१ विनयादिभ्यष्ठक्, उपायाद्ध्रस्वश्च इतिसूत्रगणवार्तिकाभ्या सिद्धमिदं रूपम्।

एतेन भूधातोः स्वरूपे परिभाषा "स्वं रूपम्"...इत्यादिसूत्र-ग्राहिता, तया स्मारिते भूधातौ सत्ताद्यर्थकत्वान्वय इत्यपि न सम्भवति, प्रातिपदिकसंज्ञापत्तेः। न च स्वरूपार्थकस्यापि भुवः क्रियावाचित्वानपायाद् "अधातुः" इतिपर्य्युदासान्न प्रातिपदिकसंज्ञा-प्रसक्तिः, "ब्रुवो वचिः"... इत्यादौ तु *सौत्री प्रातिपदिकसंज्ञा वैकल्पिकी। इकृश्तिपावपि वैकल्पिकावेव।

यद्वा भूशब्दो द्विविधः, एको गणपठितत्वे सति क्रियावाची धातु-

सर्वत्रानुभवो न तु तत्र प्रवाहत्वादिना प्रवाहादीनामनुप्रवेश इत्यस्वरसो **वदन्ती**त्यनेन सूचितः। अतएव "यदर्थशक्त्या".. इत्यादिकारिकया लक्षक-त्वमेव प्रकृते भूपदस्य सिद्धान्तयिष्यति।

पूर्वोक्तः "स्वं रूपं शब्दस्य" इतिसूत्रेण ग्राहितसङ्केतेन वा इति पक्षोपि प्रातिपदिकसंज्ञापत्तेरेव निरस्त इत्याह—**एतेनेति**। स्वरूपवाचकत्वे धातुत्वा-भावात् प्रातिपदिकसंज्ञाप्रसङ्गेनेत्यर्थः। **क्रियावाचित्वानपायादिति**। हरिपदा-दीनां नानार्थकानामेकवाचकत्वेन्यवाचत्ववदित्याशयः। "ब्रुवो वचिः".. इत्या-दावुक्तप्रातिपदिकसंज्ञानुपपत्तिं वारयति—**ब्रुवो वचिरित्या**विति। **वैकल्पि-कीति**। सूत्रादौ सुबन्तभूपदनिर्देशान्यथानुपपत्त्या तत्र प्रातिपदिकसंज्ञा सूत्राननुशिष्टापि ज्ञाप्यते। "भू सत्तायाम्" ...इत्यादौ तथात्वेन निर्देशाभाव एव "अधातोः" इतिपर्य्युदासान्न तत्र प्रातिपदिकसंज्ञेति ज्ञापयतीति पदभेदेनैव कचित्तस्याः प्रवृत्तिः कचिदप्रवृत्तिरित्याशयः। **इकृश्तिपावपीति**। तथा च तत्र बहुलमित्यस्यानुवृत्तेरत्र न तस्य प्रवृत्तिर्य्यथा—"गुप्तिज्किद्भ्यः सन्" "जृस्तम्भुम्रुचुम्लुचुग्लुचुग्लुञ्चुश्विभ्यश्च"...इत्यादावित्याशयः।

ननु प्रातिपदिकसंज्ञाया वैकल्पिकत्वं न सूत्रे उपात्तम्, "ब्रुवो वचिः"... इत्यादिप्रयोगनिर्देशश्चागतिकगतिरित्यत आह—**यद्वेति**। **संज्ञायत इति**। "भूवादयः" इतिसूत्रोद्देश्यतावच्छेदककुक्षौ गणपठितत्वस्य वर्जनादिरूपक्रिया-वाचकानां हिरुगाद्यव्ययानां धातुसंज्ञाप्रसङ्गवारणायावश्यं प्रवेशनीयत्वात्

---

* सौत्रीयप्रातिपदिकसंज्ञा इति मु० पु० पा०।

रिति संज्ञायते, स स्वरूपपरोऽप्यधातुरितिपर्य्युदासान्न प्रातिपदिकसंज्ञः, द्वितीयस्तु गणापठितत्वादधातुः, तस्य विकल्पेन प्रातिपदिकसंज्ञा इकृश्तिप् च स्यादिति वाच्यम्। "ब्रुवो वचिः" "भुवो वुक्"... इत्यादौ †ब्रुवेर्भुवेश्च धातुत्वाभावे "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" ‡इत्यनेनोवङो विरहप्रसङ्गात्।

यत्तु श्रोत्रोपस्थिते भूशब्दादौ *सत्तावाचकत्वादेरन्वयः पदार्थो-

तद्विशिष्टक्रियावाचकस्य भूशब्दस्य धातुसंज्ञाविषयत्वमित्यर्थः। **स्वरूपपरोपीति**। स्वरूपबोधकत्वेपि तस्य धातुसंज्ञकत्वानपायादित्यर्थः। **तस्य** दर्शितस्य द्विविधभूशब्दस्य, भूवृत्त्यानुपूर्वीमत इति यावत्। तेनैकधर्म्मावच्छिन्न एव विशेषणसत्त्वासत्त्वप्रयुक्तयोः प्रातिपदिकसंज्ञाप्रवृत्त्यप्रवृत्त्योरसम्भवाद् वैकल्पिकत्वं तस्या इत्यर्थः। **इकृश्तिप् चेति**। अत्र **स्यादि**त्यस्यावृत्त्या संज्ञादौ प्रत्येकमेवान्वयादेकवचनान्तत्वन्नानुपपन्नम्। **विरहप्रसङ्गादिति**। सूत्रे धातुपदोपादानात्तदर्थधातोरवयवयोरेवेकारोकारयोरियङुवङोर्विधानादित्याशयः।

सर्वत्रान्वयबोधे वृत्त्या पदजन्योपस्थितेरेव न कारणत्वम्, क्वचिदन्यथाप्युपस्थितेस्तथात्वमित्यनुशयिनां शाब्दिकविशेषाणाम्मतमाह—**यत्त्विति**। (**श्रोत्रोपस्थित** इति।) समवायसन्निकर्षेण श्रोत्रजन्यप्रत्यक्षविषय इत्यर्थः। **भूशब्दादाविति**। आदिना "एध वृद्धौ"... इत्यादीनां वक्ष्यमाणानाम् "आ प्रगृह्यः"...इत्याद्युक्तशब्दानाञ्च परिग्रहः।

नन्वन्वयबुद्धौ वृत्त्यैव पदजन्याया उपस्थितेः कारणतया श्रोत्रोपस्थिते कथं सत्तावाचकत्वान्वयबुद्धिरित्यत आह—**पदार्थोपस्थितीनामिति**। **विषयभेदे-**

---

† ब्रुवो भुवश्च इति मु० पु० पा०।

‡ इत्येतेन इति मु० पु० पा०।

* सत्त्ववाचकत्वादेः इति मु० पा०।

पस्थितीनां विषयभेदेन शाब्दबुद्धिं प्रति कारणताभेदात्, [1]भूपदोपस्थितौ वृत्त्या पदजन्यत्वाप्रवेशादन्यथाप्युपस्थिते ( पदे ) पदार्थान्तरान्वयसम्भवात् ।

तथा च "भू सत्तायाम्" इत्यत्र (भुवो) [2]वृत्त्या पदार्थानुपस्थापकत्वेनार्थवत्त्वाभावान्न प्रातिपदिकसंज्ञा ।

यत्र तु भुवोनुकार्य्यानुकरणभावेन भेदो विवक्षितः

न घटादिपदार्थभेदेन । **कारणताभेदादिति** । सामान्यतोन्वयबुद्धित्वावच्छिन्नं प्रति वृत्तिज्ञानजन्यपदार्थोपस्थितेरेकरूपेण कारणत्वे एकपदजन्योपस्थितावन्यपदार्थान्वयबोधप्रसङ्गात्तद्विषयकान्वयबुद्धावेव तद्विषयकवृत्तिज्ञानजन्योपस्थितेः कारणत्वस्यावश्यकत्वादित्यर्थः । **भूपदोपस्थिताविति** । भूशब्दे सत्तावाचकत्वान्वयबोधकारणीभूतायां भूपदविषयकोपस्थितावित्यर्थः । **वृत्त्येति** । तथा च भूशब्दादिविशेष्यकशाब्दबोधे तद्विषयकत्वमात्रेणैवोपस्थितेः कारणत्वम्, न तु तत्र वृत्त्या पदजन्यत्वमपि प्रवेशनीयमित्यर्थः । **अन्यथाप्युपस्थित** इति । वृत्तिभिन्नेन समवायसन्निकर्षेणोपस्थिते भूशब्दादावित्यर्थः ।

**तथा च** श्रोत्रोपस्थितभूशब्दे सत्तावाचकत्वस्यान्वयोपगमे च । **वृत्त्येति** । अत्रार्थवत्त्वं वृत्तिमत्त्वमिति पक्षे पदार्थानुपस्थापकत्वं वृत्तिमत्त्वाभावप्रयोजकमात्रम्, तदर्थोपस्थापकस्यैव तन्निरूपितवृत्तिमत्त्वात् । नवीनमतसिद्धार्थवत्त्वस्यार्थविषयकबोधजनकत्वघटितत्वादुपस्थितिर्बोधरूपा वा ग्राह्या ।
"भुवो वुक्"... इत्यादावुवङ्विधौ धातुत्वस्य प्रातिपदिकसंज्ञाविधौ तद्विरहस्य चोपपत्तयेनुकार्य्यानुकरणयोर्भेदोभेदश्चेति "प्रकृतिवदनुकरणं भवति, न भवति" इतिपरिभाषाप्रतिपादितं पक्षमुररीकरोति—**यत्र त्वित्या**दिना । **भेदो विवक्षित** इति । "मतौ च्छः सूक्तसाम्नोः" इतिपञ्चमाध्यायद्वितीयपादोनषष्टितमसूत्रभाष्ये—"अच्छावाकोस्मिन्नस्तीत्यच्छावाकीयम्" "वारवन्तोस्मिन्नस्तीति वारवन्तीयं साम" इत्युदाहरणयोरच्छावाकवारवन्तपदयोस्तद्वाच्यार्थपरत्वे सूक्ते

---

१ पदोपस्थितौ इति मु० पु० पा० ।

२ भुवो वृत्त्या इति मु० पु० पा० ।

**तत्रानुकार्य्यस्य *श्रोत्रेणानुपस्थितत्वात्तदुपस्थितये श्रूयमाणस्य लक्षणा परिभाषा वा †वृत्तिरभ्युपेतव्येति तयार्थवत्त्वाद् "भुवो वुक्" "ब्रुवो वचिः" इत्यपि प्रयोगः ‡सूपपदः ।**

**अतएव "गवित्याह"...इत्यादावितिनिपातोपस्थितायां कर्म्मतायां श्रोत्रोपस्थितस्य गोशब्दस्यान्वयः, अन्यथा निपाताभिहिते कर्म्मणि प्रथमाश्रवणापत्तेः ।**

साम्नि च तदर्थयोरभावादयोग्यत्वम् । अनुकरणपरत्वे चानुकरणस्यानुकार्य्यादभेदे वृत्तिमत्त्वाभावादप्रातिपदिकत्वे सुबन्तत्वविरहे तद्धितानुत्पत्तिप्रसङ्गात्तयोर्भेद एव विवक्षणीय इत्याशयः । वस्तुतस्तयोरभेदाद् **विवक्षित** इत्युक्तम् ।

**अनुकार्य्यस्य** बभूवेत्यादिक्रियापदस्थभूशब्दस्य । **श्रोत्रेणेति** । तस्येदानीं श्रोत्रसमवायित्वाभावादित्यर्थः । **तदुपस्थितये** अनुकार्य्यस्य भूशब्दस्योपस्थितये । **श्रूयमाणस्य** "भुवो वुक्".. इत्यादौ । **वृत्तिरभ्युपेतव्येति ।** तस्यान्यथोपस्थित्यसम्भवादित्यर्थः । लक्षणायाः परिभाषातो जघन्यत्वादाह— **परिभाषा वेति ।** सा च "स्वं रूपम्".. इत्यादिसूत्रग्राहिता बोध्या । **सूपपद** इति । प्रातिपदिकसंज्ञायां भेदपक्षस्योवङादेशे चाभेदपक्षस्याश्रयणाल्लक्ष्यानुसारेणैव तयोः पक्षयोर्व्यवस्थापनादित्याशयः ।

वृत्त्यानुपस्थापितस्य पदार्थान्तरान्वये महाभाष्यवाक्यं प्रमाणयति— **अतएवेति ।** वृत्त्यानुपस्थापितस्यापि पदार्थान्तरान्वयादेवेत्यर्थः । **गवित्याहेति ।** अत्र वाक्ये **गो** इत्यनुकरणपरम् । तेन श्रोत्रोपस्थितस्य गोशब्दस्य इतिनिपातार्थकर्म्मत्वे तस्य च निरूपकतया धात्वर्थोच्चारणेन्वयो बोध्यः । गोशब्दस्य सास्नादिमदर्थकत्वे तु तस्योच्चारणेन्वयो न स्यादिति । **प्रथमाश्रवणापत्तेरिति ।** तादृशकर्म्मत्वे गोशब्दस्यान्वयोपपत्त्यर्थं स्ववाच्यवाचके लक्षणायाः स्वरूपे परिभाषाया वावश्याभ्युपेतव्यत्वेन वृत्ति-

---

* "तदुपस्थितये" इत्यस्य स्थाने तदुपस्थितत्वाय इति मु० पु० पा० ।

† वृत्तिरभ्युपेयेति इति मु० पु० पा० ।

‡ सूपपादः इति मु० पु० पा० ।

"आ प्रगृह्यः स्मृतौ वाक्येप्यास्तु स्यात्क्रोधपीडयोः। चान्वाचय-समाहारेतरेतरसमुच्चये ॥" इत्यत्र कोषेपि श्रोत्रोपस्थितेषु निपातेषु प्रगृह्यसंज्ञकतादात्म्यस्य *तत्तदर्थकत्वस्य चान्वयः।

"खलु वाक्यालङ्कारे" इति प्रत्यक्षालोके श्रोत्रोपस्थितस्य खलुशब्दस्य वाक्यजसुखचमत्कारा(त्मका)लङ्कारद्योतकत्वान्वयः। अतएव श्रोत्रोपस्थिते विव्रियमाणवाक्ये पचतीत्यादौ पाकं करोतीत्यादि-विवरणवाक्यं तथाविधसमानार्थकत्वेन, तदुपस्थापितपाककर्तृत्वाद्यर्थो

मत्त्वरूपार्थवत्त्वात् प्रातिपदिकसंज्ञायां द्वितीयाया अनभिहिताधिकारीय-त्वादितिनिपातेन कर्म्मत्वस्याभिधानादप्राप्तावप्यभिहिते कर्म्मणि प्रथमाप्रसङ्गाद् गौरित्याहेतिप्रयोगापत्तेरित्यर्थः।

अनुकार्य्यानुकरणयोर्भेदाभेदपक्षयोः प्रयोगानुसारेणैवोपगमात्तादृश-प्रामाणिकप्रयोगानुदाहरति—**आ प्रगृह्य** इत्यादिना। तयोरभेदे इदमुदाहरणम्, भेदे तु—**आस्तु स्यादिति**। भुव इत्यादाविवात्रापि विभक्तिरुपपन्नेति बोध्यम्। **प्रगृह्यसंज्ञकतादात्म्यस्येति**। प्रगृह्यपदेन प्रगृह्यसंज्ञकस्योपस्थितत्वाद् वाक्य-स्मरणयोराकारस्य

"ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥"

इत्यनुशासनेन ङिद्भिन्नत्वबोधनेन "निपात एकाजनाङ्" इति सूत्रेण च ङिद्भिन्नस्याकारस्य प्रगृह्यसंज्ञाविधानादित्याशयः। **तत्तदर्थकत्वस्य चेति**। स्मरणाद्यर्थकत्वस्येत्यर्थः। तच्च वाचकत्वं द्योतकत्वं वा।

अत्रैव विषये तत्त्वचिन्तामणिव्याख्यालोकस्थं प्रयोगमपि प्रमाणयति—**खल्विति**। सुखे वाक्यजत्वं तच्छ्रवणद्वारा बोध्यम्।

प्रातिपदिकस्य श्रोत्रोपस्थितस्य पदार्थान्तरान्वितत्वमुपदर्श्य तिङन्तस्यापि तद्दर्शयति-**अतएवेत्यादिना**। **तथाविधेति**। श्रोत्रोपस्थितेत्यर्थः। **समार्थकत्वेनेति**। स्वबोध्यपाकानुकूलकृतिबोधकत्वेनेत्यर्थः। विव्रियमाणस्यैव श्रोत्रोपस्थितत्वं विवरणस्य वृत्त्यैवोपस्थापकत्वमित्यनुशयेनाह—**तदुपस्थापितेति**। पाकं

* तदर्थकत्वस्य इति मु० पु० पा०।

**वा प्रतिपादकत्वेन संसर्गेणान्वेति ।**

**पाकं करोतीत्यादिवाक्यप्रतिपादितकर्तृत्वस्याख्यातार्थस्यापि प्रतिपादकतासंसर्गेण *प्रथमान्तभिन्नेपि पचत्यादावन्वयो नानुपपन्नः। आख्यातार्थकर्तृत्वस्याश्रयतासम्बन्धेनान्वय एव प्रथमान्तपदापेक्षा। अतएव निर्विभक्तिकनञ्पदोपस्थाप्येत्यन्ताभावे न पचतीत्यादौ प्रतियोगितया पाकभावनान्वयः ।**

**† एतादृशानां निर्विभक्तिकशब्दानां साधुत्वमपि ज्ञापकसिद्धम् । अनुकरणशब्दाः साधव इति सामान्यत एव "भू सत्तायाम्" इत्यनेन ज्ञापनात् ।**

करोतीत्यादिवाक्योपस्थापितमित्यर्थः। **प्रतिपादकत्वेनेति** । पाककर्तृत्वान्वयबोधजनकत्वस्य पचतीत्यादौ निराबाधादित्याशयः ।

नन्वाख्यातार्थस्य विशेष्यतया विशेषणतया वा प्रथमान्तार्थ एवान्वयनियमात्तिङन्तार्थे कथं तस्यान्वय इत्यत आह—**पाकमिति । प्रथमान्तभिन्नेपीति** । प्रथमान्तभिन्नतिङन्तपदोपस्थापित इत्यर्थः । तथा च प्रतिपादकतासंसर्गेण तदन्वये प्रथमान्तपदस्यानपेक्षणान्नानुपपत्तिरित्याशयः । **अतएव** आख्यातार्थस्याश्रयताभिन्नसंसर्गेणान्वये प्रथमान्तपदस्यानपेक्षणादेव । **भावना** कृत्यादिरूपा ।

"अपदन्न प्रयुञ्जीत" इति भाष्यादेव निर्विभक्तिकस्यासाधुत्वप्रतिपादनात्तादृशभूशब्दादीनां कथं साधुत्वमित्याशङ्कायां "भू सत्तायाम्" इति पाणिनिनिर्देशेनानुकरणशब्दानां सर्वेषामेव साधुत्वमिति सामान्याकारकेण ज्ञापनेनैव भूशब्दादीनां नञादिशब्दानाञ्च साधुत्वमित्याह—**एतादृशानामिति** । श्रावणप्रत्यक्षमात्रविषयत्वेन वृत्तिमत्त्वाभावात् प्रातिपदिकसंज्ञाविरहवतामित्यर्थः । **सामान्यत एवेति** । "भू सत्तायाम्" इत्यत्र निर्दिष्टभूपदेन स्ववृत्त्यनुकरणत्ववच्छब्दत्वावच्छेदेनैव साधुत्वस्य ज्ञापनादित्यर्थः । नञ्पदस्यानुकरणत्वाभावेपि

* प्रथमान्तार्थभिन्नेपि इति मु० पु० पा० ।

† एतादृशनिर्विभक्तिकशब्दानाम् इति मु० पु० पा० ।

अतएव "गवित्याह" "प्रतिजानीते [1]प्रत्यक्षवित्यादि"...इत्यादिष्वनुकरणनिरर्थकशब्दान्तर्गतस्यौतोवादेशः । "हेलयो हेलय इति वदन्तोसुराः पराबभूवुः" इति [2]श्रुतावनुकरणशब्दान्तर्गतस्याकारस्य पूर्वरूपत्वम्, "कुमारी ऌतक इति ब्रूते"...इत्यादौ ऌतकानुकरणप्रथमावयवस्वरस्य [3]पूर्वयणादेशनिमित्तत्वं सङ्गच्छते, अन्यथा

निपातत्वेनाव्ययत्वाल्लुप्तविभक्तिकत्वेन निर्विभक्तिकत्वम् । चादीनां तथात्वं समुच्चयादिस्वार्थबोधकानामेव, न तु स्वरूपबोधकानामिति तेषामनुकरणशब्दत्वेनैव साधुत्वमिति बोध्यम् ।

**अतएव** अनुकरणशब्दत्वावच्छेदेन साधुत्वज्ञापनादेव । **"प्रत्यक्षवित्यादि"** इति वाक्यमनुमानदीधितिस्थं "प्रत्यक्षोपजीवकत्वात्"...इत्यादिचिन्तामणिप्रतीकधारकम् । वैदिकवाक्येऽप्यनुकरणाना साधुत्वं दर्शयति— **हेलय** इति । हेरय इति वक्तव्ये करणापाटवेनासुरैरुक्तम् । **पूर्वरूपत्वम् ।** हे अलय इति स्थिते "एङः पदान्तादति" इत्यनेनैकाररूपत्वमकारस्येत्यर्थः । इदमुपलक्षणम् । हेलय इति वदन्त इति स्थिते विसर्गस्यासिद्धत्वेन रेफस्य यत्वयलोपावपि बोध्यौ । कार्य्यवैलक्षण्यदर्शनाय महाभाष्यप्रयोगमेव पुनरप्युदाहरति—**कुमारी इति । ऋतक** इति प्रयोक्तव्ये कुमार्य्या करणापाटवेन **ऌतक** इत्युक्तम् । तद्वाक्यानुवादकमिदमन्यवाक्यम् । **पूर्वयणादेशनिमित्तत्वमिति ।** पूर्वस्य कुमारीपदान्त्येकारस्य यकारादेशे प्रयोजकत्वम् । अकारादिस्वरे परे एव"इको यणचि" इत्यनेन पूर्वस्येको यणादेशविधानादित्यर्थः । यण्पदस्योपलक्षकत्वाद् "इकोसवर्णे"...इत्यादिना ह्रस्वसमुच्चितप्रकृतिभावस्यापि निमित्तत्वं तस्य बोध्यम् । **अन्यथा** अनुकरणशब्दानामसाधुत्वे । **अवादि-**

---

१ प्रत्यक्षवितीत्यादिषु इति मु० पु० पा० ।

२ श्रुतापभ्रंशानुकरणालयशब्दान्तर्गतस्य इति मु० पु० पा० ।

३ पूर्वाया देशनिमित्तत्वम् इति मु० पु० पा० ।

अवादिविधीनां साधुमात्रविषयतया [1]"गोआ" [2]"लोपो [3]अलम्" [4]"ती अई"...इत्यादौ भाषायामिव तदप्रसक्तं स्यादिति।

तन्न, एवं सति ल तिष्ठति शब्दो गो इत्यादेरपि साधुत्वप्रसङ्गात्। "आ प्रगृह्यः"...इत्यादौ विभक्तिं विनापि तादात्म्यान्वयस्य पचति पाकं करोतीत्यादिविवरणवाक्ये प्रतिपादकतया शब्दे [5]आख्यातान्तान्वयस्य त्वयैव स्वहस्तितत्वात्। तस्मादनुपपन्नमेव "भू सत्तायाम्"... इत्यादिवाक्यमिति।

**विधीनामिति।** आदिपदात् पूर्वरूपादीनामुक्तानां संग्रहः। तेषां साधुपदमात्रोद्देश्यकत्वाभावे दोषमाह—**गो आ** इत्यादिना। तथा च तेष्वप्यौकारादीनामवाद्यादेशप्रसङ्गभिया साधुपदमात्रोद्देश्यकत्वं तेषामवश्यमभ्युपेयमित्यनुकरणानामसाधुत्वे तत्राप्यप्रवृत्तिरित्यर्थः।

मतमिदं दूषयति—**तन्नेति। साधुताप्रसङ्गादिति।** विभक्तिविनाकृतस्यापि साधुत्वस्योक्तत्वादित्याशयः। **तस्मादिति।** श्रोत्रोपस्थिते पदार्थान्तरस्यान्वयोपगमे उक्तप्रयोगाणां साधुत्वप्रसङ्गादित्यर्थः। **अनुपपन्नमिति।** उक्तरीतीनामेकस्या अपि निर्दोषत्वाभावेनान्यस्याश्च तदुपपादकरीतेरनवद्याया अभावादित्याशयः।

पूर्वोक्तं भ्वादिपदानां स्ववाच्यवाचके लक्षणेति पक्षमेव शक्यतावच्छेदकरूपाणां विशेषतो ग्रहस्य लक्षणाग्रहे न प्रयोजकत्वं गङ्गापदशक्यसम्बन्धितीरमित्याकारकस्यैव लक्षणाग्रहस्य सर्वानुभवसिद्धत्वात्तत्र प्रवाहत्वेन प्रवाहविषयताकत्वस्यानुभवादिति सत्तात्वेन सत्तात्वस्य पूर्वमग्रहेपि भूपदशक्य-

---

१ गो इति मु० पु० पा०।

२ आलो इति मु० पु० पा०।

३ अलन्ति इति मु० पु० पा०।

४ अपि अशता इति मु० पु० पा०।

५ आख्यातान्वयस्य च इति मु० पु० पा०।

अत्रोच्यते—

यदर्थशक्त्या धातुत्वं निपातत्वञ्च वादिषु ।
तदर्थसम्बन्धभक्त्या बोधकत्वेपि तत्तथा ॥१३॥

वाकारस्यैव गतिविशेषशक्तिनिबन्धनं धातुत्वं विकल्पशक्तिनिबन्धनञ्च निपातत्वमित्यन्येषामपि [1]भूचप्रभृतीनां धातुत्वनिपातत्व-

सम्बन्धिभूपदमितिलक्षणाज्ञानस्योदये बाधकाभाव इत्याशयेन सिद्धान्तयति—**अत्रोच्यत** इत्यादिना। **वादिषु** वाशब्दादिषु। यदर्थशक्त्या धातुत्वं निपातत्वञ्च तदर्थसम्बन्धभक्त्यान्वयबोधजनकत्वेपि (तत्) **तथा** धातुत्वं निपातत्वञ्चेत्यर्थः। भक्तिश्च भज्यते सेव्यते प्राज्ञेन प्रसिद्धतयोद्घोष्यत इतिव्युत्पत्त्या सारूप्यादिधर्म्मः। यदाहुः—

"अभिधेयेन सारूप्यात्सामीप्यात्समवायतः ।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता ॥" इति ।

अथवा समुदायवृत्तेश्शब्दस्यार्थस्य भागो भक्तिः। प्रतिपाद्ये सामीप्यादौ श्रद्धातिशयो वा भक्तिः। मुख्यार्थस्य भङ्गो वा भक्तिरित्येवं व्युत्पत्त्या वा लक्षणैवेति बोध्यम्।

कारिकोक्तमर्थं विवृणोति—**गतिविशेषेत्यादिना**। गतिविशेषो वायुकर्त्तृकं गमनम्, "वा गतिगन्धनयोः" इत्यत्र गतिपदेन तस्यैव ग्रहणात्, अन्यथा वायुर्वातीतिवच्चैत्रो वातीत्यस्यापि सर्वानुभवविरुद्धप्रयोगस्य प्रामाण्यप्रसङ्गादित्यर्थः। स्वरूपे विहितस्य कारप्रत्ययस्य प्रकृतिवृत्त्यानुपूर्व्यवच्छिन्नवाचकतया गतिविशेषविकल्पादिवाचकत्वयोः वावृत्त्यानुपूर्व्यवच्छिन्नात्मकवापदत्वावच्छेदेनैव सत्त्वाद्धातुत्वनिपातत्वयोरपि तद्धर्म्मावच्छेदेनैव सत्त्वमविरुद्धमित्याशयः। **विकल्पे**त्युपमादीनामप्युपलक्षकम्। "वा स्याद्विकल्पोपमयोरिवार्थेपि समुच्चयः" इत्यमरकोषेण तस्य तेष्वपि शक्तेः प्रतिपादनात्। **निबन्धनं** प्रयोज्यम्। तत्त्वञ्च क्रियावाचकत्वाभावे धातुत्वाभावात् क्रियावाचकत्वे तत्सत्त्वाच्च धातुत्वस्य निराबाधम्। **वादिष्वि**त्यादिपदग्राह्यमाह—**अन्येषामपीति**। **तदाश्रयेति**। शक्त्याश्रयगत्यादिनिरूपित-

---

१ भूकारप्रभृतीनाम् इति मु० पु० पा० ।

**प्रयोजिका भवत्यर्थविशेषशक्तिरिव, तदाश्रयसम्बन्धस्वरूपलक्षणाया बोधकतापि ।**

**अतएव स्थितिशक्तस्य तत्सम्बन्धेन गतिलक्षकस्य ष्ठाधातोः[1] प्रतिष्ठते**

वाचकत्वसम्बन्धरूपया लक्षणयेत्यर्थः। **बोधकतापीति** । भूशब्दविषयकान्वयबोधजनकतापीत्यर्थः। धातुत्वादिप्रयोजिकेति पूर्वेणान्वयः।

**अतएव** तदर्थशक्तिप्रयोज्यधर्म्मस्य तत्सम्बन्धिलक्षकत्वेप्यनपायादेव । **स्थितिशक्तस्येति** । "ष्ठा गतिनिवृत्तौ" इत्यत्र निवृत्तेरत्यन्ताभावस्वरूपतयोत्तरदेशसंयोगानुकूलव्यापाराभावस्य स्थितिरूपस्यैव ष्ठाधातुवाच्यत्वबोधनादित्याशयः । **तत्सम्बन्धेन** उक्तस्थितिप्रतियोगिकविरोधसम्बन्धेनेत्यर्थः।

**प्रतिष्ठत** इत्यतो गमनबोधो धातोस्तन्निवृत्तिवाचकतया प्रोपसर्गस्य तात्पर्य्यमात्रग्राहकतया च विरोधलक्षणयैव सम्भवतीति यथा तस्य स्थितिरूपार्थशक्तस्य धातुत्वम्, तथा तत्सम्बन्धिलक्षकस्याप्यन्यथा धातुत्वाभावे तिबाद्यनुत्पत्त्या तादृशप्रयोगानुत्पत्तिः, तथा प्रकृतेपि सत्तावाचकस्य भूशब्दस्य स्वार्थसत्तावाचकत्वसम्बन्धवतो भूशब्दस्य लक्षणया बोधकत्वेपि धातुत्वान पायान्न प्रातिपदिकसंज्ञेति भावः।

न च प्रतिष्ठत इत्यत्रोपसर्गस्यैव गतिबोधकत्वं धातुस्तात्पर्य्यग्राहक इति वाच्यम्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन तिङर्थस्य तत्रानन्वयप्रसङ्गात् । प्रशब्दस्यात्यन्ताभावार्थकत्वं धातोस्तु शक्यगमनाभावस्यैव बोधकत्वम्, तस्य च प्रतियोगितयोपसर्गार्थाभावान्वयित्वादेव गमनबोधो यद्यपि सम्भवति, तथापि गमनत्वेनैव तत्र गमनबोधस्यानुभविकतया गमनाभावाभावत्वेन बोधेपि तदसम्भव एव। प्रजयतीत्यादावपि धातोरेव प्रकृष्टजयलक्षकत्वम्, प्रादीनां द्योतकत्वम् । तच्च धातोर्विशिष्टार्थे तात्पर्य्यग्राहकत्वस्वरूपमेव। उपसर्गाणां धातुमन्तरेण प्रयोगाभावाच्छक्तेरक्लृप्ततया तेषां प्रकर्षादिवाचकत्वासम्भवात् । किञ्च तेषां वाचकत्वे उपास्यते गुरुः, अनुभूयते सुख-

---

१ स्थाधातोः इति मु० पु० पा० ।

**इत्यादौ धातुत्वम्, अभावशक्तस्य तदधिकरणलक्षकस्य नञोघटं** मित्यादौ गुर्वादिकर्म्मण उपसर्गार्थोपासनादिकर्म्मतया धात्वर्थकर्म्मताविरहादभिधानाभावप्रसङ्ग इति तेषा द्योतकत्वमेवोपेयमित्यनुशयेनेदम् ।

एवं निपातमपि तादृशं दर्शयति--**अभावशक्तस्येति** । प्राद्युपसर्गाणां द्योतकत्वेपि निपातानां वाचकत्वमावश्यकमेव, अन्यथा घट इव नेत्यादौ घटसदृशभिन्नबोधानुपपत्तेः, तत्र घटसदृशभेदानामेकघटपदार्थत्वात् । न च साक्षात्क्रियते अलंक्रियते गुरुरित्यादौ साक्षात्कारादेर्न्निपातार्थतया धात्वर्थतावच्छेदकत्वविरहेण तत्कर्म्मत्वेभिहितेपि धात्वर्थतावच्छेदकस्यैव फलस्याख्यातेनाभिधाने कर्म्मणि लकारविधेस्तत्रानुपपत्तिरिति वाच्यम्, अलंसाक्षात्पदयोरेव तत्रालङ्कारप्रत्यक्षस्वरूपफलवाचकत्वं धातोर्व्यापारमात्रवाचकत्वमित्युपगमेपि धात्वर्थान्वयितावच्छेदकफलवत एव कर्म्मत्वोपगमेन प्रत्यक्षादौ तादृशफलत्वस्य निराबाधतयानुकूलत्वेन तयोर्धात्वर्थान्वयित्वाच्छिष्यनिष्ठव्यापारजन्यप्रत्यक्षादिविषयो गुरुरिति बोधस्य तत्राक्षतत्वात् ।

न चैवं निपातानां वाचकत्वे कीदृशस्समुच्चय इतिवत् कीदृशश्च इत्यपि प्रयोगः प्रमाणम्, शोभनस्समुच्चयो द्रष्टव्य इतिवच्च शोभनश्चो द्रष्टव्य इति प्रमाणम्, तेषां विशेषणतयैव स्वार्थबोधकत्वस्य व्युत्पत्तेर्विशेष्यतया तदसम्भवात् । एवं नाम्नो भेदान्वयनिराकाङ्क्षत्वमपि निपातातिरिक्तस्थल एवेति घटश्चेत्यत्र घटस्याधेयतया चार्थसमुच्चयेन्वयो नानुपपन्नः । निपातातिरिक्तत्वस्य तत्राप्रवेशे तु तेषां समुच्चितादिधर्म्मिवाचकत्वमेवोपेयम्, तादात्म्येनैव तथा सति घटादेस्तत्रान्वयसम्भवात् । न च तथापि "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव" इत्यत्रेवनिपातस्य सादृश्यार्थकत्वे तदाश्रयस्यैव कारणतया उस्रादीनां तद्विरहात्तदुत्तरतृतीयाया नैरर्थक्यमिति वाच्यम्, इष्टापत्तेः । उपमानोपमेयभावस्य समानविभक्तिकपदोपस्थाप्यप्रयोज्यतया तदर्थमेव तत्र तृतीयायाः प्रयोगात् ।

**अभावशक्तस्येति** । "तत्सादृश्यमभावश्च".. इत्यादिना नञोभावे शक्तिप्रतिपादनादत्यन्ताभावत्वावच्छिन्ननिरूपितशक्तिमत इत्यर्थः । **तदधिकरणम्** अभावाधिकरणम्, तल्लक्षकस्येत्यर्थः । अभाववति शक्तिस्वीकारे शक्यतावच्छेदकानामननुगतत्वेन शक्तेरनैक्यवारणायाभावत्वस्य तदवच्छेदकताया आवश्य-

१ "...तदन्यत्व तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥"
इति हर्य्युक्तमग्रेतन पद्यम् ।

**भूतलमित्यादौ निपातत्वञ्च सङ्गच्छते ।**

**तथा च स्वशक्यसत्तावाचकत्वेन स्वलक्षकस्य भूशब्दस्य धातुत्वेन पर्य्युदस्तत्वान्न प्रातिपदिकसंज्ञा ।**

**चकारस्य च स्वार्थवाचके स्वरूपे लाक्षणिकत्वेपि निपातत्वानपायात् "सुपो लुकि" "चान्वाचये"...इत्याद्यमरोपि [1]सङ्गच्छते । [2]तथैव**

कत्वे शक्यतावच्छेदकत्वमेव लाघवात्तस्योचितम्, समासेघटभूतलमित्यत्र वाच्यार्थस्याभावस्य भूतले स्वरूपेणान्वयोपगमस्तु भूतलपदाघटपदयोः सामानाधिकरण्यप्रयोजकस्याभेदान्वयस्य तत्राभावे विरुद्धविभक्तिकयोरपि तयोः साधुत्वप्रसङ्गादेव न सम्भवतीति नञस्तत्राभाववति लक्षणैव । तदेकदेशे प्रतियोगितया घटस्य तस्य चाभेदेन भूतलेन्वय इत्येवोपेयत इति भावः । **निपातत्वञ्चेति** । लक्षणयाभावबद्बोधकस्यापि निपातत्वं तस्येत्यर्थः । अन्यथा तस्य प्रातिपदिकसंज्ञाया विरहे सुबन्तत्वाभावे समासासम्भवान्नकारलोपापत्तेः ।

**तथा च** पदार्थशक्त्या धातुत्वमित्यादेरावश्यकत्वे च । **स्वशक्येति । स्वम्** अनुकरणम् "भू सत्तायाम्" इत्यत्र भूपदम्, तच्छक्येत्यर्थः । **धातुत्वेनेति** । भूपदस्य सत्तावाचकत्वस्यानपायाद्धातुसंज्ञायास्तत्र निराबाधत्वं प्रवृत्तेरित्यर्थः । यद्यपि भूपदस्य "भू सत्तायाम्"...इत्यत्र न सत्ताबोधकत्वम्, तथापि भूपदवृत्त्यानुपूर्व्या एव सत्तावाचकतावच्छेदकतया तस्याश्च तस्मिन्नपि भूपदेक्षततया सत्तावाचकत्वमक्षतमेव तस्येति भावः । न च "भू सत्तायाम्"... इतिव्याकरणप्रवृत्तेः पूर्वमेव सत्तायां तस्य शक्तेर्ज्ञाने तस्य वैयर्थ्यमिति पूर्वोक्तदोषस्यात्राप्यनुद्धर एवेति वाच्यम्, लक्षणाज्ञाने शक्यतावच्छेदकरूपेण शक्यज्ञानस्यानपेक्षणाद् भूपदशक्यसम्बन्धिभूपदमित्याकारकस्य भूपदशक्यत्वेन तज्ज्ञानस्यैव सम्भवात् । अथवा स्वशक्यसत्तावाचकत्वसम्बन्धेन भूपदवद्भूपदमिति लक्षणासंसर्गकमेव ज्ञानं तत्रोपेयम् । तच्च संसर्गज्ञानस्य शाब्दबोधे कारणत्वविरहात् सत्तावाचकत्वस्याज्ञानेपि सुलभमेवेति बोध्यम् ।

एवमेव **चान्वाचय** इत्यादयोपि प्रयोगाः निर्विभक्तिकपदघटिताः साधव इत्याह—**चकारस्य चे**त्यादिना । **सुपो लुगिति** । निपातत्वस्य तत्रानपाये

---

१ उपपद्यते इति मु० पु० पा० ।

२ तथैवेत्यादिकः मु० पु० ना० पा० ।

"खलु वाक्यालङ्कारे"...इत्याद्यालोकप्रयोगः । १३

**परिभाषास्वरूपेण सङ्केतेन तु वृत्तिमत् ।**
**भवद् भ्वादिपदं प्रातिपदिकत्वं प्रपद्यते ॥१४॥**

"स्वं रूपं शब्दस्याशब्दसंज्ञा" इति सूत्रेण प्रतिपादितेन पाणिनिसङ्केतेन वृत्तिमान् [1]भ्वादिशब्दः प्रातिपदिकसंज्ञामपि लभते। चकारादि-

"स्वरादिनिपातमव्ययम्" इति सूत्रेण तस्याव्ययसंज्ञायाम् "अव्ययादाप्सुपः" इत्यनेन तदुत्तरस्वादीनां लोप इत्यर्थः । १३

नन्वेवं भ्वादिपदानां स्वरूपबोधकानामपि धातुत्वे "भुवो वुक्"... इत्यादावपि तेषां स्वरूपस्यैव बोधकत्वाद्धातुत्वेन प्रातिपदिकसंज्ञाविरहे सुबनुत्पत्तिप्रसङ्गाद् "भुवः" इत्यादिषष्ठ्यन्तत्वं तस्य कथमित्यत आह—**परिभाषास्वरूपेणेति ।** परिभाषात्मकपाणिनिसङ्केतेन । **भ्वादिपदं वृत्तिमद् भवत् प्रातिपदिकत्वं प्रतिपद्यत** इत्यन्वयः । तुकारोप्यर्थको व्यवहितेन **प्रातिपदिकत्वमि**त्यनेनान्वितः ।

उक्तमर्थं विवृणोति—**स्वं रूपमित्यादि**दिना। **प्रातिपदिकसंज्ञामपि लभत** इति । अयमाशयः— भूपदादीनां स्ववाच्यसत्तावाचकत्वावच्छिन्नबोधकत्वे क्रियावाचकत्वं तस्यावश्यकम् । अन्यथा स्ववाच्यत्वस्य सत्तायामसत्त्वे तादृशलक्षणाया एवानुपपत्तेः । पाणिनिसङ्केतेन स्वरूपत्वावच्छिन्नबोधकत्वे तु तद्विरह एवेति धातुत्वधातुभिन्नत्वयोः तत्रानपायादुक्तप्रयोगाणामुपपत्तिरिति । "चादयोसत्त्वे" इत्यनेन द्रव्यभिन्नार्थकानामेव चकारादीनां निपातत्वबोधनात्, द्रव्यत्वस्य च तत्र लिङ्गसङ्ख्याद्यन्वयित्वरूपस्यैव ग्रहणात् "चस्त्वर्थे"...इत्यादौ स्वरूपत्वावच्छिन्नबोधकस्य चशब्दस्यार्थे लिङ्गाद्यन्वयित्वेन द्रव्यत्वस्यैव सत्त्वेन तस्य निपातसंज्ञाया अप्राप्तौ "स्वरादिनिपातमव्ययम्" इत्यनेन निपातानां विहिता याव्ययसंज्ञा तां निपातत्वाभावे न लभत इत्यर्थः ।

ननु प्रातिपदिकसंज्ञाप्रयोजकमर्थवत्त्वं शक्तिलक्षणान्यतररूपवृत्तिमत्त्व-

---

१ भ्वादिः शब्दः इति मु० पु० पा० ।

**बुद्धिश्च क्वचिद्यच्छब्दजन्या तदिदमादिसर्वनामपरामर्शबीजम् । यथा— यो धूमवान् सोऽग्निमानिति ।**

**कतयेति ।** सर्वनाम्नस्तदादिपदस्य बुद्धिस्थपरामर्शकत्वरूपा प्रकृतिः स्वभाव इव प्रकृतिर्यस्येतिमध्यमपदलोपिसमासात् सर्वनामवृत्तिबुद्धिस्थपरामर्शकत्ववत्त्वेनेत्यर्थः । **बुद्धिश्चेति ।** तत्तत्पदप्रयोजिका बुद्धिरित्यर्थः । परामर्शश्चोपस्थितिमात्रन्न त्वनुमितिजनकः तस्यात्रायोग्यत्वादप्रयोजकत्वाच्च ।

**क्वचिदिति ।** प्रक्रम्यमाणपरामर्शके "यो धूमवान्"... इत्यादौ "तमानय य इहास्ति"... इत्यादौ च । प्रक्रान्तपरामर्शकेपि "यो ब्राह्मणायावगुरेत् तं शतेन यातयेत्"...इत्यादौ, न तु वक्ष्यमाणे "सोध्येष्ट वेदान्"... इत्यादौ "[1]तदन्वये शुद्धिमति"...इत्यादौ च । तत्र प्रक्रान्तस्य दशरथवैवस्वतादेर्य्यत्पदानुपस्थितस्यापि तत्पदेनोपस्थितिदर्शनात् ।

प्रक्रान्तत्वञ्च पूर्वपदोपस्थापितत्वे सति वक्तृबुद्धिविषयत्वम् । **यच्छब्दजन्येति ।** प्रक्रम्यमाणपरामर्शकयच्छब्दजन्यान्वयबोधरूपेत्यर्थः । स च तत्पदजन्यबोधविषयत्वप्रकारतानिरूपितविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने यत्पदस्य शक्तेस्तादृशज्ञानीयमहानसं तत्पदजन्यबोधविषयतावद्भवत्वित्याकारकतात्पर्य्यजनकतत्पदजन्यबोधीयविषयतावन्महानसं मदिष्टसाधनमित्याकारकवक्तृज्ञानीयविषयतावच्छेदकत्वोपलक्षितमहानसत्वादिप्रकारताको बोध्यः ।

न च तत्पदेन महानसत्वादिप्रकारकोन्वयबोधस्तत्पदघटितवाक्यादेव, तद्वाक्यञ्च यत्पदघटितमेवेत्यतो यत्पदशक्त्यग्रहे तत्पदजन्यशाब्दबोधासम्भवात्तत्पदजन्यप्रतिपत्तिघटितानुगमकधर्म्मज्ञानाभावः, तत्पदयत्पदशक्तिज्ञानयोः परस्परसापेक्षत्वेनान्योन्याश्रयापत्तिश्चेति वाच्यम्, तादृशधर्म्मस्य महानसत्वादेः प्रकरणादित एव ज्ञानस्य सम्भवात् ।

**तदिदमादीति ।** इदंशब्दस्य प्रत्यक्षविषये शक्तावप्ययमागच्छति यस्तत्रावलोकित इत्यत्र यच्छब्देन परामृष्टस्य चैत्रादेरिदमा परामर्शदर्शनान्नासङ्गतिः । अथवा तदादीत्येव पाठः । आदिपदात् यत्पदस्य परिग्रहस्तस्यापि तत्पदपर्य्यायत्वात् । उद्देश्यविधेयभावे नियतलिङ्गकयोरसमानलिङ्गकयोरपि

---

१ "तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥" इति पूर्णः श्लोकः ।

**क्वचित् पूर्ववाक्यरूपप्रक्रमजन्या, यथा—"[1]अभून्नृपो दशरथ इत्युदाहृतः" "[2]सोध्यैष्ट वेदान्" इति। क्वचिद् विद्यमानानुभवात्मक-प्रसिद्धिरूपा, यथा—घटं दृष्ट्वा गोपदं [3]श्रुत्वा वदति इममानय शृणु**

सामानाधिकरण्ये साधुत्वस्यानेकत्र दृष्ट्वा **बुद्धिः परामर्शबीज**मित्यस्य साधुत्वम्।

उक्तबुद्धिविषयपरामर्शकतच्छब्दमुदाहरति—**यथेति**। यच्छब्देनोक्तरीत्या महानसत्वादिप्रकारेणान्वयबोधे तत्प्रकारस्य महानसत्वादेरेव तत्पदजन्यशाब्द-बोधप्रकारत्वमित्यर्थः। **क्वचित्** "सोध्यैष्ट" इत्यादौ "तदन्वये शुद्धिमति" इत्यादौ च। **अभून्नृप** इति। एतच्च दशरथस्य राज्ञः पूर्ववाक्यजन्यज्ञानविषयत्व-लाभायोक्तम्। तथा च **सोध्यैष्टे**त्यत्र तत्पदेन **अभूदि**त्यादिवाक्यजन्यबोध-विषयस्य दशरथस्य परामर्श इत्यर्थः। न च तत्रापि पूर्वश्लोकोत्तरार्द्धे "यं सनातनः" इति यत्पदजन्यबुद्धिविषयपरामर्शकत्वमेव तत्पदस्येति वाच्यम्, तत्रस्थयत्पदस्य अभूदित्यादिना पूर्वार्द्धेन प्रक्रान्तस्य दशरथस्य परामर्शकत्वेन तत्पदानपेक्षितत्वात्, "चैत्रस्समागतो यस्तत्रावलोकितः" इत्यादिवत्। अतएव पूर्वार्द्ध एव प्रक्रमत्वेन दर्शितो न तूत्तरार्द्धसहितस्स, तादृशेनापि तेन सोध्यैष्टेत्यत्र तत्पदस्यान्वयसम्भवादिति।

**क्वचिद्विद्यमानेति**। न च प्राथमिकघटप्रत्यक्षगोशब्दश्रवणोत्तरकाली-नोच्चारणकर्म्मीभूतेदंपदजन्यशाब्दबोधजनकशक्तिज्ञाने घटप्रत्यक्षगोशब्दश्रावण-योरभावात् कुतो विद्यमानानुभवप्रकारेणेदंशब्दस्य घटादिपरामर्शकत्वमिति वाच्यम्, सन्निकर्षादिकारणसमुदायसत्त्वे एकशब्दादपरतज्जातीयशब्दोत्पत्तेश्च चाक्षुषश्रावणयोर्धारायास्सम्भवेन इदंपदशक्तिज्ञानाव्यवहितपूर्वक्षणेपि तयो-स्सत्त्वात्। **इममानयेति**। इदंपदस्य **शृणु** वेत्यत्राप्यनुवृत्तेः प्रत्यक्षविषयघटत्व-

---

१ "अभून्नृपो विबुधसखः परन्तपः श्रुतान्वितो दशरथ इत्युदाहृतः।
गुणैर्वरं भुवनहितच्छलेन य सनातनः पितरमुपागमत् स्वयम्॥"

२ "सोध्यैष्ट वेदास्त्रिदशानयष्ट पितॄनतार्प्सीत् सममंस्त बन्धून्।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं व्यवधीदरींश्च॥" इति पूर्णश्लोकौ।

३ श्रुत्वा वा इत्यधिकः पा० मु० पु०।

वेति । क्वचित् स्मरणरूपा, यथा—ते लोचने क्षिपति[1] स्म इति ।

"गवित्याह"...इत्यादौ तु इतिशब्दपरामर्शबीजमनुभवं सम्पादयितुं प्रयुक्तो गोशब्दो न वृत्तिमानिति न प्रातिपदिकसंज्ञः । १५ ।

[2]इतिशब्दानन्तरन्तु लुप्तापि प्रतिसंहिता ।
द्वितीया कर्म्मतां ब्रूयादितिर्वा वचनान्वयी ॥१६॥

गोपदत्वप्रकारेणोपस्थापकत्वमित्यर्थः । ते लोचने क्षिपति स्मेति । [3]"ते लोचने प्रतिदिशं विधुरे क्षिपन्ती" इतिध्वन्यालोकस्थपदघटकस्यापि तत्पदस्य स्मरणविषयपरामर्शकत्वमूह्यम् ।

एवं सर्वनामपदानामनेकविधबुद्धिप्रकारीभूतधर्म्मपरामर्शकत्वं प्रदर्श्य तत्स्वभावस्येतिशब्दस्यापि प्रकृते तादृशबुद्ध्यन्यतमविद्यमानानुभवविषयीभूत-गोपदपरामर्शकत्वमिति ज्ञापनाय प्रयुक्तस्य गोपदस्य वृत्तिमत्त्वविरहान्न प्रातिपदिकसंज्ञेत्याह—गवित्याहेत्यादिना । १५ ।

नन्वेवमितिशब्दस्य कर्म्मत्वाबोधकतया तद्बोधकपदान्तरविरहाच्च कथमुच्चारणे गोपदकर्म्मत्वस्य लाभ इत्यत आह—इतिशब्दानन्तरन्त्विति । लुप्तापीति । इतिशब्दस्याव्ययत्वे "अव्ययादाप्सुपः" इति सूत्रेण लुप्तापीत्यर्थः । प्रतिसंहिता स्मरणविषयीकृता । कर्म्मतां ब्रूयादिति । कर्म्मताविषयकशाब्दबोधजननसमर्थे-त्यर्थः । ब्रूधातोश्शाब्दबोधार्थकत्वात् । "सम्भावनेलमिति चेत्सिद्धाप्रयोगे" इति सूत्रेण कालसामान्येलमर्थसामर्थ्यप्रकारकसम्भावनाया विहितस्य लिङः सामर्थ्यार्थ-कत्वे पर्य्यवसानात् । अतएव कर्म्मतां ब्रूयादित्यस्य कर्म्मतामभिधातुं प्रभवती-तिविवरणं ग्रन्थकृता कृतम् । तत्र प्रभवतीत्यस्य समर्था भवतीत्यर्थकत्वादिति बोध्यम् । पक्षान्तरमाह—इतिर्वेति । वचनान्वयीति । ब्रूधात्वर्थोच्चारणे

---

१ क्षिपतः इति मु० पु० पा० ।

२ कारिकेयं मुद्रितपुस्तकस्य विवरण एव दृश्यते न तु कारिकापाठे । तत्रापि इतिर्वा... इत्यारभ्य पुनरस्य विवरणस्य—"गोशब्दार्थकेत्यादिप्रभवति पर्य्यन्त" न दृश्यते ।

३ "उत्कम्पिनी भयपरिस्खलितांशुकान्ता ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा धूमान्धितेन दहनेन न वीक्षितासि ॥" इति पूर्णः श्लोकः ।

गोशब्दार्थकेतिशब्दानन्तरं द्वितीया लुप्तप्रतिसंहिता वाच्यर्थान्वितां कर्म्मतामभिधातुं प्रभवति।

अव्ययानां नित्यप्रथमान्तत्वे निर्विभक्तिकत्वे वा इत्यर्थस्य *क्रियाकर्म्मभावसंसर्गेण †साक्षाद्वचनान्वयोपि सम्भवति।

दृष्टो हि—नारद इति पश्यतीत्यत्र निपातोपात्तायाः

कर्म्मत्वसंसर्गेणान्वयीत्यर्थः। अत्रेतिपदस्य सविभक्तिकत्वं "चस्त्वर्थे". इत्यादाविवोपादनीयम्। **लुप्तप्रतिसंहितेति**। दधि पश्येत्यादौ दधिकर्म्मकदर्शनान्वयबोधोपपत्तये द्वितीयाज्ञानस्यैव कर्म्मत्वबोधकताया आवश्यकत्वादत्रापि द्वितीयाविरहेपि तज्ज्ञानमादायैव तादृशान्वयबोध इति भावः।

**इतिर्वेति** पक्षान्तरानुसरणे बीजमाह—**अव्ययानामिति**। "सदृशं त्रिषु लिङ्गेषु"... इत्यादिना "कुत्रापि विभक्तौ तेषां विकारो न भवति" इत्यस्य सिद्धान्तितत्वात् साधुत्वमात्रप्रयोजनिका प्रथमैव तेभ्य उचिता, न तु द्वितीयादयोपीति पक्षे प्रथमाया अनुसन्धानेपि तस्याः कर्म्मत्वार्थकत्वाभावान्न कर्म्मत्वबोधः सम्भवतीति भावः। **निर्विभक्तिकत्वे वेति**। साधुत्वमपि तेषां "भू सत्तायाम्"...इत्यादिघटकनिर्विभक्तिकभूचपदानामिव निर्विभक्तिकत्वेपि स्यादेवेति प्रथमापि तेभ्यो नोपेयेति मते त्वित्यर्थः। **इत्यर्थस्येति**। इतिशब्दार्थस्य गोशब्दस्येत्यर्थः। **क्रियाकर्म्मभावेति**। स्वनिष्ठकर्म्मतानिरूपकत्वसंसर्गेणेत्यर्थः। **साक्षादिति**। विभक्त्यर्थमन्तराकृत्वैवेत्यर्थः।

नामार्थधात्वर्थयोर्भेदसंसर्गेणान्वयस्य व्युत्पत्तिविरुद्धत्वेपि वक्ष्यमाणानेकस्थलेषु तादृशान्वयस्यानुभविकतया निपातातिरिक्तत्वं नास्ति विशेषणमावश्यकमिति प्रकृतेपीतिशब्दस्य निपातत्वादेव तदर्थस्य तादात्म्यातिरिक्तोक्तसंसर्गेण धात्वर्थान्वयो नानुपपन्न इति दर्शयति—**दृष्टो हीत्या**दिना। **नारद इती**ति। अत्रे**ति**पदस्य कर्म्मत्वमर्थस्तत्र नारदपदार्थस्याधेयतया, तस्य च निरूपकतया धात्वर्थेन्वयादुक्तव्युत्पत्तेरवश्यसङ्कोचनीयत्वमित्याशयः।

---

* क्रियायाम् इति मु० पु० पा०।

† साक्षादन्वयोपि इति मु० पु० पा०।

**कर्म्मतायाः कर्म्मणो वा, स्तोकमेव पचतीत्यत्रैवकारेण बोधितस्य स्तोकान्यतादात्म्यव्यवच्छेदस्य, कुटिलं न गच्छतीत्यत्र नञा प्रतिसंहितस्य कुटिलान्योन्याभावस्य च दर्शनपाकगमनेषु धात्वर्थेषु भेदान्वयः। १६।**

**कर्म्मताया** इति दार्शनिकमते। **कर्म्मण** इति शाब्दिकमते, विभक्तीनामाश्रयबोधकत्वस्यैव तैरुपगमात्तत्स्थानीयस्येतिशब्दस्यापि तद्बोधकताया एवौचित्यात्। **स्तोकमेवेति। स्तोकान्यतादात्म्येति।** अन्ययोगव्यवच्छेदस्वरूपैवकारार्थे योगस्य सम्बन्धरूपस्यात्र स्तोकपदार्थस्य तादात्म्येन क्रियान्वयित्वात्तात्पर्य्यवशात्तादात्म्यस्यैव विवक्षणादुक्तार्थलाभो बोध्यः।

न च विशेषणसङ्गतस्यैवकारस्यायोगव्यवच्छेदार्थकत्वाद्विशेषणवाचकस्तोकपदसमभिव्याहृतस्यैवकारस्यान्ययोगव्यवच्छेदार्थकत्वोक्तिरसङ्गतेति वाच्यम्, नवीनमते सर्वेषामेवकाराणामन्ययोगव्यवच्छेदार्थकत्वात्। योगश्च समवायतादात्म्यादिमात्रम्। तेन पार्थ एव धनुर्द्धर इत्यत्र धनुर्द्धरत्वावच्छेदेन पार्थान्यतादात्म्यव्यवच्छेदः। नीलं सरोजं भवत्येवेत्यत्राख्यातस्याश्रये धर्म्मिणि लक्षणया सरोजत्वसामानाधिकरण्येन नीलभवनवदन्यतादात्म्यव्यवच्छेदः। पृथिव्यामेव गन्ध इत्यत्र गन्धत्वावच्छेदेन पृथिव्यन्यसमवेतत्वव्यवच्छेदः। घटत्वाभाववत्येव द्रव्यत्वाभाव इत्यत्र घटत्वाभाववदन्यप्रतियोगिकविशेषणतासम्बन्धव्यवच्छेदः। ऋतौ भार्य्यामुपेयादेवेत्यत्र ऋतुकालीनस्वदारकर्म्मकगमनवदन्यतादात्म्यव्यवच्छेदे प्रत्यवायपरिहाररूपेष्टसाधनत्वं व्युत्पत्तिवैचित्र्येण पृथिव्यादीनां सप्तम्यर्थविशेषणत्वेप्येवकारार्थविशेषणत्वोपगमात्तत्तदाकारत्वेन प्रतीयत इति। **कुटिलान्योन्याभावस्येति।** कुटिलं गच्छतीत्यत्र नञोसमभिव्याहारे तादात्म्येन कुटिलपदार्थस्य गमनक्रियाविशेषणतया बोधात् "प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ" इति न्यायेन तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकस्यैव कुटिलाभावस्य बोधनीयत्वात्तस्य चान्योन्याभावस्वरूपत्वमेवेत्याशयेनेदमुक्तम्। **भेदान्वय** इति। अभेदातिरिक्तैः निरूपकत्वस्वनिष्ठविषयतानिरूपकत्वस्वरूपसम्बन्धैरन्वय इत्यर्थः। एवञ्चोक्तबोधजनकानामुक्तवाक्यानां प्रामाण्योपपत्तये निपाताति-

**ननु तथापि पचति पाकं करोतीत्यादिविवरणे *पदधर्म्मिकः प्रतिपादकतया विव्रियमाणवाक्यार्थान्वयः कथं स्यात् ? पचतिपदस्य पदानुपस्थितत्वात् । पचतीत्यस्य वाक्यतया लक्षणाया अप्ययोगात् ।**

**लकार एव †पदलक्षक इति चेन्न, पच्धात्वर्थस्यानन्वयप्रसङ्गात् ।**

रिक्तस्यैव नाम्नोर्थस्य धात्वर्थेन सहाभेदातिरिक्तसंसर्गेणान्वयो विरुद्धो न तु निपातार्थस्येति प्रकृतेपि नानुपपत्तिरिति भावः । १६ ।

**ननु तथापीति** । उक्तरीत्या "भू सत्तायाम्" "गवित्याह".. इत्यादीनां साधुत्वस्योपपादनेपीत्यर्थः । **वाक्यार्थान्वय** इत्यत्रान्वयपदमन्वयबोधपरं वाक्यार्थस्यान्वयो यत्रेति व्यधिकरणबहुव्रीहेः, अथवा **पदधर्म्मिकः** पदानुयोगिको वाक्यार्थप्रतियोगिकोन्वयः सम्बन्ध इत्येव । **कथं स्यादि**त्यत्र बीजमाह—**पचतिपदस्येति** । पचतीत्यानुपूर्व्यवच्छिन्नस्येत्यर्थः । **पदानुपस्थितत्वादिति** । पच्धातोः तिप्रत्ययस्य वा तत्र वृत्त्यभावेनान्यस्य च तत्राभावादेवोपस्थापकत्वविरहादित्यर्थः । **लक्षणाया अप्ययोगादि**त्यपिना शक्तिविरहस्समुच्चितस्तत्र शक्तिविरहे कोपादिविरहस्यैव बीजत्वाल्लक्षणाबीजे हेतुमाह—**वाक्यतयेति** । दार्शनिकमते परस्परसाकाङ्क्षानेकपदस्यैव वाक्यतया पच्पदतिपदयोस्तथात्वं बोध्यम् । शक्यसम्बन्धरूपाया लक्षणाया वाक्ये शक्तिविरहेणासम्भवादित्यर्थः ।

ननु पचतीतिसमुदाये शक्त्यभावे लक्षणा मास्तु, तद्घटकलकारस्य कर्त्तृत्वशक्ततया तस्यैव पचतीतिपदस्वरूपे लक्षणा निराबाधा स्यादित्याशङ्क्य निराकरोति—**लकार एवे**त्यादिना । **लकारः** तिपदेन स्मृत इत्यर्थः । तेनात्र लकारस्याश्रवणेपि नासङ्गतिः । निराकरोति **नेति** । **अनन्वयप्रसङ्गादिति** । पच्धात्वर्थस्य पाकस्य शब्दस्वरूपेन्वयस्यायोग्यत्वादित्याशयः । धातोस्तत्र लकारे पचतिपदस्वरूपलाक्षणिकत्वतात्पर्य्यमात्रप्रयोजनकत्वमित्यपि निराकर्त्तु-

---

* पचतिपदधर्म्मिकः इति मु० पु० पा० ।

† पचतिपदलक्षकः इति मु० पु० पा० ।

पचेस्तात्पर्य्यमात्रग्राहकत्वे प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिभङ्गप्रसङ्गात् ।

पच्धातुः पचतिलक्षको भावतिङिव साधुत्वप्रयोजनक इति चेन्न; निरर्थकतिङामात्मनेपदत्वयक्समभिव्याहृतत्वादिनियमभङ्गापत्तेरिति ।

मैवम्, विव्रियमाणवाक्याख्यातस्य प्रतिपाद्यत्वलाक्षणिकत्वात् । तथाहि—

**पचतीतिपदं ब्रूते पचिर्लड् विषयत्ववाक् ।**
**पच्यर्थेनान्वितो लार्थो व्याख्यावाक्यार्थमन्वितः ॥१७॥**

माह-**पचेस्तत्रेति** । तात्पर्य्यमात्रग्राहकत्वञ्च स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वातिरिक्तप्रयोजनवत्त्वाभावः । **व्युत्पत्तिभङ्गप्रसङ्गादिति** । लकारप्रकृतेः पच्पदस्यार्थाभावेन तदन्वितस्वार्थबोधकत्वं कुतो लकारस्य सम्भावितमपीत्याशयः ।

उक्तप्रसङ्गभयेन पच्धातोरेव तादृशानुपूर्व्यवच्छिन्ने लक्षणा, भावाख्यातवत् तिपदस्य निरर्थकत्वमेवेत्यपि न सम्भवतीत्याह—**पच्धातुरिति** । भावाख्यातस्यात्मनेपदत्वं "भावकर्म्मणोः" इति सूत्रेण विहितम्, तस्मिन् परे धातोः परो यक्प्रत्ययश्च "सार्वधातुके यक्" इत्यनेन विहितः । प्रकृते तिङो निरर्थकत्वे भाववत्तयोः प्रसङ्गान्न तस्य निरर्थकत्वोपगमः सम्भवतीत्याशयेनाह—**निरर्थकेति** । इदन्तु चिन्त्यम् । उक्तसूत्राभ्यां धात्वर्थस्वरूपे भावे वाच्ये तदतिरिक्तकर्तृत्वादौ चावाच्ये आत्मनेपदत्वं यक्प्रत्ययश्च विधीयेते । प्रकृते पच्धातोर्भाववाचकत्वाभावात् कथं तयोः प्रवृत्तिरिति ।

एवं पचति पाकं करोतीत्यादिविव्रियमाणविवरणवाक्ययोरन्वयासम्भवं प्रदर्श्य स्वमतेन तयोरन्वयं सिद्धान्तयति-**मैवमित्यादिना** । **प्रतिपाद्यत्वलाक्षणिकत्वादिति । कथमन्वयः स्यादित्येवं मा** वदेत्यत्र पञ्चम्यर्थस्यान्वयो बोध्यः । **तथाहीति** । प्रतिपाद्यत्वलाक्षणिकत्वमेव दर्शयामीत्यर्थः । **पचतीतिपदमित्यादि** । धातुनिर्द्देशे इक्प्रत्ययात् **पचिरि**त्यस्य पच्धातुरित्यर्थः । **पचतीतिपदं** पचतीत्यानुपूर्व्यवच्छिन्नम् । **ब्रूते** लक्षणया बोधयति । **लट्** तिपा स्मारितो लकारो **विषयत्ववाक्** वक्तीति वाक्, "क्विब्वचिप्रच्छिश्रि"... इत्याद्युणादि-

**सप्तम्यन्तोद्भवपदार्थकोद्भवपदात् परा ।**
**सप्तमी बोध्यतामाह व्याख्यावाक्यव्यपेक्षया ॥१८॥**

**पचति पाकं करोतीत्यत्र पचेः, पचतीतिपदे *लटो बोध्यत्वे लक्षणा। तद्वाक्यार्थः पचतिपदबोध्यत्वं पाकं करोतीतिविवरणवाक्यार्थे**

सूत्रेण प्राप्तस्य क्विपस्ताच्छील्याद्यर्थे तृना बाधो मा भूदित्येतदर्थं कृतेन "क्विब्वचि".. इत्यादिवार्त्तिकेन वच्धातोः कर्त्तरि क्विपि "वचिस्वपियजादीनाम्"...इत्यादिसूत्रप्राप्तसम्प्रसारणनिषेधाद्दीर्घविधानाच्च **वागिति** रूपम् । विषयत्वस्य वाग् विषयत्ववाक् । विषयत्वपदं पूर्वापरविवरणग्रन्थैकवाक्यत्वानुरोधेनान्वयबोधविषयत्वे लाक्षणिकम्। **पच्यर्थेन** पच्धातोर्लक्षणया पचतीतिशब्दस्वरूपेणार्थेन । **अन्वित** जन्यत्वसम्बन्धेन स्वबोध्यैकदेशे बोधे सम्बद्धः । **लार्थः** बोधविषयतारूपो लकारार्थः । **व्याख्यावाक्यार्थे** व्याख्यावाक्यस्य पाकं करोतीत्यस्यार्थे पाककर्त्तृत्वरूपम्। **अन्वितः** प्राप्तः, तादृशवाक्यार्थेन सह सम्बद्ध इत्यर्थः। पूर्वत्रानुपूर्वकेण्धातोः कर्म्मणि निष्ठाप्रत्ययात् कर्त्तुरनभिहितत्वात् **पच्यर्थेने**ति तृतीया। उत्तरत्र तु साहित्यरूपतृतीयार्थस्य वाचकेन द्योतकेन वा अनुनायोगे "तृतीयार्थे" इति सूत्रेण "नदीमन्ववसिता सेना" इत्यादिवत् कर्म्मप्रवचनीयसंज्ञायां द्वितीयेति बोध्यम्।

अत्रैव प्रसङ्गात् सप्तम्यन्तविव्रियमाणवाक्यस्य विवरणवाक्येन्वयप्रकारं दर्शयति—**सप्तम्यन्तोद्भवेति**। सप्तम्यन्तमुद्भवपदमर्थो लक्षणया बोध्यो यस्य तादृशोद्भवपदात् **परा सप्तमी बोध्यतां** बोधविषयताम्, **आह** लक्षणया बोधयति। तस्यास्तादृशार्थबोधकत्वे हेतुमाह—**व्याख्यावाक्यव्यपेक्षयेति**। विवरणवाक्यैकवाक्यतयेति तदर्थः।

तत्र प्रथमकारिकां विवृणोति—**पचतीत्यादिना** । **अन्वितमिति** । स्वरूपसंसर्गेणेत्यादिः। अस्य च **गमयितुमि**त्यनेनान्वितस्य **प्रभवती**त्यत्रान्वयो

---

* लक्षणा लटस्तु इति मु० पु० पा० ।

पाककर्त्तृत्वेन्वितं प्रभवत्यर्थाद् व्याख्यानव्याख्येययोरेकार्थत्वं गमयितुम् । १७ ।

एवं "तस्य काव्यस्योद्भवे निर्म्माणे समुल्लासे च हेतुः" इत्यत्रोद्भवपदं सप्तम्यन्तोद्भवपदे सप्तमी च प्रतिपाद्यन्वे लाक्षणिकी, तद्वाक्यार्थो "निर्म्माणे समुल्लासे च" इतिव्याख्यावाक्यार्थे निर्म्माणप्रतियोगिकत्वसमुल्लासप्रतियोगिकत्वाद्यन्वेति । वाक्यैकवाक्यतया पदार्थयोरन्वये विलक्षणव्युत्पत्तिस्वीकारेण विभक्त्यर्थयोरपि परस्परमन्वयो न विरुद्धः ।

बोध्यः । **व्याख्यानव्याख्येययोः** पाकं करोति पचतीत्याकारयोः । **अर्थात्** तादृशान्वयबोधानन्तरमर्थविशेषस्य ज्ञानात् । स चार्थः पचतिपदप्रतिपाद्यत्ववत्पाककर्त्तृत्वम् । तेन प्रतिपादकत्वसंसर्गेण हेतुना **गमयितुम्** अनुमापयितुं **प्रभवति** समर्थं भवति । अनुमानाकारश्च पचतीतिवाक्यं पाकं करोतीतिवाक्यसमानार्थकं स्वप्रतिपाद्यपाककर्त्तृत्वप्रतिपादकत्वादिति बोध्यः । १७ ।

द्वितीयकारिकां विवृणोति—**एवमित्यादिना** । **तस्ये**त्यादि**हेतु**रित्यन्तः काव्यप्रकाशस्थ-"शक्तिर्निपुणता". इत्यादिकारिकाघटकस्य "तदुद्भवे" इत्यस्य विवरणपरो वृत्तिग्रन्थः । **तद्वाक्यार्थः** "उद्भवे" इति वाक्यार्थः सप्तम्यन्तोद्भवपदप्रतिपाद्यत्वम् । **निर्म्माणप्रतियोगिकत्वे**ति । निर्म्माणादिपदोत्तरसप्तम्यो-र्निरूपितत्वार्थकतया निर्म्माणादिनिरूपितत्वे इत्यर्थः ।

**अतएव यजेतेत्यत्राख्यातार्थे भावनायां "तरति मृत्युम्"... इत्याद्यर्थवादिकाख्यातेन लक्षणयान्यथा वोपस्थापितं प्राशस्त्यं सर्वश्च सुबर्थकारकमन्वेतीति मीमांसका ।**

वाक्यैकवाक्यस्थलेन्यत्रापि विभक्त्यर्थयोरन्वयो मीमांसकादीनां सम्मत एवेत्याह—**अतएवेति** । उक्तरीत्या विभक्त्यर्थयोरन्वयस्य व्युत्पत्तिसिद्धत्वादेवेत्यर्थः । **आख्यातार्थे भावनायामिति** । लिङ्त्वावच्छिन्ननिरूपितशक्तिज्ञानादुपस्थिताया शब्दभावनायामित्यर्थः । **आर्थवादिकाख्यातेनेति** । "तरति ब्रह्महत्याम्" ..इत्यादिप्रशंसापरवाक्यघटकतिबादिनेत्यर्थः । **लक्षणयेति** । प्राशस्त्यरूपेर्थेनुशासनाभावात्तत्र लिङश्शक्तेरभावेन शक्यार्थभावनासम्बन्धेनेत्यर्थः । **अन्यथा वेति** । लिङ्पदाच्छब्दभावनोपस्थितौ सत्यामस्या भावनायाः किम्भाव्यम् ? किङ्करणम् ? केतिकर्त्तव्यता ? इत्याकारकजिज्ञासोदयात्तन्निवृत्त्यर्थं "तरति मृत्युम्"...इत्याद्यर्थवादानुसन्धानेनेत्यर्थः । **प्राशस्त्यं** स्तुतिः । **सर्वश्च सुबर्थकारकमिति** । तैराख्यातार्थमुख्यविशेष्यकस्यैव शाब्दबोधस्योपगमात् तत्रैव "स्वर्गकामोश्वमेधेन"...इत्यादिप्रथमादिकारकार्थनियोज्यत्वादीनामन्वयस्य व्यवस्थापितत्वादित्याशयः । **अन्वेति** स्तुतिस्सहकारितासम्बन्धेन सुबर्थश्च यथायथं स्वरूपादिसम्बन्धेनान्वेतीति बोध्यम् ।

**मीमांसका** इति । अयम्भावः—भट्टानुयायिमीमांसकानाम्मते अभिधैव विध्यर्थः । तथाहि—प्रवृत्तिर्द्विविधा, स्वेच्छाधीना परप्रयोज्या च । तत्राद्यायां स्वेष्टसाधनताज्ञानं द्वितीयायाञ्च परनिष्ठप्रवर्त्तनाज्ञानं हेतुः । पितृशिरश्छेदादिकं स्वयमनिच्छतोपि पुत्रादे राजाज्ञादितस्तत्र प्रवृत्तिदर्शनेन राजा मा प्रवर्त्तयतीत्याद्याकारकप्रवर्त्तनाज्ञानस्यान्वयव्यतिरेकाभ्यां तादृशप्रवृत्तौ कारणत्वोपगमस्यावश्यकत्वात् । प्रवर्त्तनात्वञ्चात्र प्रवृत्तिजनकत्वमतिरिक्तं वेत्यन्यदेतत् । एवञ्च यजेतेत्यादिविधिप्रयोज्ययागादिगोचरप्रवृत्तेरपि विधिस्वरूपपरप्रयोज्यतया विधिनिष्ठप्रवर्त्तनाज्ञानस्य हेतुत्वं तत्रावश्यकम् । तच्चाभिधाया लिङ्निष्ठत्वलिङर्थत्वाभ्यां विना न सम्भवतीति तस्यास्तदुभयमावश्यकम् । आज्ञादिरूपायाश्चेतन-

निष्ठायाः प्रवर्त्तनाया अचेतने लिङ्यसम्भवात्। इयमेवाभिधा शब्दभावनापद-वाच्या। भावनायाश्शब्दार्थसम्बन्धिद्वयभेदेन द्वैविध्यात्। तयोश्च प्रत्येकं कर्म्मकरणेतिकर्त्तव्यतैतत्त्रितयाकाङ्क्षोत्थापकत्वरूपांशत्रयवत्त्वम्। न च तादृश-भावनाज्ञानोत्तरं तादृशाकाङ्क्षोदये मानाभावः, तदानीं यागादिगोचरार्थभावना-विशेष्यकस्वर्गादिफलवत्त्वप्रकारकबोधस्यानुभविकस्यान्यथानुपपत्तेरेव मान-त्वात्। न च तादृशफलवत्त्वबोधात्फलाकाङ्क्षासिद्धावपि करणाद्याकाङ्क्षासिद्धै-वेति वाच्यम्, फलरूपकर्म्माकाङ्क्षायाः करणाकाङ्क्षानियतत्वेन करणाकाङ्क्षा-याश्चेतिकर्त्तव्यताकाङ्क्षानियतत्वेन तदुभयस्यापि सिद्धेः। अतएव विधिवादालोके "अन्यथा स्वर्गादिफलं न भावयेत् तस्यैतत्त्रितयाधीनत्वात्" इत्युक्तम्मिश्रैः। न च लिङोभिधाया एव वाच्यत्वे कथमर्थभावनाबोध इति वाच्यम्, आख्या-तसामान्यशक्त्या फलानुकूलव्यापाररूपार्थभावनोपस्थितेस्तत्सम्भवात्। तदुक्तं भट्टपादैः—

"अभिधाभावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः॥" इति।

अस्यार्थः—अभिधीयत इत्यभिधा शब्दस्तन्निष्ठा भावनाभिधाभावना, तामर्थभावनातो भिन्नां लिङादयः लिङ्लोट्लेट्तव्यदादयः। आहुः स्वनिष्ठलिङ्-त्वावच्छिन्नशक्त्योपस्थापयन्ति। अर्थात्मभावनेति। अर्थो धात्वर्थो यागादिरर्थि-त्वादात्मावार्थस्तस्यात्मा। अत्रात्मत्वं जनकत्वरूपं विषयित्वं प्रवृत्तित्वं वा। तथा च जनकत्वरूपविषयतावती प्रवृत्तिर्वा शब्दभावनातो भिन्ना। सर्वाख्यातस्य गोचर आख्यातत्वावच्छिन्नशक्तिनिरूपिकेत्यर्थः।

न चैतावतोक्ताकाङ्क्षात्रयसहकारेणार्थभावना शब्दभावना च कर्म्मकरणेति-कर्त्तव्यतैतत्त्रितयान्विता लिङ्पदेन बोध्यत इत्युक्तं भवति। तच्चासङ्गतम्, तयोर्भावनयोः कर्म्मादीनां विशिष्यापरिचयादिति वाच्यम्, अर्थभावनायाः स्वर्गादिफलं कर्म्म यागादिकं करणं सहकारी प्रयाजादिरितिकर्त्तव्यतेत्यस्य पूर्वं ज्ञातत्वात्। शब्दभावनाया लिङ्पदादुपस्थितौ सत्यामस्याः किं भाव्यम्? किं करणम्? केतिकर्त्तव्यता? इतिजिज्ञासारूपाकाङ्क्षाया उदये यागादि-

प्रवृत्तिर्भाव्या फलं कर्म्म लिङ्शब्दनिरूपितशक्तिज्ञानं करणम्, "तरति ब्रह्महत्याम्" "तरति मृत्युम्" "वायुर्वै क्षेपिष्ठा देवता" "वायुमेव स्वेन भागेनोपधावति" "स एवैनं भूतिं गमयति"...इत्यादिस्स्तुत्यर्थवादस्सहकार्य्येवेतिकर्त्तव्यतेतिज्ञानात् तेषां परिचयाभावविरहात्। तदुक्तं भट्टपादैः—

"लिङोऽभिधा सैव च शब्दभावना।
भाव्या च तस्याः पुरुषप्रवृत्तिः॥
सम्बन्धबोधः करणन्तदीयम्।
प्ररोचना चाङ्गतयोपयुज्यते॥" इति।

अत्र लिङोऽभिधेत्यस्य लिङ्वृत्तिरभिधा वृत्तिश्च स्वरूपेण समवायस्य तैरनुपगमात्। शब्दभावनेत्यस्य शब्दनिष्ठा भावना। भाव्या फलम्। सम्बन्धबोधः शक्तिज्ञानम्। तदीयं भावनासम्बन्धि। प्ररोचना स्तुत्यर्थवादः। अङ्गतया सहकारितयेत्यर्थो बोध्यः। तदयं भट्टमतनिष्कर्षः। "स्वर्गकामो यजेत"... इत्यादौ लिङोक्तप्रकारेणाख्यातसामान्यशक्यार्थभावनोपस्थितौ कर्म्मादिजिज्ञासा जायते। ततः स्वर्गकर्म्मिका यागकरणिका प्रयाजादीतिकर्त्तव्यताका स्वर्गकामकर्त्तृका भावनेत्याकारकाख्यातार्थभावनाविशेष्यकबोधपर्य्यवसायी स्वर्गकामः प्रयाजादिसहकृतेन यागेन स्वर्गं भावयेदित्याकारको बोधः। अत्र यागकरणत्वञ्च यागनिष्ठकरणतानिरूपकत्वम्, किन्तु यागनिष्ठविषयतानिरूपकत्वं पारिभाषिकमेव तत्। विषयत्वञ्च जन्यत्वम्, यद्वा यागजन्यफलप्रयोजकत्वं तत्। वस्तुतस्तु स्वर्गोत्पत्त्यनुकूलव्यापारसमूह एवात्र स्वर्गकर्म्मिकार्थभावना। तत्र यागकरणकत्वं यागघटितत्वं कर्म्मत्वकरणत्वादेरतिरिक्ताखण्डोपाधिरूपतायास्तन्मतसिद्धतया तन्निरूपकत्वं वा। तच्चात्र संसर्गमर्य्यादयैव भासते तदुपस्थापकपदाभावेन प्रकारतया भानासम्भवात्। तादृशपदकल्पने च गौरवात्।

न चात्र प्रयाजादेः कथं शाब्दबोधे सहकृतत्वरूपेतिकर्त्तव्यताकत्वसम्बन्धेन भानम्? तद्बोधकपदाभावादिति वाच्यम्, दर्शितसहकार्य्याकाङ्क्षायाः प्रकारान्तरेणानिवृत्तेः प्रयाजादिपदाध्याहारेणैव तादृशबोधोपपादनात्। एवं व्युत्पत्ति-

**चैत्रः पचति पाककृतिजन्यचेष्टाश्रयत्वादिति न्याये हेतुपञ्चम्यर्थ आख्यातार्थेन्वेतीति नैयायिकाः। १८।**

वैचित्र्येण कामनाविशेषणत्वेनोपस्थितस्यापि स्वर्गरूपफलस्य जनकतासम्बन्धेनात्र यागेन्वयो बोध्यः। एवमुक्तरीत्यैव शब्दभावनाया उपस्थितौ किम्भाव्यमित्याद्युक्तजिज्ञासायां पुरुषप्रवृत्तिकर्म्मिका लिङ्शक्तिग्रहकरणिका स्तुत्यर्थवादेतिकर्त्तव्यताका विधिनिष्ठा शब्दभावनेत्याकारकशब्दभावनाविशेष्यकबोधपर्य्यवसायी विधिस्तुत्यर्थवादसहकृतेन लिङ्शक्तिग्रहेण पुरुषप्रवृत्तिं भावयेदित्याकारको बोधः। अत्र विधिवाक्ये यादृशार्थबोधकपदन्न श्रूयते तत्कल्पनयैव शाब्दबोध उपपादनीयः। ततः स्वर्गफलिका यागकरणिका प्रयाजादीतिकर्त्तव्यताका स्वर्गकामकर्त्तृकार्थभावना पुरुषप्रवृत्तिकर्म्मकलिङ्पदनिरूपितशक्तिग्रहकरणकस्तुत्यर्थवादेतिकर्त्तव्यताकविधिनिष्ठशब्दभावनात्मकप्रवर्त्तनाविषय इति महावाक्यार्थबोधः प्रवर्त्तको जायते, "विध्युपरक्ता भावना लिङर्थः" इति तत्सिद्धान्तात्। विधिः प्रवर्त्तना। उपरक्ता तद्विशिष्टा। अर्थभावना लिङ्पदप्रतिपाद्येति तदर्थः। न च तादृशसिद्धान्तो निर्य्युक्तिकः, पितृशिरच्छेदं कुर्वित्यादिराजाज्ञादिस्थले तदाज्ञाविषयः पितृशिरश्छेदानुकूलो व्यापार इत्याकारकस्यार्थभावनाविशेष्यकप्रवर्त्तनाप्रकारकबोधस्य प्रवर्त्तकत्वेन क्लृप्ततया तदनुसारेण तादृशसिद्धान्तस्यावश्यकत्वात्। अधिकं द्वितीयार्थविचारे वक्ष्यते।

न केवलं मीमांसकानामेव विभक्त्यर्थे तस्यान्वयाभ्युपगमः किन्तु नैयायिकानामपीत्याह—**चैत्रः पचती**त्यादिना। **न्याये** पञ्चावयवात्मके वाक्ये। **हेतुपञ्चम्यर्थः** "विभाषा गुणेऽस्त्रियाम्" इत्यत्र विभाषेतियोगविभागानुशिष्टपञ्चम्या ज्ञानज्ञाप्यत्वं ज्ञाप्यत्वं वा हेतुत्वरूपोऽर्थ इत्यर्थः। तत्र ज्ञानकरणतापक्षे द्वितीयः, ज्ञायमानकरणतापक्षे प्रथम इति बोध्यम्। **आख्यातार्थे** पचतीत्याख्यातान्तार्थपाकानुकूलकृतावित्यर्थः। **अन्वेति** स्वरूपसम्बन्धेनेति शेषः। तथा च तत्र सुब्विभक्त्यर्थस्य तिङ्विभक्त्यर्थेन्वयो नैयायिकादिसम्मत एवेति प्रकृतेपि न तदन्वयो व्युत्पत्तिविरुद्ध इत्याशयः। १८।

**इतिसंवलितं यत्र व्याख्येयस्य वपुः स्थितम् ।**
**तत्र श्रोत्रोपस्थितं तदितिना परिमृश्यते ॥१९॥**

यत्र पचतीति पाकं करोतीत्यर्थ एवं व्याख्यानग्रन्थः, तत्रेतिद्वयं श्रोत्रोपस्थितस्य पचतिपदस्य पाकं करोतीतिवाक्यस्य च परामर्शकम् । तदर्थस्तु प्रतिपाद्यप्रतिपादकभावसंसर्गेणार्थपदार्थे-न्वेतीत्यर्थाद् व्याख्यानव्याख्येययोरेकार्थकत्वं लभ्यते । १९ ।

नन्वेवमपि विवरणेन [1]शक्तिग्रह इति कथमुपपद्यतामिति चेत् ? इत्थम्—

**पचतेः पाककर्तृत्वबोधकत्वे व्यवस्थिते ।**
**सुग्रहा पचिना पाकलाभात् कृत्यर्थता तिङः ॥२०॥**

व्याख्येयव्याख्यानग्रन्थयोरितिपदघटितत्वे उक्तरीत्या शाब्दबोधासम्भवात् तत्रान्यप्रकारमाह—**इतिसंवलित**मित्यादिना । **संवलितं** समभिव्याहृतम् । **व्याख्येयस्येत्यादि** । पचतीत्यादिवाक्यस्य । **वपु**रानुपूर्वी । **श्रोत्रोपस्थितं** श्रावणप्रत्यक्षविषयीभूतं **तत्** पचतीतिवाक्यम् । **परिमृश्यते** उपस्थितिविषयी-क्रियते । **तदर्थः** इतिपदद्वयस्य पचति पाकं करोतीतिशब्दस्वरूपोर्थः । १९ ।

उक्तरीत्या व्याख्येयव्याख्यानवाक्ययोरेकार्थकत्वस्य लाभेपि तिङः कर्तृत्वे शक्तिर्विवरणेन कथं ग्रहीतव्येत्याशङ्क्यानुमानेनेति समाधत्ते—**नन्वेवमपी**-त्यादिना **व्युत्पादयिष्यत** इत्यन्तेन । **विवरणेन** पाकं करोतीतिवाक्येन । **शक्तिग्रहः** तिपदस्य कर्तृत्वे शक्तिज्ञानम् । **कथमुपपद्यतामिति** । पच्पदस्य कृतिस्तिपदस्य पाकस्तद्विपरीतो वेति निश्चयस्य पचतीत्यादिनैकार्थकत्वस्य तत्र लाभेप्यसम्भव इति शङ्कितुरभिप्रायः । उत्तरयति—**इत्थमिति** । वक्ष्य-माणप्रकारेणेत्यर्थः । **व्यवस्थिते** उक्तरीत्या तयोरेकार्थकत्वज्ञाने, पाकं करोतीति-वाक्यबोध्यपाककर्तृत्वबोधकत्वस्य पचतीतिपदे ज्ञाने जात इत्यर्थः । **पचिना** पच्धातुना । **पाकलाभात्** "डुपचष् पाके" इतिव्याकरणेन पच्धातोः पाका-र्थकत्वनिश्चयात् । **तिङः कृत्यर्थता सुग्रहे** इत्यन्वयः । **पचिना पाकलाभादि-**

१ पदसङ्केतग्रहः । इति मु० पु० पा० ।

विवरणेन पाककर्तृत्वबोधकत्वे पचतिपदस्य प्रमापिते तिङ्कर्तृत्वबोधिका पाकार्थकपचिभिन्नत्वे सति पाककर्तृत्वबोधकपचतिपदान्तर्गतसाधुपदत्वादित्यनुमानेनावापोद्वापाभ्यां तिङः शक्तिर्ग्राह्येति व्युत्पादयिष्यते। २०।

**एवं व्याकरणात् कोषादुपमानाच्च वस्तुनि।**
**गृह्यते पदसङ्केतः पदे वा वस्तुवाचिता ॥२१॥**
**व्यवहारे विवरणे प्रसिद्धपदसन्निधौ।**
**वाक्यशेषे चानुमानद्वारा तदुभयग्रहः ॥२२॥**
**तद्ग्रहाहितसंस्कारसचिवा तु पदश्रुतिः।**
**स्मारयत्यर्थमेषैव स्मृतिरर्थानुभाविका ॥२३॥**

"कर्त्तरि कृत्" "शेषे षष्ठी"...इत्यादिव्याकरणेन "शीतं गुणे-

त्यन्तं तिङः पाकबोधकत्वाभावज्ञापनद्वारा हेतुज्ञानसम्पत्यर्थमेव बोध्यम्।

**प्रमापित** इत्यन्तमपि हेतुज्ञानसम्पादनार्थम्। अन्यथा तद्विशेषणतावच्छेदकपाककर्त्तृत्वबोधकत्वाज्ञाने तज्ज्ञानस्यासम्भवात्। **आवापोद्वापाभ्या**मन्वयव्यतिरेकाभ्यां तिपदसत्त्वे कृतिबोधस्य तिपदाभावे तद्बोधाभावस्य गच्छति त्यजति गमनं त्याग इत्यादौ दर्शनाद् "यद्यदर्थकपदभिन्नत्वे सति यदन्वितस्य यस्यार्थस्य बोधजनकयत्पदान्तर्गतसाधुपदम्, तत्तदर्थस्य बोधकम्" इति सामान्यतो व्याप्तिज्ञानादित्याशयः। २०।

व्याकरणादीनामप्यनयैव रीत्या शक्तिग्राहकत्वमित्याह--**एवमि**त्यादिकारिकात्रयेण। **पदे वेति**। शक्तिज्ञानस्य द्विविधस्यैवान्वयबोधप्रयोजकत्वमिति विवरणे दर्शयिष्यति। **तद्ग्रहाहितेति**। तादृशशक्तिज्ञानजन्यसंस्कारसहकृतेत्यर्थः। **एषैवे**त्येवकारव्यवच्छेद्यं विवरणे दर्शयिष्यति।

कुत्रार्थविशेष्यकं पदनिरूपितवाच्यताज्ञानं कुत्र च पदविशेष्यकमर्थवाचकताज्ञानमित्याकाङ्क्षायामाह—**कर्त्तरि कृदित्य**यादि। अत्र कारिकायां पूर्वं

---

१ कृतौ शक्तिः इति मु० पु० पा०। २ ०भविकी इति मु० पु० पा०।

तद्वदर्थाः सुषीमः शिशिरो जडः"...इत्यादिकोषेन पदे वस्तुवाचकता, अतिदेशवाक्यार्थस्मरणसहकृतसादृश्यविशिष्टपिण्डप्रत्यक्षेण वस्तुनि पदवाच्यता, व्यवहारस्थलीयानुमानेन पुनरनियमेन क्वचिद्वस्तुनि पदवाच्यता, क्वचित्पदे वस्तुवाचकता च गृह्यते । २१,२२ ।

[2]तादृशग्रहाहितसंस्कारस्तु पदज्ञानमुद्बोधकमासाद्य वस्तु स्मारयति । [3]तस्यास्तु स्मृतेर्गोपदज्ञानत्वविशिष्टजन्यत्वे सति गौर्गोपद-

वाच्यताज्ञानस्यैवोक्तत्वाच्छाब्दक्रमेण तस्यैव विरणमपि पूर्वमुचितं यद्यपि, तथापि व्याकरणस्य तत्र पूर्वमुपादानात्तेन च कर्त्तरीत्यादौ सप्तम्या वाचकत्वार्थकतया तदेवादौ विवृतमिति बोध्यम् । **कर्त्तरी**त्यादिसप्तम्या वाचकत्वार्थकतयार्थविशेष्यकस्य शक्तिज्ञानस्य तत्रासम्भवात् । एवमतिदेशवाक्यार्थबोधस्य गवयाद्यर्थनिरूपितसादृश्यविशिष्टधर्म्मिकतया शक्तिज्ञानमपि तत्रार्थविशेष्यक एवेति । **व्यवहारस्थलीयानुमानेनेति ।** गामानयेतिप्रयोजकवृद्धवाक्यात् प्रयोज्यवृद्धव्यवहारदर्शनेनोक्तरीत्यावापोद्वापाभ्यां गोपदं गोत्वविशिष्टवाचकं गौर्वा गोपदवाच्येत्युभयविधस्यैव शक्तिज्ञानस्य बालकादीनामुदयः । तत्र व्याप्तिज्ञानस्यैवानुमितौ विधेयत्वादिनियामकतया व्याप्तिज्ञाने च तत्र तत्तत्साध्यकत्वादिमात्रनियामकस्य कस्यचिदभावाद् यद्यत्साध्यकयत्पक्षकयद्धेतुकं व्याप्तिज्ञानं यस्य तस्य तत्साध्यकत्वादिविशिष्टानुमितिरित्याशयः । २१, २२ ।

तृतीयकारिकार्थमाह—**तादृशेत्यादिना । तादृशः** पदविशेष्यकोऽर्थविशेष्यको वा । अनुद्बुद्धसंस्कारात्स्मरणानुदयादाह—**पदज्ञानमिति । आसाद्य** प्राप्य । प्राप्तिश्च उद्बोधकत्वेन क्लृप्तपदज्ञानादिनैककालावच्छिन्नैकात्मवृत्तित्वरूपं सामानाधिकरण्यम् । तादृशस्मरणस्य शाब्दबोधजनकतावच्छेदकं जन्यतावच्छेदकञ्च रूपमाह—**तस्यास्त्वित्या**दिना । **तस्या** उक्तस्मृतेः । **जन्यत्वे सतीति । जन्यत्व** इति सप्तमी "यस्य च भावेन भावलक्षणम्" इतिसूत्रविहितेत्यावेदयितुं **सती**त्युक्तम् । तत्र सूत्रे "भावलक्षणम्" इत्यस्य भावस्य स्वभावस्य

---

१ च पदे इति मु० पु० पा० ।

२ तादृगग्रहणाहितसंस्कारस्तु इति मु० पु० पा० ।

३ तस्याश्च इति मु० पु० पा० ।

**शक्येति संस्कारत्वावच्छिन्नकारणतानिरूपितकार्य्यताधिकरणगोस्मरणत्वेन [1]गोशाब्दबुद्धौ जनकत्वम् । तेन [2]सम्बन्ध्यन्तरज्ञानेन गोपदज्ञानेनैव**

लक्षणं विशिष्टतया ज्ञापनमित्यर्थः । तथा च यस्य भावेन स्वभावेन स्वरूपेण स्वरूपान्तरस्य विशिष्टतया ज्ञापनं ततः सप्तमीतितत्सूत्रार्थः । तथाविधजन्यत्वसामानाधिकरण्येन विशेषणेन गोस्मरणत्वस्य स्मरणस्वभावस्य विशिष्टतया ज्ञापनात् । **सती**ति शत्रन्तासूधात्वर्थस्य वर्त्तमानकालवृत्तिसत्ताविशिष्टस्य तादात्म्येन तादृशजन्यत्वेन्वयात् प्रथमसप्तम्या अधिकरणवृत्तित्वमेवार्थस्तच्च गोस्मरणत्वेन्वेति । उक्ततादात्म्यान्वयबलात्तादृशजन्यत्वे कालवृत्तित्वस्यार्थत एव लाभात् "गोषु दुह्यमानासु गतः"...इत्यादौ तत्तत्कालवृत्तित्वस्य सप्तम्यर्थत्वेपि नात्र तस्य तथात्वम् । अधिकरणवृत्तित्वस्य सप्तम्यर्थत्वलाभायैव **सती**त्यस्योपादानम् । अतएव "गुणाद्यन्यत्वे सति सत्त्वात्".. इत्यादौ सतीति-शत्रन्तार्थस्य न हेतुतावच्छेदकेनुप्रवेशः, सामानाधिकरण्येन गुणाद्यन्यत्वविशिष्ट-सत्तात्वादेरेव तथात्वमिति प्रामाणिकाः । तथा च तादृशजन्यत्वाधिकरणवृत्ति-तादृशगोस्मरणत्वं गोत्वप्रकारकशाब्दबुद्धित्वावच्छिन्ननिरूपितजनकतावच्छेदकं सम्बन्धस्तु समवाय एव कार्य्यत्वकारणत्वयोरवच्छेदक इत्यर्थः । **गौर्गोपदशक्येतीति** । सामानाधिकरण्येन तादृशशक्यत्वविषयतानिरूपितविषयतानिरूपकत्व-विशिष्टेत्यर्थः । तच्च शक्यत्वसंसर्गकसंस्कारसाधारणं संस्कारत्वे विशेषणम् । तेन **इति**पदोपस्थापितस्य तादृशाकारकत्वस्य संस्कारनिष्ठत्वेन संस्कारत्वे-सत्त्वेपि नासङ्गतिः ।

तत्र सत्यन्तनिवेशस्य फलमाह—**तेन सम्बन्ध्यन्तरेति** । **सम्बन्ध्यन्तरं** गोः स्वामिपालकादिकम् । तज्ज्ञानस्यापि गोस्मरणजनकत्वेन तज्जनितयापि स्मृत्या गोत्वप्रकारकोन्वयबोधः स्यादिति सत्यन्तमुपात्तमित्याशयः । **जनितया** इत्यस्याग्रिमेण **स्मृते**रित्यनेन सम्बन्धः । गोपदज्ञाननिष्ठजनकतानिरूपितत्व-मात्रस्य जन्यत्वे विशेषणत्वेयुक्तस्मृतिवारणसम्भवाद् गोपदज्ञानत्वावच्छिन्न-त्वस्य जनकताविशेषणस्य समवायस्य तदवच्छेदकसंसर्गत्वेन निवेशस्य च फलमाह—**गोपदज्ञानेनैवेति** । अस्यापि **जनितया** इत्यनेनान्वयः । तथा

---

१ गोशब्दबुद्धौ इति मु० पु० पा० ।
२ सम्बन्धान्तर ज्ञानेन इति मु० पु० पा० ।

तद्वदर्थः सुषीमः शिशिरो जडः"...इत्यादिकोषेन पदे[1] वस्तुवाचकता, अतिदेशवाक्यार्थस्मरणसहकृतसादृश्यविशिष्टपिण्डप्रत्यक्षेण वस्तुनि पदवाच्यता, व्यवहारस्थलीयानुमानेन पुनरनियमेन क्वचिद्वस्तुनि पदवाच्यता, क्वचित्पदे वस्तुवाचकता च गृह्यते । २१,२२ ।

[2]तादृशग्रहाहितसंस्कारस्तु पदज्ञानमुद्बोधकमासाद्य वस्तु स्मारयति । [3]तस्यास्तु स्मृतेर्गोपदज्ञानत्वविशिष्टजन्यत्वे सति गौर्गोपद-

वाच्यताज्ञानस्यैवोक्तत्वाच्छाब्दक्रमेण तस्यैव विरणमपि पूर्वमुचितं यद्यपि, तथापि व्याकरणस्य तत्र पूर्वमुपादानात्तेन च कर्त्तरीत्यादौ सप्तम्या वाचकत्वार्थकतया तदेवादौ विवृतमिति बोध्यम् । **कर्त्तरी**त्यादिसप्तम्या वाचकत्वार्थकतयार्थविशेष्यकस्य शक्तिज्ञानस्य तत्रासम्भवात् । एवमतिदेशवाक्यार्थबोधस्य गवयाद्यर्थनिरूपितसादृश्यविशिष्टधर्म्मिकतया शक्तिज्ञानमपि तत्रार्थविशेष्यक एवेति । **व्यवहारस्थलीयानुमानेनेति ।** गामानयेतिप्रयोजकवृद्धवाक्यात् प्रयोज्यवृद्धव्यवहारदर्शनेनोक्तरीत्यावापोद्वापाभ्यां गोपदं गोत्वविशिष्टवाचकं गौर्वा गोपदवाच्येत्युभयविधस्यैव शक्तिज्ञानस्य बालकादीनामुदयः । तत्र व्याप्तिज्ञानस्यैवानुमितौ विधेयत्वादिनियामकतया व्याप्तिज्ञाने च तत्र तत्तत्साध्यकत्वादिमात्रनियामकस्य कस्यचिदभावाद् यद्यत्साध्यकयत्पक्षकयद्धेतुकं व्याप्तिज्ञानं यस्य तस्य तत्साध्यकत्वादिविशिष्टानुमितिरित्याशयः । २१, २२ ।

तृतीयकारिकार्थमाह—**तादृशेत्यादिना । तादृशः** पदविशेष्यकोऽर्थविशेष्यको वा । अनुद्बुद्धसंस्कारात्स्मरणानुदयादाह—**पदज्ञानमिति । आसाद्य** प्राप्य । प्राप्तिश्च उद्बोधकत्वेन क्लृप्तपदज्ञानादिनैककालावच्छिन्नैकात्मवृत्तित्वरूपं सामानाधिकरण्यम् । तादृशस्मरणस्य शाब्दबोधजनकतावच्छेदकं जन्यतावच्छेदकञ्च रूपमाह—**तस्यास्त्वित्या**दिना । **तस्या** उक्तस्मृतेः । **जन्यत्वे सतीति । जन्यत्व** इति सप्तमी "यस्य च भावेन भावलक्षणम्" इतिसूत्रविहितेत्यावेदयितुं **सती**त्युक्तम् । तत्र सूत्रे "भावलक्षणम्" इत्यस्य भावस्य स्वभावस्य

१ च पदे इति मु० पु० पा० ।

२ तादृगग्रहणाहितसंस्कारस्तु इति मु० पु० पा० ।

३ तस्याश्च इति मु० पु० पा० ।

**शक्येति संस्कारत्वावच्छिन्नकारणतानिरूपितकार्य्यताधिकरणगोस्मरणत्वेन [1]गोशाब्दबुद्धौ जनकत्वम् । तेन [2]सम्बन्ध्यन्तरज्ञानेन गोपदज्ञानेनैव**

लक्षणं विशिष्टतया ज्ञापनमित्यर्थः । तथा च यस्य भावेन स्वभावेन स्वरूपेण स्वरूपान्तरस्य विशिष्टतया ज्ञापनं ततः सप्तमीतितत्सूत्रार्थः । तथाविधजन्यत्वसामानाधिकरण्येन विशेषणेन गोस्मरणत्वस्य स्मरणस्वभावस्य विशिष्टतया ज्ञापनात् । **सती**ति शत्रन्तासधात्वर्थस्य वर्त्तमानकालवृत्तिसत्ताविशिष्टस्य तादात्म्येन तादृशजन्यत्वेऽन्वयात् प्रथमसप्तम्या अधिकरणवृत्तित्वमेवार्थस्तच्च गोस्मरणत्वेऽन्वेति । उक्ततादात्म्यान्वयबलात्तादृशजन्यत्वे कालवृत्तित्वस्यार्थत एव लाभात् "गोपु दुह्यमानासु गतः".. इत्यादौ तत्तत्कालवृत्तित्वस्य सप्तम्यर्थत्वेपि नात्र तस्य तथात्वम् । अधिकरणवृत्तित्वस्य सप्तम्यर्थत्वलाभायैव **सती**त्यस्योपादानम् । अतएव "गुणाद्यन्यत्वे सति सत्त्वात्".. इत्यादौ सतीतिशत्रन्तार्थस्य न हेतुतावच्छेदकेनुप्रवेशः, सामानाधिकरण्येन गुणाद्यन्यत्वविशिष्टसत्तात्वादेरेव तथात्वमिति प्रामाणिकाः । तथा च तादृशजन्यत्वाधिकरणवृत्तितादृशगोस्मरणत्वं गोत्वप्रकारकशाब्दबुद्धित्वावच्छिन्ननिरूपितजनकतावच्छेदकं सम्बन्धस्तु समवाय एव कार्य्यत्वकारणत्वयोरवच्छेदक इत्यर्थः । **गौर्गोपदशक्येतीति** । सामानाधिकरण्येन तादृशशक्यत्वविषयतानिरूपितविषयतानिरूपकत्वविशिष्टेत्यर्थः । तच्च शक्यत्वसंसर्गकसंस्कारसाधारणं संस्कारत्वे विशेषणम् । तेन **इति**पदोपस्थापितस्य तादृशाकारकत्वस्य संस्कारनिष्ठत्वेन संस्कारत्वेसत्त्वेपि नासङ्गतिः ।

तत्र सत्यन्तनिवेशस्य फलमाह—**तेन सम्बन्ध्यन्तरेति** । **सम्बन्ध्यन्तरं** गोः स्वामिपालकादिकम् । तज्ज्ञानस्यापि गोस्मरणजनकत्वेन तज्जनितयापि स्मृत्या गोत्वप्रकारकोन्वयबोधः स्यादिति सत्यन्तमुपात्तमित्याशयः । **जनितायाः** इत्यस्याग्रिमेण **स्मृते**रित्यनेन सम्बन्धः । गोपदज्ञाननिष्ठजनकतानिरूपितत्वमात्रस्य जन्यत्वे विशेषणत्वेप्युक्तस्मृतिवारणसम्भवाद् गोपदज्ञानत्वावच्छिन्नत्वस्य जनकताविशेषणस्य समवायस्य तदवच्छेदकसंसर्गत्वेन निवेशस्य च फलमाह—**गोपदज्ञानेनैवेति** । अस्यापि **जनितायाः** इत्यनेनान्वयः । तथा

---

१ गोशब्दबुद्धौ इति मु० पु० पा० ।
२ सम्बन्धान्तर ज्ञानेन इति मु० पु० पा० ।

**वा पुरुषान्तरसमवेतेन [1]जनितायाः पदेन सह तुल्यकालीनत्वादिसंसर्गेण गोगोचरसंस्कारेण गवि गोपदशक्यत्वसंस्कारेणैव वा पुरुषान्तरसमवेतेन समयविधयोत्पादितायाः गोरिति स्मृतेर्न्न शाब्दबोधाङ्गत्वम् ।**

**वस्तुतस्तु पदज्ञानशक्तिसंस्कारयोः पदार्थस्मरणं प्रति साक्षात्, तदनुभवं प्रति च स्वजन्यपदार्थानुसन्धानद्वारा कारणत्वम् । पदार्थ-**

च जन्यमात्रस्य कालोपाधित्वेन कार्य्यमात्रनिरूपितकालत्वावच्छिन्नकारणताया गोपदज्ञानेपि सत्त्वेन मैत्रीयगोपदज्ञाननिष्ठतादृशकारणतानिरूपितकार्य्यताया-श्चैत्रीयस्मरणे सत्त्वेन तस्यापि चैत्रीयगोशाब्दबुद्धौ कारणत्वप्रसङ्ग इति गोपद-ज्ञानत्वावच्छिन्नत्वं तत्र निवेशितम् । समवायस्य तत्रानवच्छेदकत्वे च निरुक्त-कार्य्यताशालिमैत्रीयस्मरणस्य तत्र जनकत्वप्रसङ्ग इत्याशयः । शक्यत्वविषय-तायास्तद्घटकत्वे प्रयोजनमाह—**पदेन सहेति** । तथा च गौर्गोपदशक्येति संस्कारस्याभावेपि तुल्यकालीनत्वसंसर्गेण गोपदवान् गोपदसमानकालीनो वा गौरित्याकारकानुभवजन्यसंस्कारादपि तादृशान्वयबोधप्रसङ्ग इत्याशयः । संस्कारत्वस्य जनकतावच्छेदकतायाः पूर्ववत् कालत्वावच्छिन्नकारणतामादाय दोषवारणमेवेत्याह—**गवि गोपदेने**त्यादिना ।

उक्तरीत्या बहुतरधर्म्मघटितकारणत्वापेक्षया लघुकारणत्वमाह—**वस्तुत-स्त्विति । साक्षादिति कारणत्वमि**त्यनेनान्वितम् । तथा च समवायेन गवादिस्मरणं प्रति समवायेन गवादिपदज्ञानस्योद्बोधकस्य गौर्गोपदशक्येत्याद्य-नुभवजन्यसंस्कारस्य च पृथगेव कारणत्वम् । एकविशिष्टत्वेनापरस्य कारणत्वे विशेष्यविशेषणभावे विनिगमनाविरहोवच्छेदकगौरवञ्च । कारणकूटस्यैव कार्य्यो-त्पत्तिप्रयोजकतया नैकैकतो गवादिस्मरणापत्तिरिति भावः ।

गोत्वादिप्रकारकशाब्दबोधे गवादिपदज्ञानशक्तिज्ञानजन्यसंस्कारयोर्व्यापार-वदसाधारणकारणतया करणत्वमित्याशयेनाह—**तदनुभवं प्रति चेति** । तदा **पदार्थस्मरणमि**त्यत्र प्रकान्तस्य पदार्थस्य परामर्शादनुभवपदस्यानुभवविशेष-

---

१ कालविधया पदेन इति मु० पु० पा० ।

२ तुल्यकालीनत्वादिसंसर्गगोचरसंस्कारेण इति मु० पु० पा० ।

**स्मरणस्य [1]चानुभवत्वादिजातिसत्त्वे शाब्दस्मरणोभयवृत्तिजात्या, [2]तदसत्त्वे तदन्यतरत्वेन शाब्दबुद्धिजनकत्वम् ।**

शाब्दबोधपरत्वात् पदार्थशाब्दबोधं प्रतीत्यर्थः । तदादिपदानां वृत्तिज्ञानीयमुख्यविशेष्यपरामर्शकत्वाच्छाब्दबोधीयमुख्यविशेष्यतायास्तत्राभावेपि नानुपपत्तिः । अतएव "दृशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः ।" "चैत्रो ग्रामगतस्तत्र मैत्रः किङ्कुरुतेधुना ।" "पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहा ।"...इत्यादौ तत्पदै राजग्रामपटोलानां परामर्शः । तादृशविशेष्यत्वाभावाच्च "चैत्र ! प्रजावतीयस्मै त्वं तस्मै देहि कम्बलम् ।" "नीलोमणिर्गुणः सोत्र"...इत्यादौ तत्पदाभ्यां मातृनीलयोर्न्न परामर्शः । "प्रजावती भ्रातृजाया" इत्यमरान्नीलपदस्य नीलगुणविशिष्टे लाक्षणिकत्वाच्च तयोर्वृत्तिज्ञानीयमुख्यविशेष्यत्वाभावात् । **स्वं** पदज्ञानं संस्कारश्च । तज्जन्यपदार्थस्मरणद्वारेत्यर्थः । तथा चोक्तशाब्दबोधं प्रति स्वजन्यगोस्मरणवत्तासम्बन्धेन परम्परया गवादिपदज्ञानं शक्तिज्ञानजन्यसंस्कारश्च समवायेन कारणमिति पूर्वस्मात् स्फुटतरमेव लाघवमत्रेति भावः ।

पदज्ञानसंस्कारयोर्व्यापारः पदार्थस्मरणं तदैव स्यात्, यदि तयोर्जन्यत्वे सति तज्जन्यशाब्दबोधजनकत्वं तस्य स्यादिति व्यापारत्वान्यथानुपपत्त्या तस्यापि शाब्दबोधकारणतावश्यकी । तस्याश्च गवादिपदार्थस्मरणत्वावच्छिन्नत्वे शाब्दानन्तरं शाब्दानुत्पत्तिप्रसङ्गात्तदुभयसाधारणं कारणतावच्छेदकं निर्वक्ति— **पदार्थस्मरणस्य चेत्या**दिना । **अनुभवत्वादी**त्यत्रादिपदेन ज्ञानत्वपरिग्रहः । **जातिसत्त्व** इति । प्रत्यक्षाद्यनुभवचतुष्टयसाधारण्या अनुभवामीति प्रत्यक्षसिद्धाया अनुभवत्वजातेरिव जानामीति प्रत्यक्षसिद्धाया ज्ञानत्वजातेः सत्त्व इत्यर्थः । **शाब्दस्मरणोभयवृत्तिजात्येति ।** **उभय**पदस्यादिपदार्थोपलक्षकतया ज्ञानवृत्तिजात्या ज्ञानत्वेनेत्यर्थः । अनुमित्यादीनामपि कारणत्वे क्षतिविरहस्य वक्ष्यमाणत्वात् । अनुभवत्वोपादानन्तु तत्सत्त्वे ज्ञानत्वस्यापि सत्त्वमित्येतावदर्थम्, न तु तेन रूपेण कारणत्वमभिप्रेतम्, तस्य स्मरणावृत्तित्वात् । **तदसत्त्व** इति । अनुभवत्वज्ञानत्वयोरनङ्गीकार इत्यर्थः । **तदन्यतरत्वेनेति ।** शाब्दस्मरणान्यतरत्वेनेत्यर्थः ।

---

१ अनुभवत्वादिजात्यसत्त्वे इति मु० पु० पा० ।

२ तत्सत्त्वे त्वेतदन्यतरत्वेन इति मु० पु० पा० ।

**शाब्दबोधोत्पादकसामग्रीप्रवेशस्तु गोपदज्ञानतद्वृत्तिमद्गोगोचरसंस्कारोभयजन्यज्ञानत्वेन, नातः * प्रत्यक्षोपस्थितस्य गोरन्वयबोधः ।**

अयम्भावः—प्रमाणाभावादनुभवत्वं ज्ञानत्वञ्च न प्रत्यक्षादिसाधारणं स्मरणसाधारणञ्चैकम्, विषयविनिर्म्मोकेणानुभवामीत्यस्याननुभवात् । विषयोपधाने च तत्तद्विषयकप्रत्यक्षादिविषयकत्वमेव, न त्वनुभवत्वावच्छिन्नविषयकत्वम् । एवं विशिष्टवैशिष्ट्यावगाहिबुद्धेः कार्य्यता विशेषणज्ञानविशेषणतावच्छेदकप्रकारकनिश्चययोः कारणता च नानुभवत्वेन ज्ञानत्वेन वावच्छिन्ना, विशेषणविषयकाद्विशिष्टसंस्काराद्विशिष्टस्मरणस्य विशिष्टविषयकोपधानेनेच्छाद्वेषयोः कृतेश्च साक्षात्कारात्, किन्तु विशिष्टविषयकप्रत्यक्षत्वेन विशिष्टविषयकत्वमात्रेण वा कार्य्यत्वं विशेषणविषयकप्रत्यक्षत्वेन तादृशविषयकत्वमात्रेण वा कारणत्वम् । एवं विशिष्टवैशिष्ट्यावगाहिज्ञानविशेषणतावच्छेदकप्रकारकज्ञानयोरपि तादृशेन प्रत्यक्षत्वेन तद्विषयकत्वमात्रेण वा कार्य्यत्वं तादृशसंशयान्यत्वमात्रेण तद्विषयकत्वमात्रेण वा कारणत्वम् । एतच्च "ज्ञानोपरमेपि"...इत्याद्यनुमितिग्रन्थव्याख्यानावसरे गदाधरभट्टाचार्य्यैर्दर्शितम् । तथा च ज्ञानत्वस्याप्रामाणिकतया तादृशान्यतरत्वस्यैव कारणतावच्छेदकत्वमिति ।

ननु गोत्वप्रकारकशाब्दबुद्धौ गोविषयकज्ञानत्वस्य कारणतावच्छेदकत्वे तथाविधप्रत्यक्षजन्यसंस्कारजन्यस्मरणस्य सत्त्वे शाब्दबोधः स्यात्, कारणतावच्छेदकावच्छिन्नस्य सत्त्वादित्यत आह—**शाब्दबोधोत्पादके**ति । तादृशज्ञानत्वस्य कारणतावच्छेदकत्वेपि कार्य्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नसत्त्व एव कार्य्योत्पादात्तादृशसमुदायत्वस्य च जनकतानवच्छेदकेनापि गोपदज्ञानगोपदनिरूपितवृत्तिमद्गोविषयकसंस्कारोभयजन्यत्वविशिष्टज्ञानत्वावच्छिन्नेन घटितत्वान्न प्रत्यक्षाद्यात्मकज्ञानजन्यसंस्कारजन्यस्मरणादन्वयबोधप्रसङ्ग इत्यर्थः । कारणत्वस्य तादृशोभयजन्यत्वावच्छिन्नत्वे तु गौरवमेवेति भावः । **प्रत्यक्षोपस्थितस्ये**ति । गोविषयकप्रत्यक्षजन्यसंस्कारजन्यस्मरणविषयस्येत्यर्थः ।

---

* प्रत्यक्षाद्युपस्थितस्य इति मु० पु० पा० ।

**दृश्यते च चिरान्तरितकरणव्यापाराणां जनकतानवच्छेदकेनापि करणविशेषजन्यत्वादिना सामग्रीघटकत्वम् । अतएवानुभवव्यापाराणां *संस्काराणां निर्विषयत्वमते पटानुभवजनितसंस्कारत्वेन पटस्मरणसामग्र्यां यागव्यापारस्यापूर्वस्य च †दानजन्यापूर्वाद्वै-**

ननु कारणतावच्छेदकस्यैव सामग्रीघटकतावच्छेदकत्वमिति नियमात् कथं तदनवच्छेदकस्य तथात्वमित्यत आह—**दृश्यते चे**ति । **चिरं** चिरकालावच्छेद्यम**न्तरा** सामानाधिकरण्याभावो जातो येषां तेषां **करणव्यापाराणां** यागानुभवादिरूपकरणव्यापाराणाम् अपूर्वसंस्कारादीनाम् । **जनकतानवच्छेदकेनापि** । गवादिशाब्दत्वपटादिस्मरणत्वस्वर्गविशेषत्वाद्यवच्छिन्नं प्रति लाघवात्तादृशज्ञानत्वसंस्कारत्वापूर्वत्वादिनैव जनकतया तदनवच्छेदकीभूततादृशपदज्ञानसंस्कारोभयजन्यत्वपटाद्यनुभवत्वयागादिजन्यत्वादिनेत्यर्थः । **सामग्रीघटकत्वमि**ति । **दृश्यत** इति पूर्वेणान्वितम् ।

**अतएव** जनकतानवच्छेदकस्य सामग्रीघटकतावच्छेदकत्वादेव । **निर्विषयत्वमत** इति । संस्कारजनकस्यानुभवस्य तज्जन्यस्मरणस्य च सविषयकत्वादेवापत्त्यादीनामसम्भवात् संस्कारो निर्विषयक एवेति मत इत्यर्थः । **पटानुभवजातितसंस्कारत्वेने**ति । पटविषयकानुभवजन्यत्वविशिष्टसंस्कारत्वेनेत्यर्थः । तथा च संस्कारस्य पटविषयकस्मरणं प्रति संस्कारत्वमात्रेण जनकत्वेपि सामग्र्याः पटविषयकानुभवजन्यत्वविशिष्टसंस्कारत्वावच्छिन्नघटितत्वादेव घटानुभवजन्यसंस्कारात्पटस्मरणोदयासम्भवेन तादृशसंस्कारत्वादीना कारणतायामुत्पत्तिप्रयोजकतायाञ्चावच्छेदकत्वं गौरवान्नोपगन्तुमुचितमित्याशयः ।

एवं यागदानादिजन्यापूर्वाणामेकजातीयत्वमेव, न तु वैजात्यं प्रमाणाभावात् । तथा च तत्तद्विजातीयस्वर्गं प्रत्यपूर्वत्वेनैव कारणत्वम् । दानजन्यापूर्वसत्त्वे यागजन्यविजातीयस्वर्गवारणञ्च सामग्र्या यागजन्यापूर्वत्वाघटितत्वादेवेत्याह—**यागव्यापारस्यापूर्वस्ये**ति । अपूर्वस्य यागव्यापारत्वमपूर्वाधिकरणे द्वितीये

---

* सस्काराणाम् इति मु० पु० ना० ।

† दानजन्यापूर्वादिवैलक्षण्येन इति मु० पु० पा० ।

लक्षण्ये यागजन्यापूर्वत्वेन स्वर्गविशेषसामग्र्यां घटकत्वम्। अन्यथा घटानुभवजनितसंस्कारदानजनितापूर्वसत्त्वे पटस्मरणस्वर्गविशेषयोरुत्पादापत्तेः।

यदि चातएव संस्कारस्य सविषयकत्वमपूर्वस्य च वैजात्यमित्युपेयते, तदवच्छिन्नमेव सामग्रीमध्ये प्रविशतीति मतम्, तदा प्रकृतेपि यदवच्छेदेन *पदज्ञानं वृत्तिसंस्कारजन्यत्वं स धर्म्म एव तदुभयाव्यवहितोत्तरस्मरणत्वादिरन्वयबुद्धिं प्रति जनकतावच्छेदको न तु तत्र जन्यताप्रवेशो गौरवात्।

सिद्धान्तितम्। तदुक्तं जैमिनिना—"चोदना पुनरारम्भः।" इति। "चोदना अपूर्वं पुनरस्ति, यतः कर्म्मणा फलस्यारम्भश्चोद्यते" इति सूत्रार्थः सोमनाथभट्टैः परिष्कृतः। **स्वर्गविशेषसामग्र्यां** विजातीयस्वर्गोत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्ने। उक्तरूपस्य तद्घटकतानवच्छेदकत्वेतिप्रसङ्गमाह— **अन्यथेति**। संस्कारत्वापूर्वत्वादिजनकतावच्छेदकमात्रस्य तथात्व इत्यर्थः।

संस्कारस्य सविषयत्वेपूर्वाणाञ्च परस्परवैजात्येपि जन्यत्वस्य न कारणतावच्छेदकत्वम्, तस्य बहुतरपदार्थघटितत्वेन गुरुशरीरत्वात्, किन्तु तद्घटकाव्यवहितोत्तरत्वमात्रस्यैवेत्याशयेनाह—**यदि चेति**। **अतएव** उक्तापत्तेरेव। **तदवच्छिन्नमेव** कारणतावच्छेदकावच्छिन्नमेव। **तदेति**। कारणतावच्छेदकस्य सामग्रीघटकतावच्छेदकत्वनियम इत्यर्थः। **प्रकृतेपि** गोत्वादिप्रकारकशाब्दबोधेपीत्यर्थः। **यदवच्छेदेनेति**। गोत्वप्रकारकस्मरणं प्रति गोपदज्ञानगोपदशक्तिसंस्कारोभयस्य कारणत्वे उद्बोधकान्तरेण गोप्रत्यक्षादिजन्यसंस्कारेण च जनिते तादृशस्मरणे व्यभिचार इति तदुभयाव्यवहितोत्तरतादृशस्मरणत्वमेव तदुभयजन्यतावच्छेदकं वाच्यमिति तादृशस्मरणत्वावच्छेदेनेत्यर्थः। यत्पदपरामर्शनीयस्यैवात्र तत्पदपरामर्शनीयत्वमिति स्पष्टप्रतिपत्त्यर्थमाह—**तदुभयेति**। **गौरवादिति**। कारणाव्यवहितोत्तरक्षणावच्छेदेन कारणसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्म्मवत्त्वरूपजन्यताया बहुतरपदार्थघटितत्वेन

* पदज्ञानवृत्तिसंस्कारजन्यत्वम् इति मु० पु० पा०।

**शब्दबुद्धित्वादिना पृथगेव शाब्दबुद्धौ जनकत्वम्। अतएव यत्र घटपदाम्पदादीनां प्रतिसन्धानम्, अथ घटकर्म्मत्वादीनां स्मरणम्, अथ पदानामाकाङ्क्षाप्रतिसन्धानम्, ततो विशेष्ये विशेषणन्यायेन शाब्दबुद्धिः, अथ विशिष्टवैशिष्ट्यबुद्धिः, तत्र पदेन साक्षाज्जनिताया उपस्थितेरसत्त्वेपि न विशिष्टवैशिष्ट्यबुद्ध्यनुपपत्तिः।**

गौरवादित्यर्थः। अव्यवहितोत्तरत्वस्य तथात्वेपि तस्य जन्यताघटकत्वादुभयमतेप्यवच्छेदकत्वान्न गौरवमित्याशयः। जन्यतायाः स्वरूपसम्बन्धरूपत्वे तु तत्रैव लाघवमिति चिन्त्यम्।

ननूक्तरीत्या तादृशस्मरणस्य शाब्दबोधकारणत्वोपगमेवान्तरवाक्यार्थबोधानन्तरं महावाक्यार्थबोधो न स्यात्। उक्तान्यतरत्वेन कारणत्वेपि यत्र घटादिपदजन्यस्मरणनाशस्तत्र तदनुपपत्तिरेवेत्यत आह-**शाब्दबुद्धित्वादिनेति।** विशेषणतावच्छेदकविषयकशाब्दबुद्धित्वादिनेत्यर्थः। **पृथगेव जनकत्वमिति।** तथा च तत्र शाब्दबोधात्मकोपस्थितिमादायैव शाब्दबोधान्तर उपपादनीय इत्याशयः। **अतएव** शाब्दबुद्धित्वादिना पृथक्कारणत्वादेव। **न विशिष्टवैशिष्ट्यबुद्ध्यनुपपत्ति**रित्यग्रिमेणान्वयः। **घटपदाम्पदादीना**मित्यत्रादिपदेन तत्तन्निरूपितवृत्तिमद्घटकर्म्मत्वादीनामुपग्रहः। **अथ** घटपदादिज्ञानानन्तरम्। **पदानां** घटपदाख्यातान्तधातुपदानाम्। **विशेष्ये विशेषणन्यायेनेति।** आनयने कर्म्मत्वं तत्र घटो विशेषणमितिरीत्येत्यर्थः। विशेषणतावच्छेदकप्रकारकनिश्चयस्य विशिष्टवैशिष्ट्यबोध एव कारणतया तं विनाप्युक्तबोधस्य तत्तत्पदार्थज्ञानमात्रादेव सम्भवादित्याशयः। **अथ विशिष्टवैशिष्ट्यबुद्धिरिति।** तादृशबोधानन्तरं विशेषणतावच्छेदकघटत्वाद्यवच्छिन्नवैशिष्ट्यावच्छिन्नसंसर्गतानिरूपितप्रकारता—शालिशाब्दबोध इत्यर्थः। अथवा तादृशपदविशिष्टकर्म्मतात्वाद्यवच्छिन्नपर्य्याप्तप्रकारताशाली बोध इत्यर्थः। तत्र च विशेषणतावच्छेदकघटादिप्रकारताकनिश्चयस्य कारणत्वाद् घटपदादिजनितस्मरणस्य चावान्तरबोधोत्पादक्षणे नाशाद् घटादिप्रकारताकत्वाभावाच्च न तस्य तादृशबोधकारणत्वसम्भव इत्यवान्तरशाब्दबोधस्यैव तादृशमहावाक्यार्थबोधजनकत्वमित्याशयः।

उक्तरीत्या गोत्वप्रकारकशाब्दबोधं प्रति स्मरणस्य कारणत्वेवच्छेदकगौरवाच्छाब्दबोधस्य तत्र पृथक्कारणत्वकल्पनाच्च लाघवेतरबाधादिसहकृतद्रव्यादि-

**शाब्दिकास्तु सङ्केतसंसर्गेण पदपदार्थवैशिष्ट्यावगाही गौर्गोपदत्वान् गोपदं वा गोमदित्याकारक सङ्गतिग्रह एव पदार्थस्मारकः ।**

**सङ्केतस्तु भगवत्समवेत एकोपि यत्पदजन्यत्वेन यद्धर्म्मविशिष्ट-**

पदज्ञानजन्यस्मृतेरपि तादृशशाब्दबोधोदयात् पर्य्यायपदान्तरज्ञानजन्य-शाब्दबोधे व्यभिचाराच्च शाब्दबोधमात्रस्य शब्दविषयकत्वमभ्युपगच्छताम्मतमुत्था-पयति—**शाब्दिकास्त्व**ति । **संसर्गेणेति** तृतीयार्थस्तादात्म्यं वैशिष्ट्येनान्वितम् । **गोपदं वे**ति द्विविधज्ञानप्रदर्शनं वाच्यत्ववाचकत्वान्यतरावगाहिन एव विनिग-मनाविरहेण शाब्दबोधप्रयोजकत्वमित्यभिप्रेत्य । न च **गोमदि**त्यत्र मतुपः कथं साधुत्वम्, गौरस्यास्तीति विग्रहे "ज्योत्स्नातमिस्र"...इत्यादिसूत्रेण नित्यं गोमिन्नित्यस्य निपातनादिति वाच्यम्, "एकगोपूर्वाट्ठञ् नित्यम्" इतिसूत्रे नित्यग्रहणात्ततः प्राङ् मतुप्समुच्चयार्थकस्यान्यतरस्यांग्रहणस्य' 'केशाद्वः" इत्यतोनुवृत्तेः । अतएव "द्वौ गवीश्वरे गोमान् गोमि" इत्यरोपि सङ्गच्छते ।' **पदार्थस्मारक** इति । पदस्यार्थस्य च स्मारक इत्यर्थः । सङ्केतत्वावच्छिन्नसंसर्ग-तानिरूपिता या गोपदत्वावच्छिन्ना गोत्वावच्छिन्ना वा प्रकारता तन्निरूपिता या गोत्वावच्छिन्ना गोपदत्वावच्छिन्ना वा विशेष्यता तच्छालिज्ञानं स्वसमान-विषयकस्मृतिं प्रति कारणमित्यर्थः । **सङ्गतिग्रह एवे**त्येवकारोऽयर्थो तेन वाच्य-त्वादिप्रकारकज्ञानस्यापि स्मारकत्वलाभः । अथवा अव्यवहितोत्तरत्वादीनां कार्य्यतावच्छेदकत्वादिव्यवच्छेदार्थकस्स इति ।

नन्वीश्वरेच्छारूपस्य सङ्केतस्यैकत्वेन तेन सम्बन्धेन घटादिपदवत्त्वस्यापि गवादौ ज्ञानं प्रमात्मकमेवेति ततोपि गोत्वप्रकारकः शाब्दबोधः स्यादित्यत आह—**सङ्केतस्त्विति । भगवत्समवेत** इति । तत्पदजन्यतद्धर्म्मावच्छिन्न-विशेष्यताकबुद्धित्वाच्छिन्नोद्देश्यत्वादिशालिन्या भगवदिच्छाया एव सङ्केतत्वेन तस्य नित्यतया लाघवादेकत्वमेवेत्याशयः । तादृशेच्छाविषयत्वस्यैव तथात्वेपि विषयताया एकेच्छादिनिरूपिताया एकत्वमेवेति बोध्यम् । **यत्पदजन्यत्वेनेति ।** गवादिपदन्यत्वेनेत्यर्थः । अवच्छिन्नत्वस्य तृतीयार्थस्**योद्दिशती**त्यत्र धात्वर्थे-

**विशेष्यिकां बुद्धिमुद्दिशति, *तद्धर्म्मावलीढे तस्यैव संसर्गो भवति न त्वन्यस्य।**

**संसर्गता तु †सङ्केतत्वेनैव । समवायोपि हि यदनुयोगिकत्वावच्छेदेन यत्प्रतियोगिकस्तयोरेव विशिष्टबुद्धिं जनयति, न तु वायुरूपयोः। संसर्गता तु तस्य ‡समवायत्वेनैव, न केनापि वाच्छिन्ना ।**

न्वयः। **तद्धर्म्मावलीढ** इति । तद्धर्म्मावच्छिन्न इत्यर्थः। तथा च गोपदजन्यत्वावच्छिन्नगोत्वावच्छिन्नविशेष्यकबुद्धित्वावच्छिन्नोद्देश्यताशालित्वविशिष्टेच्छा गोत्वावच्छिन्ने गोपदस्यैव संसर्गो न तु घटादिपदस्यापीति न ततो गवादिस्मरणापत्तिरिति भावः।

**संसर्गता त्विति ।** तत्पदजन्यत्वादेस्संसर्गतावच्छेदकत्वे गौरवादिच्छात्वमेव संसर्गतावच्छेदकमित्यर्थः। सामान्यधर्म्मस्य संसर्गतावच्छेदत्वेपि विशेषयोरेव संसर्गत्वमित्यत्र समवायस्यैकतावादिमते दृष्टान्तमाह—**समवायोपि होति ।** वायौ स्पर्शसमवायसत्त्वाद्रूपसमवायस्यापि सत्त्वेपि वायू रूपवानिति प्रत्ययस्य प्रामाण्यवारणं समवायस्यैकत्वेपि वाय्वनुयोगिकत्वावच्छेदेन रूपप्रतियोगिकत्वविरहात् संसर्गतावच्छेदकत्वस्य समवायत्वे सत्त्वेपि वायुरूपयोः संसर्गत्वं न समवायस्येत्युपगम्यैव क्रियते, तथा प्रकृतेपीच्छाया एकत्वेपि गोघटपदयोस्संसर्गत्वविरहादेव न तयोः स्मार्य्यस्मारकभाव इत्याशयः। गोत्वेनेमञ्जानामीत्यनुव्यवसायानुरोधेन यथा जातेस्समवायान्यसंसर्गेण स्वरूपतो भानमिष्यते तथा जात्यखण्डोपाध्यतिरिक्तयोस्समवायेच्छयोरपीत्याह—**न केनापीति ।**

शक्तिप्रकारकज्ञानस्य कारणत्वे वक्ष्यमाणानुपपत्तिरिति कोषादिघटकसप्तम्या आधेयत्वमेवार्थो वाचकत्वन्तु संसर्गविधयैव भासत इत्याशयेनाह—

---

* तद्धर्म्मावलीढः इति मु० पु० पा० ।

† तस्य इत्यधिकः पा० मु० पु० ।

‡ एव इति मु० पु० पा० ना० ।

कोषव्याकरणादिरपि पदपदार्थयोस्सङ्केतेन वैशिष्ट्यं ग्राहयति। अतएवागृहीतेपि प्रवृत्तिनिमित्ते दशरथपदवानिति निर्द्धर्म्मितावच्छेदककशक्तिग्रहेण तादृशीं स्मृतिमुत्पाद्य तादृश एव शाब्दबोधो जन्यते। दशरथत्वादिजातीनामाधुनिकायोग्यत्वात्तद्विशिष्टे शक्तिग्रहासम्भवात्।

दशरथत्वसंसर्गिका बुद्धिरपि न दशरथत्वविशिष्टमुपनेतुं प्रभवति, सांसर्गिकविषयताभिन्नविषयताया एवोपनीतभानजनकतावच्छेदक-

**कोषव्याकरणादिरपीति**। "मृगे कुरङ्गे". इत्यादिः "कर्त्तरि कृत्". .इत्यादिश्चेत्यर्थः। **सङ्केतेनेति**। सङ्केतसंसर्गेणेत्यर्थः। **अतएव** सङ्केतसंसर्गकस्यैव ज्ञानस्य शाब्दबोधादिकारणत्वादेव। **अगृहीतेपीति**। दशरथशरीरादीनामस्मदाद्यदृष्टतयाश्रयाग्रहे जातीनां ग्रहणासम्भवादस्मदाद्यदृष्टे दशरथपदशक्यतावच्छेदकदशरथत्वादिजातावित्यर्थः। **निर्द्धर्म्मितावच्छेदककेति**। दशरथो दशरथपदवाच्य इत्याद्याकारकसङ्केतप्रकारताकस्य ज्ञानस्य विशेष्यतावच्छेदकदशरथत्वादीनामग्रहेसम्भवाद् वाच्यताज्ञानस्य तदवच्छेदकाज्ञाने निर्द्धर्म्मितावच्छेदकस्य सम्भवाद्वाच्यत्वसंसर्गकनिर्द्धर्म्मितावच्छेदककदशरथपदत्वाद्यवच्छिन्नप्रकारकज्ञानेनेत्यर्थः। तस्य च संसर्गज्ञानस्य विशिष्टज्ञानेनपेक्षणादेव दशरथत्वादिरूपवाच्यतावच्छेदकाज्ञानेपि सम्भव इत्याशयः। **तादृश एवेति**। निर्द्धर्म्मितावच्छेदकको दशरथपदवानित्याकारक एवेत्यर्थः। वृत्तिज्ञानसमानाकारकस्यैव शाब्दबोधस्य तन्मतसिद्धत्वात्। **शक्तिग्रहासम्भवादिति**। सन्निकर्षाभावेन तादृशजातिप्रत्यक्षस्य लिङ्गाद्यभावेन तदनुमित्यादीनां तद्व्यवहारस्य च धर्म्मिणोवर्त्तमानतयासम्भवेन सर्वथैव दशरथत्वादिविशिष्टविशेष्यकस्य शक्तिग्रहस्यासम्भवादित्यर्थः।

ननु दशरथत्वस्य संसर्गविधया ज्ञाने भानसम्भवात् पुराणादितो जातस्य तस्यैव दशरथपदवाच्यताज्ञानविशेष्यतावच्छेदकदशरथत्वादिविविष्टज्ञापकत्वं स्यादित्यत आह—**दशरथत्वसंसर्गिकेति** । **सांसर्गिकविषयताभिन्नेति**। तथा च तद्विषयकोपनीतभानं प्रति संसर्गताभिन्नतद्विषयताशालिज्ञानस्यैव जनकत्वाद्दशरथत्वस्य संसर्गघटकत्वेन ज्ञानस्य सम्भवेपि तेन विशिष्टशक्तिज्ञाना-

त्वात् । अन्यथा संयोगसंसर्गकबुद्धेरनन्तरं संयोगज्ञानामीत्यनुव्यवसायसम्भवेन सांसर्गिकविषयत्वायोग्यत्वप्रवादस्य निर्युक्तिकत्वापत्तेः ।

जातिमानिति विशिष्टबुद्धिरपि नानवच्छिन्नदशरथत्वप्रकारकस्मरणं जनयितुमर्हति, *समानप्रकारकानुभवस्यैव स्मरणोपधायकत्वात् । अन्यथा जातिमानिति निखिलजात्यवगाहिन्या बुद्ध्या मुण्डितसर्वजातिप्रकारकस्मरणे सार्वज्ञ्यप्रसङ्गात् ।

सम्भव एवेत्याशयः । संसर्गताया अप्युपनीतभानजनकतावच्छेदकत्वे तस्या अयोग्यत्वप्रवादोनुपपन्नः स्यादित्याह—**अन्यथेत्यादिना । संयोगसंसर्गकबुद्धेः** घटभूतलयोर्लौकिकसन्निकर्षासमवधानकालीनाया भूतलं घटवदित्याद्याकारिकाया बुद्धेरित्यर्थः । तेन लौकिकसन्निकर्षस्य घटभूतलसंयोगे सत्त्वे तस्यापि चाक्षुषप्रत्यक्षविषयत्वस्येष्टत्वेपि नासङ्गतिः । **संयोगमिति ।** तत्कारणस्य संयोगसंसर्गताकज्ञानस्य सत्त्वादिति भावः । **सांसर्गिकविषयत्वायोग्यत्वेति ।** शाब्दबोधीयादिसांसर्गिकविषयतायास्तादात्म्यादिनिष्ठायास्तादात्म्यं शाब्दयामीत्याद्यनुव्यवसायस्य ज्ञानीयविषयतानियामकस्य नीलो घट इत्याद्यन्वयबोधानन्तरमनुदयेन तस्यायोग्यत्वप्रवादः । स चोक्तरीत्या दशरथत्वसंसर्गकबुद्धेर्विशिष्टोपनायकत्वे संसर्गताया उपनायकज्ञानविशेषणत्वादुपनीतभानजनकतावच्छेदकत्वात्तदनवच्छेदकत्वमात्रयुक्तिकोनुपपन्नः स्यादित्यर्थः ।

ननु जातित्वेन सकलजात्यवगाहिनो जातिमानित्याकारकानुभवस्य दशरथत्वादिविषयकत्वात्तेनैव जातित्वादिमोषेण निरवच्छिन्नदशरथत्वप्रकारताका स्मृतिर्जायमाना तदवच्छिन्ने शक्तिं ग्राहयिष्यति, अथवा जातित्वेन दशरथेत्वावगाहिजातिमान् दशरथपदशक्य इत्यादिसङ्केतज्ञानमेव निरवच्छिन्नदशरथत्वप्रकारकं स्मरणञ्जनयिष्यतीत्याशङ्कां निरवच्छिन्नप्रकारताकस्यैवानुभवस्य तादृशस्मरणजनकत्वान्न तत्सम्भव इत्युक्त्वा निरस्यति—**जातिमानितीत्यादिना । अन्यथा** विशिष्टानुभवस्याविशिष्टस्मरणजनकत्वे । जातौ मुण्डितत्वं जातित्वप्रकारत्वानिरूपितविशेष्यताश्रयत्वम् । **सार्वज्ञ्यप्रसङ्गादिति ।** अस्मदादीनामपि जातित्वेन सर्वजातिविशिष्टपदार्थाना ज्ञानसम्भवादित्याशयः । अत्र

* समानप्रकारताकानुभवस्यैव इति मु० पु० पा० ।

*नापि दशरथपदवाच्ये दशरथपदलक्षणा, शक्तिज्ञानस्येव तदाश्रयसम्बन्धज्ञानस्यापि शक्यतावच्छेदकविषयत्वनियमेन तदग्रहे लक्षणाया अपि ग्रहणायोगात्। सङ्केतत्वेनैव सङ्केतस्य लक्षणाज्ञानविषयत्वे तु शक्तिज्ञानेपि तथैव विषयत्वौचित्यात्।

**जातिप**दमखण्डोपाधिप्रमेयत्वादिपरम्। अथवा **सार्वज्ञ्ये**त्यत्र सर्वपदमखिलजात्याश्रयपरम्। तेन जातित्वेन सकलजात्यवगाह्यनुभवस्य तज्जन्यशुद्धतत्तज्जातिप्रकारकस्मरणस्य सत्त्वेपि जात्यादिषु जातिविरहात्तेषां तद्विषयत्वविरहेण सर्वविषयकज्ञानवत्त्वरूपसर्वज्ञत्वप्रसज्जनस्य नासङ्गतिः। सर्वत्र सर्वपदस्याशेषवाचकतानियमस्य "चान्द्रायणेन चीर्णेन सर्वपापक्षयो भवेत्" इत्यत्र सर्वपदस्य महापातकातिपातकभिन्नोपपातकवाचकत्वस्यैव तत्र तत्र निबन्धे सिद्धान्तितत्वेनाप्रयोजकत्वादिति। निरवच्छिन्नप्रकारताकस्मरणं प्रति समानप्रकारताकस्य निरवच्छिन्नप्रकारतानिरूपकस्वरूपस्यानुभवस्य कारणत्वे तु निरवच्छिन्नतत्तज्जातिप्रकारताकानुभवस्यास्मदादीनामसम्भवान्न सर्वज्ञत्वमित्याशयः।

शक्तिज्ञानस्य यत्रासम्भवेपि दशरथपदवाच्यत्वावच्छिन्ने दशरथपदस्य लक्षणाज्ञानं भविष्यति तेनैवान्वयबोधः स्यादित्यपि न युक्तिसहमित्याह— **दशरथेति। नापी**त्यस्य **लक्षणे**त्यनेनान्वयः। लक्षणाया अभावे बीजमाह— **शक्तिज्ञानस्येवेति।** यथा शक्तिज्ञानस्य शक्यतावच्छेदकाज्ञानेसम्भवः प्राक् प्रतिपादितस्तथा लक्षणाज्ञानस्यापीत्यर्थः। शक्तेः पदतदर्थोभयाघटितायाश्शक्यतावच्छेदकं विना दुर्निरूपत्वात्तज्ज्ञाने शक्यतावच्छेदकज्ञानमावश्यकम्।

लक्षणाज्ञाने तु शक्यतावच्छेदकाघटितस्य सङ्केतत्वमात्रेणैव सङ्केतस्य विषयत्वमिति न तत्र शक्यतावच्छेदकज्ञानापेक्षेत्यपि न सम्भवतीत्याह—**सङ्केतत्वेनैवे**त्यादिना। **विषयत्वौचित्यादिति।** अयम्भावः—लक्षणाज्ञानस्य यदि सङ्केतत्वमात्रावच्छिन्नसङ्केतविषयकत्वम्, तदा शक्तिज्ञानस्यापि कुतो न तादृशत्वम्, तत्रान्यधर्म्मावच्छिन्ननिरूपितशक्तिज्ञानादन्यधर्म्मप्रकारकान्वयबोधस्य वारणाय शक्यतावच्छेदकनिवेशस्यावश्यकत्वे तु एकधर्म्मावच्छिन्नसम्बन्धज्ञानादपरधर्म्मप्रकारकस्य तस्य वारणायैव लक्षणाज्ञानेपि तदावश्यकमिति।

---

* न च इति मु० पु० पा०।

**ताद्दशस्य सङ्केतसंसर्गकस्य निर्द्धर्म्मितावच्छेदककस्य पदप्रकारकग्रहस्य तथैव स्मरणं प्रति संस्कारद्वारा क्लृप्तकार्य्यकारणभावेनैव निर्वाहः ।**

***दार्शनिकानाम्मते तु दशरथपदवाच्यत्वाद्यवच्छेदेन दशरथपदलक्षणागोचरस्य संस्कारस्य कार्य्यकारणभावान्तरं कल्प्यमिति गौरवम् ।**

**एवं †गौर्गोपदवाच्य इत्याकारकसधर्म्मितावच्छेदककशक्तिग्रहस्य तदाहितसंस्कारस्य वा ताद्दशस्मरणे क्लृप्त एव कार्य्यकारणभावो न तु**

"भू सत्तायाम्" इत्यत्रोक्तरीत्या लक्षणाज्ञाने शक्यतावच्छेदकज्ञानस्यानावश्यकत्वेप्यन्वयबोधस्य वृत्तिज्ञानसमानाकारकत्वानुपगमे दार्शनिकानां कार्य्यकारणभावानामतिरिक्तानां कल्पने गौरवं दर्शयति—**ताद्दशस्येत्या**दिना । **ताद्दशस्य** दशरथपदवानित्याकारकस्य । **तथैव स्मरणमिति** । ताद्दशवृत्तिसमानाकारकं स्मरणमित्यर्थः । **क्लृप्तेति** । स्मरणं प्रति समानविषयकानुभवस्य स्वजन्यसंस्कारद्वारा सामान्यत एवोभयमतेपि क्लृप्तः कार्य्यकारणभावस्तेनैवात्रापि स्मरणस्य वृत्तिज्ञानसमानविषयकत्वान्निर्व्वाहः । दार्शनिकान्तु स्मरणस्य तदसमानविषयकतया नोक्तकार्य्यकारणभावेन निर्व्वाहः, किन्तु गोविषयकस्मरणं प्रति गोपदवान् गौरित्याकारकज्ञानस्य पृथगेव कारणत्वं कल्पनीयमिति गौरवमित्याशयः ।

उक्तस्थले लक्षणाज्ञानस्य कारणत्वान्तरकल्पने गौरवं प्रदर्श्य सर्वत्र शाब्दिकमते क्लृप्तेनैव तेन निर्व्वाहः, कुत्राप्यनुभवासमानविषयकस्य स्मरणस्यानुपगमादित्याह—**एवमित्यादिना** । **संस्कारस्य वेति** । स्वजन्यसंस्कारवत्त्वेनानुभवस्य समवायेन तदनुभवजन्यसंस्कारस्य च विनिगमनाविरहेण स्मरणं प्रति कारणत्वाभिप्रायेणोभयमुक्तम् । **ताद्दशस्मरणे** गोपदवान् गौरित्याद्याकारकवृत्तिज्ञानसमानाकारकस्मरणे । **क्लृप्त एवेति** । तदनुभवस्य तत्समानविषयक-

---

* दर्शितमते तु इति मु० पु० पा० ।

† गौर्गोपदवाच्येति सधर्म्मितानच्छेदक इति मु० पु० पा० ।

**शुद्धायां गौरिति स्मृतावतिरिक्तकारणताकल्पनं युज्यते ।**

**सङ्केतसंसर्गेण या दशरथपदत्वावच्छिन्ना प्रकारता तदतिरिक्तप्रकारत्वानिरूपितविशेष्यताकपदार्थप्रतिसन्धानस्य † तादृशानुभवे तादृशगोपदत्वावच्छिन्नप्रकारतानिरूपितगोत्वावच्छिन्नविशेष्यताकनिश्चयस्य च तादृशान्वयबुद्धौ ताद्रूप्येण कारणत्वम् , न तु गोपदप्रतिसन्धानजन्या**

स्मरणं प्रतीत्यादिः । एवकारेण तादृशकार्य्यकारणभावस्योभयमतसिद्धत्वं सूचितम् । **न तु शुद्धायां गौरि**ति । गवांशे गोत्वेतरानवगाहिन्यामित्यर्थः । **युज्यत** इति । उक्तस्मृतेर्वृत्तिज्ञानसमानाकारकत्वाभावात् क्लृप्तकारणताभिन्नं तत्रोक्तवृत्तिज्ञानस्य तज्जन्यसंस्कारस्य वा कारणत्वं दार्शनिकैः कल्पनीयं तच्च गौरवादयुक्तमित्यर्थः ।

ननु स्मरणानुभवयोः कार्य्यकारणभावे विषयप्रवेशस्यावश्यकत्वमन्यथान्यविषयकानुभवादन्यविषयकस्मरणापत्तेर्विषयाणाञ्चानुगमस्यासम्भवाद्विषयनिष्ठ - प्रत्यासत्त्या कार्य्यकारणभावस्योपगमेन्यपुरुषीयतद्विषयकानुभवादन्यस्य स्मरणापत्तेः । तत्पुरुषीयत्वनिवेशे लाघवानकाशात्प्रत्येकविषयके स्मरणेनुभवस्य समानविषयकस्य कारणत्वं पर्य्यवसितमिति गोपदवान् गौरिति वृत्तिज्ञानस्य गौरित्याकारकस्मरणे कारणत्वापेक्षया गोपदवान् गौरितिस्मरणे कारणत्वे कार्य्यतावच्छेदकगौरवं शाब्दिकानामित्यतः कारणतावच्छेदकेधिकविषयप्रवेशेन महागौरवं शाब्दज्ञानस्य शाब्दज्ञानान्तरकारणत्वानुपपत्तिः पर्य्यायपदान्तरज्ञानजन्यशाब्दबोधे व्यभिचारश्च दार्शनिकानामिति स्वमतेल्पपदार्थघटितकारणताप्रदर्शनपूर्वकं दर्शयति—**सङ्केतसंसर्गेणेत्यादिना** । विशेष्यतायामनिरूपितान्तं वृत्तिज्ञानान्वयबोधयोः समानाकारकत्वज्ञापनार्थम् । निर्द्धर्म्मितावच्छेदककवृत्तिज्ञानान्वयबोधयोः कार्य्यकारणभावं प्रदर्श्य सधर्म्मितावच्छेदककयोस्तमाह— **तादृशगोपदेति** । तादृशी गोपदत्वावच्छिन्नप्रकारताभिन्नप्रकारत्वानिरूपिता गोत्वावच्छिन्नविशेष्यतेत्यन्वयः । न तु दार्शनिकमतसिद्धस्तयोः कार्य्यकारणभाव

---

† तादृशान्वयानुभवे इति मु० पु० पा० ।

**गवि गोपदसंस्कारजन्या च या गोत्वावच्छिन्नस्मृतिस्तस्यास्तत्त्वेन गोत्वावच्छिनानुभवे कारणता, अवच्छेदकगौरवात् ।**

**शाब्दपदार्थज्ञानस्य *विशिष्टशाब्दबुद्ध्यजनकत्वप्रसङ्गात् । शाब्दबोधे संस्कारकारणताकल्पने गौरवात् सुरभिपदजन्यगवानुभवे लाघवेतरबाधाद्युपनीतगोत्वविशिष्टानुभवे च व्यभिचारप्रसङ्गात् ।**

इत्याह—**न तु गोपदेत्या**दिना। **तत्त्वेन** तादृशसङ्केतसंस्कारोभयजन्यस्मृतित्वेन। अत्र बीजमाह—**अवच्छेदकगौरवादिति** । जन्यत्वादीनामधिकानां कारणतावच्छेदकघटकत्वादित्याशयः ।

शाब्दबोधस्य गवाद्यर्थमात्रविषयकत्वे सिद्धे कार्य्यतावच्छेदके लाघवरूपफलमुखत्वेनोक्तगौरवन्न दोषावहमित्यत आह—**शाब्देति** । अवान्तरवाक्यार्थबोधानन्तरमहावाक्यार्थबोधानुदयप्रसङ्गस्तत्र तदुभयजन्यस्मरणविरहादित्याशयः। ननु तादृशस्मृतिजनकसंस्कारस्य स्थिरत्वात्, तन्नाशस्य चरमफलोत्पादानन्तरमेवोपगमात्तेनैव महावाक्यार्थबोधस्स्यादित्यत आह—**शाब्दबोध** इति। **गौरवादिति** । संस्कारस्यापि स्मरणं प्रत्येव क्लृप्तः कार्य्यकारणभावो न तु शाब्दं प्रत्यपीति तत्कल्पनं गौरवग्रस्तमेवेत्यर्थः ।

संस्कारस्य स्मृतित्वावच्छिन्नकारणत्वं शाब्दबोधादिव्यावृत्तं तदैव सम्भवति यदि स्मरणमात्रवृत्तिस्मृतित्वजातिस्स्यात्, तदेव न, चाक्षुषत्वादिना सङ्करात्। "गुणगतजातौ न साङ्कर्य्यम्" इति प्रवादो निर्युक्तिकत्वादसिद्धः, अयं घट इत्यादिप्रत्यक्षे स देवदत्त इत्यादिस्मरणे तयोरभावस्य सोयं देवदत्त इत्यादिप्रत्यभिज्ञायां सामानाधिकरण्यस्य सत्त्वादित्यनुभवान्यज्ञानत्वमेव स्मृतित्वम् । तच्च न संस्कारजन्यतावच्छेदकम्, तदपेक्षया लघुभूतस्यातिप्रसङ्गाद्यनापादकस्य ज्ञानत्वस्यैव तथात्वौचित्यादिति शाब्दबोधे संस्कारस्य कारणत्वन्नाधिकं कल्पनीयमिति नोक्तगौरवमत आह—**सुरभिपदजन्येति** । गवादिपदपर्य्यायशब्दान्तरजन्येत्यर्थः । गोपदज्ञानस्य तत्राभावाद् व्यभिचारो बोध्यः। **लाघवेतरबाधाद्युपनीतेति** । यत्र सङ्केतसंसर्गेण द्रव्यपदवद् द्रव्यमिति वृत्तिज्ञानं गोत्वप्रकारकशाब्दबोधे लाघवमिति लाघवज्ञानं गोत्वेतरधर्म्माभाव-

---

* तादृशविशिष्टबुद्ध्यजनकत्वप्रसङ्गात् इति मु० पु० पा० ।

**गोपदजन्यगोस्मरणनाशकानुभवत्वस्याव्यहितोत्तरत्वसामानाधिकरण्योभयसम्बन्धेन तादृशस्मरणविशिष्टानुभवत्वस्य वा विनश्यदवस्थतादृशस्मरणजन्यगवानुभवाव्यापकत्वाद्, विभिन्नक्षणिकयोर्वैशिष्ट्यविरहाद्, विनश्यदवस्थस्मृतीनां तत्तद्व्यक्तित्वेन हेतुत्वे चाति-**

वद् द्रव्यमितीतरबाधनिश्चयो वा तत्र गौरित्याकारकस्यैव शाब्दबोधस्योदयेन गोपदज्ञानस्य तत्राभावाद् व्यभिचारो बोध्यः।

उक्तव्यभिचारद्वयवारणाय कारणाव्यवहितोत्तरत्वं कार्य्यतावच्छेदके विशेषणीयमित्यपि निरसितुमाह—**गोपदजन्येति**। गोशाब्दबोधस्य स्मरणनाशकत्वं योग्यविभुविशेषगुणनाशे स्वोत्तरवर्त्तितादृशगुणस्य कारणत्वादेव। तत्र च नाशजनकत्वस्य कार्य्यतावच्छेदकत्वे गौरवादव्यवहितोत्तरत्वमेव लघुभूतं तथात्वेनोपेयम्। तत्रापि विभिन्नपुरुषीयतादृशस्मरणाव्यवहितोत्तरत्वस्योक्तशाब्दबोधयोरपि सत्त्वात्तावन्मात्रमकिञ्चित्करमेवेत्यनुशयेनाह—**अव्यवहितोत्तरेति**। चिरान्तरितस्मरणेन शाब्दबोधवारणायाद्यस्य विभिन्नपुरुषीयस्मरणविशिष्टत्ववारणाय द्वितीयस्य निवेशः। प्रकृते च गोशाब्दबोधस्य गोपदज्ञानजन्यस्मरणाव्यवहितोत्तरत्वाभान्न व्यभिचार इति भावः। **विनश्यदवस्थेति**। उत्पत्तिद्वितीयक्षणवृत्तीत्यर्थः। **गवानुभवाव्यापकत्वा**दिति। यत्र भाविज्ञानमप्रमेति प्रथमक्षणे स्मृतिविशेष्यकमप्रामाण्यज्ञानं तदुत्तरं गोपदज्ञानात्पूर्वकालीनाद् गोत्वप्रकारिका स्मृतिस्तस्यास्तत्क्षणेऽप्रामाण्यज्ञानास्कन्दितत्वान्न तदुत्तरक्षणे शाब्दबोधः, किन्तु यत्स्मृतिस्थितिक्षणाव्यवहितोत्तरक्षण एव; अप्रामाण्यज्ञानस्य तदव्यवहितपूर्वक्षणेऽभावात्तथा च तादृशानुभवस्य तादृशस्मृत्यव्यवहितोत्तरत्वाभावात्तज्जन्यत्वं न स्यादिति भावः। अनुभवाव्यापकत्वमनुभवावृत्तित्वमात्रं विवक्षितं तादात्म्येन स्वसामानाधिकरण्यघटितं वा। तेनानुभवत्वस्य समवायेनानुभवाव्यापकत्वस्येष्टत्वेपि नासङ्गतिः। **विभिन्नक्षणिकयोरिति**। विभिन्नक्षणवृत्तिकयोरित्यर्थः। तेन विभिन्नक्षणयोरप्यव्यवधानेनोत्पन्नद्वितीयक्षणे वैशिष्ट्यस्य सत्त्वेपि नासङ्गतिः। **वैशिष्ट्यविरहादिति**। उक्तोभयसम्बन्धेनोक्तस्मरणवैशिष्ट्यस्य गोत्वप्रकारके तस्मिन् शाब्दबोधेऽभावादित्यर्थः। विनश्यदवस्थस्मृतीनामपि तत्तद्व्यक्तित्वेन कारणत्वे चातिगौरवमित्याह—**विनश्यदवस्थेति**। **अति-**

**गौरवात् ।**

**तस्माद् गोत्वावच्छेदेन सङ्केतसंसर्गेण गोपदवत्ताग्रहस्य *विशेषण-विशेष्यतावच्छेदकप्रकारकनिश्चयविधया गोपदवानयं गौरस्तीत्यादि-पदजन्यानुभवे क्लृप्तेन कार्य्यकारणभावेन निर्वाहादतिरिक्तकार्य्यकारण-भावकल्पने गौरवाद् वृत्तिग्रहतुल्यविशेष्यताक एव शाब्दबोधो युक्तः ।**

**गौरवादिति ।** तत्तद्व्यक्तीनामनन्तत्वादित्याशयः । असर्वज्ञदुर्ज्ञेयत्वस्यापीद-मुपलक्षकम् ।

उक्तरीत्याक्लृप्तकार्य्यकारणभावानामनन्तानामधिकगुरुतरशरीराणां कल्पने गौरवं प्रदर्श्य स्वमतमुपसंहरति—**तस्मादित्या**दिना । **युक्त** इत्यग्रिमेणान्वयः । **क्लृप्तेने**ति । विशिष्टवैशिष्ट्यावगाहिज्ञाने विशेष्यतावच्छेदकप्रकारकस्य विशेष-णतावच्छेदकप्रकारकस्य च निश्चयस्य कारणताया दार्शनिकैरपि क्लृप्तत्वम् । अन्यथा गोपदादिज्ञानाभावेपि गोपदवानयं गौरस्तीत्यादिवाक्याच्छाब्दबोध-प्रसङ्गः । तद्वारणाय दार्शनिकैर्विशेष्यतावच्छेदकनिश्चयविधया क्रियाविशेष्य-कान्वयबोधवादिभिश्शाब्दिकैर्विशेषणतावच्छेदकज्ञानविधया गोपदवानयं गौर-स्तीत्याकारकज्ञानसामान्यं प्रत्येव गोपदवानयं गौरित्याद्याकारकनिश्चयस्य कारणतायाः क्लृप्तत्वात्तेनैव गौरस्तीत्यादावपि गोपदवान् गौरस्तीत्याद्याकार-कस्य वृत्तिज्ञानसमानाकारकस्य निर्वाहादित्यर्थः । अत्र विशेषणपदस्य बह्वच्क-त्वेपि पूर्वनिपातः प्रागुक्तयुक्त्या साधुः । अथवा शाब्दिकमते गोपदादीनां विशेष-णतावच्छेदकत्वस्यैव मुख्यत्वादभ्यर्हितत्वात्तस्य पूर्वनिपातो बोध्यः । गोपद-वानयमित्यादेर्वाक्यत्वेन पदत्वोक्तिरपि शाब्दिकानामखण्डस्फोटवादिनान्नानु-पपन्ना । **अतिरिक्तेति ।** गोत्वमात्रप्रकारकशाब्दबोधजनके गोत्वमात्रप्रकार-कस्मरणे गोपदवानयं गौरित्याकारकवृत्तिज्ञानस्य कारणताया अक्लृप्तायाः कल्पने गौरवादित्यर्थः ।

**वृत्तिग्रहतुल्यविषयताक** इति । सर्वत्र ज्ञाने समानविषयताकत्वं तदीयमुख्यविशेष्यताविशिष्टमुख्यविशेष्यतानिरूपकत्वम् । वैशिष्ट्यञ्च स्वानवच्छेद-कधर्म्मानवच्छिन्नत्वस्ववृत्तित्वस्वसामानाधिकरण्यस्वनिरूपितविषयतात्वावच्छिन्न-

---

* विशेषणविशेष्यतावच्छेदकप्रकारताकनिर्णयविधया इति मु० पु० पा० ।

* कोषव्याकरणव्यवहारादिजनितः शाब्दबोधानुमित्यादिरूप इव सङ्केतग्रहः प्रात्यक्षिकोप्यन्वयबोधाङ्गम्, यदि विद्यते पदयोराकाङ्क्षादिग्रहः सहकारी। अतएव शाब्दबोधानन्तरमपि शाब्दबोधान्तरं नानुपपन्नम्, प्रथमशाब्दबोधस्यापि पदवृत्तिमत्पदार्थविषयकत्वात्।

प्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वैतच्चतुष्टयसम्बन्धेन। वृत्तित्वद्वयं क्रमेण स्वानवच्छेदकधर्म्मानवच्छिन्नत्वस्वनिरूपितविषयतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वाभ्यां बोध्यम्। प्रथमसम्बन्धार्थश्च—अवच्छेदकत्वसंसर्गावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धर्म्मानवच्छिन्नत्वम्। तेन स्वत्वस्य परिचायकमात्रतया सम्बन्धाघटकत्वादनवच्छेदकधर्म्मस्याप्रसिद्धिर्न्निरवच्छिन्नविशेष्यताके ज्ञाने स्वावच्छेदकाप्रसिद्ध्याऽव्याप्तिश्चेति दोषद्वयस्यानवकाशः। सम्बन्धानां व्यावृत्तिश्च निर्द्धर्म्मितावच्छेदककगोपदवत्त्वेन गवावगाहिगोपदवदिति ज्ञानतुल्यविषयताकत्वस्य गोपदवान् गौरिति ज्ञाने एतत्तुल्यविषयताकत्वस्य तज्ज्ञाने गोपदवत्त्वेनाश्वावगाहिज्ञानतुल्यविषयताकत्वस्य गोपदवत्त्वेन गवावगाहिबोधे गोपदवान् गौरिति ज्ञानतुल्यविषयाकत्वस्य सुरभिपदवानिति ज्ञाने वारणाय यथाक्रमं बोध्या। उक्तसमानविषयताकत्वनियमश्च लाघवेतरबाधाद्युपनीतगोत्वाद्यविषयक एव शाब्दबोधे नातस्तत्र व्यभिचारः।

शाब्दबोधानुमित्यादिरूपवृत्तिज्ञानस्य दार्शनिकैरप्यन्वयबोधाङ्गत्वस्योपगमात् प्रत्यक्षात्मकस्यापि तस्य तत्त्वमित्याह—**कोषव्याकरणादी**त्यादिना। **प्रात्यक्षिकोप्येति**। अलौकिकप्रत्यक्षस्वरूपोपनीतयर्थः। ठक्प्रत्ययः स्वार्थे, गवाद्यंशे चक्षुरादिरूपप्रत्यक्षकरणजन्यत्वाद् भवार्थेपि वा बोध्यः। **अतएव** वृत्तिज्ञानतुल्यविषयताकत्वस्य शाब्दबोधेऽभ्युपगमादेव। **नानुपपन्नमिति**। प्रत्यक्षधाराया इव शाब्दबोधधाराया अप्यनुभवसिद्धत्वेन प्रथमशाब्दबोधानन्तरं द्वितीयादिशाब्दबोधो दार्शनिकमते न स्यात्, वृत्तिज्ञानस्य तदानीमभावादस्मन्मते च प्राथमिकशाब्दबोधस्यैव वृत्तिविषयकत्वान्न तदनुपपत्तिरिति भावः।

---

* कोषव्याकरणव्यवहारादिजनित इति मु० पु० पा०।

नन्वेवं[1] दशरथपदवानिति निर्द्धर्म्मितावच्छेदककप्रतिसन्धानस्य यदि सङ्केतसंसर्गावच्छिन्नदशरथपदप्रकारताकत्वेन कारणता, तर्ह्यसौ दशरथपदवान्नवा वस्तु सङ्केतसंसर्गेण दशरथपदवन्न वेत्यादिसंशयादपि शाब्दबोधप्रसङ्गः ।

यदि च सङ्केतसंसर्गावच्छिन्नदशरथपदप्रकारताभिन्नप्रकारत्वा-निरूपितविशेष्यताकत्वेन,[2] तदा दशरथो दशरथपदवानिति ग्रहजनिते[3] तथाविधान्वयबोधे व्यभिचारः । यदि च जन्यतावच्छेदककुक्षावपि दशरथपदवृत्तिताद्दशावच्छेदकताभिन्नावच्छेदकत्वानिरूपकस्य ताद्दश-

निर्द्धर्म्मितावच्छेदककज्ञानस्य कारणत्वे संशयादपि शाब्दबोधप्रसङ्ग इत्याशङ्कते—**नन्वेवमि**त्यादिना । निर्द्धर्म्मितावच्छेदककत्वस्य संशयेसम्भवाद-साविति **वस्त्वि**ति, चोक्तम् । उभयोपादानञ्च संशययोर्व्याप्यव्यापकधर्म्मा-वच्छिन्नत्वेन वैलक्षण्यप्रदर्शनार्थम् । **शाब्दबोधप्रसङ्ग** इति । उक्तसंशययोरपि सङ्केतसंसर्गेण दशरथपदप्रकारताकत्वादिति भावः ।

उक्तातिप्रसङ्गवारणाय ताद्दशनिश्चयत्वेन कारणत्वं वाच्यमित्याह—**यदि चेति** । संशयीयप्रकारतायास्ताद्दशप्रकारताभिन्नाभावप्रकारतानिरूपितत्वाद् व्युदासो बोध्यः । **व्यभिचार** इति । तद्विशेष्यतायास्ताद्दशप्रकारताभिन्नदशरथत्व-प्रकारतानिरूपितत्वादुक्तकारणतावच्छेदकत्वासम्भवात् । न च तत्र दशरथत्व-प्रकारतानिरूपितायाः दशरथपदप्रकारतानिरूपितायाश्च विशेष्यतायाः निर-वच्छिन्नत्वसावच्छिन्नत्वरूपविरुद्धधर्म्मवत्त्वाद् भेदः, समानाधिकरणविषयतयोर-भेदादित्याशयः ।

उक्तव्यभिचारवारणायाह—**यदि चेति** । **ताद्दशावच्छेद-कतेति** । सङ्केतसंसर्गावच्छिन्नावच्छेदकतेत्यर्थः । दशरथपदवानिति बोधस्य दशरथपदवत्त्येकत्वप्रकारतानिरूपकत्वाद्दशरथपदे तदीयविशेष्यतावच्छेदकत्वं

---

१ ननु इत्येव पा० मु० पु० ।

२ ०दशरथप्रका०—मु० पु० पा० ।

३ ग्रहजनिते इति मु० पु० पा० ना० ।

अतएव तादृशस्थले गोत्वावच्छेदेन गोपदवाच्यत्वग्रहकारणताया[1] न व्यभिचारः। नापि सुरभिपदेन गोशाब्दबुद्धौ जन्यमानाया- मितरबाधाद्युपनीते गोपदवाच्यत्वे, इतरबाधाद्युपनीतस्य[2] विषयतान- वच्छेदकत्वात् ।

अतएवानुमितावपि विधेयांशे लाघवाद्युपनीतो महानसीय- त्वादिर्न्न विधेयतावच्छेदक इति शुद्धवह्निमत्तासिद्धिकालेपि तथा- विधानुमितिः। न च तथाविधानुमितिस्थले भिन्नविषयकप्रत्यक्षादि-

समानाधिकरणयोरपि तयोर्भेदादेव न शाब्दबोधीयविशेष्यतायास्तत्र गोत्वावच्छिन्नत्वमित्याशयः ।

अतएव तद्विशेष्यतयोर्भेदादेव। न व्यभिचार इति। तादृशान्वव- बोधस्यापि गोपदमात्रावच्छिन्नविशेष्यताकत्वेन गोपदज्ञानजन्यतावच्छेदका- क्रान्तत्वात् ।

पर्य्यायशब्दान्तरज्ञानजन्यबोधस्याप्युपनीतगोपदवाच्यत्वप्रकारताकत्वेपि गोपदवाच्यत्वस्योपनीततया विशेष्यतानवच्छेदकत्वात्तत्रापि न व्यभिचार इत्याह—नापि सुरभीति। इतरबाधाद्युपनीते गोपदवाच्यत्वे सुरभिपदेन जन्यमानायां शाब्दबुद्धौ न व्यभिचार इत्यन्वयः। वाच्यत्व इति सप्त- म्यर्थः प्रकारत्वं निरूपकत्वेन शाब्दबोधान्वयि, अथवावच्छेदकत्वं तदर्थस्तस्य च व्यभिचारेन्वयाद् गोपदवाच्यत्वावच्छेदेन न व्यभिचार इत्यर्थः ।

न केवलं शाब्दबोधे लाघवज्ञानाद्युपनीतधर्म्मस्य विषयतानवच्छेदकत्वं किन्त्वनुमितावपीत्याह—अतएवेति । लाघवज्ञानाद्युपनीतधर्म्मस्य ज्ञानीय- विषयतानवच्छेदकत्वादेवेत्यर्थः। न तथाविधानुमितिरिति । वह्निव्याप्य- धूमवान् पर्वत इति परामर्शान्महानसीयवह्नीतरवह्न्यभाववान् पर्वत अनुमिते- र्म्महानसीयविषयकत्वे लाघवमित्यादिज्ञानसहकृताज्जायमाना महानसीयवह्नि- मानित्यनुमितिः वह्निमान् पर्वत इति साध्यनिश्चयकालेपि न जायत इत्यर्थः। महानसीयत्वस्य तत्र विधेयतावच्छेदकत्वे तु वह्नित्वमात्रावच्छिन्नप्रकारता-

१ ग्रहकारणतायाम् इति मु० पु० पा० ।

२ ०बाधोपनी०–पु० पु० पा० ।

**प्रतिबन्धाय लाघवादिज्ञानघटिता पृथक् सामग्री ।**

**अवश्यश्च दार्शनिकैरपि तादृशस्थले विशेषणविशेष्यतावच्छेदकप्रकारकनिश्चयकारणताव्यभिचारवारणाय[1] कोपि प्रकार आदरणीयः । नहि मया विशेषणविशेष्यतावच्छेदकप्रकारकनिश्चयकारणत्वादन्यद्वृत्तिमत्पदार्थोपस्थितेः[2] कारणत्वमुररीक्रियते ।**

शालिनिश्चयस्य महानसीयत्ववह्नित्वोभयावच्छिन्नविधेयताकानुमितिं प्रति प्रतिबन्धकत्वविरहात्तदानीं तादृशानुमित्युत्पादप्रसङ्ग इत्याशयः । **पृथक् सामग्रीति ।** भिन्नविषयकप्रत्यक्षं प्रत्यनुमितिसामग्र्याः प्रतिबन्धकतयोक्तस्थले वह्नित्वावच्छिन्नविधेयताकानुमितिसामग्रीत्वेनैव महानसीयवह्निमानित्यनुमितिसामग्र्या लाघवज्ञानादिघटिताया अपि स्वभिन्नघटादिविषयकप्रत्यक्षप्रतिबन्धकत्वम्, न तु महानसीयत्ववह्नित्वोभयावच्छिन्नविधेयताकानुमितिसामग्रीत्वेन तस्याः पृथक् तथात्वमित्यर्थः ।

लाघवज्ञानाद्युपनीतधर्म्मेषु तत्तज्ज्ञानीयायाः प्रकारतायास्सत्त्वेपि विषयतानवच्छेदकत्वं तेषामुपगम्योक्तव्यभिचारवारणप्रकारोपि दार्शनिकमतसाधारण्या विशिष्टवैशिष्ट्यावगाहिबुद्धिनिरूपिताया विशेषणतावच्छेदकादिप्रकारकनिश्चयकारणताया लाघवज्ञानाद्युपनीतगोत्वमहानसत्वादिविशिष्टवैशिष्ट्यावगाहिन्या विशेषणतावच्छेदकगोत्वादिप्रकारकनिश्चयानुत्तरायां बुद्धौ व्यभिचारस्य वारणायादरणीयेन प्रकारेण तुल्य एवेत्याह—**अवश्यश्चे**त्यादिना । **तादृशस्थले** लाघवज्ञानाद्युपनीतगोत्वमहानसीयत्वादिप्रकारकान्वयबोधानुमित्योः ( वर्त्तमानत्वे ) । **कोपि प्रकार आदरणीय** इति । कारणानन्तर्य्यस्य कार्य्यतावच्छेदकत्वं तादृशबुद्ध्योर्गोत्वादिविशिष्टवैशिष्ट्यानवगाहित्वं वावश्यमेव कल्पनीयमित्यर्थः । तथा चास्माभिस्तत्र गोत्वादौ विषयतानवच्छेदकत्वमुपेयते, तैश्च तयोर्विशिष्टवैशिष्ट्यानात्मकत्वं कारणानन्तर्य्यस्य कार्य्यतावच्छेदकत्वं वोपेयत इत्युभयोरपि विलक्षणप्रकारकल्पना समैवेति भावः ।

दार्शनिकैर्गोत्वादिप्रकारकशाब्दबोधं प्रति वृत्तिज्ञानादीनां पृथक्कारणत्वं कल्प्यते, अस्माभिस्तु तन्मतसाधारणविशेषणतावच्छेदकादिप्रकारकनिश्चयकारणत्वेनैकेनैव शब्दबोधस्यापि निर्वाहः क्रियत इत्यपि लाघवमस्माकमित्याह—**नहि मये**त्यादिना ।

---

१ ०परिहाराय–मु० पु० पा० । २ ०निर्णयकारण०–मु० पु० पा० ।

**एवं कोषानुमानादिजनितपदधर्म्मिकपदार्थवाचकताग्रहस्य न साक्षात्पदार्थशाब्दबोधोपयोगः, किन्तु पदार्थे पदवाच्यताग्राहकम्मानान्तरमुत्थाप्य[1] ।**

एवं "मृगे कुरङ्गवातायुहरिणा"...इत्यादिकोषेण "कर्त्तरि कृत्" "भू सत्तायाम्...इत्यादिव्याकरणेन व्यवहारादिना वा यत्र पदधर्म्मिकः पदार्थवाचकताग्रहस्तत्र तज्जन्योपस्थितितो जायमानस्य शाब्दबोधस्य वृत्तिज्ञानासमानाकारकत्वस्यासम्भवेन तदर्थं पृथक्कारणताकल्पनमपि नास्माकम्, वाचकताग्रहस्य शाब्दबोधे वाच्यताज्ञानोत्थापकत्वादेवोपयोगो न तु स्वजन्योपस्थितिद्वारा शाब्दबोधकारणत्वादिति तत्रापि गोपदवानयं गौरस्तीत्याद्याकारकवृत्तिज्ञानसमानाकारक एव शाब्दबोध इत्युपगमादित्याह—**एवं कोषानुमानादी**त्यादिना । **साक्षादिति** । समवायेन शाब्दबोधं प्रति स्वजन्योपस्थितिमत्त्वसंसर्गेणेत्यर्थः । **मानान्तरमुत्थाप्येति । उपयोग** इति पूर्वेणान्वितम् । गोपदवान् गौरित्यादिज्ञानजनकं यद् विशेषणादिज्ञानं तज्जनकमेव वाचकताज्ञानमित्यर्थः ।

अत्र विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकादीनां ज्ञानमात्रमपेक्षितम्, न तु तद्विशिष्टविशेषणावगाहित्वेन विशेषणतावच्छेदकविशेषणोभयाद्यवगाहित्वेन वा तज्ज्ञानं तथा, क्षित्यङ्कुरं सकर्तृकं कार्य्यत्वादित्यनुमानेन कर्त्तुरेकत्वे लाघवमित्यादिज्ञानसहकृतेनैकत्वविशिष्टस्य कर्त्तुः पूर्वमज्ञानेपि क्षितिरेककर्तृकेत्यनुमितेस्सर्वसिद्धत्वात् । तादृशज्ञानानां क्षणिकत्वात्तृतीयक्षणे नाशावश्यम्भावात्तज्जन्यसंस्काराणामेव स्मरणकारणत्वम् । एवमिच्छादिजनकविशिष्टज्ञाननाशेपि रक्तत्वादिविशिष्टदण्डादिप्रकारेण रक्तदण्डमिच्छामि द्वेष्मीत्याकारकेच्छाद्वेषसाक्षात्कारयोरुत्पादेन तत्रापि विशेषणतावच्छेदकादिनिश्चयस्य तादृशत्वेन कारणत्वासम्भवाद् गोवाचकं गोपदमित्यादिज्ञानादपि गोपदवानयं गौरस्तीतिशाब्दबोधो नानुपपन्नः । एवं तस्य कारणत्वोपगमेपि तादृशनिश्चयत्वेन तस्य तथात्वस्येच्छाद्वेषादिसङ्ग्रहानुपपत्त्यसम्भवात् संशयान्यत्वेनैव तथात्वं वाच्यमिति प्रकृतेपि वाच्यताविषयकसंस्कारादिकमादायैव तादृशशाब्दबोधो नानुपपन्नः । अथवा निश्चयत्वघटकयोस्तदभावाप्रकारकत्वतत्प्रकारकत्वयोर्विशेष्यविशेषणभावविनिगमनाविरहेण कारणताधिक्याप्रसङ्गात्तद्विशिष्टवैशिष्ट्यबुद्धौ तदभावप्रकारकत्वेन तत्संशयस्य प्रतिबन्धकत्वोपगमादेव तत्संशये तद्विशिष्ट-

१ उत्थाप्यते—मु० पु० पा० ।

यदि विशेषणविशेष्यतावच्छेदकविशेषणाद्युभयवैशिष्ट्यावगाहि-निश्चयत्वेन विशिष्टवैशिष्ट्यबुद्धौ न कारणत्वसम्भवः तदा वाचकताग्रहस्तु पदशाब्दबुद्धावेव साक्षादुपयुज्यते ।

गामुच्चारयेत्यादौ गोपदार्थवाचकं किञ्चित्पदार्थवाचकं वा गोपदं तत्कर्म्मकं त्वत्कर्तृकम् आशंसाविषय उच्चारणमिति वाक्यार्थबोधे

वैशिष्ट्यबोधस्यानुपपत्तिः। यत्र च संशयद्वितीयक्षणे स्मरणादिरूपस्तन्निश्चयस्तत्र संशयनाशोत्तरमेव विशिष्टवैशिष्ट्यबोधोत्पाद इति। अथवा दण्डो रक्तो नवेति संशयानन्तरं रक्तदण्डवानिति निश्चयानुत्पादो विशेषणसन्देहे विशिष्टसन्देह-स्यैवौचित्यावर्जितत्वात्तन्निश्चयोत्पत्तौ तत्संशयसामग्र्यभावस्यापेक्षितत्वादेव सिद्ध इति निश्चयत्वस्य कारणतावच्छेदकत्वे साधकविरहो बाधकसत्त्वञ्चेति नोक्तानुपपत्तिरित्याह—**यदि चेति** । **साक्षादुपयुज्यत** इति। तथा च वाच्य-ताग्रहोत्थापनं नावश्यकमित्याशयः।

यथा पदप्रकारकः पदार्थविशेष्यकोन्वयबोधस्तथा पदार्थप्रकारकः पदविशेष्यकोपि स क्वचिदावश्यक इति तत्रैव वाचकताज्ञानं कारणं तस्य वृत्तिज्ञानसमानाकारकत्वाच्च नोक्तरीतेरावश्यकत्वमित्याह—**गामुच्चारयेत्या-दाविति** । कण्ठताल्वाद्यभिघातजन्यत्वरूपोच्चारणे गोपदार्थकर्म्मकत्वस्य बाधितत्वाद् गोपदस्यैव तत्र गोपदार्थत्वमित्याह—**गोपदार्थवाचकमिति** । गोपदार्थत्वं गोत्वादिजातीनां परिचायकमात्रम्, न तु तेन रूपेण शाब्दबोधे प्रवेशो गौरवात्। तत्र च गोपदस्य वाणीनेत्रादिनानार्थवाचकतया वाणीत्वादि-नानाधर्म्माणां प्रवेशे गौरवम्, वक्तुश्च सार्थकगोपदकर्म्मकोच्चारण एव तात्पर्य्यम्, न तु गोत्वविशिष्टवाचकस्य निरर्थकस्य वा गोपदस्योच्चारणे, निरर्थकस्य तादृशतात्पर्य्यविषयत्वे गामित्यस्यानुपपत्तेरर्थवत एव प्रातिपदिकत्वादित्याशये-नाह—**किञ्चिदिति** । **तत्कर्म्मकमिति** । शाब्दिकमते कर्म्मणो द्वितीयार्थस्या-धाराधेयभावेन धात्वर्थेन्वयात्तादृशगोपदवृत्तीत्यर्थः । **त्वत्कर्तृकमिति** । आख्यातार्थे कर्त्तर्य्युत्तमपुरुषाक्षिप्तत्वंपदार्थस्याभेदेन तस्य च धात्वर्थे जन्यत्वे-नैकवचनार्थैकत्वस्य समवायेन त्वंपदार्थेन्वयादेकत्ववदभिन्नकर्तृजन्यमित्यर्थः। **आशंसाविषय** इति। आङ्पूर्वकस्य शंसेरिच्छार्थकत्वादाशंसापदार्थ इच्छा।

सङ्केतितत्वसंसर्गावच्छिन्नया[1] गोत्वेन वा केनाप्यवलीढया प्रकारतया निरूपितगोपदत्वावच्छिन्नविशेष्यत्वस्य निरूपकं ज्ञानमपेक्षणीयमिति न्यायादेव सिद्धम् ।

एवं विलोमानुलोमवाच्यवाचकताग्रहेणैव[2] पदार्थविशेष्यकस्येव क्वचित्पदविशेष्यकस्याप्यन्वयबोधस्योत्पत्तौ स्वरूपे शब्दानां न लक्षणा,

सा च "इच्छार्थेषु लिङ्लोटौ" इति सूत्रेण विहितस्य लोटोर्थस्तस्या धात्वर्थे कण्ठताल्वाद्यभिघातजन्यत्वे विषयतयान्वयादिच्छाविषय इत्यर्थः। **वाक्यार्थबोध** इति। **अपेक्षणीयमि**त्यग्रिमेणान्वयः। **सङ्केतितत्वेति।** वाच्यत्वरूपसङ्केतनिरूपकवाचकतासंसर्गेणेत्यर्थः। **ज्ञानमपेक्षणीयमिति।** उक्ते महावाक्यार्थबोधे वाचकतासंसर्गेण गोत्वादिविशिष्टप्रकारकं गोपदविशेष्यकं ज्ञानमवान्तरवाक्यार्थबोधविधयापेक्षणीयमित्यर्थः। **न्यायादेव सिद्धमिति।** नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति न्यायस्सद्युक्तिः। सा चावान्तरवाक्यार्थायोग्यत्वनिर्णये महावाक्यार्थज्ञानस्यासम्भावितत्वमेव। प्रतिपादितञ्चेवमेवानुमानदीधितौ "विषाणे शशसम्बन्धाभावनिश्चयदशायां शशस्य विषाणजन्यमिदं कार्मुकमितिशाब्दबुद्धेर्ब्रह्मणापि दुरुपपादितत्वात्" इत्यनेन।

तथा च विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकादिनिश्चयस्य कारणत्वेपि वाचकताज्ञानानन्तरं तत्समानाकारक एवोक्तवाक्यार्थबोधो यत्र च वाच्यताग्राहिकैव सामग्री तत्र पदार्थविशेष्यक एव शाब्दबोध इत्याशयः। अतएवास्माकं स्वरूपे स्वरूपवाच्यत्वावच्छिन्ने वा पदानां लक्षणा नावश्यकी, तत्प्रयोजनस्य पदविशेष्यकशाब्दबोधस्योक्तरीत्या शक्त्यैवोत्पादसम्भवादित्याह— **एवमित्यादिना।** ज्ञाने विलोमानुलोमत्वं गोपदस्य प्रकारत्वं तदर्थस्य विशेष्यत्वं तदर्थस्य प्रकारत्वं गोपदस्य विशेष्यत्वञ्च बोध्यम्। **स्वरूप** इति। **गामुच्चारये**त्यादौ दार्शनिकमते लक्षणां विना निर्वाहस्यासम्भवादस्मन्मते तां विनैवोक्तरीत्या

---

१ सङ्केतनिरूपकत्वसंसर्गावच्छिन्नया इति मु० पु० पा० ।

२ विलोमानुलोमवाच्यवाचकभावग्रहेणैव इति मु० पु० पा० ।

**न वा स्वरूपवाच्यत्वावच्छिन्ने, * शक्त्यैवान्वयबोधसम्भवात् । †अतएव विनैव लक्षणां वाजपेयपदवाच्ययागत्वादिना यागादेर्बोध इति विधौ व्युत्पादयिष्यते ।**

निर्वाहसम्भवान्न सावश्यकीत्यर्थः । **न वा स्वरूपवाच्यत्वेति** । "भू सत्तायाम्'

---

* शक्त्यैवोभयबोधसम्भवात् इति मु० पु० पा० ।

† "अतएव वाजपेयेन यजेतेत्यत्र यागस्य करणावस्थाया सिद्धत्वेन न वाजपेयस्य साध्यता, एकदा तयोर्विरोधादिति कर्म्मनामधेयत्वन्न तु करणस्य सिद्धत्वेन साध्यत्वविरोधः यागस्वरूपे तयोः सत्त्वात्" इति कलिकातामुद्रितपुस्तकस्य (१४७) पृष्ठस्थविधिवाद-सिद्धान्ते तत्त्वचिन्तामणिकाराः प्राहु. । अस्येद तात्पर्य्यम्—निर्विशेषितयोरसिद्धसिद्धा-वस्थयोः साध्यत्वसाधनत्वयोरविरोधेपि एककालीनसाध्यत्वसाधनत्वयोः सहानवस्थान-नियमादेव "वाजपेयेन यजेत" इत्यत्र वाजपेयपदस्य यागरूपकर्म्मनामधेयत्वकल्पन-मावश्यकम् । अन्यथा वाजपेयसाध्यत्वेनोपस्थिते यागे लिङादिना इष्टसाधनत्वान्वय-बोधापत्तौ विरोधः स्यात्, वेदे विशिष्टवैशिष्ट्यबोधे सम्भवति तत्परित्यागानौचित्यस्य सकलवैदिकसम्प्रदायसिद्धत्वेन एकविशेषणावच्छिन्ने विशेष्ये विशेषणान्तरबोधस्यैव च विशिष्टवैशिष्ट्यधीत्वेन तत्र विशेषणयोरेककालताभाननियमात् । अतएव गन्धप्रागभावा-वच्छिन्ना पृथिवी गन्धवतीत्यत्र बाध इत्युक्तम् । न चैवं "सोमेन यजेत" इत्यत्रापि तुल्ययुक्त्या कर्म्मनामधेयता स्यादिति वाच्यम्, तत्र द्रव्याकाङ्क्षानिवर्त्तकप्रमाणाभावेन औत्सर्गिकस्यापि विशिष्टवैशिष्ट्यबोधस्य त्यागात् । अत्र "प्रकृतिवद्विकृतिः कार्य्या" इति न्यायेन सोमीयद्रव्यान्वयेनैव द्रव्याकाङ्क्षानिवृत्तेः । तथा च तृतीयया करणत्वाभिधाने वाजपेयनामकयाग इष्टसाधन करणञ्चेत्यन्वयः । ननु वाजपेयनाम्ना यागस्य वाच्यवाचकभाव एवान्वयो वाच्यस्तद्बोधनञ्च न वाजपेयपदोपस्थिति विना अन्वयप्रतियोग्यनुपस्थितावन्वय-बोधासम्भवात्, तदुपस्थितिर्न तत्पदेन शक्या तस्य यागरूपार्थशक्तत्वात् स्वपरे लक्षणा-भ्युपगमाच्च न लक्षणया तदा तत्र शक्यग्रहे स्वशक्यसम्बन्धित्वेन स्वस्याग्रहादिति चेन्न, वाजपेयपदस्य सामान्यतः क्वचिच्छक्तिग्रहे तद्ग्रहसम्भवात् शक्तिभ्रमेण स्वोपस्थिति-सम्भवाच्च । अतएव शब्दखण्डीयलक्षणाविचारावसरे "स्वार्थसम्बन्धाग्रहे च स्वरूपो-पस्थितिः शक्तिभ्रमात्, निरर्थकस्य स्वरूपे शक्तिरेव वृत्त्यन्तरं विनैवोपस्थितेः शक्ति-साध्यत्वात्" इति चिन्तामणिकारेणोक्तम् । ननु यदि विशिष्टवैशिष्ट्यबोधे तुल्यकालताभान

अतएव घटपदाम्पदयोरेकपदव्यतिरेकप्रयुक्तान्वयाननुभव-

इत्यादावित्यर्थः । अतएव विनैव लक्षणामिति । ‡ अत्र वाजपेयपद-विचारः ।

शाब्दबोधस्य वृत्तिज्ञानसमानाकारकत्वोपगे आकाङ्क्षाज्ञानकारणतायामपि लाघवमस्माकमिति दर्शयति—अतएवेत्यादिना । अतएव शाब्दबोधस्य तत्तत्पदविषयकत्वादेव । घटपदाम्पदयोरित्यादि । अत्र निर्द्धारणे षष्ठी सप्तमी वा । तेन तयोर्म्मध्य इत्यर्थः । एकपदेति । यत्पदनिष्टयत्पदव्यतिरेकप्रयुक्तो यादृशान्वयबोधाभावस्तत्पदस्य तत्पदवत्त्वमभिधानापर्य्यवसानस्वरूपाकाङ्क्षा चिन्तामणिकृता सिद्धान्तिता, तदनुसारीदम् । भवति च घटमानयेत्यादौ घटपदाभावप्रयुक्तो घटः कर्म्मेति शाब्दबोधोम्पदाभावेनापि प्रयोज्य इति घटपदाभावप्रयुक्ततादृशशाब्दबोधाभावप्रयोजकोभावो घटपदाभावोम्पदाभावश्चेति तत्प्रतियोगित्वं घटपदेम्पदे चाबाधितमेवास्तीति । नैवं घटः कर्म्मेत्यादौ घटपदकर्म्मपदयोः, तत्र कर्म्मपदाभावस्य नादृशशाब्दबोधाप्रयोजकत्वादिति न तयोराकाङ्क्षा । प्रयुक्तत्वं प्रयोजकत्वञ्च कारणाभावात्कार्य्याभाव इति प्रतीति-साक्षिकः स्वरूपसम्बन्धविशेषः । तत्प्रतियोगिजन्यप्रतियोगिकत्वप्रयुक्तत्वं तत्प्रतियोगिजनकप्रतियोगिकत्वं प्रयोजकत्वमिति वा । तेनात्यन्ताभावस्य नित्यत्वेपि नासङ्गतिः । इदञ्च ज्ञायमानपदस्य शाब्दबोधकारणतामते । पद-ज्ञानस्य तथात्वे तु यत्पदज्ञानाभावप्रयुक्तो यादृशान्वयबोधाभावस्तत्प्रयोजका-भावप्रतियोगिज्ञानविषयपदवत्त्वमेवाकाङ्क्षेति बोध्यम् । कारणाभावस्यैव कार्य्या-भावप्रयोजकत्वात् ।

---

तदा वह्निना पचेतेत्यत्रापि वह्निसाध्यत्वेष्टसाधनत्वयोर्युगपद्भानन्न स्यादिति चेन्न, तत्र वह्निसाध्यत्वस्योपलक्षणत्वेनैकस्य द्वयमित्यन्वयात् । अत्र च सम्भवति विशेषणत्वे उपलक्षणत्वस्यान्याय्यत्वादिति बहुव्याख्यातृसम्मतम् । विस्तरस्तु शब्दखण्डस्य लक्षणा-विचारे द्रष्टव्यः ।

‡ मन्यते—टीकाकर्त्तुरत्र बहुविचारोभिप्रेत आसीत्, स च सम्पन्नो न जात अतोत्रत्यं प्रतीकमादाय किञ्चिद्विचारः प्राक् प्रदर्शितः ।

**प्रयोजकव्यतिरेकप्रतियोगिद्वितीयादिपदस्वरूपायाः* पदान्तराव्यवहित-घटपदोत्तरत्वविशिष्टाम्पदस्वरूपाया वाकाङ्क्षाया ज्ञानस्य घटपद-वाच्यघटत्वावच्छिन्नप्रकारतानिरूपिताम्पदवाच्यकर्म्मत्वाद्यवच्छिन्न-विशेष्यताकान्वयबुद्धिं प्रति जनकत्वं सुवचम् ।**

अत्र यथाश्रुतेऽम्पदे घटपदाभावस्य विरहे घटपदे तस्य सत्त्वेपि न शाब्द-बोधः। एवमम्पदे समवायेन घटपदाभावस्य सर्वदैव सत्त्वेप्यव्यवहितोत्तरत्व-सम्बन्धेनाम्पदे घटपदवत्त्वस्याव्यवहितपूर्वत्वेन घटपदेऽम्पदवत्त्वस्य वा सत्त्वे शाब्दबोधस्यानुभविकत्वम्। एवं कर्म्मपदेप्यम्पदत्वभ्रमे पटपदे घटपदत्वभ्रमे वा घटकर्म्मेत्यतः पटमित्यतो वा तादृशबोधस्यानुभविकत्वम् । एवं घटकर्म्म घटमिति समूहालम्बनस्य तादृशशाब्दबोधजनकत्वाद् घटपदत्वधर्म्मितावच्छेदक-काव्यवहितपूर्वत्वसंसर्गावच्छिन्नकर्म्मपदत्वावच्छिन्नप्रकारताकनिश्चयाभावस्यापि तादृशान्वयबोधाभावप्रयोजकत्वमिति तत्र तत्र दोषवारणाय यत्सम्बन्धावच्छिन्न-यत्पदत्वावच्छिन्नप्रकारतानिरूपितयत्पदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वा-वच्छिन्नाभावत्वेन यादृशान्वयबोधाभावप्रयोजकत्वं तत्सम्बन्धेन तत्पदत्वा-वच्छिन्ननिष्ठं तत्पदत्वावच्छिन्नवत्त्वं तादृशान्वयबोधप्रयोजिकाकाङ्क्षेति विवक्षणीयम् । तादृशाभावात्तस्य परिचायकत्वमात्रन्न तु तेन कारणत्वं तस्याव्यवहितपूर्वत्वसम्बन्धेनाम्पदवत्त्वस्य घटपदेऽव्यवहितोत्तरत्वसम्बन्धेन घटपदवत्त्वस्याम्पदे वा लाघवादभ्युपगमस्यौचित्यमिति तथैवाह—**पदान्तरा-व्यवहितेति** । स्वभिन्नपदव्यवधानरहितेत्यर्थः। घटः पटमित्यत्राप्यम्पदस्य घटपदोत्तरत्वादतिप्रसङ्गवारणायैतदुक्तम्, तत्राम्पदस्य घटपदभिन्नविसर्गपट-पदाभ्यां व्यवधानान्नातिप्रसङ्गः। पदभिन्नत्वं परिचायकमात्रं घटपदाव्यवहितो-त्तरत्वविशिष्टमम्पदमित्येवाकाङ्क्षास्वरूपम् । तत्राव्यवहितोत्तरक्षणवृत्तित्व-स्वरूपस्याव्यवहितोत्तरत्वस्य प्रकारतया प्रवेशे तद्घटकध्वंसादिसम्बन्धानां प्रवेशे महद्गौरवमापद्येतेति तस्य संसर्गतयैव प्रवेशो युक्तः, प्रकृतग्रन्थस्यापि तत्रैव तात्पर्य्यम् । अव्यवहितोत्तरत्वमव्यहितपूर्वत्वस्याप्युपलक्षकम् । तेन विनिगमनाविरहेण तस्य कारणतावच्छेदकत्वेऽपि न न्यूनतेति बोध्यम्।

उक्ताकाङ्क्षाज्ञानस्य स्वमतसिद्धं कार्य्यतावच्छेदकं दर्शयति—**घटपदवाच्ये-**

---

* पदस्वरूपा०-मु० पु० पा० ।

**अन्यथा कलश इति जानामीदमित्यत्रेतिनोपात्ते* कर्म्मणि कलशान्वयबोधे व्यभिचारवारणाय प्रयासातिशयापत्तेः ।**

**घटद्वितीययोराकाङ्क्षाज्ञानसत्त्वेपि कर्म्म नामूपदवाच्यमिति विपरीतबुद्धिसत्त्वे कर्म्मपदोपस्थापितकर्म्मणि† घटतादात्म्यान्वयापत्तेः । अमूपदधर्म्मिकघटपदाकाङ्क्षाज्ञानस्य घटपदजन्यघटोपस्थित्यमूपदजन्य-**

त्यादिना । **अन्यथा** घटपदवाच्यत्वस्य घटांशे विशेषणविधया कार्य्यतानवच्छेदकत्वे । **कलश इतीति** । **इतिनोपात्ते** इतिपदजन्योपस्थितिविषयीभूते । **व्यभिचारवारणायेति** । घटत्वावच्छिन्नप्रकारतानिरूपितकर्म्मत्वावच्छिन्नविशेष्यताके तस्मिन् बोधे घटपदवृत्तिज्ञानजन्योपस्थित्यनुत्तरत्वात् प्रसक्तस्य व्यभिचारस्य वारणायेत्यर्थः । **प्रयासातिशयापत्तेरिति** । कारणानन्तर्य्यस्य कार्य्यतावच्छेदककल्पनगौरवापत्तेरित्यर्थः । अस्माकम्मते च तादृशबोधस्य घटपदवृत्तिज्ञानकार्य्यतावच्छेदकीभूतघटपदवाच्यतावगाहित्वविरहेण कार्य्यतावच्छेदकानाक्रान्ततया तत्र व्यभिचाराप्रसक्तिरेवेत्याशयः । अत्र यद्यपि कलशमित्यत्र घट इति जानामीदमित्यत्रापि च व्यभिचारस्सम्भवति, तथाप्यव्यवहितपूर्ववृत्तित्वसम्बन्धेनामूपदविशिष्टघटपदरूपाया अव्यवहितोत्तरत्वसम्बन्धेन घटपदविशिष्टामूपदरूपाया वाकाङ्क्षाया विशिष्टस्य शुद्धानतिरेके उक्तस्थलद्वयेपि सत्त्वमित्यावेदयितुं तदुभयोपेक्षा ।

वाच्यत्वस्य संसर्गतया प्रकारतया वा कार्य्यतावच्छेदकत्वस्य शाब्दिकमतेप्यावश्यकत्वादानन्तर्य्यमपि तत्समानशीलमेव कार्य्यतावच्छेदकमित्यतो दोषान्तरमाह—**घटद्वितीययोरिति** । द्वितीयापदमम्पदमात्रपरमग्रिमामूपदं वा औट्शसोरप्युपलक्षकम् । **विपरीतबुद्धीति** । कर्म्मोपस्थितिजनकाम्पदवाच्यं कर्म्मेतिज्ञानप्रतिबन्धकज्ञानेत्यर्थः । कर्म्मणोनुपस्थितौ शाब्दबोधापत्तेरसम्भवादाह—**कर्म्मेति** । **तादात्म्यान्वयापत्तेरिति** । आकाङ्क्षाज्ञानस्योपस्थितेश्च तादृशान्वयबोधकारणस्य सत्त्वात् । अस्मन्मते चामूपदवाच्यकर्म्मविशेष्यता-

---

* जानामीत्यादावितिनोपात्ते इति मु० पु० पा० ।

† कर्म्मपदोपस्थिते इति मु० पु० पा० ।

कर्म्मोपस्थित्योः सहकारिताकल्पनेप्यमूपदविषयककर्म्मपदज्ञानजनितेन कर्म्मस्मरणेन तथाविधस्थले घटः कर्म्मेत्यन्वयबोधस्य दुर्वारत्वात् ।

अमूपदज्ञानत्वावच्छिन्नकारणतानिरूपितकार्य्यतावच्छेदकीभूतेनाम्पदज्ञानाव्यवहितोत्तरकर्म्मस्मरणत्वेनावलीढया कथमपि वारणासम्भवात् । सम्भवति च तादृशस्थले बाधग्रहकालेनुद्बुद्धः[1] कर्म्माम्पदवाच्यमित्याकारकस्संस्कार इति तज्जन्यत्वादिप्रवेशेनापि तादृशसंस्काराव्यवहितोत्तरस्य ज्ञानस्य वारयितुमशक्यत्वात् ।

एतेन यत्र पदे आकाङ्क्षाग्रहस्तज्जनिता पदार्थोपस्थितिः कारणमिति व्यक्तिभेदेनापि कार्य्यकारणभावो निरस्तः ।

कज्ञाने निरुक्तविपरीतज्ञानस्य विरोधित्वान्न तदापत्तिरिति भावः । **सहकारिताकल्पनेपी**ति । तथा चोक्तस्थलेम्पदजन्यत्वस्य कर्म्मोपस्थितावभावान्नोक्तापत्तिर्य्यद्यपि, तथापि कर्म्मपदवृत्तिज्ञानस्याम्पदविषयकत्वे तज्जन्योपस्थितेस्तथात्वाक्षतेरिति **दुर्वारत्वादि**त्यन्तस्याशयः ।

तादृशान्वयबुद्धिजनकतावच्छेदकञ्च कर्म्मस्मरणत्वं नवाम्पदजन्यत्वविशिष्टं तत्, किन्त्वम्पदज्ञानत्वावच्छिन्नकारणतानिरूपितकार्य्यतावच्छेदकं तदित्युक्तावपि नोक्तापत्तिवारणम्, तादृशोपस्थितिजनकसमूहालम्बनस्याम्पदविषयकत्वेन तन्निष्ठजनकतायाम्पदज्ञानत्वावच्छिन्नत्वस्य निराबाधत्वादित्याह—**अमूपदज्ञानत्वेति** । अम्पदवाच्यं कर्म्मेत्याकारकसंस्काराजन्यत्वस्य तादृशस्मरणनिष्ठजनकतावच्छेदकत्वोपगमेपि न तद्वारणं तादृशस्मरणपूर्वं तादृशसंस्कारस्याप्यनेकत्र सम्भवादित्याह—**सम्भवति चे**त्यादिना । तस्योद्बोधकस्य तदानीं सत्त्वे तेनैव कर्म्मस्मरणे तादृशान्वयबोधस्येष्टत्वादाह—**अनुद्बुद्ध** इति ।

**एतेन** उक्तसमूहालम्बनजन्यकर्म्मस्मरणसहकृततादृशाकाङ्क्षाग्रहकाले निरुक्तान्वयबोधप्रसङ्गेन । **निरस्त** इति । आकाङ्क्षाघटकाम्पदव्यक्त्यापि कर्म्मपदवृत्तेस्समूहालम्बनसम्भवादुक्तापत्तेरवारणादित्याशयः ।

ननु शाब्दिकमतेपि निरुक्ताकाङ्क्षाद्वयस्यैव ज्ञानयोर्विनिगमनाविरहेण घटः कर्म्मेति शाब्दबोधजनकत्वादेकतज्जन्यत्वे तथाविधशाब्देन्यस्य तस्य

---

१ कालेप्यनुद्० मु० पु० पा० ।

**न चाम्पदधर्म्मिकेन घटपदधर्म्मिकेन चाकाङ्क्षाज्ञानेन शाब्दिकमतेप्येकविधान्वयबुद्धिजनने परस्परं व्यभिचारः, तत्तदाकाङ्क्षाविशिष्टपदवाच्यत्वेन पदार्थानामन्वयबुद्धिषु[1] प्रवेशे चात्यन्तिकानुभवविरोध इति वाच्यम्, घटपदस्य बहुवर्णघटिततया [2]तद्घटिताकाङ्क्षाया द्वेधा प्रवेशे घटाकाङ्क्षानिश्चयत्वस्य गुरुतया लघुना घटपदधर्म्मिकाम्पदाकाङ्क्षानिश्चयत्वेनैव तज्जनकत्वात्, तद्व्यतिरेकेण फलानुत्पत्तेः ।**

व्यभिचार इति कारणानन्तर्य्यस्य कार्य्यतावच्छेदकत्वमावश्यकमिति वाच्यत्वादिनिवेशेन तेषामेव गौरवमित्याशङ्कते—**न चेति** । ननु शुद्धस्य पदस्य नानान्वयबोधविषयत्वम्, किन्तु तत्तदाकाङ्क्षाविशिष्टस्यैवेत्यतो नोक्तव्यभिचार इत्याह—**तत्तदेति** । **प्रवेशे चेति** । प्रवेशोत्र विषयत्वम् । **आत्यन्तिकानुभवविरोध** इति । पदस्यैवान्वयबोधविषयत्वं दार्शनिकानामनुभवविरुद्धं वक्ष्यमाणदूषणगणग्रस्तञ्च तत्तदाकाङ्क्षायास्तथात्वन्त्वात्यन्तिकमेव तथेत्याशयः ।

उभयाकाङ्क्षाज्ञानयोः कारणत्व एवोक्ते व्यभिचारप्रसक्तिस्तदेव नेत्याशयेनोत्तरमाह—**घटपदस्ये**त्यादिना । **बहुवर्णघटितयेति** । अम्पदापेक्ष्येत्यादिः । अम्पदे वर्णद्वयस्य घटपदे च घकाराकारटकाराकाराणा घटकत्वात्तथात्वं तस्य बोध्यम् । **द्वेधा प्रवेश** इति । अव्यवहितपूर्ववृत्तित्वादिसंसर्गभेदेन द्विधा कारणतावच्छेदकत्व इत्यर्थः । **गुरुतयेति** । घकारोत्तराकारोत्तरटकारोत्तराकारत्वरूपघटपदत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाप्रकारकत्वविशिष्टतादृशपदत्वावच्छिन्नप्रकारताकज्ञानत्वस्वरूपस्य तस्याकारोत्तरमत्वरूपाम्पदत्वावच्छिन्नप्रतियोगिताकाभावाप्रकारताकत्वघटिताम्पदाकाङ्क्षानिश्चयत्वापेक्षया गुरुत्वादित्यर्थः । **लघुनेति** । अव्यवहितपूर्ववृत्तित्वसम्बन्धावच्छिन्नाम्पदत्वावच्छिन्नप्रकारतानिरूपिततादृशघटपदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वस्य स्वघटकाभावांशे प्रतियोगितावच्छेदकतयाकारमात्रस्य प्रवेशेन तथाविधघकाराकारटकारघटितोक्तनिश्चयत्वापेक्षया लघुत्वादित्याशयः । **तज्जनकत्वादिति** ।

---

१ ०न्वयबोधप्रवेशे-मु० पु० पा० ।

२ तद्घटिताकाङ्क्षाया द्वेधा प्रवेशेन इति मु० पु० पा० ।

गोभ्य इत्यादौ तु प्रत्ययस्य बहुवर्णघटितया तद्धर्म्मिक एव प्रकृत्याकाङ्क्षानिश्चयः[1] कारणम् । गवामित्यादौ विनिगमनाविरहादुभयसत्त्व एव शाब्दबोधो नान्यदा, क्लृप्तकारणबाधे कार्य्यबाधस्य न्याय्यत्वात् ।

ननु तथापि विपरीतव्युत्पन्नानामम् घट इत्यादिवाक्यादम्पदोत्तरं घटपदमित्याकाङ्क्षाज्ञानेन जनिते घटपदवाच्यघटाभिन्नमम्पद-

घटः कर्म्मेत्याकारकान्वयबोधजनकत्वादित्यर्थः । तथा चाव्यवहितोत्तरवृत्तित्वघटिताकाङ्क्षाज्ञानस्य कारणत्वविरहेण व्यभिचारप्रसक्तिविरहेण तद्वारणप्रयासो दूरापेत इत्याशयः । घटपदस्याकाङ्क्षाज्ञानविशेष्यतया कारणतावच्छेदकत्वे च धर्म्मितावच्छेदकांशे संशयस्यानुपगमेन तदंशे निश्चयत्वस्यानिवेशनीयतया न गौरवमिति बोध्यम् ।

अव्यवहितपूर्ववृत्तित्वघटिताया एव तस्याः कारणतावच्छेदकत्वमिति न नियमः, किन्तु यद्घटिताया लघुत्वं तस्यास्तथात्वमित्याशयेनाह—**गोभ्य इत्यादावि**ति । यत्र तूभयविधाया एव समानशरीरत्वं तत्रैकैकस्याः कारणतावच्छेदकत्वे व्यभिचारप्रसक्तिसम्भवेप्युभयविधाया एव ज्ञानं कारणम्, न त्वेकैकस्या इति तत्रापि न व्यभिचार इत्याह—**गवामित्यादा**विति । **नान्यदा** एकविधाकाङ्क्षाज्ञानसत्त्वे । यथा घटमित्यादौ लाघवादव्यवहितपूर्ववृत्तित्वादिघटिताकाङ्क्षाज्ञानविरहे न तादृशान्वयबोधस्तथा गवामित्यादावनेकविधाकाङ्क्षाज्ञानसत्त्वे न शाब्दबोधः, किन्तूभयविधायास्तस्या ज्ञानसत्त्व एवेत्याशयः ।

घटमित्यादावव्यहितपूर्ववृत्तित्वघटिताकाङ्क्षाज्ञानमात्रस्य घटः कर्मेति शाब्दबोधजनकत्वे यस्य पुंसोम्पदोत्तरं घटपदमित्याकारकज्ञानेपि घटः कर्म्मेत्यन्वयबोधजनकत्वभ्रमस्तस्य तज्ज्ञानेनैव तादृशान्वयबोधो जन्यते, तत्रोक्ताकाङ्क्षाया अव्यवहितपूर्ववृत्तित्वाघटितत्वाद् व्यभिचार इत्याशङ्क्य निषेधति—**नन्वित्या**दिना । अव्यवहितपूर्वत्वादिकं वक्ष्यमाणाकाङ्क्षाग्राहकमेव, न तु तत्सम्बन्धेन तत्पदवत्त्वमाकाङ्क्षेत्याशयेन समाधत्ते—**न ह्यव्यवहिते**त्यादिना । तर्हि काकाङ्क्षेति जिज्ञासायामाह—**आकाङ्क्षात्विति** । अस्याकाङ्क्षास्वरूपस्य प्रतिपदव्याख्यानव्यावृत्ती स्वयमेव स्फोटनिरासे दर्शयिष्यतीत्यत्र विरम्यते ।

१ ०निर्णयः कारणम्-मु० पु० पा० ।

वाच्यं कर्म्मेत्यन्वयबोधे व्यभिचार इति चेत् ? नह्यव्यवहितपूर्वत्वमाकाङ्क्षा,* किन्त्वाकाङ्क्षाग्राहकम् । †आकाङ्क्षा तु अम्पदव्यतिरेकप्रयुक्तो योऽन्वयबोधाभावस्तत्प्रयोजकव्यतिरेकप्रतियोगिघटपदत्वम् ।

प्रयुज्यते हि कारणाभावेन कार्य्याभावः । अन्वयबोधश्च घटपदवाच्यत्वावच्छिन्नविषयतानिरूपिताम्पदवाच्यत्वावच्छिन्नविषयताको ग्राह्यः । तेन घटरूपं पश्येत्यादौ विशिष्टशाब्दबोधप्रतियोगिकाभावविशेषं प्रति घटपदाम्पदव्यतिरेकयोः प्रयोजकत्वेऽपि न घटः कर्म्मेति शाब्दबोधः ।

घटमित्यादौ लक्षणं सङ्गमयितुमाह—प्रयुज्यते हीति । तथा च घटः कर्म्मेति शाब्दबोधस्य कार्य्यतया तदभावस्य घटपदाम्पदयोरभावेन प्रयोज्यत्वं निराबाधमित्याशयः । प्रयोज्यत्वं प्रयोजकत्वञ्चेदं व्याप्यव्यापकभावरूपं दण्डाभावाद् घटाभाव इत्यादिप्रतीतिसाक्षिकस्वरूपसम्बन्धरूपं वेति वक्ष्यति तृतीयार्थनिरूपणे । ननु घटरूपं पश्येत्यादिवाक्यजन्ये घटसम्बन्धिरूपकर्म्मकस्याशंसाविषयदर्शनस्यान्वयबोधे घटपदाम्पदयोस्तज्ज्ञानयोर्वा कारणत्वात्तदभावयोस्तथाविधान्वयबोधप्रयोजकत्वादुक्ताकाङ्क्षायास्तत्रापि ज्ञानाद् घटः कर्म्मेति शाब्दबोधस्तत्र कुतो नेत्यत आह—अन्वयबोधश्चेति । न घटः कर्म्मेतीति । घटरूपमित्याकाङ्क्षायां साक्षाद् घटपदवाच्यत्वावच्छिन्नविषयतया निरूपिता या कर्म्मपदवाच्यत्वावच्छिन्नविषयता तन्निरूपकशाब्दबोधकारणत्वस्य विरहान्नोक्तान्वयबोधस्तत्र, विवक्षितश्च तादृश एव बोध आकाङ्क्षाघटक इति भावः ।

घटमित्यादिवाक्यजन्यशाब्दबोधे घटपदवाच्यत्वस्य विषयतावद्घटत्वादीनामपि विषयत्वात् कुतो न तेषामाकाङ्क्षास्वरूपे प्रवेश इत्यत आह—

---

* नह्यव्यवहितोत्तरत्वपूर्वत्वादिकमाकाङ्क्षा इति मु० पु० पा० ।

† आकाङ्क्षात्व यद्व्यतिरेकप्रयुक्तोऽन्वयबोधाभावस्तत्प्रयोजकव्यतिरेकप्रतियोगिघटपदत्वम् इति मु० पु० पा० ।

आकाङ्क्षाशरीरे च न प्रवृत्तिनिमित्तानां घटत्वकर्म्मत्वादीनामन्वयबोधविषयतया प्रवेशः प्रयोजनविरहात्, सकलपदार्थसाधारण्या आकाङ्क्षाया अभ्युपगमाद् वृत्तिज्ञानेनैव पदार्थानामन्वयबोधं प्रति नियमनसम्भवाच्च । आकाङ्क्षाज्ञानजन्यतावच्छेदकमपि *तत्पदवाच्यत्वावच्छिन्नप्रकारतानिरूपितापरपदवाच्यत्वावच्छिन्नविशेष्यताकान्वयबुद्धित्वम् ।

भिद्यते पुनराकाङ्क्षान्वयभेदेन; अन्यथा सत्यां पदार्थोपस्थितौ सर्वसंसर्गेणान्वयबुद्धिप्रसङ्गात् । सेयमाकाङ्क्षा "प्रत्ययः" "परश्च"

आकाङ्क्षाशरीरे चेति । प्रयोजनविरहादिति । भिन्नविषयकबोधे घटपदवाच्यत्वावच्छिन्नविषयताया अभावादेव व्यभिचारादीनामप्रसक्तेरन्यप्रयोजनस्य तत्रासम्भवादित्यर्थः । घटत्वादीनां तथात्वेनाकाङ्क्षाया प्रवेशे तदितरेषां घटादिपदार्थानामन्वयबोधे तत्तदर्थघटिताकाङ्क्षाज्ञानानामनन्तानां कारणत्वे गौरवमपि स्यादित्याह—सकलपदार्थेति । नानार्थगवादिपदवाच्यगोवाणीनेत्रादिसाधारण्या इत्यर्थः । नन्वेवं शाब्दबोधे पदार्थानां नियमनं कथं स्यादित्यत आह—वृत्तिज्ञानेनैवेति । एवकारेणाकाङ्क्षाज्ञानस्य पदार्थनियामकत्वव्यवच्छेदः । कारणतावच्छेदककुक्षौ विषयस्याप्रवेशे कार्य्यतावच्छेदकेपि न तत्प्रवेशमित्याह—आकाङ्क्षाज्ञानेति ।

नन्वेवं सकलपदार्थसाधारण्यास्तत्पदनिरूपिताकाङ्क्षाया एकस्या एवान्वयबोधप्रयोजकत्वे अभेदसंसर्गघटिताकाङ्क्षाज्ञानसत्त्वे समवायेनान्वयबोधापत्तिरित्यत आह—भिद्यते पुनरिति । तथा च तत्संसर्गेण तद्विषयकबोधे तत्संसर्गघटिताकाङ्क्षाज्ञानं हेतुरिति संसर्गस्यानेकतयाकाङ्क्षापि भिन्नैवेत्यर्थः ।

अव्यवहितपूर्वत्वादिकमाकाङ्क्षाग्राहकमिति यदुक्तं तदुपपादयितुमाह—सेयमिति । प्रत्यय इति । "न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः" इत्युक्त्या प्रत्ययं विना प्रकृतेः, प्रकृतिं विना प्रत्ययस्यान्वयबोधजनकत्वाभावे ज्ञापिते कः प्रत्ययः ? प्रकृतेः पूर्वं परं वा स प्रयोज्यः ? इति संशय-

* तद्वाच्यत्वावच्छिन्नप्रकारता इति मु० पु० पा० ।

*"बहुच् पुरस्तात्"...†इत्यादिभिरुपमीयतेऽनुमीयते वा। परः प्रत्ययः प्रकृतिव्यतिरेकप्रयुक्तान्वयबोधाभावप्रयोजकव्यतिरेकप्रतियोगीत्यतिदेशवाक्यार्थं स्मारयता ‡घटोत्तराम्शब्द इति प्रत्यक्षेणाम्पदे घटपदसाकाङ्क्षत्वोपमितिजननस्यापि सम्भवात्।

एवमेव "कर्त्तरि कृत्" इति व्याकरणेन कृत्त्वोपलक्षिते कर्तृवाच-

निवृत्तये चेदं पाणिनीयं सूत्रद्वयम्। तत्र प्रथमं स्वौजसादीनां प्रत्ययसंज्ञां द्वितीयञ्च घटादिप्रकृतेः परत्वं बोधयति, तृतीयन्तु स्वौजसादिप्रत्ययान्तर्गतस्य बहुचोऽपि प्रकृतेः परत्वे प्राप्ते तस्य प्रकृतेः पूर्वमेव प्रयोगं बोधयति। तत्र परत्वमव्यवहितोत्तरत्वं पूर्वत्वमव्यवहितपूर्वत्वम्। तथा च "न केवला"...इत्यादिभाष्योक्तिसहकृतेनोक्तसूत्रत्रयेण प्रकृत्यव्यवहितोत्तरवृत्तिः स्वौजसादिप्रत्ययः प्रकृत्यवहितपूर्ववृत्तिर्बहुच्प्रत्ययश्च प्रकृत्यभावप्रयुक्तान्वयबोधाभावप्रयोजकाभावप्रतियोगीत्याकारकं ज्ञानमतिदिश्यते। ततश्च तादृशातिदेशवाक्यार्थज्ञानवतः पुंसो घटमानयेति वाक्यश्रवणे तेनैवोद्बोधकेनोक्तातिदेशवाक्यार्थस्मरणे सति घटपदमम्पदसाकाङ्क्षमित्याकारिकोपमितिर्ज्जायत इत्याशयः। इदञ्चोपमितेस्सादृश्यज्ञानकरणकत्वं यथा प्रायिकम्, तेन जलादिविधर्म्मगुणवती पृथिवीत्यतिदेशवाक्यार्थस्मरणद्वारा पृथिवीपदवाच्यत्वोपमितिस्तथा संज्ञासंज्ञिज्ञानफलकत्वमपि तस्याः प्रायिकमेवेति मते। संज्ञासंज्ञिज्ञानफलकत्वमात्रमुपमितेरितिमते **त्वनुमीयते वे**त्युक्तम्। अनुमानप्रकारोऽपि अम्पदं घटपदसाकाङ्क्षं घटपदाभावप्रयुक्तान्वयबोधप्रयोजकाभावप्रतियोगित्वात्, यो यदभावप्रयुक्ताभावप्रयोजकाभावप्रतियोगी, स तत्साकाङ्क्ष इति। सामान्यव्याप्तिज्ञानं व्यभिचारशङ्कानिवर्त्तकानुकूलतर्कश्चोक्ताभियुक्तवाक्यसहकृतोक्तातिदेशवाक्यात्सुलभ इति भावः। **जननस्यापी**त्यपिनानुमितिसम्भवस्य परिग्रहः।

**एवमेव** सादृश्यज्ञानं विनाप्युपमितेस्सम्भवादेव। **कृत्त्वोपलक्षित** इति।

---

* "विभाषा सुपो बहुच् पुरस्तात्तु" इति पूर्णं सूत्रम्।

† इत्यादिभिराप्तवाक्यैरुप० इति मु० पु० पा०।

‡ घटादुत्तरोम्शब्द इति मु० पु० पा।

कताग्रहानन्तरं ण्वुलादौ कृत्त्वग्रहादतिदेशवाक्यार्थं स्मृत्वा ण्वुलि कर्त्तृवाचकत्वमुपमित्या परिच्छिद्यते। विपरीतव्युत्पन्नैस्तु वैपरीत्येन सैवाकाङ्क्षा परिच्छिद्यत[1] इति क्व व्यभिचारः।

स्याद्वा तादृशाकाङ्क्षाज्ञानस्यानायत्या तत्तद्व्यवहितोत्तरत्वादि-जन्यतावच्छेदकम्। अतएव लक्ष्यशक्यार्थसहस्रभेदेन नाकाङ्क्षाज्ञान-कारणताभेदः[2]।

इत्थञ्च तल्लक्षणाज्ञानस्यापि तत्तल्लक्ष्यत्वेन तत्तदर्थविषयिणी

कृत्त्वस्य वाचकतानवच्छेदकत्वात्तद्विशिष्टे वाचकताज्ञानस्यासम्भवात्तस्यो-पलक्षणत्वमुक्तम्। **ण्वुलादौ कृत्त्वग्रहणादिति**। कृत्त्वस्य तृजादिसाधारणतया तादृशातिदेशवाक्यार्थज्ञानस्य साधारणधर्म्मज्ञानतया सादृश्यप्रयोजकत्वेन सादृश्यज्ञानानात्मकेनापि तेन कर्त्तृवाचकत्वोपमितिरित्याशयः। **उपमित्या परिच्छिद्यत** इति। उपमित्यभिन्ननिश्चयविषयीक्रियत इत्यर्थः, तृतीयाया अभेदा-र्थकत्वात् परिच्छिनत्तेर्निश्चयार्थकत्वात्। **विपरीतव्युत्पन्नैरिति**। "प्रत्ययः" "परश्च"...इत्याद्यभिव्यक्ताकाङ्क्षाविपरीताकाङ्क्षायाः कारणतावच्छेदकत्व-प्रकारकनिश्चयवद्भिः। **वैपरीत्येनेति**। अम्पदोत्तरघटपदत्वरूपेणेत्यर्थः। **सैवाकाङ्क्षेति**। एकपदाभावप्रयुक्तान्वयबोधाभावप्रयोजकाभावप्रतियोगित्व-रूपैवेत्यर्थः। **इति क्व व्यभिचार** इति। तथा च विपरीतव्युत्पन्नानामम्घट इत्यत्रैव तादृशाकाङ्क्षाभिव्यक्तेर्घटः कर्म्मेति बोधान्न व्यभिचारस्तत्रेति भावः।

घटत्वादिप्रवृत्तिनिमित्तानामाकाङ्क्षाशरीरेप्रवेशे घटपदशक्यलक्ष्यार्थानाम-नेकतयैकविधाकाङ्क्षाज्ञानात् सर्वेषामन्वयबोधप्रसङ्गः। तद्वारणाय घटत्वादीनां तत्र प्रवेशे च कारणताया अनन्तत्वमित्यत आह—**स्याद्वेति**। **जन्यता-वच्छेदकमिति**। एवञ्च नोक्तव्यभिचारप्रसक्तिस्तावतापि विषयाणां घटादीनां तत्राप्रवेशेन लाघवानपायश्चेति भावः।

एवं सति लक्षणाज्ञानजन्यान्वयबोधेपि विषयनियम उपस्थित्यैव क्रियते शक्तिज्ञानवदित्याह—**इत्थञ्चेति**। आकाङ्क्षाज्ञानकार्य्यतावच्छेदककुक्षौ घटा-दिविषयाणामनिवेशे चेत्यर्थः। **तल्लक्षणाज्ञानस्येति** षष्ठ्यर्थो जन्यजनकभावः

१ परिच्छिद्य इति मु० पु० पा०।

२ नाकाङ्क्षाज्ञानकार्य्यकारणभावभेदः इति मु० पु० पा०।

**स्मृतिरेव तल्लक्ष्यार्थानुभवे हेतुः, शक्तिज्ञानतुल्ययोगक्षेमत्वात् । प्रतिपाद्यत्वमेव वा शक्यलक्ष्यसाधारणमविशेषेण जन्यजनकज्ञानयोर्विषयः ।**

**यदाहुरभियुक्ताः—**

**"ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा ।**
**तथैव सर्वशब्दानामेते पृथगवस्थिते ॥**

**स्मृतिरि**त्यत्र स्मृतावन्वितः । **तत्तदर्थविषयिणी**ति । तथा च तल्लक्षणाज्ञानजन्यतत्तदर्थविषयकस्मरणस्यैव तत्तदर्थविषयकान्वयबोधे हेतुत्वात्तत्र विषयनियमनमिति भावः । **शक्तिज्ञानतुल्ययोगक्षेमत्वादिति** । अलब्धस्य लाभो योगः, लब्धस्य रक्षणं क्षेमः, शक्तिज्ञानेन तुल्यौ योगक्षेमौ यस्य, तस्य भावस्तत्त्वं तस्मादित्यर्थः । तथा च शक्तिज्ञानजन्यतावच्छेदककुक्षौ यथालब्धस्य दार्शनिकाद्यनुपगतस्य तत्तत्पदशक्यत्वविशिष्टविषयकत्वस्य लाभः, लब्धस्य तथात्वेन शाब्दिकोपगतस्य तस्य रक्षणं जन्यतावच्छेदकघटकत्वम्, तथा लक्षणाज्ञानेपि तावन्मात्रस्यैव तथात्वमित्याशयः । शक्यलक्ष्यभेदेन कार्य्यकारणभावद्वयापेक्षया लाघवात्तयोरेकरूपेणैव कारणतावच्छेदके कार्य्यतावच्छेदके च प्रवेश इत्याशयेनाह—**प्रतिपाद्यत्वमेव वेति** । तत्पदवाच्यत्वमपहाय तत्पदबोध्यत्वमेव कार्य्यतावच्छेदके कारणतावच्छेदके च निवेशनीयमित्याशयः ।

एतावता शाब्दबोधस्य पदविषयकत्वे लाघवादिकं प्रदर्श्याभियुक्तवाक्यमपि तस्य तथात्वे प्रमाणमित्याह—**यदाहुरिति** । भर्तृहरिपादा इति शेषः । **ग्राह्यत्वमित्यादि** । **तेजसो** दीपादेर्य्यथा **ग्राह्यत्वं** स्वजन्यज्ञानविषयत्वं **ग्राहकत्वं** घटादिप्रत्यक्षकारणत्वञ्च द्वे शक्ती, ते च कारणतारूपेतिरिक्ते वेत्यन्यदेतत् । **सर्वशब्दानां** गवादिपदानामपि, **तथैव एते** ग्राह्यत्वग्राहकत्वशक्ती, **पृथक्** तत्तत्पदत्वावच्छेदेन, **अवस्थिते** तत्तत्पदवृत्तिनी इत्यर्थः । तथा च दीपादिवत् स्वजन्यान्वयबोधविषयत्वं घटादिविषयकान्वयबोधजनकत्वञ्च सर्वेषां पदानामिति

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन दृश्यते ॥"...इत्यादि ।

तस्मात्—

"स्मरणं पदेन जनितं पदवृत्तिमतः पदार्थस्य ।
अन्वयबुद्धावर्थः कथन्न तादृक् परिस्फुरतु ।"

इति व्याकुर्व्वते ।

आलङ्कारिकास्तु व्यञ्जनया वृत्त्योपस्थितानां पदानामन्वयबुद्धौ क्वचित्तादात्म्येन क्वचिद्वाच्यवाचकभावेन पदार्थानामनुप्रवेशः ।

भावः । **न सोस्तीति । लोके** प्राणिसमूहे, **स प्रत्ययः** अन्वयबोधः, **नास्ति यः शब्दानुगमात्** शब्दनिरूपितविषयित्वात्मकसम्बन्धाद् **ऋते** विना, तदभाववानिति यावत्, **अस्ति । सर्वं ज्ञानं** शाब्दबोधात्मकं **शब्देनानुबिद्धमिव दृश्यते ।** अनुपूर्वकस्य विध्यतेरत्र नियतसम्बन्धार्थकत्वान्न पूर्वार्द्धेन पौनरुक्त्यम् । इवशब्द एवकारार्थे । तैश्शब्दाविषयकस्य शाब्दबोधस्यानुपगमात् । शाब्दिकः स्वमतमुपसंहरति—**तस्मादि**ति उक्तयुक्तिजाता(दित्यर्थः) । **स्मरणमिति** । अनुभवस्य समानाकारकस्मरणजनकतया पदवृत्तिमत्पदार्थविषयकज्ञानेन तत्समानाकारकमेव स्मरणं यतो जनितं तत एव शाब्दबोधे **तादृगर्थः** स्मरणविषयतावान् पदवृत्तिमत्पदार्थः, **कथन्न** विषयोपि तु विषय एवेत्याशयः ।

शक्तिलक्षणाभ्यां विलक्षणां व्यञ्जनावृत्तिमभ्युपगच्छतामालङ्कारिणाम्मतेपि शाब्दबोधस्य पदविषयकत्वम्, किन्तु तदुपपादनप्रकारो विजातीय इति तमपि दर्शयति—**आलङ्कारिकास्त्विति । व्यञ्जनया वृत्त्येति ।** दयादिपदेभ्योभिधा वृत्त्या कृपादीनामुपस्थितिर्दयादिपदस्वरूपाणान्तु व्यञ्जनयैवोपस्थितिस्तन्मते, नतु लक्षणया, वृत्तिद्वययौगपद्यविरोधात् । व्यञ्जनायाश्च लोकोत्तरतया तत्र तद्विरोधस्याप्रसरादित्याशयः । **क्वचित्तादात्म्येनेति ।** आरोपिततादात्म्येनेत्यर्थः । पदस्यार्थेन वास्तविकतादात्म्याभावात् । शाब्दिकादिभिश्शब्दार्थयोस्तादात्म्योपगमाद्वा यथाश्रुतमेव सम्यक् ।

तथाहि—"दया तितिक्षा सत्यञ्च युक्तं त्यक्तुन्ननु त्वया।
अपवर्गव्यञ्जनानि कथं स्युर्भीमभूमिपे॥"

इत्यत्र भीमाभिधाने राजनि प्रकृते भीमभूमिपपदस्य व्यञ्जनालभ्यस्य तादात्म्यमारोप्य, तस्मिन्नपवर्गव्यञ्जनानामासन्नसिद्धिसूचकानां दयातितिक्षादीनां * ध्वननप्रतीतपवर्गेतरस्वरान्पवर्णाभेदेनाध्यवसितानामसम्भवः "कथं स्युः" इत्यनेन प्रतिपाद्यते। तेन प्राकरणिकयोरर्थयोः कोपि स्वारसिको विरोध इति तदुपपादकतया गुणीभूतमत्र व्यङ्ग्यम्।

तादात्म्येनान्वयमुदाहरति—**तथाहीति**। **दयेति**। दयादिगुणरहितं भीमाभिधानं राजानं प्रति कस्यचिदियमुक्तिः। **त्वया** भीमाभिधानेन राज्ञा। **दया तितिक्षा सत्यं च त्यक्तुँ युक्तं ननु। भीमभूमिपे** भीमनामके राजनि, **अपवर्गव्यञ्जनानि कथं स्यु**रित्यक्षरार्थः। **प्रकृते** प्रकरणज्ञानादुपस्थिते। **आसन्नसिद्धिसूचकानामिति**। अपवर्गोत्र क्रियावसानसाफल्यम्। तद् व्यज्यते येनेति करणल्युटा तादृशार्थलाभः। अपवर्गव्यञ्जनपदात् पादिमान्तवर्णपञ्चकभिन्नककाराद्यष्टाविंशवर्णानां व्यञ्जनया वृत्त्योपस्थितताना तादात्म्येन दयादिष्वन्वय-इत्याशयेनाह—**ध्वननप्रतीतेति। असम्भव** इति। भीमभूमिपपदस्य पफमवर्णत्रयात्मकव्यञ्जनमात्रघटिततया पवर्गेतरवर्णघटितानां दयातितीक्षासत्यानां तत्रासत्त्वमित्यर्थः।

**तेन** उक्तरीत्या वाच्यार्थव्यङ्ग्यार्थयोस्तादात्म्येनान्वयोपगमेन। **प्राकरणिकयोरिति**। भीमराजस्य दयादीनाञ्चेत्यर्थः। **स्वारसिको विरोध** इति। **कथं स्यु**रित्यनेन भीमे राजनि दयादीनामभावः प्रतिपादितः। स चोक्तरीत्या व्यङ्ग्यार्थयोर्भीमभूमिपदयादिपदयोस्तादात्म्यस्य भीमभूमिपे दयादौ चाभाने स्वतो दयादीनां भीमभूमिपेन विरोधाभावादनुपपन्नः। तस्य भाने तु भीमभूमिपपदस्य पवर्गमात्रव्यञ्जनघटितस्य पवर्गेतरदयादिपदघटकदकारादीनां विरहो निराबाध एवेति व्यङ्ग्यार्थप्रतीति विनानुपपद्यमानस्य वाच्यार्थस्योप-

---

* प्रस्तुतानाम् इत्यधिकः मु० पु० पा०।

तथा—

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥"

इत्यत्र विशेषस्य प्रक्रान्तस्य सामान्येन *समर्थनरूपेऽर्थान्तरन्यासे उदयस्य सम्पत्तित्वेनास्तमयस्य विपत्तित्वेन ताम्रस्वरूपस्य †चैकरूपभावेन समर्थनस्योपपादनाय ताम्रपदवाच्यस्ताम्र इति ताम्रपदद्वयजन्यो बोधोऽङ्गीकार्य्यः ।

पादकत्वेन मुख्यत्वाभावान्न ध्वनित्वमुक्तकाव्यस्य, किन्तु वाच्यार्थे गुणीभूतत्वादगूढाद्यष्टविधगुणीभूतव्यङ्ग्येषु वाच्यसिद्ध्यङ्गरूपमिदं गुणीभूतव्यङ्ग्यनामकं काव्यमित्यर्थः ।

व्यङ्ग्यार्थस्य वाच्यवाचकभावसंसर्गेण वाच्यार्थान्वयमुदाहरति— तथेति । अर्थान्तरन्यास इति ।

"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥" इति काव्यप्रकाशे
"सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते ॥
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥"

इति साहित्यदर्पणे लक्षिते इत्यर्थः । उभयलक्षणार्थश्च—सामान्यं व्यापकधर्म्मावच्छिन्नम् । विशेषो व्याप्यधर्म्मावच्छिन्नः । विशेषेण व्याप्यधर्म्मावच्छिन्नविषयकेण । साधर्म्येण साधर्म्यप्रकारकज्ञानेन । एवं सामान्येन व्यापकधर्म्मावच्छिन्नविषयकेण साधर्म्यादिप्रकारकज्ञानेन विशेषो यदि समर्थ्यते संशयायोग्यत्वादिरूपानुपपत्तिनिराकरणेन दृढप्रतिपत्तिविषयीक्रियते अनुपपद्यमानत्वप्रकारकसम्भावनाविषयीभूतार्थस्योपपादनाय यदर्थान्तरं न्यस्यते सोऽर्थान्तरन्यास इत्यर्थः । दृष्टान्तप्रतिवस्तूपमयोस्तु सामान्येन सामान्यस्य विशेषेण विशेषस्य समर्थनम् । अत्र तु सामान्येन विशेषस्य, विशेषेण

* समर्थनस्वरूपे इति मु० पु० पा० ।

† चैकरूपताभावेन इति मु० पु० पा० ।

रक्तपदोपादाने तु रक्तपदबोध्यत्वताम्रपदबोध्यत्वयोर्वैरूप्यादेक-

सामान्यस्य तदिति ताभ्यामस्य भेदः । परम्परया व्याप्तेरभिधानेन साक्षाद् व्याप्त्यभिधानविषयादनुमानाद् भेदः। तस्य कविनिबद्धप्रमात्रन्तर-निष्ठानुमितिविषयकत्वाच्च समर्थ्यसमर्थकयोः सामान्यविशेषभावे एवार्थान्तर-न्यासोपगमात्तयोः कार्य्यकारणभावे काव्यलिङ्गस्योपगमात्ततोऽस्य भेदः। साहित्यदर्पणकृता तु कारणस्य कार्य्यस्य च ज्ञापकनिष्पादकसमर्थकभेदाज्ज्ञाप्य-निष्पाद्यसमर्थ्यभेदाच्च त्रैविध्यमङ्गीकृत्य ज्ञाप्यज्ञापकभावेनुमानं निष्पाद्यनिष्पादक-भावे काव्यलिङ्गं समर्थ्यसमर्थकभावेर्थान्तरन्यास इत्यभिसन्धाय "कार्य्यञ्च कारणेनेदम्"...इत्याद्युक्तम्। तथा च काव्यप्रकाशमते साधर्म्येण सामान्येन विशेषस्य वैधर्म्येण सामान्येन विशेषस्य साधर्म्येण विशेषेण सामान्यस्य वैधर्म्येण विशेषेण सामान्यस्य वा समर्थनमिति चतुर्विधोर्थान्तरन्यासः। साहित्यदर्पण-मते तु उक्तश्चतुर्विधः साधर्म्येण कारणेन कार्य्यस्य कार्य्येण कारणस्य वैधर्म्येण कारणेन कार्य्यस्य कार्य्येण कारणस्य च समर्थनमिति चतुर्विध इत्यष्टविधो-र्थान्तरन्यास इत्यर्थः।

तथा च निगदव्याख्याते प्रकृतपद्ये सवितुरुदयकालेस्तकाले च ताम्रत्वरूप-समानधर्मवत्ता उदयास्तमयोर्विपत्तिसम्पत्तित्वेनाध्यवसितयोर्विरुद्धत्वादनुप-पद्यमानत्वेन सम्भावितेति तदुपपादनाय महात्मनां सम्पत्तिकाले विपत्तिकाले चैकरूपवत्त्वं स्वभावसिद्धमित्युत्तरार्द्धार्थेन समर्थनात् सामान्येन विशेषसमर्थन-रूपार्थान्तरन्यासोत्रालङ्कारः । तत्र ताम्रपदाभ्यां ताम्रपदवाच्यताम्रत्वेनान्वय-बोधानङ्गीकारे उदयास्तमययोस्सवितुरेकरूपवत्ताज्ञानं न स्यात्, ताम्रत्व-मात्रस्यैकरूपत्वोपगमे रक्तपदादपि तस्य बोधसम्भवात्तदुपादानेपि तदलङ्कार-प्रसङ्गादिति व्यङ्ग्यार्थताम्रपदस्य वाच्यवाचकभावसम्बन्धेन ताम्रपदार्थेन्वय आवश्यकः। तथा सति रक्तपदवाच्यरक्तत्वेनैव रक्तपदबोधे ताम्रपदवाच्यरक्तत्वेन तादृशरक्तत्वस्यैक्यविरहान्न तदुपादानेयमलङ्कार इत्याशयः।

रूपतोपन्यासायात्तप्रतीतिस्थगनं स्यात्। अतएवैतादृशस्थले कथित-पदं न दोषः, प्रत्युत पदान्तरोपादानमेव। "तादृगेवास्तमेति च" इति सर्वनामशब्दोपादानन्तु न प्रतीतिं स्थगयति, सर्वनाम्ना ताम्रपदबोध्य-

**एकरूपतोपन्यासायत्तप्रतीतिस्थगनमिति।** **उपन्यासो** वैशिष्ट्यम्, **तदायत्ता** तदधीना या **प्रतीतिः** महतां सम्पत्तिकाले विपत्तिकाले च वैरूप्या-भावबोधः, तस्य **स्थगनं** विलम्बेनोत्पाद इत्यर्थः। रक्तपदताम्रपदयोर्वाच्य-तावच्छेदकस्य रक्तत्वस्य तत्तत्पदवाच्यत्वविशिष्टरक्तत्वानतिरेकितया तदनु-सन्धानोत्तरं दर्शितप्रतीतेस्सम्भवेपि वैलम्बिकबोधस्य सहृदयहृदयोद्वेजकतया-लङ्कारप्रयोजकत्वासम्भव इत्याशयेन **स्थगनमित्युक्तम्।**

**अतएव** एकरूपतया झटितिबोधजनकत्वेनोक्तालङ्कारप्रयोजकैकानुपूर्वीक-पदद्वयोपादानादेव। **एतादृशस्थले** प्रयोजनवत्समानार्थकसमानानुपूर्वीकानेक-पदघटितकाव्ये **कथितपदं न दोष** इति। समानार्थकसमानानुपूर्वीकानेक-पदघटितत्वरूपे तत्र प्रयोजनशून्यत्वस्य पदे विशेषणीयत्वात् प्रकृते ताम्रपदस्य द्विधोपादानमुक्तरीत्या सप्रयोजनमिति न तत्र तत्प्रसङ्ग इत्यर्थः। **पदान्त-रोपादानमेवेति।** **दोष** इति पूर्वेणान्वयः। तथा च रक्तपदोपादानस्यालङ्कार-प्रयोजकत्वविरहेण तस्यैव निष्प्रयोजनत्वाद्दोषत्वमत्रेत्याशयः। काव्यप्रकाश-विवरणे "प्रत्युत तस्यैव पदस्य सर्वनाम्ना वा प्रयोगं विना दोषः" इत्यत्र सर्व-नामपदोपादानस्यैतादृशस्थलेनुगुणत्वमुक्तमिति तदनुसारेणाह—**तादृगेवास्त-मेति चेति।** **सर्वनामशब्देति** सर्वनामपदं तद्घटितशब्दस्याप्युपलक्षण-मित्याशयेन **सर्वनामशब्दे**त्युक्तं वृत्तौ। तेन तादृक्पदस्य सर्वनामसंज्ञाविरहेपि नासङ्गतिः। अथवा सर्वेषान्नाम सर्वनामेति योगार्थमात्रमादृत्यात्र **सर्व-नामे**त्युक्तमिति बोध्यम्।

**न प्रतीतिं स्थगयतीति।** न चात्रापि व्यङ्ग्यार्थतादृक्पदस्य वाच्यार्थेन्व-यात्तादृक्पदवाच्यताम्रपदवाच्यताम्रत्वेनैव बोधः स्यादिति, कुतो न प्रतीति-स्थगनमिति वाच्यम्, सर्वनामतद्घटितपदाजन्य एवान्वयबोधे शब्दविषय-कत्वम्, अन्यथा घटोस्ति, तमानय, यादृशश्चैत्रो दृष्टस्तादृशमानयेत्यादौ तत्तादृश-

पदयोरपि शाब्दबोधविषयत्वे आनयनं घटकर्म्मकन्नवा दण्डादिविशिष्टचैत्र-कर्म्मकन्नवेत्यादिसंशयनिवर्त्तकत्वं तादृशबोधस्यानुपपन्नं स्यात्, सामान्य-संशयस्य विशिष्टनिश्चयानिवर्त्त्यत्वादिति, प्रकृतेपि तादृक्पदाविषयकस्ताम्रपद-वाच्यताम्रत्वप्रकारक एव तादृक्पदादपि बोध इत्येकरूपत्वाक्षतेः, अथवा तादृक्पदस्य ताम्रपदवाच्यताम्रत्वावच्छिन्ने लक्षणामुपगम्यैवैकरूपतोपपादनीया । "सर्वनाम्नि न लक्षणा"इति प्रवादः काव्यातिरिक्तस्थल एव । अतएव—

"लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ।।"

इत्यत्र पदप्रकाश्यालक्ष्यक्रमव्यङ्ग्योदाहरणे तददसिदंशब्दानामनुभवैकगोचरार्थ-विषयकबोधजनकत्वं काव्यप्रकाशवृत्तावुक्तम् ।

एवं—"तन्मञ्जुमन्दहसितं श्वसितानि तानि ।
सा वै कलङ्कविधुरा मधुराननश्रीः ।।
अद्यापि मे हृदयमुन्मदयन्ति हन्त ! ।
सायन्तनाम्बुजसहोदरलोचनायाः ।।"

इति रसगङ्गाधरे स्मृत्यात्मकभावध्वनेरुदाहरणे तत्पदत्रयस्य स्मृतित्व-प्रकारकबोधजनकत्वमुक्तम् ।

न चोभयत्रापि तेषां तत्तद्धर्म्मावच्छिन्ने शक्तिमत्तयैव तत्तद्धर्म्मेण बोधः सम्भवति, बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नस्यैव सर्वनामपद-शक्यतयानुभवान्यवचनागोचरत्वविशिष्टानुभवगोचरत्वस्य स्मृतित्वस्य पूर्व-कालीनबुद्धिविषयतावच्छेदकत्वविरहात्तदवच्छिन्ने शक्तेरसम्भवाच्छक्यता-वच्छेदकानुभवविषयत्वस्यापि तत्पदजन्यबोधीयप्रकारत्वविरहात् । अतएव—वासवदत्तादाहाकर्णनप्रवृद्धशोकनिर्भरस्य वत्सराजस्य परिदेवितं रत्नावली-नाटिकास्थम्—

"उत्कम्पिनी भयपरिस्खलितांशुकान्ता ।
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।।
क्रूरेण दारुणतया सहसैव दग्धा ।
धूमान्धितेन दहनेन न वीक्षितासि ।।"

**ताम्रत्वेनापि परामर्शसम्भवादिति ।**

इति पद्यं पदनिष्ठालक्ष्यक्रमव्यङ्ग्यद्योतकत्वेन ध्वनिकृतोदाहृत्य "अत्र हि ते इत्येतत्पदं रसमयत्वेन स्फुटमेवावभासते सहृदयानाम्" इत्युक्तम्। व्याख्यातश्च तद्वृत्तिग्रन्थो लोचनकृद्भिराचार्य्याभिनवगुप्तपादैः। "पदे चेति पदे च सतीत्यर्थः। तेन रसप्रतीतिर्विभावादेरेव। विभावादयो यदा विशिष्टेन केनापि पदेनार्प्यमाणा रसचमत्कारविधायिनो भवन्ति, तदा पदस्यैवासौ महिमा समर्प्यत इति भावः। अत्र हीति। ते लोचने इति तच्छब्दस्तल्लोचनगतस्वसंवेद्याव्यपदेश्यानन्तगुणगणस्मरण[1]कारी द्योतको रसस्यासाधारणनिमित्ततां प्राप्तः। तेन यत्केनचिदुक्तं प्रक्रान्तपरामर्शकस्य तच्छब्दस्य कथमियति सामर्थ्यमिति, तन्न, यत्र ह्यनूद्दिश्यमानधर्म्मान्तरसाहित्ययोग्यधर्म्मयोगित्वं वस्तुनो यच्छब्देनाभिधाय तद्बुद्धिस्थधर्म्मान्तरसाहित्यं तच्छब्देन निर्वाह्यते, यत्तदोर्न्नित्यसम्बन्धात्, तच्च पूर्वप्रक्रान्तपरामर्शकतच्छब्दस्य। यत्र पुनर्न्निमित्तोपस्मरणविशेषाकारसूचकत्वं तच्छब्दस्य स घट इत्यादौ, यथा तत्र का परामर्शकथेत्यास्तामलीकपरामर्शकैः पण्डितम्मन्यैः सह विवादेन" इति तत्र लोचनग्रन्थः। एवञ्चोक्तग्रन्थपर्य्यालोचनया बुद्धिस्थविषयातिरिक्तधर्म्मप्रकारेणापि स्मारकत्वं सर्वनाम्नामवगम्यते। तच्च व्यञ्जनानङ्गीकारे लक्षणयैवोपपद्यत इत्याशयेन **न प्रतीतिं स्थगयतीत्युक्तमिति** बोध्यम्।

न चैवमपि ताम्रपदतादृक्पदजन्यबोधयोर्न्न समानाकारकत्वसम्भवः। स इव दृश्यत इति व्युत्पत्त्या तादृक्पदस्य तन्निरूपितसादृस्यप्रकारेण ताम्रपदस्य च ताम्रपदवाच्यताम्रत्वप्रकारेण बोधजनकत्वादिति वाच्यम्, सादृश्यस्य भेदाघटितस्यापि "गगनं गगनाकारम्"...इत्यादौ दृष्टतयात्रापि तदेव सादृश्यम्। तच्च ताम्रपदवाच्यताम्रवृत्तिताम्रत्वात्मकधर्म्मस्वरूपमेवेति ताम्रपदवाच्यताम्रत्वमात्रेण बोधेपि सादृश्यस्यार्थतो लाभात्। विशिष्टस्य शुद्धानतिरेकात्। एतदभिप्रेत्यैव **ताम्रपदबोध्यताम्रत्वेनापि परामर्शसम्भवादित्यत्रापी**त्युपात्तम्। तेन यत्र तादृक्पदात्तादृक्पदबोध्यत्वभेदभूयस्त्वविशिष्टधर्म्म-

१ ०स्मरणाकारद्योतको इति लोचने पाठः।

**एवमेव "सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव"...**

घटितस्योपस्थितिस्तत्रोक्तरूपेण बोधासम्भवेपि यत्र तेन रूपेण नोपस्थितिस्तत्रैव ताम्रपदतादृक्पदयोरेकरूपेणान्वयबोधजनकत्वसम्भव इति सूचितम् । एतेन यत्केनचिदुक्तं **तादृगेवास्तमेति चे**ति मूलोक्तं सर्वथा न रोचते, शाब्दबोधे शब्दभाने एकरूपताभङ्गात् । किञ्च ताम्रपदेन रक्तत्वावच्छिन्नस्य बोधः, तादृक्पदेन च रक्तसदृशस्येत्येकरूपताभङ्गो दुर्वार एवेति तदपास्तं वेदितव्यम् ।

एकधर्म्मं परित्यज्यापरधर्म्मावच्छिन्नस्य बोधोन्यत्राप्यालङ्कारिकैरभ्युपेयत इति दर्शयति—**एवमेवेत्यादिना । सकलकलमिति ।** पुरपक्षे **कलकलेन** कोलाहलेन सहितम् । सुधांशुबिम्बपक्षे सकला कला यस्येति बोध्यम् । **साधारणो धर्म्म** इति । अयम्भावः—सकलकलपदस्य स्वबोध्यकोलाहलवत्त्वेन स्वबोध्याशेषकलाविशिष्टत्वेन चान्वयबोधजनकत्वे सुधांशुबिम्बे कोलाहलस्य पुरे च कलाया विरहेण साधारणधर्म्मस्य ततोलाभप्रसङ्गादुपमालङ्कारस्तत्र काव्ये न स्यादिति कोलाहलकलावत्त्वयोः परिहारेण सकलकलपदबोध्यत्वमात्रेणैव तत्पदजन्यबोधस्तत्राभ्युपेयस्तस्य च विधुबिम्बपुरयोर्निराबाधत्वमिति ।

नन्वत्रोपमालङ्कार एव नास्ति, यदर्थं साधारणधर्म्मस्यावश्यकता, किन्तु श्लेष एव । तथा हि—"शब्दैः स्वभावादेकार्थैः श्लेषोनेकार्थवाचनम्" इति "श्लेषः स वाक्य एकस्मिन् यत्रानेकार्थता भवेत्" इति साहित्यदर्पणकाव्यप्रकाशयोरुक्तयोरेकस्मिन् विशेष्येभिधयापरस्मिन् विशेष्ये लक्षणयार्थद्वयप्रतिपादने शब्दानां परिवृत्तिसहत्वेर्थश्लेषस्तदसहत्वे च शब्दश्लेषः । एकार्थमात्रविषयकान्वयबोधसमर्थाना शब्दाना यस्मिन्नलङ्कारे विद्यमानेनेकोर्थः प्रकरणादेरनियमेन बुद्ध्यते स परिवृत्तिसहशब्दघटितत्वेर्थश्लेषस्तदघटितत्वे शब्दश्लेष इत्यर्थकयोः श्लेषलक्षणयोः प्रकृतकाव्ये दर्शितव्युत्पत्तिद्वयेनोभयार्थबोधजनकपरिवृत्त्यसहसकलकलपदघटितत्वेन सत्त्वाच्छब्दश्लेषत्वं निराबाधम् ।

न चेवशब्दोपादानात्तदर्थसादृश्यस्यापि बोधादुपमेति वाच्यम्, गुणेन क्रियया तदुभयेन वा साम्ये साधर्म्यस्य वास्तविकतया "कमलमिव मनोज्ञ-

मेतत्कचतितराम्" इत्यत्र मनोज्ञत्वस्वरूपेण गुणेन साम्यस्य कचतितरामित्यस्य दीप्यतेतरामित्यर्थकतया दीप्तिस्वरूपया क्रियया साम्यस्य तदुभयसाम्यस्य च वास्तविकस्य सत्त्वात्तत्रैवोपमालङ्कारस्य युक्तत्वात् पदमात्रसाम्यस्य वास्तविकत्वाभावात्तत्र तदलङ्कारासम्भवात्। किञ्च श्लेषविषये सर्वत्र क्वचित्तुल्ययोगितायाः, यथा—"येन[1] ध्वस्तमनोभवेन"...इत्यादौ माधवोमाधवयो रक्षणोपयोगित्वेन वर्णनीयतया प्राकरणिकयोः "नीतानामाकुलीभावम्[2]"... इत्यादौ पद्ममृगविशेषयोरूपमानत्वेनाप्राकरणिकयो रक्षणकर्तृत्वस्य सादृश्यस्य चैकधर्म्मस्याभिसम्बन्धात् "नियतानां सकृद्धर्म्मः सा पुनस्तुल्ययोगिता" इति लक्षणलक्षितायाः, "स्वेच्छोपजातविषयोपि[3]"...इत्यादौ "सकृद्वृत्तिस्तु धर्म्मस्य प्रकृताप्रकृतात्मनाम्। सैव क्रियासु बह्वीसु कारकस्येति दीपकम्॥" इति लक्षणलक्षितस्यैकस्य धर्म्मस्यैकवारं प्राकरणिकाप्राकरणिकोभयवृत्तित्वरूपस्य प्रथमस्य स्मरस्योपमानत्वेनाप्राकरणिकस्य राज्ञ उपमेयत्वेन प्राकरणिकस्य कष्टहेतुत्वरूपैकधर्म्मसम्बन्धाद्दीपकस्य, "सकलकलं पुरम्"...इत्यादौ दर्शितदिशोपमायास्सम्भवादुपमादीपकतुल्ययोगितानाञ्च श्लेषविषयपरिहारेणापि

"सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ।
हृदयम्मदयति वदनं नवशरदिन्दुर्यथा बाले॥"

---

१ येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतः।
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गाञ्च योधारयत्॥
यस्याहुः शशिमच्छिरो हर इति स्तुत्यञ्च नामामराः।
पायात्स स्वयमन्धकक्षयकरस्त्वा सर्वदोमाधवः॥ इति सम्पूर्णः श्लोकः।

२ नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः।
सदृशे वनवृद्धाना कमलाना तदीक्षणे॥ इति सम्पूर्णः श्लोकः।

३ स्वेच्छोपजातविषयोपि न याति वक्तुम्।
देहीति मार्गणशतैश्च ददाति दुःखम्॥
मोहात्समुत्क्षिपति जीवनमप्यकाण्डे।
कष्टं प्रसूनविशिखः प्रभुरल्पबुद्धिः॥ इति सम्पूर्णः श्लोकः।

"बलावलेपादधुनापि पूर्ववत्प्रबाध्यते तेन जगज्जिगीषुणा।
सतीव योषित्प्रकृतिःसुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि॥
"अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः।
समयेन तेन सुचिरं शयितप्रतिबोधितस्मरमबोधिषत॥"...

इत्यादौ क्रमेण सम्भवाच्च श्लेषस्य तदपवादकत्वादुपमादिविषये तस्य प्राधान्येन चमत्कारित्वप्रतीतेश्च श्लेषेणैव व्यपदेशो भवितुं युक्तः। तत्र चानेकेषां धर्म्मिणां पृथग्धर्म्मसम्बन्धितयैव प्रतीतेरुभयसाधरणैकधर्म्मस्य "सकलकलम्"... इत्यादितोबोधेपि क्षत्यभाव इति चेत्, न, "स्फुटमर्थालङ्कारावेतामुपमासमुच्चयौ किन्तु। आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः॥" इति रुद्रटोक्तेर्बोध्यतासंसर्गेणैकशब्दस्य साधारणधर्म्मत्वेपि साधर्म्यमुपमेत्यर्थशब्दयोरविशिष्टस्योपमालक्षणस्य सत्त्वात्। स्फुटमित्यादेरर्थश्च—समुच्चयपदं दीपकतुल्ययोगितोभयपरम्। समुच्चयालङ्कारे—

"तत्सिद्धावेकस्मिन् यत्रान्यत्तत्करं भवेत्।
समुच्चयोसौ स त्वन्यो युगपद्या गुणक्रिया॥"

तस्य प्रस्तुतस्य कार्य्यस्य एकस्मिन् साधके स्थिते साधकान्तराणि यत्र सम्भवन्ति स प्रथमः, या गुणक्रिया युगपदेककाले भवन्ति स त्वन्योपरः समुच्चय इत्यर्थकलक्षणद्वयलक्षितेप्येकधर्म्माभिसम्बन्धस्य निवेशाभावात्। तथा चोपमादीपकतुल्ययोगितालङ्कारा यद्यप्यर्थालङ्कारा इति स्पष्टम्, किन्तु शब्दमात्रं साधारणं धर्म्ममाश्रित्य इहापि शब्दालङ्कारेपि सम्भवत इति। न चार्थभेदाच्छब्दानां भेदे नैकश्शब्दोर्थद्वयसाधारण इति वाच्यम्, धर्म्मिणोर्भेदेप्यानुपूर्वीस्वरूपस्य धर्म्मस्यैकत्वेनैकानुपूर्व्यवच्छिन्नशब्दवत्त्वस्य साधारणत्वसम्भवात्। अतएव—

"यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा।
तथैव सोभूदन्वर्थो राजा प्रकृतिरञ्जनात्॥"

इत्यत्रान्वर्थसंज्ञावत्त्वमेव साधारणं धर्म्ममादायोपमालङ्कारमाहुः।

यदि च शब्दसाम्ये साधर्म्यमवास्तवत्वान्नोपमाप्रयोजकम्, तदा कथं

[1] "विद्वन्मानसहंस"...इत्यादावाधारभूते चित्तादौ सरोवराद्यारोपो राजादेर्हं-साद्यारोपप्रयोजकः। "नियतारोपणोपायः स्यादारोपः परस्य यत्। तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा॥" इत्येतस्य परम्परितरूपकलक्षणस्य सत्त्वे राज्ञि हंसत्वारोपे मानसाधेयत्वस्य चित्ते मानसत्वारोपे तु बोध्यतासंसर्गेण मानस-शब्दस्य मानसशब्दबोध्यत्वस्य वा साधारणधर्म्मस्य सत्त्वमेव हेतुः। न च तत्र श्लिष्टपदनिबन्धनपरम्परितरूपकान्यथानुपपत्त्या तथा कल्पनीयम्, उपमा तु वास्तवसाम्य एवाङ्गीकार्य्या, न तु शब्दसाम्येपीति वाच्यम्, "सकलकलम्"... इत्यादौ श्लेपबाधनीयाया अप्युपमाया अभावप्रसङ्गात्।

यच्चोक्तमुपमादिविषये श्लेपस्य प्राधान्येन चमत्कारित्वप्रतीतिरिति, तदपि न, इवपदेन सादृश्यबोधे जाते किमनयोस्सादृश्यमित्याकाङ्क्षायां सकलकल-पदगतश्लेपस्य बुद्धावारोहात्तस्याभासत्त्वेन या प्रतीतिस्तज्जनकत्वाच्चोपमाया एव प्राधान्यात्। अन्यथोपमाविषये सर्वत्र समानधर्म्मवाचकपदे शब्दश्लेषस्यार्थ-श्लेपस्य वा सत्त्वात्पूर्णोपमाया निर्विपयत्वापत्तेरिति प्राधान्येनोपमयैव व्यपदेशस्य युक्तत्वात्।

यदपि श्लेषस्यापवादकत्वमुपमादीनाञ्चोत्सर्गत्वमित्युक्तम्, तदपि न विचारसहम्, द्वयोस्सामान्यविशेषभावसत्त्वे विशेपस्य सामान्यविपयपरिहारेणा-सत्त्वे सामान्यस्य विशेषविपयपरिहारेणापि सत्त्व एव विशेपस्य सामान्याप-वादकत्वम्। प्रकृते तु श्लेषस्योपमादिभिस्सामान्यविशेषभाव एव नास्ति, द्वयोर्विविक्तविपयत्वात्। तथाहि—"येन ध्वस्तमनोभवेन"...इत्यादौ तुल्य-योगिताया न सम्भवस्तस्यां द्वयोरप्यर्थयोर्व्वाच्यत्वनियमस्य विरहादे-कस्यैवार्थस्य वाच्यत्वनियमाच्च। उक्तस्थले च माधवोमाधवयोरेकस्य वाच्यत्वे-परस्य व्यङ्ग्यत्वमेव स्यादिति "श्लेपस्स वाक्य एकस्मिन् यत्रानेकार्थता भवेत्"

---

१ विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्तद्युते!।
दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर!॥
सत्यप्रीतिविधानदक्ष! विजयप्राग्भावभीमप्रभो!।
साम्राज्य वरवीर! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥ इति सम्पूर्णः।

**इत्यादौ सकलकलपदबोध्यत्वं विधुपुरयोस्साधारणो धर्म्मः सम्भवतीत्याहुः । तदुभयमपि दर्शनविरोधादुपेक्षणीयम् । २३ ।**

इति श्लेषलक्षणस्यैकार्थप्रतिपादकानां शब्दानां यत्र वाक्येनेकोर्थः प्रतीयत इत्यर्थकस्यासम्भव एव स्यात् । न च "रक्ताः स्वभावमधुरा वहन्त्यो रागमुल्वणम् । दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियम् ॥"...इत्यादौ द्वयोरप्यर्थयोर्वाच्यत्वे तुल्ययोगितास्वीकारान्नैवमिति वाच्यम् । तुल्ययोगितायामेकस्यैव धर्म्मस्यानेकधर्म्मिसम्बन्धितया प्रतीतिः । श्लेषे त्वनेकेषां धर्म्माणां पृथग्धर्म्मसम्बन्धितया प्रतीतिरित्यतोपि तस्याः श्लेषेण विविक्तविषयत्वम् । उपमादीपकादीनां तत्त्वञ्च पूर्वं दर्शितमेवेति कुतस्तेषां बाध्यबाधकभावसम्भावनापीति "सकलकलं पुरमेतत्" इत्यत्रोपमैवालङ्कारो न तु श्लेष इति सुष्ठूक्तं **साधारणो धर्म्मस्सम्भवती**ति दिक् ।

**तदुभयमपीति** । शाब्दबोधस्य शब्दविषयकत्वनियमवादिशाब्दिकालङ्कारिकयोर्दर्शितम्मतद्वयमपीत्यर्थः । **दर्शनविरोधादिति** । दार्शनिकैर्विना लक्षणां शब्दस्य शाब्दबोधे भानानङ्गीकारादुपेक्षणीयमित्यर्थः ।

न चैवं दर्शितदोषाणां दार्शनिकमते जागरूकत्वमिति वाच्यम्, तत्र प्रथमस्य दशरथादिपदशक्तिग्रहानुपपत्तिरूपस्यानुभवस्मरणयोः कार्य्यकारणभावे प्रकारतयोर्न्निरवच्छिन्नत्वविशेषणरहितयोरेव प्रवेशाद्वारणीयत्वात् । तथाहि— प्रकारतासंसर्गेण स्मरणे प्रकारतासंसर्गेणानुभवत्वेन कारणत्वम् । जातित्वप्रमेयत्वादिनाखिलजात्यवगाहिज्ञानवतोस्मदादेस्सार्वज्ञ्यप्रसङ्गश्च विशेष्यतया तत्तद्व्यक्तीनामज्ञानेन वारणीयः । अतएव "यः सर्वज्ञः स सर्ववित्" इत्यत्र "सर्वज्ञः" इत्यनेनैवाभिमतसर्वविषयकज्ञानवत्त्वस्य लाभेपि विशिष्य तत्तद्व्यक्तित्वादिना ज्ञानवत्त्वलाभाय "सर्ववित्" इति श्रूयते । न चैवं जातित्वेन घटत्वाद्यवगाह्यनुभवात् स्वरूपतो घटत्वावगाहिस्मरणं स्यादिति वाच्यम् । प्रकारतयोर्न्निरवच्छिन्नत्वेन विशेषणीयत्वेपि जातित्वेन स्वरूपतश्च घटत्वावगाहिनोरनुभवयोस्सत्त्वे तदंशापत्तिवारणाय स्मृतेस्तद्विषयताकत्वे तदंशे उद्बोधकस्यैव नियामकतायाः वाच्यतया शुद्धप्रकारतायास्तत्र प्रवेशेप्युद्बोधक-

विशेषस्यैव तन्नियामकताया वाच्यत्वात्। उद्बोधकाश्च न्यायदर्शने अ० ३। आ० २। ४२ सूत्रे प्रणिधाननिबन्धाभ्यासादय उक्ताः। तत्रानुक्ताश्चोन्मादादयो "निदर्शनमात्रञ्चेदम्"...इत्यादिभाष्येण दर्शिताः। तेषां लक्षणान्युदाहरणानि च भाष्ये तात्पर्य्ये च विस्तरेण प्रतिपादितानि। तथा चोक्तरूपेणापि प्रणिधानादीनामयौगपद्याद्युगपदनेकरूपेणास्मरणमिति प्रतिपादितम्।

न चोद्बोधकवैचित्र्यादेव स्मृतेर्विलक्षणप्रकारताकत्वाभ्युपगमे विशेष्यविशेषणभावांशेपि तस्यैव नियामकत्वसम्भवात् सामान्यतस्तद्विषयकस्मरणतद्विषयकानुभवयोः समवायेन विषयतया वा कार्य्यकारणभावोस्त्विति वाच्यम्, तथा सति घटवद्भूतलमित्यनुभवाद् घटो भूतलञ्चेति स्मरणापत्तेः। प्रकारत्वादेरप्रयोजकत्वादुद्बोधकानां विशिष्टस्मरणजनकत्वे तत एव निर्वाहादनुभवस्य कारणत्वानुपपत्तिः। अनुगतोद्बोधकस्थले तत्तदर्थविषयकस्मरणं प्रति सुस्मूर्षित-तत्तदर्थचिह्नज्ञानत्वेन तत्तत्सादृश्यज्ञानत्वेन चानुगतरूपेणैव कारणतया तादृशस्थले उद्बोधकवैलक्षण्येन स्मरणे वैलक्षण्यस्यासम्भवेन तत्प्रकारकज्ञानाद्यसत्त्वे तत्प्रकारकस्मरणापत्तिवारणाय प्रकारतायास्तयोरवश्यं निवेशनीयत्वात्। एवञ्च दशरथादिपदादस्मदाद्यदृष्टजातिविशेषावच्छिन्ने शक्तिग्रहे यत्किञ्चिद्घटत्वादेर्लौकिकप्रत्यक्षानन्तरं जातित्वसामान्यलक्षणया निखिलजातिविषयकाज्जातिमानित्यलौकिकानुभवादेव स्वजन्यसंस्कारद्वारा जायमानं जातित्वांशे उद्बोधकविरहेण प्रमुष्टजातित्वांशं स्वरूपतो दशरथादिशरीरवृत्तिजातिप्रकारकं स्मरणं तत्तत्पुराणकोषादिसहकारेण कारणम्। अनुगतोद्बोधकस्थले दर्शितानुगतरूपेण कारणतायाः कल्पनीयत्वे स्वरूपतो घटत्वप्रकारताकानुभवाभाववतो जातित्वेन तदनुभववतः पुरुषस्य स्वरूपतो घटत्वप्रकारकस्मरणवारणाय प्रकारतायां निरवच्छिन्नत्वविशेषणस्यावश्यकत्वेपि दशरथादिपदशक्तिग्राहकसंस्कारेनुगतोद्बोधकसत्त्वे प्रमाणाभावात्तथा कार्य्यकारणभावस्याकल्पनात्। अतएव तदादिसर्वनाम्नां बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने शक्ततया चैत्रत्वाद्यपूर्वधर्म्मप्रकारकबोधस्यानुगतेन बुद्धिविषयतावच्छेदकत्वेन निखिलतादृशधर्म्मविषयकसामान्यप्रत्यासत्त्यधीनानुभवजन्यसंस्काराद् बुद्धि-

विषयतावच्छेदकत्वांशस्योद्बोधकविरहेण मोषात्स्वरूपतश्चैत्रत्वादिप्रकारक-स्मरणेनैवोपपादनम्। अथवा दशरथादिपदानां स्ववाच्यत्वावच्छिन्ने लक्षणया दशरथादिपदवाच्यत्वप्रकारक एवान्वयबोधः। शक्यतावच्छेदकस्य विशेषतो-ज्ञानेपि लक्षणाजन्यबोधोपपादनप्रकारोधस्ताद्दर्शित एव। संसर्गतया भानस्या-प्युपस्थित्यपेक्षायां शाब्दिकमतेपि तत्रानुपपत्तिरेव स्यात्।

यदप्युक्तं स्मृतिसंस्कारयोस्समानविषयतया क्लृप्तेन कार्य्यकारणभावेनैव निर्वाहाद् गौरित्याकारके स्मरणे गोपदवृत्तिज्ञानजन्यसंस्कारस्य पृथक्कारणता-कल्पनं दार्शनिकानां गौरवमावहतीति, तदपि न, एकसम्बन्धिज्ञानस्यापर-सम्बन्धिस्मरणं प्रति कारणतायाः हस्तिहस्तिपकयोः पाल्यपालकभावसम्बन्ध-ज्ञानजन्यसंस्कारवतः पुरुषस्य तयोरेकस्य प्रत्यक्षादिना ज्ञानेपरस्मरणस्य सर्वानुभवसिद्धतयावश्यं कल्पनीयत्वेन तादृशसंस्काराभाववतश्च तदानीमपि तदनुदयेन तादृशसंस्कारस्यापि कारणत्वमावश्यकमेवेति प्रकृतेपि गोगोपदयो-र्वाच्यवाचकभावात्मकसम्बन्धज्ञानजन्यसंस्कारवतो गोपदज्ञाने गौरिति स्मरणं तेनैव कार्य्यकारणभावेन निर्वहतीत्यक्लृप्तकार्य्यकारणभावकल्पनप्रयुक्तगौरवान-वकाशात्।

गोत्वप्रकारकशाब्दबोधं प्रति संसर्गतया प्रकारतया वा सङ्केतमवगाहमानो-नुभवः स्वजन्योपस्थितिमत्त्वसम्बन्धेन तादृशोपस्थितिं प्रति च स्वजन्यसंस्कार-वत्त्वसम्बन्धेन कारणम्। उपस्थितिश्च क्वचित्स्मरणरूपा, क्वचिदवान्तरवाक्यार्था-नुभवादिरूपा च ग्राह्येति जन्यत्वादीनां कारणतानवच्छेदकत्वम्, अवान्तर-वाक्यार्थानुभवानन्तरम्महावाक्यार्थबोधश्चोपपन्नः।

पर्य्यायान्तरवृत्तिज्ञानजन्ये तादृशबोधे लाघवेतरबाधादिज्ञानोपनीतद्रव्यपद-वृत्तिज्ञानजन्ये च व्यभिचारवारणं स्वजन्योपस्थितिमत्त्वमव्यवहितोत्तरत्व-समवायघटितसामानाधिकरण्योभयसम्बन्धेन प्रवेश्य तत्सम्बन्धेन तादृशानुभव-त्वविशिष्टत्वमपि कार्य्यतावच्छेदकतयोपादाय करणीयम्। दर्शितबोधयोस्तादृश-कार्य्यतावच्छेकानाक्रान्तत्वात्।

गोपदसङ्केतज्ञानजन्यतादृशस्मृतेस्तृतीयक्षणोत्पन्नतादृशानुभवाव्यापकत्वं क्षण-

द्वयमात्रसाधारणस्य स्वक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वसमयध्वंसानधिकरणत्वरूपस्य प्रवेश एव। तद्वारणाय च तृतीयक्षणसाधारणं स्वसमयध्वंसाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वसमयध्वंसानधिकरणत्वरूपं लाघवात् स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसानधिकरणत्वरूपं वा तत्सम्बन्धघटकतया प्रवेशनीयमिति तादृशानुभवस्यापि तथात्वाद् व्यभिचाराभावात्। विनश्यदवस्थस्मृतीनां तत्तद्व्यक्ति प्रति कारणत्वस्यानावश्यकतयोक्तातिगौरवानवकाशः।

गोपदवानयं गौरस्तीत्यादिवाक्यादपि दार्शनिकानां गोपदवानयं गौरित्याकारको न शाब्दबोधः, किन्तु गोपदस्य स्वरूपे गोवृत्त्यानुपूर्व्यवच्छिन्ने लक्षणया, पदस्य शक्त्याश्रये मतुपस्सम्बन्धाश्रये शक्त्येदमः प्रत्यक्षविषये शक्त्या तत्तद्धर्म्मावच्छिन्नस्यैव तत्तत्पदेभ्य उपस्थितौ गकारोत्तरौकारत्वरूपानुपूर्व्यवच्छिन्नाभिन्नशक्तात्मकपदनिरूपितवाच्यत्वसम्बन्धवान् प्रत्यक्षविषयो गौरस्तितावानित्याकारक एव। तत्र च गोपदादिज्ञानस्यैकसम्बन्धिज्ञानविधयैव कारणत्वम्, न तु विशेषणतावच्छेदकादिज्ञानविधया, न वा तादृशबोधस्य वृत्तिज्ञानतुल्यविषयताकत्वम्।

शाब्दबोधो वृत्तिग्रहतुल्यविषयताक एव युक्त इत्यपि वृत्तिज्ञानीयविषयताश्रयत्वस्य शाब्दबोधीयविशेष्यताप्रकारतान्यतरप्रयोजकत्वे यत्र गोपदवान् गौरितिवृत्तिज्ञाने स्वकारणबलाद् घटपदादीनां तत्तदर्थादीनाञ्च भानं तत्र तज्ज्ञानीयविषयतायास्तेष्वपि सत्त्वात्तेषामपि गोत्वप्रकारकबोधे विषयत्वापत्तिरिति सङ्केतलक्षणान्यतराश्रयत्वमेव तथात्वं वाच्यम्। वाच्यत्वादिसंसर्गविषयतायाश्च तादृशान्यतरत्वाभावादेव वाच्यत्वादीनां वृत्तिमत्त्वविरहेऽपि शाब्दबोधविषयत्वम्। तथा च नवीनशाब्दिकैः पदस्य वृत्त्याश्रयत्वानुपगमात् कथं तस्य शाब्दबोधविषयत्वं तेषां सम्भाव्येत। शाब्दबोधीयपदातिरिक्तनिष्ठयोरेव विशेष्यताप्रकारतयोर्वृत्त्याश्रयत्वप्रयोजकत्वमिति तु प्रमाणाभावात् पदभिन्नवृत्तित्वस्याधिकस्य प्रयोज्यतावच्छेदकत्वेन गौरवाच्च न युक्तम्।

वस्तुतस्तु सर्वत्र शाब्दबोधस्य शब्दविषयकत्वोपगमे भिन्नविषयक-

शाब्दबोधं प्रत्यनुमितिसामग्र्या प्रतिबन्धकत्वेन घटभिन्नविषयकानुमितिसामग्र्या घटविषयकशाब्दबोधप्रतिबन्धकत्वाद् घटशाब्देच्छासत्त्वे चाप्रतिबन्धकत्वाद् घटशाब्देच्छाविरहविशिष्टाया एव घटभिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वम् । तत्र घटविषयकशाब्दबोधस्य नियमतो घटपदविषयकत्वोपगमे घटपदविषयकशाब्देच्छाया अप्युत्तेजकत्वमवश्यं वाच्यमिति यत्र घटविषयकशाब्देच्छाविशिष्टा पटाद्यनुमितिसामग्री घटविषयकशाब्दसामग्र्यभावश्च तत्र घटपदविषयकशाब्देच्छाविरहविशिष्टाया घटविषयकशाब्देच्छायास्सत्त्वात्तादृशानुमितिसामग्र्यास्तद्विरहविशिष्टत्वाभावेन घटपदमात्रविषयकशाब्दसामग्रीतो घटपदशाब्दबोधापत्तेः । इच्छाविषयस्य घटशाब्दस्य तत्रासम्भवेनेष्टापत्तेरसम्भवाद् घटत्वप्रकारकश्शाब्दबोधः प्रत्यक्षाद्यतिरिक्तज्ञानं वा जायतां घटपदप्रकारकश्शाब्दबोधः प्रत्यक्षाद्यतिरिक्तज्ञानं वा जायतामित्यादिनानाविधेच्छानां विनिगमनाविरहेणोत्तेजकत्वेन तदभावाना मिथो विशेष्यविशेषणभावेनानन्तकार्य्यकारणभावकल्पनप्रसङ्गाच्च । घटपदस्य स्वजन्यशाब्दबोधाविषयत्वे च न तदिच्छायास्तत्रोत्तेजकत्वमिति ।

प्रत्यक्षधारादृष्टान्तेन शाब्दबोधधारामभ्युपगम्यैकशाब्दबोधानन्तरमपरतदुत्पत्तौ प्रथमस्य वृत्तिविषयकत्वेन कारणत्वसम्भवान्न तत्र वृत्तिज्ञानान्तरं कल्पनीयमित्यपि शाब्दबोधधारायाः प्रामाणिकत्वे एवोपपद्येत, तदेव चासिद्धम् , प्रत्यक्षकरणस्य चक्षुरादेस्तद्व्यापारसन्निकर्षाणाञ्च स्थिरतयैकप्रत्यक्षानन्तरमपि विद्यमानत्वाद्यावत्तेषां सत्त्वं तावत्कालं प्रत्यक्षोत्पादः कारणसत्त्वे कार्य्यावश्यम्भावादेव सिद्धः । शाब्दानुमित्यादिकरणानां पदज्ञानादीनां तद्व्यापाराणां पदार्थोपस्थित्यादीनाञ्च क्षणिकतया स्वस्वकार्य्यं जनयित्वा नाशात्तत्र कथं धारावाहिकत्वं सम्भाव्येतापि । तथापि शाब्दधारास्वीकारे वृत्तिज्ञानमात्रेणोत्तरोत्तरशाब्दानामनुपपत्तिरेवेत्याकाङ्क्षाज्ञानादिकमपि धारावाहिकमेव कल्पनीयमिति शाब्दबोधस्य पदविषयकत्वोपगमेपि क उपकारस्तत्रेति ।

एवं रीत्या शाब्दबोधस्य पदविषयकत्वाभावे सिद्धे गवादिपदानां स्वरूपे वृत्तेरनावश्यकतया गामुच्चारयेत्यादौ गोवाचकं गोपदमिति शाब्दबोधोपगमेपि

गोपदस्य गोपदार्थत्वविरहेण कर्म्मतायां विभक्तिवाच्यायामन्वयस्यानुपपत्तिरेव, "प्रकृत्यर्थान्वित"...इत्यादिव्युत्पत्तेरिति तत्र स्वरूपे गोपदस्य लक्षणावश्यकी। तादृशव्युत्पत्तौ प्रकृत्यर्थत्वस्य प्रकृतिजन्यबोधविषयत्वमात्ररूपस्य विवक्षणे समूहालम्बनात्मकबोधमादाय तद्विषयताया अव्यावर्त्तकत्वापत्तेरिति।

(१) अत्र वाजपेयपदबोधः।

यदपि अतएव घटाम्पदयोरेकेत्यादिना कथमपि स्मरणासम्भवादित्यन्तेन प्रबन्धेन कर्म्मपदवाच्यं कर्म्म अम्पदश्चेतिसमूहालम्बनज्ञानजन्यकर्म्मस्मृतौ घटद्वितीययोराकाङ्क्षाज्ञानसत्त्वे कर्म्म नाम्पदवाच्यमिति बाधज्ञानकाले घटः कर्म्मेति शाब्दापत्तिरिति यदुक्तम्, तदपि न विचारसहम्। घटमित्याद्याकाङ्क्षाज्ञानस्य स्वीयघटपदत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताविशिष्टविषयतानिरूपितवृत्तिनिष्ठप्रकारतानिरूपितधर्म्मितावच्छेदकताविशिष्टोपस्थितीयप्रकारतासंसर्गेण घटः कर्म्मेत्याकारकशाब्दबोधे कारणत्वं कार्य्यतावच्छेदकश्च संसर्गो विशेष्यतावच्छेदकत्वमेव। विषयतायां विशेष्यतावैशिष्ट्यं स्वनिरूपकज्ञानविशिष्टज्ञानीयत्वस्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन, ज्ञाने ज्ञानवैशिष्ट्यमेकक्षणावच्छिन्नैकात्मवृत्तित्वेन, प्रकारतायां धर्म्मितावच्छेदकतावैशिष्ट्यं प्रयोज्यतासम्बन्धेन, यादृशसंसर्गावच्छिन्नयादृशधर्म्मावच्छिन्ना निरवच्छिन्ना वा यन्निष्ठवृत्तिज्ञानीयधर्म्मितावच्छेदकता सा तादृशसम्बन्धावच्छिन्नां तादृशधर्म्मावच्छिन्नां निरवच्छिन्नां वा तन्निष्ठविषयतामेव प्रयोजयत्यनुभवबलान्न त्वन्यविधामिति प्रकृते घटमित्याकाङ्क्षाज्ञानस्योक्तसम्बन्धेन कर्म्मपदसमूहालम्बनज्ञानजन्योपस्थितीयप्रकारताश्रये कर्म्मत्वेभावादुक्तापत्तिविरहात्। तदीयघटपदत्वावच्छिन्नप्रकारताविशेष्यता अम्पदत्वावच्छिन्ना, उक्तोपस्थितिजनकोक्तसमूहालम्बनज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविषयता च कर्म्मपदत्वावच्छिन्नेति तद्विशिष्टत्वस्य कर्म्मपदत्वावच्छिन्नविषयतायामभावात्। सामानाधिकरण्यमात्रस्य वैशिष्ट्यघटकत्वे उक्तदोषतादवस्थ्यं कालान्तरीणाम्पदवाच्यं कर्म्मेतिज्ञानीयाम्पदत्वावच्छिन्नविषयताया निरुक्ताकाङ्क्षाज्ञानीयविशेष्यताविशिष्टत्वादिति तत्रोभयसम्बन्धोपादानम्; तथा चोक्तविशेष्यतानिरूपकघट-

---

(१) अत्रापि वाजपेयपदबोधप्रदर्शनं टीकाकृदभिप्रेतमपि न कृतम्। टिप्पण्यान्तु पूर्वपक्षे एव वाजपेयपदविचारः प्रदर्शितो नेह पुनः तन्यते।

मित्याकारकज्ञानविशिष्टत्वस्य कालान्तरीणघटमित्याकाङ्क्षाज्ञानेसत्त्वान्नोक्तदोषः। समानाकारकज्ञानीयविषयतयोरैक्यमते तद्दोषतादवस्थ्यमत एकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन स्वविशिष्टज्ञानीयत्वस्वीयघटपदत्वावच्छिन्न प्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन स्वविशिष्टत्वं विषयतायामेव निवेश्य तन्निरूपितवृत्तिप्रकारतानिरूपितधर्म्मितावच्छेदकताविशिष्टोपस्थितीयप्रकारत्वमेव कारणतावच्छेदकः संसर्गो वक्तव्यः। कर्म्मपदवाच्यं कर्म्मेतिज्ञानीयकर्म्मपदनिष्ठविषयताया उक्तसम्बन्धेन स्वविशिष्टज्ञानीयत्वविरहात्तदापत्तेरसम्भवात्।

न च तथापि यत्रापेक्षाबुद्ध्यात्मकमम्पदवाच्यं कर्म्मेति वृत्तिज्ञानमनन्तरञ्च कर्म्मोपस्थितिस्ततो घटमित्याकाङ्क्षाज्ञानं कर्म्मपदवाच्यं कर्म्मेति समूहालम्बनात्मकं ततश्च कर्म्मोपस्थितिस्तत्रोक्ताकाङ्क्षाज्ञानविशिष्टत्वस्य तत्पूर्वोत्पन्नापेक्षाबुद्ध्यात्मकवृत्तिज्ञाने एकक्षणावच्छेदेनैकात्मवृत्तिमति सत्त्वात्तदीयाम्पदत्वावच्छिन्नविषयतायास्तादृशाकाङ्क्षाज्ञानीयघटपदत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वाच्च तन्निरूपितवृत्तिनिष्ठप्रकारतानिरूपितधर्म्मिता वच्छेदकतावैशिष्ट्यस्योक्तोपस्थितीयप्रकारतायां सत्त्वात्तदुत्तरं घटः कर्म्मेति शाब्दबोधापत्तिः। एतेन तादृशधर्म्मितावच्छेदकतावैशिष्ट्यं स्वप्रयोज्यत्वस्वनिरूपकज्ञानविशिष्टज्ञानीयत्वोभयसम्बन्धेन निवेश्यं ज्ञाने ज्ञानवैशिष्ट्यमेकक्षणावच्छेदेनैकात्मवृत्तित्वमात्रेण वक्तव्यं दर्शितद्वितीयोपस्थितिप्रकारतायाञ्च तदभावादेव न धर्म्मितावच्छेदकतावैशिष्ट्यमिति निरस्तम्। प्रथमोपस्थितेरपि स्वनिरूपकज्ञानविशिष्टत्वसम्भवेन तदीयत्वस्य समानाकारकज्ञानीयविषयतयोरैक्यात्तस्यामनपायादिति वाच्यम्, तादृशसमूहालम्बनात्मकाकाङ्क्षाज्ञानोत्तरं घटः कर्म्मेति शाब्दबोधस्यैव सामग्रीसंवलनेनौचित्यात्तमपनोद्य तस्मिन् क्षणे पुनस्तदुपस्थितेरन्याय्यत्वात्। क्षणविलम्बस्य शपथमात्रनिर्णेयतयैकक्षणपूर्वं शाब्दबोधस्येष्टत्वे तदुत्तरक्षणेपि तस्येष्टत्वे बाधाभावाच्च कर्म्मपदजन्यतादृशोपस्थितेरुक्तशाब्दबोधप्रतिबन्धकत्वविरहात्। वाच्यत्ववाचकत्वयोस्संसर्गतया प्रकारतया वा ज्ञानस्य कारणत्वे

**नन्वेकपदजनितया पदार्थस्मृत्या सह द्वितीयपदजनितायास्तस्या**

दर्शितसम्बन्धघटकप्रकारत्वविशेष्यत्वयोर्विषयतात्वेनैव निवेशः कार्य्य-स्तेनामृपदवत् कर्म्म, अम्पदवाच्यं कर्म्म कर्म्मवाचकमम्पदं कर्म्मवदम्पदमिति सर्वत्रैव ज्ञानेम्पदत्वावच्छिन्नविषयतायास्सत्त्वात्तामादायैवोक्तवैशिष्ट्योपपत्तिः। एवञ्चौट्पदादिज्ञानजन्यकर्म्मबोधे व्यभिचारवारणाय कारणाव्यवहितोत्तरत्वं कार्य्यतावच्छेदके नोपादेयम्, औट्पदादिज्ञानजन्योपस्थितीयप्रकारताया उक्ताकाङ्क्षाज्ञानविशिष्टत्वाभावादेव व्यभिचाराभावात्। दर्शितपदार्थानां संसर्गघटकत्वेन शाब्दिकमतसिद्धवाच्यत्वादिसंसर्गकज्ञानकारणतातो दर्शित-कारणतायामेव लाघवात्। गवामित्यादौ द्विविधाकाङ्क्षाज्ञानकारणताया अवश्यं वाच्यत्वात्तत्र गौरवं तेषां स्फुटमिति शाब्दबोधे शब्दस्य भानानभ्युपगमेपि दोषस्याभावात्। गामानयेत्यादिवाक्यजन्यबोधानन्तरं गोमात्रकर्म्मकानयन-विषयिकायाः प्रवृत्तेर्गोत्वमात्रप्रकारकज्ञानादेवोत्पत्तेस्तत्र गोपदस्य प्रकारत्वं गौरवमात्रमेवावहति। तादृशबोधानन्तरमानयनं गोकर्म्मकन्न वेति संशयनिवृत्तिश्च गवांशे गोत्वमात्रप्रकारकनिश्चयादेवोत्पत्तुमीष्टे, न तु गोपदप्रकारकादपि, सामान्यधर्म्मावच्छिन्नसंशयस्य विशेषनिश्चयानिवर्त्त्यत्वादिति संक्षेपः।

ग्राह्यत्वग्राहकत्वयोर्ज्ञानविषयत्वज्ञानजनकत्वस्वरूपयोः शाब्दबोधे शब्दा-नामभानेपि गवाद्यर्थज्ञानजनकज्ञानविषयत्वस्य गवाद्यर्थज्ञानजनकत्वस्य च गवादिपदेषु सत्त्वन्निराबाधमेव। एवं शब्दसम्बन्धरूपं शब्दानुबिद्धत्वमपि शाब्दबोधानां शब्दसम्बन्धज्ञानोत्तरं जायमानत्वादेव निराबाधमिति दिक्।

आलङ्कारिकमतञ्च शक्तिलक्षणातिरिक्तव्यञ्जनावृत्त्यभ्युपगम एवोपपद्येत, तत्र तदभ्युपगमस्यावश्यकत्वमस्माभिः* व्यञ्जनावादे विस्तरतः प्रतिपादितम्। दार्शनिकैश्च तस्यानभ्युपगमात्तन्मूलकानां तत्तद्बोधानां मनसानुमानेन वा सम्पादनादेव निरस्तमिति। २३।

यदुक्तमेवं स्मृतिरर्थानुभाविकेति तत्रानुपपत्तिमाशङ्कते—**नन्विति।**

---

* टीकाकर्त्तुः व्यञ्जनाविषये गूढविचारप्रचयः 'व्यञ्जनावादः' बिहारसंस्कृतपरिषदा पुरस्कृतः प्रकाशितश्च।

मेलकाभावात् कथमुभाभ्यां पदार्थान्वयधीरिति चेत्?

उच्यते—

**समूहालम्बनस्मृत्यारूढयोस्सव्यपेक्षयोः।**
**पदयोर्य्यौगपद्येन स्मृतोर्थोन्वयमर्हति॥२४॥**

प्रत्येकानुभवजनितसंस्कारैर्जनिता द्वयोर्बहूनां वा स्मृतिः परस्परव्यपेक्षामप्यवगाहमाना अव्यवधानेन तावतः पदार्थान् स्मारयति,

**मेलकाभावादिति।** मिलनं मेलस्सम्बन्ध एकक्षणवृत्तित्वम्, तदेव **मेलकम्,** स्वार्थे कप्रत्ययात्, तस्याभावादित्यर्थः; अथवा मेलयतीति **मेलकः** सम्बन्धप्रयोजकस्तस्याभावात्। तथा च प्रयोजकाभावे प्रयोज्यस्यैकक्षणवृत्तित्वस्य सुतरामभाव इत्याशयः। तथा च घटपदजन्यस्मृतेः क्षणिकायास्तृतीयक्षणे नाशादम्पदजन्यस्मरणकाले सत्त्वविरहेण सामानाधिकरण्याभावात् कथं घटपदाम्पदजन्यस्मरणयोर्घटः कर्म्मेत्यादिशाब्दबोधजनकत्वमिति शङ्कितुरभिप्रायः।

समाधत्ते—**समूहालम्बनेति। स्मृत्यारूढयो**(रिति)। आरोहणमत्र विषयता, स्मृतिविषययोरित्यर्थः। **सव्यपेक्षयोः** साकाङ्क्षयोः। **पदयोरर्थो यौगपद्येन** एककालावच्छेदेन। **स्मृतोन्वयमर्ह**तीति संक्षेपेणार्थः। **प्रत्येकेत्यादि।** प्रत्येकघकारादिघटितपदज्ञानजन्यसंस्कारैः। **पदयो**रिति द्विवचनमविवक्षितार्थकमित्याशयेनाह—**बहूनां वेति।** दश दाडिमानीत्यादिबहुपदस्मरणसत्त्वेप्यन्वयबोधाभावादाह—**परस्परव्यपेक्षामिति।** व्यपेक्षा च दर्शिताकाङ्क्षैव। तस्या अपि पदस्मरणतो द्वित्रिःक्षणं पूर्वं परतो वा ज्ञाने तदभावादेव शाब्दबोधानुपपत्तिरित्यतस्तामपि विषयीकरोति तादृशस्मृतिरित्यर्थः। **अव्यवधानेनेति।** दर्शितसाकाङ्क्षपदस्मरणाव्यवधानेनेत्यर्थः। **तावतः पदार्थान्** घटकर्म्मत्वादीन्। **स्मारयतीति।** पदपदार्थयोः सङ्गतिज्ञानजन्यसंस्कारवतः प्रत्येकघटपदाम्पदानुभवजन्यसंस्काराद् घटमित्यादिसमूहालम्बनात्मकस्मरणमाकाङ्क्षादिविषयकं जायते। तेनैव स्मरणेन समूहालम्बनात्मिका घटकर्म्मत्वादिविषयिणी स्मृतिर्घटः

## ( अथाभेदान्वयविवरणम् )।

अन्वयबुद्धिविषयाणामन्वयानां विभागः प्रस्तूयते—

**अभेदो भेद इत्येवमन्वयो द्विविधोर्थयोः।**
**आद्यस्तत्रान्वयो नेष्टो निपातार्थेन कस्यचित्॥२५॥**

पदार्थयोरन्वयो द्विविधोभेदो भेदश्च। तत्राभेदः प्रायेण निपातार्थेन सार्द्धमितरस्य संसर्गतया न भासते।

"यल्लक्ष्मीरिव तेन विश्वमखिलं मत्तं करोत्युन्मदा।
यल्लोकोत्तरचेष्टितैव रमणीवर्गात्तदुत्कृष्यते॥
यन्नोपप्लुतमेति तेन शिथिलेत्याख्यायते तद्गतिः।
यज्जागर्त्ति न वा सरोरुहमुखी तन्नाभिसर्त्तुं क्षमे॥"

**अन्वयमर्हती**त्यत्रोक्तान्वयः कतिविध इति जिज्ञासोदयात्तेषां विभागस्यात्र प्रस्तुतत्वमित्याह—**अन्वयबुद्धिविषयाणामिति**। **प्रस्तूयत इति**। प्रस्तावः प्रकरणं तद्विषय इत्यर्थः। **भेद इति**। लक्षणयाभेदातिरिक्तस्समवायादिरित्यर्थः। यत्संसर्गके बोधे जाते पदार्थयोर्भेदोवगम्यते स इति यावत्। **प्रायेणे**त्युपादानप्रयोजनमाह—**यल्लक्ष्मीरिवेति**। यदभिन्नमित्यादि। "यत्तद्यतस्ततो हेतौ" इत्यमरे हेतुपदस्य हेतुमदर्थकतया यदभिन्नमित्यस्याभेदेन यद्धेतुकविशिष्टमित्यर्थः। **उन्मदे**त्यनेनोक्तस्य स्वीयसुषमादिजन्योत्कृष्टमदवत्त्वस्यैव सादृश्यप्रयोजकसाधारणधर्म्मतया विशिष्टसत्ताया विशेष्यविशेषणोभयसत्ताप्रयोज्यतया लक्ष्मीभिन्नत्वे सति लक्ष्मीवृत्तिताद्दशोन्मदत्वादिधर्म्मवत्त्वात्मकस्य सादृश्यस्य दर्शितसाधारणधर्म्मप्रयोज्यत्वादेव सादृश्यस्य तद्धेतुकत्वम्; अथवा **यत्पदं** यद्धर्म्मावच्छिन्नपरमेव। स च धर्म्मः पूर्वोक्तोन्मदत्वादिरेव, तदभिन्नत्वमुक्त-

...इत्यादौ यदभिन्नं लक्ष्मीसादृश्यं तद्धेतुकस्याखिलविश्वमत्तीकरणस्य' यदभिन्नलोकोत्तरचेष्टितान्यतादात्म्यव्यवच्छेदस्तद्धेतुकस्य रमणीवर्गावधिकस्योत्कर्षस्याधिकरणं सरोरुहमुखी, यदभिन्नेनोपप्लुतभेदेन विशिष्टस्य गमनस्य कर्त्री, तत्प्रवृत्तिनिमित्तकशिथिलाभिन्नाख्यानकर्म्म तद्गतिः ।

सादृश्ये स्फुटमेवेति । तद्धेतुकस्येति । येनतेनपदेपि पूर्ववद्धेतुमदर्थके, "वितर गिरमुदारा येन मूकाः पिकाः स्युः" .. इत्यादौ तथा दर्शनात् । तदर्थस्य तद्धेतुकत्वस्याभेदेन धात्वर्थकरणेन्वय इत्यर्थः । तथा चाखिलविश्वमत्तीकरणे दर्शितं सादृश्यप्रयोजकं सादृश्याभिन्नं वोत्कृष्टमदवत्त्वे हेतुः । स्वयमुन्मदाया अन्योत्मादकत्वस्यौचित्यात् । एवं यदभिन्नलोकोत्तरेत्यादावपि यत्पदार्थयद्धेतुकत्वावच्छिन्नस्य विशेषणसङ्गत्यैवकारार्थेन्यतादात्म्यव्यवच्छेदेभेदेनान्वयाल्लोकोत्तरचेष्टितस्य विलासविब्बोकादेः कर्त्तृत्वं रमणीवर्गावधिकोत्कर्षप्रयोजकमिति लाभः । तदुत्कृष्यत इत्यत्र तत्पदार्थः पूर्ववत् । कर्म्मप्रत्ययार्थं आश्रयत्वमित्यत उत्कर्षस्याधिकरणमिति ततो बोधः । उपप्लुतं शीघ्रगतिविशेषः । तद्विजातीया शिथिला गतिः । यत्पदार्थस्य यद्धर्म्मावच्छिन्नस्याभेदेन नञर्थे उपप्लुतपदार्थगतिविशेषप्रतियोगिताके भेदे तस्य स्वरूपेण धात्वर्थगमने तदन्विताख्यातार्थस्य सरोरुहमुख्यामन्वयाद्यदभिन्नेनोपप्लुतभेदेन विशिष्टस्य गमनस्य कर्त्रीत्यस्य लाभः । क्वचिद्विशिष्टगमनकर्त्रीति पाठस्स विशिष्टपदस्य नित्यसाकाङ्क्षतया वृत्त्येकदेशार्थेपि तदर्थे भेदस्यान्वयो न विरुद्धः । "प्रतियोगिपदादन्यद्यदन्यत्कारकादपि"...इत्यादिना नित्यसाकाङ्क्षपदस्य वृत्त्येकदेशत्वेपि तदर्थे पदार्थान्तरान्वयो व्युत्पत्तिसिद्ध एव, चैत्रस्य गुरुकुलमित्याद्यनेकप्रामाणिकप्रयोगानुरोधात् । प्रतियोगिपदं नित्यसाकाङ्क्षमेवेति रीत्या समर्थनीयः । तत्प्रवृत्तिनिमित्तकेति । उपप्लुतभेदप्रवृत्तिनिमित्तकेत्यर्थः । उपप्लुतभिन्नाया एव गतेः शिथिलपदबोध्यत्वात्तद्भेदस्य शिथिलपदप्रवृत्तिनिमित्तत्वम् । शिथिलाभिन्नाख्यानकर्म्म तद्गतिरिति । आख्यायतेरभिधानार्थकतया

---

१ आश्रयः इत्यधिकः मु० पु० पा० ।

यदभिन्नस्य जागरणतदभावकोटिकसन्देहस्य विषयः सा तत्प्रयुक्ताभिसरणक्षमत्वाभाववानहमित्याकारके शाब्दबोधे यत्पदार्थभेदः इवैवनञ्वाकाराणां निपातानामर्थे भासत इति प्रायिकमेवैतत् ।

"यल्लक्ष्मीरिव"...इत्यादौ सरोरुहमुखीत्यस्यानुषङ्गेणास्तीत्याध्याहारेण च लब्धे सरोरुहमुखीकर्तृके लक्ष्मीसदृशास्तित्वेस्तेरर्थे यदिति द्वितीयान्तक्रियाविशेषणार्थस्यान्वयो न तु निपातार्थ इति नित्यसक्रियवाक्यवादिनो वैयाकरणाः ।

यदाह कात्यायनः—"अस्तिर्भवन्तिपरः प्रथमपुरुषेप्रयुज्यमानोप्यस्ति" इति । भवन्तिरिति "भुवो झिच्" इत्यौणादिकेन सूत्रेण सिद्धो वर्त्तमानकालार्थकोपि तद्वाचकत्वलक्षणया लट्परस्तेन प्रथमपुरुषलडन्तास्तिधातुरप्रयुज्यमानक्रिये वाक्ये नित्यमध्याह्रियत इति

तदर्थेभिधाने इतिनिपातेनोपस्थापितस्य शिथिलपदस्वरूपस्याभेदेनान्वयात्तस्य चाख्यातार्थकर्म्मत्वे तस्य गतावन्वयादीदृशार्थलाभो बोध्यः । **यदभिन्नस्य जागरणेति** । यत्पदार्थस्याभेदेन वाकारार्थे संशये धात्वर्थमिद्धामनोविभागानुकूलव्यापारस्य तदन्वितनञर्थाभावस्य च प्रकारतयान्वयादुक्तार्थस्य लाभः । **तत्प्रयुक्तेति** । उक्तसंशयप्रयुक्तेत्यर्थः । **इवैवनञ्वाकाराणामिति** । दर्शितरीत्या क्रमेण सादृश्यादावित्यर्थः । **प्रायिकमेवेति** । न तु सार्वत्रिकमित्येवकारव्यवच्छेद्यः । **एतन्निपातार्थे** नामार्थस्याभेदेनान्वयाभावः ।

उक्तनियमस्य सार्वत्रिकत्वं शाब्दिकमतसिद्धमुपपादयितुमाह—**यल्लक्ष्मीरिवेत्यादाविति** । **वैयाकरणा** इत्यस्वरसस्य सूचनम्, तच्चाग्रे क्रियारहितस्यापि वाक्यस्य प्रामाणिकत्वं सर्वत्र क्रियाध्याहारस्यासम्भवित्वञ्च स्पष्टीकरिष्यति ।

**भवन्तिपर** इत्यत्र भवन्तिपदस्य स्वरूपपरत्वे मुख्यार्थवर्त्तमानकालार्थकत्वेपि वासङ्गतिरित्यतस्तद्वाक्यार्थं दर्शयति—**भवन्तिरितीति** । "भुवो झिच्" इत्यनेन भूधातुमात्राज् झिच्प्रत्ययविधाने वदन्त्यवन्तिपदयोरसाधुत्वभ्रमः

कात्यायनवाक्यार्थः । सूत्रे भुव इति वदतेरवतेश्चोपलक्षणम् । तेन वदन्तिरवन्तिश्चेत्यपि सिद्धम् । झिच्प्रत्ययान्ताः सर्वे स्त्रियां द्वयोर्वा, "किंवदन्ती जनश्रुतिः" इति दर्शनात् । २५ ।

**नाम्नो नाम्ना धातुना च प्रकृत्या तद्धितेन च ।**
**सामानाधिकरण्यं स्यात् किं वा नाम्नैव केवलम् ॥२६॥**

तादात्म्यसंसर्गावच्छिन्नतत्पदार्थविषयतानिरूपितस्वार्थविषयताकबुद्धिजनकपदत्वं तेन पदेन तस्य सामानाधिकरण्यम् ।

तच्च प्रथमं प्रातिपदिकेन सह प्रातिपदिकस्य । तदपि समानविभक्तिकयोः समासान्तर्गतयोरभेदापन्नयोश्च नाम्नोरिति त्रिविधम् । तत्राद्यं यथा—

स्यादिति तन्निराकरणायाह-सूत्रे भुव इतीति । उपलक्षणमिति । उणादिप्रत्ययानां बाहुलकत्वादिति भावः । २५।

नामार्थानुयोगिकाभेदान्वयप्रतियोगिनो दर्शयति—**नाम्नो नाम्नेति** । धूमादिसामानाधिकरण्यमिवात्र न तदधिकरणवृत्तित्वरूपं सामानाधिकरण्यं तस्य सर्वेषां शब्दाना सर्वैरेव शब्दैरविशेषादित्यन्यादृशमेव तदित्याह-**तादात्म्यसंसर्गेति** । षष्ठ्यर्थस्य संसर्गतामते राज्ञः पुरुष इत्यादौ राजपदस्य पुरुषपदे सामानाधिकरण्यवारणाय तादात्म्योपादानम् । **तत्पदार्थेति** । तत्प्रयोज्येत्यर्थस्तेन नीलो घट इत्यत्र नीलश्यामपदयोरेकार्थकत्वेपि घटपदस्य न श्यामपद सामानाधिकरण्यम्। एवमग्रेपि **स्वार्थविषयता** स्वप्रयोज्यैव ग्राह्या, नातस्तत्रैव कलसपदस्य नीलपदसामानाधिकरण्यम् ।

त्रैविध्यमाह-**समानविभक्तिकयोरिति** । **नाम्नो**रित्यग्रिमेणान्वयः । तत्त्वञ्च स्वप्रकृतिकविभक्तिवृत्तिप्रथमात्वादिसप्तान्यतमवद्विभक्तिप्रकृतित्वम् , न तु स्वप्रकृतिकविभक्तिवृत्त्यानुपूर्वीमद्विभक्तिप्रकृतित्वम , वेदाः प्रमाणमित्यादौ वेदप्रमाणपदयोः सामानाधिकरण्यानुपपत्तेः । **समासान्तर्गतयोरिति** । नीलोत्पलमित्यादौ नीलोत्पलपदयोरित्यर्थः। गोगृष्टिरित्यादीनां पूर्वपदार्थप्रधानसमासानामपि समासान्तर्गतत्वान्न त्रैविध्यहानिः ।

"पुण्यजनप्रीतिकरी कुवलयदलकोमला कान्तिः ।
कथमन्धकार ! भवतः सर्वेषां नयनहारिणी न स्यात् ॥"

अत्र सम्बोध्यस्यान्धकारस्यारोपितनीलिमस्वरूपायां कान्तौ सर्वेषां समर्थानां[1] तादात्म्येनान्वयात्सामानाधिकरण्यं प्रातिपदिकानाम् । एवं नीलो घट इत्यत्र नीलघटपदयोरपि सामानाधिकरण्यमवसेयम् ।

नीलघटपदयोः सामानाधिकरण्ये द्विविधाकाङ्क्षा; एका नील-प्रकारताकघटविशेष्यताकबुद्धिव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगिता - वच्छेदकप्रथमान्तघटनीलोभयपदत्वस्वरूपा, द्वितीया घटप्रकारता-निरूपितनीलविशेष्यताकबुद्ध्यभावघटिता ।

पुण्यजनेति । "यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी" इत्यमरात् पुण्यजनो राक्षसस्तस्यान्धकारे एव प्रचारात्तत्प्रीतिकरत्वमन्धकारस्य । सम्बोध्यस्यान्धकारस्येति । अचेतनस्यापि यथा सम्बोध्यत्वं तथा प्रथमार्थविचारे वक्ष्यति । आरोपितेति । अन्धकारस्याभावात्मकतया तत्र नीलरूपस्य वास्तविकस्याभावात् काव्यसरणावन्यधर्मस्यान्यत्रारोपस्य बहुशो दृष्टत्वान्नीलरूपस्यान्धकारे आरोपो बोध्यः । सर्वेषां समर्थानामिति । पुण्य-जनप्रीतिकरी-कुवलयदलकोमला-नयनहारिणीपदार्थाना राक्षससमवेतसुख-कारकत्वनीलोत्पलपत्रगतसौकुमार्य्यसदृशसौकुमार्य्यसर्वजनसम्बन्धिनयननिष्ठ - प्रत्यक्षाजनकत्वप्रयोजकत्वविशिष्टानामित्यर्थः। एवमन्यत्रापि तदुदाहरति- एवं नीलो घट इति । अवसेयं तादात्म्यसंसर्गावच्छिन्ननीलपदप्रयोज्यविष-यतानिरूपितविषयताप्रयोजकत्वस्य घटपदे सत्त्वाद्दर्शितसामानाधिकरण्यं तत्र बोध्यमित्यर्थः ।

उक्तसामानाधिकरण्ये विषयतयोर्विषयतात्वेनोपादानस्य फलं दर्शयितुमाह-- नीलघटपदयोरित्यादि । द्वितीयेति । इदञ्च 'जातितद्भिन्नप्रवृत्तिनिमित्तक-शब्दयोस्समभिव्याहारे जातिप्रवृत्तिनिमित्तकस्य विशेष्यत्वमेव' इति नियमा-नङ्गीकारे तादृशनियमाङ्गीकारे तु घटो द्रव्यमित्यादिकमुदाहार्य्यम् ।

तर्हि सर्वत्रैव द्विविधो बोधः स्यादित्यत आह--यादृशबुद्ध्यभावेति ।

---

१ प्रथमान्तार्थानाम् इति मु० पु० पा० ।

याद्दशबुद्ध्यभावघटिता या आकाङ्क्षा सा ताद्दशीमेव बुद्धिं प्रयोजयति। व्यज्यते च विशेष्यपदस्य विशेषणपदप्राथम्येन तदर्थविशेष्यकबुद्धि-प्रयोजिकाकाङ्क्षा। अतएव वह्निमान् पर्वत इत्यादौ पर्वतविशेष्यक-बुद्धिजनकाकाङ्क्षाभावात्तदनभिव्यक्त्या न पर्वतविशेष्यिका बुद्धिः।

विपरीतव्युत्पन्नानान्तु व्यञ्जकान्तराभिव्यक्ताकाङ्क्षाज्ञानाद्

तदाकाङ्क्षयोर्व्यञ्जकस्यानियमे उभयत्रोभयविधाकाङ्क्षाया अभिव्यक्तावुक्त-दोषस्तदवस्थ एवेत्यत आह—**व्यज्यते चेति**। घटादिपदस्य नीलादिपदात्पूर्वं प्रयोगे घटविशेष्यताकबोधाभावघटिता, परं प्रयोगे च नीलविशेष्यताकबोधाभाव-घटिताकाङ्क्षा व्यज्यते, न तु वैपरीत्येनेत्याशयः।

तथा चोक्तं तन्त्रवार्त्तिके भट्टपादैः—

"यच्छब्दयोगः प्राथम्यं सिद्धत्वञ्चाप्यनूद्यता।
तच्छब्दयोग औत्तर्य्यं साध्यत्वञ्च विधेयता॥"

तथा—

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्।
न ह्यलब्धास्पदं किञ्चित्कुत्रचित्प्रतितिष्ठति॥" इति।

यच्छब्दयोग इति। यत्तत्पदयोः समभिव्याहारे यच्छब्दसम्बद्धस्यैवानूद्यत्व-मित्यर्थो न तु तदभावेनूद्यत्वाभावः। अनुद्यता उद्देश्यता। औत्तर्य्यम् उद्देश-वाचकपदोत्तरत्वम्। तथा च घटो नील इत्यत्र घटपदस्योद्देश्यवाचकतया घटविशेष्यकनीलप्रकारकबोधघटिता, नीलो घट इत्यत्र नीलपदस्यैवोद्देश्य-वाचकतया नीलविशेष्यकान्वयबोधघटितैवाकाङ्क्षेति युगपत्ताद्दशबोधापत्ति-विरह इत्याशयः। **अतएव** उक्तरीत्यैवाकाङ्क्षाभिव्यक्तेरेव। अन्वयश्चास्य **तदनभिव्यक्त्येत्यनेन**। **तदनभिव्यक्त्या** पर्वतविशेष्यकान्वयबोधघटिता-काङ्क्षाया अभिव्यक्तेरभावेन। तदभिव्यञ्जकस्य पर्वतपदे प्रथमं प्रयुज्यमान-त्वस्याभावात्।

**विपरीतव्युत्पन्नानामिति**। वह्निमान् पर्वत इत्यादिवाक्ये पर्वतविशेष्यक-बुद्धिजनकत्वभ्रमवताम्। **व्यञ्जकान्तरं** विशेषणपदोत्तरवर्त्तिविशेष्यपदत्वम्।

भवत्येव। परन्तु तादृशबोधतात्पर्य्येण प्रयुक्तमिदं वाक्यमसाधु, यज्ञकर्म्मणि प्रयोगानर्हमतो न्याये काव्ये च तत्प्रयोगानर्हम्।

तादात्म्यसंसर्गकस्थले विशेष्यत्वमेवोद्देश्यत्वं विशेषणत्वमेव विधेयत्वम्। यदुद्देश्यकान्वयबुद्धिस्तस्मिन् सिद्धत्वं विधेये चागन्तुकमुत्सर्गतो व्यञ्जयति। अतएव "जातिगुणवाचिनोर्जातिवाचिनः प्राधान्यम्" इति कर्म्मधारयघटकनामपौर्वापर्य्यनियामकः प्राचीनानां प्रवादः।

भवत्येवेति। पर्वतविशेष्यिका बुद्धिरिति पूर्वेणान्वयः। परन्तु तादृशवाक्यस्य पर्वतविशेष्यकबुद्धिजनकत्वेपि। असाध्विति। दर्शिततन्त्रवार्त्तिकवाक्यादिना विशेष्यपदस्य प्राथम्य एव साधुत्वज्ञापनेन तदतिरिक्तस्थलेसाधुत्वस्य बोधनादित्याशयः। यज्ञकर्म्मणीति। "साधुभिर्भाषितव्यम्" इत्यनेनासाधुवाक्यप्रयोगस्य यज्ञादौ निषेधात्। अतः यज्ञे प्रयोगानर्हत्वात्। न्याय इत्यादि। साधुवाक्यस्यैव यज्ञे प्रयोगः यज्ञे प्रयोजनीयस्यैव न्यायादावपि प्रयोगस्यौचित्यादित्याशयः।

ननु पर्वतविशेष्यकबोधस्योक्तवाक्याज्जायमानस्य कुतो न पर्वतोद्देश्यकत्वमित्यत आह—तादात्म्यसंसर्गकेति। अभेदान्वयबोधजनकवाक्य इत्यर्थः। पर्वते वह्निरित्यादौ भेदसंसर्गकबोधजनके विशेष्यस्य वह्न्यादेरेव विधेयत्वात्तादात्म्येत्युक्तम्। उक्तनियमस्वीकारे बीजमाह—यदुद्देश्यकेति। सिद्धत्वं पूर्वकालीनप्रतीतिविषयत्वम्। आगन्तुकत्वम् उत्तरकालीनप्रतीतिविषयत्वम्। तथा च पर्वतस्य सिद्धत्वाद्विशेष्यत्वं वह्नेश्चागन्तुकत्वाद्विशेषणत्वमेव तद्वाक्यजबोधे उचितमित्याशयः। अतएव उद्देश्ये सिद्धत्वस्य विधेये आगन्तुकत्वस्याभिव्यक्तेरेव। पौर्वापर्य्यनियामक इति। "विशेषणं विशेष्येण बहुलम्" इति सूत्रेण तादात्म्यापन्नयोः कर्म्मधारयसमासस्य विधानात् सूत्रे विशेषणपदस्य प्रथमान्ततया "प्रथमानिर्द्दिष्टं समास उपसर्जनम्" इति सूत्रेण समासशास्त्रे प्रथमान्तत्वेन निर्द्दिष्टस्योपसर्जनसंज्ञाविधाने "उपसर्जनं पूर्वम्" इत्यनेन तस्यैव पूर्वविधानाद्विशेष्यपदस्यार्थतस्तद्परत्वम्। तत्र विशेष्यविशेषणभावस्य यादृच्छिकत्वे नीलोत्पलमितिवदुत्पलनीलमित्यपि साधु स्यादिति जातिगुणवाचिनोः पदयोस्समभिव्याहारे जातिवाचिनो विशेष्यत्वम्, उत्पलत्वादि-

अतएव "न्यक्कारो ह्ययमेव मे यदरयः" इति वाक्ये न्यक्कारस्य पूर्वसिद्धत्वध्वनने गर्वभावापकर्षप्रसक्तिरित्यविमृष्टविधेयांशकत्वं दोष इति रसविद्याविदः ।२६।१।१।

जातीनामुत्पत्तिमारभ्यैवोत्पले वर्त्तमानत्वेन प्रथमप्रतीतिविषयत्वात् । गुणवाचिनो नीलादिपदस्य विशेषणत्वमेव, उत्पत्तिक्षणानन्तरमेव नीलादिगुणानामुत्पलादिषु सम्बन्धादुत्तरकालं प्रतीयमानत्वात् । गुणपदञ्चोपलक्षणम् । तेन चलपत्रमित्यादौ क्रियावाचकस्यापि चलपदस्य विशेषणत्वमेवेति भावः ।

अतएव प्रथमप्रयुक्तस्य सिद्धत्वमुत्तरप्रयुक्तस्यागन्तुकत्वमित्यस्योपगमादेव । इति वाक्ये · ... "तत्राप्यसौ तापसः ।

सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ॥
धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा ॥
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥"

इति काव्य इत्यर्थः । न्यक्कारस्येति । प्रागारिमत्त्वस्येत्यर्थः । पूर्वसिद्धत्वेति । अयमित्यतः पूर्वं प्रयोगेणोद्देश्यत्वप्रतीत्या तस्मिन् पूर्वसिद्धत्वस्य व्यञ्जनया प्रतीतावित्यर्थः । गर्वभावापकर्षेति । निर्जिताशेषारेर्मम नैकोपीदानीमरिरित्याकारकज्ञानात् सर्वस्मादुत्कृष्टोऽहमिति गर्वभावस्य "न्यक्कारो ह्ययम्" इत्यनेन न्यक्कारस्य प्रागारिमत्त्वस्य पूर्वमपि सत्त्वप्रतीतौ सत्यामपकर्षप्रसङ्ग इत्यर्थः । अविमृष्टविधेयांशकत्वमिति । अविमृष्टः विधेयताप्रतीतियोग्यत्वेनाप्रयुक्तः विधेयस्वरूपोंऽशो भागः साध्यांश इति यावत् , यत्रेति व्युत्पत्त्या विधेयताप्रतीतिस्वरूपयोग्यत्वाभाववता विधेयत्वतात्पर्य्यप्रयोज्योच्चारणकेन पदेन घटितं काव्यमविमृष्टविधेयांशकत्ववद्दोषदुष्टमित्यर्थः । दूषकताबीजन्तु वक्तुरभिप्रेतस्यार्थस्याबोधोऽनभिप्रेतस्य बोधश्च । प्रकृते न्यक्कारस्य प्रथमोपात्तत्वेन विधेयताप्रतीतियोग्यत्वाभावाद्वक्तुरभिप्रेतस्य पूर्वमेकस्याप्यरेरभावान्न्यक्कारो नासीदिदानीन्तु बहूनामरीणां सत्त्वमित्यधुनैवागतो न्यक्कार इत्यर्थस्याप्रतीतेरनभिप्रेतस्य न्यक्कारोद्देश्यकेदन्त्वविधेयकबोधाच्चोक्तदोषदूष्यत्वमुक्तकाव्यस्य । प्रथमोपात्तपदस्यापि विधेयताप्रतीतिप्रयोजकत्वे तु तत्रोक्तदोषो नैवोपपद्येतेत्याशयः ।२६।१।१।

**अत्र विशेष्यनिघ्नपदस्य प्रातिपदिकान्तरसामानाधिकरण्ये एकलिङ्ग-बोधकसुबन्तत्वं प्रायेण तन्त्रम् । अतएव नीलं घट इत्यादिर्न[1] प्रयोगः, प्रयोगश्च पृथिवी घट इत्यादिः ।**

**यत्र च लिङ्गानन्वयिपदार्थद्वारकं[1] पदार्थतादात्म्यमितरपदार्थेन्वेति न**

नीलं घट इति सामानाधिकरण्येन प्रयोगस्य प्रामाण्यवारणायाह—**अत्रे**ति । **विशेष्यनिघ्नपदस्ये**ति । तत्त्वञ्च नीलादिपदानामनुशासनेन ज्ञापितं विशेष्यवाचकपदनिष्ठलिङ्गसमानलिङ्गकत्वम् । **प्रातिपदिकान्तरे**ति । घटादि-पदेत्यर्थः । **एकलिङ्गबोधके**ति । स्वोत्तरसुब्बोध्यलिङ्गबोधकसुबन्तत्वमित्यर्थः । इदञ्च सुपां लिङ्गबोधकत्वाभिप्रायेण। प्रातिपदिकस्य तथात्वेपि सुपं विनातथात्वा-त्सुपोपि तद्बोधप्रयोजकत्वमक्षतम् । **न प्रयोग** इति । "गुणे[2] शुक्लादयः पुंसि गुणि लिङ्गास्तु तद्वति" इत्यमरेण नीलादिपदानां विशेष्यनिघ्नत्वानुशासनेन घटपदासमानलिङ्गकस्य नीलपदस्यासाधुत्वमित्याशयः । **प्रायेण** बाहुल्येन, न तु सर्वत्र । तच्चानुपदमेव स्फुटीकरिष्यति । उक्तव्युत्पत्तिस्वीकारस्य फलमाह—**अतएवे**ति । विशेष्यनिघ्नविशेषणवाचकपदस्य विशेष्यवाचकपदासमानलिङ्ग-कस्याभेदान्वयेसाधुत्वादेवेत्यर्थः । **विशेष्यनिघ्नस्ये**त्युपादानस्य फलमाह—**प्रयोगश्चे**ति । **पृथिवी घट इत्यादिरि**ति । आदिना द्रव्यं घट इत्यादीनां परिग्रहः । तथा चाभेदान्वयमात्रे विशेष्यवाचकपदासमानलिङ्गकविशेषणवाचक-पदस्यासाधुत्वेस्यासाधुत्वमेव स्यात्, विशेषणपदे विशेष्यनिघ्नत्वोपादाने च तत्र द्वयोर्न्नियतलिङ्गत्वाद्विशेष्यत्वाभावान्नासाधुत्वमित्याशयः ।

**प्रायेणे**त्यनेन व्यावर्त्यः स्थलविशेष इत्याह–**यत्र चे**ति । "क्षुदुपहन्तुं शक्यम्"... इत्यादावित्यर्थः । **लिङ्गानन्वयी**ति । तत्त्वञ्चोपहननादेर्लौकिक-लिङ्गानां शोणिताधिकशुक्रसमवेतत्वे सति प्राणित्व-शुक्राधिकशोणितसमवेतत्वे

---

१ ०द्वारा मु० पु० पा० ।

२ गुण इति । यद्यपि शुक्लं रूपमित्यादौ विशेष्यनिघ्नतैवेष्यते, तथापि विशेष्या-नुपादाने प्राप्तस्य "सामान्ये नपुंसकम्" इति वार्त्तिकस्यापवादकोयम् । यथा पटस्य शुक्ल इत्यादि । गुणीति । विशेष्यस्यानुपादाने यदेव यल्लिङ्गं प्रतिपिपादयिषितम्, तल्लिङ्गा इत्यर्थः । यथा शुक्लम्, शुक्लः, शुक्ला इत्यादि ।

साक्षात्, तत्राजहल्लिङ्गपदसमानाधिकरणेपि विशेष्यनिघ्ने नियतं नपुंसकत्वम्, सामान्यविधिप्राप्तत्वात्। यथा—"क्षुदुपहन्तुं शक्यम्" इत्यत्रोपहननकर्म्मणि क्षुध्युपहननतदर्थशक्तिकर्मणस्तादात्म्येन साक्षादन्वयो बाधित इत्युपहन्तेरर्थं द्वारीकृत्यान्वयः, "सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे[1] विशेषणमुपसङ्क्रामतः" इति न्यायात्। शक्यमिति सामान्ये[2] नपुंसकनिर्देशः।

सति प्राणित्व-समशुक्रशोणितसमवेतत्वे सति प्राणित्वानां विशेष्यविशेषणयोरुभयोरेवाभावात्। पुंलिङ्गादिपदसङ्केतविषयत्वरूपाणां शास्त्रीयलिङ्गानाञ्चाव्ययत्वादेवाभावादित्याशयः। **पदार्थद्वारकमि**ति। लिङ्गानन्वयी य उपहननादिपदार्थस्तं द्वारीकृत्येत्यर्थः। **अजहल्लिङ्गत्वं** नियतलिङ्गत्वम्। **सामान्यविधिप्राप्तत्वादि**ति। स्त्रीत्वपुंस्त्वयोरुभयविधयोरभावे नपुंसकत्वस्यौचित्यावर्जितत्वादित्यर्थः। शक्यपदार्थतादात्म्यान्वयस्य साक्षाद्बाधितत्वादुपहननद्वारा तदन्वय इत्याह—**उपहननकर्म्मणी**त्यादिना। **उपहननकर्म्मणि** ध्वंसानुकूलव्यापारस्वरूपोपहननविशेषणीभूतस्य ध्वंसस्वरूपफलस्य प्रतियोगितयाश्रये। एतच्च क्षुध उपहननकर्म्मत्वेन तत्प्रयोजकव्यापारकर्म्मत्वस्य तत्रायोग्यत्वज्ञापनायोक्तम्। **द्वारीकृत्यान्वय** इति। शक्यर्थकर्म्मतादात्म्यस्योपहनने सत्त्वात्स्वाश्रयोपहननकर्म्मत्वसम्बन्धेन क्षुधि तस्यान्वय इत्यर्थः। ननु शक्यं क्षुदिति शक्यपदसामानाधिकरण्यं क्षुध्येव प्रतिपादयति, न तूपहनन इति तत्र कथं तदर्थान्वय इत्यत आह—**सविशेषणे ही**ति। किञ्चिद्विशेषणविशिष्टे विशेष्ये विधिनिषेधौ यथाश्रुतवाक्यतः प्रतीतावित्यादिः। **विशेष्ये बाधे सति विशेषणमुपसङ्क्रामत** इति। उपहननादौ विशेषणमात्रेन्वित इत्यर्थः। तथा च कर्म्मत्वेनोपहननविशिष्टायां क्षुधि शक्तिकर्म्मणोभेदान्वयस्य बाधाद् विशेषणे उपहनने एव तदन्वयस्तद्द्वारैव क्षुध्यन्वय इत्यर्थः। **सामान्ये नपुंसकनिर्देश** इति। एतत्तत्त्वं प्रागेवाभिहितम्। एवञ्च क्षुत्पदस्य नियतस्त्रीलिङ्गत्वात्तदसमानलिङ्गकमपि विशेष्यनिघ्नं शक्यपदं तत्समानाधिकरणं साध्वित्याशयेनैव **प्रायेणे**त्युक्तमिति भावः।

---

१ विशेष्यस्य बाधे—मु० पु० पा०।
२ 'सामान्ये' इति नास्ति मु० पु०।

**अत्रोत्पत्त्यनुकूलो व्यापार उत्पादना शकेस्तत्कर्म्मोत्पाद्यं कृत्यप्रत्ययस्य, ध्वंसानुकूलो व्यापार उपहन्तेः, शक्यर्थान्वयिभावस्तादर्थ्यं वा तुमुनोर्थः प्रधानधात्वर्थकर्म्मण्यभिहिते गौणधात्वर्थकर्म्मत्वमुपहननफलीभूतध्वंसान्वयिप्रतियोगित्वस्वरूपं क्षुदनन्तरप्रथमार्थः ।**

**भवतु वैतादृशस्थले उपहन्तिना फलविधयोक्तस्य ध्वंसस्य प्रथमान्तप्रातिपदिकार्थे प्रतियोगितयान्वयः, पदभेदेनाकाङ्क्षावैचित्र्यात् ।**

उक्तान्वयस्योपहननद्वारकत्वमुपपादयितुं तद्वाक्यघटकप्रत्येकपदार्थं दर्शयति—**अत्रोत्पत्त्ये**त्यादिना । **कृत्यप्रत्ययस्य** कर्म्मविहितयत्प्रत्ययस्य । **उपहन्तुमि**ति तुमुनः "शकधृषज्ञाग्ला" ... इत्यादिसूत्रविहितस्य "अव्ययकृतो भावे" इत्यनुशासनेन भावार्थकत्वमित्याह—**शक्यर्थान्वयिभाव** इति । विशेषार्थानुशासनाभावे एवाऽव्ययकृतो भावार्थकत्वानुशासनात् "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति विशेषविहितस्य तस्य तादर्थ्यमर्थ इत्याशयेनाह—**तादर्थ्यं वे**ति । तच्चोपकारकत्वम्, तदप्यत्र कार्य्यकारणभाव एव । **प्रधानधात्वर्थे**ति । प्रधानभूतस्य शकिधातोरर्थस्योत्पत्त्यनुकूलव्यापारस्य कर्म्मण्युत्पत्त्याश्रये कृत्यप्रत्ययेनाभिहिते सतीत्यर्थः । **गौणधात्वर्थे**ति । शकिधात्वर्थविशेषणीभूतार्थप्रतिपादकोपहन्त्यर्थध्वंसानुकूलव्यापारविशेषणीभूतध्वंसान्वयीत्यर्थः । **प्रथमार्थ** इति । नामार्थधात्वर्थयोरभेदातिरिक्तसंसर्गस्याव्युत्पन्नत्वमते प्रतियोगितया क्षुत्पदार्थस्य दर्शितध्वंसेन्वयासम्भवादिदमुक्तम् ।

तादृशव्युत्पत्तेस्संकोचनीयत्वस्यावश्यकतामभिप्रेत्याह—**भवतु वैतादृशे**ति । **पदभेदेनाकाङ्क्षावैचित्र्यादि**ति । नामत्वादीनामनुगतत्वाभावेन तण्डुलः पचतीत्याद्याकाङ्क्षाणां कर्म्मतया तण्डुलाद्यन्वयबोधाजनकत्वेपि क्षुदुपहन्तुमित्याद्याकाङ्क्षाणां प्रतियोगितासंसर्गेण ध्वंसप्रकारकक्षुद्विशेष्यकान्वयबोधजनकत्वोपगमादित्यर्थः ।

दृश्यते[1] घटो नीलो भवतीत्यादौ नीलादेः प्रथमान्तार्थस्य कर्तृता-संसर्गेण[2] भवत्यर्थेन्वयः।

हरिरप्याह—

"प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा तदा गुणे तद्वदनुक्तापि प्रतीयते॥" इति।

यत्रैकस्य द्रव्यस्य गुणप्रधानभावापन्नक्रियाद्वयनिरूपितं शक्तिद्वयं पृथक्, तत्र[3] गुणशक्तेरभिधानेपि प्रधानानुरोधिप्रधानकारकानभिधान-प्रयुक्तं कार्य्यं भवत्येव। तेन पक्वमोदनं भुङ्क्ते, पाचकेनोदनो भुज्यते

अन्यत्रापि तादृशान्वयबोधादुक्तनियमस्य सङ्कोचनीयत्वमेवेत्याह—**दृश्यत** इति। **भवत्यर्थेन्वय** इति। धात्वर्थोत्पत्तेराख्यातार्थवर्त्तमानकालीनत्व-विशिष्टायाः पूर्वकालोत्पन्ने घटे बाधाद् विशेषणीभूतनीलपदार्थतावच्छेदकस्य नीलरूपस्यैव तदानीमुत्पत्तेस्तस्यैव तदन्वययोग्यत्वम्, तच्च प्रथमायाः प्राति-पदिकार्थमात्रे विहितायाः कर्त्तृत्वार्थकत्वासम्भवात् कर्त्तृत्वसंसर्गेणैव नील-गुणस्य तादृशोत्पत्तावन्वयोभ्युपेयत इत्याशयः।

प्रधानधात्वर्थकर्म्मण्यभिहिते गौणकर्म्मत्वं लक्षणया प्रथमार्थस्ततसंसर्गेण वा तत्र प्रथमान्तार्थे गौणधात्वर्थतावच्छेदकफलस्यान्वय इत्युक्तार्थे हरिकारिकां संवादयितुं तत्प्रसङ्गात् प्रथमं गौणधात्वर्थकर्म्मणोभिधानेपि प्रधानधात्वर्थकर्म्मा-दीनामभिधाने कर्म्मत्वाद्यनभिधानप्रयुक्तं कार्य्यं भवतीत्यत्र तत्संवादमाह—**हरिरप्याहे**त्यादिना।

उक्तकारिकाद्वयं विवृणोति—**यत्रैकस्य द्रव्यस्ये**त्यादिना। इदञ्च **द्रव्यस्ये**त्यत्रैकवचनस्य विवक्षितार्थकत्वाल्लब्धम्। फलञ्चास्य **यत्र तु द्रव्यभेद** इत्यादिना वक्ष्यति। धातूपात्तक्रिययोर्गुणप्रधानभावश्चान्यत्र दर्शित इवात्रापि

१ च इत्यधिकः पा० मु० पु०।
२ 'कर्तृतासंसर्गेण' नास्ति मु० पु० पा०।
३ कारकद्वयं पृथक् तत्र-मु० पु० पा०।

इत्यत्र पच्यर्थकर्म्मकर्त्रोरभिधानेपि भुज्यर्थकर्म्मकर्त्रोरनभिधानाद् द्वितीयातृतीये सूपपदे।

यदि तु प्रधानक्रियाकारकं प्रत्ययेनाभिहितम्, तदा तत्प्रत्ययार्थान्वितद्रव्ये गुणक्रियाकारकमनुक्तमपि प्रथमादिप्रत्ययलक्षणया संसर्गतया वा प्रतीयते। यथा—पचता पक्त्वा वा भुज्यते ओदन इत्यत्र पाके ओदनकर्म्मकत्वम्, पक्वमोदनं भुङ्क्ते चैत्र इत्यत्र पाके चैत्रकर्त्तृकत्वम्,

विशेष्यविशेषणभावरूप एव बोध्यः। **पच्यर्थकर्म्मकर्त्रोरि**ति। प्रथमे क्तप्रत्ययेन कर्म्मणो द्वितीये ण्वुला कर्त्तुरभिधानं बोध्यम्, "कर्त्तरि कृत्" इत्यनेन कृत्सामान्यस्यैव कर्त्तरि विधानात्। क्तप्रत्ययस्य तु "तयोरेव कृत्यक्तखलर्थाः" इत्यनेन भावकर्म्ममात्रे विधानात् सकर्म्मकपच्-धातूत्तरक्तप्रत्ययस्य कर्म्माभिधायकत्वम्। **सूपपद** इति। उभयत्र पाकक्रियाया भुज्यर्थक्रियायां परम्परया विशेषणत्वेन गुणत्वात्तन्निरूपितकर्म्मकर्त्रोरभिधानेपि प्रधानीभूतभुज्यर्थनिरूपितकर्म्मकर्त्रोरनभिधानादनभिहिताधिकारीया द्वितीया प्रथमे, तादृशी तृतीया द्वितीये निराबाधे इत्यर्थः।

प्रकृतोपयोगिद्वितीयकारिकां विवृणोति—**प्रत्ययेनाभिहितमि**ति। तत्तद्धातूत्तरतिङादिना तत्तन्नामोत्तरप्रथमादिना वेत्यर्थः। **अनुक्तमपी**ति। प्रथमाद्यवाच्यमपीत्यर्थः। **संसर्गतया वे**त्यत्र बीजं पूर्वोक्तमेव। **पचता पक्त्वा वे**त्युत्युभयोपादानं धातूत्तरक्त्वाप्रत्ययस्य नामोत्तरतृतीयायाश्च कर्म्मत्ववाचकताविरहज्ञापनाय। **भुज्यत** इति। प्रधानधात्वर्थभुजिक्रियानिरूपितकर्म्मत्वस्यात्राख्यातेनाभिधानादोदनपदोत्तरप्रथमायाः कर्म्मत्वं लक्षणयार्थः। **पचते**त्यादिधात्वर्थस्य कर्म्मत्वसंसर्गेण वान्वयादोदनकर्म्मकत्वं पाके लब्धम्। अन्यथा तेमनादिकर्म्मकपाकोत्तरकालीनभोजनकर्म्मण्यप्योदने तथा प्रयोगप्रसङ्गात्। **चैत्रकर्त्तृकत्वमि**ति। अत्रापि **भुङ्क्त** इत्याख्यातेन कर्त्तृत्वस्याभिधानात्

१ इत्यादौ च इति मु० पु० पा०।

सन्धाय शरेण हन्तीत्यादौ सन्धाने शरकर्म्मकत्वम्, आहूय ब्राह्मणाय ददातीत्यादावाह्वाने ब्राह्मणकर्म्मकत्वम्, आरुह्य वृक्षात् पततीत्यादावारोहणे वृक्षकर्म्मकत्वम्, गत्वा ग्रामस्य स्थाता, गत्वा ग्रामे तिष्ठतीत्यादौ गमने ग्रामकर्म्मकत्वम्, स्वीकारयितुं ब्राह्मणाय ददाति, प्रतिदातुं ब्राह्मणायादत्त इत्यादौ स्वीकारे प्रतिदाने च ब्राह्मणकर्म्मकत्वं ब्राह्मणसम्प्रदानकत्वञ्च, पतित्वा वृक्षमवलम्बत इत्यादौ पतने वृक्षापादानकत्वम्, स्थित्वा ग्राममीक्षत इत्यादौ स्थितौ ग्रामाधिकरणकत्वं तत्तद्वाचकविभक्त्यभावेऽपि पदादन्वयविधया वा प्रतीयते।

यत्र तु द्रव्यभेदस्तत्र प्रधानक्रियाकारकस्याभिधानेऽपि गुणक्रियाकारकाभिधायकान्तरमपेक्षते। अतएव सूपं पक्त्वौदनो भुज्यत इति

प्रथमायास्तद्वाचकत्वासम्भवाल्लक्षणयैव ततस्तस्य बोध इति। **सन्धाय शरेणे**ति। अत्र कर्त्तृत्वस्याख्यातेन करणत्वस्य तृतीयया प्रतिपादनादनुक्तं शरकर्म्मकत्वं पूर्ववत्सन्धाने बोध्यते। एवमग्रेऽपि। अत्र सर्वत्र तत्तत्कर्म्मकत्वादीनामबोधनेऽन्यकर्म्मकसन्धानादितात्पर्य्येण तत्तत्प्रयोगस्य प्रामाण्यवारणायैव तद्बोधनस्यावश्यकतेति बोध्यम्। **तत्तद्वाचकविभक्त्यभावेऽपी**ति। क्त्वादिपदोत्तरस्वादीनां कर्म्मत्वाद्यर्थेऽनुशासनादिविरहेण तद्वाचकत्वाभावादित्याशयः। **पदादि**ति। लक्षणयेत्यादिः। स्वादिपदादित्यर्थः। आनुशासनिकार्थातिरिक्तेऽर्थे विभक्तीनां लक्षणाविरहे नामार्थधात्वर्थयोर्भेदेनान्वयोऽभ्युपेय इत्याशयेनाह— **अन्वयविधया वे**ति। संसर्गमर्य्यादयेत्यर्थः।

द्रव्ये एकत्वविशेषणस्य फलमाह—**यत्र तु द्रव्यभेद** इति। गुणप्रधानक्रियाकारकद्रव्यस्य विभिन्नरूपाभ्यामुपस्थितिरित्यर्थः। तेन द्रव्यं पक्त्वौदनो भुज्यत इत्यादौ द्रव्यौदनयोरभेदेऽपि न क्षतिः। **गुणक्रिये**ति **अपेक्षत** इत्यत्र कर्त्तृतयान्वितम्। **कारकाभिधायकान्तरमि**ति। स्वनिरूपितकारकत्ववदर्थवाचकं प्रधानक्रियानिरूपितकारकत्ववदर्थवाचकपदभिन्नं पदमित्यर्थः। तथा च तादृशस्थले तत्तद्वाचकपदसत्त्व एव कर्म्मत्वादीनां बोध इत्याशयः। **अतएव** द्रव्यभेदे गुणक्रियया स्वकारकवाचकपदान्तरस्यापेक्षणादेव।

व्यवहारा इति सम्प्रदायविदः ।

क्षुदुपहन्तुं शक्यम्, पक्त्वोदनो भुज्यत इत्यादौ प्रथमान्तपदाना-मुपहननकर्म्मक्षुत्पाककर्म्मौदनादौ लक्षणा, न तु प्रथमायाः कर्म्मत्व-मर्थोऽननुशासनिकत्वात् । नापि धात्वर्थनामार्थयोर्भेदेनान्वयो-व्युत्पन्नत्वात् । अतएव "श्रुत्वाप्यर्थं नानुमतः कंसेनार्थः कुबुद्धिना ।" ...इत्यादौ प्रधानक्रियाकर्म्मणः कृदभिहितत्वेपि श्रवणकर्म्मणि द्वितीयाश्रवणमप्युपपद्यत इति नव्याः ।

तच्चिन्त्यम्, क्त्वाप्रत्ययस्य समानकर्त्तृकत्वार्थकत्वे कर्त्तुरभि-

इत्यादयो व्यवहारा इति । गुणप्रधानभूतयोः पाकभोजनक्रिययोः सूपौदनयोर्भेदान् पाके नौदनकर्म्मकत्वं नवा सूपमित्यस्यानुपादाने सूपकर्म्मकत्वं तत्र बुद्ध्यते, किन्तु सूपमित्यस्योपादान एवेत्याशयः ।

आनुशासनिकार्थातिरिक्ते विभक्तीनां लक्षणां नामार्थधात्वर्थयोर्भेदान्व-यञ्चाभ्युपगच्छतान्नव्यानाम्मतं दूषयितुमुपन्यस्यति—क्षुदुपहन्तुमित्यादिना । **अतएव** आनुशासनिकार्थातिरिक्तार्थे विभक्तीना लक्षणाया नामार्थधात्वर्थ-योर्भेदान्वयस्य चानभ्युपगमाद् द्रव्याभेदेपि गुणक्रियया कारकाभिधायकान्तर-स्यापेक्षणाच्चैवेत्यर्थः । **प्रधानक्रियाकर्म्मण** अनुमतिकर्म्मणः । **कृदभिहितत्वेपि** क्तप्रत्ययेन विषयरूपस्य कर्म्मणोभिधानेपीत्यर्थः । **श्रवणमपी**त्यपिना पृथगर्थ-पदोपादानस्योपपन्नत्वं सूच्यते ।

चिन्ताबीजमाह—**क्त्वाप्रत्ययस्ये**त्यादिना । **समानकर्त्तृकत्वार्थकत्व इति** । समानकर्त्तृकधात्वर्थान्वितकर्त्तृत्वबोधकत्व इत्यर्थः । तेन क्त्वाप्रत्ययस्य "कर्त्तरि कृत्" इति सामान्यानुशासनेन कर्त्तृमात्रमर्थः । अन्यकर्त्तृकपाकस्थले

---

१० कर्म्म इति पा० मु० पु० ना० ।

२ अनानुशासनिकत्वात् इति मु० पु० पा० ।

३ क्षुधमित्योदनमिति पदमेव कथितस्थलयोरध्याहरणीयमिति वस्तुगतिः इत्यधिकः पाठः मु० पु० ।

धानाच्चैत्रः पक्त्वा चैत्रेण भुज्यत इति प्रयोगस्य, कृतो भावमात्राभि-

चैत्रः पक्त्वा व्रजतीत्यादिप्रयोगस्तु धात्वर्थयोः पाकगमनयोः क्त्वाप्रत्ययार्थ-कर्त्तुराख्यातार्थकर्त्तृत्वस्य चान्वयेन पाककर्त्ता चैत्रो गमनकर्त्तेति बोधे पाककर्त्तृ-त्वस्योद्देश्यतावच्छेदकतया तत्र विधेयप्रयोजकत्वस्य धनवान् सुखीत्यादौ धने सुखप्रयोजकत्वस्येव भानेन पाकगमनयोरेककर्त्तृत्वभानादेव वारणीय इति क्त्वाप्रत्ययस्य न समानकर्त्तृकत्वमर्थ इति शङ्काया निरासः। **इति प्रयोगस्ये-ति।** **आपत्ते**रित्यग्रिमेणान्वयः। अभिहिते कर्त्तरि प्रथमायाः, भोजनक्रिया-निरूपितकर्त्तुरनभिधानादनभिहिते कर्त्तरि तृतीयाया निराबाधत्वादिति भावः। "अव्ययकृतो भावे" इत्यनुशासनेन क्त्वाणमुलादीना भाववाचकत्वं विशेषा-नुशासनविरहे एव सामान्यस्य प्राप्तेरिति तत्र क्त्वाप्रत्ययस्य न कर्त्तृवाचकत्व-मिति मतेप्यापत्तिमाह—**कृतो भावमात्रे**त्यादिना। "समानकर्त्तृकयोः पूर्व-काले" इति सूत्रस्य षष्ठ्याः सप्तम्या वा निर्द्धारणार्थकतया तत्समानकर्त्तृक-योर्धात्वर्थयोर्म्मध्ये पूर्वः कालो यस्य धात्वर्थस्य विवक्षितस्तद्वाचकाद्धातोः क्त्वाप्रत्यय इत्येवार्थः। स च प्रत्ययः "अव्ययकृतो भावे" इत्यनुशासनज्ञापित-भावार्थकः। धात्वर्थात्मकस्य भावस्य च धातुनैव लाभात्संसर्गविशेषतात्पर्य्य-ग्राहक एव क्त्वा। स च सम्बन्धः क्त्वाप्रकृत्यर्थभूतक्रियायाः क्रियां प्रति धातुसम्बन्धाधिकाराद्विशेषणतया तदवच्छेदकः सामानाधिकरण्यमुत्तरकालीन-त्वञ्च "समानकर्त्तृकयोः" इत्यनेन सूत्रेणैव प्रतिपादितः। तथाहि—समानकर्त्तृ-कत्वं न्यायनये स्वानुकूलकृत्याश्रयनिष्ठकृतिप्रयोज्यत्वम्, तन्नये कृत्याश्रयस्यैव कर्त्तृत्वात्। शाब्दिकनये च धातूपात्तव्यापारस्यैव तत्त्वेन स्वाश्रयनिष्ठत्वमेव। सामानाधिकरण्यमपि पूर्वनये स्वानुकूलकृतिमत्त्वसम्बन्धेन स्वाधिकरणे तेनैव वृत्तिमत्त्वम्, द्वितीये यथायथं समवायादिना स्वाधिकरणे तेनैव वृत्तिमत्त्वम्। "पूर्वकाले" इत्यत्र पूर्वः कालो यस्येति बहुव्रीहिणा क्त्वाप्रत्ययप्रकृतिभूत-धात्वर्थस्य पूर्वकालवृत्तित्वज्ञापनात्तद्विशेष्यीभूतधात्वर्थस्योत्तरकालीनत्वमेव लभ्यत इति भुक्त्वा व्रजतीत्यादितो निरुक्तोभयसंसर्गेण भोजनविशिष्टस्य

धायित्वे चैत्रेण पक्त्वा चैत्रो भुङ्क्त इति प्रयोगस्यापत्तेः, प्रथमया गुणक्रियाकारकाभिधानावश्यकत्वात् ।

"श्रुत्वाप्यर्थम्"...इत्यादौ श्रवणकर्म्मणोपदेशवाक्यार्थेन सहानुमितिकर्म्मणो धर्म्मस्य पुमर्थस्य भेद एव विवक्षितः ।

यद्रूपावच्छिन्नान्वयिप्रधानक्रियाकारकमभिहितं तद्रूपावच्छिन्नान्वयिगुणक्रियाकारकमपि तद्रूपावच्छिन्नावाचकतत्पदस्व्यपेक्षया[1] विभक्त्याभिधीयत इति सामान्यतो व्युत्पत्तिः । अतएव चैत्रत्वावच्छेदेन भोजनकर्त्तृत्वस्य स्वरूपत्वावच्छेदेन पाककर्त्तृत्वस्य

गमनस्य कर्त्तृत्वस्य बोधादन्यकर्त्तृकभोजनमादाय तथा प्रयोगस्यासम्भवान्न क्त्वाप्रत्ययस्य समानकर्त्तृकत्ववाचकतेति भावः । **चैत्रेण पक्त्वेति** । अनभिहिते कर्त्तरि तृतीयायाः साधुतया गुणीभूतपाकक्रियाकर्त्तुरनभिधाने तस्याः प्रधानीभूतक्रियाकर्त्तुस्तिङाभिधानात्तद्वाचकपदोत्तरं प्रथमायाः प्राप्तेरित्यर्थः । **आपत्तेरिति** पञ्चम्यन्तं गुणक्रियाकारकाभिधानस्यावश्यकत्वे हेतुः । **प्रथमयेति** । निरुक्तनव्यमताश्रयणे क्षुदुपहन्तुं शक्यमित्यादीनामुपपत्तावपि चैत्रः पक्त्वेत्युक्तप्रयोगयोः प्रामाण्यप्रसङ्गभिया द्रव्यैक्ये प्रथमादीनां लक्षणया संसर्गतया वा प्रतियोगित्वादिरूपगुणक्रियाकारकस्यान्वयबोध उचितो न तु तद्वाचकपदान्तरं तत्रापेक्षणीयमित्याशयः ।

ननु तर्हि श्रुत्वाप्यर्थमित्यन्तद्वितीयान्तार्थशब्दप्रयोगोनुपपन्न इत्यत आह—**श्रुत्वाप्यर्थमित्यादाविति** । धर्म्मपदेन वृत्तिमतो बोधो मा भूदित्यत उक्तं—**पुमर्थस्येति** । त्रिविधेषु चतुर्विधेषु वा पुरुषार्थेषु प्रथमस्येत्यर्थः । **भेद एव विवक्षित इति** । तथा च तत्र द्रव्यैक्याभावात् सूपं पक्त्वौदनो भुज्यत इत्यादाविव द्वितीयान्तस्य सार्थकत्वमित्याशयः ।

नन्वेवमप्यात्मना पक्त्वा चैत्रो भुङ्क्त इत्यत्रात्मचैत्रपदयोरेकव्यक्तिवाचकत्वेन द्रव्यभेदाभावादात्मनेत्यस्यासाधुत्वमित्यत आह—**यद्रूपावच्छिन्नान्वयीति** ।

---

१ तद्रूपावच्छिन्नवाचकतत्पदस्व्यपेक्षया इति मु० पु० पा० ।

**विवक्षायामात्मना पक्त्वा चैत्रो भुङ्क्त इत्यादिकः प्रयोगोपि सूपपदः। अत्र करणे तृतीयेति वदन्ति।**

**एवं बहुव्रीहेरपि भिन्नलिङ्गपदसमानाधिकरणस्य क्वचिन्नपुंसकत्वं साधु। अतएव "नमः शान्तिरेव यदर्थं तदाह" इति प्रकाशः। यदर्थमिति क्तिन्नन्तशम्यर्थविशेषणत्वात् क्लीबलिङ्गमिति वस्तुगतिः।२७।**

**सूपपद** इति। चैत्रत्वावच्छिन्नान्वयिभोजनक्रियाकर्त्तृत्वस्याभिधानेपि तदवच्छिन्नानन्वयिस्वरूपत्वावच्छिन्नान्वयिपाकक्रियाकर्त्तृत्वस्य चैत्रत्वावच्छिन्नावाचकेनात्मपदेन सह साकाङ्क्षया तृतीयाविभक्त्या प्रतिपादनस्य व्युत्पत्तिसिद्धत्वादेवोक्तप्रयोगः साधुरित्यर्थः। उक्तस्थले तृतीयाया न कर्त्तृत्वमर्थः, किन्तु करणत्वमित्युक्तव्युत्पत्तावन्वयितावच्छेदकधर्म्मस्यानुपादानेपि तत्र नानुपपत्तिः, प्रधानक्रियाकारकस्य गुणक्रियाकारकभिन्नत्वादित्याह—**अत्रे**ति। **आत्मने**त्यत्रेत्यर्थः। तथा चात्मपदस्य जीवात्मपरत्वे चैत्रत्वेन कर्त्तृत्वं स्वरूपत्वेन करणत्वम्। इन्द्रियपरत्वे च ज्ञानेन्द्रियाणामिव कर्म्मेन्द्रियाणामपि करणत्वमित्याशयः।

अन्यत्रापि क्वचिद्विभिन्नलिङ्गकं समानाधिकरणपदं साध्विति दर्शयति—**एवं बहुव्रीहेरपी**ति। योर्थो यस्येति बहुव्रीहावर्थशब्दस्य विशेष्यनिघ्नतया स्त्रीलिङ्गशान्तिपदसमानाधिकरणस्याप्युक्तनियमादेव नपुंसकत्वमित्याशयः। **नमः शान्तिरि**त्यत्र **यदर्थमि**त्यस्य तादात्म्येन विशेषणतया क्रियाविशेषणत्वादेव नपुंसकत्वमिति बहुव्रीहौ नोक्तव्युत्पत्तिः स्वीकार्य्या, "क्रियाविशेषणानां कर्म्मत्वं नपुंसकत्वमेकत्वञ्च" इत्यनुशासनादित्याह—**यदर्थमि**ति।

---

१ सूपपादः इति मु० पु० पा०।

२ नपुसकद्वितीयान्तत्वमिति इति मु० पु० पा०।

तस्मात्—

[1]सामानाधिकरण्येपि भिन्नलिङ्गपदेपि यत्।
विशेष्यनिघ्ने क्लीबत्वं तदन्यान्वयमूलकम्॥२७॥

एवं प्रातिपदिकयोस्सामानाधिकरण्ये वचनैक्यमपि प्रायेण तन्त्रम्। अतो नीला घटः सुन्दरो दाराः शीतप्रकृतिराप इत्यादिरप्रमाणम्। येन प्रातिपदिकेन समभिव्याहृताया [2]विभक्तेरन्या सङ्ख्या तत्समानाधिकरणप्रातिपदिकार्थे विवक्षिता, तत्र समानाधिकरणप्रातिपदिकयोर्भि[3]न्नवचनत्वमपि साधु। सा च सङ्ख्या क्वचित्पदार्थे क्वचित्तदेकदेशेन्वेतीति द्वेधा।

उक्तमर्थमुपसंहरति—तस्मादिति। सामानाधिकरण्येपीत्यस्य नाम्नोरित्यादिः। भिन्नलिङ्गपदेपीत्यपिशब्दो विशेष्यनिघ्न इत्यनन्तरं योजनीयः। तथा च समानलिङ्गकत्वप्रयोजकयोर्नाम्नोः सामानाधिकरण्यं विशेषणवाचकपदस्य विशेष्यनिघ्नत्वमित्यनयोस्सत्त्वेपि विशेषणवाचकपदस्य क्लीबलिङ्गत्वं तदुपहननाद्यर्थद्वारकतादात्म्याद्यन्वयप्रयोज्यमेवेत्यर्थः ।२७।

वृत्तिग्रहविवरणे प्रसङ्गात् प्रातिपदिकयोरभेदान्वयप्रयोजकं समानवचनकत्वं न सर्वत्र, किन्तु विशेषस्थल एवेत्युक्तमपि प्रातिपदिकयोस्सामानाधिकरण्ये यथा समानलिङ्गकत्वं प्रायिकम्, तथा समानवचनकत्वमपि प्रायिकमेवेति पुनरपि दर्शयति—एवमित्यादिना। एवं समानलिङ्गकत्वमिव। अस्य प्रायेणेत्यनेनान्वयः। अतः समानवचनकत्वस्य प्रयोजकत्वात्। अप्रमाणं घटदारादिपदसमानवचनकत्वस्य नीलसुन्दरादिपदेष्वेव सत्त्वात्। येनेत्यादि। एतस्यार्थः प्रागेव प्रपञ्चितः।

---

१ कारिकेयं मुद्रितपुस्तके न दृश्यते। विवरणपाठेपि "तस्मात्सामानाधिकरण्येपि भिन्नलिङ्गपदे नियतविशेष्यनिघ्ने क्लीबत्व तदन्यान्वयमूलकम्" इत्येव दृश्यते।

२ विभक्तेरर्थादन्या इति मु० पु० पा०।

३ विभिन्नवचनमपि इति मु० पु० पा०।

**उभयं यथा—"अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्।" इत्यत्र चिकुरान्वयिबहुत्वम्[1], "उलपाश्छेत्तुं शक्यम्"...इत्यादौ शक्यर्थव्यापारान्वयि चैकत्वम्[2]। बहूनामुलपानामेकव्यापारच्छेद्यत्वेन सौकर्य्यविवक्षायां हि तथा प्रयोगः।**

**एवं "व्युत्पत्तिशक्तिरभ्यास इति त्रयो हेतुः" इत्यत्र फलोपधाय[3]कार्थकहेतुपदार्थैकदेशे फले एकत्वविवक्षया "हेतुः" इत्येकवचनम्, तथैव[4] दण्डचक्रादिन्यायेन व्युत्पत्त्यादीनां परस्परसहकारितालाभात्[5]।**

विशेषणवाचकपदोत्तरसङ्ख्याया विवक्षणं प्रयोजनसत्त्व एव, नान्यथेत्यतो नीला घट इत्यादौ न तत्, किन्तु स्थलविशेष एवेत्यत्र पूर्वानुक्तमुदाहरणमाह—**अमानी**ति "विभज्य मेरुर्न्नयदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्म्मरुः" इति पूर्वार्द्धम्। **चिकुरा** इत्यनन्तरं **शिरःस्थित**मिति। **चिकुरान्वयिबहुत्व**मिति। विशेष्यवाचकनिजायशोयुगपदोत्तरसुविभक्तितात्पर्य्यविषयीभूतैकत्वसङ्ख्याविरुद्धस्य बहुत्वस्य विशेषवाचकचिकुरपदोत्तरजस्विभक्त्यर्थस्य चिकुरपदार्थेन्वयो विवक्षितस्तेनायशोद्वयस्य बहुचिकुरत्वेनाभिमानः फलितः। **व्यापारान्वयी**ति। उत्पत्त्यनुकूलव्यापारान्वयीत्यर्थः। एकत्वविवक्षायाः फलमाह—**बहूनामुलपाना**मिति। न चात्रोलपस्य तृणविशेषस्य विशेष्यत्वेपि पूर्वत्रायशोयुगस्यावास्तविकत्वेनारोपमात्रविषयतया कथं विशेष्यत्वं ? वास्तविकानां चिकुराणामेव तथात्वमिति वाच्यम्, अयशोयुगस्य वास्तवत्वेन चिकुराणामेवारोप्यत्वेन कविनोत्प्रेक्षितत्वात्। अतएवारोपे यद्विशेष्यं तत्समानवचनकत्वमाख्यातस्य एको द्वौ ज्ञायत इत्यादिषु दृष्टमित्यत्रापि तथाभूतायशोयुगसमानवचनकमेवा**मानीति** क्रियापदं प्रयुक्तमिति बोध्यम्।

पदार्थैकदेशे तादृशसङ्ख्यान्वयमुदाहरति—**एवं व्युत्पत्ती**ति। एतदर्थोपि प्रागेव प्रपञ्चितः।

---

१ बहुत्वम् इति पा० मु० पु० ना०।

२ वचनमुलयाः च्छेत्तु शक्यम् इति मु० पु० पा०।

३ फलोपधानार्थकहेतु० इति मु० पु० पा०।

४ ततः इति मु० पु० पा०।

५ लभः इति मु० पु० पा०।

एवं चैत्रो मैत्रश्च सुन्दरावित्यादौ चैत्र एकत्वस्य द्वित्वविशिष्टसुन्दराभेदस्य चोभयोरेकत्रद्वयमिति न्यायेनान्वयबुद्धौ तात्पर्य्ये प्रामाण्यम् । एकत्वद्वित्वयोरेकविशिष्टेपरवैशिष्ट्यबुद्धिरेव हि प्रतिषिध्यते, न त्वेकत्रद्वयन्यायेन, एको द्वित्ववानिति प्रतीतेस्सार्वजनीनत्वात् । यत्र चैकवचनार्थो न विवक्षितस्तत्र चैत्रमैत्रौ सुन्दराविति द्वन्द्व एव साधुः । अधिकमुपरिष्टात् ।२८।

तस्माद्—

अर्थे तदेकदेशे वा सङ्ख्याभेदे विवक्षिते ।
सामानाधिकरण्येपि साधुर्वचनयोर्भिदा ॥२८॥

एवं विभक्त्यैक्यविशिष्टयोः प्रातिपदिकयोः पौर्वापर्य्येणेव

एवं चैत्रो मैत्रश्चेति । इदमपि पदार्थान्वयोदाहरणमेव यद्यपि तथापि वैलक्षण्यप्रदर्शनार्थं पृथक् पुनरुपादानम् । नन्वेको द्वावित्यादिप्रयोगाणां प्रामाण्यवारणायैकत्ववति द्वित्वान्वयस्याव्युत्पन्नत्वेन कथमुक्तान्वयबोध इत्यत आह—एकत्वेति । द्वित्वयोरिति द्वित्वपदमेकत्वभिन्नसङ्ख्योपलक्षकम् । सार्वजनीनत्वादिति । तथा चैकत्रद्वयन्यायेनैकत्ववति द्वित्वबुद्धेरप्रामाणिकत्वे एको द्वित्ववानित्यस्याप्यप्रामाण्यं स्यादित्यर्थः । विशेष्यवाचकपदोत्तरविभक्त्यर्थसङ्ख्याया अविवक्षणे द्वन्द्व एव, न पुनर्भिन्नवचनकत्वमपि साध्वित्याह—यत्रैकवचनेति ।

उक्तमर्थमुपसंहरति—तस्मादिति । सङ्ख्याभेद इति । विशेष्यवाचकपदोत्तरविभक्तितात्पर्य्यविषयसङ्ख्याभिन्नसङ्ख्यायामित्यर्थः, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् । विवक्षित इति । विशेषणवाचकपदोत्तरविभक्त्येत्यादिः । भिदा भेदः, भावे "षिद्भिदादिभ्योङ्" इत्यनेनाङ्विधानात् ।२८।

समासान्तर्गतयोर्नाम्नोः सामानाधिकरण्यमिति यदुक्तं तद्विवृणोति—एवं विभक्त्यैक्येत्यादिना । पौर्वापर्य्येणेवेत्यन्तं दृष्टान्तविधयोक्तम् । तत्र

---

१ तात्पर्य्येण इति मु० पु० पा० ।

निर्विभक्तिकयोरव्यवधानेनाकाङ्क्षाभिव्यज्यते । यथा नीलोत्पलादिकर्म्मधारयान्तर्गतयोः प्रातिपदिकयोः सामानाधिकरण्यम्, तथा पङ्कजपदादौ तेनैव वाक्यार्थमर्य्यादयोपस्थापितस्य पङ्कजनिकर्त्तुः समुदायरूढ्योपस्थापिते पद्मे तादात्म्येनान्वयात्तेनैव सह तस्य सामानाधिकरण्यम् ।

तथाहि—पङ्कजचरमवर्णप्रत्यक्षे स्मृताः पङ्कजनिडप्रत्ययाः संस्कृतपङ्कजसमुदायश्च भासन्ते, द्वितीयक्षणे पङ्कजननकर्त्तृपद्मानि चत्वारि

सामानाधिकरण्यस्य दर्शितत्वात् । **निर्विभक्तिकयोरि**ति । समासे सति लुप्तविभक्तिकयोरित्यर्थः । न केवलं कर्म्मधारय एव सामानाधिकरण्यं पदयोः, किन्तूपपदसमासे पङ्कजादियोगरूढशब्दे स्वेनैव स्वस्यापीत्याह—**तथा पङ्कजपदादावि**ति । **तेनैव** पङ्कजादिपदेनैवेत्यर्थः । अन्वयश्चास्य **सामानाधिकरण्यमि**ति पूर्वेण । **वाक्यार्थमर्य्यादये**ति । शक्तपदसमूहस्वरूपवाक्यत्वस्य पङ्कजपदे सत्त्वात्तद्घटकपङ्कादिप्रत्येकपदार्थमर्य्यादयेत्यर्थः । **पङ्कजनिकर्त्तुरि**ति । पङ्कपदात् पङ्कत्वावच्छिन्नस्य जनिधातोरुत्पत्तेर्डप्रत्ययात्कर्त्तुरुपस्थित्या पङ्कस्य निरूपितत्वेनोत्पत्तौ तस्या निरूपितत्वेनैव कर्त्तुरेकदेशे कृतावन्वयात् पङ्कनिरूपितोत्पत्तिनिरूपितकर्त्तृत्वाश्रयस्येत्यर्थः । **समुदायरूढ्ये**ति । पङ्कजपदस्य पद्मत्वावच्छिन्ने शक्ततया तदुपस्थापित इत्यर्थः । **तादात्म्येनान्वयादि**ति । तथा च निरुक्तं सामानाधिकरण्यं तत्र निराबाधमित्यर्थः ।

योगरूढिस्थले कया रीत्यैकपदोपस्थापितयोर्योगार्थरूढ्यर्थयोरन्वय इति तां दर्शयितुमाह—**तथाही**ति । **चरमवर्णप्रत्यक्षे** जकारोत्तराकारप्रत्यक्षे । अस्य च **भासन्त** इत्यग्रिमेणान्वयः । **स्मृता** इति । प्रत्येकं तदवयवपङ्कजनिडप्रत्ययानां क्रमेण प्रत्यक्षे, तन्नाशेपि तज्जन्यसंस्कारेण स्मृता इत्यर्थः । **संस्कृत** इति । पञ्चम्यन्तपङ्कपदोत्तराज्जनिधातोर्डप्रत्यये सुब्लोपटिलोपादिना साधित एकरूपतामिवापन्न इत्यर्थः । **द्वितीयक्षण** इति । अवयवशक्तिसमुदाय-

१ समुदायरूढ्योपस्थापिते इति मु० पु० पा० ।

[1]स्मर्य्यन्ते, तृतीयक्षणे खले कपोतन्यायेन, चतुर्थे विशिष्टवैशिष्ट्यमवगाहमानः पङ्कजनिकर्त्तृ पद्ममित्यन्वयबोधः ।

ततः पदान्तरोत्पत्तितत्प्रत्यक्षपदार्थस्मरणादिक्रमेण पूर्वानुभवविषयपङ्कजनिकर्त्तृत्वप्रकारेण स्मृतस्य पद्मस्यान्वयबोधो न तु केवलस्य पङ्कजनिकर्त्तुः पद्मस्य वा, विशिष्टपदार्थोपस्थितेः केवलान्वयबुद्धिं प्रत्यसमर्थत्वात् ।

शक्तिज्ञानजन्यसंस्कारवतः पङ्कजपदप्रत्यक्षेण तादृशसंस्कारस्योद्बोधात्तदुत्तरस्मरण इत्यर्थः । **खले कपोतन्यायेने**ति । "वृद्धाः युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति । तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ।" इत्यभियुक्तोक्त्या वृद्धयुवशिशुकपोतसदृशानां विप्रकृष्टतरविप्रकृष्टसन्निकृष्टपदार्थानामुत्तरोत्तरपदार्थान्वयो युगपदेवेति रीत्या पङ्कस्य निरूपितत्वेनोत्पत्तौ तस्याश्च तेनैवाश्रयरूपकर्त्रेकदेश आश्रयत्वे तादात्म्येनाश्रयस्य पद्मेऽन्वय इत्यर्थः । विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयस्य कारणतयोक्तबोधरूपतादृशनिश्चयात्तदुत्तरक्षणे विशिष्टवैशिष्ट्यावगाही बोध इत्याह—**चतुर्थ** इति । **विशिष्टवैशिष्ट्यमि**ति । पङ्कविशिष्टाया उत्पत्तेर्वैशिष्ट्यमाश्रयत्वे तादृशाश्रयत्वविशिष्टस्य तादात्म्येन पद्मे वैशिष्ट्यमवगाहमान इत्यर्थः ।

**तत** इति । उक्तविशिष्टान्वयबोधानन्तरमित्यर्थः । **पदान्तरे**ति । आनयादिपद इत्यर्थः । **न तु केवलस्ये**ति । पद्मत्वादिविशिष्टाविषयको नानयनादिविशेष्यकोऽन्वयबोध इत्याशयः । **कर्त्तृत्वप्रकारेणे**त्यस्य कर्त्तृत्वं प्रकारो यत्रेति समासोत्तरमुपलक्षणे तृतीया । तेन कर्तृत्वविशिष्टविशेषणकत्वं स्मरणे लब्धम् । नातः कृत्प्रत्ययस्य धर्म्मिवाचकतया कर्त्तुरेव पद्मे प्रकारत्वस्योक्तावप्यसङ्गतिः । आनयादिपदान्तरार्थविशेष्यकबोधस्य पङ्कजनिकर्त्तृमात्रप्रकारकत्वाभावे बीजमाह—**विशिष्टे**ति । पङ्कजनिकर्त्तृ पद्ममित्याकारकविशिष्टस्मृतेरित्यर्थः । **असमर्थत्वादि**ति । "प्रजावती भ्रातृजाया" इत्यनुशासनेन भ्रातृनिरूपितजायात्वविशिष्टशक्तप्रजावतीपदाद्विशिष्टपदार्थोपस्थितौ शुद्धजायात्वावच्छिन्नबोधस्यानुभवविरुद्धत्वेन शुद्धतद्विषयके बोधे तादृशतद्विषयकस्मरणस्यैव कारणत्वम्, न तु तदंशेन्यावगाहिस्मरणमपीत्याशयः ।

---

१ स्मार्य्यन्ते इति मु० पु० पा० ।

अतएव केवलस्य [1]योगार्थस्य रूढ्यर्थस्य वोपस्थितये लक्षणामेव पङ्कजपदेऽङ्गीकुर्वन्ति ।

ननु तर्हि पङ्कजं कुमुदं भूमौ पङ्कजमुत्पन्नमित्यादौ च कुमुदे पद्मतादात्म्यस्य स्थलपद्मे पङ्कजनिकर्तृत्वस्य च बाधात्कथमन्वयबोध इत्यत आह—अतएवेति । योगार्थस्य पङ्कजनिकर्तुः । रूढ्यर्थस्य पद्मत्वजात्यवच्छिन्नस्य । अङ्गीकुर्वन्ति न्यायवार्त्तिककारा इति शेषः । तथा च पङ्कजं कुमुदं भूमौ पङ्कजमुत्पन्नमित्यादौ पङ्कजनिकर्तृत्वेन पद्मत्वेन च पङ्कज-पदस्य लक्षणयैव कुमुदस्थलपद्मयोर्बोध इति भावः ।

अत्र पुष्पं पङ्कजेत्यादौ पङ्कजादेरन्वयबोधस्याभावात् पङ्कजपुष्पमित्यादौ तादृशबोधाच्च निर्विभक्तिकपङ्कजपदोपस्थाप्यार्थान्वयबुद्धिं प्रति निर्विभक्तिक-पङ्कजपदोत्तरपदोपस्थाप्यत्वस्य प्रयोजकताया आवश्यकतया पङ्कजं पुष्प-मित्यादावन्वयबोधात् सविभक्तिकपङ्कजादिपदोपस्थाप्यार्थान्वयबोधं प्रति स्वसमानविभक्तिकपदोपस्थाप्यत्वस्य च प्रयोजकतया पङ्कजनिकर्तुः पदान्तरा-नुपस्थितपद्मादौ कथमन्वयबोधः ? इत्याशङ्कायां "अपङ्कजवृत्तिः सत्ता"... इत्यादौ "स्खलदक्षरसंशोभि तरुण्या मुखपङ्कजम्"...इत्यादौ च निर्विभक्तिक-पङ्कजपदार्थेन नञर्थभेदान्वयबोधे प्रथमस्य व्यतिरेकव्यभिचारात् सविभक्तिक-तरुणीमुखपङ्कजपदार्थान्वयबोधे स्वसमानविभक्तिकपदोपस्थाप्यत्वाभावाच्चोक्त-व्युत्पत्तेः [2]सङ्कोचस्यावश्यकत्वमिति समाहितं शब्दशक्तिप्रकाशिकायां जगदीशत-र्कालङ्कारैरिति तत्रैवानुसन्धेयः प्रपञ्चः ।

"यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैः समधिगम्यते ॥"

---

१ योगार्थस्य इत्यस्य स्थाने विशिष्टार्थस्य इति मु० पु० पा० ।

२ पङ्कजभिन्नवृत्तिसत्तेति बोधस्य निर्विभक्तिकपङ्कजपदोपस्थाप्यपङ्कजप्रकारकस्य विशेष्यतासम्बन्धेन नञर्थे भिन्ने तादृशपङ्कजपदोत्तरपदानुपस्थाप्येऽप्युत्पत्तेर्व्यतिरेकव्यभिचार-वारणाय प्रथमकार्यकारणभावे ससर्गीभूतविशेष्यताया समुदायशक्यतावच्छेदकानवच्छिन्न-नामार्थनिष्ठत्वस्य प्रवेशेनोक्तबोधस्य कार्यतावच्छेदकानाक्रान्तत्वान्न दोषः । द्वितीये च मुखस्य स्वसमानविभक्तिकपदोपस्थाप्यत्वाभावाद् व्यभिचारवारणाय स्वसमानविभक्तिकेत्यस्य स्वोत्तरविभक्तिविजातीयविभक्तिराहित्यार्थकत्वेन बोधो निर्वहतीति ध्येयम् ।

**यत्र तु कुमुदपदादिविषयिण्येव पङ्कजपदस्य कुमुदविषयिणी वा पङ्कजनिकर्त्तुः, स्थलाधिकरणत्वविषयिणी वा पद्मस्योपस्थितिस्तत्र विनापि लक्षणां केवले योगार्थे रूढ्यर्थे वा कुमुदतादात्म्यस्य स्थलवृत्तित्वस्यान्वय इति मणिकृन्मतसारः ।२६।१।२,३।**

**एवं धातुप्रातिपदिकयोरपि सामानाधिकरण्यं स्तोकं पचति**

इति रूढ्यर्थयोगार्थयोर्युगपदुपस्थितौ तयोराकाङ्क्षादिसहकारेणाहत्यान्वयबुद्धिस्थल एव योगार्थस्य रूढ्यर्थस्य वा नान्यत्रान्वयो न तु तयोरेव मिथः साकाङ्क्षत्वमन्यत्र योगार्थस्य बोधने रूढिधियः प्रतिबन्धकत्वं वा प्रमाणाभावात् । एवञ्च यत्र योगार्थरूढिलभ्यार्थयोस्तात्पर्य्याग्रहाद्विरोधिसमवधानाद्वा न प्रथममन्वयधीस्तत्र योगार्थमर्य्यादया पङ्कजातत्वेन कुमुदादेः समुदायशक्त्या च पद्मत्वेन स्थलकमलस्य बोधो भवत्येवेति मणिकृन्मतं दर्शयति—**यत्र त्विति** । **कुमुदपदादिविषयिण्येवेति** । **उपस्थिति**रित्यन्वयः । तथा च पङ्कजपदावयववृत्तिज्ञानं पङ्कजपदज्ञानञ्च कुमुदपदवृत्तिज्ञानतत्पदज्ञानविषयकमेव यत्रेत्यर्थः । **कुमुदविषयिणी वेति** । तादृशज्ञानात् पङ्कजनिकर्त्तृ कुमुदमित्याकारकं स्मरणमित्यर्थः । **स्थलाधिकरणत्वविषयिणी वेति** । स्थले पद्ममित्याकारिकेत्यर्थः । **मणिकृन्मतसार** इति । समुदायशक्त्युपस्थापिते पदान्तरशक्त्युपस्थापिते वा योगवृत्तिज्ञानेनोपस्थापितस्यार्थस्याकाङ्क्षादिनिश्चयसत्त्वदशायामेव समुदायशक्तिविषयेवयवशक्तिविषयस्य तादात्म्येनान्वयबोधस्तस्य सामग्र्याः समवधानात् । यत्र तु कुमुदे स्थलपद्मे स्थले वायवयशक्तिविषयस्य तादात्म्यान्वयबोधसामग्री, तत्र कुमुदादावेव तस्यान्वयः । रूढ्यर्थभिन्ने योगार्थस्यान्वयबोधव्युदासाय रूढेर्य्योगापहारिताप्रवादस्तु रूढ्यर्थमात्रे योगार्थस्यान्वयबोधसामग्रीस्थलाभिप्रायक इति तन्मतमित्यर्थः ।२६।१।२,३।

नाम्ना सह नाम्नस्त्रिविधमपि सामानाधिकरण्यं सोपपत्तिकमुपपाद्य धातुना सह नाम्नस्सामानाधिकरण्यमुदाहरति—**एवं धात्विति** । **स्तोकपदार्थस्य** अल्पत्वावच्छिन्नस्य सुखपदशक्यार्थगुणविशेषतादात्म्यस्योपवेशनफलेभावादाह—

सुखमास्त इत्यादौ। अत्र द्वितीयान्तस्तोकपदार्थस्य सुखपदलक्षित-सुखसाधनस्य पच्याद्यर्थे तादात्म्येनान्वयात् ।२६।२।

अत्र धात्वर्थफलान्वयिकर्म्मेत्येव "कर्त्तुरीप्सिततमं कर्म्म" इति सूत्रस्याक्षरतात्पर्य्याभ्यामर्थः। अन्वयश्चाश्रयत्वमिव तादात्म्यमपि।

तथा च विक्लित्त्यनुकूलव्यापारार्थकपच्यर्थफले विक्लित्तौ स्तोकस्य स्फिग्भूसंयोगानुकूलव्यापारार्थकासधात्वर्थफले स्फिग्भू-संयोगे सुखपदलक्षितसुखसाधनस्य तादात्म्यान्वयविवक्षायां युज्यत एव कर्म्मसंज्ञा कर्म्मणि द्वितीया चेति जरद्वैयाकरणाः।

तन्न, तथा सति द्वितीयाया इव कर्म्मणि लकारस्यापि प्रसङ्गात्।

**सुखपदलक्षिते**ति। **पच्याद्यर्थ** इति। पच्धात्वर्थफले विक्लित्तावल्पस्या-स्धात्वर्थफले स्फिग्भूसंयोगे सुखसाधनस्येत्यर्थः। **अन्वयादि**ति। पञ्चम्य-न्तार्थस्य पूर्वेण **सामानाधिकरण्य**मित्यनेनान्वयः।

स्तोकादेर्द्वितीयान्तत्वोपयिककर्म्मसंज्ञोपपादकं प्राचीनवैयाकरणमतं निर-सितुमाह—**अत्र धात्वर्थे**त्यादिना। **अक्षरतात्पर्य्याभ्यामि**ति। **कर्त्तु**रित्यनेन धात्वर्थक्रियाया आक्षेपादी**प्सिततमम्**इत्यत्र सन्तमपोरर्थस्याविक्षणादापधात्वर्थ-सम्बन्धमात्रस्य विवक्षणादुक्तार्थलाभः। तत्राक्षरमात्रात्तन्मात्रस्य लाभासम्भवा-त्तात्पर्य्यमपि प्रयोजकमिति भावः। अभेदातिरिक्तस्यैवान्वयपदेन ग्रहणे मानाभावाद् गौरवाच्चाभेदसाधारणसम्बन्धत्वावच्छिन्नमेव तत्पदार्थ इत्याह—**अन्वयश्चे**ति। **आश्रयत्वमिवे**ति। समवायादितत्तत्सम्बन्धावच्छिन्नाश्रयत्व-त्वमिवेत्यर्थः। तत्सम्बन्धावच्छिन्नाश्रयतायास्तत्सम्बन्धरूपतया समवायादिना धात्वर्थतावच्छेदकफलवत्त्वं कर्म्मत्वमिति पर्य्यवसितम्। **तथा च** तादात्म्येन धात्वर्थफलवत्त्वस्य कर्म्मत्वप्रयोजकत्वे च। **युज्यत एवे**ति। धात्वर्थफलाभिन्न-स्यापि कर्म्मसंज्ञाविधायकसूत्रोद्देश्यत्वस्य निराबाधत्वात् कर्म्मसंज्ञाया एव द्वितीयाप्रयोजकत्वाच्चेति।

मतमेतन्निरस्यति—**तन्ने**त्यादिना। **तथा सति** उक्तरीत्या स्तोकादीनां कर्म्मत्वस्योपपादने। **प्रसङ्गादि**ति। कर्म्मसंज्ञाया एव कर्म्मलकारप्रयोजकत्वात्।

आस्यते मास इतिवत् सुप्यते सुखमित्यादिप्रयोगप्रसङ्गात् । स्फिग्भ्रुवोः कर्म्मणोर्धात्वर्थान्तर्गतत्वेपि सुखादिकर्म्मणैवास्तेः सकर्म्मकत्वेन सुखमास्यत इति भावे लकारदौर्लभ्यापत्तेः ।

नव्यास्तु धात्वर्थफलाश्रयत्वमेव कर्म्मत्वम्, फलत्वं व्यापारभिन्नत्वम्, व्यापारत्वञ्चाग्रे निर्वक्ष्यते, पच्यर्थश्च विक्लित्तेरुत्पत्तावनुकूलो व्यापारः । धात्वर्थत्वन्तु धातुजन्यप्रतीतिविषयत्वम् उत्पादकत्वस्य संसर्गत्वेप्युत्पत्तेरव्याहतम् । धात्वर्थोत्पत्तिस्वरूपफलाधिकरणतया

**आस्यते मास इतिवदि**ति । अयञ्चाकर्म्मकधातुभ्योपि कर्म्मसंज्ञकेन योगेनैव सकर्म्मकत्वात् कर्म्मणि लकार इत्यत्र दृष्टान्तः । तत्र मासस्य "अकर्म्मकधातुभिर्योगे"...इत्यादिवार्त्तिकेन कर्म्मसंज्ञाया विधानाद्धातोरकर्म्मकत्वाच्च यथा कर्म्मणि लकारस्तथात्रापि धातोरकर्म्मकत्वेपि स स्यादित्यर्थः । आपत्तिमुक्त्वानुपपत्तिमाह—**स्फिग्भ्रुवोरि**ति । **दौर्लभ्यापत्तेरि**ति । "भावे चाकर्म्मकेभ्यः" इत्यनेनाकर्म्मकेभ्य एव भावे लकारादिविधानादिति भावः ।

**नव्यास्त्वि**ति । **शाब्दिका** इत्यग्रिमेणान्वयः । **फलाश्रयत्वमेवे**ति । एवकारेण निरुक्तफलाभिन्नत्वस्य कर्म्मत्वव्यवच्छेदः । फलत्वस्य व्यापारजन्यत्वप्रधानधात्वर्थव्यापारविशेषणत्वादिस्वरूपत्वे उत्पत्तेस्तत्त्वं न स्यादित्यत आह—**फलत्वमि**ति । **व्यापारभिन्नत्वमि**ति । धात्वर्थे सतीति पूरणीयम् । तेनोदासीनस्य फलत्वव्युदासः । व्यापारत्वस्यापि धात्वर्थत्वमात्ररूपत्वे उत्पत्तेरपि तत्त्वस्य वक्ष्यमाणतया तद्भिन्नत्वं न स्यादित्यत आह—**व्यापारत्वञ्चे**ति । धातुजन्यप्रतीतीयमुख्यविशेष्यत्वमेव व्यापारत्वमित्याशयः । फले विशेषणीभूतस्य धात्वर्थत्वस्याप्युक्तमुख्यविशेष्यतारूपत्वे विशेषणतारूपत्वे वोत्पत्तेस्तादृशप्रतीतौ संसर्गतया तदसम्भव एवेत्यत आह—**धात्वर्थत्वन्त्वि**ति । **उत्पत्तेरव्याहतमि**ति । पचतीत्यादिवाक्यजन्यप्रतीतिविषयतायाः संसर्गसाधारण्यास्तत्रानपाय इत्यर्थः । नन्वेवं विक्लित्तेरपि कर्म्मत्वं स्यात्, फलीभूतोत्पत्तिमत्तायास्तत्र सत्त्वात्तथा च

**विक्लित्तिरपि पाककर्म्म। उक्तार्थानामप्रयोगाद् विक्लित्तिं पचतीति न प्रयोगः। लब्धो हि पचिधातुनैव विक्लित्तिकर्म्मकः पाकः।**

**तथा च फलांशमादाय धातुना समानाधिकरणे प्रातिपदिकेपि [1]शोभनादौ कर्म्मत्वानुवादिका द्वितीया।**

**"[2]व्रैहेयमोदनं पचति"...इत्यादौ व्रैहेयादिपदसमभिव्याहृताया**

स्तोकं पचतीतिवद् विक्लित्तिं पचतीति प्रयोगः स्यादित्यत आह—**उक्तार्थाना**-**मि**ति। **विक्लित्तिकर्म्मकः पाक** इति। विक्लित्त्यनुकूलो व्यापार इत्यर्थः, तथा च धात्वर्थे विक्लित्तौ विक्लित्तिपदोपात्तायास्तस्या अन्वयस्यायोग्यतयैव नोक्तप्रयोग इति भावः। **तथा च** उत्पत्तेः फलत्वे च। **शोभनादावि**ति। शोभनं पचतीति वाक्याभिप्रायेणोक्तम्। आदिपदग्राह्यः स्तोकादिः। **कर्म्मत्वा**-**नुवादिके**ति। व्यापारे कर्म्माकाङ्क्षायाः स्वविशेषणविक्लित्त्यादिनैव निवृत्तेर-भेदेन विक्लित्त्यादिविशेषणीभूतशोभनादिपदोत्तरद्वितीयाया विक्लित्त्यादिनिष्ठ-कर्म्मत्वानुवादकं बोध्यम्।

तर्हि शोभनादिपदोत्तरं द्वितीया निरर्थिकैवेति तस्याः किमर्थं प्रयोग इति जिज्ञासायामभेदान्वयबोधप्रयोजकाकाङ्क्षाद्योतकतया तस्याः सार्थकत्वं वैदिक-दृष्टान्तेन दर्शयति—**व्रैहेयमि**ति। व्रीहेरयमित्यर्थे "स्त्रीभ्यो ढक्" इत्यनेन ढग्विधानात्तदन्तव्रैहेयपदस्य तादात्म्येनौदनान्वितार्थकतयौदनपदोत्तरद्वितीययैव पाके कर्म्माकाङ्क्षाया निवृत्तेर्व्रैहेयपदोत्तरं द्वितीया यथा व्रैहेयाभेदान्वयबोधप्रयोजिकाया द्वितीयान्तौदनपदोत्तरतादृशौदनपदत्व-रूपायास्तद्व्यञ्जनीयाया वाकाङ्क्षाया द्योतिका, तथा स्तोकं पचतीत्यादावपि विक्लित्तौ स्तोकाभेदान्वयबोधप्रयोजकद्वितीयान्तस्तोकादिपदसमभिव्याहृत-पचतिपदत्वतद्व्यञ्जकत्वान्यतरस्वरूपाकाङ्क्षाद्योतकत्वमेव स्तोकादिपदोत्तर-द्वितीयाया इति भवति तादात्म्यसंसर्गकबोधे तस्या उपयोग इति भावः।

---

१ इति वाक्यस्य पा० ना० मु० पु०।

२ शोभनादौ इति पा० ना० मु० पु०।

इव द्वितीयायास्तत्तद्विभक्त्यन्तपदत्वव्यञ्जनीयाकाङ्क्षाद्योतकतया तादात्म्यसंसर्गकबुद्धावुपयोगात्; अतएव "अग्निहोत्रं जुहोति"... इत्यादौ कर्म्मत्वेन भावनायामन्वितस्य जुहोत्यर्थस्य नामधेयमग्निहोत्रपदं कर्म्मत्वानुवादकद्वितीयान्तम्, "उद्भिदा यजेत पशुकामः" इत्यत्र करणतया भावनायामन्वितस्य यज्यर्थस्य नामधेये उद्भिदि करणत्वानुवादकतृतीयान्तमिति भाट्टदर्शनसिद्धान्तः ।

यदि च "त्रैहैयमोदनं पचति, अग्निहोत्रं जुहोति"...इत्यादौ विशेषणपदद्वितीयायास्तादात्म्यमर्थस्तदा प्रकृतेपि तथा । यत्र तु स्तोकादेर्व्यापारान्वयो विवक्षितस्तत्र प्रथमैव ।

विशेषणपदस्यानुवादकविभक्त्यन्तत्वं भाट्टैरभ्युपगम्यत इत्याह—**अतएवेत्यादिना** । विशेषणपदोत्तरविभक्त्या विशेष्यपदबोध्यकारकानुवादकत्वादेवेत्यर्थः । **कर्म्मत्वेने**ति । **जुहोती**त्यस्य होमं भावयेदित्यनेन विवरणादाख्यातार्थभावनायां धात्वर्थस्य कर्म्मत्वेनैवान्वयस्तन्मत इति भावः । **नामधेयमि**ति । अग्निहोत्रोद्भिदादिपदानां यागादिनामधेयत्वं जैमिनीये प्रथमाध्याये चतुर्थपादे सिद्धान्तितम् । तेन जुहोत्यर्थे होमेग्निहोत्रपदप्रतिपाद्यनामधेयस्य तादात्म्येनान्वयाद् द्वितीया कर्म्मत्वानुवादिकेत्यर्थः । द्वितीयामात्रस्य नोक्तदिशा कर्म्मत्वानुवादकत्वम्, किन्तु तृतीयादीनामपि यथायथमित्याह—**उद्भिदे**ति । तत्र **यजेत पशुकाम** इत्यस्य यागेन पशुं भावयेदित्यनेन विवरणात्करणत्वेनैव धात्वर्थस्याख्यातार्थेन्वयात्तत्समानाधिकरणोद्भित्पदोत्तरतृतीयायाः करणत्वानुवादकत्वमित्यर्थः ।

विशेषणविभक्तेस्तादात्म्यार्थकत्वमभिप्रेत्याह—**यदि चे**ति । एवं सतिव्यापारस्य फलत्वाभावात्तत्र स्तोकादीनामन्वयस्य विवक्षणे द्वितीयाया अप्रसक्तेः स्तोकः पाक इत्यादिकमपि प्रमाणमुपपन्नमित्याह—**यत्र त्वि**ति ।

---

१ इत्यादौ इति मु० पु० पा० ।

२ नामधेयमुद्भिदादिपदम् इति मु० पु० पा० ।

न चैवमपि स्तोकः पच्यत इति कर्म्मणि लकारो दुरुद्धर इति वाच्यम्, "अस्तीत्युत्पन्नस्यात्मधारणमुच्यते" इति निरुक्तस्मृत्यास्तेरप्यात्मधारणानुकूलव्यापारार्थकतया धात्वर्थधारणफलवत्तया[1] कर्म्मण्यात्मनि लकारेणात्मा भूयत इति सर्वमतेपि प्रयोगापत्तेः।

अथात्मनः कर्म्मत्वेपि धात्वर्थान्तर्गतत्वाद्धातोश्च फलसमानाधिकरणव्यापारवाचित्वादकर्म्मक एवास्तिः, तथा च "लः कर्म्मणि च भावे चाकर्म्मकेभ्यः" इत्यत्राकर्म्मकेभ्यो भावविधिना कर्म्मणि लकारो बाध्यते, सकर्म्मकेभ्य एव कर्म्मणि लविधिराक्षिप्यते।

सकर्म्मकत्वञ्च फलाधिकरणावाचकत्वे सति स्वार्थफलव्यधिकरणव्यापारवाचित्वम्। तेन शब्दोत्पत्त्यनुकूलव्यापारवाचिनः शब्दायतेरर्थे शब्दस्य, स्फिग्भूसंयोगानुकूलव्यापारवाचिन उपविशतेरर्थे

पूर्वोक्तमते कर्म्मलकारापत्तिरूपो दोषस्तथापि नोद्धृत इत्याशङ्कते—**न चेति**। क्रियाविशेषणस्थलातिरिक्तस्थलेपि धात्वर्थान्तर्गताकर्म्मकधातुयोगे तादृशकर्म्मणि लकारप्रसङ्गो दार्शनिकमतेपि समानः, तद्वारणायानुसरणीयेन प्रकारेणैवात्रापि तद्वारणमित्याशयेनाह—**अस्तीत्युत्पन्नस्येति**।

उक्तापत्तिवारणायाशङ्कते—**अथेति**। **धातोश्चेति** चकारो **व्यापारवाचित्वादि**त्यनन्तरं नेयः। **तथा च** अस्-धातोरकर्म्मकत्वे च। **आक्षिप्यत** इति। सकर्म्मकेभ्य इत्यस्य सूत्रेनुपादानेप्यकर्म्मकेभ्यो भावे लकाराणां विधाने परिशेषात्सकर्म्मकेभ्य एव कर्म्मणि लकारो बोध्यत इत्यर्थः।

कर्म्मसंज्ञकपदसाकाङ्क्षत्वमात्रस्य सकर्म्मकत्वेस्-धातोरपि योगे देशकालादीनां कर्म्मसंज्ञायाः "अकर्म्मकधातुभिर्योगे..." इत्यादिवार्त्तिकेन विधानात्तत्साकाङ्क्षतया तस्यापि सकर्म्मकत्वं दुर्वारमित्युक्तापत्तितादवस्थ्यमतः सकर्म्मकत्वं निर्वक्ति—**सकर्म्मकत्वञ्चेति**। **तेन** उक्तलक्षणकरणेन। वक्ष्यमाणधातूनां **न सकर्म्मकत्वप्रसङ्ग** इत्यनेनान्वयः। अत्र विशेषणोपादानप्रयोजनमाह—**शब्दोत्पत्त्येति**। **शब्दस्ये**त्यादिषष्ठ्यन्तानाम**न्तर्भा**वादित्यग्रिमे-

---

१ ०तयात्मनिधात्वर्थधारणफलवत्तया कर्मणि लेका०=मु० पु० पा०।

स्फिग्भुवोः, [1]अधस्संयोगानुकूलव्यापारवाचिनः पततेरर्थेऽधःपदार्थस्य, सर्वावयवाधस्संयोगानुकूलव्यापारवाचिनः शयतेरर्थेऽधस्सर्वाङ्गयोः, उदयगिरिसंयोगानुकूलव्यापारार्थकस्योदयतेरर्थे उदयगिरेः, मिद्धामनसोर्विभागस्य संयोगस्य चानुकूले [2]व्यापारे शक्तस्य जागर्तेर्निद्रातेश्चार्थे मिद्धामनसोः, अवयवानामपचयस्योपचयस्य[3] चानुकूले व्यापारे शक्तस्य क्षीयतेर्वृधेश्चार्थेऽवयवानाम्, प्राणैस्सह शरीरस्य संयोगविशेषं तदत्यन्तध्वंसञ्च प्रत्यनुकूले व्यापारे शक्तस्य जीवतेर्म्रियतेरर्थे

णान्वयः । **अधस्सर्वाङ्गयोरि**ति । तत्र तदुभयस्यैव फलीभूतसंयोगाश्रयतयोभयोपादानम् । **मिद्धामनसो** (रिति) । **मिद्धा** नाडीविशेषः, येन मनस्संयोगे सति निद्रातीति विभागे च जागर्त्तीति प्रयुज्यते । **विभागस्ये**ति । **अनुकूले व्यापारे** इत्यनेनान्वितम् । तेन मिद्धामनोविभागानुकूलव्यापारवाचिनो जागर्तेस्तत्संयोगानुकूलव्यापारवाचिनो निद्रातेश्चेत्यर्थः । एव**मवयवानामपचयस्योपचयस्ये**त्यनयोरप्यनुकूले व्यापारेऽन्वयात्तादृशापचयानुकूलव्यापारवाचिनः क्षीयतेस्तादृशोपचयानुकूलव्यापारवाचिनो वृधेरित्यर्थः । **अपचयः** ह्रासः । **उपचयः** वृद्धिः । एवं **शरीरस्य संयोगविशेषमि**त्यस्यापि प्रत्ययार्थेनान्वितस्यानुकूले व्यापारेऽन्वयात् प्राणप्रतियोगिकशरीरानुयोगिकसंयोगविशेषानुकूलव्यापारे शक्तस्य जीवतेरित्यर्थः । संयोगे विशेषः संयोगत्वावान्तरजातिरेव । वाय्वात्मकप्राणानां सन्ततगमनागमनशीलानाम्मृतशरीरैरपि संयोगसम्भवात्तदानीं जीवतीति व्यवहारविरह एव तत्सत्त्वे मानम् । **तदत्यन्तध्वंसमि**ति । निरुक्तसंयोगात्यन्तध्वंसमित्यर्थः । ध्वंसे आत्यन्तिकत्वं स्वप्रतियोगितावच्छेदकधर्मावच्छिन्नासमानकालीनत्वम् । तदुपादानञ्च श्वासप्रश्वासाभ्यां प्राणानां शरीरसंयोगध्वंसोत्पादयोर्जीवनकालेऽपि सत्त्वात्तदानीं म्रियते मृत इत्यादिव्यवहारवारणायेति

---

१ अधस्संयोगफलकक्रियावाचिनः इति मु० पु० पा० ।

२ व्यापारवाचिनः इति मु० पु० पा० ।

३ ०चयान्वयस्य इति मु० पु० पा० ।

**तेश्चार्थे प्राणशरीरयोरन्तर्भावात्तत्तद्धातूनाम्, भवतेरर्थे व्यापारे तदर्थस्य फलस्यात्मधारणस्य, लज्जतेः स्वगोपनस्य, रमतेस्सुखस्य, सामानाधिकरण्यात्, तेषां गतिनिवृत्तिं प्रवृत्तिमिच्छां ध्वंसं रूपविशेषञ्चाभिदधतां तिष्ठति पतति रोचति नश्यति दीप्यतीनां स्वार्थफलाभावान्न सकर्म्मकत्वप्रसङ्गः।**

**फलत्वञ्च मुख्यधात्वर्थे[1] व्यापारे येन केनापि संसर्गेणान्वित-**

बोध्यं तत्तद्ध्वंसानामात्यन्तिकत्वाभावात्। **अन्तर्भावादि**ति। तथा चोक्तधातूनां फलाधिकरणशब्दादीनामपि वाचकतया न सकर्म्मकत्वप्रसङ्ग इत्यर्थः।

फलव्यापारोभयवाचकत्वं परित्यज्य व्यापारे फलवैयधिकरण्यविशेषणदानस्य कृत्यमाह—**भवतेरर्थ** इति। **सामानाधिकरण्यादि**ति। आत्मधारणस्य तदनुकूलव्यापारस्य चैकत्रैव घटादौ सत्त्वादित्यर्थः। तथा च भूलज्जरमाणामपि फलव्यापारोभयवाचकत्वात्तेषां सकर्म्मकत्ववारणायैव व्यापारे फलवैयधिकरण्यमुपात्तमित्याशयः। फलस्यापि धातुवाच्यत्व एव सकर्म्मकत्वं धातूनामित्याशयेन फले स्वार्थत्वं विशेषितम्। तेनोक्तधातुत्रयस्यापि धात्वन्तरवाच्यफलव्यधिकरणवाचकत्वेपि न सकर्म्मकत्वप्रसक्तितादवस्थ्यम्।

व्यापारमात्रवाचकत्वस्य विशेष्यतया विवक्षणेतिप्रसङ्गमाह—**गतिनिवृत्तिमित्यादि**। एषां क्रमेणा**भिदधता**मित्यनेनान्वितानां **तिष्ठतीत्यादिदीप्यत्यन्ते**ष्वन्वयः। **रूपविशेषमि**ति। स्वाश्रयातिरिक्तालोकनिरपेक्षप्रत्यक्षविषयत्वं रूपे विशेषो बोध्यः। **न सकर्म्मकत्वप्रसङ्ग** इति। तथा चोक्तधातूनां व्यापारमात्रवाचकानां सकर्म्मकत्ववारणमेव फले स्वार्थत्वविशेषणस्य फलमिति भावः।

व्यापारजन्यत्वस्य धात्वर्थान्वितत्वमात्रस्य वा फललक्षणत्वे गतिनिवृत्त्यादीनामपि यत्किञ्चिद्व्यापारजन्यत्वात् करणत्वादिकारकाणामपि धात्वर्थव्यापारान्वयित्वादतिप्रसङ्ग इत्यतः फलत्वं निर्वक्ति—**फलत्वञ्चे**ति। **मुख्यधात्वर्थ** इति। अत्र मुख्यत्वं धातौ तदर्थे च विशेषणत्वेन विवक्षितम्। तेन

---

१ अत्र समस्तपाठो दृश्यते मु० पु०।

**धात्वर्थत्वम्। तेन विषयताविशिष्टे ज्ञाने जानातेः, उद्देश्यताविशिष्टे रागे इच्छतेः, उत्पत्त्यनुकूले यत्ने करोतेः, बाध्यत्वविशिष्टे द्वेषे द्विषेः, लौकिकविषयताविशिष्टेषु प्रत्यक्षघ्राणजरासनचाक्षुषत्वाचश्रावणसाक्षात्कारेषु च साक्षात्करोति जिघ्रति रसयति पश्यति स्पृशति शृणोतीनां विधेयताविशिष्टयोरनुमितितर्कयोरनुमात्यापादंत्योस्सकर्म्मकत्वं निराबाधम्।**

**अतएव सुखत्वमिच्छति, घटत्वं करोति, दुःखत्वं द्वेष्टि, ज्ञानो-**

ण्यन्ताकर्म्मकधात्वर्थव्यापारे मुख्यधात्वर्थस्यानुकूलतया विशेषणत्वेपि तस्य फलत्वविरहः। एवमग्निसंयोगावच्छिन्नव्यापारानुकूलवाचिनां जुहोत्यादीनामर्थे प्रथमव्यापारेनुकूलतयान्वितस्याग्निसंयोगस्यापि न फलत्वम्, येन तत्फलाश्रयीभूताग्निना तेषा सकर्म्मकत्वेग्नि जुहोतीत्यादिप्रयोग आपद्येतेति बोध्यम्। **धात्वर्थत्वमि**ति। एतच्च करणत्वादिकारकाणां फलत्ववारणाय। तेषामपि क्वचिद्धात्वर्थेन्वय इत्यस्य विभक्त्यर्थे वक्ष्यमाणत्वात्। **तेन** निरुक्तस्य फलत्वेन। **सकर्म्मकत्वं निराबाध**मित्यग्रिमेणान्वयः। **रागे** इच्छामात्रे, न तूत्कटत्वविशिष्टे, तत्र अनुत्कटेच्छासत्त्वेपीच्छतीति प्रयोगात्। **यत्ने** प्रवृत्त्यात्मके। **बाध्यत्वं** द्विष्टसाधनत्वम्। **लौकिकविषयताविशिष्टेष्वि**त्यस्य प्रत्यक्षादिषु, **विधेयताविशिष्टत्वस्या**नुमितितर्कयोः प्रत्येकमन्वयात् सप्तम्या वाचकत्वार्थकत्वात् क्रमेण तादृशप्रत्यक्षादिवाचकत्वं साक्षात्करोत्यादीनां बोध्यम्। **निराबाधमि**ति। मुख्यधात्वर्थव्यापारे ज्ञानादौ निरूपकत्वादिनान्वितानां विषयत्वादीनां फलत्वात्तदधिकरणावाचकतद्व्यधिकरणज्ञानादिव्यापारवाचकजानात्यादिधातूनां निरुक्तसकर्म्मकत्वं निष्प्रत्यूहम्। तेषां ज्ञानादिमात्रवाचकत्वे तु तत्त्वं व्याहन्येतैवेति भावः।

**अतएव** इच्छायत्नादिमात्राणामिच्छत्याद्यर्थत्वविरहादुद्देश्यत्वादीनां तदर्थ-

---

१ अत्रापि समस्तपाठः मु॰ मु॰।

२ आपाद्यत्योः इति मु॰ पु॰ पा॰।

पनीतं गगनं साक्षात्करोति, जिघ्रति, रसयति, पश्यति, स्पृशति, शृणोति, वह्नित्वमनुमिमीते, वह्न्यभावत्वमापादयतीति न प्रयोगः। यस्तु सुखवन्तमात्मानमिच्छतीत्यादिकः प्रयोगः, स चरुस्थालीं पचतीति प्रयोगेण तुल्ययोगक्षेमः। कर्म्मलकारोप्येवम्। तेन "दधानो निध्वानमश्रूयत पाञ्चजन्यः" इति माघ उपपद्यते।

तावच्छेदकत्वादेव। **न प्रयोग** इति। सुखत्वे इच्छीयायाः प्रकारतायास्सत्त्वेप्युद्देश्यत्वस्य, घटत्वप्रकारिकाया अपि कृतेस्तन्निष्ठोत्पत्तेरप्रसिद्ध्या तदनुकूलत्वस्याप्रसिद्धेः। दुःखत्वे द्वेषप्रकारतायास्सत्त्वेपि बाध्यत्वस्य, गगने लौकिकसन्निकर्षप्रयोज्यसाक्षात्कारादिविषयतायाः, वह्नित्वे तदभावत्वे चानुमितीयापत्तीयविधेयतयोर्विरहान्नोक्तप्रयोगाणां प्रामाण्यप्रसङ्ग इत्यर्थः।

नन्वेवं सुखवन्तमात्मानमिच्छतीत्यादिविग्रहे सुखीयतीत्यादिकः प्रयोगोनुपपन्नः, आत्मनः सिद्धतया तदुद्देश्यकत्वस्येच्छायामसम्भवादित्यत आह— **यस्तु सुखवन्तमि**ति। **तुल्ययोगक्षेम** इति। यथा चरुस्थाल्या पाककर्म्मत्वस्य विरहेपि [1]"सविशेषणे हि".. इत्यादिन्यायाच्चरुगतकर्म्मत्वमादाय चरुस्थालीं पचतीति प्रयोगः, तथात्मनीच्छोद्देश्यत्वस्य विरहेपि विशेषणीभूतसुखगतं तदादायैवोक्तविग्रह इत्यर्थः। विशेषणगतकर्म्मत्वाभिधानविवक्षया न केवलं द्वितीया, किन्तु कर्म्मलकारोपीत्याह—**कर्म्मणी**ति। **तेन** विशेषणगतकर्म्मत्वाभिधानविवक्षायां कर्म्मणि लकारेण। **माघ उपपद्यत** इति। "प्रवृद्धमन्दाम्बुदधीरनादः कृष्णार्णवाभ्यर्णचरैकहंसः। मन्दानिलापूरकृतं दधानो निध्वानमश्रूयत पाञ्चजन्यः॥" इति तृतीये सर्गे एकविंशतितमे श्लोके पाञ्चजन्यस्य तन्नामकश्रीकृष्णहस्तस्थितशङ्खस्य श्रावणप्रत्यक्षविषयताया असम्भवाच्छ्रुधातोस्तन्निष्ठकर्म्मत्वाभिधायकाख्यातान्तत्वासम्भवेपि तद्विशेषणशब्दविशेषस्वरूपनिध्वानगतकर्म्मत्वमादायाश्रूयतेति कर्म्माख्यातान्तप्रयोग उपपन्न इत्यर्थः।

---

१ इत्यादिकः इति पा० ना० मु० पु०।

२ "सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रातः" इति न्यायादित्यर्थः।

**येन च [1]व्यापारव्यधिकरणफलवता धात्वनभिहितेन कर्म्मणा सकर्म्मको धातुस्तत्रैव कर्म्मणि लकारा विधीयन्ते। अन्यथा प्राण-वियोगफलकव्यापारार्थकस्य हन्तेर्वियोगस्य द्विनिरूप्यत्वेनैकस्मिन्न-धिकरणे धात्वभिहितेप्यधिकरणान्तराकाङ्क्षाया [2]अविच्छेदाच्चैत्रो हन्यत इतिवत् प्राणा हन्यन्त इति प्रयोगः स्यात्।**

**प्रकृते तु [3] भूप्रभृतिर्देशकालभावगन्तव्याध्वभिस्सकर्म्मकोपि फला-**

संयोगविभागादिद्विनिष्ठफलकव्यापारवाचिधातूनां तथाविधसंयोगाश्र-योभयस्यैव कर्म्मत्वात्तत्र किन्निष्ठकर्म्मत्वविवक्षायां कर्म्मणि लकार इति जिज्ञा-सायां **प्राणा हन्यन्ते, आत्मा भूयत** इत्यादिप्रयोगस्य प्रामाण्यवारकं तत्र कर्म्मलकारप्रयोजकमाह—**येन चेत्या**दिना। **अन्यथा** धात्वभिहितकर्म्मनिष्ठ-स्यापि कर्म्मत्वस्य लकारवाच्यत्वे। **प्राणवियोगः** प्राणविभागः। **द्विनिरूप्य-त्वेन** प्रतियोग्यनुयोग्युभयज्ञानाधीनज्ञानविषयत्वेन। **एकस्मिन्नधिकरणे** प्रति-योगिन्यनुयोगिनि वा। **अधिकरणान्तराकाङ्क्षाया** इति। धातुतः प्रति-योगिनो ज्ञानेनुयोग्याकाङ्क्षाया अनुयोगिनो ज्ञाने प्रतियोग्याकाङ्क्षाया इत्यर्थः। **अविच्छेदाद्** अनिवृत्तेः। **इति प्रयोगः स्यादि**ति। प्राणानामपि हन्धात्वर्थ-तावच्छेदकीभूतविभागात्मकफलवत्तया तेषाञ्च धातुनाभिधानेपि तन्निष्ठकर्म्म-त्वाभिधानतात्पर्य्येणोक्तप्रयोगस्य साधुत्वं स्यात्। धात्वनभिहितफलाश्रयगत-कर्म्मत्वस्यैव लकारवाच्यत्वे तु तेषां धातुनाभिहितत्वान्न तद्गतकर्म्मत्वबोध-कत्वमाख्यातस्य, किन्तु तादृशविभागाश्रयचैत्रस्यैव तथात्वेन तद्गतकर्म्मत्वा-भिधायकत्वमेवेति भावः।

प्रकृतमात्मा भूयत इति प्रयोगप्रसङ्गवारणमुक्तदिशैव सम्पन्न-मित्याह—**प्रकृते त्वि**ति। **सकर्म्मकोपि** "अकर्म्मकधातुभिर्योगे"...

१ व्यापारेण फलव्यधिकरणवता इति मु० पु० पा०।
२ विच्छेदात् इति मु० पु० पा०।
३ तु इति पाठो न दृश्यते मु० पु०।

धिकरणेनात्मना न सकर्म्मक इति कथन्तत्र कर्म्मणि लकारः प्रसज्यते, येनात्मा भूयत इति प्रयोगापादनं सम्भवतीति चेत् ? सत्यम्, एवं फलस्य कर्म्मत्वेपि धातुनाभिधानात्तेन कर्म्मणा सकर्म्मकत्वाभावात्तत्र लकारः कथं प्रसज्यते, येन स्तोकः पच्यत इत्यादि प्रसज्येत। द्वितीया तु न तेन कर्म्मणा धातौ सकर्म्मकत्वमपेक्षते। अतएव तारं शब्दायते दीर्घमस्तीत्यादौ द्वितीया धात्वर्थान्तर्भूतकर्म्मणः शब्दात्मादेर्विशेषणे कर्म्मानुवादिका दृश्यते।

सा चेयं द्वितीया विशेष्यनिघ्नप्रातिपदिकसमभिव्याहृता चेन्नियतक्लीबलिङ्गाभिव्यञ्जिका, सामान्ये नपुंसकत्वस्यैव साधुत्वात्। नियतलिङ्गपदसमभिव्याहृता चेल्लिङ्गत्यागानुशासनाभावात्तल्लिङ्गा-

इत्यादिवार्त्तिकविहितकर्म्मसंज्ञकदेशादिवाचकपदसाकाङ्क्षोपि। **न सकर्म्मक** इति। आत्मनो भूधात्वर्थफलाधिकरणत्वेन कर्म्मत्वेपि धात्वभिहितत्वान्न तस्य भूधातोः सकर्म्मकत्वप्रयोजकत्वमित्यर्थः। एवं सति स्तोकः पच्यत इत्यादीनामप्यनयैव दिशा साधुत्ववारणमित्याह—**एवं फलस्ये**ति। **धातुनाभिधानाद्**ति। विक्लित्तेः स्तोकाभिन्नाया धातुवाच्यत्वे स्तोकस्यापि तथात्वम्, येनकेनापि रूपेणैव तथात्वस्योक्तनियमे निवेशादित्याशयः। द्वितीयाया अपि निरुक्तसकर्म्मकधातुयोग एव साधुत्वे स्तोकं पचतीत्यत्र तदनुपपत्तिः स्यादित्यत आह—**द्वितीया त्वि**ति। **अपेक्षत** इति। किन्तु कर्म्मसंज्ञामात्रमपेक्षत इति शेषः। **अतएव** द्वितीयाया निरुक्तधातुयोगस्यानपेक्षणात्कर्म्मसंज्ञामात्रस्यापेक्षणाच्चैवेत्यर्थः। **शब्दात्मादेरि**ति। शब्दस्यात्मनश्च शब्दायत्यस्त्योरर्थे घटकतया तत्र तादात्म्येन विशेषणे तारदीर्घयोरित्यर्थः। **कर्म्मानुवादिके**ति। शब्दात्मादिनिष्ठकर्म्मत्वस्य धातुनैव लाभात्तदनुवादकत्वमेव तारादिपदोत्तरद्वितीयाया इत्यर्थः।

निरुक्तकर्म्मानुवादकद्वितीयाप्रकृतिस्तोकादिपदानां न नियतनपुंसकलिङ्गत्वम्, किन्तु विशेष्यनिघ्नप्रातिपदिकसमभिव्याहृतानामेवेत्याह—**सा चेयमि**ति। धात्वर्थफले तादात्म्येन विशेषणीभूतपदप्रकृतिकेत्यर्थः। **विशेष्यनिघ्न-**

भिव्यञ्जिकैव । अतएवादिं पचति, प्रतिहेतुं पचतीत्यादयः प्रयोगाः, आद्यभिन्नां द्रुतिहेतुभिन्नां विक्लित्तिं बोधयन्तो दृश्यन्त इति क्रियान्वयिफलविशेषाणां कर्म्मानुवादिका विक्लित्तिव्यापारयोस्संसर्गीभूतस्य कर्म्मत्वस्य प्रापिका वा द्वितीयेति शाब्दिकाः प्राहुः ।

तच्चिन्त्यम्, विशेषणसुपां विशेष्यान्वयाकाङ्क्षाव्यञ्जकत्वेन "विशेषणं विशेष्येण बहुलम्" इति सविभक्तिकस्य विशेषणस्य

मनियनलिङ्गं स्तोकादिपदम् । तथा च स्तोकशोभनादिपदानां विशेष्यनिघ्नतया तत्र सामान्ये नपुंसकत्वस्य पूर्वनिरुक्तदिशा पुंस्त्वस्त्रीत्वयोरभावे प्राप्ततया तदुत्तरं द्वितीयैव क्लीबलिङ्गाभिव्यञ्जिका । तत्त्वञ्च तस्याः स्तोकं पचतीत्यादौ विशेष्यवाचकस्य प्रातिपदिकस्याभावेनानयगत्यैवोपेयते । स्तोकमित्यत्र स्तोकपदस्य पुंस्त्वेपि साधुत्वेपि मृदु पचतीत्यत्र क्लीबलिङ्गाभिव्यञ्जनस्यावश्यकत्वादिति भावः । **अतएव** नियतलिङ्गपदोत्तरद्वितीयायाः स्वप्रकृतिगततत्तल्लिङ्गाभिव्यञ्जकत्वादेव । **आदिं पचती**ति । आदिहेतुशब्दयोर्नियतपुँल्लिङ्गतया तदुत्तरद्वितीया पुँल्लिङ्गाभिव्यञ्जिकैव, न क्लीबलिङ्गाभिव्यञ्जिकेत्यतस्तत्पदोत्तराम्प्रत्ययस्य न लुगित्याशयः । उक्तमतमुपसंहरति—**क्रियान्वयी**ति । **फलविशेषाणां** विक्लित्त्यादीनाम् । **कर्म्मत्वस्ये**ति । अनुकूलत्वस्वरूपस्येत्यर्थः । **प्रापिका वे**ति । विक्लित्तिव्यापारयोरुभयोः पृथग् धात्वर्थत्वे तयोः संसर्गस्यान्यलभ्यत्वविरहेण द्वितीयैव तल्लाभप्रयोजिकेत्यर्थः ।

मतमेतन्निरस्यति—**तच्चिन्त्यमि**ति । चिन्तावीजमाह—**विशेषणसुपामि**ति । त्रैहेयादिपदोत्तरामादिविभक्तिसजातीयविभक्तिप्रकृतित्वेन विशेषणवाचकपदनिष्ठेन व्यञ्जनीया या तयोरभेदान्वयबोधोपयिकाङ्क्षा, तद्व्यञ्जकत्वेन त्रैहेयादिपदोत्तरविभक्तेः साधुत्वादित्यर्थः । तत्र विशेषणपदस्य निर्विभक्तिकत्वे तयोः कर्म्मधारयोप्यनुपपन्नः स्यादिति तदुपपादकत्वं तत्प्रयोजनमित्याह—**विशेषण**मिति । **बहुलमि**त्यनन्तरं **कर्म्मधारयानुशासनसिद्धत्वेने**ति संयोज्य

१ विशेषणानाम् इति मु० पु० पा० ।

केति न स्तोकः पच्यत इति कर्म्मणि लकारः । अनुशासनश्च

"उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोन्यत्रापि दृश्यते ॥"

इति । उभयतो ग्रामं सर्वतो ग्रामं धिक् पिशुनं [1]मेघानुपर्य्युपरि पयोधरानधोधः गगनमध्यधीत्यादावन्यत्रापि क्वचिद् द्वितीया स्यादित्यर्थकं फले व्यापारे वा[2] तादात्म्येनान्वितस्य[3] प्रातिपदिकस्य द्वितीयां विधत्ते, न तु व्यापारविशेषणस्य प्रथमान्तत्वं युक्तम्, फलहेतुः पचति चैत्र इत्यादिप्रयोगापत्तेरिति वस्तुगतिः । २९ ।

तस्मात्—

**प्रायेण क्लीबलिङ्गं यद्धात्वर्थस्य विशेषणम् ।**
**अनुशासनिकी तत्र द्वितीयान्यत्र दर्शनात् ॥२९॥**

पेक्षितत्वादित्याशयः । **अनुशासनश्चे**ति । अस्य **द्वितीया (स्यादित्य)र्थक**मित्यनेनान्वितस्य **द्वितीयां विधत्त** इत्यग्रिमेणान्वयः । **ततोन्यत्रापि दृश्यत** इत्यनेन सर्वत्र न द्वितीया, किन्तु यत्र प्रामाणिकत्वं तस्या दृश्यते तत्रैवेत्यस्य बोधनमित्याह—**फले व्यापारे वे**ति । **व्यापारे वे**त्यनेन स्तोकः पाक इत्यत्र प्रथमाया असाधुत्वमित्याह— **न त्वि**ति । व्यापारे तादात्म्येन विशेषणस्य द्वितीयान्तपदबोध्यत्वेतिप्रसङ्गमाह—**फलहेतुरि**ति । एतेनान्यत्रापि स्तोकः पाकः स्तोकं पाक इत्युभयस्य साधुत्वं यदुक्तं तन्निराकृतं वेदितव्यम् । **तस्मादि**त्यादिग्रन्थेनोक्तमर्थमुपसंहरति कारिकया—**तस्मादि**ति । आदिं पचति द्रुतिहेतुं पचतीत्यादौ पुँल्लिङ्गदर्शनात् **प्रायेणे**त्युक्तम् ।२९।

---

१ उपर्य्युपरि पयोधरानधोधोगगनं मेघा इति उभयादावन्यत्रापि इति मु० पु० पा० ।
२ धात्वर्थे इत्यधिकः पा० मु० पु० ।
३ तादात्म्येनान्वितार्थकस्य इति मु० पु० पा० ।

एवं विभक्त्या सह प्रातिपदिकस्य सामानाधिकरण्यम्। द्रोणो व्रीहिः, एकं ब्रह्म, द्वे चक्षुषी, त्रयोऽग्नय इत्यादौ प्रादेशः कुशः, अरत्निः कुण्डमित्यादौ च गुरुत्वत्वेन सङ्ख्यात्वेन परिमाणत्वेन चावच्छिन्नमभिदधत्याः प्रथमाया अर्थे द्रोणादेर्गुणविशेषमभिदधतोऽर्थस्तादात्म्येनान्वेति।

प्रथमार्थस्तु सौत्रपरिमाणपदस्य तन्त्रेण गुरुत्वस्याप्युपस्थापकत्वाद् गुरुत्वादिर्भेदेन व्रीह्यादौ; न हि द्रोणादेरर्थस्तथान्वेतुमर्हति, [1]प्रातिपदिकार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात्।

क्रमप्राप्तं विभक्त्या सह प्रातिपदिकस्य सामानाधिकरण्यं शाब्दिकमतसिद्धमुदाहरति—**एवं विभक्त्ये**त्यादिना। **द्रोणो व्रीहि**रिति। अत्र **गुरुत्वत्वेने**त्यस्य, **एकं ब्रह्मे**तित्रये **सङ्ख्यात्वेने**त्यस्य, **प्रादेशः कुश** इति द्वये **परिमाणत्वेने**त्यस्य, **अवच्छिन्नमि**त्यग्रिमेणान्वितस्या**र्थमभिदधत्याः प्रथमाया** इत्यनेनान्वयो बोध्यः। एकं ब्रह्म इत्यत्रैकपदं द्वे इत्यादौ द्वित्रिपदे सङ्ख्यार्थके, इति तदर्थैकत्वादीनां प्रथमार्थसङ्ख्यात्वावच्छिन्ने तादात्म्येनान्वयात् प्रथमया सहैकादिनाम्नां सामानाधिकरण्यमित्यर्थः। **गुणविशेषमि**ति। "चतुराढको भवेद् द्रोणः" इत्यनुशासनसिद्धं गुरुत्वविशेषमित्यर्थः।

**प्रथमार्थ**स्त्विति। **गुरुत्वादि**रित्यनेनान्वितम्। ननु प्रथमाविधायके "प्रातिपदिकार्थ..."इत्यादिसूत्रे गुरुत्वबोधकपदानुपादानाद् गुरुत्वं कथं प्रथमार्थ इत्यत आह— **सौत्रपरिमाणपदस्ये**ति। **तन्त्रेण** आवृत्त्या गुरुत्वस्याप्युपस्थापकत्वादिति। आवृत्तावेकं परिमाणपदं परिमाणत्वजात्यवच्छिन्नपरमन्यच्च गुरुत्वत्वावच्छिन्नपरमिति गुरुत्वस्यापि सूत्रस्थपरिमाणपदेनैव प्रथमार्थत्वलाभ इत्याशयः। **गुरुत्वादिरि**ति। आदिना सङ्ख्यापरिमाणयोरुपग्रहः। **भेदेन** तादात्म्यातिरिक्तेन समवायादिनेत्यर्थः। **व्रीह्यादौ** व्रीहिचक्षुरादौ। ननु गुरुत्वादिविशेषाणां तत्सामान्ये तादात्म्येनान्वयो निष्फलो विभक्तेः साधुत्वमात्रार्थकत्वमुपगम्य प्रकृत्यर्थस्य समवायेनैव व्रीह्यादावन्वयो युक्त इत्यत आह— **न ही**ति। **तथा** भेदेन समवायादिना। अत्र बीजम**व्युत्पन्नत्वा**दित्यन्तम्।

---

१ प्रातिपदिकयोः इति मु० पु० पा०।

एवमाख्यातेन कर्त्तृकर्म्माभिधायिना प्रथमान्तचैत्रौदनादेः सामानाधिकरण्यम् । अतएव "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" इति सौत्रो व्यवहार इति शाब्दिकाः । तदुभयमपि चिन्त्यम् ।

एवं स्वरूपार्थकस्य तलः कनश्च तद्धितस्यार्थे देवस्य यावस्य चान्वयाद्देवता यावक इत्यादौ तद्धितेनापि प्रातिपदिकस्य सामानाधिकरण्यम् । स्वरूपत्वन्नाम गगनाभावादिरेवाखण्डो धर्म्म एतादृशानां

तिङा सह नाम्नः सामानाधिकरण्यमुदाहरति—**एवमाख्यातेने**ति । **सामानाधिकरण्यमि**ति । शाब्दिकमते कर्त्तृकर्म्मणोरेवाख्यातार्थकतया तादात्म्येन तयोश्चैत्राद्यन्वितत्वादिति भावः । **अतएव** कर्त्तृकर्म्मवाचकाख्यातेन प्रातिपदिकस्य सामानाधिकरण्यादेव । **सौत्रो व्यवहार** इति । तत्र **समानाधिकरण** इत्यस्य तिङ्समानाधिकरण इत्यर्थकत्वादिति भावः । व्यवहारे सौत्रत्वं प्रामाणिकत्वज्ञापनायोक्तम् । **तदुभयमपी**ति सुपा तिङा च प्रातिपदिकस्य सामानाधिकरण्यमित्यर्थः । **चिन्त्यमि**ति । चिन्ताबीजं स्वयमेवाग्रे दर्शयिष्यति ।

तद्धितेन सह प्रातिपदिकस्य सामानाधिकरण्यमुदाहरति—**एवं स्वरूपार्थकस्ये**ति । प्रकृत्यर्थमात्रे विहितस्य स्वरूपत्वावच्छिन्नार्थकत्वादित्याशयः । **तलः कनश्चे**ति । "देवात्त्वतलौ..." इत्यादिना विहितस्येत्यादिः । **सामानाधिकरण्यमि**ति । प्रकृत्यर्थदेवादेस्तादात्म्येन तद्धितार्थे स्वरूपत्वावच्छिन्नेऽन्वितत्वादितिभावः । स्वरूपस्य "स्वं रूपं शब्दस्य" इत्यत्रेव स्ववृत्त्यानुपूर्वीमत्त्वविशिष्टरूपत्वे देवतादिपदादभिमतस्य त्रिदशादिबोधस्यानुपपत्तिरित्यतस्तलादिप्रत्ययप्रवृत्तिनिमित्तं स्वरूपत्वन्निर्वक्ति—**स्वरूपत्वन्नामे**ति । **गगनाभावादिरेवे**ति । प्रकृत्यर्थस्य देवादेस्तत्र तादात्म्येनान्वयादेव गगनाभावादीनां केवलान्वयित्वेप्यतिप्रसङ्गादीनामभावादित्याशयः । अव्यावर्त्तकगगनाभावादिस्वरूपस्य तस्य तलादिप्रत्ययप्रवृत्तिनिमित्तत्वं तेषां प्रत्ययत्वान्यथानुपपत्त्यैवोपेयत

प्रत्ययानां प्रवृत्तिनिमित्तम्, न पुनरनर्थक एव तलादिः, आगमव्यावृत्तस्य प्रत्ययत्वस्य सार्थकत्वघटितत्वादिति वदन्ति ।

अन्ये तु प्रातिपदिकयोरव्यवधानमेव सामानाधिकरण्ये तन्त्रम्, यथा नीलोत्पलद्विगार्ग्यादौ । विभक्तयव्यवहितयोस्तु[1] प्रातिपदिकयोर्विभक्त्यर्थद्वारक एवान्वयः । नीलो घट इत्यादौ नीलपदसमभिव्याहृतविभक्तेरर्थे घटान्वयिन्यभेदे नीलादेरन्वयः ।

[2]न चाभेदे विभक्तेरनुशासनदौर्लभ्यं शङ्क्यम्, "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इति सूत्रस्य प्रथमायां कण्ठतो

इत्याह—**न पुनरनर्थक** इति । **आगमव्यावृत्तस्ये**ति । नुडाद्यागमावृत्तेरित्यर्थः । **सार्थकत्वघटितत्वादि**ति । तच्च पूर्वमेव निरुक्तमस्माभिः । तथा च प्रत्ययलक्षणे सार्थकत्वानुपादाने नुडाद्यागमानामपि प्रत्ययत्वप्रसङ्गः स्यादिति तत्र तस्यावश्यकत्वे तलादीनां निरर्थकत्वे प्रत्ययत्वव्याघातापत्तिरेवेति स्वरूपत्वावच्छिन्ने तेषां शक्तिरावश्यकीति भावः ।

**किं वा नाम्नैव केवलमि**त्यनेन सूचितं विशेषणविभक्तीनामभेदार्थकतया तद्द्वारैव नीलादिपदार्थानां घटादावन्वय इति प्रकारतावादिमतं दर्शयति—**अन्ये त्वि**त्यादिना । **अव्यवधानमेवे**त्येवकारेण समानविभक्तिकत्वादीनां सामानाधिकरण्यप्रयोजकत्वव्युदासः । **विभक्त्यर्थद्वारक एवे**त्येवकारेण नीलादिपदार्थानां तादात्म्यसंसर्गेण घटादावन्वयो व्यवच्छिन्नः । **घटान्वयिनी**ति । स्वरूपेण घटान्वयिनीत्यर्थः । **नीलादेरन्वय** आधेयतयेत्यादिः ।

ननु विभक्तीनामनुशासनसिद्धस्यैवार्थस्य वाचकत्वादभेदस्य तदर्थत्वेऽनुशासनाभावात् कथं विशेषणविभक्त्यर्थत्वमित्याशङ्कते—**न चाभेद** इति । शङ्कान्निरस्यति—**प्रातिपदिके**ति । **कण्ठत** इति । प्रातिपदिकार्थे प्रथमेत्यस्य तद्वाक्यार्थत्वेऽभेदस्य तत्त्वमनुपदवक्ष्यमाणरीत्या निराबाधमित्युक्तसूत्रस्य

---

१ विभक्तयाव्यव०—मु० पु० पा० ।

२ न चाभेदार्थे इति मु० पु० पा० ।

**विभक्त्यन्तरे मात्रग्रहणसामर्थ्यात् प्रातिपदिकार्थवाचकत्वव्यवस्थापकत्वात्।**

**प्रातिपदिकार्थश्च येन रूपेण प्रातिपदिकान्नोपस्थितस्तद्रूपावच्छिन्नमेव विभक्तिर्बोधयति[1], अन्यथैकधर्म्मावच्छिन्नयोरन्वये निराकाङ्क्षत्वप्रसङ्गात्।**

**तच्च रूपं स्वरूपभेदाभावत्वम्। प्रातिपदिकार्थव्यक्तिस्वरूपभेदो हि**

साक्षादेवाभेदस्य प्रथमावाच्यत्वज्ञापकत्वमित्याशयः। **विभक्त्यन्तरे** द्वितीयादौ। **मात्रग्रहणसामर्थ्यादि**ति। उक्तसूत्रे मात्रग्रहणेन प्रातिपदिकार्थबोधकत्वे सति प्रातिपदिकार्थेतराबोधकत्वं प्रथमायां लभ्यते। तत्र विशेषणस्य प्रातिपदिकार्थ इत्येतावतापि लाभाद्विशेष्यज्ञापकमात्रपदस्य प्रातिपदिकार्थबोधकत्वस्य द्वितीयादिव्यावृत्तत्वे विशेष्यस्य निष्प्रयोजनकत्वेन तदलाभेपि क्षत्यभावाद्वैयर्थ्यमेवेति व्यर्थं सन्मात्रपदं द्वितीयादीनामपि प्रातिपदिकार्थबोधकत्वं ज्ञापयति। तथा च प्रातिपदिकार्थेतरकर्म्मत्वकरणत्वादिबोधकाना तेषां व्यावर्त्तनायैवोक्तार्थकमात्रपदसार्थक्यमिति रीत्या द्वितीयादीनामभेदवाचकत्वमनुशासनसिद्धमेवेत्याशयः।

ननु तथापि प्रातिपदिकार्थान्नीलादितोभेदस्य भिन्नतया प्रातिपदिकार्थवाचकविभक्तीनां कथमभेदार्थकत्वमित्यत आह—**प्रातिपदिकार्थश्चे**ति। **अन्यथा** प्रातिपदिकजन्योपस्थितिप्रकारीभूतनीलत्वादीना प्रथमादिजन्योपस्थितिप्रकारत्वे। **निराकाङ्क्षत्वप्रसङ्गादि**ति। घटो घट इत्यादाविवेत्याशयः।

**तच्च रूपमि**ति। नीलादिपदजन्योपस्थितीयप्रकारत्वाभाववत्प्रथमादिवाच्यतावच्छेदकं रूपमित्यर्थः। स्वरूपभेदात्मकप्रतियोग्यज्ञाने तदभावज्ञानस्यासम्भवात्तद्भेदस्वरूपं दर्शयति—**प्रातिपदिकार्थव्यक्ती**ति। स्वरूपे प्रातिपदिकार्थातिरिक्तत्वभ्रमनिराकरणाय **व्यक्ती**त्युक्तम्। व्यक्तिनिष्ठाया भेदीयप्रतियोगितायाः सावच्छिन्नत्वेवच्छेदकधर्म्माज्ञाने शाब्दबोधानुपपत्तिरत आह—

---

१ बोधयेत् इति मु० पु० पा०।

**निरवच्छिन्नतत्तद्व्यक्तिवृत्तिप्रतियोगिताकः तदभावश्च प्रतियोगिस्वरूप**

**निरवच्छिन्ने**ति । प्रतियोगिताविशेषणमेतत् । अभावीयप्रतियोगिताया निरवच्छिन्नत्वस्यादृष्टचरत्वेप्यत्र तद्व्यक्तिभेदीयप्रतियोगितायाः प्रतियोगि-विशेषणीभूतेन तद्व्यक्तित्वेनैवावच्छेदो वक्तव्यः, तद्व्यक्तित्वन्तु तादात्म्येन तद्व्यक्तिस्वरूपमेवान्यस्य दुर्वचत्वादिति प्रतियोगिज्ञानातिरिक्तमवच्छेदकज्ञानं तत्र नावश्यकम् । प्रतियोगिज्ञानस्यैवावच्छेदकज्ञानस्वरूपत्वादित्येतत्सूचनायैव तस्या निरवच्छिन्नत्वमुक्तमिति बोध्यम् । तद्व्यक्तित्वस्यातिरिक्तत्वे प्रतियोगिताया निरवच्छिन्नत्वस्यादृष्टचरत्वमेव **भवतु वे**त्यग्रिमकल्पानुसरणे बीजमित्यपि वदन्ति । **तदभावः** स्वरूपभेदाभावः । **प्रतियोगिस्वरूप एवे**ति । तद्व्यक्तिस्वरूप एवेत्यर्थः । प्रतियोगिविशेषणतद्व्यक्तित्वस्वरूपत्वे तद्ज्ञानेन्वयबोधानुपपत्तेरिति भावः । [1]नन्वन्यत्र घटभेदाभावादीनां घटत्वादि-रूपप्रतियोगिविशेषणधर्म्मस्वरूपत्वमेव सिद्धान्तिम्, भेदस्य स्वप्रतियोगिता-वच्छेदकतापर्य्याप्त्यधिकरणधर्म्मेणैव विरोधात् तद्वत्तानिश्चये यदभाववत्ता न प्रतीयते यदभावाभाववत्ता च प्रतीयते तस्यैव तदभावाभावस्वरूपत्वमिति

---

१ ननु लाघवादभावाभावः प्रतियोग्येव । एवञ्चान्योन्याभावाभावोपि प्रतियोगिस्वरूपः । न च घटान्योन्याभावाभावस्य घटस्वरूपत्वे घटे घटान्योन्याभावो नास्तीति प्रतीतिर्न स्यात्ता-दात्म्यसम्बन्धस्य वृत्त्यनियामकत्वात्, तस्य वृत्तिनियामकत्वे घटो घटवानित्यपि प्रतीतिः स्यादिति वाच्यम्, घटे घटान्योन्याभावो नास्तीति प्रतीतिबलात्तादात्म्यसम्बन्धस्य घटान्योन्या-भावात्यन्ताभावत्वावच्छिन्नवृत्तितानियामकत्वम् । न तु घटत्वावच्छिन्नवृत्तिनियामकत्वं घटो घटवानिति प्रतीतेरसत्त्वादिति चेन्न, तादात्म्यसम्बन्धस्यान्योन्याभावाभावत्वावच्छिन्न-घटनिष्ठघटवृत्तित्वनियामकत्वे तादृशवृत्तितामादायैव तादात्म्यसम्बन्धेन घटो घटवृत्तिरिति प्रतीतेः प्रमात्वापत्तेर्दुर्वारत्वात्, अनन्तप्रतियोगिरूपत्वकल्पनामपेक्ष्य भेदाभावस्य प्रतियोगितावच्छेदकरूपत्वे लाघवाच्चेति । न चैव यत्र प्रतियोगिनो नानात्वं प्रतियोगिता-वच्छेदकश्चैकस्तत्रात्यन्ताभावाभावोपि प्रतियोगितावच्छेदकस्वरूप एवास्तु लाघवात्, स्वाश्रयवत्त्वरूपपरम्परासम्बन्धेन तस्य प्रतियोगितावच्छेदकसमनियतत्वाच्चेति वाच्यम्, तथा सति घटशून्यदेशे घटात्यन्ताभावात्यन्ताभावो नास्तीति प्रतीत्यनुपपत्तेः, तादृशा-भावस्य स्वाश्रयवत्त्वरूपपरम्परासम्बन्धेन घटत्वाभावरूपतयाप्रसिद्धत्वात्तादात्म्यातिरिक्त-वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वादिति ध्येयम् ।

एव । तत्रैवान्योन्याभावस्याभावः प्रतियोगिविशेषणधर्म्मस्वरूपो यत्र प्रतियोग्यननुगतोनुगतश्च प्रतियोगितावच्छेदको धर्म्म इति निपुणतरमुपपादिदं बौद्धाधिकारविवरणे । वक्ष्यते चोपरिष्टात् ।

घटाभावे घटाभाववत् स्वरूपे स्वरूपभेदाभावस्याप्याधाराधेय-

नियमाद् घटत्ववत्तानिश्चये घटभेदवत्ताया अप्रतीतेर्घटभेदाभाववत्तायाश्च प्रतीतेः । घटवत्तानिश्चयेपि घटभेदवत्तायाः प्रतीतेः प्रतियोगिनो घटस्य स्वभेदाभावस्वरूपत्वासम्भवादित्यत्र कथं तद्व्यक्तिस्वरूपभेदाभावस्य तद्व्यक्तिस्वरूपत्वमित्यत आह—**तत्रैवेति** । तथा च घटानामननुगमाद् घटत्वस्य चानुगमात्तत्र घटत्वस्यैव घटभेदाभावत्वम्, न तु घटस्य । अत्र च तद्व्यक्तेरेकतयानुगमात्तस्यैव स्वभेदाभावत्वम्, न तु तद्विशेषणीभूततद्व्यक्तित्वस्येति भावः । **निपुणतरमिति** । प्रतियोगिविशेषणीभूतघटत्वादीनामपि घटभेदविरोधित्वं न सम्बन्धसामान्येन, कालिकादिना घटत्वादिमत्यपि स्वरूपेण घटभेदस्य सत्त्वात्, किन्तु येन सम्बन्धेन तस्य भेदप्रतियोगितावच्छेदकत्वं तेनैव । तथा च घटस्यापि स्वभेदप्रतियोगितावच्छेदकीभूततादात्म्यसम्बन्धेन स्वभेदेन समं विरोधो निराबाध एवेति यद्वत्तानिश्चय इत्यादिनियमो न प्रतियोगिविशेषणधर्म्मस्य भेदाभावत्वप्रयोजकः, किन्तु प्रतियोगिनामननुगम एवेति प्रकृते तस्याभावान्न प्रतियोगिविशेषणधर्म्मस्य भेदाभावत्वम्, किन्तु प्रतियोगिन एवेत्यादिकमुपपादितमित्यर्थः ।

ननु तथापि स्वरूपभेदाभावस्य स्वरूपात्मकत्वे स्वरूपे स्वरूपभेदो नास्तीति प्रतीतेरनुपपत्तिः, घटे घट इति प्रतीतिप्रसङ्गवारणायाभेदे आधाराधेयभावस्यानुपगमादित्यत आह—**घटाभाव** इति । तथा च घटाभावस्यैकत्वेपि घटाभावे घटाभाव इति प्रतीतेः प्रमात्वं सर्वसिद्धमिति सर्वत्राधाराधेयभावनियामकत्वमाधाराधेययोर्भेदस्य न सम्भवति, किन्त्वभावत्वातिरिक्तस्य यत्राधारताया

१ अपि पदं ना० मु० पु० ।

**भावस्याभ्युपगमेप्यात्माश्रयो यथा न दोषस्तथा तत्रैवानुसन्धेयम् । अन्यथा प्रतियोगितावच्छेदकस्वरूपेन्योन्याभावस्याभावेन्योन्याभावभेदोधिकरणस्वरूपः कथमाधाराधेयभावेन वर्त्तेत; अन्योन्याभावस्याभावेन्योन्याभावान्योन्याभावस्याधिकरणभेदाभ्युपगमेनवस्था**

आधेयताया वावच्छेदकत्वं तत्रैवेति प्रकृते स्वरूपभेदाभावत्वस्याधारतावच्छेदकतया तस्य नोक्तनियमाक्रान्तत्वमिति भावः । **यथा न दोष** इति । तत्रैवात्माश्रयो दोषो यत्र स्वज्ञाने स्वसमानविषयकज्ञानस्यापेक्षणीयत्वम्, यत्र तु स्वविषयकज्ञानस्य भिन्नविषयकज्ञानापेक्षा, तत्र तस्य न दोषत्वम्, एकेन रूपेण ज्ञातस्यापि तदन्येन रूपेण ज्ञाने बाधकाभावादिति स्वरूपत्वस्वरूपभेदाभावत्वयोर्भिन्नरूपयोरेकधर्म्मिनिष्ठाधारत्वाधेयत्वयोरवच्छेदकत्वेपि नोक्तदोष इत्याशयः । **अन्यथा** अवच्छेदकधर्म्मभेदे आधाराधेयभावानभ्युपगमे । **अधिकरणस्वरूप** इति । अभावाधिकरणकाभावप्रतियोगिकस्याभावस्याधिकरणस्वरूपत्वादित्यादिः । **कथं वर्त्तेते**ति । तत्रावच्छेदकयोरन्योन्याभावाभावत्वभेदभेदत्वयोर्भेदेपि धर्म्मिण एकत्वादित्याशयः । ननु तस्यातिरिक्तत्वमेव, नाधिकरणस्वरूपत्वमिति नानुपपत्तिरत आह—**अन्योन्याभावस्याभाव** इति । **अनवस्थाप्रसङ्गादि**ति ।

---

१ अपिपद ना० मु० पु० ।

२ आत्माश्रयः (पञ्चविधतर्कविशेषः) स्वस्य स्वापेक्षापादकः प्रसङ्गः स्वस्य स्वापेक्षितत्वेनिष्टप्रसङ्गरूपो वा दोषः । स चोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा । क्रमेण यथा— यद्ययं घट एतद्घटजन्यः स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्त्ती न स्यात् । यद्यय घट एतद्घटवृत्तिः स्यादेतद्घटव्याप्यो न स्यात् । यद्यय घट एतद्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात्, एतद्घटभिन्नः स्यादिति वा । एवं प्रकृतेप्यापाद्यम् ।

३ वर्तेते–मु० पु० पा० । ४ अन्योन्याभावस्याभावभेदेधिकरणभेदाभ्युपगमे–मु०पु०पा० ।

५ अनवस्था (तर्कभेदः) क्लृप्तवस्तुसजातीयवस्तुपरम्पराकल्पनस्य विरामाभावः, अव्यवस्थितपरम्परोपाधीनोनिष्टप्रसङ्गो वा । क्रमेण यथा—जातौ जात्यन्तर तत्रापि जात्यन्तरमित्येव तत्र तत्र जात्यन्तरस्वीकारेनवस्था, यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्य न स्यादिति । तर्के आपाद्यव्यतिरेकनिश्चयः आपाद्यापादकयोर्व्याप्तिनिश्चयश्च कारण भवति । अनिष्टञ्च प्रामाणिकपरित्यागः इतरपरिग्रहश्चेति द्विविधो भवति । आपाद्याभावेन आपादकाभावसिद्धिश्च फल भवति ।

६ इदमत्राकूतम् । अभावात्यन्ताभावो नाधिकरणस्वरूपः, अनवस्थाविरहात् ।

प्रसङ्गात् ।

**ननु तथापि विशेषणविभक्तेर्भेदत्वावच्छिन्नप्रतियोगिताकाभाववत्वं भेदप्रतियोगिताकाभाववत्वं नीलभेदत्वावच्छिन्नप्रतियोगिताकाभाववत्वं वा शक्यतावच्छेदकम् । आद्येऽप्रसिद्धिः । द्वितीये पीतेपि[1] नीलो घट इति**

द्वितीयभेदस्याधिकरणात्मकत्वे तृतीयादिभेदानामपि भिन्नतयानवस्था बोध्या ।

अथ वक्ष्यमाणदूषणैर्भेदाभाववत्वादीनां विशेषणविभक्तिशक्यतावच्छेदकत्वासम्भवाच्छक्यतावच्छेदकविरहे शक्तेरसम्भव इत्याशयेन शङ्कते—**नन्वि**त्यादिना । **तथापि** प्रतियोगिनोन्योन्याभावाभावत्वोपगमेपि । **विशेषणविभक्तेरि**ति । **शक्यतावच्छेदकमि**त्यनेनान्वितम् । **भेदत्वावच्छिन्नेति** । [2]भेदत्वमात्रावच्छिन्नेत्यर्थस्तेन नाप्रसिद्धेरसम्भवः । तथा च विशेषणविभक्तिनिरूपितशक्यतावच्छेदकता स्वाश्रयानुयोगितानिरूपितप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्व - संसर्गेण भेदत्वगतैकत्वे वर्त्तते स्वरूपसम्बन्धेन भेदप्रतियोगिताकाभावत्वे वेत्याद्याकारिका विप्रतिपत्तिर्बोध्या । तेन प्रथमविशेष्यतावच्छेदकस्याप्रसिद्धावपि नासङ्गतिः । **अप्रसिद्धिरि**ति । भेदत्वावच्छिन्नाधिकरणतायाः केवलान्वयितया तदभावस्य कुत्रापि सत्त्वासम्भवात् । **पीतेपि सत्त्वादि**ति । तदभावविरोधिन्यास्तादृशोभयत्वावच्छिन्नाधिकरणतायाः कुत्राप्यसत्त्वेन स्वविरोध्यभावे

---

तथाहि—समानाधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण योभावः स प्रथमाभावप्रतियोग्यात्मा, तदभावश्च प्रथमाभावः, व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेणाभावोसिद्ध एव, व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकः सर्वोप्यभावो गगनाभाव एव, नित्याभावस्य कालिकेन सर्वोभावः कालिकेन घटत्वाभाव एव, स्वरूपेण तदभावश्च प्रतियोगिरूपः, एव विशेषरूपेण संसर्गता च न स्वीक्रियत इति अभावभेद एवाधिकरणात्मेत्यभिमतो ग्रन्थकर्त्तुः ।

१ पीते... मु० पु० पा० ।

२ भेदत्वेतरधर्म्मानवच्छिन्नभेदत्वावच्छिन्नप्रतियोगिताकाभाव इति यावत् । तेन भेदत्वावच्छिन्नप्रतियोगिताकस्य भेदघटोभयाद्यभावस्य प्रसिद्धत्वेपि नासङ्गतिः ।

प्रयोगप्रसङ्गः, नीलभेदगगनोभयाभावादेः पीतेपि सत्त्वात्। तृतीये शक्त्यानन्त्यम्, नीलपटव्यक्तितात्पर्य्येण नीलो घट इति वाक्यस्य प्रामाण्यप्रसङ्गश्चेति चेत्;

न, भेदेत्यन्ताभावे च [1]विशेषणविभक्तेः पृथक्शक्तिस्वीकारात्। नीलो घट इत्यत्र नीलत्वोपलक्षिता नीलव्यक्तिर्भेदे; भेदस्तु तत्तद्व्यक्ति-

स्वस्य वृत्तेरौचित्यावर्जितत्वादिति भावः। **तृतीये** नीलभेदाभावत्वस्य वाच्यतावच्छेदकत्वे। **शक्त्यानन्त्यमि**ति। अवच्छेदकभेदस्यैव शक्तिभेदप्रयोजकत्वेन नीलो घट इत्यत्र नीलभेदाभावत्वस्य, पीतो घट इत्यादौ पीतादिभेदाभावत्वस्यावच्छेदकत्वस्य वाच्यतया शक्तेरननुगम इत्यर्थः। सर्वनामन्यायेन[2] शक्तेरनुगमे दोषान्तरमाह—**नीलपटव्यक्ती**ति। **प्रामाण्यप्रसङ्ग** इति। तत्रापि नीलभेदाभावस्यैव विशेषणविभक्त्यर्थत्वस्य वाच्यतया नीलत्वस्वरूपस्य तस्य नीलघटेपि सत्त्वादित्याशयः[3]। नीलभेदाभावस्य नीलगुणस्वरूपस्याश्रयभेदभिन्नस्य नीलपटादिनिष्ठस्य नीलघटेसत्त्वादुक्तप्रसङ्गस्यासम्भवे पटपरद्रव्यपदघटितद्रव्यं घट इत्यस्य प्रामाण्यप्रसङ्गो बोध्यस्तत्र द्रव्यभेदाभावस्य द्रव्यत्वरूपतया घटपटादिसाधारण्यात्।

समाधत्ते—**ने**त्यादिना। **नीलत्वोपलक्षिते**ति। प्रकृत्यर्थतावच्छेदक-

---

१ विभक्तेः इत्येव पाठः मु० पु०।

२ यथाहि तदादिपदशक्यतावच्छेदकानां घटत्वपटत्वादीनां बुद्धिविषयतावच्छेदकत्वेनानुगमात् तदुपलक्षितधर्म्मावच्छिन्नेनुगतशक्तिरुपेयते। तथा प्रकृतेपि नीलत्वादिधर्म्माणां प्रकृत्यर्थतावच्छेदकत्वेनानुगमात् तदुपलक्षितधर्म्मावच्छिन्नप्रतियोगिताकाभावेनुगतैका शक्तिः सम्भवतीति तात्पर्य्यम्।

३ "यथा हि तद्विशिष्टेधिकरणे तदधिकरणतया तदन्वयोनुभवविरुद्धः, तथा तद्धर्म्मे आश्रयतया तद्धर्म्मवदन्वयोपि" इत्यभियुक्तोक्त्या प्रकृत्यर्थाभानेपि नीलत्वावच्छिन्नप्रतियोगिताकभेदाभाववान् घट इति वाक्यार्थस्य पर्य्यवसानान्नीलत्वादावाधेयतासम्बन्धेन प्रकृत्यर्थान्वयस्य कर्म्म गच्छतीत्यादौ द्वितीयार्थकर्म्मत्वे प्रकृत्यर्थस्य कर्म्मणि आधेयतयान्वयस्यानुभवविरुद्धत्वेन घटस्य घटाधिकरणमित्यादौ घटाधिकरणे घटस्याधिकरणतयान्वयस्यानुभवविरुद्धत्वेन च निराकाङ्क्षत्ववदकिञ्चित्करत्वमपि बोध्यम्।

**स्वरूपावच्छिन्नप्रतियोगितयाभावेन्वेतीत्यनुपपत्तिविरहात् । प्रतियोगितावच्छेदकविशेषणतया भासमानो धर्म्मः प्रतियोगितावच्छेदकतावच्छेदकतयापि संसर्गतया नियमतो गृह्यत इति पुनरप्रामाणिकम् ।**

**भवतु वोभयावृत्तित्वोपलक्षितधर्म्मावच्छिन्नप्रतियोगिताकान्योन्याभावेत्यन्ताभावे च खण्डशः शक्तिः । स्मरणन्तु सर्वनामन्यायेनो-**

नीलत्वादि[१]विशिष्टस्य प्रतियोगितया भेदेन्वये धर्म्मिपारतन्त्र्येण नीलत्वस्याप्यवच्छिन्नप्रतियोगिताकत्वेन तत्रान्वयादुक्तदोषस्य दुर्वारता स्यात्, नीलत्वाद्यवच्छिन्नभेदाभावस्य नीलत्वादिस्वरूपस्य नीलपटनिष्ठस्य नीलघटेपि सत्त्वादित्यतो नीलत्वोपलक्षितस्यैव प्रकृत्यर्थस्य तद्व्यक्तिस्वरूपस्य भेदेन्वय इत्यर्थः । **तद्व्यक्तिस्वरूपावच्छिन्ने**ति । अत्यन्ताभावप्रतियोगिभेदे नीलव्यक्तेर्विशेषणत्वाद्भेदनिष्ठप्रतियोगितायास्तद्व्यक्त्यवच्छिन्नत्वम् । **अनुपपत्तिविरहादि**ति । उक्तानामप्रसिद्ध्यादीना नीलघटे तस्य प्रसिद्धेर्नीलपटनिष्ठस्य तस्य घटेसत्त्वाद् भेदत्वाभावत्वयोर्द्वयोरेव शक्यतावच्छेदकत्वाच्चासम्भवादित्यर्थः । प्रतियोगितावच्छेदकनीलव्यक्तिविशेषणतया भासमाननीलत्वस्य प्रतियोगितावच्छेदकतावच्छेदकतया भानमावश्यकम्, तादृशधर्म्माणां तथात्वस्य जातिमान्नास्तीत्यादौ दृष्टत्वादिति प्रकृते कथं नीलत्वोपलक्षिताया नीलव्यक्तेरभावप्रतियोगितावच्छेदकत्वमित्याशङ्कां तादृशनियमस्याप्रामाणिकत्वेन निरस्यति—**प्रतियोगितावच्छेदके**ति ।

तादृशनियमस्य प्रामाणिकत्वे त्वाह—**भवतु वे**ति । **उभयावृत्तित्वे**ति । तच्च वस्तुविशिष्टान्यत्वम् । वैशिष्ट्यञ्च स्ववृत्तित्वस्वभिन्नवृत्तित्वोभयाभ्याम्[२] । **स्मरणन्त्वि**ति । उक्तखण्डशक्तिज्ञानजन्योपस्थितिरित्यर्थः । **सर्वनामन्यायेने**ति ।

---

१ असमस्त एव पा० मु० पु० ।

२ स्वभिन्नवृत्तित्व स्वनिष्ठप्रतियोगिताकभेदवद्वृत्तित्वरूप बोध्यम् । भेदश्च स्वप्रतियोग्यवृत्तित्वेन विशेषणीयः । तेन तद्घटगगनोभयभेदमादाय तद्व्यक्तित्वे न तद्धानिः । वृत्तित्वन्तु येन रूपेण येन सम्बन्धेनोभयावृत्तित्वमपेक्षितम्, तेन रूपेण तेन सम्बन्धेन बोध्यम् । अन्यथा सम्बन्धविशेषेण सम्बन्धसामान्येन वा तद्विवक्षणे आपत्त्यनुपपत्ती स्यातामिति भावः ।

पलक्षणमुभयावृत्तित्वमपहाय या व्यक्तिः प्रातिपदिकेनोपस्थापिता स्वरूपतस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वेनान्योन्याभावमवगाहते, अत्यन्ताभावविशेषणतयानुभावयति चेति नीलपटस्य प्रातिपदिकेन

तदादिपदानां बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नवाचकत्वेपि यथा दर्शितप्रकारेण प्रमुष्टबुद्धिविषयतावच्छेदकत्वकं चैत्रत्वादिधर्म्ममात्रप्रकारकं स्मरणं तेभ्यो भवति, तथैवात्रापि प्रमुष्टोभयावृत्तित्वकं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकस्यैव भेदस्य स्मरणं स्यादित्याशयः। **स्वरूपत** इति। निरवच्छिन्नतत्तद्व्यक्तित्वनिष्ठावच्छेदकताकमित्यर्थः। तद्व्यक्तित्वस्यातिरिक्तत्वेखण्डोपाधितया[1] स्वरूपतोवच्छेदकतायास्तत्रानपायादिति भावः। शाब्दबोधोपि स्वसमानाकारकमेव तादृशस्मरणेन जायत इत्याह—**अनुभावयति चेति**। **अत्रेति**[2]शब्दो-

---

१ अखण्डोपाधित्वञ्च समवायभिन्नत्वे सति स्वरूपसम्बन्धेन वृत्तित्वे सति भावत्वम्। समवायेतिव्याप्तिवारणाय प्रथम समवायेन वृत्तावतिव्याप्तिवारणाय द्वितीय सत्यन्तम्। स्वरूपसम्बन्धेन वृत्तिमति भावभिन्नेतिव्याप्तिवारणाय विशेष्यदलमिति बोध्यम्।

२ इति—(अव्ययम्) १ हेतुः। २ प्रकाशनम्। ३ निदर्शनम्। ४ प्रकारः। ५ अनुकर्षः। ६ समाप्तिः। ७ प्रकरणम्। ८ स्वरूपम्। ९ सान्निध्यम्। १० विवक्षानियमः। ११ मतम्। १२ प्रत्यक्षम्। १३ अवधारणम्। १४ व्यवस्था। १५ परामर्शः। १६ मानम्। १७ इत्थमर्थः। १८ प्रकर्षः। १९ उपक्रमः। अत्रायं विशेषो ज्ञेयः। स्वरूपार्थद्योतकता त्रिधा। शब्दस्वरूपद्योतकता प्रातिपदिकार्थद्योतकता वाक्यार्थद्योतकता चेति। तत्र शब्दस्वरूपद्योतकत्वे यद्योगे न प्रथमा। यथा—"कृष्णेति मङ्गल नाम यस्य वाचि प्रवर्त्तते" इत्यादौ। प्रातिपदिकार्थद्योतकत्वे तु प्रथमा भवति। यथा "चयस्त्विषामित्यवधारितं पुरस्ततः शरीरीति विभाविताकृतिम्। विभुर्विभक्तावयवं पुमानिति क्रमादमु नारद इत्यबोधि सः॥' इत्यादौ। वाक्यार्थद्योतकत्वे च न प्रथमा। यथा—"अतएव गवित्याह भू सत्तायामितीदृशम्। न प्रातिपदिकं नापि पदं साधु तु तत्स्मृतम्॥" "श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाधादित्येवं परिसङ्ख्या त्रिदोषिका॥" इत्यादौ। प्रकाशार्थे प्रकरणाद्यर्थे चेतिशब्दस्य समासोपि भवति। यथा—इतिहरि, इतिकृत्यम्, इतिवृत्तम्, इत्यादौ। अन्येषामुदाहरणानि विस्तरभयान्नेह दर्शितानि।

**स्मरणे नीलो घट इति बुद्धेरप्रामाण्यमुपपद्यते। तादृशेभेदे विशेषणतया नीलाद्यन्विते घटस्य विशेष्यतयान्वयस्वीकारात्।**

**प्रकारतया च प्रतियोगितावच्छेदकताभाने[1] न प्रतियोगितावच्छेदकविशेषणावच्छिन्नत्वभाननियमः, शुद्धवह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकधर्म्मावच्छिन्नप्रतियोगिताकत्वेनोल्लेखदर्शनात्[2]। अतो नोभयावृत्तित्वेनोपलक्षिते तद्व्यक्तित्वे स्वरूपतो भेदप्रतियोगितावच्छेदकत्वग्रहणासम्भवाद्विभक्तिशक्तिग्रहानुपपत्तिः।**

प्रामाण्योपपत्तौ हेतुपरामर्शकः। **अप्रामाण्यमुपपद्यत** इति। उक्तरीत्य। नीलपदेन नीलपरस्यैव स्मरणं तत्र स्यात्तन्निष्ठभेदाभावो घटे बाधित एवेति तत्र तद्बुद्धेरप्रामाण्यमित्यर्थः। **अन्वयस्वीकारादि**त्यप्यत्रैव हेतुः।

नन्वत्रापि प्रतियोगितावच्छेदकीभूततद्व्यक्तित्वे उभयावृत्तित्वस्योपलक्षणत्वमनुपपन्नमेव, प्रतियोग्यंशे परम्परयाप्युपलक्षणतया भानस्यादृष्टचरत्वादित्यत आह—**प्रकारतया चे**ति। तथा चोक्तनियमस्तत्रैव यत्रावच्छेदकतायाः संसर्गतया मानम्, यथा — जातिमान्नास्तीत्यादौ, तत्र जातिनिष्ठावच्छेदकतायाः. संसर्गतयैव भानाज्जातित्वावच्छिन्नत्वं नियमतस्तस्या भासते। प्रकृते[3] तूल्लिख्यमानस्योभयावृत्तित्वस्य संसर्गतयाभानात्प्रकारतयैव मानमिति नोभयावृत्तित्वस्योपलक्षणत्वानुपपत्तिरित्यर्थः। सम्मतश्चायमर्थश्चिन्तामणिकाराणामपीत्याह—**शुद्धवह्नित्वे**ति। शुद्धत्वमितरविशेषणानवच्छिन्नत्वम्। **साध्यतावच्छेदके**ति। धूमत्वादीत्यर्थः। **उल्लेखदर्शनादि**ति। वह्नित्वे

---

१ प्रतियोगितावच्छेदकभाने—मु० पु० पा०।

२ प्रतियोगिताकत्वोल्लेखदर्शनात्-मु० पु० पा०।

३ इदन्तु बोध्यम्। प्रतियोग्यंशे प्रकारीभूतस्यैव स्वावच्छिन्नत्वसम्बन्धेनाभावे भाननियमो न तु प्रतियोगितावच्छेदकांशे प्रकारीभूतस्यापीत्यतो घटत्वादिसमानाधिकरणोभयावृत्तित्वेनोपलक्षणीभूतधर्म्मेण तत्तद्व्यक्तित्वान्यनुगमय्य यत्रोक्तोभयावृत्तिधर्म्मावच्छिन्नप्रतियोगिताकास्तत्तद्घटादिव्यक्त्यभावा विवक्ष्यन्ते, न तत्रोक्तोभयावृत्तित्वं स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावे सम्बध्नाति, तस्य प्रतियोग्यंशेप्रकारत्वात्, किन्तु प्रतियोगितावच्छेदकीभूततत्तद्व्यक्तित्वांश एव प्रकारत्वादिति।

**नन्वेवमभेदे विभक्तेर्वृत्त्यादिकल्पनापेक्षया लाघवान्निरुक्ताभेदसंसर्गिकैवान्वयबुद्धिरभ्युपेतुमुचिता, "प्रातिपदिकार्थमात्रे प्रथमा" इति सूत्रे [1]मात्रपदार्थैकदेशः प्रातिपदिकार्थातिरिक्तानर्थकत्वमात्रं विवक्षितम्, न तु [2]प्रातिपदिकार्थार्थकत्वमपि, अन्यलभ्ये शक्तेरकल्पनादिति चेन्न; अभेदसंसर्गेण प्रातिपदिकार्थयोरन्वयाङ्गीकारे हि स्वन्तनीलपदेन सह स्वन्तघटपदस्य पौर्वापर्य्यस्वरूपायास्तद्व्यक्त्याया वाकाङ्क्षायाः प्रयोजकत्वस्वीकारे गौरवम्, अधिकवर्णघटितत्वात् ।**

उपलक्षणीभूतस्य धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वस्य तत्र प्रकारतयैव भानान्न वह्नित्वनिष्ठावच्छेदकतावच्छेदकत्वमिति धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकावच्छिन्नो नास्तीत्यादितो वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य यथा बोधः, तथात्राप्युभयावृत्तित्वस्योपलक्षणतयैव नोक्तरीत्या स्वरूपतस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावबोधानुपपत्तिरिति भावः ।

अथोक्तरीत्या विभक्तीनामभेदे शक्तिग्रहस्योपपादनेपि तस्य संसर्गमर्य्यादयैव लाभसम्भवादनन्यलभ्यस्यैव शक्यतया गौरवेण विशेषणविभक्तीनां वृत्तिकल्पनमनुचितमित्याशङ्कते—**नन्वेवमि**ति । **वृत्त्यादी**त्यादिपदेनोपस्थितियोग्यताज्ञानादीनामुपग्रहः । ननूक्तरीत्या विभक्तीनामभेदार्थकत्वमनुशासनसिद्धमेवेति तस्य संसर्गत्वे तदनुशासनविरोध इत्यत आह—**प्रातिपदिकार्थे**ति । वृत्त्यकल्पनप्रयुक्तस्य लाघवस्य सत्त्वेप्याकाङ्क्षाज्ञानकारणतालाघवादेव विभक्तीनामभेदार्थकत्वमित्याशयेन समाधत्ते—**ने**त्यादिना । **प्रयोजकत्वस्वीकार** इति । अन्यथा नीलं घट इत्यादावप्यभेदसंसर्गेण नीलप्रकारकघटविशेष्यकबोधस्यापत्तेरिति भावः । **अधिकवर्णघटितत्वादि**ति । आकाङ्क्षायां प्रकारदिशि बहुवर्णानां घटकत्वे यथा गौरवं तथोक्तं शाब्दिकमतव्याख्यानावसरे पूर्वमेव ।

---

१ मात्रपदात् इति मु० पु० पा० ।

२ प्रातिपदिकाद्यार्थार्थकत्वमपि इति मु० पु० पा० ।

अभेदस्य पदार्थतावादे तु नीलपदस्य सुना सह नीलप्रकारकाभेदविशेष्यकबुद्धौ, तेन सुना सह स्वन्तघटपदस्याभेदप्रकारकघटविशेष्यकबुद्धावाकाङ्क्षाद्वयस्य प्रयोजकत्वस्वीकारे लाघवम्, नीलघटपदयोरेकत्राकाङ्क्षायामप्रवेशेन तयोर्विशेषणविशेष्यभावव्यत्यासप्रयुक्ताकाङ्क्षाधीकारणताभेदाभावात् ।

न चैवं घटो नील इति वाक्यादिव नीलो घट इति वाक्यादपि घटमुद्दिश्य नीलाभेदविधेयकस्य वाक्यार्थबोधस्य प्रसङ्गेन प्रथमान्तघटपदोत्तरत्वविशिष्टतथाविधनीलपदत्वव्यङ्ग्याया आकाङ्क्षायास्तथाविधबुद्धौ [1]प्रयोजकत्वध्रौव्ये क्व लाघवावकाश इति देश्यम्; नील-

**तेन सुनेति** । नीलादिपदोत्तरसुना सहेत्यर्थः । नीलो घटमित्यादीनां वारणाय घटपदे स्वन्तत्वं विशेषितम् । **लाघवमिति** । एकत्र बुद्धावेकस्या एवाकाङ्क्षायाः (प्रयोजकत्वात्) नीलो घट इति विशिष्टबुद्धावाकाङ्क्षाद्वयस्य प्रयोजकत्वेपि सुपदस्याल्पवर्णघटितत्वेन लाघवमित्याशयः । ननु तथाप्याकाङ्क्षाद्वयस्य प्रयोजकत्वमेतन्मते आवश्यकम्, तत्र च नीलपदस्य घटपदसमानसङ्ख्यकवर्णघटितत्वान्न लाघवमित्यत आह—**नीलघटपदयोरिति** । तथा चैतन्मते स्वन्तनीलपदोत्तरत्वं स्वन्तघटपदे, तादृशघटपदपूर्वत्वं स्वन्तनीलपदत्वे न प्रविष्टम्, येन विनिगमनाविरहेणाकाङ्क्षाद्वयस्यापि प्रयोजकत्वं गुरुधर्म्मावच्छिन्नं प्रसज्येत । किन्तु लघुशरीरमाकाङ्क्षाद्वयं प्रत्येकबुद्धावेव प्रत्येकं प्रयोजकमिति लाघवानपाय एवेत्याशयः ।

नीलघटपदयोरेकत्रैवाकाङ्क्षायां प्रवेशो भवतामप्यावश्यक एवेत्याशङ्कते—**न चैवमिति** । **देश्यमिति** परेणान्वयः । **एवं** नीलप्रकारकाभेदविशेष्यकबुद्धौ नील इत्याकाङ्क्षायाः, अभेदप्रकारकघटविशेष्यकबुद्धौ नीलो घट इत्याकाङ्क्षाया उक्तरीत्या प्रयोजकत्वे । **बोधस्य प्रसङ्गेनेति** । तत्राप्युक्ताकाङ्क्षाद्वयस्य सत्त्वात्तादृशबोधस्य प्रामाण्यप्रसङ्गेनेत्यर्थः । **प्रयोजकत्वध्रौव्य इति** । नीलो घट इत्यत्र नीलपदस्य घटपदोत्तरत्वविरहादुक्तप्रसङ्गवारणमेवं सति सुलभमिति बोध्यम् । **क्व लाघवावकाश इति** । एकत्रैवाकाङ्क्षायान्नीलघटपदयोः प्रविष्ट-

१ प्रयोजकध्रौव्ये इति मु० पु० पा० ।

प्रकारकाभेदविशेष्यकबुद्धौ नीलोत्तरसुत्वाभिव्यङ्ग्याया आकाङ्क्षाया अभेदविधेयकबुद्धौ सुपूर्वस्वन्तघटपदत्वव्यङ्ग्याकाङ्क्षायाश्च प्रयोजकत्वद्वयस्वीकारेणैव चरितार्थत्वात्[1]।

यदि च नीलो घटः पटः शुक्ल इत्यत्राप्यभेदे नीलान्वयस्य घटे चाभेदान्वयस्य प्रयोजिका नीलोत्तरसुत्वेन घटपदानन्तरसुपूर्वसुत्वेन[2] चाभिव्यङ्ग्याकाङ्क्षा वर्त्तत एवेति घटमुद्दिश्य नीलाभेदबुद्धिर्दुर्वारेति सर्वमतेपि प्रथमान्तविशेषणविशेष्ययोरेव पौर्वापर्य्याभिव्यङ्ग्याकाङ्क्षेति विभाव्यते, तदाप्यभेदस्य पदार्थतया प्रकारत्वमेव युज्यते; न तत्संसर्गत्वम्, तथा सति[3] "क्षुदुपहन्तुं शक्यम्", "शिखी विनष्टः", "शरीरी दृष्टः", "सुरभिचन्दनमाघ्रातम्", "निध्वनत्पाञ्चजन्यः श्रुतः", "वह्निमत्पर्वतोनुमित" इत्यादावुपहननतदर्थशक्तिभाव्यस्य,नाशप्रतियोगिनो

त्वादस्मन्मतसमानत्वादिति भावः। आकाङ्क्षान्निरस्यति--**नीलप्रकारके**ति। **सुपूर्वस्वन्तघटपदत्वे**ति। स्वप्रकृतिकसुभिन्नसुपूर्वस्वन्तघटपदत्वेत्यर्थः। तेन घटो नील इत्यत्र नीलपदोत्तरसुपूर्वत्वस्य घटपदे सत्त्वं नीलो घट इत्यत्र च स्वप्रकृतिकसुपूर्वत्वस्य घटपदे सत्त्वेपि न तद्भिन्नसुपूर्वत्वमिति बोध्यम्। **चरितार्थत्वादि**ति। नीलो घट इत्यत्र नीलाभेदविधेयकघटोद्देश्यकान्वयबोधप्रसङ्गवारणरूपप्रयोजनस्य निरुक्ताकाङ्क्षयैव सिद्धत्वादित्यर्थः। तथा च नैकत्राकाङ्क्षायां नीलघटपदयोः प्रवेशः, येनोक्तलाघवं न स्यादित्याशयः।

घटपदे सुपूर्वत्वस्य विशेषणीयत्वेपि नोक्तापत्तिवारणमित्याह—**यदि चे**त्यादिना। **सर्वमतेपी**ति। अभेदस्य प्रकारत्वसंसर्गत्वोभयमतेपीत्यर्थः। **तदापी**ति। उक्तरीत्याकाङ्क्षायां लाघवाभावेपीत्यर्थः। **पदार्थतये**ति। "प्रातिपदिकार्थ"...इत्यादिसूत्रानुशिष्टप्रथमाद्यर्थतयेत्यर्थः। एतच्च तस्य प्रकारत्वे प्रयोजकतयोक्तम्। **तथा सति** अभेदस्य संसर्गतया भाने सति। **क्षुदुपहन्तुं शक्यमि**त्यादि। अत्र प्रत्येकवाक्यस्य क्रमेण **शक्तिभाव्यस्ये**त्यादिषष्ठ्यन्ता-

१ चारितार्थ्यात् इति मु० पु० पा०।
२ नीलोत्तरसुत्वेन सुपूर्वस्वन्तघटपदत्वेन. मु० पु० पा०।
३ हि इत्यधिकः पा० मु० पु०।

**दर्शनस्याघ्राणस्य श्रावणस्य लौकिकविषयस्यानुमितिविधेयस्य च क्षुधि शिखिनि शरीरिणि जीवे चन्दने पाञ्चजन्ये पर्वते च तादात्म्यबाधादनन्वयापत्तेः । स्वतदात्मोपहननकर्म्मत्वादिसंसर्गेणान्वयस्वीकारे सामानाधिकरण्याभावादेकविभक्तिकत्वानुपपत्तेः ।**

**पदार्थभूतस्तु शक्यविनष्टदृष्टाघ्रातश्रुतानुमितानामभेदः स्वाश्रयो-**

न्वितस्य **क्षुधी**त्यादिसप्तम्यन्तेषु तेषाञ्च **तादात्म्यबाधादि**त्यनेनान्वयो बोध्यः। तथा च तत्र तत्र क्षुदादौ शक्यादिपदार्थाभेदस्य बाधादनन्वयापत्तिरेवाभेदस्य संसर्गतामते स्यादित्याशयः। ननु साक्षात्तादात्म्यस्य तत्र तत्र बाधेपि परम्परयैवान्वयो वाच्य इति नानुपपत्तिरत आह— **स्वतदात्मोपहनने**ति। **स्वं** शक्यादिपदार्थस्तादृशशक्तिभाव्यादि, तदात्मकं यदुपहननं तत्कर्म्मत्वसंसर्गेणेत्यर्थः। स च संसर्गः क्षुधि निराबाध इत्याशयः। स्वतादात्म्योपहननेति क्वचित्पाठः। स च स्वस्य तादात्म्यं यत्रेति व्यधिकरणबहुव्रीहिणा कथञ्चित्सङ्गमनीयः। **आदिना** स्वाभिन्नशिखावत्त्वस्वाभिन्नावच्छेद्यसुखादिमत्त्वस्वाभिन्नसुरभिगन्धवत्त्वस्वाभिन्नशब्दावच्छेदकत्वस्वाभिन्नवह्निमत्त्वानां परिग्रहः। **लौकिकविषयस्ये**त्यस्य दर्शनादित्रयेन्वयः। पश्यत्यादिधात्वर्थे तदन्तर्भावस्यावश्यकत्वात्। अन्यथोपनीतभानमादाय गगनं पश्यतीत्यादीनां प्रामाण्यापत्तेरिति बोध्यम्। **सामानाधिकरण्याभावादि**ति। निरुक्तस्य तादात्म्यसंसर्गावच्छिन्नस्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वस्य क्षुदादौ शक्यादिपदप्रयोज्यविषयताया अभेदसंसर्गानवच्छिन्नत्वादभावादेवाभावादित्यर्थः। **एकविभक्तिकत्वानुपपत्ते**रिति। एकपदं समानार्थकम्। "एकोऽन्यार्थः"... इत्याद्यनुशासनेन तदर्थकताया अपि तस्य ज्ञापनात्। तेन नीलो घट इत्यादावप्येकविभक्तिकत्वस्योच्चारणभेदेन विभक्त्यादीनां भेदादभावेपि नासङ्गतिः। तथा च क्षुधौ क्षुध इत्यादीनामपि शक्यमित्यादिसमभिव्याहारे प्रामाण्यं प्रसज्येतेति भावः।

अभेदस्य पदार्थत्वे उक्तस्थलेषु सामानाधिकरण्यमुपपादयति— **पदार्थभूतस्त्वि**त्यादिना। अस्य **अभेद** इत्यनेनान्वयः। **स्वाश्रये**त्यस्य

पहननशिखाशरीरसौरभनिर्व्वानवह्निद्वारा क्षुदादावन्वयमुपलभमानो न योग्यतां न वा सामानाधिकरण्यं व्याहन्ति। येन केनापि संसर्गेणै-कतरपदार्थाभेदविशिष्टापरपदार्थस्य बोधकयोरेव पदयोः समाना-धिकरणत्वात् कर्म्मधारयावयवयोः सामानाधिकरण्यव्यवहारो गौणः।

अतएव—"आप्रगृह्यः" इत्यत्र प्रथमोपात्तः प्रगृह्याभेदो निपातार्थे स्वरूपेप्यन्वेति। अभेदेन तयोरन्वयबोधोपगमे कर्म्मधारयस्यापि

द्वन्द्वादिस्थितस्य **शिखा**यावप्यन्वयः। **न योग्यतामि**ति **व्याहन्ती**त्यनेना-न्वितम्। स्वाश्रयोपहननकर्म्मत्वादिसंसर्गेण शवयाद्यभेदस्य क्षुदादौ सत्त्वान्न योग्यताया व्याघात इत्यर्थः। पूर्वोक्तस्य सामानाधिकरण्यस्य क्षुदादिपदेऽभावा-दन्यविधं सामानाधिकरण्यमेव पदयोः समानवचनकत्वप्रयोजकमित्याह—**येन केनापी**ति। साक्षात्परम्परासाधारणसंसर्गतानिरूपितैकपदार्थाभेद-त्वावच्छिन्नविधेयतानिरूपितोद्देश्यताकान्वयबोधजनकत्वमेवैकपदस्यापरपदार्थे सामानाधिकरण्यमित्यर्थः। तच्च प्रकृतप्रयोगेष्वव्याहतमेवेति भावः। नन्वेवं नीलोत्पलमित्यादिकर्म्मधारयघटकनीलोत्पलादिशब्दानां सामानाधिकरण्यं न स्यात्, तत्राभेदस्य प्रकारतया भानस्य प्रयोजकविरहेणाभावादित्यत आह—**कर्म्मधारये**ति। **गौण** इति। नीलमुत्पलमितिवाक्यघटकनीलोत्पलगत-सामानाधिकरण्यस्यैव परम्परया तत्र सत्त्वात्तेनैव तयोः सामानाधिकरण्य-व्यवहार इत्यर्थः।

**अतएव** समासातिरिक्तस्थलेऽभेदस्य प्रकारत्वादेवेत्यर्थः। **प्रथमोपात्त** इति। प्रगृह्यपदोत्तरप्रथमाजन्योपस्थितिविषय इत्यर्थः। एतच्च प्रकारत्वे प्रयोजकतयोपात्तम्। **स्वरूप** इति। प्रगृह्यसंज्ञकत्वस्य स्मरणाद्यर्थेऽयोग्यतया आपदस्य प्रकृते स्वरूपार्थकत्वात्तत्रेत्यर्थः। अभेदस्य तत्र संसर्गतया भानेति-प्रसङ्गमाह—**अभेदेने**ति। **कर्म्मधारयस्यापी**ति। तथा सति कर्म्मधारये विशेषणवाचकपदस्य पूर्वनिपातनियमेन प्रगृह्या इत्यनिष्टप्रयोग आपद्येतेति भावः। **अपिना** समासानां विभाषाधिकारीयतया आप्रगृह्य इति यद्यपि साधुः

१ व्यापहति इति मु० पु० पा०।

**प्रसङ्गात्। न चाव्ययीभावविधिनापवादः, समीपसमृद्ध्यादिपरिगणितातिरिक्ते स्वरूपार्थे वर्त्तमानस्य आ इति निपातस्याव्ययीभावविध्यविषयत्वात्। [1]आङ एव मर्य्यादाभिविध्योरव्ययीभावविधानात्।**

**एवं स्तोकं पचतीत्यादौ द्वितीयार्थोभेदः, मात्रपदसामर्थ्येन प्रातिपदिकार्थे द्वितीयाया अपि साधुत्वात्, अन्यथा क्रियाविशेषणद्वितीयाया अकारकविभक्तित्वे स्तोकं नम्रेति विग्रहे स्तोकनम्रेति**

स्यादेव, तथाप्युक्तस्यानिष्टस्याप्यापत्तिरिति सूचितम्। आपदस्याव्ययतयाव्ययीभावेन कर्म्मधारयस्यापवादादुक्तापत्तिवारणं स्यादित्याशङ्क्य निराचष्टे—**न चाव्ययीभावे**ति। **समीपसमृद्ध्यादि**ति। "अव्ययं विभक्तिसमीपसमृद्धि..."इत्यादिसूत्रोक्तार्थभिन्ने इत्यर्थः। प्रकृते आ-पदस्य स्वरूपार्थकस्य मर्य्यादाभिविध्यर्थकत्वविरहेण ङित्त्वविरहेण च सूत्रान्तरेणापि तत्र नाव्ययीभावस्य प्राप्तिरित्याशयेनाह—**आङ एवे**ति। ङिदाकारस्यैवेत्यर्थः। तत्त्वञ्चाकारस्य

"ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥"

इत्यनुशासनेनेपदाद्यर्थेष्वेवानुशिष्टत्व स्वरूपार्थ इत्याशयः। **मर्य्यादाभिविध्योरि**ति। "आङ् मर्य्यादाभिविध्योः" इति सूत्रेण "आबालं हरिभक्तिः" "आमुक्ति संसारः". इत्यादौ मर्य्यादायामभिविधौ च समीपाद्यर्थातिरिक्ते समासविधानादित्यर्थः।

एवं धातुनापि नाम्नो न सामानाधिकरण्यमित्याह—**एवं स्तोकमि**ति। तत्राभेदार्थे द्वितीयायाः साक्षादनुशासनविरहस्य पूर्वमुक्तत्वात्तस्या अभेदार्थकत्वस्यानुशासनिकत्वनिरासायाह—**मात्रपदसामर्थ्येने**ति। यथा तस्य सामर्थ्यं तथोक्तमधस्तात्। **अन्यथे**त्यस्य विवरणं **क्रियाविशेषणे**त्यादिः। स्तोकं पचतीत्यादौ "अन्यत्र दृश्यते" इत्यनुशासनेनैवोपपदद्वितीयाया विधाने

१ आङ् मर्य्यादाभिविध्योरव्ययीभावविधानात् इति मु० पु० पा०।

**तत्पुरुषानुपपत्तेः, विना विशेषविधिमकारकद्वितीयासमासस्या-साधुत्वात्। न चायं कर्म्मधारयः, [2]विरुद्धविभक्त्यवरुद्धयोः कर्म्म-धारयायोगात्।**

**तत्पुरुषानुपपत्तेरि**ति। तथा चोत्तरमेघे एकोनविंशतितमे "[3]तन्वी श्यामा शिखरिदशना"...इत्यादिश्लोके "स्तोकनम्रा स्तनाभ्याम्" इति महाकवि-कालिदासप्रयोगोऽप्रामाणिक एव स्यादिति भावः। ननु "द्वितीया श्रितातीत"... इत्यादिसूत्रे द्वितीयेति योगविभागादेव तत्र समासः स्यादित्यत आह— **विशेषविधिरि**ति। तथा च "अत्यन्तसंयोगे च..."इत्यादिविशेषसूत्रैरेवा-कारकद्वितीयायाः समस्यमानत्वात्तदविषये प्रकृते समासानुपपत्तिरेवेत्याशयः। ननु नीलोत्पलमित्यादाविव कर्म्मधारयः समास एव तत्रेत्याशङ्क्य निराकुरुते— **न चायमि**ति। **कर्म्मधारयायोगादि**ति। इदमत्र चिन्त्यम्। पूर्वोपदर्शित-युक्त्या स्तोकं पचतीत्यादावुपपदद्वितीयाया एवोपगमस्यावश्यकत्वेन "स्तोकनम्रा"...इत्यादौ [4]कर्म्मधारय एवोपेयः। "विशेषणं विशेष्येण बहुलम्"

---

१ अकारकद्वितीयाया इति मु० पु० पा०।

२ विरुद्धयोः इत्येव पाठः मु० पु०।

३ तन्वी श्यामा शिखरिदशना पक्कबिम्बाधरोष्ठी।
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः॥
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्याम्।
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः॥ इति पूर्णः श्लोकः।

४ स्तोकं नम्रेति विग्रहे कर्म्मधारय एव समासः। "पदद्वयार्थयोर्यत्राभेदो यत्र च पदद्वयस्य समानविभक्तिकत्व तत्रैव कर्म्मधारयः" इति नास्ति नियमः, समानविभक्ति-कत्वस्य उक्तसमासेतन्त्रत्वात्। "तत्पुरुषः समानाधिकरणः कर्म्मधारयः" इत्यनुशासनेन पदद्वययोः सामानाधिकरण्यमात्रस्यापेक्षणात्। सामानाधिकरण्यञ्च तदर्थयोरभेद एवेति "महाकविर्महाविज्ञः" इत्यादाविव स्तोकादेः नमनादावेकदेशेऽन्वयेपि भवति समासस्य साधुत्वम्। अतएव शब्दशक्तिप्रकाशिकायाम्—"स्तोकपक्तेत्यादौ क्रियाविशेषणैः कर्म्मधारय एव" इति "क्रियाविशेषणैः समास एवाव्युत्पन्न इति तु न देश्यम्, स्तोकनम्रा स्तनाभ्यामित्यादेः कालिदासाद्यैः प्रयुक्तत्वात्" इति च तर्कालङ्कारैरुक्तं सङ्गच्छते।

**एवं द्रोणो व्रीहिरित्यादौ द्रोणादिपदं द्रोणपरिमिते वाचकं लाक्षणिकं वा । प्रथमा तु प्रातिपदिकार्थमभेदमभिधत्ते, न तु परिमाणम्, प्रमाणाभावात्, अन्यलभ्येऽर्थे सूत्रस्य प्रत्याख्येयत्वात्; अन्यथा द्रोणेन क्रीणातीत्यादौ करणत्वस्यानन्वयापत्तेः; प्रातिपदिकार्थे परिमाणे तस्य बाधात्, द्रव्यस्य चापदार्थत्वात् ।**

इति सूत्रविहिते तत्राभेदेन विशेष्यविशेषणभावस्यैव प्रयोजकत्वन्न तु समानविभक्तिकत्वस्यापि, नीलघट इत्यादौ त्वभेदबोधौपयिकाकाङ्क्षाविरहादेव समासस्य वारणसम्भवात्। "द्वितीया श्रितातीत..."इत्यादिसूत्रे द्वितीयेतियोगविभागस्य कारकविभक्तिमात्रविषयत्वे गम्यादित्वं नञादिपदानामुपगम्यैव वा समास उपपादनीयस्तेन न पूर्वोक्तिविरोध इति ।

विभक्त्या सहोक्तं नाम्नः सामानाधिकरण्यं निरसितुमाह—**एवं द्रोणो व्रीहिरि**ति । **द्रोणपरिमित** इति । चतुराढकाभिन्नगुरुत्वविशिष्टे द्रव्यादावित्यर्थः । सप्तम्यर्थो निरूपितत्वं **वाचकलाक्षणिक**पदार्थैकदेशवाचकत्वलाक्षणिकत्वयोरन्वितम् । **वाचकमि**ति । अर्श आद्यजन्तद्रोणपदस्य शुक्लादिशब्दवत् "गुणिलिङ्गास्तु तद्वति" इत्यमरेण गुणविशिष्टवाचकत्वस्यानुशासनादिति । शुक्लादिपदानामपि गुणवाचकत्वमेव, गुणिनाञ्च लक्षणयैव बोधः, एकत्र शक्तिकल्पनया निर्वाहेन्यत्र तत्सम्बन्धवति लक्षणाया एवौचित्यादित्याशयेनाह—**लाक्षणिकं वे**ति । ननु प्रातिपदिकस्य गुणिवाचकत्वेपि प्रथमाया एव परिमाणार्थकत्वमित्यत आह—**प्रथमा त्वि**ति । **प्रातिपदिकार्थमि**ति । द्रोणादिपदार्थमित्यर्थः । तस्य द्रोणादिपदादेव लाभेपि निरुक्ताभेदत्वेन ततोलाभादनन्यलभ्यत्वं बोध्यम् । **प्रमाणाभावादि**ति । अनुशासनादीनामभावादित्यर्थः । ननु "प्रातिपदिकार्थ"...इत्यादिसूत्रे परिमाणादिग्रहादेव प्रथमायाः परिमाणाद्यर्थकत्वं प्रामाणिकमित्यत आह—**अन्यलभ्य** इति । अनन्यलभ्यस्यैव शब्दार्थतया प्रकृतिलभ्ये परिमाणादावुक्तसूत्रस्य प्रथमावाचकत्वबोधकतायाः प्रत्याख्येयत्वादित्यर्थः । अतएव "प्रातिपदिकार्थमात्रे प्रथमेत्येव सूत्रयितुमुचितम्" इति भट्टोजिभट्टादिभिरङ्गीकृतमिति भावः । **अन्यथा** द्रोणपदस्य केवलगुणवाचकत्वे ।

एतेन सुपां [1]वचनवाचितापि प्रत्युक्ता। एकवचनत्वादिना तत्तत्प्रतिपाद्या सङ्ख्या भेदेनैव प्रातिपदिकार्थेऽन्वेति तद्धितप्रत्ययो देवतेत्यादावनर्थक एवेति कथं तस्य प्रकृतिसामानाधिकरण्यम्। यथा चानर्थकानामपि सार्थकजातीयत्वेन प्रत्ययत्वम्, तथा स्पष्टमुपरिष्टात्। अतएव [2]देवपर्य्याये देवतापदगणनमप्युपपद्यत इति

**एतेन** द्रोणो व्रीहिरित्यत्रोक्तरीत्येत्यर्थः। **वचनवाचिता** सङ्ख्यावाचकत्वम्। **प्रत्युक्ते**ति। एकं ब्रह्म इत्यादावेकपदस्यैवैकत्वविशिष्टार्थकतयान्यलभ्यस्यैकत्वस्य प्रथमार्थत्वस्यानौचित्यादित्याशयः। ननु तर्हि नीलो घट इत्यादावेकत्वादिबोधः कथमुपपद्येत? तत्र प्रकृतेस्तदर्थकत्वाभावादित्यत आह—**एकवचनत्वादिने**ति। तथा च "द्व्येकयोर्द्विवचनैकवचने" इत्यनुशासनेन स्वादिविभक्तीनामेकवचनत्वद्विवचनत्वबहुवचनत्वैरेकत्वादिसङ्ख्यावाचकत्वस्य बोधनेन प्रथमात्वेन सङ्ख्याया अलाभेपि घटादिपदोत्तरस्वादिविभक्तीनामेकवचनत्वादिमत्त्वात्तेनैव रूपेणैकत्वादिसङ्ख्यावाचकत्वादेकत्वादीनां समवायेन घटादौ लाभो भविष्यतीत्याशयः। अत्रैकवचनत्वादिकं सुत्वादितत्तद्धर्म्मरूपमेव बोध्यमेकवचनत्वादीना वाचकतावच्छेदकताया निराकरिष्यमाणत्वात्।

तद्धितेन सहापि न प्रातिपदिकस्य सामानाधिकरण्यमित्याह—**तद्धिते**ति। **कथमि**ति। अभेदसंसर्गेण प्रकृत्यर्थान्वयप्रयोजकविषयताप्रयोजकत्वाभावादित्यर्थः। ननु तर्हि स्वार्थविहितप्रत्ययानां प्रत्ययत्वं दुरुपपादमेव स्यादित्यत आह—**यथा चानर्थकानामि**ति। तथा च भावार्थकतलादिवृत्त्यानुपूर्वीमत्त्वेनैव स्वार्थविहिताना देवतेत्यादौ तलादीनां प्रत्ययत्वम्, न तु तेषामेवार्थबोधकत्वेनेत्याशयः। **उपरिष्टादि**ति। एतद्ग्रन्थादन्यत्रेत्यर्थः। एतद्ग्रन्थे तादृशप्रत्ययत्वलक्षणस्यानुपलम्भात्। **अतएव** देवतादिपदोत्तरतलादीनां निरर्थकत्वादेव। **देवपर्य्याय** इति। "अमरा निर्जरा देवाः"...इत्यादिदेववाचकपदपरिगणने "देवताः स्त्रियाम्" इत्यनेन देवतापदस्य देववाचकत्वज्ञापनादित्याशयः। **इतीति**। दर्शितप्रकारेण धात्वादिभिस्सह नाम्नो निरुक्त-

१ वाचकतापि इति मु० पु० पा०।

२ देवपर्यायदेवतागणनम् इति मु० पु० पा०।

**समासान्तर्भूतस्य प्रातिपदिकस्यैव प्रातिपदिकेन सामानाधिकरण्यम्, न तु शब्दान्तरस्य ।**

**प्रातिपदिकार्थे वर्त्तमाना विभक्तिरपि भेदाभावत्वविशिष्टे स्वार्थे प्रकृत्यर्थस्याधाराधेयभावमेवावगाहते, नाभेदम्, अभिन्नयोरप्यभावत्वेनात्माश्रयस्याकरे स्वहस्तितत्वादिति[1] प्राहुः । तच्चाग्रे विवेचयिष्यामः[2] ।२६।३,४,५।**

सामानाधिकरण्यस्यासम्भवादित्यर्थः । **सामानाधिकरण्यमि**ति । निरुक्तं स्वप्रयोज्यविषयतानिरूपिताभेदत्वावच्छिन्नसंसर्गतानिरूपितविषयताप्रयोजकत्वरूपं सामानाधिकरण्यं समासान्तर्भूतयोर्नीलोत्पलादिपदयोरेवेत्यर्थः । तेन **येन केनापि संसर्गेणैकपदार्थाभेदविशिष्टे**त्यादिनोक्तस्य सामानाधिकरण्यस्य "क्षुदुपहन्तुं शक्यम्'...इत्यादिव्यासवाक्येष्वपि पूर्वमभ्युपगमेपि न विरोधः । **न तु शब्दान्तरस्य** (इति।) धात्वादेर्नोक्तं सामानाधिकरण्यमित्यर्थः । प्रातिपदिकार्थमात्रे विहितानां विभक्तीनां नीलाद्यर्थकत्वे प्रकृत्यर्थस्य तत्राभेदसम्बन्धेनान्वयस्यैव वाच्यतया विभक्त्या सह प्रातिपदिकस्य सामानाधिकरण्यं कुतो नेत्यत आह—**प्रातिदिकार्थे** इति । **भेदाभावत्वविशिष्ट** इति । तथा चोक्तरीत्या प्रातिपदिकजन्योपस्थितीयविषयतानवच्छेदकभेदाभावत्वस्यैव विभक्तिवाच्यतावच्छेदकतया तदवच्छिन्ने प्रातिपदिकार्थाभेदस्य बाधान्नाभेदेन तत्रान्वयः सम्भवतीति भावः । **आकरे स्वहस्तितत्वादि**ति । घटाद्यभावस्यैकस्यैव स्वस्मिन्नाधेयताया निराबाधेन घटाभावे घटाभाव इति प्रतीतेस्सर्वजनीनत्वेन चाभावत्वस्याधारताधेयत्वान्यतरानवच्छेदकत्वे एवात्माश्रयस्य दोषत्वादित्यस्य चिन्तामण्यादावङ्गीकृतत्वादित्यर्थः । **तच्च** अभेदत्वेन प्रकारत्वञ्च । **अग्रे** प्रथमार्थविचारे । **विवेचयिष्याम** इति । "अभेदत्वेन नामार्थः"... इत्यादिकारिकयेत्याद्यः । २६ । ३, ४, ५ ।

( इति सटीकपदवाक्यरत्नाकरेभेदान्वयविवरणम् )

---

१ सुहस्तितत्वात् इति मु० पु० पा० ।

२ चिन्तयिष्याम इति मु० पु० पा० ।

## ( अथ भेदान्वयविवरणम् । )

**नाम्ना सुपस्तद्धितानि निपाताः क्यच्क्यङादयः ।**
**भेदान्वये व्यपेक्ष्यन्ते तिङ् नाम्नेति तु केचन ॥३०॥**

भेदेन नामार्थप्रकारकान्वयबोधोपयोगिनी सुपामाकाङ्क्षा, सुपो हि स्वार्थसम्बोध्यत्वकर्म्मत्वकरणत्वसम्प्रदानत्वापादानत्वसम्बन्धाधिकरणत्वादिषु प्रातिपदिकार्थसम्बन्धं बोधयन्तो नामभिरव्यवहितोत्तरत्वेनापेक्ष्यन्ते ।३०।१।

तथा तद्धितान्यण्बहुजादीनि [1]स्वार्थेपत्ये तत्कल्पादौ प्रातिपदिकार्थस्य भेदेनान्वयबुद्धिमाद[2]धन्ति प्रातिपदिकैः क्वचित्पूर्वत्वेन क्वचिदुत्तरत्वेनाकाङ्क्ष्यन्ते ।३०।२।

**नाम्ना सुप** इति । **सुप** इत्यादिप्रथमान्तानां **नाम्ने**त्यन्वितानां **व्यपेक्ष्यन्त** इत्यनेनान्वयादाह विवरणे—**सुपामाकाङ्क्षे**ति । **स्वार्थसम्बोध्ये**ति । क्रमेण प्रथमाद्यर्थत्वस्य सम्बोध्यत्वादौ वक्ष्यमाणत्वादभेदस्य प्रथमार्थत्वस्य निराकरिष्यमाणत्वाच्च न तदुपादानम् । **प्रातिपदिकार्थसम्बन्धं** स्वप्रकृत्यर्थनिरूपिताधेयत्वादिसम्बन्धमित्यर्थः । ३०।१ ।

**अण्बहुजादीनि** (इति।) "तस्यापत्यम्" इत्यनेनापत्यार्थे विहितोण्, "विभाषा सुपो बहुच् पुरस्तात्तु" इत्यनेनेषदूनेर्थे विहितो बहुजित्यर्थः । आदिना "स्त्रीपुंसाभ्यान्नञ्स्नञौ भवनात्"... इत्यादिसूत्रैर्भवनाद्यर्थे विहितानां नञ्स्नञादिप्रत्ययानामुपग्रहः । **स्वार्थेपत्ये**ति । दाक्षिर्ब्राह्मण इत्यादिषु सामानाधिकरण्यानुरोधेन कृतामिव तद्धितानामपि धर्म्मिवाचकत्वस्यैवोपगमात् । **तत्कल्पादौ** ईषदूने तत्सदृश इत्यर्थः । ३०।२ ।

---

१ स्वार्थेपत्ये तत्कल्पादौ इत्यस्य स्थाने स्वार्थेपत्यकल्पादौ इति मु० पु० पा० ।
२ भेदेनान्वयबुद्धिमादधानानि इति मु० पु० पा० ।

**एवं निपाता नञिवादयः स्वार्थेभावसादृश्यादौ प्रातिपदिकार्थस्य भेदेनान्वयं बोधयन्ति । ३० । ३ ।**

**तथा क्यच्क्यङादयो धात्वंशप्रत्ययाः स्वार्थे प्रातिपदिकार्थस्य भेदेनान्वयं बोधयन्तः प्रातिपदिकैर्व्यपेक्ष्यन्ते ।**

**तथाहि—पुत्रीयति गव्यति नाव्यति दीव्यतीत्यादौ पुत्र-गोनौदिवां क्यजर्थेच्छायां प्रकृत्यर्थतावच्छेदकावच्छिन्ना[1] या स्वत्वोद्देश्यतानिरूपितविषयता तया संसर्गेणान्वयः । पुत्रः स्वं भवत्वित्या-[2]**

**स्वार्थेभावसादृश्यादावि**ति । निपातानामव्ययतया तदुत्तरविभक्तेरश्रूयमाणत्वेन सामानाधिकरण्यस्य घटो नास्तीत्यादावनावश्यकतया निपातातिरिक्तनामार्थयोरेव भेदान्वयस्य व्युत्पत्तिविरुद्धत्वाच्च तेषान्न धर्म्मिवाचकत्वम्, किन्त्वभावादिधर्म्मवाचकत्वमेवेति भावः । ३०।३ ।

प्रथमाद्यर्थसम्बोध्यत्वादीनामुदाहरणस्य विस्तरेण सुबर्थविचारे वक्ष्यमाणतया सूचीकटाहन्यायेन चरमोक्तानामपि क्यच्क्यङादीनां प्रथममुदाहरणानि दर्शयति—**तथाही**त्यादिना । **दीव्यती**ति । दिवमिच्छतीत्यर्थे क्यचि "हलि च" इति दीर्घः । अतएव—"दीव्यतीति दीर्घस्तु प्रायः प्रामादिक एव" इत्यत्र प्राय इत्युक्तं भट्टोजिदीक्षितैः । अथवा दिव्यातीत्येव पठनीयः । **क्यजर्थेच्छायामि**ति । "सुप आत्मनः क्यच्" इत्यनेनेच्छायामेव सुबन्तात्पुत्रमित्यादितः क्यचो विधानात् क्यजन्तस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन धात्ववयवत्वात् पुत्रमित्यादिद्वितीयाया लोपे ईकारान्तादेशे तिबाद्युत्पत्तौ पुत्रीयतीत्यादिकः प्रयोगः । तत्र क्यजर्थ इच्छामात्रम्, पुत्रस्य संसर्गविशेषेणैव तत्रान्वयोपगमेनातिप्रसङ्गाद्यभावादित्याशयः । **प्रकृत्यर्थतावच्छेदकावच्छिन्ना** क्यजादिप्रकृतिपुत्रादिपदार्थतावच्छेदकपुत्रत्वाद्यवच्छिन्ना । **विषयता** विशेष्यतारूपा । पुत्रादिषु तादृशविशेष्यतासत्त्वप्रतिपादनायेच्छाया आकारमाह—**पुत्रः स्वमि**ति ।

---

१ प्रकृत्यर्थतावच्छेदकावच्छिन्नया स्वत्वोद्देश्यतानिरूपितविषयतया संसर्गेण इति मु० पु० पा० ।

२ पुत्रः सम्भवतु इत्येवमाकार० इति मु० पु० पा० ।

**कारकेच्छायाः स्वत्ववृत्त्युद्देश्यतया हि निरूप्यते पुत्रत्वावच्छिन्न-विशेष्यता ।**

**स्वत्ववृत्तिविषयता च [1]समभिव्याहारलभ्यकर्तृपुरुषनिष्ठतद्व्यक्ति-त्वावच्छिन्नप्रकारतानिरूतितैव ग्राह्या । तेन भ्रातुष्पुत्रमिच्छतीत्यर्थे भ्रातुष्पुत्रीयतीति न प्रयोगः ।**

**अतएव "सुप आत्मनः क्यच्" इति सूत्रे आत्मन इति [2]संसर्गविशेषप्रापकमेव । आत्मनः पुत्रीयतीत्यादावात्मन इति संसर्ग-लभ्यार्थानुवादः । आत्मन इति पदे पुत्रादिसाकाङ्क्षे प्रयुज्यमाने-[3]प्रयुज्यमाने वा क्यज् भवतीत्यनुशासनार्थ इत्यपि केचित् ।**

ननु भ्रातुष्पुत्रमिच्छतीत्यादिपरकीयत्वेन पुत्रविषयकेच्छायामपि कुतो न क्यजित्यत आह—**स्वत्ववृत्ति**रिति । पुत्रीयतीत्यादौ कर्तृवाचकपदस्या श्रवणात्तन्निष्ठप्रकारतायाः कुतो लाभ इत्यत आह—**समभिव्याहारे**ति । **न प्रयोग** इति । तत्र पुत्रो भ्रातुः स्वं भवत्वितीच्छानिरूपितायाः स्वत्ववृत्ति-विषयताया भातृनिष्ठप्रकारतानिरूपितत्वम्, न तु समभिव्याहृतदेवदत्तादिकर्तृ-निष्ठप्रकारतानिरूपितत्वमिति भावः ।

निरुक्तसंसर्ग एव तत्राकाङ्क्षालभ्य इत्यत्र क्यज्विधायकं सूत्रमेव प्रमाण-यति—**अतएवे**ति । निरुक्तसंसर्गस्यैव प्रकृत्यर्थपुत्रादिप्रकारतावच्छेदकत्वा-देवेत्यर्थः । **संसर्गविशेषप्रापकं** निरुक्तसंसर्गस्याकाङ्क्षाप्रयोज्यत्वज्ञापक-मित्यर्थः ।

ननु तर्हि पुत्रीयतीत्यादिवाक्ये आत्मन इत्युपादानं निरर्थकम्, तदर्थस्य संसर्गमर्य्यादयैव लाभादित्यत आह—**आत्मनः पुत्रीयतीत्यादावि**ति । तथा च तदुपादानं तत्र तात्पर्य्यमात्रग्राहकमिति भावः । सूत्रस्थात्मन इत्यस्यान्यमर्थं योजयति—**पुत्रादिपदसाकाङ्क्ष** इति । तेन भ्रातुष्पुत्रीयतीत्यादिप्रयोग-वारणम्, तत्रात्मन इत्यस्य भ्रातृपदेनैव साकाङ्क्षत्वादित्यर्थः ।

---

१ ०तत्तत्पुरुषनिष्ठ० इति मु० पु० पा० ।

२ ससर्गविशेषाभिप्रायकमेव इति मु० पु० पा० ।

३ अप्रयुज्यमाने इति पा० ना० मु० पु० ।

पुत्रपितरि गोस्वामिनि चात्मनि पुत्रगोपदयोर्लक्षणा। तथा च पुत्रपितरं गोस्वामिनमात्मानमिच्छतीति पुत्रीयति गव्यतीत्यादेरर्थ इत्यपरे।

अशनायति उदन्यति धनायतीत्यादौ बुभुक्षापिपासालिप्सासु क्यजर्थेषु कर्म्मद्रव्यस्याशनस्योदकस्य धनस्य चान्वयः। "अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु" इति सूत्रेण बुभुक्षात्वादेरेव क्यच्प्रवृत्तिनिमित्तत्वलाभात्। भोजनसमानकर्तृकतादिच्छास्वरूपबुभुक्षादिपर्य्यायाणां क्यचामर्थे व्यधिकरणभोजनादेरन्वयासम्भवात् परस्याशनायतीत्यादिको न प्रयोगः।

क्षीरस्यति बालः, लवणस्यत्युष्ट्रः, दधिस्यति दध्यस्यति वा नरः, मधुस्यति मध्वस्यति वा भ्रमर इत्यादौ सुगसुगागमोपसन्दानितस्य

निरुक्तसंसर्गेण पुत्रादीना नेच्छायामन्वयः, किन्तु पुत्रादिपदमेव पुत्रपित्रादिपरं तेनैव भ्रातुष्पुत्रीयतीत्यादिप्रयोगवारणमिति वदताम्मतमाह—**पुत्रपितरी**ति। पितुः सिद्धत्वेनेच्छाविशेष्यत्वासम्भवेपि तद्विशेषणपुत्रादीनामसिद्धतया तद्विशेष्यकत्वमेवेच्छायां पर्य्यवसितं बोध्यम्।

इच्छाविशेषार्थकक्यचमुदाहरति—**अशनायती**ति। **कर्म्मद्रव्यस्ये**ति। बुभुक्षादिकर्म्मबोधकस्येत्यर्थः। तेनाशनस्य व्यापारात्मकत्वेन द्रव्यत्वविरहेपि न क्षतिः। अथवाशनपदं भोजनसाधनीभूतौदनादिवाचकमेव, करणल्युडन्तत्वादिति बोध्यम्। **धनस्य चान्वय** इति। तथा चाशनादिकर्म्मकस्वकीयभोजनेच्छावानित्यादिको वाक्यार्थबोध इत्यर्थः। परकीयभोजनादीच्छायामुक्तप्रयोगान् वारयति—**भोजनसमानकर्तृके**ति। "धातोः कर्म्मणः समानकर्तृकादिच्छायां वा" इति सूत्रेण स्वविषयसमानकर्तृकेच्छायामेव सनो विधानादित्यर्थः। **व्यधिकरणभोजनादेरि**ति। परकीयानां भोजनादिव्यापाराणां परस्मिन्नेव सत्त्वात्तत्रेच्छाया असत्त्वाद्वैयधिकरण्यं तेषां बोध्यम्।

**दधिस्यती**ति। **सुगसुगागमोपसन्दानितस्ये**ति। "अश्वक्षीरवृषलवणा-

क्यचोर्थे धारापन्नेच्छास्वरूपलालसायां क्षीरादेः कर्म्मतयान्वयः।

अश्वस्यति वडवा वृषस्यति गौरित्यादौ मैथुनेच्छायां क्यचः शक्तिः, मैथुने कर्त्तृतयाश्वस्येच्छायां [1]प्रकारितया मैथुनस्यान्वयादश्वकर्त्तृकमैथुनप्रकारकेच्छावती वडवेत्याद्यन्वयबोधेन फलतोश्वो मैथुनं करोत्वितीच्छालाभः। मैथुनस्येच्छान्वये मैथुनत्वावच्छिन्नप्रकारताया एव संसर्गत्वान्मैथुनेश्वकर्त्तृकत्वस्योप[2]रञ्जकत्वात्।

यत्तु मैथुनप्रकारकेच्छायां कर्म्मतयाश्वस्यान्वय इति।

नामात्मप्रीतौ क्यच्" इति सूत्रेण क्यचि परे क्षीरस्यति लवणस्यतीत्यत्रासुगागमस्य "सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ" इति वार्त्तिकेन दधिस्यतीत्यादौ लालसार्थे सुगसुगित्यागमद्वयस्य विधानात्ताभ्यां विशिष्टस्येत्यर्थः। **धारापन्नेच्छे**ति। एकविषयिणी पूर्वापरीभाववत्यनेकेच्छेत्यर्थः। तत्कारणेष्टसाधनत्वज्ञानादीनां धारापन्नत्वे तस्या धारापन्नत्वमौचित्यावर्जितमिति तादृशीच्छा लालसेति भावः।

**मैथुनेच्छायामि**ति। "अश्वक्षीर"...इत्याद्युक्तसूत्रेण विहितस्यासुकः "अश्ववृषयोर्म्मैथुनेच्छायाम्" इति वार्त्तिकेन मैथुनार्थे एव नियमनात् तत्रैव क्यचः शक्तिरित्यर्थः। **मैथुन** इति। एकदेशान्वयस्यापि व्युत्पत्तिवैचित्र्येणानेकत्रोपगमात्। तदनभ्युपगमे तु मैथुने इच्छायाञ्च पृथगेव क्यचः शक्तिर्बोध्या। ननु मैथुने कर्त्तृतयाश्वस्यान्वयेश्वकर्त्तृकमैथुनं करोत्वित्याकारकतैवेच्छायास्स्यान्न तूक्ताकारतेत्यत आह—**मैथुनस्ये**ति। **मैथुनत्वावच्छिन्ने**ति। मैथुनत्वमात्रावच्छिन्नाया एव, न त्वश्वकर्त्तृकत्वावच्छिन्नाया अपीत्यर्थः। **उपरञ्जकत्वादि**ति। उपलक्षणत्वादित्यर्थः।

**कर्म्मतये**ति। विशेष्यतारूपविषयतयेत्यर्थः। तथा चाश्वस्योपरञ्जकत्वाभावेपीच्छाया उक्ताकारकत्वं सुलभमित्याशयः।

---

१ प्रकारतया इति मु० पु० पा०।

२ उपरञ्जकत्वाभावात् इति मु० पु० पा०।

**तन्न, तथा सति धात्वर्थान्तर्भूतकर्म्मकत्वेन शब्दायतेरिवाश्वस्यतेरप्यकर्म्मकत्वापत्तेः । तथा च "रविरथहयानश्वस्यन्ति ध्रुवं वडवा नलप्रतिबलबलावस्थायिन्यः समीक्ष्य समीपगान् । निजपरिवृढं गाढप्रेमा रथाङ्गविहङ्गमी स्मरशरपराभूतस्वान्ता वृषस्यति सम्प्रति ॥" इति नैषधचरितप्रयोगोपि व्याहन्येत ।**

**यदि कर्त्तृतया मैथुनेश्वस्य मैथुनस्य च कर्म्मतयेच्छायामन्वयः, तदा कर्म्मणोनभिधानाद्युज्यत एव हयेभ्यो द्वितीया विभक्तिः । स्वकर्त्तव्यत्वेन पाकमिच्छति स्वेन पाकं चिकीर्षतीतिवत् । अश्वस्यतिवृषस्यन्तीधातू कामे रूढौ । अतएव "वृषस्यन्ती तु कामुकी" इत्यमरः**

**अकर्म्मकत्वापत्तेरि**ति । शब्दायतीत्यादीनामकर्म्मकत्वोपपत्तये "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्म्मणोकर्म्मिका क्रिया ॥" इत्यनेन धात्वर्थे कर्म्मणोन्तर्भावे धातोरकर्म्मकत्वस्यानुशासनादिति भावः । इष्टापत्तौ महाकविप्रयोगस्याप्रामाण्यप्रसङ्गं बाधकमाह—**तथा चे**ति । **व्याहन्येते**ति । अश्वस्यतेरकर्म्मकत्वेन तद्योगे हयानिति द्वितीयाया अनुपपत्तेरित्याशयः । अपिना तयोरकर्म्मकत्वस्यानुभवविरुद्धत्वं सूचितम् ।

अश्वस्य कर्त्तृतया मैथुनेन्वयोपगमे तत्र द्वितीयामुपपादयति—**यदि कर्त्तृतये**ति । **कर्म्मणोनभिधानादि**ति अश्वस्य मैथुनकर्त्तृत्वेन धातुनाभिधानेपि प्रधानीभूतेच्छाकर्म्मत्वेनाभिधानविरहादित्यर्थः । अप्रधानीभूतार्थकारकस्याभिधानेपि प्रधानीभूतार्थकारकस्यानभिधानप्रयोज्या द्वितीया साधुरित्यत्र दृष्टान्तमाह—**स्वकर्त्तव्यत्वे**ति । तथा च तत्र कृतिकर्म्मत्वेन पाकस्याभिधानेपीच्छाकर्म्मत्वेन तदनभिधानाद्यथा द्वितीया, तथा प्रकृतेपि मैथुनकर्त्तृत्वेनाश्वस्याभिधानेपीच्छाकर्म्मत्वेनानभिधानाद्धयपदोत्तरं द्वितीया साधुरिति भावः । ननु मैथुनस्य स्त्रीपुंसोभयकर्त्तृतया तत्कर्म्मतया चाश्वस्य कर्म्मत्वेनापि धातुनाभिधानमावश्यकमेवेति तत्र द्वितीयानुपपत्तिस्तदवस्थैवेत्यत आह—**अश्वस्यती**ति । **कामे रूढावि**ति । तथा च मैथुनेच्छायां तदनुशासनं क्यजन्तधातोरेव मैथुनेच्छार्थकत्वं ज्ञापयति, न तु क्यङ्मात्रस्य तदर्थकत्वमिति प्रकृतेश्वस्य धात्वर्थकर्म्मणः सर्वथैवानभिधानमित्याशयः । **अतएव** अश्वस्य-

कामुकीपर्य्याये वृषस्यन्तीमगणयत्। "जारं वृषस्यति बन्धकी" इति च प्राञ्चः प्रयुञ्जत इत्यपि वदन्ति।

एतेन क्यच्पर्य्यायो यशःकाम्यति पुत्रकाम्यति सर्पिष्काम्यति किङ्काम्यति स्वःकाम्यतीत्यादौ काम्यच्प्रत्ययोपि व्याख्यातः। मान्तादव्ययाच्च क्यचो निषेधेपि काम्यचस्तदभावात्। किम्यति स्वर्य्यतीतिवत् किंकाम्यति स्वःकाम्यतीति प्रयोगेसाधुत्वायोगात्।

तथा पुत्रीयति पौरं निशान्तीयति रणे इत्यादावाचारसदृशाचारस्य

त्याद्योर्मैथुनेच्छामात्रे शक्तत्वादेव। मैथुनेच्छामात्रे वृषस्यतेः प्राचां प्रयोगं प्रमाणयति—जारमिति। प्रयुञ्जत इति। अन्यथा वृषकर्त्तृकमैथुनेच्छायां जारकर्म्मकत्वस्यायोग्यतया तदनुपपत्तिरेव स्यात्। अश्वस्यतेस्तादृशार्थकत्वे तूक्तनैषधीयचरितप्रयोगस्यैवान्यथानुपपत्तिः प्रमाणमिति भावः।

एतेन क्यच्प्रत्ययार्थोपवर्णनेन। काम्यच्प्रत्ययोपीति। "काम्यच्च" इति सूत्रेणोक्तार्थे विहितः काम्यच्प्रत्यय इत्यर्थः। व्याख्यात इति। तस्यापीच्छार्थस्तस्यान्वयोपि पूर्ववदेवेत्यर्थः। क्यचो निषेधेपीति। "मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यज्न" इति वार्त्तिकेनेत्यादिः। क्यचस्तदभावादिति। काम्यचस्तत्पर्य्यायत्वेपि निषेधस्य तन्मात्रविषयकत्वात्काम्यचो निषेधाभावादित्यर्थः। असाधुत्वायोगादिति। यथा किम्यतीत्यादेरसाधुत्वम्, तथा किङ्काम्यतीत्यादेर्नेत्यर्थः।

इच्छार्थकक्यचं निरूप्याचारार्थकं निरूपयति—तथा पुत्रीयतीति।

---

१ प्रयोगोय मु० पु० ना०।

२ अपिपदघटितः पा० मु० पु०।

**क्यजर्थस्यैकदेशे पुत्रादेः कर्म्मतया निशान्तादेरधिकरणतयान्वयः। प्रथमाचारस्य कर्म्मण्यधिकरणे चाभिहितेपि द्वितीयाचारकर्म्माधिकरणयोरनभिधानात् पौरे रणे च द्वितीयासप्तम्यौ।**

**आचारश्चात्र संवर्द्धनविहारादिस्सर्वनामन्यायेन शक्यः। तेन पुत्रकर्म्मकसंवर्द्धनसदृशपौरकर्म्मकसंवर्द्धनानुकूलायाः निशान्ताधिकरणकविहारसदृशरणाधिकरणकविहारानुकूलाया नरपतिकर्त्तृकभावनाया लाभः।**

**क्यजर्थस्य** "उपमानादाचारे" इति सूत्रेण "अधिकरणाच्चेति वक्तव्यम्" इति वार्त्तिकेन च विहितयोः क्यचोरर्थस्येत्यर्थः। **कर्म्मतये**ति। उक्तसूत्रेणोपमानवाचकात्कर्म्मण एव वार्त्तिकेन चाधिकरणार्थकादेव क्यचो विधानेनान्यसंसर्गस्याकाङ्क्षाभास्यत्वस्य तत्रासम्भवादित्यर्थः। **निशान्तो** गृहम्। **अभिहितेपी**ति। सुबन्तादेव क्यचो विधानेन पुत्रनिशान्तपदोत्तरद्वितीयासप्तमीभ्यां तयोरभिधानेपीत्यर्थः।

आचारस्य व्यापारमात्रस्वरूपत्वे यत्किञ्चिदाचारमादायातिप्रसङ्गादाह—**आचारश्चात्रे**ति। संवर्द्धनादीनां तत्तद्रूपेण वाच्यत्वेननुगमान्नानार्थत्वापत्तिः। पुत्रीयतीत्यादितो वोधे जातेपि संवर्द्धनत्वादिविशेषरूपावच्छिन्नसंशयस्यानिवृत्तिश्चेत्यत आह—**सर्वनामन्यायेने**ति। बुद्धिविषयतावच्छेदकत्वेन संवर्द्धनत्वादिकमनुगमय्य तदवच्छिन्नसदृशस्तादृशाचारः क्यच्प्रत्ययवाच्य इति भावः। यथा च बुद्धिविषयतावच्छेदकत्वस्योपलक्षणत्वेपि शक्यतावच्छेदकानुगमकत्वं तथोक्तमधस्तात्। **भावनाया लाभ** इति। मीमांसकैराख्यातार्थभावनाप्रकारकस्यैवान्वयवोधस्योपगमात्तन्मतमनुसृत्येदम्। तादृशसंवर्द्धनानुकूलकृतिमानिति न्यायमते बोध ऊह्यः।

सादृश्यस्य संसर्गमर्य्यादयैव लाभसम्भवात् स्वस्य स्वावच्छिन्नान्वयितावच्छेदकत्वमपीह . व्युत्पत्तिवैचित्र्येणोपेयते भेदसम्बन्धेन सादृश्यातिरिक्तेन वा सम्बन्धेनैव तथात्वस्य व्युत्पत्तिविरुद्धत्वमिति संवर्द्धनत्वादिमात्रमेवोपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वेनानुगतीकृतं क्यच्प्रवृत्तिनिमित्तमिति

---

१ प्रथमाचारे इत्यधिक. पा० मु० पु०।

रसिकास्तु क्यच आचारः संवर्द्धनत्वविहारत्वादिप्रातिस्विकधर्म्मावच्छिन्न एव सर्वनामन्यायेन शक्यः। तस्य च व्युत्पत्तिवैचित्र्यात् सादृश्यसंसर्गेण तद्धर्म्मावच्छिन्न एवान्वयः। अतएव पुत्रीयति शत्रुमित्यादौ शत्रुकर्म्मके ताडने पुत्रकर्म्मकस्य[1] संवर्द्धनस्य[2] न सादृश्येनान्वयः, विभिन्नरूपावलीढयोरन्वये क्यचः सामर्थ्यविरहात्। तद्धर्म्मस्वरूपमेवात्र सादृश्यम्।

अतएव "वादेर्ल्लोपे समासे सा कर्म्माधारक्यचि क्यङि। कर्म्मकर्त्रोर्णमुल्येतद्द्विलोपे क्विप् समासगा॥" इति कारिकया निर्दिष्टा सादृश्यवाचकलुप्तोपमा "पौरं सुतीयति मुहुस्समराङ्गणेसावन्तःपुरीयति" इत्यत्रोदाहृता। अन्यथा क्यचः सादृश्यवाचकत्वे तल्लो-

वादिनामालङ्कारिकाणाम्मतमाह—**रसिकास्त्वि**त्यादिना। **तद्धर्म्मावच्छिन्न** इति। संवर्द्धनत्वाद्यवच्छिन्न इत्यर्थः। एवकारव्यवच्छेद्यमाह—**अतएवे**ति। तद्धर्म्मावच्छिन्ने तद्धर्म्मावच्छिन्नस्यान्वयादेवेत्यर्थः। **सामर्थ्यविरहादि**ति। निराकाङ्क्षत्वादित्यर्थः। भेदघटितस्य सादृश्यस्य तद्धर्म्मावच्छिन्ने तद्धर्म्मावच्छिन्नसंसर्गत्वासम्भवादाह—**तद्धर्म्मस्वरूपमि**ति। तथा च भेदाघटितमेव प्रकृते सादृश्यम्। तेन न तस्य प्रकृते संसर्गत्वानुपपत्तिरिति भावः।

**अतएव** सादृश्याघटितस्य संवर्द्धनत्वाद्यवच्छिन्नमात्रस्य क्यजर्थत्वादेव। **सादृश्यवाचकलुप्तोपमे**ति। षड्विधवादिलुप्तोपमान्तर्गतेत्यर्थः। **पुरीयतीत्यत्रे**ति। "विचित्रचरित्रचुञ्चुः। नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना॥" इति शेषः। **उदाहृते**ति। कर्म्माधिकरणयोः क्यचि क्यङि च वादिलुप्तोपमात्वेनेत्यादिः। **अन्यथे**त्यस्य विवरणं क्यचः सादृश्य-

---

१ पुत्रकर्म्मस्य इति मु० पु० पा०।

२ च इत्यधिकः पा० मु० पु०।

पोदाहरणमसङ्गतं भवेदित्याहुः।

वस्तुतस्तु पुत्रपदं पुत्रकर्म्मके निशान्तपदं निशान्ताधिकरणके[1] आचारे निरूढलाक्षणिकम्। तदर्थ उपमानोपमेयभावसंसर्गेण क्यजर्थ आचारेन्वेति। अतएव "उपमानादाचारे" "अधिकरणाच्चेति वक्तव्यम्"

वाचकत्व इति। असङ्गतमिति। सादृश्यवाचकस्य क्यचस्तत्र लोपाभावेन तल्लोपोदाहरणं न सङ्गच्छत इति भावः।

आहुरित्यस्वरसोद्भावनम्। स च तद्धर्म्मावच्छिन्नस्याभेदेन तदतिरिक्तेन वा केनापि सम्बन्धेनान्वयस्य विरुद्धत्वम्। अन्यथा घटो घटः, घटो न घटः, कर्म्म गच्छतीत्यादीनामपि प्रामाण्यप्रसङ्गः। सादृश्यातिरिक्तेन संसर्गेण तथात्वोपगमे तु संसर्गे सादृश्यातिरिक्तत्वस्य बलवत्प्रमाणागम्यत्वम्। न च वाग्देवतावतारमम्मटभट्टोक्तोदाहरणमेव तद्गमकं प्रमाणमिति वाच्यम्, तस्यान्यथा नेयत्वात्। तथाहि—क्यच आचारसदृशाचारार्थकत्वेप्याचारनिष्ठमाचारप्रतियोगिकमेव सादृश्यं तद्वाच्यन्न तु प्रकृतोदाहरणत्वेन विवक्षिताया उपमानेन सुतादिनोपमेयस्य पौरजनादेः सादृश्यप्रतिपादकत्वम्। तयोः सादृश्यन्तु तुल्याचारकर्म्मत्वं साधारणीकृत्यैव प्रतीयत इति तयोः सादृश्यवाचकस्येवादेस्तत्राभावेन तल्लोपोदाहरणत्वस्य तत्र निराबाधत्वम्। इयाँस्तु विशेषो यदियमुपमा न श्रौती, किन्त्वार्थी, सादृश्यवाचकेवादिपदसत्त्व एव तस्याः सत्तायाः आलङ्कारिकैः सिद्धान्तितत्वादिति।

आचारसदृशाचारस्य क्यजर्थत्वे सूत्रविरोधः। आचारस्य तत्त्वे निरुक्तास्वरस इति विभाव्य क्यच आचारमात्रार्थकत्वमेव सिद्धान्तयितुं निरुक्तानुपपत्तिञ्च वारयितुं प्रकारान्तरमाह—**वस्तुतस्त्वि**त्यादिना। **पुत्रकर्म्मक** इति **आचार** इत्यनेनान्वितम्। **उपमानोपमेयभावः** सादृश्यम्। **अतएव** पुत्रपदस्य पुत्रकर्म्मकाचारे निरूढलाक्षणिकत्वात् क्यच आचारमात्रार्थकत्वादेवेत्यर्थः। **उपमानादाचार** इति। उपमानात्कर्म्मणः सुबन्तादाचारेर्थे क्यच् स्यादित्यर्थकम्। "अधिकणाच्चेति वक्तव्यम्" इति तत्सूत्रस्यैव वार्त्तिकमुपमानादधिकरणात्

---

१ च इत्यधिकः पा० मु० पु०।

**इत्यनुशासने क्यच्प्रकृतेरुपमानपदत्वं निरूढलक्षणालभ्याचारविशेषण-कर्म्माधिकरणार्थकत्वं क्यचश्चाचारमात्रवाचकत्वमुक्तं सङ्गच्छते ।**

**सम्भवति च क्यच्क्यङोरेकरूपेण यत्वेनैवाचारे शक्तिः । क्यच्प्रकृतेराचारस्य तत्कर्म्मकतदधिकरणकान्यतरस्यैव प्रतिपादने सामर्थ्यम्, अनुशासनस्य नियमार्थत्वात् ।**

सुबन्तादाचारे क्यज्विधायकम् । **क्यच्प्रकृतेरि**ति । उपमानादिति पञ्चम्यन्तेनोपमानपदोत्तरं क्यचो विधानादुपमानपदस्य तदव्यवहितपूर्वत्वघटितं प्रकृतित्वं बोध्यम् । **उपमानपदत्वमि**त्यस्य सादृश्यरूपोपमानवाचकत्वार्थकत्वे पुत्रादिपदानां तद्विरहेण ततः क्यचो दौर्लभ्यमेव स्यादित्यतस्तस्य लाक्षणिकत्वमाह—**निरूढे**ति । तथोक्तरीत्या पुत्रपदस्य लाक्षणिकत्वे तल्लभ्य आचारे विशेषणीभूतकर्म्मवाचकत्वं पुत्रपदस्य तादृशाधिकरणवाचकत्वं निशान्तपदस्याक्षतमिति तयोः क्यच्प्रकृतित्वमुपपन्नमिति भावः । **आचारमात्रवाचकत्वमि**ति । आचार इति सप्तम्या वाचकत्वार्थकत्वेन निर्विशेषणकाचारबोधकाचारपदेन चाचारमात्रस्यैव क्यज्वाच्यत्वबोधनमित्याशयः । **सङ्गच्छत** इति । अन्यथा पुत्रपदस्य मुख्यार्थकत्वे उपमानपदत्वस्य क्यच आचारसदृशाचारार्थकत्वे आचारमात्रवाचकत्वस्यानुशासनसिद्धस्यासङ्गतिरेव स्यादिति भावः ।

एवं सति "कर्त्तुः क्यङ् सलोपश्च" इत्युत्तरसूत्रेण विहितस्य क्यङोपि नाचारसदृशाचारवाचकत्वं किन्त्वाचारमात्रवाचकत्वम्, तदवच्छेदकस्यैकत्वेन लाघवादुक्तानुशासनानुसाराच्चेत्याह—**सम्भवति चे**ति । **यत्वेनैवे**ति । ककारचकारङकाराणां कचिदप्यश्रूयमाणतया वाचकतावच्छेदकत्वस्याप्रामाणिकत्वात् । एवञ्चानुबन्धद्वयसहितयोस्तयोः पृथगुपादानं प्रकृतेः कर्म्मत्वकर्त्तृत्वभेदस्य क्यङो ङित्त्वात्तदन्तादात्मनेपदस्यैव ज्ञापनाय चेति बोध्यम् । नन्वेवं प्रकृतेः स्वकर्त्तृकस्वकरणकाद्याचारलाक्षणिकत्वेपि क्यच्प्रत्ययप्रसङ्ग इत्याह—**क्यच्प्रकृतेराचारस्ये**ति । **नियमार्थत्वादि**ति । कर्त्रादिभ्योपि क्यच्प्रत्ययस्य साधुत्वे "अधिकरणाच्चेति वक्तव्यम्" इति वार्त्तिकस्योत्तरसूत्रे "कर्त्तुः" इत्यस्य वैयर्थ्यम्,

एतेन [1]वह्निकणकर्त्तृकाचारसदृशाचारकर्त्तृत्वपरिघकरणकाचार-सदृशबाहुकरणकाचारकर्त्तृत्वादितात्पर्य्येण प्रयुक्ताः "मार्त्तण्डकर-[2]निष्टप्तं रजो वह्निकणीयति। असौ समरदुर्धर्षो बाहुना परिघीयति॥" "दैवतीयति विप्रेभ्यः क्रतुकर्म्मणि दीक्षितः। प्रहर्त्तुमुद्यतः शत्रुं गिरिरेष क्षुपीयति॥" इति प्रयोगा न साधवः, किन्तु [3]वह्निकण इव तपति, परिघेणेव बाहुना प्रहरति, दैवतेभ्य इव ब्राह्मणेभ्यो ददाति, क्षुपादिव गिरेः पततीत्यादिवाक्यान्येव प्रयोक्तुं युज्यन्ते।

हंसीयति कीर्त्तिरित्यादौ हंसकर्म्मकाचार एव हंसपदार्थः। क्यजर्थाचारकर्म्मबोधकस्यात्मानमिति पदस्याध्याहारेण हंसमिवात्मान-माचरतीति वाक्यार्थो लभ्यते। अतएव "क्यचि [4]वाद्युपमेयासे" इति कारिकयोपन्यस्ताया वाचकोपमेयलुप्तोपमाया "पुरतो हरिणा-

पूर्वसूत्रे "कर्म्मणः" इत्यस्यानुवृत्तिविरहेण तत्र तत्सम्बन्धस्यासम्भवादित्यतः पूर्वसूत्रवार्त्तिकयोः कर्म्मणोधिकरणादेव च क्यच्प्रत्ययस्य साधुत्वज्ञापकत्व-मित्याशयः।

**एतेन** उक्तरीत्या क्यज्विधायकानुशासनस्य नियमार्थत्वेन। अस्य **प्रयोगा न साधवः** इत्यग्रिमेणान्वयः। **क्षुपः** क्षुद्रवृक्षः।

ननु तर्हि हंस इवाचरतीत्यर्थविवक्षायां हंसीयति कीर्त्तिरित्यादयः कथं प्रयोगा इत्यत आह—**हंसीयती**ति। **हंसकर्म्मके**ति। तथा चोक्तार्थे तादृश-प्रयोगो नेष्यत एवेति भावः। **अतएव** एतादृशस्थले उपमेयवाचकस्याश्रूय-माणतया लुप्तत्वेनाध्याहारेणान्वयबोधजनकत्वादेव। **वाद्युपमेयास** इति। वादय उपमावाचकाः उपमेयश्च तेषामसनमासः [5] क्षेपणं लोप इति यावत्, तत्रेत्यर्थः।

---

१ ०कण० इति पा० ना० मु० पु०।

२ निष्पिष्टम्।

३ रजः इत्यधिकः पा० मु० पु०।

४ वाद्युपमेयासा इति मु० पु० पा०।

५ "असु क्षेपणे" इत्यदादिकादस्धातोः अण्प्रत्यये रूपमिदम्।

क्षीणामेष पुष्पायुधीयति" इति काव्यप्रकाशोक्तमुदाहरणं सङ्गच्छते।

यत्तु आत्मधारणं [1]भवत्यर्थः क्रियात्वेनाचार इति व्यवह्रियते। तस्य च धात्वर्थान्तर्भूत आत्मा कर्म्म, तद्विशेषणस्यापि हि कर्म्मानुवादिका द्वितीया "स्तिमितमस्ति न स्पन्दते" इत्यादौ। तथा च पुष्पायुधाभिन्नात्मधारणं पुष्पायुधभावः क्यच्प्रकृतेरर्थः। क्यचोऽपि भावान्तरं तयोस्सादृश्यं संसर्गः। तथा च पुष्पायुधाभिन्नात्मधारणसदृशात्मधारणवति राजनि "राजा पुष्पायुधीयति" [2]इत्यनेन बोध्यमान आत्मानमितिपदं नापेक्ष्यते, धातुनोक्तार्थस्य पदस्य प्रयोगानर्हत्वात्।

**सङ्गच्छत** इति। उपमेयवाचकस्यात्मानमित्यस्य सादृश्यवाचकेवादिशब्दस्य च तत्राश्रूयमाणत्वात्तदुभयलोपोदाहरणत्वं सङ्गच्छत इति भावः। एकस्यैव कर्त्तृत्वं कर्म्मत्वञ्चात्मानमात्मना वेत्सीत्यादौ विभक्त्यर्थविचारे दर्शयिष्यमाणरीत्या न विरुद्धम्। अतएव "अत्र यद्यपि साक्षादुपात्तः कर्त्रैवोपमेयस्तथापि न तथात्वेन, किन्तु कर्म्मत्वेन। अन्यथा क्यचोसङ्गतत्वापत्तेः" इति प्रदीपोद्योतयोरुक्तम्।

उक्तस्थलेध्याहारमन्तरेणैव पुष्पायुधो भवतीत्यर्थे क्यचः साधुत्वमुपपादयतो मतं निरसितुमाह—**यत्त्वि**त्यादिना। भवत्यर्थस्याप्याचारत्वं क्रियात्वेनाक्षतमेव, तदन्तर्गतकर्म्मस्वरूपात्मवाचकपुष्पायुधपदस्योपमानत्वं कर्म्मत्वञ्चाव्याहतमेवेति ततः क्यचो नानुपपत्तिरित्याशयेनाह—**आत्मधारणमि**ति। **तद्विशेषणस्ये**ति। धात्वर्थीभूतात्मधारणानुकूलव्यापारघटकस्यात्मनः कर्म्मणो विशेषणस्य पुष्पायुधस्येत्यर्थः। **कर्म्मानुवादिके**ति। तादृशात्मनः कर्म्मणो धातोरेव लाभादनुवादकत्वं बोध्यम्। **क्यच्प्रकृतेरर्थ** इति। पुष्पायुधपदस्य तादृशेर्थे लाक्षणिकत्वादित्याशयः। **भावान्तरमि**ति। आत्मधारणव्यापारस्वरूपम्। **नापेक्ष्यत** इति। तदर्थस्य धातोरेव लाभादिति भावः। नन्वेवं

१ भवतेरर्थः इति मु० पु० पा०।

२ इत्यन्तेन इति मु० पु० पा०।

यथा च धात्वर्थान्तर्भूते कर्म्मणि नाख्यातप्रसक्तिर्धातोरकर्म्मकत्वात् तथा प्रतिपादितमधस्तादिति ।

तन्न, भवत्यर्थस्य कर्त्तरि कर्म्मसंज्ञाया अप्रवृत्तेः । "अपादान-सम्प्रदानकरणाधारकर्म्मणाम् । कर्त्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते ॥" इति न्यायात् । अन्यथा पुष्पायुधं भवति मंदन इति प्रयोगप्रसङ्गात् । तारं शब्दायत इत्यत्र तु तारस्य कर्म्मसंज्ञा भवत्यपवादकाभावात् । अतएव श्येन इव भवतीत्यर्थे भवत्यर्थस्वरूपाचारे क्यङ्प्रत्यय एव साधुः । नहि श्येनायत इत्यत्र सकर्म्मकः कश्चिदाचारः क्यङा बोध्यते ।

भूधातोः कर्म्मणि लकारस्यापि प्रसङ्गादात्मा भूयत इति प्रयोगः स्यादित्यत आह—**यथा चे**ति । **अधस्तादि**ति । स्तोकं पचतीत्यस्य विचारे ।

मतमेतन्निराचष्टे—**तन्ने**त्यादिना । **भवत्यर्थस्य कर्त्तरी**ति । भूधात्वर्थ-मुख्यव्यापाराश्रये पुष्पायुधादावित्यर्थः । **कर्म्मसंज्ञाया अप्रवृत्तेरि**ति । तथा च **क्यच्प्रकृतेराचारस्ये**त्यादिनोक्तेन नियमेन पुष्पायुधीयतीत्यत्र क्यचोऽसाधुत्वमेव स्यादिति भावः । ननु धात्वर्थव्यापाराश्रयत्वस्येव तद्विशेषणीभूतधारणस्वरूप-फलवत्त्वस्यापि पुष्पायुधादौ सत्त्वात्कर्म्मसंज्ञापि स्यादेवेत्यत आह—**अपादाने**ति । अयञ्च न्यायः "आकडारादेका संज्ञा" इति सूत्रार्थानुसार्य्येव । तथा च सर्वतः परस्याः कर्त्तृसंज्ञायाः कर्म्मादिसंज्ञाबाधकत्वान्न तत्प्रसङ्ग इति भावः । **अन्यथा** कर्त्तृकर्म्मसंज्ञयोरेकत्र समावेशे । ननु तर्हि धात्वर्थान्तर्भूते शब्दे तादात्म्येन विशेषणीभूतस्य तारादेः कथं कर्म्मसंज्ञेत्यत आह—**तारमि**ति । **अपवादकाभावादि**ति । धात्वर्थीभूतशब्दकरणस्वरूपमुख्य-व्यापाराश्रयत्वस्य तारेऽभावेन कर्त्तृसंज्ञाया अप्रवृत्तेः फलीभूतशब्दवत्तायाश्चाभेदेन तत्र सत्त्वात्कर्म्मसंज्ञायाश्च प्रवृत्तेरिति भावः । **अतएव** भवत्यर्थयोगे तदर्थ-व्यापाराश्रयस्य कर्त्तृत्वेन कर्म्मसंज्ञकत्वाभावादेव । **साधुरि**ति । उपमानात्कर्त्तुः

१ कर्म्माख्यातस्य इति मु०-पु० पा० ।

२ मदनः इति पा० मु० पु० ना० । ३ तु इति पा० ना० मु० पु० ।

स्थिता एव हरितरोहितैतशब्दाः श्रूयन्ते। हरितः पालाशः रोहितो रक्तः, एतः श्वेतः।

त्रय एता भागा यस्या एतादृश्या शलल्या श्वाविल्लोम्नेति वक्तव्ये "त्रेण्या शलल्या विनीय त्रीणि कुशपत्राण्यन्तर्दधाति" इति गृह्यसूत्रदर्शनात्। "लोहितो रोहितो रक्तः" इत्यमरकोशाद्वर्णवाचिनां

सहवाप्रवृत्तिस्सहवानिवृत्तिः" इति न्यायादिति भावः। **पालाश** इति। पालाश-पुष्पवर्णसदृशो वर्णः, "पालाशो हरितो हरित्" इत्यमरात्।

हरितादिशब्दानां वर्णवाचकानामनुदात्तोपधत्वं वर्णवाचकत्वञ्च नाप्रामाणिकमिति सूचयितुमाह—**त्रय एता** इत्यादिना। **श्वाविल्लोम्ना** शल्लकीकण्टकेन। एतच्च **शलल्ये**त्यनेनोक्तम्। **गृह्यसूत्रदर्शनादि**ति। चूडाकरणकर्म्मविधावित्यादिः।

---

१ यद्यपि एतशब्दः 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरात् नानावर्णवाची, तथापि "एतेर्वर्णे तन्" इति सूत्रनिष्पन्नः एतशब्दः श्वेतपर्य्यायोपि, इति कल्पसूत्रव्याख्यातारो धूर्तस्वामिभवस्वामिरुद्रदत्तप्रभृतयो याज्ञिकाः। एतशब्दस्य रूपद्वय भवति। एनी, एता इति। तत्र एतशब्दात् ङीप् तकारस्य नकारश्च। ङीबभावे टाबेव। नत्वन्तु न भवति, ङीपा सन्नियोगशिष्टत्वात्।

२ त्रीणि एतानि श्वेतानि अवयवस्थानानि यस्या इति बहुव्रीहौ त्र्येतशब्दः। तत्र एतशब्दस्य वर्णवाचिनः उपसर्जनत्वात् ङीन्नत्वे न भवतः। अनुपसर्जनादित्यस्य वर्णान्तविशेषणत्वेन त्र्येतशब्दस्यानुपसर्जनत्वात् ङीन्नत्वे भवत एव। णत्वमार्षम्। यजुर्वेदे तु "त्रिएण्या शलल्या निवर्त्तयेत' इति पठितम्। तत्र त्रीणि एतानि श्वेतानि यस्या इति विग्रहः। यणभावो णत्वञ्चार्षमिति वेदभाष्ये भट्टभास्करः। शलली च शलल्याख्यमृगविशेषस्याङ्गरुहा सूचीति याज्ञिकप्रसिद्धः।

३ कुशतरणानि इति मु० पु० पा०।

४ गृह्यशब्देन गृह्यन्ते सगृह्यन्ते औपासनाग्निसाध्यकर्म्माण्यत्रेति व्युत्पत्त्या आपस्तम्बाश्वलायनपारस्करादिप्रणीतकल्पसूत्रविशेष उच्यते।

५ चूडाकरणकर्म्मणि कुशपुष्पाक्षतचन्दनत्रिःश्वेतशल्लकीकटकसहितेन क्षुरेणाचार्य्यः रात्रौ "सहस्रशीर्षा..." इत्यादिषोडशर्चेन कुमारस्य शिखा त्रिर्विभज्य श्वोभाविने वपनायाभिमन्त्रयतीति पारम्परिकोचारश्चात्रैतद्गृह्यसूत्रमूलको ज्ञेयः।

**हरितरोहितलोहितशब्दानामनुदात्तोपधत्वं "वर्णानां तणतिनिता-न्तानाम्" इति फिट्सूत्रेण सिद्धमित्यनुदात्तोपधवर्णवाचिभ्यो ङीपि सिद्धस्य रोहिणीशब्दस्य गुणवृत्त्या योगरूढ्या वा नक्षत्रविशेषे प्रवृत्ति-र्य्यदा, तदा रोहितायत इत्येव। यदि तु हृञः कर्म्मणीव रुहेः कर्त्तर्य्य-पीनन्प्रत्ययेनौणादिकेन हरिण इव रोहिणोपि प्रकृत्यन्तरम्, तदा हरिणायत इतीव रोहिणायत इत्येव प्रमाणम्।**

**वर्णानामि**ति। द्वितीयपादस्य दशमेनानेन सूत्रेण हरितादिशब्दानामादेरुदात्तत्वे "अनुदात्तं पदमेकवर्जम्" इति षष्ठाध्यायप्रथमपादाष्टपञ्चाशदुत्तरशततमेन सूत्रेण "यस्मिन् पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पद-मनुदात्ताच्कं स्यात्" इत्यर्थकेनाद्यज्भिन्नानामचामनुदात्तत्वेनान्त्यादलः पूर्वस्या-चोऽयुपधासंज्ञकस्यानुदात्तत्वादनुदात्तोपधत्वं सिद्धं बोध्यम्। तेन **वर्णानामि**त्यादि-नानुदात्तत्वस्याविधानेपि नासङ्गतिः। **गुणवृत्त्ये**ति। लक्षणयेत्यर्थः। मुख्यार्थस्य पाण्डुरवर्णस्य तादात्म्यं नक्षत्रे बाधितमिति भावः। **योगरूढ्या वे**ति। ज्योति-श्शास्त्रे तन्नक्षत्रस्य रक्तवर्णवत्त्वस्य कथनादच्प्रत्ययान्तरोहितशब्दस्यावयवार्थस्य तत्रानपायादिति भावः। **नक्षत्रविशेष** इति। अश्विनीतश्चतुर्थनक्षत्र इत्यर्थः। **रोहितायत इत्येवे**ति। दर्शितरीत्या ततः क्यङ्प्रत्यये पुंवद्भावे नत्वव्यपगमे तस्यैव साधुत्वमित्यर्थः। **हृञः कर्म्मणीवे**ति। "शास्त्याहृञ्विभ्य इनच्" इत्यौणादिकद्वितीयपादस्थसूत्रेण हृधातोः कर्म्मणीनच्प्रत्ययेन हरिणशब्दस्य निष्पादनेनेवेत्यर्थः। **रुहेः कर्त्तर्य्यपी**ति। "द्रुदक्षिभ्यामिनन्" इति सूत्रेणे-नन्नित्यनुवर्त्तमाने "रुहेश्च" इत्यौणादिकेन तत्पादस्थेनैव सूत्रेण रुहधातोः कर्त्त-रीनन्प्रत्ययेनेत्यर्थः। औणादिकप्रत्ययस्य शक्तिग्राहकताविरहेण "उणादयो-व्युत्पन्नानि प्रातिपदिकानि" इति पक्षाभिप्रायेण **यदि तु** इत्युक्तम्। **रोहिणायत इत्येवे**ति। एवकारोप्यर्थे। उक्तरोहिणशब्दे नत्वव्यपायस्यासम्भवादिति भावः।

सपत्नीशब्दश्चतुर्विधः, शार्ङ्गरवादिगणपठिताच्छत्रौ रूढात्सपत्नीशब्दादुत्पन्नेन ङीना निष्पन्न एको भाषितपुंस्कः, तस्मात्क्यङि तन्निमित्तके पुंवद्भावे सपत्नीवाचरति सपत्नायते। द्वितीयस्तु समानः पतिर्यस्या इति विग्रहे निष्पन्नस्य बहुव्रीहेस्सपतिशब्दस्य "नित्यं सपत्न्यादिषु" इत्यनेनानुशासनेन नादेशे "ऋन्नेभ्यो ङीप्" इति ङीपि कृते नित्यस्त्रीलिङ्गः। पतिशब्दस्य वोढृवाचकतया स्त्रीभिन्ने तद्घटितबहुव्रीहेरप्रसरात्। एतादृशस्थलेनेकसंसृष्टः समानपदार्थः, संसर्गस्तु पदान्तरोपस्थित एव समानपदेनोपस्थाप्यते।

समानोयमावयोर्देशः अधिकरणं भ्राता वेत्यादौ समानपदेनानेकनिरूपितानां निवासत्वाधिकरणत्वभ्रातृत्वादीनां प्रतिपादनात्। [३]समानपतिरित्यत्राप्यनेकवोढा पतिः प्रतीयते तत्परिणीता च बहुव्रीहेः, स्त्रीत्वं

सपत्नीशब्दात् क्यङि प्रयोगाणां वैलक्षण्यं दर्शयति—**सपत्नीशब्द** इति। **ङीने**ति। "शार्ङ्गरवाद्यञो ङीन्" इति सूत्रविहितङीनेत्यर्थः। **भाषितपुंस्क** इति। "क्यङ्मानिनोश्च" इति सूत्रेपि "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" इति सूत्रस्थस्य भाषितपुंस्कमित्यस्यानुवृत्तेस्तादृशस्यैव पुंवद्भावो विहित इत्याशयः। नित्यस्त्रीलिङ्गत्वे हेतुः **पतिशब्दस्ये**ति। सदृशवाचकसमानपदव्यावृत्त्यर्थमाह—**एतादृशस्थल** इति। **अनेकसंसृष्ट** अनेकनिरूपितसंसर्गवान्। **पदान्तरोपस्थितः** पत्यादिशब्देन स्वसमभिव्याहृतेनोपस्थितो वोढृत्वादिरित्यर्थः। एवकारेण संयोगाद्येकविधसंसर्गस्य समानपदवाच्यतावच्छेदकत्वव्यवच्छेदः।

**निवासत्वमि**ति। निवसन्त्यस्मिन्नित्यर्थेधिकरणघञा निष्पन्नस्य निवासपदस्य देशपदसमानप्रवृत्तिनिमित्ततया तदेव समानपदार्थघटकस्संसर्गस्तत्रेत्यर्थः। **समानपतिरित्यत्रे**ति। कर्म्मधारयसमास इत्यर्थः। **अनेकवोढा** इति। अनेकस्त्रीवोढेत्यर्थः। **तत्परिणीता** अनेकवोढृपरिणीता, **बहुव्रीहेः प्रतीयत**

---

१ इतिशब्दो ना० मु० पु०।

२ ० नैक० इति मु० पु० पां०।

३ असमस्त एव पाठः मु० पु०।

ङीपोर्थ इत्यनेकवोढृभिन्नवोढृपरिणीता स्त्री सपत्नीसमुदायार्थः। रुक्मिणी सत्यभामायाः सपत्नीत्यत्र पतिपदार्थे सत्यभामापरिणेतृत्वस्वरूपषष्ठ्यन्तार्थस्यान्वय इति रुक्मिणी रुक्मिण्यास्सपत्नीति न प्रयोगः; बहुव्रीहिणैवोक्तार्थत्वात्। सीतायान्तु न प्रसज्यत एव सपत्नीपदस्य प्रवृत्तिः। अत्र सपत्नीवाचरति सपत्नीयते, भाषितपुंस्कानामेव पुंवद्भावप्रसरात्।

तृतीयस्तु स्वामिपर्य्यायेण पतिशब्देन घटितो बहुव्रीहौ "विभाषा सपूर्वस्य" इत्यनेन गृहपतिः गृहपत्नीत्यादाविव सोपपदस्य पत्युर्न्नादेशे सति सिद्धो भाषितपुंस्कः, सपतिर्दास इति प्रयोगात्। ततः क्यङि सपतीयत इति प्रयोगः, नादेशस्य स्त्र्यधिकारीयत्वेन पुंवद्भावे तदप्रवृत्तेः।

इति पूर्वेणान्वितम्। **षष्ठ्यन्तार्थस्यान्वय** इति। सम्बन्धसामान्यवाचिकायाः षष्ठ्यास्तात्पर्य्यवशाद्विशेषरूपेण तत्तत्सम्बन्धबोधकताया वक्ष्यमाणतया परिणीतपरिणेतृभावस्यापि परिणेतृत्वत्वेन ततो बोधसम्भवादित्याशयः। एतादृशान्वयोपगमप्रयोजनमाह— **रुक्मिणी**ति। प्रयोगाभावे हेतु**र्बहुव्रीहिणै-वे**ति। रुक्मिणीनिरूपितपरिणेतृत्वस्य **रुक्मिण्या** इति षष्ठ्यन्तार्थस्य तत्रान्वयस्यावश्यकतया तस्य चानेकस्त्रीवोढृभिन्नवोढृपरिणीतत्वस्य बहुव्रीहिणा लाभे रुक्मिणीनिरूपितत्वस्य परिणेतर्य्यर्थतो लाभात् "उक्तार्थानामप्रयोगः" इति न्यायान्न तादृश प्रयोग इति भावः। यस्या वोढा नानेकस्त्रीनिरूपितवोढृत्ववान्, तस्यान्न सपत्नीशब्दप्रयोगस्तत्र वोढर्य्यनेकनिरूपितसंसर्गस्याभावादित्याह—**सीतायान्त्वि**ति। **सीता**पदमेकपतिकानां सर्वासामुपलक्षकम्। **अत्र** निरुक्ते द्वितीये सपत्नीशब्दे। **भाषितपुंस्कानामेवे**ति। तथा च नित्यस्त्रीलिङ्गस्य तस्य भाषितपुंस्कत्वविरहे पुंवद्भावविरह इति भावः।

**स्वामिपर्य्यायेणे**ति। पाति रक्षतीति पतिरित्यर्थकस्येत्यर्थः। तस्य भाषितपुंस्कत्वं प्रयोगद्वारा दर्शयति—**सपतिर्दास** इति। **सपतीयत** इति। तत्र नकाराभावे हेतु**र्न्नादेशस्ये**ति।

---

१ सपत्नीपदस्य प्रयोगः इति पा० मु० पु०।

२ पुवद्भावविधिप्रसरात् इति मु० पु० पा०।

३ स्त्र्यधिकारिविषयत्वेन इति मु० पु० पा०।

चतुर्थः सस्य सनामकस्य पत्नीति विग्रहे निष्पन्नस्तत्पुरुषो नित्य-स्त्रीलिङ्गः, तत्पुरुषस्योत्तरपदलिङ्गत्वनियमात्[1]। पत्नीशब्दस्तु पतिशब्द-लक्ष्यार्थे पतिकर्त्तृकयागजन्यफलवति स्त्रीत्वं[2] प्रत्ययार्थं बोधयन्नियतलिङ्ग एव, पुमादौ तदर्थासम्भवात्। "पत्युर्नो यज्ञसंयोगे" इति सूत्रस्य यत्साहित्येन यज्ञाधिकारस्तस्यां स्त्रियां पतिपदार्थे नियमतो न विधायकत्वात्, अत्रापि सपत्नीयत इत्येव [3]प्रमाणम्।

"कुमारविक्रमं वीक्ष्य सेयश्चकिततारका।
सेनादानवसिंहानां शर्व्वरी सुन्दरायते॥"

इत्यादौ शर्व्वरी सुन्दरीवाचरतीति विग्रहे शर्व्वरीशब्दस्य न पुंवद्भावः, क्यङ्परत्वाभावात्; किन्तु सुन्दरीशब्दस्यैव। पाचिकायत इत्यादावपि

**उत्तरपदलिङ्गत्वनियमाद्**िति। "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति सूत्रेणेत्यादिः। पत्नीशब्दस्यानियतलिङ्गत्वे उक्तनियमेनोत्तरपदलिङ्गत्वज्ञापनेपि सपत्नीशब्दस्यानियतलिङ्गत्वमेव स्यादतः पत्नीशब्दस्यानियतलिङ्गत्वं दर्शयति— **पत्नीशब्दस्त्वि**ति। **तदर्थासम्भवाद्**िति। पतिकर्त्तृकयागजन्य-फलवत्त्वस्वरूपपतिशब्दार्थस्य पत्यौ तत्परिणीतायां स्त्रियाञ्च सत्त्वादन्यत्र पुमादौ तदभावादित्यर्थः। **यत्साहित्येन यज्ञाधिकार** इति। "यत्कर्त्तव्यं तदनया सह" इति श्रुत्या स्त्रीसाहित्येनैव पुरुषस्य यज्ञादिष्वधिकारस्य बोधनादित्याशयः। **सपत्नीयत इत्येवे**ति। भाषितपुंस्कत्वाभावेन पुंवद्भावादी-नामसम्भवात्।

**कुमारविक्रममि**ति। रघुवंशे रघोर्दिग्विजयवर्णनप्रसङ्गे पद्यमिदम्। कुमारस्य रघोः पराक्रमं वीक्ष्येत्यर्थः। **शर्व्वरी सुन्दरीवे**ति। शर्वरी रात्रिः सुन्दरीवेत्युपमितसमासनिष्पन्नः पुरुषव्याघ्र इत्यादिरिव शर्वरीसुन्दरीशब्दः। **क्यङ्परत्वाभावाद्**िति। इदमुपलक्षणम्। शर्वरीशब्दस्य नियतस्त्रीलिङ्गत्वेन

१ ० पद० इति ना० मु० पु०।
२ स्त्री० इत्यधिकः पा० मु० पु०।
३ 'प्रमाणम्' इत्यस्य स्थाने प्रयोगः इति पा० मु० पु०।

कोपधस्य पुंवद्भावनिषेधो वाचनिकः।

एवं कष्टायत इत्यादावुत्कटचिकीर्षायामुत्साहे क्यङर्थे कष्टपदार्थस्य पापस्यान्वयः। सत्रकष्टकृच्छ्रगहनशब्दानां पापं लक्ष्यार्थः, क्यङर्थे क्रमणे निरुक्तोत्साहस्वरूपे विशेषणम्, तेन सत्रायत इत्यतः पापायोत्सहत इति पूर्वसदृशो बोधः।

रोमन्थं वर्त्तयति रोमन्थायत इति प्रयोगे निगीर्णोद्गीर्णद्रव्यं रोमन्थस्तस्य कर्म्मतया क्यङर्थे हनुकर्म्मस्वरूपचर्व्वणेन्वयः।

भाषितपुंस्कत्वाभावादित्यपि द्रष्टव्यम्। **वाचनिक** इति। "न कोपधायाः" इति सूत्रानुशिष्ट इत्यर्थः।

**कष्टायत** इति। अत्र चतुर्थ्यन्तात्कष्टशब्दात्क्रमणेर्थे क्यङ्विधायकेन "कष्टाय क्रमणे" इति सूत्रेण क्यङ्प्रत्ययस्तत्र क्रमणमुत्साहस्स चेच्छाविशेष एवेत्याह—**उत्कटचिकीर्षायामि**ति। औत्कट्यं विषयताविशेषः। **पापस्यान्वय** इति। विषयतयेत्यादिः। तथा च पापविषयकोत्कटचिकीर्षावानित्यन्वयबोधः। **सत्रकष्टे**ति। उक्तसूत्रस्थेन "सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्" इति वार्त्तिकेन कण्वस्य पापस्य चिकीर्षायामेव क्यङो विधानात् पापचिकीर्षायाः क्यङर्थत्वे सत्रादिपदार्थानानन्वयापत्तिभयात्सत्रादिपदानां पापे लक्षणेत्याशयः। **पापायोत्सहत** इति। इदञ्च कष्टायेति चतुर्थीं तादर्थ्ये, ततश्च कष्टाय क्रमत इति विग्रहमनुसृत्योक्तम्। वस्तुतस्तु "यथोत्तरं मुनीनां प्रामाण्यात्" (इति) वार्त्तिकानुसारेण पापं चिकीर्षतीत्यस्वपदविग्रहो बोध्यः। बोधस्तु समान एवेति।

रोमन्थतपोभ्यां कर्म्मभ्यां क्रमेण वर्त्तनायां चरणे चार्थे क्यङ् स्यादित्यर्थकेन "कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" इति सूत्रेण विहितं क्यङमुदाहरति—**रोमन्थमि**ति। **हनुकर्म्मस्वरूपे**ति। हनुर्वक्त्रैकदेशस्तद्व्यापारश्चर्वितस्या-

१ इत्यर्थे इत्यधिकः पा० मु० पु०।

हनुचलनभिन्ने [१]वत्त्यर्थेपाननिपातद्रव्ये च रोमन्थपदार्थे कीटो रोमन्थं वर्त्तयतीति वाक्यमेव प्रमाणम्, "हनुचलन इति वक्तव्यम्" इति वार्त्तिकात् । [२]अपाननिपातद्रव्यस्य निगरणं सञ्चयो वा [३]वृत्त्यर्थः ।

तपस्यतीत्यादौ रागप्राप्तस्य भोजनादेः परिहारस्तपः, तत्सङ्कल्पे क्यङर्थेन्वेति । सङ्कल्पस्तु [४]प्रत्यवायसाधनव्यतिरेकप्रतियोगिविषयिणी चिकीर्षा । अतएव परस्मैपदमानुशासनिकम् ।

वाष्पायते फेनायते उष्मायत इत्यत्रोद्वमने, शब्दायते वैरायते कलहायते अभ्रायते कण्वायते मेघायते सुदिनायते दुर्दिनायते [५]इत्यादौ करणे क्यङर्थे कर्म्मतया [६]प्रातिपदिकार्थस्यान्वयः । कण्वं पापम् । सुखायते दुःखायत इत्यादौ वेदने क्यङर्थे सुखादेर्विषयतासामानाधि-

कृष्य पुनश्चर्वणं तत्रेत्यर्थः । एतच्च "हनुचलन इति वक्तव्यम्" इति वार्त्तिकेन व्यापारविशेषस्यैव सूत्रस्थचरपदेन बोधनादुक्तम् ।

**रागप्राप्तस्ये**ति । इच्छाविषयीभूतस्येत्यर्थः । **आनुशासनिकं** "तपसः परस्मैपदञ्च" इति वार्त्तिकसिद्धमित्यर्थः ।

**उद्वमन** इति । "वाष्पोष्मभ्यामुद्वमने" "फेनाच्च" इति सूत्रवार्त्तिकाभ्यां तत्र क्यङ्विधिः । **करणे क्यङर्थ** इति । "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" "सुदिनदुर्दिननीहारेभ्यश्च" इति सूत्रवार्त्तिकाभ्यां करणेर्थे क्यङो विधानादित्यर्थः । **वेदन** इति । "सुखादिभ्यः कर्त्तृवेदनायाम्" इति सूत्रेण विहितस्य

१ अपाननिस्सृतद्रव्ये इति मु० पु० पा० ।
२ अपाननिस्सृतद्रव्यस्य इति मु० पु० पा० ।
३ वर्तयत्यर्थः इति मु० पु पा० ।
४ तत् इत्यधिकः पा० मु० पु० ।
५ नीहारायते इत्यधिकः पा० मु० पु० ।
६ प्रातिपादिकस्य इति पा० मु० पु० ।

करण्योभयसम्बन्धेनान्वयः। तेन परस्य सुखायत इति न प्रयोगः।

भृशायते सुमनायते दुर्मनायत इत्यादौ प्रकृत्यर्थैकदेशा उपचय-सौमनस्यवैमनस्यादयः क्यङर्थेभूततद्भावस्वरूपायामुत्पत्तावाधेयतया प्रकृत्यर्थस्त्ववच्छेदकतयान्वेति।

एवं लोहितायति लोहितायते पटपटायति पटपटायत इत्यादौ लोहितगुणस्य पटपटानुकार्य्यशब्दादेः क्यषर्थे उत्पत्तावन्वयः।

यत्तु "लोहितादिडाज्भ्यः क्यष्" इति सूत्रे आदिपदश्रवणात् "लोहित-श्यामदुःखानि हर्षगर्वसुखानि च। मूर्च्छानिद्राकृपाधूमाः करुणा नित्य-चर्म्मणी[1]॥" इति परिगणनम्, तत् "लोहितादिडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि" इति वार्त्तिकविरुद्धम्। तेन हि वार्त्तिकेन लोहित-शब्दस्य डाच्प्रत्ययान्तस्य क्यष्, श्यामादेस्तु भृशादिगणपठितक्यङेव साधुरिति बोध्यते। तेन श्यामायतीति न प्रमाणम्, "वा क्यषः"

क्यङो वेदनामात्रमर्थस्तत्र कर्त्तृनिष्ठत्वस्य संसर्गमर्य्यादयैव लाभसम्भवादि-त्यर्थः। अतएव विषयतामात्रं विहायोभय**सम्बन्धेनान्वय** इत्युक्तम्। सामाना-धिकरण्यनिवेशस्य फलमाह—**तेने**ति।

**प्रकृत्यर्थैकदेशा** इति। भृशादिपदानां धर्म्मिवाचकतयोपचयादेर्धर्म्मस्य तदेकदेशत्वात्। **अभूततद्भावस्वरूपाया**मिति। अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यादित्यर्थकेन "भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" इति सूत्रेण विहितस्य क्यङ उत्पत्तिमात्रमर्थो भुवीत्युपादानादभूततद्भावस्तु स्वरूपसन्नपेक्षित इति भावः।

**एवमि**ति। पदार्थैकदेश एव तत्राप्यन्वय इति भावः। उभयप्रयोगस्तु परस्मैपदस्य "वा क्यषः" इत्यनेन वैकल्पिकत्वात्। **परिगणनमि**ति। तथा च श्यामायति श्यामायत इत्युभयमप्येतन्मते प्रमाणमिति। विरोधमेवोपपादयति—**तेन ही**त्यादिना।

---

१ जिह्मचर्म्मणि इति सिद्धान्तकौमुद्या पाढः।

इत्यनेन [1]विभाषया परस्मैपदविधानात् ।

उत्पुच्छयते विपुच्छयते परिपुच्छयत इत्यादौ णिङर्थेषूत्क्षेपविविधक्षेपपरितःक्षेपेषु पुच्छस्य, सम्भाण्डयते सञ्चीवरयत इत्यत्र राशीकरणे भाण्डस्य, अर्जने परिधाने च चीवरस्य, अनुलोमयतीत्यत्र [2]णिजर्थेनुमार्जने लोम्नः, विपाशयतीत्यत्र विमोचने पाशस्य, संवस्त्रयतीत्यत्र संछादने वस्त्रस्य, वितूस्तयतीत्यत्र विघाते तूस्तपदार्थस्य जटीभूतकेशस्य कर्म्मतया; उपवीणयतीत्यत्रोपगाने वीणायाः, अतिहस्तयतीत्यत्रातिक्रमे हस्तिनः, अभिषेणयतीत्यत्राभियाने सेनायाः, उपश्लोकयतीत्यत्रोपस्तवे श्लोकस्य, अनुतूलयतीत्यत्रानुघट्टने तूलस्य करणतया-

**णिङर्थेष्वि**ति । "पुच्छभाण्डचीवराण्णिङ्" इति सूत्रेण विहितस्य णिङः "पुच्छादुदसने व्यसने पर्य्यसने च" "भाण्डात्समाचयने" "चीवरादर्जने परिधाने च" इति वार्त्तिकैः क्रमेण तत्तदर्थेष्वेव नियमनादिति भावः । उदसनमित्यादौ क्षेपणार्थकासुधातोर्ल्युडन्तस्य प्रयोगादाह—**उत्क्षेप** इत्यादि । **राशीकरणे** समाचयन इत्यस्य विवरणम् । "मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्" "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्णचूर्णचुरादिभ्यो णिच्" "णिङ्ङान्निरसने" इति सूत्रैस्तत्तच्छब्दात्तत्तदर्थे तत्तदव्ययपूर्वकाण्णिचो णिङश्च विधानात्तेषामुदाहरणान्याह—**अनुलोमय**तीत्यादिना । विग्रहस्तु लोमान्यनुमार्ष्टि, पाशं विमोचयति, वस्त्रं समाच्छादयति, तूस्तं विघातयति, वीणयोपगायति, हस्तिनातिक्रामति, सेनयाभियाति, श्लोकैरुपस्तौति, तूलेनानुकूलयतीत्याकारकः क्रमेण बोध्यः । **पुच्छ**स्येत्यादिषष्ठ्यन्तस्य **कर्म्मतया**न्वय इत्यग्रिमेणान्वयः । **अतिहस्तयती**त्यत्र "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इत्यस्य प्रपञ्चेन "तेनातिक्रामति" इत्यनेन णिचीष्ठवद्भावा-

---

१ विभाषा इति मु० पु० पा० ।

२ णिङर्थे इत्येव पा० मु० पु० ।

न्वयः। अतएव [1]धात्वर्थान्तर्गतकर्म्मणामुपवीणयतीत्यादीनां सकर्म्मकत्वम्। तेन "उपवीणयन्ति ये गुणमर्णवमतिहस्तयन्ति शिव! ते। य उपश्लोकयति त्वां कृतान्तमभिषेणयत्येषः॥" "हन्त कामविरामाय विषयेषु सजेतकः। संज्वरच्छेदमन्विच्छन्ननलं कोनुतूलयेत्॥" ...इत्यादौ हे शिव! ये ते गुणं वीणया उपवीणयन्ति ते हस्तेन सागरमतिक्रामन्ति, यस्त्वां श्लोकैरुपस्तौति स सेनया कृतान्तमभियातीत्यनलं तूलेन घटयेदिति च वाक्यार्थनिष्पत्तये भवन्ति कर्म्मप्रत्ययाः।

वर्म्मणा संनह्यति संवर्मयतीत्यादौ संनहिपर्य्यायस्य णिचोकर्म्मकत्वात् करणतयैवान्वयः। कर्म्मप्रकृतिका णिङ्णिजन्ता धातवस्त्वकर्म्मका एव। "श्वस्संश्चीवरयिष्यमाणवटुकव्याधूतशुष्यत्त्वचः" इत्यत्र शानच्प्रत्ययः कर्त्तरि वटुकसमानाधिकरणः, न तु कर्म्मणि त्वक्समानाधिकरणः। उपवर्णितानां णिङां णिचाञ्च [2]तत्तदुपसर्गपूर्वकं प्रातिपदिकमेव प्रकृतिः, न तु केवलं पुच्छादिः। "हस्ताद्विघाते संछादे वस्त्रात् पुच्छादितस्तथा। उत्क्षेपादौ कर्म्मणि णिस्तत्तदव्ययपूर्वकात्। वीणात उपगाने स्याद्धस्तिनोतिक्रमे तथा। [3]सेनातश्चाभियाने णिः श्लोकादेरप्यभिष्टुते॥" इति भागुरिस्मृतेः।

ट्टिलोपः। अतएव वीणादीनां करणत्वादेव।

करणतयान्वयेपि सर्वत्र न सकर्म्मकत्वमित्याह—**वर्म्मणेति**। कर्म्मप्रकृतिकानामकर्म्मकत्वेनर्घराघवस्थमुरारिप्रयोगानुपपत्तिमाशङ्क्याह—**श्वस्सश्चीवरेति**। **कर्त्तरीति**। तथा च न तदनुपपत्तिः। दर्शितानां तत्तदव्ययपूर्वकत्वं तत्तदर्थकत्वञ्च भागुरिस्मृत्या प्रमाणयति—**हस्ताद्विघात** इत्यादिना।

---

१ ०भूतकर्म्मकारकाणाम् इति मु० पु० पा०।

२ तत्तदुपपद० इति मु० पु० पा०।

३ तेनातः इति मु० पु० पा०।

हलिं गृह्णाति हलयति कलिं गृह्णाति कलयति कृतं गृह्णाति कृतयतीत्यादौ णिजर्थे ग्रहणे हलिपदार्थमहाहलादेः ; सत्यापयति, अर्थापयति, वेदापयतीत्यत्रापुग्समभिव्याहृतणिजर्थे करणे आख्याते[1] च सत्यार्थवेदानाम् ; मुण्डयति मिश्रयति श्लक्ष्णयति लवणयति व्रतयतीत्यादौ णिजर्थे करणे मुण्डादेः ; हस्तयते पादयत इत्यादौ [2]णिङर्थे निरसनेऽङ्गविशेषाणां कर्म्मत्वेनान्वयः । "मुण्डादेस्तु करोत्यर्थे गृह्णात्यर्थे कृतादितः । वक्तीत्यर्थे च सत्यादेरङ्गेभ्यस्तन्निरस्यति ॥" इति भागुरिभाषितात् ।

कृशयति म्रदयति द्रढयति स्थवयति दवयति नेदयति

केवलात्प्रातिपदिकाण्णिङ्णिचावुदाहरति—**हलिमित्यादिना**। **सत्यापयतीति**। सत्यापेत्यापुग्विशिष्टस्यैव सत्यपदस्य निर्देशात्तस्यापुगागमः। अर्थवेदयोस्तु "अर्थवेदयोरप्यापुग्वक्तव्यः" इति वार्त्तिकेन सः। **करणे णिजर्थ इति**। "शब्दवैर..."इत्यादिपूर्वसूत्रतः करणे इत्यस्यानुवृत्तेरत्रापि करणमेव णिजर्थ इति बोध्यम्। **निरसने** इति । "णिङङ्गान्निरसने" इति सूत्रेण वक्ष्यमाणभागुरिभाषितेन च निरसनेऽर्थे शरीरावयवहस्तादिवाचकेभ्यो हस्तादिपदेभ्यः सुबन्तेभ्यो णिङ्विधानादित्याशयः।

"प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति वार्त्तिकेन तत्करोतीत्यर्थे विहितस्य णिच उदाहरणानि दर्शयति—**कृशयती**त्यादिना। कृशं करोति मृदुं करोतीति विग्रहे णिचीष्ठवद्भावे तद्धिते ष्ठन्प्रत्यये परे यथा प्रातिपदिकस्य पुंवद्भावरभावादयो भवन्ति, तथा णावपि तेषां विधानम् । तत्राद्येषु त्रिषु ऋकारस्य रभावः। स्थूलं दूरं करोतीत्यर्थे णिचि "स्थूलदूरह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" इत्यनेन यणादिपरयोर्लकारवकारयोः सस्वरयोर्लोपे पूर्वस्योकारस्य गुणवादेशे स्थवयति दवयतीति सिद्धम्। अन्तिकं बाढं वा

१ आख्याने इति मु० पु० पा० ।
२ णिजर्थे इति मु० पु० पा० ।

साधयति ज्यापयति प्रापयति स्थापयति स्फापयति द्रावयति वृन्दयतीत्यादौ णिजर्थे करणे कृशमृदुदृढस्थूलदूरान्तिकबाढवृद्धप्रिय-स्थिरस्फिरदीर्घवृन्दारकाणां कर्म्मतयान्वयः। सङ्कल्पितं भोजनमभोजनं वा व्रतपदार्थः। पयः शूद्रान्नं वा व्रतयतीत्यत्र णिजर्थे व्यापारेनुकूलतया भोजनाभोजनयोः भोजनद्वये यथासङ्ख्यं पयः-शुद्रान्नकर्म्मत्वयोरन्वयः। ३०।४।

क्वचिच्च प्रातिपदिकार्थस्याख्यातार्थ एवान्वयः। पाणिनिना प्रयोजनविशेषार्थमुत्प्रेक्षितस्य नित्यमश्रूयमाणस्य लडादेरिव क्वचिदपि

करोतीत्यर्थे "अन्तिकबाढयोर्नेदसाधौ" इत्यनेन क्रमेण नेदसाधादेशयोर्नेदयति साधयतीति, वृद्धं करोतीत्यर्थे णिचि "वृद्धस्य च" इत्यनेन ज्यादेशे "अचो ञ्णिति" इत्यनेन वृद्धावादन्तत्वात् "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इत्यनेन पुगागमे ज्यापयतीति, प्रियं स्थिरं स्फिरं दीर्घं वृन्दारकं करोतीत्यर्थे प्रियादेः क्रमेण "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्वंहिगर्वर्षित्रब्द्राघिवृन्दाः" इति सूत्रेण प्रस्थस्फद्रघवृन्दादेशे वृद्धावापुकि च **प्रापयती**त्यादयः प्रयोगाः। **व्रतयती**त्यत्र "मुण्ड..."इत्यादि-सूत्रेण "व्रताद्भोजनतन्निवृत्त्योः" इति वार्त्तिकानुसारेण भोजनतदभावार्थक-पदाण्णिच्। **भोजनद्वय** इति। पदार्थे तदेकदेशे चेत्यर्थः। **अन्वय** इति। तथा च पयःकर्म्मकस्य भोजनानुकूलस्य व्यापारस्य कर्त्तेति तत्रान्वयबोधः।३०।४।

**तिङ् नाम्नेति तु केचने**ति कारिकांशाभिप्रायमाविष्करोति—**क्वचिच्चे**-त्यादिना। प्रातिपदिकेभ्यस्तत्तदर्थे विहितानामपि सर्वापहारवतां क्विवादीनां पदसाधुतामात्रप्रयोजनकत्वान्निरर्थकानां तेषामर्थविरहेण साक्षादेव प्रातिपदि-कार्थस्याख्यातार्थेन्वय इत्युक्तमुपपादयति—**पाणिनिने**त्यादिना। **प्रयोजन-विशेषार्थं** प्रातिपदिकेभ्यो विहितानां तदन्तस्य धातुसंज्ञार्थं तुगागमाद्यर्थ-ञ्चेत्यर्थः। **उत्प्रेक्षितस्य** सम्भावनामात्रेण विषयीकृतस्य। अतएव **नित्य-मश्रूयमाणस्ये**ति। ककारस्य "लशकतद्धिते" इत्यनेनेकारयकारयोः "उपदेशे-

**साक्षादबोधकस्य विकरणशबादेरिवारोपितशक्तेः[1] क्विपः पदसंस्कारमात्रप्रयोजनकस्य सार्थकत्वायोगात्, अन्यथानुबन्धानामपि**

जनुनासिक इत्" इत्यनेन "हलन्त्यम्" इत्यनेन चेत्संज्ञायां "तस्य लोपः" इत्यनेन तेषां लोपे "वेरपृक्तस्य" इत्यनेन वकारस्य लोपे सर्वेषामेव तद्घटकवर्णानां प्रयोगं नित्यमश्रूयमाणत्वं बोध्यम्। "तस्य वाजिविषाणस्य लतिबादेः क शक्तता..."इत्यादिना लादीनामवाचकताया वक्ष्यमाणतया तान् दृष्टान्तयति—**लडादेरिवे**ति। **साक्षादबोधकस्ये**ति। ननु "कर्त्तरि कृत्" इत्यनेन कृदादिप्रत्ययानां कर्त्रर्थे विधानमिव "कर्त्तरि शप्" इत्यनेन शबादिविकरणानामपि कर्त्रर्थे विधानस्यानुशासनिकतयैकस्य वाचकत्वमन्यस्य तद्विरह इत्यसम्बद्धम्। न चाशीर्लिङि लिटि अदादिषु जुहोत्यादिषु च शबादीनामभावादाख्यातस्यैव तत्र कर्त्तृवाचकत्वमावश्यकमिति भवतीत्यादावपि तेनैव कर्त्तृबोधसम्भवे विकरणानां निरर्थकत्वमिति वाच्यम्, अकारि, अशामि, गच्छेत्यादौ तिङामभावेन विकरणमात्रस्य सन्निधानात्तत्र विकरणस्यैव कर्त्रादिवाचकताया आवश्यकतया विनिगमनाविरहेणैव द्वयोर्वाचकत्वसम्भवादिति चेन्न, "कर्त्तरि शप्" इत्यत्र सार्वधातुके इत्यस्यानुवृत्तेः कर्त्रर्थके सार्वधातुके परे धातोः शप् स्यादित्येव तस्यार्थो न तु कर्त्रर्थे शप् स्यादिति वाचकत्वस्याप्रसक्तेरिति। शाब्दिकमते लकाराणां वाचकतयोभयमतसिद्धावाचकत्वकविकरणादीना दृष्टान्तत्वेनोपादानम्। **विकरणशबादेरिवे**ति। अत्र **व्याकरणे शबादेरिवे**ति क्वचित्पाठो दृश्यते। तत्र व्याकरणशास्त्रे शबादेरित्यर्थस्य सम्भवेपि व्याकरणे इत्यस्यानतिप्रयोजनकतया **विकरणशबादे**रित्येव पाठः साधीयानिति प्रतिभाति। **आरोपितशक्तेरि**ति। प्रातिपदिकादिनिष्ठबोधकत्वरूपशक्तेस्तत्र विरहेप्यारोप एव तस्या इत्यर्थः। अतएव तामादाय "तत्करोति तदाचष्टे..."इत्यादिना तत्तदर्थे क्विबादीनां विधानमिति भावः। **अन्यथा** पदसंस्कारमात्रप्रयोजन-

१ व्याकरणे शबा० इति मु० पु० पा०।

सार्थकत्वप्रसङ्गात् । व्याकरणन्तु स्वार्थसदृशाचारलाक्षणिकस्य प्रातिपदिकतुल्यानुपूर्वीकस्य शब्दस्य धातुसंज्ञामुपदिशति । अतएव क्वचिद् व्याकरणे क्विपः क्वचित् क्यङः [1]क्वचिदिप एव लोपोनुशिष्यते ।

तत्र धातुसंज्ञेभ्यः प्रातिपदिकेभ्यस्तदन्त्यस्वरस्यानुदात्तानुबन्धत्वे आत्मनेपदम् । यथा अवगल्भते[2] क्लीबते होडत इत्यादौ । अवगल्भ-

कानामपि सार्थकत्वोपगमे । **सार्थकत्वप्रसङ्गादि**ति । तेषामपि पदसंस्कारकत्वस्याक्षतेरिति भावः । **प्रयोजनविशेषार्थ**मित्यनेनोक्तं क्विबादीनां प्रयोजनं दर्शयति—**व्याकरणन्त्वि**ति । धातुभिन्नस्यैव प्रातिपदिकसंज्ञकत्वात्प्रातिपदिकस्य कथं धातुसंज्ञेत्यत आह—**प्रातिपदिकतुल्यानुपूर्वीकस्ये**ति । **धातुसंज्ञामुपदिशती**ति । "सनाद्यन्ता धातवः" इति सूत्रेण सनाद्यन्तर्गणान्तर्गताचारक्विबन्तस्यावगल्भादिप्रातिपदिकवृत्त्यानुपूर्वीमतो नपुंसकसदृशाचारबोधकस्यावगल्भादिशब्दस्य धातुसंज्ञां विधत्त इत्यर्थः । तथा चासति क्विप्प्रत्यये धातुसंज्ञानुपपत्तेस्सैव क्विपः प्रयोजनमिति भावः । **अतएव** क्विपः पदसंस्कारमात्रप्रयोजनकत्वादेव । **लोपोनुशिष्यत** इति । क्यङादीनां लोपेपि तदन्तस्य धातुसंज्ञाविधायकानुशासनप्रणयनेभिमतप्रयोगसिद्धेरिति भावः ।

**अनुदात्तानुबन्धत्व** इति । अनुदात्तत्वे इत्संज्ञकत्वे चेत्यर्थः । **आत्मनेपदमि**ति । "अनुदात्तङित आत्मनेपदम्" इत्यनेनानुदात्तेतो धातोरात्मनेपदविधानादिति भावः । **अवगल्भत** इति । अवगल्भक्लीबहोडपदानां क्रमेणावपूर्वकगल्भक्लीबहोड्धातुभ्यः पचाद्यचा निष्पन्नानामाचारक्विप्सन्नियोगेनानु-

---

१ पारदृश्वेत्यत्र क्वनिब्घटकेपः यज्वासुत्वेत्यादौ ङ्वनिब्घटकेपश्च लोपोनुशिष्यते । यज्वेत्यत्र क्वनिपि कृते "वचिस्वपि .." इत्यादिना सम्प्रसारणं स्यात् । सुत्वेत्यत्र ङकारः गुणप्रतिषेधार्थः । पकारस्तु स्वरतुगर्थ इति ध्येयम् ।

२ अवकल्भते इति मु० पु० पा० ।

क्लीबहोडपदार्थो नपुंसकभावसदृशो भाव आख्यातार्थ आश्रयत्वेन्वेति। अवगल्भायत इत्यादि क्यङि तु तदर्थे सादृश्येन प्रातिपदिकलक्ष्यार्थः स्वार्थाचारः। अन्येभ्यस्तु प्रातिपदिकधातुभ्यः परस्मैपदमेव प्रमाणम्। घट इव मालेव कविरिव ग्रामणीरिव विधुरिव वधूरिव पितेव रा इव गौरिव ग्लौरिव भवतीति विग्रहे घटति मालाति कवयति ग्रामणयति विधवति वंधवति पितरति रायति गवति ग्लावतीति प्रयोगदर्शनात्। इदमिव राजेव पन्था इव भवतीति विग्रहे इदामति राजानति पथीननीति प्रयोगेनुनासिकान्तस्योपधादीर्घ आनुशासनिकः।

अन्ये तु राजपुरुषादिसमासे राजपदार्थः स्वस्वामिभावेन पुरुषेन्वेतीति प्रातिपदिकयोरपि स्वार्थभेदान्वयोपयोगिन्याकाङ्क्षा। एवं

दात्तेत्त्वप्रतिज्ञानमिति भावः। **अवगल्भायत** इति। "आचारेवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः" इति वार्त्तिकेन तत्र विकल्पेन क्विपो विधानात्पक्षे क्यङ् बोध्यः। **तदर्थे** क्यङर्थे आचार इति शेषः। **प्रातिपदिकार्थस्य** अवगल्भादिप्रातिपदिकलक्ष्यस्य नपुंसकभावस्येत्यर्थः। **अन्येभ्यः** अनुदात्तानुबन्धभिन्नेभ्यः परस्मैपदमेवेति। आत्मनेपदप्रयोजकस्यानुदात्तेत्त्वादेरभावे "शेषात्कर्त्तरि परस्मैपदम्" इत्यनेन परस्मैपदस्यैव विधानादित्यर्थः। **आनुशासनिक** इति। "अनुनासिकस्य क्वि झलोः क्ङिति" इति सूत्रसिद्ध इत्यर्थः।

न केवलं सुबादिभिरेव नाम्नो भेदान्वयबोधोपयिकाकाङ्क्षाशालित्वम्, किन्तु प्रातिपदिकेनापीति विभक्त्यर्थसंसर्गतावादिमतं निरसितुमाह—**अन्ये त्वि**त्यादिना। **पुरुषेन्वेती**ति। सिद्धान्ते तु राजादिपदस्य तत्र षष्ठ्यन्तार्थराजनिरूपितस्वत्वविशिष्टे लाक्षणिकतयाभेदेनैव पुरुषादिपदार्थेन्वय इति न

---

१ वधवति इति पा० ना० मु० पु०

ज्येष्ठा मध्यमेत्यादौ स्त्रीप्रत्ययार्थे परिणीतस्त्रियां पुंसो ज्येष्ठमध्यमादेरन्वय इति स्त्रीप्रत्ययेपि प्रातिपदिकेन सह तथाविधाकाङ्क्षा भवतीत्याहुः। तच्चिन्त्यम् ।३०।५।

**नाम व्यपेक्ष्यते लिङ्गप्रत्ययेन तिङा सुपा।**
**तद्धितेन निपातेन कृता [1]धातुलवेन च ॥३१॥**

अजा एडका अश्वा चटकेत्यादौ पशुविशेषेषु प्रातिपदिकार्थेषु योन्यवयवकत्वस्वरूपस्य स्त्रीत्वस्य शक्यस्य खट्वेत्यादौ शब्दधर्म्मेण वक्ष्यमाणेन स्त्रीत्वेनावलीढखट्वापदवाच्यत्वस्य लक्ष्यस्य पाण्डव-

तत्र भेदान्वयबोधौपयिक्याकाङ्क्षा। **ज्येष्ठा मध्यमेत्यादावि**ति। एषामजादिगणे पाठान् "पुंयोगादाख्यायाम्" इत्यनेन ज्येष्ठस्य स्त्रीत्यर्थे प्राप्तोपि ङीष् टापा बाध्यत इति बोध्यम्। अतएव टापोपि पुंयोग एव विधानमित्याशयेनाह--**परिणीतस्त्रिया**मिति। धर्म्मिनिर्देशः शाब्दिकमते। स्वमते तु परिणीतस्त्रीत्वे इति बोध्यम्। **मध्यमादेरन्वय** इति। तदेकदेशे परिणयने कर्त्तृतयेत्यादिः। परिणयनञ्च संस्कारविशेषो यत्र कर्त्ता पुरुषः कर्म्म च स्त्रीति तादृशकर्म्मत्वविशिष्टं स्त्रीत्वमेव प्रत्ययार्थं इति यावत्। **तच्चिन्त्यमि**ति। चिन्ताबीजन्तु अभेदस्य विभक्त्यर्थत्वमिव स्वत्वादीनामपि तत्त्वं लाघवादावश्यकमिति राज्ञः पुरुष इत्यत्र स्वत्वप्रकारकस्यैव बोधस्योपगमनीयत्वेन राजपुरुष इति समासेपि षष्ठ्यर्थस्वत्ववति राजपदस्य लक्षणाया उपगमेन नामार्थयोर्भेदान्वयस्य नियमे सङ्कोचस्यानावश्यकत्वम्। ज्येष्ठा मध्यमेत्यादौ स्त्रीप्रत्ययार्थस्य प्रकारताया एवानुपदं वक्ष्यमाणतया नामार्थस्य तत्र भेदेनान्वयविरहः। तदुपगमे च ज्येष्ठामानयेत्यादौ स्त्रीत्वस्य प्रत्ययार्थत्वे द्वितीयार्थकर्म्मत्वेनान्वयानुपपत्तिश्चेत्यादिकं बोध्यम् ।३०।५।

नामार्थप्रकारतायां भेदान्वयस्थलानि प्रदर्श्य विशेष्यतायां तत्स्थलानि प्रदर्शयितुमाह—**नाम व्यपेक्ष्यत** इत्यादिः। **लिङ्गप्रत्ययेन** लिङ्गबोधकेन टावादिप्रत्ययेनेत्यर्थः। **वक्ष्यमाणेने**ति। शब्दवृत्तिपरिभाषाविशेषेत्यादिना-

---

१ कृतधातुलयेन इति मु० पु० पा०।

भार्य्यासु मध्यमा सुभद्रेत्यत्र मध्यमपदार्थे मध्यमपुरुषपरिणीते स्त्रीत्वस्यान्वये टाप्प्रत्ययः ।

बहुदृश्वा कामन्दकीत्यत्र बहुदर्शिन्यां शक्यस्य स्त्रीत्वस्य सीमा-ग्रामस्येत्यादौ सीम्नि स्त्रीशब्दस्वरूपवाच्यत्वस्यान्वये डाप्प्रत्ययः । [1]डित्त्वाट्टिलोपप्रयोजनकतया टापः[2] पृथङ्निर्दिष्ट आत्वेनैव शक्तः ।

पचन्ती भार्य्या दण्डिनी पलिता पत्नी मित्रेत्यादौ शक्यस्य स्त्रीत्वस्य, प्राच्युदीचीत्यादौ स्त्रीशब्दप्रतिपाद्यत्वस्य लक्ष्यस्यान्वये

नुपदमित्यादिः । **मध्यमपुरुषपरिणीत** इति । मध्यमपदस्याजादिगणपाठा-न्मध्यमस्य स्त्रीत्यर्थेपि टाबेव । तस्य च स्त्रीत्वमात्रमर्थः । परिणीतस्त्रीत्वस्य तथात्वे तस्य प्रकारतया प्रकृत्यर्थेन्वयस्योक्तदोषभियावश्यकत्वे परिणयने मध्यमपुरुषनिरूपितत्वस्यालाभप्रसङ्गान्मध्यमपदस्यैव मध्यमपुरुषपरिणीतत्व-विशिष्टे लक्षणेत्याशयः ।

**बहुदृश्वेति** । बहवो दृश्वानो यस्यामिति बहुव्रीहौ "अनो बहुव्रीहेः" इत्यनेन "ऋन्नेभ्यो ङीप्" इति प्राप्तस्य ङीपो निषेधे "डाबुभाभ्यामन्यतर-स्याम्" इत्यनेन डाप्प्रत्यये टिलोपे बहुदृश्वेति रूपम् । डापोपि स्त्रीत्वमात्रशक्त-तया टापः पृथगुपादानमनर्थकमित्याशङ्क्याह—**डित्त्वाट्टिलोपे**ति । तथा च तत्रापि टाप एव विधाने तस्य डित्त्वाभावेनानित्यस्य लोपासम्भवेन बहुदृश्वेति प्रयोगस्यासिद्धिः । डापस्तु डित्त्वात्तस्मिन् परे "टेः" इत्यनेनानो लोपात्त-त्प्रयोगसिद्धिरिति तावन्मात्रप्रयोजनकः पृथङ्निर्देश इति भावः ।

**पचन्ती भार्य्ये**ति । **पचन्ती**त्यत्र ङीपः शक्यार्थबोधकत्वसूचनाय **भार्य्ये**ति चेतनवाचकविशेष्योपादानम् । **ङीप्प्रत्यय** इति । क्रमेण "उगितश्च" "ऋन्नेभ्यो ङीप्" इत्याभ्यां ङीप्प्रत्ययः । **पलिते**त्यत्र "वर्णादनुदात्तात्तोपधात्तो नः" इत्यनेन प्राप्तस्य नकारसन्नियुक्तस्य ङीपः "असितपलितयोर्न" इति वार्त्तिकेन निषेधे "अजाद्यतष्टाप्" इत्यनेन टाप्प्रत्ययः । **मित्रे**त्यत्र ङीबादीनाम-प्राप्तेरदन्तत्वाट्टाप्प्रत्ययः । **प्राच्युदीची**त्यनयोरञ्चुधातोरुकारानुबन्धकात् क्विप्प्र-

---

१ डित्त्वात् इति पा० ना० मु० पु० ।

२ टाप् इति मु० पु० पा० ।

ङीप्प्रत्ययोन्तोदात्तत्वप्रयोजनः ।

[1]घटोध्नी गौरित्यादौ घटपरिमितोधःसम्बन्धिन्यां गवि शक्यस्य स्त्रीत्वस्य इन्द्राणी वरुणानीत्यादाविन्द्राद्यभिन्नेन पुंसा संयुक्तादौ प्रातिपदिकार्थे प्रकृतिविशेषसमभिव्याहृतस्य स्वस्यार्थे संयुक्ते वा स्त्रीत्वस्य हिमानीत्यादौ हिमे संहतत्वस्य अरण्यानीत्यत्रारण्ये महत्त्वस्य यवानीत्यत्र यवे दोषस्य यवनानीत्यत्र यवनकर्तृके प्रातिपदिकलक्ष्ये लिपित्वस्य आचार्य्यानीत्यत्राचार्य्यसंयुक्ते[2]

त्यये उगित्त्वात् "उगितश्च" इत्यनेन ङीप् । **अन्तोदात्तत्वप्रयोजन** इति । "अनुदात्तौ सुप्पितौ" इत्यनेन पित्त्वादन्तोदात्तत्वप्रयोजनक इत्यर्थः ।

**घटोध्नी**ति । घटपरिमितमूधः स्तनं यस्या इति बहुव्रीहौ "ऊधसोनङ्" इति सूत्रेणान्त्यस्यानङादेशे डाब्ङीबोर्निषेधे प्राप्ते "बहुव्रीहेरूधसो ङीष्" इत्यनेन ङीष्प्रत्ययः । **इन्द्राणी**ति । "इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्य्याणामानुक्' इत्यनेनानुगागमसहिते ङीषि सिद्धे इत्यर्थः । **प्रातिपदिकार्थ** इति । इन्द्रादिपदस्य लक्षणया स्वार्थसंयुक्ते लक्षणेत्याशयेनेदम् । स्त्रीप्रत्ययस्यैव संयुक्तस्त्रीत्वमर्थः । ततश्च प्रकृत्यर्थेन्द्रादिनान्विते स्वार्थैकदेशे संयुक्ते एव ङीषर्थस्त्रीत्वस्यान्वय इत्याशयेनाह—**प्रकृतिविशेषे**ति । इन्द्रादिषण्मातुलाचार्य्यद्वयेत्यर्थः । **संहतत्वस्ये**ति **महत्त्वस्ये**ति च "हिमारण्ययोर्महत्त्वे..." इत्यादिवार्त्तिकैर्हिमारण्यादिपदेभ्योर्थविशेषेष्वेव सूत्रविहितस्यानुको ङीषश्च नियमनादिति भावः । **यवे दोषस्ये**ति । "यवाद्दोषे" इति वार्त्तिकम् । **लिपित्वस्ये**ति । "यवनाल्लिप्याम्" इति । **संयुक्त** इति । पुंयोगे एव तयोरुक्तत्वात् । नकारस्य णत्वाभावश्च "आचार्य्यादणत्वञ्च" इति वार्त्तिकेन ।

१ घटोध्नी इति मु० पु० पा० ।

२ आचार्य्याणी इति मु० पु० पा० ।

अर्य्याणीत्यत्र [1]वैश्यत्वजातीये स्त्रीत्वस्य अभ्रलिप्ती[2] द्यौरित्यत्र लेपेल्पत्वस्य पाणिगृहीतीत्यत्र पाणिग्रहणकर्म्मणि भार्य्यात्वस्य उलूकपक्षी शाला उलूकपुच्छी सेनेत्यत्रोलूकपक्षसदृशपार्श्वभागे तत्सदृशपश्चाद्भागे च स्त्रीशब्दप्रतिपाद्यत्वस्यान्वये ङीष्प्रत्यय आद्युदात्तस्वरप्रयोजनकतया पृथगुद्दिष्ट ईत्वेनैव वाचकः ।

भद्रबाहूरित्यत्र प्रकृतिरूढ्यर्थव्यक्तौ श्वश्रूरित्यत्र भार्य्याजनके श्वशुरपदार्थे करभोरूरित्यत्र करभसदृशोर्वंवयविनि संहितोरूरित्यत्राति-

**वैश्यत्वजातीय** इति । सूत्रानुक्ताभ्यामर्य्यक्षत्रियशब्दाभ्याम् "अर्य्यक्षत्रियाभ्या वा स्वार्थे" इति वार्त्तिकेन स्वार्थे तयोर्विकल्पेन विधानात् । एवं "मातुलोपाध्याययोरानुग्वा" इति वार्त्तिकेन मातुलानी मातुलीत्यादिकं बोध्यम् । **अभ्रलिप्ती**ति । "क्तादल्पाख्यायाम्" इति सूत्रेण ङीष् । **लेप** इति । भावे निष्ठाप्रत्ययात् । **भार्य्यात्वस्ये**ति । "पाणिगृहीती भार्य्यायाम्" इति वार्त्तिकेन तत्रैव ङीपोनुशासनात् । भोगिन्यादौ तु पाणिगृहीतेत्येव । **उलूकपक्षसदृशे**ति । "उपमानात्पक्षाच्च पुच्छाच्च" इति वार्त्तिकेनोपमानबोधकादेवात्र ङीपो विधानम् । **स्त्रीशब्दप्रतिपाद्यत्वस्ये**ति । शालाया अचेतनत्वाल्लक्ष्यार्थस्यैव तत्रान्वययोग्यत्वमिति भावः । **आद्युदात्ते**ति । "आद्युदात्तश्च" इति सूत्रेण प्रत्ययस्याद्युदात्तत्वस्य चित्त्वादीना तदन्यस्वरप्रयोजनकानामभावे सामान्यतो विधानात् षिति ङीपि तस्य प्रवृत्तेरित्यर्थः ।

**प्रकृतिरूढ्यर्थव्यक्ता**विति । "बाह्वन्तात्संज्ञायाम्" इति सूत्रेण संज्ञायामेवोङो विधानादत एव वृत्तबाहुरित्यत्र नोङित्याशयः । **श्वश्रूरित्यत्रे**ति । अत्र "श्वशुरस्योकाराकारलोपश्च" इति वार्त्तिकेनोङ्प्रत्यय उकाराकारयोर्लोपश्च बोध्यः । **करभसदृशोर्वंवयविनी**ति । "ऊरूत्तरपदादौपम्ये" इति सूत्रेणौपम्ये ऊङो विधानम् । **संहितोरू**रिति । "संहितशफलक्षणवामादेश्च" इति सूत्रेणोङ् ।

१ वैश्यजातीये इति मु० पु० पा० ।

२ इत्यत्र इत्यस्य स्थाने इत्यादौ इति मु० पु० पा० ।

व्यतिषक्तोरुद्वयसम्बन्धिनि कद्रूरित्यत्र नागमातरि स्त्रीत्वस्यान्वये ऊङ्प्रत्ययः। शार्ङ्गरवीत्यत्र शार्ङ्गरवत्वजातिमति [1]स्त्रीत्वस्यान्वये ङीन्प्रत्ययो नित्स्वरलाभप्रयोजनः। आवट्येत्यादौ अवटजातेः स्त्रीत्वस्यान्वये चाप्प्रत्ययः स्वरभेदप्रयोजनः। इत्येवं प्रातिपदिकस्यार्थे स्वार्थस्यान्वये समर्थाः स्त्रीप्रत्ययाः प्रातिपदिकं व्यपेक्षन्ते। युवतिरित्यत्र तिप्रत्ययस्तद्धितोऽपि यूनि स्त्रीत्वस्यान्वये योग्यः।

एवं प्रथमादिविभक्तिरपि प्रातिपदिकार्थान्वितं लिङ्गमभिधत्ते, "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इति सूत्रेण प्रथमायां[2] कण्ठतो द्वितीयादौ मात्रग्रहणसामर्थ्येन लिङ्गवाचकत्वावगमात्। तच्च

**नागमातरी**ति। "संज्ञायाम्" इति सूत्रेण संज्ञायामेवोङो विधानात्। **शार्ङ्गरवत्वजातिमती**ति। "शार्ङ्गरवाद्यञो ङीन्" इति सूत्रे "जातेरस्त्रीविषयादयोपधात्" इत्यतो जातेरित्यस्यानुवृत्तेर्जातावेव ङीनो विधानादिति। **आवट्ये**ति। गर्गादिगणपठितावटशब्दाद्यञि प्रत्यये निष्पन्नादावट्यशब्दात् "आवट्याच्च" इति सूत्रेण चाप्प्रत्ययः। **स्वरभेदप्रयोजनक** इति। "चितः" इति सूत्रस्थेन "चितस्सप्रकृतेर्बह्वकजर्थम्" इति वार्त्तिकेन चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तः स्यादित्यर्थकेनान्तोदात्तत्वमेव चित्करणप्रयोजनमित्याशयः। एवं कतिपयानां स्त्रीप्रत्ययाना प्रकृत्यर्थविशेष्यकस्वार्थनिष्ठभेदसंसर्गकप्रकारताकान्वयबोधसाकाङ्क्षत्वं कारिकोक्तमुपसंहरति—**इत्येवमि**त्यादिना। **स्त्रीत्वस्यान्वये योग्य** इति। "यूनस्तिः" इति सूत्रे "स्त्रियाम्" इत्यस्य "तद्धिताः" इत्यस्य चाधिकारात्तद्धितस्यापि तस्य स्त्रीत्ववाचकत्वादित्याशयः।

सुपो नामार्थविशेष्यकस्वार्थलिङ्गप्रकारकभेदान्वयसाकाङ्क्षत्वं कारिकयोक्तं तस्य लिङ्गवाचकत्वं व्यवस्थाप्य समर्थयति—**एवमि**त्यादिना। **कण्ठत** इति। मात्रपदोत्तरसप्तम्यर्थवाचकत्वस्य द्वन्द्वघटकेषु प्रातिपदिकार्थादिपदार्थेषु प्रत्येकमन्वयात्साक्षादेव लिङ्गवाचकत्वस्य प्रथमायां बोधनादित्याशयः। **मात्रग्रहणसामर्थ्येने**ति। द्वितीयादीनां प्रातिपदिकार्थादिवचनान्तावाचकत्वे

१ नारीत्यत्र नृत्वजातिमति इत्यधिकः मु० पु० पा०।

२ प्रथयायाः इति मु० पु० पा०।

लिङ्गं त्रिविधम् । सत्त्वरजस्तमसां गुणानामुपचयः पुंस्त्वम् तेषामपचयः स्त्रीत्वम् साम्यञ्च क्लीबत्वं सुपां वाच्यम् । अतएवोपचयापचययोरविवक्षायां "सामान्ये नपुंसकम्" इति प्रवादो घटते । तत्त्रितयमपि केवलान्वय्येव, "अर्थो व्यक्तिर्वस्त्विति सर्वत्र प्रयोगदर्शनात्" इति पतञ्जलिः । "तिस्रो जातय एवैताः केषाञ्चित्समवस्थिताः । अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः ॥" इति वाक्यपदीये भर्त्तृहरिः । [1]शेफस्वरूपावयवे समवेतप्राणित्वं पुंस्त्वम्, [2]केशभगसमवेतप्राणित्वं स्त्रीत्वम्, तदुभयोरेकत्राप्यसमवेतप्राणित्वं

प्रथमायां तदतिरिक्तकर्म्मादिवाचकत्वव्यावृत्तेर्म्मात्रपदार्थस्य विवक्षाया वैयर्थ्यम् प्राप्तस्यैव निषेधयोग्यत्वादिति तद्ग्रहणेन द्वितीयादीनामपि प्रातिपदिकार्थत्वमित्यनुमीयते । तथा सति यथा द्वितीयादीनां प्रातिपदिकार्थादिवाचकत्वे सति तदतिरिक्तकर्म्मादिवाचकत्वम्, तथा प्रथमाया न तदतिरिक्तवाचकत्वमित्यस्य लाभाय मात्रपदस्य सार्थकत्वमिति भावः। **प्रवादो घटत** इति। तत्र सामान्यपदस्य गुणानां समानत्वबोधकत्वात् । **केवलान्वय्येवे**ति। वृत्तिमदत्यन्ताभावाप्रतियोग्येवेत्यर्थः । तेषा तथात्वे हेतुः **सर्वत्र प्रयोगदर्शनादि**ति। तथा च गुणानामुपचयस्य विवक्षायां पुंस्त्वमपचयस्य तथात्वे स्त्रीत्वं साम्यस्य तथात्वे नपुंसकत्वं निखिलवस्तुवृत्त्येवेति भावः। पुंस्त्वादिकं जातिस्वरूपमिति हर्य्युक्तं केषाञ्चिन्मतमाह—**तिस्रो जातय** इति। केषाञ्चिन्मते एताः पूर्वोक्ताः पुंस्त्वादिका जातयो गोत्वमहिषत्वादिजातिभिः परस्परं विरुद्धाभिरविरुद्धा इत्यर्थः। **शेफस्वरूपे**ति। **शेफो** मेढ्रं तत्समवेतत्वमित्यर्थः । तद्गतरूपादिवारणाय विशेष्यम्। क्वचिच्च **शेफस्यावयवे** इति पाठः। तत्र शेफनिरूपितावयवत्ववति समवेतत्वस्य विवक्षाया निष्प्रयोजनक-

१ शेफावयवसमवेतप्राणित्वम् इति मु० पु० पा० ।
२ भगेति पाठो ना० मु० पु० ।

नपुंसकत्वम्, यथायथं सुपां स्त्रीप्रत्ययानाञ्च वाच्यम्। यत्र तद्बाधस्तत्र शब्दवृत्तिपरिभाषाविशेषविषयत्वस्वरूपं स्त्रीपुंस्त्वादिकं शब्दसंस्कारप्रयोजनकं शब्दवृत्तितया तादृशशब्दवाच्यत्वं वार्थवृत्तितया भासत इति युक्तम्।

"पशुना रुद्रं यजेत..."इत्यादौ पशौ पुंस्त्वादिकं निरुक्तमबाधितमेव सुपामर्थः। यत्र तु तद्बाधस्तत्र दारा इत्यादौ बहुवचन-

त्वमेव, शेफसमवेतत्वमात्रेण स्त्र्यादिवारणादिति बोध्यम्। **यथायथमि**ति। सुपां त्रितयमपि प्रयोगभेदेन शक्यं स्त्रीप्रत्ययानां स्त्रीत्वमात्रमित्यर्थः। ननु तर्ह्यचेतने खट्वादिके प्राणित्वघटितस्योक्तलिङ्गत्रयस्य बाधात्तद्बोधकखट्वादिपदोत्तरं सुपां स्त्रीप्रत्ययानाञ्च कोर्थ इत्यत आह- **यत्र तद्बाध** इति। **परिभाषाविशेषे**ति। पुँल्लिङ्गादिपदजन्यबोधविषयतात्वावच्छिन्नप्रकारताकेच्छीयविशेष्यत्वादिस्वरूपम्। तच्च लिङ्गानुशासनेन "कृष्णपदं पुँल्लिङ्गं श्रीपदं स्त्रीलिङ्गं धनपदं नपुंसकलिङ्गम्..." इत्यादिना पुँल्लिङ्गादिपदानां तत्तत्पदे ग्राहितमित्याशयः। **शब्दसंस्कारे**ति। तेषां पुँल्लिङ्गत्वादिनापरिभाषितत्वे कृष्णान् हरिणा श्रीणां धनं धनानीत्यादौ नकारादिविधीनां पुँल्लिङ्गादिपदेभ्यो विधानाभावे रमा मत्या इत्यादावपि प्रसङ्गः स्यादिति तत्तद्विधौ पुंसीत्यादेरावश्यकतया चेतने निरुक्तं पुंस्त्वादिकमादाय सामञ्जस्येपि घटानित्याद्यचेतनवाचकपदोत्तरं तेषामप्रवृत्तिरेव स्यादिति शब्दवृत्तिपुंस्त्वादिकमन्यदेवोक्तपरिभाषाविषयत्वस्वरूपं नकारादिविधिप्रयोजनकं निर्वाच्यमित्याशयः। निरुक्तपुंस्त्वादिकस्य सुबाद्यर्थत्वे कृष्णादिपदानां शब्दस्वरूपे लक्षणामन्तरेण तस्यान्वयानुपपत्तिः। तत्त्वे च कृष्णादिपदमुख्यार्थबोधानुपपत्तिर्युगपद्वृत्तिद्वयस्यानङ्गीकारादत आह—**तादृशशब्दवाच्यत्वमि**ति। पुँल्लिङ्गादिपदपरिभाषाविषयकृष्णादिपदवाच्यत्वमित्यर्थः। तथा च कृष्णादिपदं मुख्यमेव। सुबर्थलिङ्गञ्च निरुक्तरूपं तदर्थान्वयीति भावः।

उक्तं लिङ्गं न सुपामर्थः, किन्तु मुख्यं शेफादिसमवेतत्वघटितमेव पदसाधुत्वप्रयोजनकं निरुक्तपरिभाषाविषयत्वरूपं पुंस्त्वादिकमित्याह—**पशुने**ति। **सुपामर्थ** इति। तेन स्त्रीपशुकर्म्मकयागान्नादृष्टसिद्धिः। **बहुवचनवदि**ति। यथा

१ च इति पा० ना० मु० पु०।

वत्साधुत्वमात्रार्थास्तल्लिङ्गाभिधायिप्रयोगा न तु शब्दधर्म्मश्शाब्दबोध-गोचर इति वस्तुगतिः। स्वरविशेष इव स्त्रीत्वपुंस्त्वादिकं शब्दधर्म्मः। स च सुपाभिव्यक्तोऽर्थविशेषस्य निर्णायक इत्यपि वदन्ति ।३१ १।

एवं चैत्रः पचति पच्यते तण्डुल इत्यादौ तिङर्थः कर्तृकर्म्मत्वादिः प्रथमान्तार्थेऽन्वेति। तथा सुपाप्युपात्ता[1] सङ्ख्या, अङ्ककानीत्यादौ तद्धि-तेनोपात्तमल्पत्वम्, घटः पटश्चेत्यादौ निपातेनोपात्तं समुच्चितत्वम्, भोक्तुं वायुरित्यादौ[2] तुमुनकृदुपात्तं भोजनार्हत्वं प्रातिपदिकार्थेऽन्वेतीति तत्तदाकाङ्क्षाः स्वयं परिकल्पनीयाः। ३१।२–६।

इति परिभाषाप्रकरणम्।

बहुवचनार्थसङ्ख्यायास्तत्र बाधादविवक्षा, तथा तदर्थलिङ्गस्याप्यचेतनवाचक-पदोत्तरमविवक्षैव पदसाधुत्वाय च निरुक्तं परिभाषाविषयत्वरूपं पुंस्त्वादिकं "तस्माच्छसो नः पुंसि..." इत्यादिसूत्रे निर्दिष्टमित्याशयः। **स्वरविशेष इवे**ति। अनुदात्तादिस्वर इवेत्यर्थः। **अर्थविशेषस्ये**ति। मित्रं भातीत्यत्र नपुंसकनिर्देशे सुहृदः मित्रस्तपतीत्यत्र पुँल्लिङ्गनिर्देशे सूर्य्यस्य बोध इत्येवं रीत्या तत्तदर्थविशेषबोधकत्वं पुंस्त्वादीनामित्यर्थः। अत्र **पशुना रुद्रं यजेते**-त्यादौ स्त्रीपशुकर्म्मकयागाददृष्टसिद्धिप्रसङ्गो दुर्वारः, पशुपदस्य नित्यपुंल्लिङ्गतया स्त्रिया अपि ततो बोधस्य वारयितुमशक्यत्वादित्यस्वरसो **वदन्ती**त्यनेन सूचितः। ३१।१।

तिङित्यस्योदाहरणान्याह—**एवं चैत्र** इति। **प्रथमान्तार्थे** चैत्रतण्डुलादौ। सुबर्थकर्म्मत्वादीनां प्रकृत्यर्थकर्म्मत्वादीनां प्रकृत्यर्थविशेष्यतया तानुपेक्ष्य प्रकृत्यर्थविशेषणसुबर्थसङ्ख्याया प्रकृत्यर्थस्य भेदान्वय इत्याह—**सङ्ख्ये**ति। **अन्वेती**ति पूर्वेणान्वितम्। ३१।२-६।

( इति सटीकपदवाक्यरत्नाकरे भेदान्वयविवरणम्। )

---

१ सुपाप्युपात्ता इति मु० पुं० पा०।
२ काल इति पा० मु० पु०।

# अथ स्फोटनिरासप्रकरणम् ।

**ननु पाकविशेषासादितरसविशेषैर्दुग्धावयवैरारब्धे द्व्यणुकादौ द्रव्ये**

एतावता प्रबन्धेनोक्तं प्रकृतिप्रत्ययादीनामुक्तरूपेण वाचकत्वमेकस्यापरत्राभेदेन तदतिरिक्तेन वा संसर्गेणान्वयित्वं तदैव सङ्गच्छते यदि शाब्दिकमतसिद्धस्य स्फोटस्याप्रामाणिकत्वं व्यवस्थितं भवेत् ? तस्य प्रामाणिकत्वे तु सर्वमिदमसङ्गतमेव स्यात्पदादिव्यञ्जनीयस्य स्फोटस्यैवार्थवाचकत्वादित्यतस्तस्याप्रामाणिकत्वं व्यवस्थापयितुमादौ वर्णस्फोटस्यावश्यकतां दर्शयितुमाशङ्कते—**नन्वि**त्यादिना । पूर्वं घकारादीनामेवोच्चारणप्रक्रियाप्रदर्शनादत्रापि घटपदे एव वाचकत्वविप्रतिपत्तिप्रदर्शनस्यौचित्येऽपि दधिपदस्य यथा प्रथमादिविभक्तिषु विकृतत्वम्, तथा न तस्येति तदुपेक्षणम्। **पाकविशेषे**ति । पाकविशेषो विलक्षणतेजःसंयोगः । वैलक्षण्यञ्च संयोगे संयोगत्वव्याप्यजातिविशेषः । स च तेजःसंयोगस्य कुत्रचिद्रसमात्रपरावर्त्तकत्वं यथा दुग्धावयवेषु शुक्लरूपगन्धादीनामपरावृत्तावपि रसस्य परावृत्तिः । कुत्रचिद्रसगन्धयोः कुत्रचिद्रूपादिचतुष्टयस्य परावृत्तिरिनि दर्शनादावश्यक एव, तेन विना तत्तत्कार्य्यं प्रति कारणत्वस्य दुर्वचत्वात् । **पाकविशेषेणासादितो** जनितो **रसविशेषो** येषु तैरित्यर्थः । रसे विशेषः पूर्वरसवैजात्यम् । **दुग्धावयवैरि**ति । पिठरपाकवादिमते परमाणुद्व्यणुकादिरूपैः पीलुपाकवादिमते परमाणुरूपैर्दुग्धस्यावयवैरित्यर्थः । **द्व्यणुकादौ वर्त्तमानस्ये**ति **दधित्वसामान्यस्ये**त्यनेनान्वितम् । क्षीरं विना दध्नोसम्भवेन क्षीरपरमाणूनां तत्र कारणताया आवश्यकतया तस्याम्लादिसंयोगसहकारित्वं दध्यारम्भकत्वप्रयोजकम्, तदसहकारित्वं क्षीरारम्भकत्वप्रयोजकमिति दधित्वजातिर्न्न परमाणुवृत्तिरेकजातीयपरमाणूनां सहकारिविशेषेणान्यजातीयकार्य्यजनकत्वे लाघवात् । न च दधित्वं परमाणुवृत्ति तदवयविवृत्तित्वे सति तदवयववृत्तित्वात् पृथिवीत्ववदित्यनुमानेन तस्य परमाणुवृत्तित्वसिद्धिः, तन्तुत्वस्य पटावयवे तन्तावंशववयविनि वृत्तित्वेपि यदवयववृत्तित्वं तदवयविवृत्तित्वविरहाद्व्यभिचाराभावादिति

वर्त्तमानस्य दधित्वसामान्यस्य तद्वतो वा वाचकत्वं किमिकारान्ते किं यकारान्ते किमन्नन्ते किन्नकारान्ते दधिशब्दे वर्त्तते? दधि पश्य दध्यानय दध्ना क्रीड दधनि रमस्वेति सर्वविधप्रयोगदर्शनेन सर्वत्रैव बालानामाद्यव्युत्पत्तिसम्भवात्।

न च यकारान्तादिप्रयोगाणामिकारान्तस्मरणद्वारकपदार्थबोधकत्वसम्भवाद्दधीत्येव वाचकम्, न तु दध्यदध्नादीति साम्प्रतम्, वैपरीत्यस्यापि सम्भवात्। नापि दधीति प्रकृतिमङ्गीकृत्य 'व्याकरणेन[1] नानाविधविकारप्रतिपादनाद्विनिगमना 'शङ्कया[2] व्याकरणस्य प्रवृत्ति-

वाच्यम्, अप्रयोजकत्वात्, दधित्वं यदि परमाणुवृत्तिजातिः स्यात्पार्थिवपरमाणुवृत्तिः स्यादिति प्रतिकूलतर्कपराहतत्वात्, दध्यारम्भकः परमाणुर्न दधित्वाश्रयः नित्यत्वे सति पृथिवीत्वात् पटारम्भकपरमाणुवदित्यनेन सत्प्रतिपक्षितत्वाच्च। न चात्रानुमाने व्यञ्जकासत्त्वमुपाधिस्तस्य साध्यव्यापकत्वं घटादौ दधित्वव्यञ्जकरसविशेषस्याभावात्सुघटम्, साधनाव्यापकत्वञ्च परमाणौ नित्यपृथिव्यां दधित्वव्यञ्जकरसविशेषस्य सत्त्वादुन्नेयमिति वाच्यम्, रसविशेषवत्त्वे सत्यवयवित्वस्यैव दधित्वव्यञ्जकतया परमाणौ तदभावात्साधनाव्यापकत्वविरहादित्यादिकं विस्तरेण कुसुमाञ्जलिप्रकाशे दर्शितम्। तथा च दधित्वस्य द्व्यणुकादिमात्रवृत्तित्वं न परमाणुवृत्तित्वमित्याशयेन **द्व्यणुकादा**वित्युक्तम्। **दधित्वसामान्यस्य तद्वतो** वेत्युभयं जातिशक्तिजातिविशिष्टव्यक्तिशक्तिमतद्वयाभिप्रायेण। **किमिकारान्ते** इत्यादीनां **दधिशब्दे** इत्यनेनान्वयः। इकारान्तादौ सर्वत्र वाचकतासन्देहप्रयोजकमाह—**दधि पश्ये**त्यादिना।

**वैपरीत्यस्यापि सम्भवादि**ति। विनिगमनाविरहेणेकारान्तादिप्रयोगाणां यकारान्तस्मरणद्वारकपदार्थबोधकत्वसम्भवाद्यकारान्तमेव वाचकमित्यस्यापि सम्भवादित्यर्थः। **व्याकरणेन** पाणिनीयादिना। **नानाविधविकारो** यत्वानङादिः। **विनिगमना शङ्कयेति**। तथा च व्याकरणस्यैवेकारान्ते वाचकताविनिगमकत्वमिति भावः। भवेदेवम्, यदि व्याकरणस्य शक्तिग्राहकत्वं प्रामाणिकं स्यात्? तदेव न, तस्यानादिनिष्पन्नसाधुशब्देषु रक्षोहागमाद्यर्थं प्रकृतिप्रत्ययविभागकल्पनामात्रप्रयोजनकत्वादित्याह—**व्याकरणस्ये**ति। प्रवृ-

१ व्याकरणे इति मु० पु० पा०। २ शक्या इति मु० पु० पा०।

लाघवोत्प्रेक्षितप्रकृतिप्रत्ययादेशादेशिभावसहस्रव्युत्पादितनिष्पन्नसाधुपदस्य पारमार्थिकपदार्थसम्बन्धाप्रतिपादकत्वात्, अन्यथा नानाविधानामनुबन्धानामागमानां नित्यमश्रूयमाणानां क्विबादिप्रत्ययानामौणादिकानाञ्च प्रकृतिप्रत्ययविभागानां तत्तदर्थशक्तिकल्पनप्रसङ्गात्। यदाह हरिः—"उपायाः शिक्ष्यमाणानां बालानामुपलालनाः। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥" इति।

**त्तीनां** शक्तीना **लाघवायोत्प्रेक्षितः** सम्भावनामात्रविषयीकृतः प्रकृतिप्रत्ययादिभावस्तेषा **सहस्रेणा**नेकेन **व्युत्पादितानि निष्पन्नानि** पूर्वसिद्धानि **साधुपदानि** येन तस्येत्यर्थः। **सम्बन्धाप्रतिपादकत्वादि**ति। तथा च साधुशब्दा अनादिनिष्पन्ना एव, परन्तु गौस्तिष्ठति, देवदत्तः पचतीत्यादयः श्रृङ्गग्राहिकया जन्मसहस्रेणापि बोधयितुं बोद्धुञ्चाशक्याः, आनन्त्यात्। अतः प्रकृतिप्रत्ययविभागकल्पनारूपो लघुभूत उपायो लिपिवद् व्याकरणेन प्रदर्शितः। तस्याश्रयणञ्चावश्यकम्। अतएव सूक्ष्मतात्त्विकारुन्धतीज्ञानाय स्थूलारुन्धतीप्रदर्शनं पारमार्थिकचन्द्रदर्शनाय शाखाचन्द्रदर्शनं च लोके प्रसिद्धम्। उत्तरमीमांसायाञ्च पारमार्थिकब्रह्मज्ञानाय काल्पनिकपञ्चकोशावतरणं प्रसिद्धम्। तत्तदवयवबोधनेन तत्समुदायो बोध्यते, अवयवार्थबोधनेन च समुदायार्थो बोध्यत इति तात्पर्य्यविषयस्य समुदायार्थस्याबाधितत्वात्काल्पनिकप्रकृतिप्रत्ययविभागकरणेपि निरुक्तरीत्या तात्पर्य्यग्राहकतया न ऋषीणामप्रामाण्यमिति व्याकरणस्य न शक्तिग्राहकप्रमाणत्वमिति भावः। **अन्यथा** व्याकरणस्य पारमार्थिकपदपदार्थसम्बन्धप्रतिपादकत्वे। **शक्तिकल्पनप्रसङ्गादि**ति। कैरपि तेषु शक्तेरकल्पनेनेष्टापत्तेरसम्भवादिति भावः। उक्तार्थे हरिसंवादमाह—**यदाहे**ति। **उपायाः** प्रकृतिप्रत्ययविभागकल्पनात्मकाः। **बालानाम्** अज्ञातपदपदार्थसङ्गतिकानाम्। **उपलालनाः** लाघवादनत्यायासेन पदपदार्थसङ्गतिग्राहकाः। अत्र लौकिकमाभाणकमाह—**असत्ये वर्त्मनी**ति। तथा च कल्पनामात्रविषयीभूतप्रकृतिप्रत्ययविभागं प्रथमतो ज्ञात्वा पारमार्थिकपदपदार्थसम्बन्धं जानातीत्याशयः।

---

१ ० पद० इत्यधिकः पा० मु० पु०।

**यज्ञकर्म्मप्रयोगार्हनिष्पन्नशब्दव्युत्पादनार्थमाम्नायस्य च रक्षोहागमलध्वसन्देहप्रयोजनाय प्रवृत्तं व्याकरणं [१]द्व्यमेव प्रकृतिं कल्पयित्वा**

व्याकरणस्य शक्तिग्राहकत्वविरहे तस्य प्रयोजनान्तराणि महाभाष्योक्तान्यन्यथापि व्याकरणरचने सति सम्भवन्तीत्याह—**यज्ञकर्म्मे**त्यादिना। **आम्नायस्य** वेदस्य। **रक्षोहागमे**ति। इदञ्च "कानि पुनरस्य प्रयोजनानि" इत्याशङ्क्य "रक्षोहागमलध्वसन्देहाः प्रयोजनम्" इति महाभाष्यकारेणोक्तम्। तत्र प्रयुज्यते प्रवर्त्त्यतेनेनेति करणल्युडन्तः प्रयोजयतीति कर्त्तृव्युत्पत्त्या बाहुलकात्कर्त्तृल्युडन्तो वा प्रयोजनशब्दः। उभयथापि प्रवर्त्तकविधिपरः प्रयोजनशब्द एकः पुँल्लिङ्गः फलपरः क्लीबोपरः। उभयोः "नपुंसकमनपुंसकेन..." इत्यादिसूत्रेण नपुंसकैकशेपे एकवद्भावस्य वैकल्पिकतया प्रश्ने बहुवचनमुत्तरे चैकवचनमिति बोध्यम्। तत्र प्रवर्त्तको वेदः "ब्राह्मणेन निष्कारणो धर्म्मः षडङ्गो वेदोध्येयो ज्ञेयश्च" इति। निष्कारणो दृष्टकारणनिरपेक्षो नित्य इति यावत्। कारणपदं कार्य्यतेनुष्ठाप्यतेनेनेतिव्युत्पत्त्या फलपरम्। ब्राह्मणेन षडङ्गो वेदोध्येयो ज्ञेयश्चेत्यन्वयः। तथा च साङ्गवेदाध्ययनतदर्थज्ञानरूपोयं धर्म्मो नित्यः सन्ध्योपासनावदित्यर्थः। एषा श्रुतिरिति हरदत्तादयः। स्मृतिरिति भट्टाचार्य्याः। तत्र यदि स्मृतिरेवेति प्रामाणिकम्, तर्हि "आगमः खल्वपि" इति भाष्येप्यागममूलकत्वादागमः स्मृतिरेवेति व्याख्येयम्। अङ्गत्वञ्चाङ्गत्वेन व्याकरणादीनां संस्तवात्। तदुक्तं शिक्षायां "मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते। शिक्षा घ्राणन्तु वेदस्य हस्तौ कल्पान् प्रचक्षते॥" इति। उपकारकतयाप्यङ्गत्वम्, यतो व्याकरणमर्थविशेषमाश्रित्य स्वरविशेषादीन् विदधत् पदार्थविशेषनिर्णये उपयुज्यते। ज्योतिषमपि स्वाध्यायोपयोगिनमनुष्ठानोपयोगिनञ्च कालविशेषं प्रतिपादयति। निरुक्तन्तु व्याकरणस्यैव परिशिष्टप्रायं बाहुलकादिसाध्यानां लोपागमविकारादीनां प्रायशस्तत्र संग्रहात्। छन्दोविचितिरपि गायत्र्यादिलक्षणद्वारा "गायत्र्या यजति..." इत्यादिविध्यर्थनिर्णये उपयुज्यते। शिक्षापि वर्णोच्चारणप्रकारं दर्शयति।

---

१ एव इति पा० ना० मु० पु०।

कल्पसूत्राण्यपि प्रकरणान्तरपठितस्य न्यायलभ्यस्य शाखान्तराधीतस्य चाङ्गजातस्योपसंहारेण प्रयोगं दर्शयन्ति। तस्मात् षडप्यङ्गानि वेदार्थबोधोपकारकाणि। तेष्वपि व्याकरणस्य पदपदार्थावगमप्रयोजकत्वात् प्राधान्यम्; अतएव शिक्षायान्तस्य मुखत्वेनोपादानम्। तथा चाध्ययनविधिर्व्याकरणाध्ययनस्यानुष्ठापक इति।

रक्षोहागमादयस्तु व्याकरणाध्ययनस्य फलम्। तत्र रक्षा वेदसंरक्षणम्। तथाहि—भाषायामदृष्टालोपागमवर्णविकाराश्छन्दसि दृश्यन्ते, ते केवलप्रयोगशरणैः प्रामादिकाः सम्भाव्येरन्। वैयाकरणस्तु लक्षणदर्शी तदेव रूपं स्थापयति। तत्र लोपोदाहरणम् "त्मना देवेषु विविदे मितद्रुः।" त्मना आत्मनेत्यर्थः। "मन्त्रेष्वाङ्यादेरात्मनः" इत्याकारलोपः।

आगमो यथा—"देवासः।" "ब्राह्मणासः" "आज्जसेरसुक्" इत्यसुगागमः। लोपागमौ यथा—"देवा अदुह्र" अदुहतेत्यर्थः। दुहेर्लङो झस्यादादेशे कृते "लोपस्त आत्मनेपदेषु" इति तलोपः, "बहुलं छन्दसि" इति रुडागमः। एवं "नाशिरं दुह्रे विश्वा इत्ते" "धनेवो दुह्रे..." इत्यादिलडन्तमप्युदाहरणम्। वर्णविकारो यथा—"गृभ्णामि ते सौभगत्वाय" "हृग्रहोर्भश्छन्दसि" "हस्येति वक्तव्यम्" इति भकारः। प्रत्ययोपि छान्दसो यथा "उद्ग्राभञ्च निग्राभञ्च" इति। "उदि ग्रहः" इति सूत्रे "उद्ग्राभनिग्राभौ च छन्दसि स्रुगुद्यमननिपातनयोः" इति वचनादुन्निपूर्वाद्ग्रहेर्घञ्। तत्रोत्पूर्वात्सूत्रेण लोकेपि सिद्धो घञ्, निपूर्वात्तु वार्त्तिकोक्तश्छन्दस्येव। सन्निवेशविशेषयुक्ताः पात्रविशेषाः स्रुचः। इह तु जुहूपभृतोरेव ग्रहणम् "उद्ग्राभञ्चेति जुहूमुद्यच्छति निग्राभञ्चेत्युपभृतं नियच्छति" इति वचनात्॥ भकारादेशः प्राग्वत्।

ऊहो यथा—यत्राङ्गजातं सम्पूर्णमुपदिष्टं सा प्रकृतिः, यथा—दर्शपूर्णमासौ। यत्र नोपदिष्टं सा विकृतिः यथा—"सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" इति विहितो यागः। तत्र वैकृतस्य विधेर्विषयभूतायां भावनायां करणीभूते यागे उपकारकाकाङ्क्षायां तन्मुखेन प्राकृतमङ्गजातं प्राप्यते। वैदिके करणे तादृशानामेवाङ्गानामपेक्षितत्वात्, तेषामेव प्रकृतौ क्लृप्तसामर्थ्यात्, तद्विशेषस्य

चैकदेवतात्वादिना शक्यज्ञानत्वात्। तस्मात् "प्रकृतिवद्विकृतिः कर्त्तव्या" इति पूर्वमीमांसायां स्थितम्। तत्र यस्याङ्गस्य प्रकृतौ य उपकारः क्लृप्तस्तस्य प्रकृतावसम्भवे निवृत्तिः। यथा—प्रकृताववघातस्य वैतुष्यमुपकारकतया क्लृप्तं तस्य कृष्णलेष्वसम्भवादवघातस्य निवृत्तिः। मन्त्रा अप्यङ्गम्। तेषाञ्चानुष्ठेयार्थप्रकाशनं कार्य्यम्। तत्र प्रकृतौ यस्य मन्त्रस्य यदभिधेयं तच्चेद्विकृतौ साकल्येन नास्ति, तदा कृत्स्नस्य मन्त्रस्य निवृत्तिः। यथा—"अवरक्षो दिवः सपत्नं वध्यासम्" इत्यवघातमन्त्रस्य कृष्णलेषु। यस्य त्वेकदेशस्याभिधेयं नास्ति तस्य तावन्मात्रं निवर्त्तते। यथा—"अग्नये त्वा जुष्टं निर्वपामि" इत्यस्य मन्त्रस्यावयवभूतं देवताभिधायिपदमौषधद्रव्यकत्वेनैकदेवताकत्वेन चाग्नेयविकारभूते सौर्य्ये निवर्त्तते। अकारान्तेतरप्रकृतिसन्निधानेनैव हि एकारस्य सम्प्रदानं वाच्यम्, अकारान्तात्तु यशब्दस्य। ततश्चतुर्थ्यन्तसूर्य्यायेत्याद्युदात्तम् अग्नय इत्यस्य मध्योदात्तस्य स्थाने ऊह्यम्। सोयं प्रकृत्यूहः। लिङ्गस्य क्वचिदूहः। यथा—"देवीरापः शुद्धाः स्थः" इत्यप्सु विनियुक्तो मन्त्रस्तस्याज्ये ऊहः "देवाज्य शुद्धमसि" इति। प्रत्ययमात्रस्य क्वचिदूहः। यथा—"मा भेर्म्मा संविक्थाः" इति पुरोडाशावदातमन्त्रस्तस्य धानासूहः "मा भैष्ट मा संविजिध्वम्..." इत्यादिरिति हरदत्तादयः। याज्ञिकास्तु "संविग्ध्वम्" इत्यूहमाहुः। युक्तञ्चैतत्, प्रकृतावनिट्कतया "विजिर् पृथग्भावे" इत्यस्य प्रयोगो न तु "ओविजी भयचलनयोः" इत्यस्येत्यवधारणात्।

लाघवमपि प्रयोजनम्। तथाहि—अध्यापनं ब्राह्मणस्य वृत्तिः, तन्निर्वाहो वैदुष्याधीनः। वैदुष्यञ्च साध्वसाधुविवेकः। स च न प्रतिपदपाठादिना सम्भवति, शब्दानामानन्त्यात्। तस्मादुत्सर्गापवादरूपलक्षणद्वारा तद्बोधने लाघवम्। अन्यथा तु गौरवम्।

असन्देहोपि प्रयोजनम्। तथाहि—'स्थूलपृषतीमनड्वाहीमाग्निवारुणीमालभेत" इति श्रूयते। तत्र सन्देहः—कर्म्मधारयोयं बहुव्रीहिर्वेति। तत्र कर्म्मधारयपक्षे पृषतीशब्देन मत्वर्थलक्षणया पृषद्वती बिन्दुमती गौरेवाभिधीयते स्थूलापि सैव, बिन्दूनां स्थौल्यं तानवं वा यथातथास्तु, बहुव्रीहौ तु स्थौल्यं

**अनचि परे सम्प्रसारणविधिना दधीत्यादि साधयितुं[1] क्षमते। न च फले विसंवदति।**

**एवं देवो वनं पिता नदीत्यादौ विसर्गमकाराकारलोपानामेकत्व-वाचकत्वम्? उत तैः स्मारितस्य सोः? विपरीतश्चात्र विनिगमकम्, कुत्रापि साधुशब्देऽप्रयुज्यमानस्य सकारस्य वाचकताया व्यवहारेण**

प्रपत्स्वेवेति, गौस्तु स्थूला कृशा वेत्यनादरः। तत्र लकाराकारे उदात्तत्वं दृष्ट्वा बहुव्रीहिं वैयाकरणो निश्चिनोति। ततश्च निश्चयेन प्रतिबन्धात्संशयानुत्पादस्स एवासन्देहः। अर्थाभावेऽव्ययीभावादसन्देहमिति स्यादिति नाशङ्कनीयम्, अतएव (सन्देहाभाव इत्यर्थे असन्देहशब्दस्य परवल्लिङ्गतया "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति) भाष्यप्रयोगाद् "अद्रुतायामसंहितम्" इति "असंहितया ." इत्यादि निर्देशाच्चार्थाभावेऽव्ययीभावतत्पुरुषद्वयस्यैव पर्य्यायेण विधानस्य ज्ञापनात्। एवम् "इन्द्रपीतस्योपहूतो भक्षयामि..." इत्यादावपि स्वरेणैव बहुव्रीहिनिर्णये इन्द्रपीताधिकरणमवैयाकरणान् प्रति सार्थकम्। भाष्ये सन्दर्भशुद्ध्यर्थं फलचतुष्टयस्य प्राक् पश्चाद्वा प्रवर्तके आगमे वक्तव्ये मध्ये तदुक्तिः फलसन्देहेन नित्यानामपि फलपर्य्यवसानमस्तीति सूचितम्। फलन्तु पापक्षयः प्रत्यवायानुत्पत्तिर्वा। "धर्म्मेण पापमपनुदति" "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥..." इत्यादिवचनानीह साधकानीति दिक्। **साधयितुं क्षमत** इति। तथा च व्याकरणान्तरेण दध्य-प्रकृतेरपि दधीत्यादिसाधनस्य सम्भवाद्दध्येत्येव वाचकमित्यस्यापि सुवचत्व-मित्याशयः। **न च फल** इति। तथा सत्यपि दधि दधिनीत्यादिरूपाणामेव सिद्धेर्न फले भेद इत्यर्थः।

प्रकृतेर्वाचकत्वं विकल्प्य प्रत्ययस्य तद्विकल्पयति—**एवमि**ति। **विपरीतश्चात्रे**ति। **अत्र** उक्तस्थलेषु **विपरीतं** विकाराणां वाचकत्वसाधकम् **विनिगमकम्** आदेशिनां वाचकत्वाभावस्य विकाराणां वाचकत्वस्य च साधकं प्रमाणम्। तदेव दर्शयति—**कुत्रापी**ति। **अप्रयुज्यमानस्ये**ति। देवस्तत्रेत्यादौ सकारस्य श्रूयमाणत्वादिदं चिन्त्यम्। आदेशिनां सकारादीनां वाचकत्वेनुग-

१ साधयितुम्, इति च पा० मु० पु०।

ग्रहीतुमशक्यत्वात्। न चादेशानां नानात्वादेकस्यादेशिनो वाचकत्वमिति युज्यते, व्याकरणभेदेन सुसिरिरुप्रभृतीनामादेशिनामप्यनेकत्वात्। "उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः।" इति न्यायात्।

किञ्च विसर्गेण सुकारस्तेन चैकत्वं स्मरणीयमिति परम्पराकल्पने गौरवाद् विसर्गस्य स्मारकतया तदनुभावकत्वमुचितम्।

तस्मात् साधुनि पदे प्रयुज्यमाना विकारा एव वाचकाः। तदाहुरभियुक्ताः—"साधुशब्देऽन्तर्गता हि बोधका न तु तत्स्मृताः। व्यवस्थितेर्व्यवहृतेस्तद्धेतुन्यायतस्तथा॥" इति। आदेशा विसर्गादयस्तावच्छ्रूयमाणत्वेनान्यथाकर्तुमशक्यतया व्यवस्थिता व्यवहारबलेन बालैर्गृहीतसङ्गतिकाः परैरपि पदार्थबोधकस्यादेशिनः [1]स्मारकतया क्लृप्तपदार्थबोध-

तत्वमपि न विनिगमकमित्याह—**न चादेशाना**मित्यादिना। **व्याकरणभेदेन** चान्द्रादिभेदेन। आदेशिनाम्नानात्वं हरिसम्मतमित्याह—**उपेये**ति। **उपेया** व्युत्पादनीयाः साधुशब्दाः, तत्सिद्धानुकूला **उपायाः** प्रकृतिप्रत्ययरूपा **अव्यवस्थिता** अनेके इत्यर्थः।

व्याकरणानामनेकत्वेऽप्यादेशन्यूनसङ्ख्यत्वमेवादेशिनामित्यतस्तेषां वाचकत्वे युक्त्यन्तरं दर्शयति—**किञ्चे**ति। **स्मारकतया तदनुभावकत्वमि**ति। विभक्त्यर्थसङ्ख्यादिस्मारकत्वेनैकत्वाद्यनुभवानुकूलत्वमित्यर्थः।

उक्तहेतुभिर्विकाराणामेव वाचकत्वमित्युपसंहरति—**तस्मादि**ति। अत्रापि हरिं प्रमाणयति—**तदाहुरि**त्यादिना। आदेशानां व्यवस्थितत्वे हेतुमाह—**आदेशा** इति। **व्यवहारबलेने**ति। देवः पश्यतीत्यादौ विसर्गस्यैकत्ववाचकताया व्यवहारेण गृहीतत्वादिति भावः। **तद्धेतुन्यायत** इति। तद्धेतुप्रयोज्यस्य हेतुत्वे कल्पनीये तस्यैव हेतुत्वं न्याय्यमित्याशयकस्सन्न्यायस्तं प्रकृते योजयति—**परैरि**त्यादिना। **प्रयोजकभावः** प्रयोजकत्वम्। तथा चादेशिनामश्रूयमाणानां

---

१ स्मारकतया इति मु० पु० पा० ना०।

प्रयोजकभावाश्च । आदेशिनस्तु व्याकरणभेदेन नानाविधा अव्यवहार्य्याः पदार्थावगमपूर्वमखिलैरनभ्युपगतप्रतिसन्धयश्चेति वर्णस्फोटवादिनः ।

अत्रोच्यते—

पाणिन्यादिभिरुत्प्रेक्ष्य य आदेशीति कल्पितः ।
तस्य वाजिविषाणस्य लक्विबादेः क्व शक्तता ॥३२॥
ये क्वचिद्बोधकास्साक्षात्क्वचिच्च विकृतिङ्गताः ।
त एव वाचका नैतदादेशाः शाब्दिकस्मृतेः ॥३३॥

व्यवहारलाघवार्थं पाणिन्यादिभिरुत्प्रेक्ष्य प्रकृत्या धातुना समा-

वाचकत्वेपि तत्स्मरणजनकत्वमादेशानां श्रूयमाणानामावश्यकमेवेति परम्परया तेषामन्वयबोधकत्वापेक्षया साक्षादेव स्मरणद्वारा तथात्वमुचितम् , मध्ये आदेशिस्मरणस्य निष्प्रयोजनकत्वादिति भावः । आदेशिनामवाचकत्वे हेतूनाह—**आदेशिनस्त्वि**ति । स्फोटवादिभिरादेशिस्मरणस्यान्वयबोधपूर्वमनभ्युपगमादाह—**अखिलैरि**ति । तथा च यथादेशानां सर्वसिद्धं स्मरणद्वारार्थानुभावकत्वं न तथादेशिनामिति भावः ।

स्फोटानङ्गीकर्त्तृभिः क्वचिदप्यश्रूयमाणानां लकारक्विबादीनामवाचकत्वमेवोपेयते । तिबाद्यादेशानाञ्च बहुषु प्रयोगेषु श्रूयमाणत्वाद्वाचकत्वं क्वचित्तेषां विकारप्राप्तावपि तेन तत्स्मरणात्तत्रापि तिबादीनामेव वाचकत्वन्न तदादेशानां लाघवादित्याशयेन समाधत्ते—**अत्रोच्यत** इत्यादिना । **अत्र** वर्णस्फोटविषये । **उच्यते** समाधानमिति शेषः ।

कारिकाद्वयोक्तमर्थं क्रमेणाह—**व्यवहारे**त्यादिना । **उत्प्रेक्ष्य** सम्भावना-

**रोपितसमभिव्याहाराः, वस्तुतः प्रकृतिसमभिव्याहारेण धातुशब्देष्व-प्रयुज्यमानतया तुरङ्गशृङ्गसदृशा लकारक्विबादयो न कस्याप्यर्थस्य वाचकाः । परिनिष्ठिततिबाद्यादेशनिष्ठां शक्तिमादेशिन्युपचर्य्य वैया-करणा व्यवहरन्ति । अतएव परिनिष्ठितराजपुरुषादिसमासस्यार्थवत्ता-मलौकिके राजन् ङस् पुरुष सु इत्याकारके विग्रहवाक्ये आरोप्य प्राति-पदिकसंज्ञां प्राचीनसुब्निवृत्तिपरतदुत्पत्त्यादिकार्य्यं निर्वर्त्तयन्त्येकार्थी-भावसामर्थ्यवादिनः ।**

विषयीकृत्य । **समभिव्याहारा** इति । **लक्विबादय** इत्यस्य विशेषणम् । **तुरङ्गशृङ्गसदृशा** इति । यथा तस्यालीकत्वं तथा लकारादीनामिति भावः । लकारादीनामवाचकत्वे "लः कर्म्मणि..." इत्यादिसूत्रे तेषां कर्म्मादिवाचक-त्वोक्तिरसङ्गता स्यादित्यत आह—**परिनिष्ठिते**ति । परिनिष्ठितत्वं शाब्दबोध-जनकतया साधुत्वमविकृतत्वं वा । **आदेशिन्युपचर्य्ये**ति । स्वाश्रयनिष्ठ विधेयतानिरूपितोद्देश्यत्वसम्बन्धस्य कर्म्मादिवाचकताप्रतियोगिकस्य लकारे सत्त्वात् कर्म्मणीत्यादिप्रयोगा लकारादिविशेष्यकं शाब्दबोधं लक्षणयैव जनयन्तीत्याशयः । **अतएव** अन्यनिष्ठायाश्शक्तेस्तदन्यस्मिन् परम्परयो-पचारादेव । **अलौकिके** प्रयोगानर्हत्वेनासाधौ । **प्रातिपदिकसंज्ञामि**ति । "कृत्त-द्धितसमासाश्च" इत्यत्राप्यर्थवदित्यस्यानुवृत्तेरित्याशयः । **कार्य्यं निर्वर्त्त-यन्ती**ति । "सुपो धातुप्रातिपदिकयोः" "ङ्याप्प्रातिपदिकात्" इति सूत्राभ्या प्रातिपदिकसंज्ञायां सत्यामेव सुब्लोपसुबुत्पत्त्योर्विधानादित्याशयः । **एकार्थी-भावसामर्थ्यवादिन** इति । "समासे खलु भिन्नैव शक्तिः..." इत्यादिना राजपुरुषादिसमासे विशिष्टशक्तिवादिनो वैयाकरणा इत्यर्थः । दार्शनिकमते समुदाये शक्तिविरहेपि वृत्तिमदविषयकप्रतीत्यविषयत्वरूपस्यार्थवत्त्वस्य सत्त्वादेव प्रातिपदिकसंज्ञाया उपगमादिति भावः

अतएव लकारस्यावाचकतया तदादेशत्वाविशेषेप्याख्यातस्य कर्त्तृत्वे शतुः कर्त्तरि शक्तिरिति वैषम्यमुपपद्यते। यथाहि वाचकतानवच्छेदकेन कृत्परिभाषागोचरत्वेनोपलक्षिते शतृत्वादिना वाचके प्रत्यये "कर्त्तरि कृत्" इति वाचकताग्राहकातिदेशवाक्यप्रवृत्तिः, तथा तिबाद्यादेशित्वविशिष्टे लकारे[1] कर्त्तृवाचकताविधिर्विशेषणमेवोपसङ्क्रामति, विशेष्ये बाधाद् विशेषणमुपलक्षणीकृत्य विशेष्य इव विशेष्यमुपलक्षणी-

**अतएव** तिबादिनिष्ठशक्तेर्लकारादावारोपादेव। **वैषम्यमुपपद्यत** इत्यन्वयः। अयम्भावः—नैयायिकैराख्यातस्य कर्त्तृत्वकर्म्मत्वयोः शतृशानजादिकृतस्तदाश्रये शक्तिरुपगम्यते, "लः कर्म्मणि..." इत्यादिसूत्रे कर्म्मपदस्य "कर्त्तरि कृत्" इत्यतोनुवृत्तस्य कर्त्तृपदस्य भावप्रधानत्वात्। तच्चानुपपन्नम्, तिबादीनां शतृशानचोश्च लकारस्थानिकादेशत्वाद् वाचकतावच्छेदकस्य लत्वस्योभयत्र तुल्यतया तत्स्मारितस्य लकारस्यैकत्र कर्त्तृत्ववाचकत्वमन्यत्र कर्त्तृवाचकत्वमिति वैषम्ये बीजाभावादिति दूषणं शाब्दिका उपन्यस्यन्ति। तच्च तदैवोद्भावयितुमर्हन्ति, यदि लकाराणां वाचकत्वं प्रामाणिकं भवेत्तस्याभावे तु तित्वशतृत्वादीनां वाचकतावच्छेदकानां भिन्नत्वेनैकस्य कर्त्तृत्वनिरूपितमन्यस्य कर्त्तृनिरूपितं वाचकतावच्छेदकत्वमित्यत्र वैषम्येनुपपत्तेरभाव इति। नन्वेवं "लः कर्म्मणि..." इत्यादिसूत्रोक्तं कर्म्मादिवाचकतावच्छेदकत्वं विरुद्धम्, इत्याशङ्कायां वाचकतानवच्छेदकरूपेणापि वाचकत्वोपन्यासः सूत्रकारस्यान्यत्रापि दृष्ट इत्यत्रापि वाचकतानवच्छेदकेनैव लत्वेन तदुपन्यासे न विरोध इत्याशयेन समाधत्ते—**यथाही**त्यादिना—**शतृत्वादिना वाचक** इति। शतृत्वस्य वाचकतावच्छेदकताया उभयवादिसिद्धतया दृष्टान्तत्वेनोपन्यासः। **तिबाद्यादेशित्वविशिष्ट** इति। "लः कर्म्मणि..." इत्यादिसूत्रस्य "तिप्तस्झि..." इत्यादिसूत्रेणैकवाक्यतया लत्वमात्रावच्छिन्ने कर्त्रादिवाचकत्वग्राहकत्वस्यासम्भव इति तिबादिनिष्ठादेशतानिरूपितादेशित्वसहितस्यैव लकारस्य वाचकत्वमतिदिश्यते, तच्च विशेष्ये लकारे बाधाद्विशेषणे तिबादौ पर्य्यवस्यतीत्यर्थः। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमपाकर्त्तुमाह—**विशेषणमुपलक्षणी**ति।

---

१ तकारे मु० पु० पा०।

कृत्य विशेषणेप्याप्तवाक्यप्रवृत्तेरित्यवाचका एवौत्प्रेक्षिकलकारादयः।

तिबादिषु प्रकृतिसमभिव्याहारज्ञानं लकारजनिता च पदार्थोपस्थितिः परस्परं सहकृत्य फलं जनयतीति पक्षस्यासम्भवदुक्तिकत्वात्। यादृशपदत्वसामानाधिकरण्येन समभिव्याहारबुद्धिस्तद्धर्म्मावलीढजनिताया एव पदार्थोपस्थितेः शाब्दबोधाङ्गत्वात्, अन्यथा पचति ल इति वाक्यात् लकारो न [1]पचिसमभिव्याहृतस्तिप्च न वाचक इति ज्ञानकालेपि तथा शाब्दबोधप्रसङ्गात्।

यदादेशत्वावच्छेदेन समभिव्याहारबुद्धिस्तज्जनिता पदार्थोपस्थितिः शाब्दबोधाङ्गमित्यपि न, आदेशत्वाद्यनुपस्थितावपि शाब्दबोधोदयात्।

**आप्तवाक्यप्रवृत्तेरि**ति। तथा च "कर्त्तरि कृत्." इत्यादौ विशेषणे वाचकतावच्छेदकत्वस्य बाधः। प्रकृते च विशेष्ये लकारे कर्त्रादिवाचकत्वस्य बाध इति भावः।

विशेष्ये लकारे कर्त्रादिवाचकत्वबाधं व्यवस्थापयितुमाह—**तिबादिष्वि**ति। असम्भवदुक्तिकत्वे हेतुमाह—**यादृशपदत्वे**ति। तिप्त्वावच्छेदेन पचिसमभिव्याहारस्य बाधात्तद्बुद्धेर्भ्रमत्वं स्यादित्यतः **सामानाधिकरण्येने**त्युक्तम्। **तद्धर्म्मावलीढजनिताया** इति। तद्धर्म्मावच्छिन्ने वृत्तिज्ञानजनिताया इत्यर्थः। **शाब्दबोधाङ्गत्वादि**ति। तथा च तिप्त्वसामानाधिकरण्येन पच्समभिव्याहारज्ञानलत्वावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यकर्त्तृत्वाद्युपस्थित्योर्न्न सहकृत्य कार्य्यजनकत्वं सम्भवतीति भावः। **अन्यथा** उक्तनियममनङ्गीकृत्य निरुक्तयोः सहकारिताकल्पने। **तथा शाब्दबोधप्रसङ्गादि**ति। उक्तज्ञानयोस्तदानीमप्युत्पत्तौ बाधकाभावात्पाकानुकूला कृतिरिति शाब्दबोधप्रसङ्गादित्यर्थः।

ननु मास्तूक्तज्ञानोपस्थित्योः सहकृत्य कार्य्यजनकत्वम्। यन्निरूपितादेशत्वावच्छेदेन समभिव्याहारज्ञानं तज्जनिता पदार्थोपस्थितिरित्येतयोरेव तथात्वादुक्तापत्तिवारणम्, तिप्त्वलत्वयोः समभिव्याहारज्ञानोपस्थितिविषयतावच्छेदकयोर्भिन्नत्वेप्यादेशादेशिभावस्य तदाश्रये सत्त्वादित्याशङ्क्य निराकरोति—**यदादेशत्वे**ति। **शाब्दबोधोदयादि**ति। तथा च तदानीं तिपि लादेशत्वज्ञान-

---

१ पचति० इति मु० पु० पा०।

न च तिपो वाचकत्वेपि यत्र तिपि समभिव्याहारबुद्धिस्तत्रावाचकत्वनिर्णये तिबन्तरजनितायां पदार्थोपस्थितौ तथाविधान्वयबोधप्रसङ्गतादवस्थ्यम्, नहि शब्दव्यक्तिभेदेन पदार्थोपस्थितेः कारणताभेदः, आनन्त्यप्रसङ्गादिति वाच्यम्; तिप्त्वसामानाधिकरण्येन पचिसमभिव्याहारग्रहस्य तिप्त्वावच्छेदेन वाचकताग्रहजनितायाः कर्तृत्वाद्युपस्थितेश्च परस्परसहकारित्वोपगमात्। तिप्त्वसामानाधिकरण्येन वाचकताग्रहेण तत्संस्कारेण वा जनितायाः पदार्थोपस्थितेरप्यङ्गत्वे पचिसम-

विरहात्तदवच्छेदेन पच्समभिव्याहारज्ञानस्यासम्भवाच्छाब्दबोधानुपपत्तिरेव स्यादिति भावः।

तिपो वाचकत्वेतिप्रसङ्गमाशङ्क्य निराकरोति—**न चे**ति। **वाच्य**मिति परेणान्वितम्। **यत्र तिपी**ति। यद्व्यक्तावित्यर्थः। यद्व्यक्तौ समभिव्याहारज्ञानं तद्व्यक्तावेव वाचकत्वज्ञानं शाब्दबोधजनकमित्युक्तावेतद्दोषवारणेपि कारणताया आनन्त्यप्रसङ्गोऽसर्वज्ञदुर्ज्ञेयत्वञ्च स्यादिति न तद्विवक्षितुं शक्यमित्याह—**नही**ति। अत्रोत्तरयति—**तिप्त्वसामानाधिकरण्येने**ति। **सहकारित्वोपगमादि**ति। तथा च तत्सामानाधिकरण्येन तद्बाधनिश्चयस्य तदवच्छेदेन तज्ज्ञानविरोधितया तिप्त्वसामानाधिकरण्येन कर्तृत्वावाचकत्वनिश्चयदशायां तिप्त्वावच्छेदेन कर्तृत्ववाचकताज्ञानस्यासम्भवान्नोक्तापत्तिरिति भावः। वाचकताज्ञाने तद्धर्मव्यापकस्वप्रतियोगिकस्वरूपत्वेन प्रकारतावच्छेदकसंसर्गतायाः प्रवेशो निष्प्रयोजनकोऽनुभवविरुद्धश्च। तथा चोक्तस्थलेवच्छेदकावच्छेदेन वाचकताज्ञानस्यासम्भवेपि सामानाधिकरण्येन तत्तदभावज्ञानयोः प्रतिबध्यप्रतिबन्धकभावविरहेण तिप्त्वसामानाधिकरण्येन वाचकत्वाभावनिश्चये सत्यपि तादृशस्य वाचकताज्ञानस्योत्पत्तौ बाधकाभाव इति नोक्तापत्तिवारणमिति यदि ब्रूयात्तदाप्याह—**तिप्त्वसामानाधिकरण्येने**ति। **तत्संस्कारेण वे**ति। वाचकताज्ञानजन्येन तद्विषयकसंस्कारेणेत्यर्थः। इदञ्च ज्ञानस्य क्षणिकतयोपस्थितिकाले नाशात्सहकारित्वासम्भवं मनसि निधायोक्तम्। स्वजन्यसंस्कारवत्त्वसंसर्गेण

भिव्याहृतं तिप्पदमिति विशिष्टज्ञानस्वरूपोद्बोधकजनितत्वमेव तत्र प्रवेशनीयम् ।

ये च टाङसिङसाद्या मनसा मनस इत्यादौ श्रूयमाणा अपि बोधकास्तेषां घटेन घटात् घटस्येत्यादाविनात्स्यस्वरूपो विकारो न वाचकः, अनेकशक्तिकल्पनापत्तेः, विनिगमिका शाब्दिकस्मृतिरेव । दधिशब्देपि कोशादिः । दध्यशब्दादेर्वाचकत्वेपि दधिशब्दस्य वाचकत्वावश्यम्भावेन विकृतानां स्मारकतयैवोपयोगकल्पनाया न्याय्यत्वात् । प्रथमैकवचनन्तु सकार एव, देवस्तत्र गतस्स इत्यादौ श्रूयमाणस्य सकारस्य वाचकताध्रौव्ये तदुपस्थापकतयैव विसर्गादिरुपयोगसम्भवात्, पाणिनिप्रणीतस्मृतेरेव विनिगमकत्वात् ।

तज्ज्ञानस्यापि तथात्वसम्भवो बोध्यः । **तत्र प्रवेशनीयमि**ति । तथा चोक्तस्थले पचिसमभिव्याहृतत्वविशिष्टे तिपि वाचकताज्ञानस्योक्तबाधनिर्णयेन प्रतिबन्धान्न तत्र शाब्दबोधापत्तिरिति भावः ।

एतावता नित्यमश्रूयमाणानां लकारादीनामवाचकत्वं श्रूयमाणाना तिबादीनाञ्च वाचकत्वं व्यवस्थाप्य द्वितीयकारिकोक्तं कियत्सु प्रयोगेषु श्रूयमाणानां कियत्सु विकारमापन्नानां टाङसिङसादीनां प्रत्ययाना दध्यादीना प्रकृतीनाञ्च वाचकत्वन्न तु तद्विकाराणामिनादीना दध्यादीनाञ्च, तेषामादेशिस्मारकत्वमात्रादेव शाब्दबोधोपयोगित्वमनन्तानां वाचकत्वकल्पनाया अन्याय्यत्वादित्याह— **ये चे**त्यादिना । पूर्वोक्तं विनिगमनाविरहं निरस्यति—**विनिगमिके**ति । तथा च पाणिन्यादिमुनिप्रणीतव्याकरणकोशादेरेव श्रूयमाणादेशिनां वाचकत्वे विनिगमकस्य सत्त्वान्न तद्विरह इति भावः । **कोशादि**रिति **विनिगमक** इति लिङ्गविपरिणामेन पूर्वेणान्वयः । **वाचकत्वावश्यम्भावेने**ति । उक्तविनिगमकेन तस्य तथात्वादिति भावः । एवं प्रथमैकवचनस्याप्युक्तरीत्या सत्त्वेनैव वाचकत्वमित्याह— **प्रथमैकवचनन्त्वि**ति । ननु तत्रोकारस्याप्यनुबन्धस्य सत्त्वात्स-

**करणतायां वा तत्कार्य्यतायां वा शक्तम्, न तु प्रकृतिप्रत्यययोः पृथक्शक्तिः, पदे कियती प्रकृतिः कियान् प्रत्यय इत्यविभागेन घट इति प्रकृतिरिनेति प्रत्ययो वा घटेति प्रकृतिरेनेति प्रत्ययो वेत्यनिश्चयात् ।**

**नहि घट-टा-प्रभृतयः स्मृताः प्रकृतान्वयबुद्धौ प्रभवन्ति, तेषामश्रवणात्, तदज्ञानेपि समुदायशक्तिज्ञानेन शाब्दबोधोदयात्, तस्य प्रमात्वे बाधकाभावात् । घट टा इत्यतः शाब्दबोधानुदयेन घोत्तरटोत्तरनकारज्ञानत्वेन कारणत्वावश्यकत्वे तज्जनितपदार्थोपस्थितेरेव**

निरूपितत्वसंसर्गेण प्रकृत्यर्थान्वितस्य स्वरूपेणैव पदार्थान्तरेन्वयान्नञ्समभिव्याहारे तत्सम्बन्धस्यैव प्रतियोगितावच्छेदकत्वादित्याशयेन **कार्य्यतायां वे**त्युक्तम् । पृथक्शक्त्यभावे हेतुः **पदे कियती**त्यादिः । **प्रत्ययो वेत्यनिश्चया-दि**ति । तथा च वाचकतावच्छेदकस्यानिश्चये वाचकतानिश्चयोसम्भव्येवेति भावः ।

घटेनेत्यानुपूर्व्यवच्छिन्नेन घट टा इत्यनयोर्वाचकत्वस्मरणान्नानुपपत्तिरित्यपि न शक्यते वक्तुमित्याह—**नही**ति । **तेषामश्रवणादि**ति । तथा चान्यश्रवणेनान्यस्य वाचकत्वस्मरणाच्छाब्दोपगमेतिप्रसङ्ग एव स्यादिति भावः । ननूद्बोधकत्वं न सर्वत्र सर्वेषाम्, किन्तु क्वचिदेव कस्यचिदिति सर्वसिद्धमेवेत्यतो घटेनेत्यादित एव घट टा इत्येतयोः स्मरणम्, न तु पट इत्यादितः, तस्य तत्स्मरणोद्बोधकत्वाभावादिति नोक्तातिप्रसङ्ग इत्यत आह—**तदज्ञानेपी**ति । घट टा इत्येतयोरज्ञानेपीत्यर्थः । **शाब्दबोधोदयादि**ति । तथा च तज्ज्ञानविरहे तादृशशाब्दबोधस्याननुभवे घटेनेत्यादितो घट टा इत्येतयोः स्मरणं कल्पनीयं स एवासिद्ध इति भावः । ननु तदज्ञाने शाब्दबोधस्यानुभविकत्वेपभ्रंशादिव समुदायाच्छक्तिभ्रमादेव शाब्दबोध इत्यत आह—**तस्ये**ति । समुदायशक्तिज्ञानस्येत्यर्थः । व्याकरणस्यैव तत्प्रमात्वबोधकत्वोपगमे त्वाह—**घट टा इत्यत** इति । **तज्जनितपदार्थोपस्थितेरेवे**ति । घटेनेत्यादिसमुदायशक्तिज्ञानजनित-

सहकारित्वौचित्यात्, अन्यथा इनादौ टादेशत्वमजानतः टाजनित-पदार्थोपस्थितिसहकारेण घटेनेत्यतः कलसकरणताशाब्दप्रसङ्गात्।

घटेनेत्यानुपूर्वीविशिष्टपदत्वावच्छेदेन घटकरणताशाब्दजनकताज्ञानस्य कारणत्वे तत एवोपपत्तौ किमादेशिटाप्रभृतिजनितया पदार्थोपस्थित्या, का चेतःपरमितरा शक्तिर्विशिष्टज्ञानकारणत्वात्, वसूनसादौ प्रकृतिप्रत्ययविभागस्य शास्त्रीयस्याप्यभावेन तत्रोक्ताया एव गतेरवश्याभ्युपेयत्वे सर्वत्र पदे तथैव स्वीकर्त्तुमुचितत्वाच्च।

घटकरणत्वाद्युपस्थितेरेवेत्यर्थः। एवकारेण समुदायेन स्मृतयोष्टाघटयोश्शक्तिज्ञानजन्यपदार्थस्मरणव्यवच्छेदः। **अन्यथा** टादिवृत्तिज्ञानजन्योपस्थितेः शाब्दबोधजनकत्वे। **शाब्दप्रसङ्गादि**ति। तादृशशाब्दकारणयोराकाङ्क्षाज्ञानोपस्थित्योर्भवदभिमतयोस्तत्र सत्त्वादित्याशयः।

उक्तप्रसङ्गवारणाय घटेनेत्यानुपूर्व्व्यवच्छिन्ने घटकरणताशाब्दजनकताज्ञानकारणताया उपगमे सिद्धः पदस्फोट इत्याशयेनाह—**घटेनेत्यानुपूर्वी**ति। **तत एवोपपत्तावि**ति। घटेनेत्यानुपूर्वीमति घटकरणताशाब्दजनकत्वज्ञानं घटादिप्रत्येकमविज्ञाय दुश्शकमिति विशेष्यविशेषणज्ञानयोर्बुद्धिजनकयोस्तत्पूर्वमावश्यकतया घटादिप्रत्येकोपस्थिति विनापि तत्कार्य्यस्योपपत्तावित्यर्थः। शक्तेरपि स्फोटवादिभिर्बोधजनकत्वरूपत्वोपगमेन तस्य घटेनेति समुदाये उक्तापत्तिवारणायान्यैरभ्युपगमस्यावश्यकत्वे शक्तिमत्त्वरूपं वाचकत्वं समुदायेनपायमित्याशयेनाह—**का चेतःपरमि**ति। **इतो** बोधजनकत्वात् **परं** भिन्ना का शक्तिरित्यर्थः। यत्र शास्त्रीयस्यापि प्रकृतिप्रत्ययविभागस्याभावस्तत्र विशिष्टे शक्तेरनभ्युपगमे प्रकारान्तरासम्भवात्तथात्वस्यावश्यकतया शास्त्रीयप्रकृतिप्रत्ययविभागस्थलेपि तस्यैवौचित्यमर्द्धजरतीयस्यान्याय्यत्वादित्याह—**वसूनसादावि**ति। **आदिपदेन** वां नौ ते मे इत्येतेषां परिग्रहः। "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ..." इत्यादिसूत्रैर्विभक्तिसहितयोरेव युष्मदस्मत्पदयोरुक्तादेशानां विधानात्तत्र का प्रकृतिः कः प्रत्यय इति विभागस्य

तदाहुरभियुक्ताः—

"अथादेशा वाचकाश्चेत् पदस्फोटस्ततस्स्फुटः।
घटेनेत्यादिषु नहि प्रकृत्यादिभिदा स्फुटा।
वसूनसादाविवेहापि सम्प्रमोहो हि दृश्यते॥" इति।

अत्रेदं तत्त्वम्। घटेनेत्यानुपूर्वीविशेषविशिष्टे घटकरणत्वान्वयबुद्धिव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वस्वरूपाकाङ्क्षाज्ञानस्य घटपदजनिता घटस्मृतिरिनपदस्मारितटापदजनिता करणतास्मृतिश्चेत्युभयं सहकारि। न चानयाकाङ्क्षया स्वार्थं स्मारयित्वा वाक्यार्थोऽनुभाव्यते, अपि तु साक्षादिति नास्यां शक्तिव्यपदेशो युज्यते। न चास्यामा-

व्याकरणेनापि बोधयितुमशक्यत्वेनेत्यर्थः। उक्तार्थे हरि प्रमाणयति—**तदाहुरि**ति। पदस्फोटस्य स्फुटत्वे हेतु**र्घटेनेत्यादिष्वि**ति। वसूनसादौ प्रकृतिप्रत्ययविभागस्यास्फुटत्वस्य सर्वसम्मतया तं दृष्टान्तयति—**वसूनसे**त्यादिना।

घटेनेत्यानुपूर्व्यवच्छिन्नज्ञानस्याकाङ्क्षाज्ञानरूपतया कारणत्वम्, शक्तिश्च न बोधजनकत्वरूपा घटादिप्रत्येकपदार्थोपस्थितीनाञ्चाकाङ्क्षाज्ञानसहकारितयावश्यकत्वमिति नोक्तप्रकारेण पदस्फोटसिद्धिस्सम्भवतीत्याशयेन नैयायिकसिद्धान्तमाह—**अत्रेदं तत्त्वमि**त्यादिना। **उभयं सहकारी**ति। तथा च घट टा इत्यत्रोभयोरसत्त्वादेव न तादृशशाब्दबोध इत्याशयः। **तत एवोपपत्तावि**त्यादिकं निरस्यति—**न चानये**ति। **अनया** निरुक्तप्रतियोगित्वस्वरूपया। **स्वार्थं** स्वकीयस्य स्वाश्रयस्येति यावत्। **अर्थं** घटकरणत्वादिरूपम्। **अपि तु साक्षादि**ति। तादृशाकाङ्क्षाज्ञानं साक्षादेवान्वयबोधजनकन्न तु स्वजन्यघटादिस्मरणद्वारेत्यर्थः। **इति**र्हेतौ। स च तत्र शक्तिव्यपदेशस्य युक्तत्वाभावेन्वितः। तथा च पदार्थोपस्थितिद्वारकशाब्दबोधजनकस्यैव शक्तिव्यवहारविषयत्वेन घटकरणताशाब्दबोधजनकोक्तानुपूर्वीज्ञानस्यातथात्वान्न तस्य तथात्वमित्याशयः। निरुक्ताकाङ्क्षायां विशिष्टवाक्यार्थस्य प्रवेशेपूर्ववाक्यार्थबोधानुपपत्तिर्घटत्वादिना पटादीना वाक्यार्थेनुप्रवेशानुपपत्तिश्चेति न विशिष्टार्थबोधजनकत्वरूपाकाङ्क्षायाः शाब्दबोधप्रयोजकत्वम्, येन तस्या वाचकतारूपत्वं सम्भाव्येतेत्याह—

काङ्क्षायां वाक्यार्थस्यानुप्रवेशः, अपि तु घटत्वावच्छिन्नप्रकारता-निरूपितकरणत्वविशेष्यताशालिन्या बुद्धेः प्रमाभ्रमसाधारण्याः। नापि तद्बुद्धिजनकत्वमात्रं तच्छक्तिः, असंसर्गाग्रहादावपि वाचकत्वव्यवहार-प्रसङ्गात्; अपि तु सङ्केतविशेष इति प्रतिपादितं प्राक्। तदिद-मुच्यते—

**आनुपूर्वीविशेषेण सुप्तिङन्तात्मके पदे।**
**आकाङ्क्षा गृह्यते तत्तत्पदार्थान्वययोग्यता ॥३४॥**
**शक्तिस्तु तस्याभिन्नैव प्रकृतिप्रत्ययादिषु।**
**यया वृत्त्या स्मारितानामर्थानामन्वयो मिथः ॥३५॥**

**न चास्यामि**ति। **प्रमाभ्रमसाधारण्या** इति। **साधारणी** तदात्मिका। तथा च शक्तिप्रमाभ्रमाभ्यां घटादिपदाद् घटस्य पटादीनाञ्च शाब्दबोधोदया-द्विशिष्टवाक्यार्थस्वरूपघटनिष्ठकरणताबुद्धिजनकत्वस्याकाङ्क्षात्वे प्रथमस्योपपत्ता-वपि द्वितीयस्यानुपपत्तिरेवेति निरूप्यनिरूपकभावापन्नविषयताशालिबोध-घटितमेवाकाङ्क्षास्वरूपं वक्तव्यम्। तथा सति विशिष्टस्य वाक्यार्थस्य तत्रा-प्रवेशात्कुतस्तज्ज्ञानजनकत्वस्य शक्तिरूपतासम्भवः। तत्राप्युक्तरीत्यैव घटादीनां प्रवेशे च पटादिवाचकत्वमपि घटपदस्य प्रसज्येतेति भावः। घटेनेत्यानुपूर्वी-विशिष्टज्ञानस्य विशिष्टशाब्दबोधजनकत्वाङ्गीकारेपि तस्य शक्तिरूपत्वासम्भवान्न पदस्फोटसिद्धिरित्याशयेनाह—**नापी**ति। **असंसर्गाग्रहादौ** बाधनिश्चया-भावादौ। **व्यवहारप्रसङ्गादि**ति। तस्यापि शाब्दबोधजनकत्वादित्यर्थः। **अपि तु सङ्केतविशेष इती**ति। तथा च बाधनिश्चयाभावादौ तस्यासत्त्वान्न तत्र तद्व्यहारप्रसङ्गो घटेनेति समुदायज्ञानस्य कारणत्वेपि तत्र निरुक्तसङ्केत-विशेषस्याभावेन पदस्फोटस्यासिद्धिरिति भावः। उक्तमर्थं कारिकाभ्यां सङ्क्षेपेणो-पसंहरति—**आनुपूर्वी**त्यादिना। आनुपूर्वीविशेषो घोत्तराकारोत्तरटोत्तरै-कारोत्तरनकारोत्तराकारत्वादिस्वरूपः। तद्विशिष्टे पदे इत्यर्थः। तृतीयायाः "इत्थम्भूतलक्षणे" इत्यनेन विधानात्।

वाक्यस्फोटवादिनस्तु साधुशब्दान्तर्गतशब्दानामवाचकत्व-मुक्तयुक्त्या प्रतिपद्यमाना हरेव विष्णोवेत्यादिवाक्यानामेव हरिसम्बोध्यत्वत्कर्तृकाशंसाविषयावनक्रियादिकं प्रति वाचकत्व-मभ्युपगच्छन्ति ।

**तथाहि—हरेवेत्यादौ न हरिशब्दो न वा सम्बोधनप्रथमा नावतिर्धातुर्न्न सिप् श्रूयमाण इति न वाचकैः प्रकृतिप्रत्ययैरुपपत्तिः; नापि प्रत्येकं पदस्फोटः, अवपदस्यास्फुटत्वादिति वाक्यस्यैव विशिष्टार्थवाचकत्वमवश्याभ्युपेयम् ; आद्या च व्युत्पत्तिर्वाक्यार्थ-वाक्ययोरेव बालानामिति । तदप्यत एव परास्तम् ।३४,३५।**

एवं पदस्फोटं निरस्य वाक्यस्फोटोऽप्युक्तयुक्त्यैव निरसनीय इत्याशयेन प्रथमं तत्साधकयुक्तिं दर्शयति—**वाक्यस्फोटवादिनस्त्वि**त्यादिना । **उक्त-युक्त्या** पदस्फोटसाधकप्रकृतिप्रत्ययविभागाभावादिरूपया । तदेव दर्शयति—**तथाही**ति । पदस्फोटेनापि तत्र न निर्वाह इत्याह—**नापी**ति । व्यवहारेणापि विशिष्टवाक्ये एव वाचकताज्ञानात्तस्य तत्रावश्यकत्वमित्याह—**आद्या चे**ति । **अतएव परास्तमि**ति । हरेवेत्यादिवाक्यानामानुपूर्वीविशेषेण ज्ञानस्याकाङ्क्षा-ज्ञानविधया कारणत्वस्यावश्याभ्युपेयत्वेपि वाचकतायास्तत्रासम्भवः । हरे इत्यस्य सम्बोधनप्रथमान्तत्वमवेत्यस्य लोटो मध्यमपुरुषैकवचनान्तत्वमजानतां हरिसम्बोध्यत्वत्कर्तृकाशंसाविषयावनादिक्रियात्मकवाक्यार्थज्ञानस्यानुदयेन तत्त-त्स्मरणद्वारा तत्तदर्थोपस्थितीनां वस्नसादिषु युष्माकमिति षष्ठ्यन्तादेशत्व-मजानतां युष्मत्सम्बन्धबोधस्यानुदयेन युष्मत्पदस्य षष्ठीबहुवचनस्य च स्मरण-स्यैवावश्यकतया तत एवोपपत्तौ विशिष्टवाक्यशक्तिज्ञानस्यानावश्यकत्वादेव निरस्तमित्यर्थः । ३४, ३५ ।

१ ० मेव वाचकत्व० इति मु० पु० पा० ।

इति समुच्चीयते—

वर्णस्फोटः पदस्फोटो वाक्यस्फोट इति त्रिधा ।
शाब्दिकानाम्मतं तत्राकाङ्क्षा शक्तिरिति भ्रमः ॥३६॥

घटेनेत्यानुपूर्वीज्ञानस्य घटत्वावच्छिन्नप्रकारतानिरूपितकरणतात्वावच्छिन्नविशेष्यताकान्वयबुद्धित्वं[1] तदवान्तरधर्म्मविशेषो वा जन्यतावच्छेदकः, सत्यामपि घटटापदजनितायां कलसकरणत्वस्मृतौ टाघटेत्यादितो व्यस्तानुपूर्वीकान्नघटेत्यादितश्च तथाविधशाब्दबोधानुदयात् ।

न चैवं विपरीतव्युत्पन्नानामपि न घट इत्यादितः शाब्दबुद्धेर्घटेनेत्यादितश्चाप्रतिपत्तेरनुपपत्तिरिति चेत् ? अतएव घटेनेत्यानु-

**समुच्चीयत** इति । निरुक्तत्रितयस्फोटनिराकरणमेककारिकयोच्यत इत्यर्थः ।

एकत्र त्रितयोक्तावेवात्र समुच्चिनोतेस्तात्पर्य्यात् । **त्रिधे**ति । शेषाणां स्फोटानामग्रे निरसनीयतयात्र **त्रिधे**त्येवोक्तम् । **तत्र** तेषाम्मते ।

आकाङ्क्षायां तेषां शक्तित्वस्य भ्रमं कारिकोक्तमुपपादयितुमाकाङ्क्षास्वरूपं निर्वक्ति—**घटेनेत्यानुपूर्वीज्ञानस्ये**त्यादिना । **आनुपूर्वीज्ञानस्य** आनुपूर्व्व्यवच्छिन्नज्ञानस्य । **तदवान्तरधर्म्मविशेषो वे**ति । घटादिपदपर्य्यायकलसादिपदजन्यशाब्दबोधे व्यभिचारवारणाय कारणानन्तर्य्यस्य कार्य्यतावच्छेदकघटकत्वस्यावश्यकतया घटत्वावच्छिन्नप्रकारतानिरूपितकरणतात्वावच्छिन्नविशेष्यताकान्वयबुद्धित्वव्याप्यो घटेनेत्यानुपूर्वीज्ञानाव्यवहितोत्तरत्वविशिष्टस्तादृशान्वयबुद्धित्वरूपो धर्म्म इत्यर्थः । **व्यस्तानुपूर्वीकादि**ति । **नघटेत्यादित** इत्यत्राप्यन्वितम् । **शाब्दबोधानुदयादि**ति । तथा चोक्तकार्य्यकारणभावानभ्युपगमे तत्र शाब्दबोधप्रसङ्ग स्यादिति भावः ।

शङ्कते—**न चैव**मिति । **एवम्** उक्तानुपूर्वीज्ञानस्य कारणत्वे । **विपरीतव्युत्पन्नानां** नघटे इत्यानुपूर्व्व्यवच्छिन्ने निरुक्तशाब्दबोधजनकत्वं घटेनेत्यानुपूर्व्व्यवच्छिन्ने च तादृशजनकत्वाभावं जानतामित्यर्थः । **अनुपपत्तिरि**ति । तादृशस्य पुरुषस्य घटेनेत्यानुपूर्व्व्यवच्छिन्ने तादृशजनकत्वज्ञानस्यासम्भवादिति

१ ० विशेष्यताकबुद्धित्वं—मु० पु० पा० ।

**पूर्वीविशेषावच्छेदेनाकाङ्क्षाज्ञानमपि कारणम्, तदेव व्युत्पत्ति-रित्युच्यते ।**

**आकाङ्क्षा तु घटपदज्ञानत्वावच्छिन्नकारणतानिरूपितस्मरण-वृत्तिकार्य्यतायाः प्रकारितयावच्छेदको यो धर्म्मस्तद्धर्म्मावच्छिन्न-प्रकारतानिरूपिता या टापदज्ञानत्वावच्छिन्नकारणतानिरूपितकार्य्यता-वलीढस्मरणप्रकारीभूतधर्म्मावच्छिन्ना विशेष्यता तन्निष्ठानवच्छिन्न-**

भावः । **अतएव** उक्तानुपपत्तेरेव । **आकाङ्क्षाज्ञानमपी**त्यपिकारेण वृत्तिज्ञानस्य पृथगेव कारणत्वमावश्यकमिति सूचितम् । **तदेव व्युत्पत्ति**रित्यनेन तादृशज्ञानं यादृशानुपूर्व्ववच्छेदेन यथातथास्तु, तावतैव पुरुषस्य व्युत्पन्नत्वाच्छाब्दबोधोदय इति सूचितम् ।

आकाङ्क्षाया घटेनेत्यानुपूर्वीरूपत्वे तस्या ज्ञानं विपरीतव्युत्पन्नानाम-सम्भवीति भवत्युक्तानुपपत्तिः । तस्या अतिरिक्तत्वे च किञ्चिदानुपूर्व्य-वच्छेदेन तज्ज्ञानमात्रमुक्तान्वयबोधेपेक्षितम् । तच्च विपरीतव्युत्पन्नानां नघटेत्याद्यानुपूर्व्यवच्छिन्ने एवेति न ततस्तादृशान्वयबोधानुपपत्तिरित्याशये-नानुपूर्वीविलक्षणतयाकाङ्क्षास्वरूपमाह—**आकाङ्क्षा त्वि**त्यादिना **प्रतियोगित्व-**मित्यन्तेन । **स्मरणवृत्तिकार्य्यताया** इति । घटत्वप्रकारतानिरूपितविशेष्यताक-स्मरणं प्रति घटपदज्ञानस्य कारणत्वे पर्य्यायशब्दान्तरज्ञानजन्यस्मरणे व्यभिचाराद् घटपदज्ञानाव्यवहितोत्तरत्वस्यापि तत्कार्य्यतावच्छेदकताया आवश्यकत्वात्तादृशस्मरणत्वावच्छिन्नकार्य्यताया इत्यर्थः । **प्रकारितये**ति । उक्तस्मरणे घटत्वस्य प्रकारितासम्बन्धेन विशेषणतायां प्रतिबध्यप्रतिबन्धकभावे लाघवमित्यभिप्रेत्येदमुक्तम् । प्रकारतया तस्य तथात्वे च प्रकारतयेत्येव बोध्यम् । **तन्निष्ठानवच्छिन्ने**ति । तादृशविशेष्यतानिष्ठाभावप्रतियोगितावच्छेदकताया-स्सावच्छिन्नत्वं तादृशविशेष्यतात्वस्योक्तशाब्दबुद्धिनिष्ठकार्य्यतावच्छेदकत्वे एव सम्भवति। तथा सति तदवच्छिन्नावच्छेदकताकाभावस्य कार्य्यतावच्छेदकपर्य्या-प्तावच्छेदकताकप्रतियोगिताकत्वात्कारणाभावप्रयोज्यत्वसम्भवात् । तस्य कार्य्यता-

प्रतियोगिताकावच्छेदकताकाभावत्वावच्छिन्नप्रयोजकस्याभावस्य प्रतियोगित्वम् ।

तच्च यादृशानुपूर्वीविशिष्टशब्दत्वावच्छेदेन तज्ज्ञानत्वावच्छेदेन वा गृह्यते, तादृशानुपूर्वीविशिष्टपदज्ञानाद् घटीया करणतेति शाब्द-

वच्छेदकत्वञ्च कारणानन्तर्यस्य कार्य्यतावच्छेदककोटौ प्रवेशस्यावश्यकत्वे पटादिशाब्दबोधस्य तत एव कार्य्यतावच्छेदकानाक्रान्तत्वसम्भवाद्विषयस्य तत्र निवेशे प्रयोजनाभावादप्रामाणिकम् । न चानुपूर्वीज्ञानेप्रामाण्यग्रहे शाब्दबोधानुदयात् कारणतावच्छेदकेप्रामाण्यज्ञानानास्कन्दितत्वस्यावश्यं प्रवेशनीयतया प्रथमेप्रामाण्यज्ञानास्कन्दितेन घटेन नीलो घटश्चेत्याकारकद्विविधानुपूर्वीज्ञानेन जायमानो नीलो घट इति शाब्दबोधोप्यनुपपन्नः स्यादिति विषयनिवेशस्यावश्यकत्वमिति वाच्यम्, तस्य तत्र निवेशेपि कलसेन घटेनेति द्विविधानुपूर्वीज्ञानस्यैकांशेप्रामाण्यग्रहास्कन्दितस्य सत्त्वे घटीया करणतेति शाब्दबोधानुपपत्तेस्तादवस्थ्यादप्रामाण्यज्ञानानास्कन्दितकारणानन्तर्य्यस्यैव कार्य्यतावच्छेदककुक्षौ प्रवेशनीयतया तत एवोक्तापत्तेरपि वारणसम्भवाद् विषयनिवेशस्यानावश्यकत्वात् । इच्छादेस्तादृशज्ञानकार्य्यतावारणाय शाब्दबोधत्वमात्रं तत्र प्रवेशनीयम् न तु तत्र घटत्वप्रकारतानिरूपितविशेष्यत्ववत्वेन घटनिष्ठं विशेष्यत्वमपि निविशते, किन्तु शाब्दमतेर्न्निर्विषयिकाया असम्भवेन स्वरूपतस्तादृशविशेष्यत्वमखण्डमेवाभावप्रतियोगितावच्छेदकतया प्रवेशनीयमिति भावः । **प्रतियोगित्वमि**ति । तादृशाभावत्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकतावच्छेदकविषयताश्रयत्वमित्यर्थः । तेन घटेन नीलो घटश्चेत्यादिसमूहालम्बनज्ञानाभावस्यापि घटेनेत्यानुपूर्वीज्ञानत्वावच्छिन्नप्रतियोगिताकत्वेनोक्तकार्य्याभावप्रयोजकतया तत्प्रतियोगित्वस्य नीलो घट इत्यानुपूर्वीज्ञाने सत्त्वेपि नीलादिपदविषयतायाः प्रयोजकतावच्छेदकत्वविरहान्नीलो घट इति ज्ञानस्य न तथात्वम् ।

तच्च निरुक्तप्रतियोगित्वञ्च । **शब्दत्वावच्छेदेने**ति ज्ञायमानशब्दस्य करणतापक्षे । शब्दज्ञानस्य तथात्वे च **तज्ज्ञानत्वावच्छेदेने**ति । **शाब्द-**

बुद्धिरुत्पद्यते। भवति च घटो घटपदवाच्य इति संस्कारसहितस्य[1] घटपदज्ञानस्य ताद्रूप्येण जनकतायां घट इति स्मरणत्वस्य जन्यतावच्छेदकस्य घटकतया घटत्वमपि प्रकारितया जन्यतावच्छेदकम्। एवं टापदज्ञानस्य[2] करणतात्वम्। घटत्वावच्छिन्नप्रकारतानिरूपितकरणतात्वावच्छिन्नविशेष्यताव्यक्तिः स्वरूपेण यस्याभावस्य प्रतियोगितावच्छेदिका स तद्विशेष्यताविशिष्टानुभवत्वावच्छिन्नाभावो घटेनेत्यानुपूर्वीज्ञानत्वावच्छिन्नप्रतियोगिताकाभावेन प्रयोज्यते, कारणतावच्छेदकावच्छिन्नाभावस्य कार्य्यतावच्छेदकावच्छिन्नाभावप्रयोजकत्वात्। घटत्वावच्छिन्नप्रकारतानिरूपितकरणतात्वावच्छिन्नविशेष्यताविशेषः पुनरखण्डः, ज्ञानविषयभेदेन तद्भेदे प्रमाणाभावात्। अखण्डधर्म्मः स्वरूपत एवावच्छेदको न विषयनिरूपकाद्यन्तर्भावेण, गौरवात्।

**बुद्धिरुत्पद्यत** इति। तथा च विपरीतव्युत्पन्नस्य पुंसो नघटे इत्यानुपूर्वीविशिष्टे एव तादृशाकाङ्क्षाज्ञानान्नोक्तानुपपत्तिरिति भावः। उक्ताकाङ्क्षाया घटेनेत्यानुपूर्व्व्यवच्छिन्ने सत्त्वमुपपादयति—**भवति चे**त्यादिना। **संस्कारसहितस्ये**ति। तादृशेनैव घटपदज्ञानेन जनितस्य घटत्वप्रकारकस्मरणस्य शाब्दबोधजनकत्वव्यवस्थितेः। **ताद्रूप्येण** घटपदज्ञानत्वेन। **घटकतया** घट इत्याकारकस्मरणविषयिताव्यापकविषयितानिरूपकतया। **विशेष्यताव्यक्तिरि**ति। व्यक्तिपदं तस्याः स्वरूपतोवच्छेदकत्वसूचनाय। **यस्याभावस्ये**ति यत्पदपरामर्शनीयं तच्छब्देन दर्शयति—**स** इत्यादिना। **प्रयोजकत्वादि**ति। दण्डत्वाद्यवच्छिन्नाभावे घटत्वाद्यवच्छिन्नाभावप्रयोजकताया दृष्टत्वान्नित्येप्यत्यन्ताभावे स्वरूपसम्बन्धरूपप्रयोज्यत्वस्योपगमादिति भावः। **अखण्ड** इति। एतच्च तस्याः स्वरूपतोवच्छेदकत्वोपपत्त्यर्थमुक्तम्। **गौरवादि**ति। घटत्वादीनामधिकानामवच्छेदकत्वे इत्यादिः।

१ ० सहकृतस्य इति मु० पु० पा०। २ टापपदस्य इति मु० पु० पा०।

यदि च सा विशेष्यता विशेष्यादिभेदेन भिद्यते, कथमन्यथा करणतात्वेन जगदवगाहिनो भ्रमात् करणतासामान्यावगाहिन्याः प्रमितेर्वा यत्किञ्चित्करणतावगाहिनि घटीया करणतेति ग्रहणे वैचित्र्यम्, सर्वत्रैव ज्ञाने तादृशविशेष्यताया जगन्निरूपितत्वाद् घटीयत्वाभाववन्निरूपितघटीयत्वप्रकारित्वावच्छिन्नविशेष्यितावत्त्वेन[1] सर्वत्र भ्रमत्वप्रसङ्गादिति[2] घटेनेत्यानुपूर्वीज्ञानस्य घटप्रकारतानिरूपितकरणताविशेष्यतात्वेनैव सा जन्यतावच्छेदिका आनुपूर्वीज्ञानाभावप्रयोज्याभावप्रतियोगितावच्छेदिका वा; अतो घटत्वादेर्विशिष्याप्रवेशे

अत्र वक्ष्यमाणदोषभिया तादृशविशेष्यताया एकत्वासम्भवेन ज्ञानस्य विषयस्य च भेदेन तस्या भेदस्यावश्यकतयाखण्डत्वाभावेन स्वरूपतोऽवच्छेदकत्वस्य तत्रासम्भवान्नोक्तनिर्वचनं सम्भवतीत्याशङ्कते—**यदि चे**त्यादिना। **अन्यथा** तस्या अखण्डत्वे। **वैचित्र्यं कथ**मित्यन्वयः। **ग्रहणे वैचित्र्य**मिति। उभयत्राखण्डस्यैव विशेष्यत्वस्य घटकतया वैलक्षण्यप्रयोजकस्याभावादित्याशयः। उक्तभ्रमे करणतामात्रनिष्ठत्वस्याभावात्तस्यैव वैलक्षण्यप्रयोजकत्वोपगमे तत्र तत्त्वे कथन्ताया अप्रवृत्तेः **प्रमितेर्वे**त्युक्तम्। वैचित्र्याभावे हेतुः **सर्वत्रैवे**ति। उक्तत्रितये एवेत्यर्थः। **जगन्निरूपितत्वादि**ति। घटीया करणतेत्यत्र घटनिरूपितत्वस्य करणताविशेष्यताया घटेतरनिरूपितत्वव्यावर्त्तकस्य विरहादित्याशयः। तस्याः जगन्निरूपितत्वे दर्शितज्ञानत्रयस्यापि भ्रमत्वमेव स्यात्, न तेषामन्त्ययोः प्रमात्वमित्याह—**घटीयत्वे**ति। **भ्रमत्वप्रसङ्गादिती**ति। **इति**र्हेतौ तथा चोक्तज्ञानत्रयस्य भ्रमत्वप्रसङ्गभिया तादृशविशेष्यताया ज्ञानादिभेदेन भेद आवश्यकः। तथा च तन्निष्ठाया अभावप्रतियोगितावच्छेदकताया निरवच्छिन्नत्वासम्भवादुक्तरीत्याकाङ्क्षानिर्वचनं न सम्भवतीत्याशयेनाह—**घटेनेत्यानुपूर्वीज्ञानस्ये**ति। **अतः** घटप्रकारतानिरूपित-

---

१ ०कत्वेन इति मु० पु० पा०।

२ भ्रमप्रसङ्गात्—इति मु० पु० पा०।

प्रयोज्याभावप्रतियोगितावच्छेदको धर्म्मो दुर्व्वचः, घटपदजन्यस्मृतिप्रकारत्वादेरव्यावर्त्तकत्वात्, जन्यत्वप्रकारत्वयोरवच्छेदककुक्षावप्रवेशात्।

न च घटपदजन्यस्मरणप्रकारावलीढप्रकारतानिरूपितटापदजन्यस्मरणप्रकारावलीढविशेष्यताकान्वयबुद्धित्वेन समं सामानाधिकरण्यमेव प्रयोज्याभावप्रतियोगितायां निवेशनीयम्, न तु तदवच्छिन्नत्वमिति वाच्यम्; घटेनेति घटकर्म्मतां घटटा इति घटकरणतां बोधयतीति व्युत्पन्नस्य पुंसो घटेन घटटेति पदद्वयजनितस्य घटीया कर्म्मता करणता चेति बोधस्याभावं प्रति घटेनेत्यानुपूर्वीज्ञानाभावस्य प्रयोजकत्वोपगमे व्यस्तटाघटादिपदजनितपदार्थोपस्थिति-

करणताविशेष्यतात्वेन तस्या जन्यत्वप्रतियोगित्वयोरवच्छेदकत्वात्। **दुर्व्वच** इति। घटस्य करणतायाश्चानुगतत्वविरहेणैकस्य प्रवेशेन्यस्यासङ्ग्रहाज् जात्यखण्डोपाध्यतिरिक्तयोस्तयोर्घटत्वादिविनिर्म्मोकेणावच्छेदकत्वासम्भवाच्चेति भावः। ननु घटपदजन्यस्मृतिप्रकारत्वेन घटत्वस्य टापदजन्यस्मृतिप्रकारत्वेन करणतात्वस्य च प्रवेशस्तत्र कर्त्तव्यः। तथा च नोक्तदुर्वचत्वमित्यत आह—**घटपदे**ति। **प्रकारत्वादे**रिति। आदिना टापदजन्यस्मृतिप्रकारत्वस्य परिग्रहः। **अव्यावर्त्तकत्वादि**ति। अत्र हेतु**र्जन्यत्वप्रकारत्वयो**रिति। **अवच्छेदककुक्षौ** प्रयोज्याभावप्रतियोगितावच्छेदककुक्षौ। **अप्रवेशादि**ति। तथा च तयोस्तत्र प्रवेशे उदासीनप्रकारताया व्यावृत्तेस्सम्भवेपि घटपदजन्यस्मृतिप्रकारत्वस्य घटेनेत्यानुपूर्व्यवच्छिन्नज्ञानकार्य्यत्वविरहेण तदवच्छिन्नाभावं प्रति तादृशज्ञानाभावस्य प्रयोजकताया असम्भवो जन्यत्वप्रकारतयोस्तत्रानिवेशे च तादृशावच्छेदकधर्म्मस्य दुर्वचत्वमिति भावः।

ननु निरुक्तान्वयबुद्धित्वावच्छिन्नाभावप्रयोज्यताया आकाङ्क्षाघटकत्वे एव तादृशाभावप्रतियोगितावच्छेदकधर्म्मनिर्वचनस्यावश्यकत्वं तस्य च प्रयोजनविरहेण तत्र प्रवेशो मास्तु, किन्तु तादृशशाब्दबोधवृत्तिप्रतियोगिताकाभावस्यैव प्रयोज्यतया प्रवेशोस्त्विवति तटस्थाशङ्कान्निराकरोति—**न चे**त्यादिना। **न वाच्य**मित्यत्र हेतु **घटेनेती**त्यादिः। **प्रयोजकत्वोपगमे** इति। अन्यथा तादृशस्य पुंसो

१ जन्यत्वप्रतियोगितयो० इति मु० पु० पा०।

**सहकारेण घटकरणताशाब्दप्रसङ्गादिति विभाव्यते; तदा घटपद-जन्योपस्थितिप्रकारत्वोपलक्षिते धर्म्मेवच्छेदकतां प्रकारविधयावगाह-मानमुपलक्षणधर्म्मेषु च तदनवगाहमानमाकाङ्क्षाज्ञानं हेतुरिति वक्तव्यम्, प्रकारीकृत्यावच्छेदकतायां गृह्यमाणायामुदासीनधर्म्म-सामानाधिकरण्यग्रहणे बाधकाभावात्।**

घटीया करणतेति बोधस्य ततोनुपपत्तिरेव स्यादिति भावः। **घटकरण-ताशाब्दप्रसङ्गादि**ति। निरुक्ताकाङ्क्षाया घटेनेत्यानुपूर्व्व्यवच्छिन्ने ज्ञानस्य घटकरणत्वयोरुपस्थितेश्च तत्कारणस्य सत्त्वादित्यर्थः। तथा च तद्वारणाय तादृशशाब्दबुद्धित्वावच्छिन्नप्रतियोगिताकाभावस्य प्रयोज्यतया निवेशस्यावश्य-कतयावच्छेदकधर्म्मानिर्वचने उक्ताकाङ्क्षास्वरूपं दुर्वचमेवेत्याशयः। **यदि** चेत्यादिनोक्तं दोषं वारयति—**तदे**ति। उक्तरीत्या घटत्वादीनामवच्छेदककुक्षौ प्रवेशस्यावश्यकत्वे इत्यर्थः। **धर्म्मे** घटत्वादौ। **उपलक्षणधर्म्मेषु** घटादिपदत्व-जन्यत्वस्मृतित्वप्रकारत्वेषु। **तदनवगाहमानम्** अभावीयप्रतियोगितावच्छेद-कत्वानवगाहीत्यर्थः। अभावप्रत्ययो हीत्यादिनियमादभावबुद्धावुपलक्षणविधया भानं कथमिति जिज्ञासायामाह—**प्रकारीकृत्ये**ति। **बाधकाभावादि**ति। तथा चोक्तनियमस्य तत्रैव प्रवृत्तिर्य्यत्र संसर्गतया तन्निष्ठावच्छेदकता विषयी-क्रियते; यथा—वह्निर्न्नास्तीत्यादौ। प्रकृते च घटत्वादिनिष्ठावच्छेदकतायाः प्रकारतया भानादुपलक्षणीभूतेषु स्मृतित्वादिषु प्रतियोगितावच्छेदकत्वानवगाहनेपि न क्षतिः, अन्यथा वह्न्यभावलिङ्गकधूमाभावसाध्यकानुमितेर्धूमाभावाज्ञानदशा-यामनापत्तेर्द्धूमव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववानित्याकारक-व्यतिरेकव्याप्तिज्ञानस्य तादृशव्यापकतावच्छेदकत्वोपलक्षितवह्नित्वावच्छिन्न-प्रतियोगिताकाभावावगाहित्वस्यासम्भवात्। न च तादृशव्यापकतावच्छेदकत्व-निष्ठावच्छेदकतानिरूपितवह्नित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकाभावज्ञान-मेव तादृशानुमितिकारणमिति वाच्यम्; तत्र वह्नित्वत्वेन वह्नित्वस्य भाने तादृ-शावच्छेदकतायास्तन्निष्ठावच्छेदकत्वनिष्ठावच्छेदकतायाश्च कारणतावच्छेदकत्वे

**तथा च घटपदजन्यस्मरणप्रकारवृत्त्यवच्छेदकतानिरूपकावच्छिन्नत्ववृत्त्यवच्छेदकतानिरूपकप्रकारतावृत्त्यवच्छेदकत्वप्रतियोगिनी या टापदजन्योपस्थितिप्रकारवृत्त्यवच्छेदकतानिरूपकावच्छिन्नत्ववृत्त्यवच्छेदकताप्रतियोगिनी विशेष्यत्ववृत्त्यवच्छेदकता तन्निरूपकानुभवत्वावच्छिन्नप्रतियोगिताकाभावो घटेनेत्यानुपूर्वीज्ञानत्वावच्छिन्नप्रतियोगिताकाभावप्रयोज्य इति व्युत्पत्तिः । घटपदजनिता कलसोपस्थितिरादेश-**

महागौरवात् । गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्वे च लघुवह्नित्वत्वापेक्षया गुरुतादृशावच्छेदकत्वस्य प्रतियोगितावच्छेदकत्वासम्भवात् । तादृशावच्छेदकत्वमात्रेण वह्नित्वस्य भाने च तादृशव्यापकतावच्छेदकवान्नास्तीत्याकारकत्वस्यैव तादृशज्ञाने पर्य्यवसानात् प्रमेयत्वादीनामपि धूमव्यापकतावच्छेदकतया तदवच्छिन्नस्य सर्वत्रैव सत्त्वाद्विशेषदर्शिनां तादृशज्ञानासम्भवादवच्छेदकतायाः प्रकारतया भाने तत्रोपलक्षणीभूतधर्म्मसामानाधिकरण्यमात्रस्योपगमे च व्यापकतावच्छेदकत्वस्य कारणतानवच्छेदकतया वह्नित्वत्वेनैव वह्नित्वस्य भानेपि बाधकाभावादिति ।

**इति व्युत्पत्तिरि**ति । घटपदज्ञानजन्योपस्थितिप्रकारत्वसमानाधिकरणावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपिता या टापदज्ञानजन्योपस्थितिप्रकारत्वसमानाधिकरणावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितविशेष्यतात्वावच्छिन्नावच्छेदकता तन्निरूपितशाब्दत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकतावच्छेदकानुयोगितानिरूपितप्रतियोगित्वस्वरूपाकाङ्क्षाप्रकारतानिरूपितघटेनेत्यानुपूर्व्यवच्छिन्नविशेष्यताशालिज्ञानं घटीया करणतेति शाब्दबोधं प्रति कारणम् । तत्र कारणतावच्छेदककुक्षौ घटत्वादीनां तत्त्वेन निवेशे घटपदार्थस्य शक्यलक्ष्यभेदेनाननुगततया तेषां प्रत्येकं तत्तद्रूपेण प्रवेशे कारणताबाहुल्यप्रसङ्गाद् घटपदज्ञानजन्यस्मरणप्रकारत्वेन ताननुगमय्य निवेशः कृत इति भावः । **तन्निरूपके**ति । विशेष्यनिष्ठावच्छेदकताया विशेषणनिष्ठावच्छेदकता-

स्मारितटाप्रभृतिजनिता करणतापदार्थोपस्थितिश्च घटीया करणतेत्य-न्वयबुद्धौ कारणम्। सर्वनामशब्दानां बुद्धिप्रकारत्वोपलक्षिते धर्म्मे प्रवृत्तिनिमित्तत्वमिव पदजन्यस्मरणप्रकारत्वोपलक्षितेष्वाकाङ्क्षानिरूप-कत्वमपि सुग्रहम्।

भवतु वा घटपदज्ञानत्वावच्छिन्नकारणतानिरूपितकार्य्यता-वच्छेदकविषयतानिरूपिता या टापदज्ञानत्वावच्छिन्नकारणतानिरूपित-कार्य्यतावच्छेदिका विषयता तद्विशिष्टानुभवत्वावच्छिन्नाभावप्रयोजकी-भूताभावप्रतियोगित्वमाकाङ्क्षा।

ननु तादृशानुभवत्वावच्छिन्नकार्य्यतानिरूपितकारणत्वमेव प्रवेश्यताम्, अलमभावयोः प्रयोज्यप्रयोजकभावान्तर्भावेणेति चेत्? स्यादेवम्, यदि घटेनेत्यानुपूर्वीज्ञानस्य घटकरणतागोचरान्वयानुभवत्वं जन्यतावच्छेदकं स्यात्, न च तथा, व्यभिचारात्, किन्तु घटेनेत्यानु-

निरूपकत्वमेव, न तु तन्निरूपितत्वमित्याशयेनेदम्। **अन्वयबुद्धौ कारणमि**ति। दर्शिताकाङ्क्षाज्ञानमात्रस्य कारणत्वेप्युक्तापत्तिवारणायोक्तोपस्थित्योः कारणत्व मावश्यकमित्याशयः। चैत्रत्वाद्यपूर्वधर्म्मप्रकारकशाब्दबोधोपपादनाय सर्वनाम-पददर्शितरीतिरत्राप्यावश्यकीत्याह—**सर्वनामशब्दानामि**ति। **सुग्रहमि**ति। एतत्तत्त्वं प्रागेव दर्शितम्।

लाघवादन्यथाकाङ्क्षास्वरूपं निर्वक्ति—**भवतु वे**त्यादिना।

नन्वतोपि लाघवात्प्रयोज्यप्रयोजकभावापन्नाभावद्वयमनिवेश्य तादृशकार्य्यता-निरूपितकारणत्वमेव कुतो नाकाङ्क्षास्वरूपतयोच्यत इत्याशङ्क्य निराकुरुते—**नन्वि**त्यादिना। **न च तथे**ति। घटादिविषयघटितान्वयानुभवत्वं न जन्यता-वच्छेदकमित्यर्थः। अत्र हेतु**र्व्यभिचारादि**ति। कलसेनेत्याद्यानुपूर्वीज्ञानादपि घटीया करणतेत्यन्वयबोधस्योदयेन तत्र घटेनेत्यानुपूर्वीज्ञानविरहादिति भावः।

**पूर्वीज्ञानाव्यवहितोत्तरोत्पत्तिकज्ञानत्वम्।**

**घटकरणत्वान्वयबुद्धित्वावच्छिन्नाभावस्तु घटेनेत्यानुपूर्वीज्ञानाभावेन प्रयोज्यते, यद्धर्म्मावलीढोत्पत्तिप्रयोजकसामग्रीकुक्षौ यद्धर्म्मावलीढस्य कारणस्यानुप्रवेशस्तदवच्छिन्नाभावयोः प्रयोज्यप्रयोजकभावाभ्युपगमात्। घटीया करणतेत्यन्वयबुद्धेरुत्पत्तौ घटेनेत्यानुपूर्वीज्ञानं घटपदेन टापदेन च जनिता कलसकरणत्वयोरुपस्थितिरसंसर्गाग्रहः घटेनेत्यानुपूर्वीविशिष्टे निरुक्ताकाङ्क्षाज्ञानश्चेति सम्भूय प्रयोजकम्।**

**ज्ञानत्वमि**ति। तादृशज्ञानजन्यतावच्छेदकमित्यन्वयः। तथा च कलसेनेति ज्ञानोत्तरजायमानस्य तादृशबोधस्योक्तकार्य्यतावच्छेदकानाक्रान्तत्वान्न तद्व्यभिचारः, न वा प्रयोज्यत्वाद्यनिवेशेन निरुक्ताकाङ्क्षानिर्वचनसम्भव इति भावः।

नन्वेवं घटीया करणतेत्यन्वयबुद्धित्वावच्छिन्नाभावस्य कार्य्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविरहेण दर्शितानुपूर्वीज्ञानाभावप्रयोजकत्वमपि न स्यादिति नोक्तरूपेणाप्याकाङ्क्षानिरूपणं सम्यगित्यत आह-**घटकरणत्वान्वये**ति। घटत्वावच्छिन्नप्रकारतानिरूपितकरणतात्वावच्छिन्नविशेष्यताकान्वयबुद्धित्वावच्छिन्नाभाव इत्यर्थः। तेन घटकरणत्वादेरखण्डस्य कार्य्यताया अवच्छेदकत्वे भ्रमसाधारण्यासम्भवात्तदनवच्छेदकत्वेपि नासङ्गतिः। कार्य्यत्वकारणत्वयोरवच्छेदकेनावच्छिन्नप्रतियोगिताकयोरभावयोर्न्न प्रयोज्यप्रयोजकभावः, किन्तु सोप्यन्यथैवेत्याह—**यद्धर्म्मावलीढे**ति। **प्रयोज्यप्रयोजकभावाभ्युपगमादि**ति। अनुभवबलादिति भावः। प्रकृते प्रयोज्यप्रयोजकभावसम्पादनाय निरुक्तान्वयबोधसामग्री दर्शयति—**घटीये**ति। **असंसर्गाग्रहः** बाधनिश्चयाभावः। **घटकरणत्वयोरि**ति पूर्वेणान्वयः। **सम्भूये**ति। एकक्षणावच्छेदेनेत्यर्थः। **अतः** उक्तसमुदायत्वस्य घटकरणत्वान्वयबुद्धिप्रयोजकतावच्छेदकत्वात् **प्रयोजको**

अतो भवत्यसंसर्गाग्रहादिजन्यतावच्छेदकघटकरणतागोचरान्वयबुद्धित्वावच्छिन्नप्रतियोगिताकाभावं प्रति घटेनेत्यानुपूर्वीज्ञानाभावः प्रयोजकः। भवति च घटपदज्ञानत्वेन टापदज्ञानत्वेन च पदार्थोपस्थितिद्वारा जनकतायां कलसत्वाद्यवच्छिन्नविषयताकानुभवत्वं जन्यतावच्छेदकम्।

अथवा तत्रापि घटपदज्ञानाभावप्रयुक्ताभावप्रतियोगितावच्छेदकत्वमेव विषयतायां प्रवेशनीयम्। इत्थञ्च [1]'घटपदज्ञानव्यतिरेकप्रयोज्याभावप्रतियोगितावच्छेदकेन विषयत्वेनावच्छिन्नप्रतियोगिताकस्यान्वयबुद्ध्यभावस्य प्रयोजको घटेनेत्यानुपूर्वीज्ञानाभाव इत्येवमाकाङ्क्षाबुद्धेः कारणत्वमवसेयम्।

भवतीति पूर्वेणान्वयः। **जन्यतावच्छेदकमि**ति। तथा च घटकरणत्वाद्यवच्छिन्नविषयकानुभवत्वस्य निरुक्तसामग्रीप्रयोज्यतावच्छेदकतया तदवच्छिन्नजन्यतानिरूपितजनकताया घटेनेत्याद्यानुपूर्वीविशिष्टज्ञानत्वावच्छिन्नतया तदवच्छिन्नप्रतियोगिताकाभावस्य तादृशान्वयबुद्धित्वावच्छिन्नप्रतियोगिताकाभावप्रयोज्यत्वन्निराबाधमिति भावः।

पर्य्यायशब्दान्तरजन्योपस्थित्योर्व्यभिचारवारणाय कारणानन्तर्य्यस्य कार्य्यतावच्छेदककुक्षाववश्यं प्रवेशनीयत्वे घटादिविषयाणां तथात्वस्यानावश्यकतया नोक्तान्वयबुद्धित्वस्य जन्यतावच्छेदकत्वसम्भव इत्यत आह—**अथवे**ति। **तत्रापि** उपस्थितिनिष्ठकार्य्यतायामपि। **प्रवेशनीयम्** उपलक्षणतयेत्यादिः। **इत्थञ्च** तथा निवेशे च। **कारणत्वमवसेयमि**ति। घटीया करणतेत्यन्वयबुद्ध्यभावस्य घटेनेत्याद्यानुपूर्वीज्ञानाभावस्य निरुक्तरीत्या प्रयोज्यप्रयोजकभावस्याक्षततया तद्घटितमाकाङ्क्षास्वरूपं निरुच्य यादृशानुपूर्व्यवच्छेदेन तज्ज्ञानं तादृशानुपूर्व्यवच्छिन्नं घटीया करणतेत्यन्वयबुद्धौ ज्ञायमानं तज्ज्ञानं वा कारणमिति बोध्यमित्यर्थः।

---

१ घटपदज्ञानव्यतिरेकप्रयोज्याभावप्रतियोगितावच्छेदकविषयतानिरूपितेन टापदज्ञानव्यतिरेकप्रयोज्याभावप्रतियोगितावच्छेदकेन बिषयत्वेनावच्छिन्न० इति मु० पु० पा०।

एतादृशी चाकाङ्क्षा यदि सुबन्ततिङन्तानां वृत्तिरिति शाब्दिकाभिप्रायस्तदा भ्रममूल एव । नह्यस्यामाकाङ्क्षायां तादृप्येग पदार्थानामभिनिवेशः, घटतृतीयादीनां शक्यलक्ष्यार्थसहस्रभेदेन कारणताबाहुल्यप्रसङ्गात् ॥ ३६ ॥

स्यादेतत्, घटेनेत्यानुपूर्वीविशिष्टे घटपदार्थटापदार्थान्वयबोधजनकज्ञानविषयत्वस्वरूपायामाकाङ्क्षायां गृहीतायामपि न विशेषणविशेष्यभावं प्रति नियमः सम्भवति । तथाहि– यजेतेत्यादावाख्यातेन प्रकृत्यर्थविशेषणतया विधेस्तद्विशेष्यतया भावनाया इव घटेनेत्यादौ तृतीययापि प्रकृत्यर्थं प्रति विशेषणतया सङ्ख्याया विशेष्यतया च करणत्वस्य बोधो जन्यते । तत्र करणत्वविशेषणकघटविशेष्यकान्वयबोधं को वारयेत् ? नहि घटेनेत्यानुपूर्व्यास्तृतीयार्थविशेषणकबुद्धौ

**एतादृशी** निरुक्ता प्रयोज्यप्रयोजकभावापन्नाभावद्वयघटिता । भ्रममूलत्वे हेतु**र्नह्यस्या**मिति । तत्र तादृप्येण पदार्थानामनिवेशे हेतु**र्घटतृतीयादीना**मिति । तथा च शक्तेस्तत्तदर्थघटितबोधजनकत्वस्वरूपत्वेपि नोक्ताकाङ्क्षारूपत्वम्, किमुत सङ्केतस्वरूपत्वे तस्यास्तथात्वं येन स्फोटसिद्धिः स्यादित्याशयः । **कारणताबाहुल्यप्रसङ्गादि**ति । यत्र घटटादिपदैः शक्तिभ्रमेण लक्षणया वा पटकर्म्मत्वाद्युपस्थितिशाब्दबोधौ तत्र पटत्वादिनैव निवेशस्यावश्यकतयानन्तकारणताकल्पनापत्तेरिति भावः ।३६।

उक्तरीत्या स्फोटस्यानावश्यकत्वेपि घटेनेत्यादितो घटीया करणतेत्याद्याकारको घटादिविशेषणककरणत्वादिविशेष्यकान्वयबोध एव, न तु घटादिविशेष्यककरणत्वादिविशेषणक इति नियमः स्फोटं विनानुपपन्न एवेति तदुपपत्त्यर्थमेव घटविशिष्टकरणत्वादिरूपविशिष्टार्थवाचकत्वं घटेनेत्यानुपूर्वीविशिष्टे सुबन्ताद्यात्मके पदे आवश्यकमेवेत्यत एव स्फोटसिद्धिः स्यादित्याशङ्कते—**स्यादेतदि**त्यादिना । **तथाही**ति । नियमासम्भवमेव दर्शयामीत्यर्थः । **को वारयेदि**ति । आकाङ्क्षा-

न सामर्थ्यम्, सङ्ख्याया अप्यविशेषणत्वप्रसङ्गात्। न चार्थभेदेनाकाङ्क्षाभेदमनुमन्यते भवान्।

न चासंसर्गाग्रहजन्यतावच्छेदकघटप्रकारककरणत्वविशेष्यताकान्वयानुभवत्वावच्छिन्नोत्पत्तिप्रयोजकसामग्र्यामेव घटेनेत्यानुपूर्वीज्ञानस्य प्रवेशो न तथाविधकरणत्वप्रकारकघटविशेष्यकान्वयानुभवत्वावच्छिन्नोत्पत्तिप्रयोजिकायामिति वाच्यम्, कस्यचिदन्यथाव्युत्पन्नस्य घटेनेत्यतोपि करणं घट इति बोधोत्पत्त्या घटेनेत्यानुपूर्वीज्ञानस्य तत्सामग्र्यामनुप्रवेशावश्यकत्वात्। [1]एवञ्च घट एक इति घटीयमेकत्वमिति बुद्धिद्वयेपि घटेनेत्यानुपूर्वीज्ञानस्य प्रयोजकत्वमावश्यकमिति पदार्थविशेषान्तर्भावेण घटेनेत्यानुपूर्वीविशिष्टे घटविशेषितकरणताबोधसामर्थ्य-

ज्ञानादीनां कार्य्यतावच्छेदककुक्षौ घटादीना तद्विशेषणत्वादीनाञ्चाप्रवेशादेव तस्यापि तदीयकार्य्यतावच्छेदकाक्रान्तत्वादिति भावः। घटेनेत्यानुपूर्वीविशिष्टस्य तृतीयार्थविशेषणकान्वयबोधं प्रत्यसामर्थ्यादेव ततस्तदनुत्पत्तिः स्यादिति वक्तुं न शक्यत इत्याह— **नही**ति। **अविशेषणत्वप्रसङ्गादि**ति। तथा च तत एवैकत्वप्रकारकोपि बोधो न स्यादिति भावः। कार्य्यतावच्छेदककुक्षौ घटाद्यर्थविशेषाणामनुप्रवेशे उक्तापत्तिवारणसम्भवेपि निरुक्तदिशा तत्र तेषामप्रवेश एव भवताम्मत इति नोक्तापत्तिवारणं भवन्मते सम्भवतीत्याह—**न चार्थभेदेने**ति।

आकाङ्क्षाज्ञानकार्य्यतावच्छेदककुक्षौ घटादिविषयाणामप्रवेशेपि योग्यताज्ञानकार्य्यतावच्छेदके तन्निवेशादेव तदवच्छिन्नोत्पत्तिप्रयोजकसामग्र्यामेव घटेनेत्याद्यानुपूर्वीज्ञानस्यापि निवेशान्न ततो विपरीतबोधस्यापत्तिः सम्भवतीत्याशङ्क्य निराकुरुते—**न चे**ति। **वाच्य**मिति परेणान्वितम्। **तत्सामग्र्यामनुप्रवेशावश्यकत्वादि**ति। करणं घट इति शाब्दबोधोत्पत्तिप्रयोजकसामग्र्यामपि घटेनेत्यानुपूर्वीज्ञानस्य प्रवेशस्यावश्यकत्वादित्यर्थः। तथा चोक्तविपरीतव्युत्पन्नस्य पुंसो नोक्तशाब्दबोधानुपपत्तिरविपरीतव्युत्पन्नस्य तथाविधशाब्दप्रसङ्गो दुर्वारश्चेति भावः। **एवञ्च** विभक्तीनां प्रकृत्यर्थेन सह विशेषणतया विशेष्यतया-चान्वयबोधसामर्थ्यस्यावश्यकत्वे च। **पदार्थविशेषान्तर्भावेणे**ति। एकत्व-

---

१ एवं घट इति पा० मु० पु०।

मेव शक्तिः। सैव च ज्ञाता घटीया करणतेत्यन्वयबुद्धावुपयुज्यत इति पदस्फोटवादिनिगर्व्व इति चेत्?

उच्यते—

सामान्येन प्रकृत्यर्थः प्रत्ययार्थो विशेषतः।
आकाङ्क्षायान्निविशते न तद्रूपतया द्वयम् ॥३७॥

घटेनेत्यानुपूर्वीज्ञानत्वावच्छेदेन घटपदज्ञानजन्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितकरणतात्वावच्छिन्नविशेष्यताशालिबुद्धिजनकताग्रह एव स्वाव्यवहितोत्तरोत्पत्तिकज्ञानत्वावच्छेदेन कारणम्, एवमपि

करणत्वादिपदार्थान्तर्भावेणेत्यर्थः। **शक्ति**रिति। तथा च घटेनेत्यानुपूर्वीविशिष्टे घटविशिष्टकरणताबोधजनकत्वमात्रस्य सत्त्वाच्छक्तिभ्रमं विना न ततः करणं घट इति बोधापत्तिरिति पदस्फोट आवश्यक एवेति भावः।

प्रत्ययार्थाना प्रकृत्यर्थापेक्षयाल्पाना तत्तद्रूपेण प्रकृत्यर्थानाञ्च प्रकृतिपदज्ञानजन्यतावच्छेदकत्वोपलक्षितघटत्वादिनाकाङ्क्षाज्ञानजन्यतायां प्रवेशादेव विशेष्यविशेषणभावनियमस्य स्फोटोपगमापेक्षया कारणतावाहुल्यप्रसङ्गाभावस्य चोपपत्तौ कृतं स्फोटेनेत्युत्तरयति—**उच्यत** इत्यादिना। **प्रकृत्यर्थः** घटेनेत्यादौ घटरूपप्रकृतिशक्यादिर्घटादिः। **सामान्येन** घटादिपदज्ञानजन्यतावच्छेदकावच्छिन्नत्वेन। **आकाङ्क्षायां** आकाङ्क्षाज्ञानजन्यतायां **निविशते** इत्यन्वयः। **प्रत्ययार्थः** तृतीयादिविभक्त्यर्थकरणत्वादिः। **विशेषतः** करणतात्वादिना **निविशते** इत्यन्वयः। **तद्रूपतया** घटत्वादिना करणतात्वादिना च। **द्वयं** प्रकृत्यर्थप्रत्ययार्थोभयं **न निविशते** इत्यन्वयः।

तयोर्न्निवेशप्रकारं दर्शयति—**घटेनेत्यानुपूर्वी**त्यादिना। **स्वाव्यवहितोत्तरोत्पत्तिके**ति। स्वं घटेनेत्यानुपूर्वीज्ञानम्। एतच्च पर्य्यायशब्दान्तरज्ञानजन्यान्वयबोधे व्यभिचारवारणाय। **एवमपि** करणत्वादीनां विशेषरूपेण जन्यतायां

घटपदार्थसहस्रभेदेन कारणताबाहुल्याभावप्रयुक्तलाघवसम्भवात् । एतादृशाकाङ्क्षाग्रहेण शाब्दबोधे जननीये टापदजन्या क्वचिदिनपदशक्तिभ्रमजन्या करणतोपस्थितिस्सहकारिणी, न तयोराकाङ्क्षाभेदः । एतादृशाकाङ्क्षासहकृतमानुपूर्वीविशेषज्ञानं घटप्रकारिकां करणताविशेष्यिकां विलोमाकाङ्क्षाज्ञानसहकृतन्तु करणताप्रकारिकां घटविशेष्यिकां बुद्धिं जनयति । यस्तु द्विविधामप्याकाङ्क्षां प्रतिसन्धत्ते स घटीया करणतेति करणं घट इति द्वेधापि बुध्यत एव ।

यत्तु तृतीयार्थकर्तृकरणत्वादिभेदेन नाकाङ्क्षाभेदो गौरवात्, किन्तु वाचकतावच्छेदकभेदेन, टापदस्य हि सङ्ख्यायामेकवचनत्वेन

प्रवेशेपि । **लाघवसम्भवादि**ति । स्फोटवादिना शक्यलक्ष्यभेदभिन्नानन्ततत्तद्घटपदार्थविशिष्टकरणत्वादिज्ञानजनकताग्रहाणामनन्तानां कारणत्वस्यावश्यं वाच्यतयास्माभिरनन्तानामपि घटपदार्थानामेकरूपेण तत्र निवेशनाल्लाघवमस्माकमिति भावः । **न तयोराकाङ्क्षाभेद** इति । तयोरुपस्थित्योः सहकारिण्या आकाङ्क्षाया न भेद इत्यर्थः । तथा च तत्प्रयुक्तमपि गौरवन्नास्माकमिति भावः। यस्य पुंसो घटेनेत्यानुपूर्वीज्ञानत्वावच्छेदेन घटपदज्ञानजन्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितकरणतात्वावच्छिन्नप्रकारताशालिशाब्दबुद्धिजनकत्वस्यैव ग्रहस्तस्य करणं घट इत्याकारक एव शाब्दबोध इति न विशेष्यविशेषणभावनियमानुपपत्तिरित्याशयेनाह—**एतादृशाकाङ्क्षे**ति । **विलोमाकाङ्क्षाज्ञानं** घटविशेष्यताघटितनिरुक्ताकाङ्क्षाज्ञानम् । उभयाकाङ्क्षाज्ञानवतो द्विविधान्वयबोधोत्पत्तिरुभयवादिनोरिष्टैवेत्याह—**यस्तु द्विविधामि**ति ।

करणत्वादीनां प्रत्ययार्थानामपि न तत्तद्रूपेण प्रवेशो येन तद्भेदप्रयुक्तमपि गौरवं स्यादिति तु न सम्भवतीत्याह—**यत्त्वि**त्यादिना । **गौरवादि**ति । तत्तदर्थभेदेनाकाङ्क्षाया भेदेर्थानामनैक्यात्कारणताबाहुल्यप्रसङ्गादिति भावः । तर्हि शाब्दबोधनियमः कथमित्यत आह—**किन्त्वि**ति । वाचकतावच्छेदकभेदमेवाह—**टापदस्य ही**ति । तृतीयात्वस्यैकवचनत्वस्य प्रत्येकं सङ्ख्याया करणत्वस्य च

**वाचकता, करणत्वादौ तृतीयात्वेन वाचकता। तथा च घटेनेत्यानुपूर्वीविशेषावच्छेदेन घटपदत्वविशिष्टज्ञानप्रयोज्यप्रकारितावच्छिन्नतृतीयात्वविशिष्टज्ञानप्रयोज्यविशेष्यिताकानुभवजननसामर्थ्यस्वरूपाकाङ्क्षा गृह्यमाणा सती तृतीयात्वविशिष्टस्मारितकरणत्वकर्तृत्वादिविशेष्यकमनुभवं जनयति। यस्तु विलोमाकाङ्क्षां प्रतिसन्धत्ते स कर्तृत्वकरणत्वादि विशेषणतयैव प्रतिपद्यते। एवं घटपदार्थविशेष्यतानिरूपितैकवचनत्वविशिष्टार्थप्रकारताकबुद्धिसामर्थ्यं घटेनेत्यत्र गृहीतं घटविशेषणतयैकत्वं भासयति। तथा यजेतेत्यादौ लिङ्त्वेन विधौ लत्वेन भावनायां शक्तिरिति शक्ततावच्छेदकभेदादेव व्युत्पत्तिभेदो न तदभेदे कुत्रापीति मतम्। तच्चिन्त्यम्। ३७।**

वाचकतायामतिप्रसक्ततया न तदुभयवाचकतावच्छेदकत्वमिति भावः। **तथा च** एकवचनत्वादिना टादीनां सङ्ख्यादिवाचकत्वे च। **प्रकारित्वावच्छिन्ने**ति। **विशेष्यिता**न्वितम्। **तृतीयात्वविशिष्टस्मारिते**ति। इनपदस्मारिते टाप्रत्यये तृतीयात्वरूपकरणत्वकर्तृत्वादिवाचकतावच्छेदकप्रकारकस्मरणविषयेत्यर्थः। विपरीतव्युत्पन्नस्य करणं घट इति शाब्दबोधमुपपादयति—**यस्त्वि**ति। **विलोमाकाङ्क्षां** तृतीयात्वविशिष्टज्ञानप्रयोज्यप्रकारित्वावच्छिन्नघटपदत्वविशिष्टज्ञानप्रयोज्यविशेष्यिताकान्वयानुभवजननसामर्थ्यरूपामित्यर्थः। **करणत्वादी**ति। प्रतिपत्तिकर्म्मत्वाद् द्वितीयान्तम्, पद्यतेर्दैवादिकस्य कर्त्तर्य्येव प्रतिपद्यत इति प्रयोगात्। एवमेको घटो घटीयमेकत्वमित्यनयोरपि निरुक्तदिशैवोपपत्तिरित्याह—**एवमि**ति। एवं यत्र यत्रैकप्रत्ययस्यार्थानामनेकत्वं तत्र सर्वत्रैव वाचकतावच्छेदकभेद एवाकाङ्क्षाभेदनियामक इत्याह—**तथा यजेते**त्यादाविति। **तदभेदे** वाचकतावच्छेदकतृतीयात्वादीनामभेदे। **व्युत्पत्तिभेद** इति पूर्वेणान्वयः। **तच्चिन्त्यमि**ति। तृतीयात्वादीनां टादावज्ञानेपि करणत्वादीनामन्वयबोधात्तदनुपपत्तिरेकवचनत्वादीनामनुगतत्वासम्भवश्च चिन्ताबीजं बोध्यम्। ३७।

---

१ ० प्रकारता० इति मु० पु० पा०।

ननु घटपदार्थान्वितटापदार्थबोधकं घटेनेतिपदमित्याकाङ्क्षायां गृहीतायामपि घटान्वितकरणताबोधकत्वाभाववद् घटेनेतिपदमित्यसामर्थ्यविशेषनिर्णयसम्भवात्तदा घटीया करणतेत्यन्वयबुद्धिप्रसङ्ग इति घटेनेत्यानुपूर्वीविशेषावच्छेदेन घटान्वितकरणताबोधकत्वज्ञानमेव कारणं वाच्यम्, विशिष्टबोधकत्वमेव च विशिष्टशक्तिः।

न च भवतु विशिष्टबोधकत्वज्ञानं [1]कारणम्, न [2]चेदं वृत्तिः, एतज्ज्ञानस्य पदार्थस्मरणद्वारा कारणत्वाभावादिति वाच्यम्,

निरुक्ताकाङ्क्षाज्ञानस्य कारणत्वेपि घटत्वकरणतात्वादिविशेषरूपेण विशिष्टार्थविषयकान्वयबोधजनकत्वज्ञानस्यापि घटीया करणतेत्याद्यन्वयबोधे कारणताया आवश्यकतया तत एव स्फोटसिद्धिरित्याशङ्कते—**नन्वि**त्यादिना। **असामर्थ्यविशेषः** घटत्वादितत्तद्धर्म्मावच्छिन्नघटितान्वयबोधजनकत्वाभावः। **निर्णयसम्भवादि**ति। तादृशाभावप्रकारकनिश्चये घटपदार्थत्वादिना घटाद्यवगाहिबोधजनकत्वाभावबुद्धेरप्रतिबन्धकत्वादिति भावः। **अन्वयबुद्धिप्रसङ्ग** इति। नेष्यते च तदानीं तादृशी बुद्धिः केनापीति भावः। उक्तकारणताया आवश्यकत्वेपि कथं पदस्फोटसिद्धिरित्यत आह—**विशिष्टबोधकत्वमेव चे**ति। **चो** हेतौ। तथा च विशिष्टार्थनिरूपितशक्तिमत्त्वस्यैव स्फोटतया तस्य घटेनेत्यादिपदे आवश्यकत्वमेवेति भावः।

विशिष्टार्थबोधकत्वस्य शक्तिरूपत्वे एव पदस्फोटः सिद्ध्येत् तदेव न, पदार्थस्मरणद्वारकान्वयबोधजनकस्यैव वृत्तिरूपतया साक्षादन्वयबोधजनकस्य विशिष्टार्थबोधकत्वस्य तथात्वासम्भवादित्याशङ्कान्निराकुरुते—**न चे**ति। **न चेदमि**ति। इदमा समासघटकीभूतस्यापि परामर्शस्य पूर्वमुपपादनाद्विशिष्टार्थबोधकत्वज्ञानघटकस्य तादृशबोधकत्वस्य परामर्शः। क्वचि**न्न चेयमि**ति पाठः। तत्र विधेयस्य वृत्तेः प्राधान्यात् स्त्रीलिङ्गनिर्देशो बोध्यः। वृत्तेरुक्तरूपत्वं तदैव

[1] करणम् इति मु० पु० पा०।

[2] न चेयं वृत्तिः इति मु० पु० पा०।

एतज्ज्ञानकारणत्वावश्यकत्वे स्मारकवृत्तीनामेतद्ग्राहकत्वेनैवोपक्षया-त्प्रकारान्तरेण पदानामनुभावकत्वग्रहेनपेक्षणीयसन्निधीनां वृत्तिज्ञान-जनितपदार्थोपस्थितीनामन्यथासिद्धत्वात्।

एवञ्च प्रत्ययप्रकृतिसमुदाये विशिष्टानुभावकत्वमेव शक्तिः। तद्ग्रहः साक्षादन्वयबोधोपयोगी, न पुनरर्थस्मरणमपेक्षते, वाक्यार्थस्या-

सम्भवति, यदि प्रत्येकपदार्थोपस्थितीनां तत्तत्पदनिरूपितवृत्तिज्ञानजन्यानाम-न्वयबोधहेतुत्वं स्यात्, तदेव न, विशिष्टार्थस्योपस्थितौ सत्यां प्रत्येकपदार्थो-पस्थिति विनाप्यन्वयबोधस्य सम्भवादित्याशयेन समाधत्ते—**एतज्ज्ञाने**ति। विशिष्टार्थविषयकान्वयबोधकत्वज्ञानेत्यर्थः। **स्मारकवृत्तीनां** प्रत्येकपदार्थस्मरण-जनकप्रत्येकपदवृत्तीनामित्यर्थः। **एतद्ग्राहकतयैव** विशिष्टार्थबोधजनकत्व-स्वरूपशक्तिग्राहकतयैवेत्यर्थः। **उपक्षयाद्** एकप्रयोजनस्य निर्वर्त्तने सत्यन्यत्र कार्य्ये क्षीणबलत्वात्। प्रत्येकपदार्थोपस्थितीनां विशिष्टार्थान्वयबोधे कारणत्व-मन्यथासिद्धत्वादसम्भवीत्याह—**प्रकारान्तरेणे**ति। वृद्धव्यवहारादिनेत्यर्थः। **पदानां** सुबन्ततिङन्तानाम्। **अनुभावकत्वग्रह** इति। जायमान इति शेषः। **अनपेक्षणीयसन्निधीनां** तादृशान्वयानुभावकत्वग्रहोत्पत्तावनपेक्षणीया-नामित्यर्थः। **अन्यथासिद्धत्वादि**ति। अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्न-त्वादित्यर्थः।

**एवञ्च** पदार्थस्मरणद्वारान्वयबोधजनकस्यैव वृत्तित्वमित्यस्य निरासे चेत्यर्थः। विशिष्टार्थशक्तिज्ञानमपि न स्मरणद्वारा शाब्दबोधजनकम्, किन्तु साक्षादेवेत्याह—**तद्ग्रह** इति। तस्य तथात्वे हेतु**र्वाक्यार्थस्यापूर्वत्वेने**ति। तथा च विशिष्टवाक्यार्थस्य पूर्वमनुभूतत्वे वाक्यानर्थक्यमननुभूतत्वे तद्विषयक-स्मरणस्यासम्भव एवेति भावः। ननु तर्हि विशिष्टार्थबोधजनकत्वरूपशक्ति-

१ आनुभावकत्वग्रहे इति मु० पु० पा०।

पूर्वान्वेन तद्गोचरस्मरणासम्भवात् । प्रकृत्यर्थान्वितप्रत्ययार्थस्यापूर्वत्वेपि घटप्रकारतानिरूपितकरणताविशेष्यताकबुद्धित्वावच्छेदेन पदजन्यत्वस्य सुग्रहतया न शक्तिग्रहानुपपत्तिः, वाक्यार्थमगृहीत्वापि तज्ज्ञानसम्भवादिति स्फोटवादो दुरपवाद इति चेत् ?

आस्तां तावदापाततो विशिष्टार्थबोधजननसामर्थ्यं शब्दस्य विशिष्टे वृत्तिः ।

तथापि—

वाक्यार्थ इव वाक्यार्थबुद्धिश्चेन्नानुभूयते ।
तथा तत्कारणत्वस्याज्ञानेप्यन्वयधीर्ध्रुवा ॥३८॥

यस्य पुंसो घटान्वितकरणता तज्ज्ञानं तज्ज्ञानजनकत्वं[1] वा नानुभूतचरन्तस्यापि घटेनेत्यादिवाक्याद् घटान्वितकरणत्वान्वयं[2]-

ज्ञानमपि कथमित्यत आह—**प्रकृत्यर्थान्विते**ति । **सुग्रहतये**ति । निरूप्यनिरूपकभावापन्नविषयताशालिज्ञानेर्थस्य घटकत्वविरहेण विशेषणत्वादीनामभावात्तज्ज्ञानस्य पूर्वमसत्त्वेपि कारणबाधस्य विरहादिति भावः । **दुरपवाद** इति । उक्तरीत्यैव स्फोटस्यावश्यकतया दुरपह्नवस्तद्वाद इत्यर्थः ।

विशिष्टार्थबोधजनकत्वस्य शक्तित्वोपगमेपि प्रत्येकपदार्थोपस्थितीनामावश्यकतया तत एवोपपत्तौ विशिष्टार्थवाचकत्वं सुबन्तादीनामनर्थकमेवेति न स्फोटसिद्धिरित्युत्तरयति—**आस्ताम्**इत्यादिना । **आपातत** इति । परमार्थतस्तस्य वृत्तित्वं प्रागेव निराकृतमिति भावः । **तथापि** तस्य वृत्तित्वोपगमेपि । **वाक्यार्थ इवे**ति । यथा वाक्यार्थस्यापूर्वत्वं भवतामप्यभिमतम्, तथा तज्ज्ञानस्य तज्ज्ञानजनकत्वस्याप्यपूर्वत्वस्य सम्भवादिति भावः । **ध्रुवे**त्यनेन सर्वानुभवगोचरत्वं तादृशान्वयबोधस्येति सूचितम् ।

**नानुभूतचरम्**इति । पूर्वानुभवविषयो नेत्यर्थः, भूतपूर्वेर्थे चरट्प्रत्ययात् ।

---

१ तज्ज्ञानजनकत्वम् इति मु० पु० ना० ।

२ घटान्वित करणत्वानुभव० इति मु० पु० पा० ।

नुभवस्य सर्वानुभवसिद्धतया न विशिष्टवृत्तिर्वाचकसमुदाये गृह्यमाणा विशिष्टानुभाविका।

यत्र च घटटापदजनिते घटकरणत्वयोरुपस्थितौ घटेनेत्यादिसमुदायत्वावच्छेदेन घटपदार्थान्वितटापदार्थबोधकत्वप्रतिसन्धानञ्च विद्यते, तदा सत्यपि समूहे घटकरणताबोधबाधबुद्धिर्न्न प्रतिरुणद्धि, जनयत्येव घटेनेति पदं घटकरणताबुद्धिम्। यदाहुः—"न ह्यविदितसामर्थ्योऽग्निर्न्न दहति पचति" इति।

**वाचकसमुदाये** घटटादिसमुदायत्वावच्छिन्ने। **विशिष्टानुभाविके**ति। **ने**ति पूर्वेणान्वयः। तथा च तत्र व्यभिचारादेव विशिष्टशक्तेर्विशिष्टान्वयबोधं प्रत्यकारणतया तदुपगमो निरर्थक इति भावः।

तदनुपगमेनुपदं **ननु घटपदार्थान्विते**त्यादिनोक्तामापत्तिमिष्टापत्त्या परिहरति—**यत्र चे**त्यादिना। **न प्रतिरुणद्धी**ति। **बुद्धिमि**त्यग्रिमेणान्वयः। तथा चोक्तबाधनिश्चयस्य ग्राह्याभावावगाहितया तादृशबोधजनकत्वप्रकारकबुद्धावेव प्रतिबन्धकतया तस्य चोक्तशाब्दबोधात्पूर्वमस्माभिरनभ्युपगमेन तदानीमप्युक्ताकाङ्क्षाज्ञानादिघटितसामग्रीसमवधाने तादृशशाब्दबोध इष्ट एवेति भावः। कार्य्यजनकत्वं स्वरूपसदेव कारणे कार्य्योत्पत्त्यापेक्ष्यते, न तु ज्ञातं सदित्यत्र वह्निं दृष्टान्तयतामभियुक्तानां वाक्यं प्रमाणयति—**न ह्यविदिते**ति। तथा च यथाग्नौ दाहादिजनकत्वस्याज्ञाने तदभावस्य भ्रमेपि वा तेन दाहादिजननम्, तथा प्रकृतेपीति भावः। नञो व्यत्यासेना**विदितसामर्थ्य** इत्यनेन सामर्थ्याभावप्रकारकनिश्चयस्य लाभो बोध्यः।

---

१ ०त्वं प्रति० इति मु० पु० पा०।

२ घटकरणताबोधकत्वबाधबुद्धिः इति मु० पु० पा०।

भवतु वा घटेनेति पदत्वावच्छेदेन घटकरणताबोधकत्वाभावबुद्धि-विरहो निरुक्तसामग्रीघटकः; तादृशबुद्धौ तादृशबुद्धेः प्रतिबन्धकत्वात् । सत्यां घटेनेति पदे घटकरणत्वबोधकत्वाभावबुद्धौ घटेन कलसेनेत्युभय-विधानुपूर्वीज्ञानसत्त्वे घटकरणताबुद्धिः सामग्र्यन्तरादेव ।

ननु प्रथमान्तघटपदस्य तृतीयान्तपटपदस्य च विषये सामान्यतो

बोधजनकताज्ञानस्य कारणतावादिनये दर्शितबाधनिश्चयकाले सामग्री-संवलनासम्भवः । तस्याकारणत्वेपि तत्सत्त्वे घटीया करणतेत्यन्वयबोधस्यानुभव-विरुद्धत्वे इष्टापत्तिर्न सम्भवतीत्यतस्तस्य ग्राह्याभावानवगाहित्वेपि कामिनीजिज्ञा-सादिवत्पृथक्प्रतिबन्धकत्वमावश्यकमेवेति तादृशनिश्चयाभावं निरुक्तायां घटीया करणतेत्यन्वयबोधसामग्र्यामन्तर्भाव्यैव दर्शितापत्तिर्वारणीया, तावतापि न स्फोटसिद्धिरित्याशयेनाह—**भवतु वे**ति । **तादृशबुद्धौ** घटीया करणतेति बुद्धौ । **तादृशबुद्धेः** घटेनेत्यानुपूर्व्यवच्छिन्ने घटीया करणतेति शाब्दबोधजनकत्वाभाव-निश्चयस्य । **प्रतिबन्धकत्वात्** कामिनीजिज्ञासादिवदित्यादिः । तथा च प्रति-बन्धकाभावस्य कारणतायाः सर्वसम्मततया तद्विधयैव तादृशाभावस्य निरुक्त-सामग्रीघटकत्वान्न तस्य कारणत्वान्तरकल्पनाप्रयुक्तं गौरवमप्यस्माकमिति भावः । सामान्यतो घटेनेति समुदाये घटीया करणतेति शाब्दबोधजनकत्वाभावनिश्चयस्य प्रतिबन्धकत्वे घटेन कलसेनेत्युभयविधाकाङ्क्षाज्ञाने सति घटेनेत्यंशमात्रे तादृश-बाधनिश्चयसत्त्वेपि तादृशबोधो न स्यादित्यत आह—**सत्यामि**ति । **सामग्र्यन्त-रादेवे**ति । कलसेनेत्याकाङ्क्षाज्ञानकलसादिपदजन्यघटाद्युपस्थित्यादिघटित-सामग्रीत एवेत्यर्थः । तस्याञ्च घटेनेत्यानुपूर्व्यवच्छिन्नविशेष्यकोक्तबाधनिश्चय-स्यानन्तर्भावादेव तादृशशाब्दबोधः । एवञ्च निरुक्ताकाङ्क्षाज्ञानस्यैवोक्तबोध-कारणत्वम्, न तु तादृशविशिष्टबोधजनकत्वज्ञानस्येति कुतस्तद्विषयस्य वृत्तित्व-सम्भवो येन स्फोटः सिद्ध्येतेति भावः ।

स्फोटानङ्गीकारेऽप्यपूर्वेण घटेनेत्यानुपूर्वीविशिष्टेन घटीया करणतेत्यन्वय-बोधानुपपत्तिस्तुल्यैवेत्याशङ्कते—**नन्वि**ति । **सामान्यतो व्युत्पन्नस्ये**ति ।

व्युत्पन्नस्य पुंसो घटेनेति पदं श्रुत्वा घटकरणताप्रतीतिरनुभवसिद्धा । न च तत्र घटेनेत्यानुपूर्वीज्ञानत्वावच्छेदेन घटपदार्थान्वितटापदार्थबोधकत्वं प्रतीतचरमिति तुल्योनुयोगः ।

अथादन्तात्प्रातिपदिकाट्टाकारस्येनमादिशता शब्दानुशासनेनादन्तप्रातिपदिकानन्तरितेनत्वावच्छेदेनादन्तप्रातिपदिकार्थान्वितटापदार्थ-

प्रथमान्तं घटपदं किञ्चिच्छाब्दबोधजनकं तृतीयान्तं पटपदञ्च प्रकृत्यर्थनिष्ठकरणताबोधजनकमिति प्रकृतिप्रथमात्वादिना सामान्याकारेणाकाङ्क्षाज्ञानवत इत्यर्थः । **सामान्यत** इत्यनेन घटेनेत्याद्यानुपूर्वीविशेषावच्छेदेन घटीया करणतेति शाब्दबोधजनकत्वज्ञानविरहः सूचितः । **तुल्योनुयोग** इति । तत्र घटेनेत्यानुपूर्वीज्ञानाभावेन निरुक्ताकाङ्क्षाज्ञानस्य व्यभिचारो भवतामपि समान एवेत्यर्थः ।

वाक्यार्थादीनामपूर्वत्वे उभयवादिमतेपि निरुक्तानुपपत्तिस्तुल्या । तत्परिहाराय दार्शनिकैः प्रकारान्तरानुसरणे तत एव शाब्दिकैरपि सा परिहरणीया स्यादिति "यत्रोभयोः समो दोषः परिहारोपि वा समः । नैकः पर्य्यनुयोक्तव्यस्तादृश्यर्थविचारणे ॥" इति न्यायेन स्फोटवादिमतेप्युक्तानुपपत्तिर्न्न प्रदर्शनीयेत्याशयेन दार्शनिकमतेपूर्ववाक्याच्छाब्दबोधमुपपादयति—**अथेत्यादिना** । **शब्दानुशासनेने**ति । ह्रस्वाकारान्तप्रातिपदिकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयाणां तादृशप्रादिपदिकनिष्ठावधित्वनिरूपकपरत्वाश्रयाणां वा टाङसिङसाम् इन आत् स्य इत्येते आदेशाः स्युरित्यर्थकेन "टाङसिङसामिनात्स्याः" इति पाणिनिसूत्रेणेत्यर्थः । **बुद्ध्यत** इति । शब्दनित्यतावादिमते तन्नाशकत्वे सति तदधिकरणकालवृत्तित्वस्वरूपस्य तदादेशत्वस्येनादावसम्भवेनादन्तप्रातिपदिकाव्यवहितोत्तरटादिबुद्धाविनादिबुद्धिः कर्त्तव्येत्याकारकपाणिन्याज्ञारूपस्यैवादेशस्य वाच्यतया शब्दानित्यतावादिमते निरुक्तस्यादेशत्वस्य तत्र सम्भवेपीनादीनामवाचकतया घटीया करणतेत्यादिशाब्दबोधार्थमिनादिपदेन टादिस्मरणस्यावश्यं वाच्यतयादन्तप्रातिपदिकाव्यवहितोत्तरेनत्वाद्यवच्छेदेना-

**बोधकत्वं बुद्ध्यते । स च यादृशानुपूर्वीकादन्तप्रातिपदिकोत्तर-मिनपदं तादृशानुपूर्वीकपदार्थतावच्छेदकधर्म्मविशिष्टान्वितटापदार्थता-वच्छेदकधर्म्मविशिष्टबोधकमित्याकारको बोधश्शब्दस्वाभाव्याददन्त-प्रातिपदिकवृत्तिनिखिलानुपूर्वीविशेषानखिलांश्च पदार्थतावच्छेदकधर्म्मान्**

दन्तप्रातिपदिकार्थान्वितटादिपदार्थबोधजनकत्वग्राहकत्वमेवोक्तानुशासनस्य, न तु घटपटादिप्रत्येकपदघटिततादृशजनकत्वग्राहकत्वम् । तच्चासति बाधके उद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वयस्य सर्वसिद्धतयेनत्वाद्यवच्छेदेनैव प्राथमिकबोधे इनादीनामुद्देश्यत्वविरहेपि द्वितीयबोधे तेषां तथात्वादित्याशयः । तत्र बोधेदन्तप्रातिपदिकानां तत्तदानुपूर्वीरूपेणैव निवेशः; न्यथा घटादिपदाना प्रत्युच्चारणं भिन्नतयैकज्ञानेऽप्यपरस्मिँस्तद्वृत्त्यानुपूर्वीमति तज्ज्ञानासम्भवो-सर्वज्ञानां निखिलपदज्ञानस्यासम्भवादित्याह—**स चे**ति । अत्रापि **यादृशे**त्यु पादानादेकानुपूर्वीग्रहणपरस्यास्तस्या ज्ञानं न स्यादिति **निखिलानुपूर्वी-विशेषानि**त्यग्रिमग्रन्थविरोधप्रसङ्ग इत्यत इनपदविशिष्टत्वमेवादन्तप्रातिपदि-काव्यवहितोत्तरेनपदत्वावच्छेदेन तादृशानुशासनेन बोधनीयम् । वैशिष्ट्य-नियामकश्च स्वतादात्म्यस्वाव्यवहितपूर्ववृत्त्यानुपूर्व्यवच्छिन्नपदार्थतावच्छेदका-वच्छिन्नान्वितटापदार्थतावच्छेदकावच्छिन्नबोधजनकत्वोभयसम्बन्धः । एतादृश-परम्परायाः संसर्गत्वानङ्गीकारे चान्यत्र दर्शितरीत्या प्रकारमुद्रयैव द्वितीयसम्ब-न्धस्य निवेशः कार्य्यः । तथा च संसर्गांशे निखिलादन्तप्रातिपदिकवृत्तीनामानु-पूर्वीविशेषाणां पदार्थतावच्छेदकानाञ्चाखिलानामेव प्रवेशात्तादृशबोधस्याखिलत-त्तद्विषयकत्वमित्याह—**शब्दस्वाभाव्या**दित्यादिना । यद्यत्पदार्थेषु यद्यत्पदार्था-न्वययोग्यता, तेषां सर्वेषामेव शाब्दबोधविषयत्वम्, न तु केषाञ्चिदित्येव शब्दस्य स्वभावः । प्रकृतेखिलादन्तप्रातिपदिकवृत्त्यानुपूर्वीविशेषपदार्थतावच्छेदकयोस्तत्त-त्पदार्थान्वययोग्यतासत्त्वादखिलानामेव शाब्दबोधविषयत्वमिति भावः ।

---

१ ० पदार्थावच्छेदक० इति मु० पु० पा० ।

२ शाब्द० इति मु० पु० पा० ।

बुद्धिविषयतावच्छेदकत्वादिकमुपलक्षणीकृत्य विषयीकरोति । तज्जनितस्मृतिसहकृता विशिष्य पदार्थोपस्थितिर्घटेनेत्यानुपूर्वीविशेषावच्छेदेन घटान्वितकरणताबोधकत्वमपि बोधयति ।

एवमेव तदादिशब्दानां प्रयोगजनकबुद्धिविषये लटो वर्त्तमानत्वे च

**बुद्धिविषयतावच्छेदकत्वादिकमि**ति । पूर्वागृहीतानामानुपूर्वीविशेषाणां पदार्थतावच्छेदकानाञ्चानुगमकमुपलक्षणीभूतं बुद्धिविषयतावच्छेदकत्वादिकमित्यर्थः । तथा च यथा तदादिपदादपूर्वचैत्रत्वादीनां शक्यतावच्छेदकानुगमकबुद्धिविषयतावच्छेदकत्वेनोपलक्षणीभूतेन शक्तिज्ञानादन्वयबोधस्तथात्रापीति भावः । **तज्जनिता** तादृशबोधजन्यसंस्कारवतो घटेनेत्यादिश्रवणे तमेवोद्बोधकमासाद्य जनिता **स्मृतिः**। तत्सहकृता **विशिष्य पदार्थोपस्थितिः** घटकरणत्वघटादिपदनिष्ठादन्तप्रातिपदिकत्वेनपदनिष्ठतदव्यवहितोत्तरत्वाना तत्तद्रूपेण प्रत्यक्षादिनोपस्थितिरित्यर्थः । **बोधयती**ति । अदन्तप्रातिपदिकोत्तरेनपदत्वावच्छेदेनेनपदविशिष्टस्मरणे घटेनेत्यत्र घटादिपदे तादृशत्वज्ञाने च घटेनेति पदं घटान्वितकरणताबोधकमिति निश्चयं जनयतीत्यर्थः । सामग्रीसत्त्वात्तदानीं तदुत्पत्तेर्निराबाधत्वादिति भावः ।

यथा घटेनेत्यानुपूर्व्यवच्छिन्ने सामान्यतोदन्तप्रातिपदिकोत्तरेनपदत्वावच्छेदेन तादृशप्रातिपदिकार्थान्वितटापदार्थविषयकबोधजनकत्वज्ञानोत्तरं घटान्वितकरणताबोधकत्वात्मकशक्तिग्रहः, तथा सङ्केतशक्तिवादिनापि तदादिसर्वनामपदेषु लकारेषु च सामान्यशक्तिज्ञानोत्तरमेव तत्तद्विशेषेषु च शक्तिग्रहोभ्युपगम्यते नास्माभिरेव केवलमित्याशयेनाह--**एवमेवे**ति । एवकारेण वक्ष्यमाणप्रकारातिरिक्तप्रकारस्य सर्वनामादिशक्तिग्राहकत्वव्यवच्छेदः । **प्रयोगजनके**ति । तत्तत्पदोच्चारणप्रयोजकेत्यर्थः । तच्च बुद्धौ विशेषणम् । तदुपादानञ्चोदासीनपदार्थस्यापि बुद्धिविषयत्वात्तस्य ततो बोधवारणाय । निवेशप्रकारश्च पूर्वोपदर्शित एव बोध्यः । **लटो वर्त्तमानत्वे चे**ति । वर्त्तमानत्वविशिष्टे काले

**स्मारकशक्तिः सुग्रहा । तत्तत्पदप्रयोगकारणबुद्धिविषयतोपलक्षित-**

इत्यर्थः। प्रयोगजनकत्वस्य बुद्धौ विशेषणत्वेऽप्यन्यतत्पदप्रयोगजनिकया बुद्ध्यै-नत्तत्पदस्यापि विषयीकरणत्वसम्भवात्तदर्थस्याप्येतेन तत्पदेन बोधो दुर्वारः। एवं वर्त्तमानत्वमप्यव्यावर्त्तकमेव भूतभविष्यतोस्तल्लट्प्रयोगानधिकरणस्य वर्त्तमानस्यापि कालस्य वर्त्तमानत्वानपायादित्यत आह—**तत्तत्पदप्रयोगे**ति। यद्विषयकबुद्धया यत्पदप्रयोगस्तदर्थे तत्पदस्य शक्तिर्बुद्धिप्रकारत्वेनोपलक्षणधर्म्मेण तत्तदर्थतावच्छेदकघटत्वादिकमनुगमय्यैवानुगमनीया । एवं तल्लट्प्रयोगा-धिकरणतावच्छेदकत्वकालत्वव्याप्यत्वाभ्यामुपलक्षणीभूताभ्यां तत्तत्क्षणत्वमप्य-नुगमय्य तत्तदाश्रयेषु तत्तल्लटः शक्तिरनुगमनीयेत्यर्थः । कालत्वव्याप्यत्व-मात्रस्यानुगमकत्वे तस्य मासत्ववर्षत्वादावपि सत्त्वेन तदवच्छिन्नस्यापि लड्वाच्यतापत्तिः । अतस्तल्लट्प्रयोगाधिकरणतावच्छेदकत्वसहितस्य तस्य तथात्वमुक्तम्। तथा सति तल्लडुच्चारणात्मकतत्प्रयोगाधिकरणत्वमवच्छेदकतया तत्तत्क्षणस्यैव, न तु मासादीनामिति तादृशाधिकरणतावच्छेदकं न मासत्व-वर्षत्वादिकमतिप्रसक्तत्वात्, किन्तु तत्तत्क्षणत्वमेव। तन्मात्रस्यानुगमकत्वे च देशादीनामपि तत्प्रयोगाधिकरणतया लड्वाच्यत्वापत्तिः। कालिकाधिकरणताया विवक्षणेपि जन्यमात्रस्य कालोपाधित्वे तद्दोषतादवस्थ्यमिति कालत्वव्याप्यत्व-मप्युपात्तम्। न चैवं सति प्रत्यहं सकृदपि पाककर्त्तरि जने पाकानुकूलकृत्यन-धिकरणक्षणावच्छेदेनापि प्रत्यहमयं पचतीति कथं प्रमाणम्, दिनत्वस्य लट्प्रयोगाधिकरणतावच्छेदकत्वाभावात्क्षणत्वेनैव तत्तत्क्षणानां लड्वाच्यताया वक्तव्यत्वात्, यत्क्षणे तादृशप्रयोगस्तत्र क्षणे पाकानुकूलकृतेस्तत्राभावादन्यक्षण-वृत्तित्वस्य कृतौ योग्यताभ्रमादिना बोधसम्भवेपि तादृशवाक्यस्याप्रामाण्यस्य दुर्वारत्वादिति वाच्यम्, तत्र लटो वर्त्तमानसामीप्ये विहिततया शब्दप्रयोगा-धिकरणक्षणसमीपक्षणमादायैव प्रामाण्योपपत्तेः। अतएव तत्रेदानीमयं पचतीति न प्रमाणम्, इदंपदार्थतल्लट्प्रयोगाधिकरणक्षणवृत्तित्वस्य तत्कृतौ विरहात्।

धर्म्मवति तत्तच्छब्दस्य तत्तल्लट्प्रयोगाधिकरणतावच्छेदकलवत्वावान्तर-तत्तत्क्षणत्वादिधर्म्मवति तत्तल्लटः शक्तिः ।

अतएव घटं बुद्ध्वा प्रयुक्तोपि तच्छब्दो न पटस्य न चैकस्मिन् काले प्रयुक्तं लट्पदं कालान्तरस्य वाचकम् , न वा [1]तत्कालीनत्वबोध-

अथवा तल्लट्प्रयोगाधिकरणवृत्तित्वमेवानुगमकम्। तथा सति दिनत्व-मासत्वादीनामपि तथात्वात्तदवच्छिन्नस्यापि लड्वाच्यतयोक्तानुपपत्तेरसम्भ-वात्। क्रियाया आरम्भात्पूर्वं समाप्त्युत्तरञ्च पचतीत्यादिप्रयोगस्य प्रामाण्य-वारणाय तादृशस्य लडर्थकालस्य स्ववृत्तिप्रागभावप्रतियोगित्वसम्बन्धावच्छिन्न-स्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदवत्त्वस्वविशिष्टक्रियासामानाधिक-रण्यस्ववृत्तित्वैतत्त्रितयसम्बन्धेन तिङर्थकृतौ नियमेनान्वयोभ्युपेयः। क्रियायां स्ववैशिष्ट्यञ्च स्ववृत्तिध्वंसप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियो-गित्वसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्ववाचकतिङ्प्रकृति-भूतधातूपात्तत्वाभ्याम्। सामानाधिकरण्यञ्च स्वानुकूलकृतिमद्वृत्तित्वरूपं बोध्यम्। तथा च क्रियारम्भपूर्वदिनमासवर्षादीनां पाकानुकूलकृतौ प्रथम-सम्बन्धस्य क्रियासमाप्त्युत्तरेषां तेषां द्वितीयसम्बन्धस्य विरहेण लड्वाच्यत्वा-नापत्तेः। प्रात्यहिकपाकस्थले च तद्दिनवृत्तितादृशकृत्युत्पत्तिपूर्वक्षणावच्छेदेन तादृशकृतेः प्रागभावस्य सत्त्वेपि प्रागभावे प्रतियोगिवैयधिकरण्यस्य विशेषणीय-त्वात्तादृशस्य तस्य तद्दिनेभावात्प्रथमसम्बन्धस्य पूर्वदिनोत्पन्नपाकक्रियाध्वंसस्य परदिने सत्त्वेपि श्वःकालीनपाकक्रियाया एव तादृशध्वंसाप्रतियोगित्वात्तत्सामा-नाधिकरण्यमादाय द्वितीयसम्बन्धस्यापि तादृशकृतौ सत्त्वादुक्तप्रयोगस्य प्रामाण्यं व्यवस्थापनीयम्। शक्तेरनुगमश्च तदादिपदशक्तिविचारदर्शितरीत्यैव करणीय इति दिक्। **लवत्वं** कालत्वम्।

**अतएव** निरुक्तोपलक्षितधर्म्मेण तदादिपदानां शक्तेरुपगमादेव । **न पटस्ये**ति। **वाचक** इति विभक्तिविपरिणामेणाग्रिमेणान्वयः। **तत्कालीनत्व-बोध** इति। तल्लट्प्रयोगाधिकरणकालभिन्नकालवृत्तित्वस्य कृतौ बोध इत्यर्थः।

---

१ तत्कालीनो बोधः इति मु० पु० पा० ।

शक्तिभ्रमाजन्यः ।

शक्तिग्रहस्तु सामान्योपलक्षितविशेषावगाही सर्वोपसंहारेण ।

तथाहि—तत्पदत्वलट्त्वाद्यवान्तरत्वोपलक्षितास्तत्तत्पदत्वव्यक्ती-र्द्धर्मितावच्छेदकीकृत्य तत्पदप्रयोगोपधायकबुद्धिविषयलडधिकरणलव-

**शक्तिभ्रमाजन्य** इति । **नवे**ति पूर्वेणान्वयः । तथा चोदासीनकालस्य तत्तल्लड्वाच्यत्वविरहेण तस्य ततो बोधः शक्तिभ्रमादेव नान्यथेति भावः ।

पदानां प्रत्युच्चारणभिन्नत्वेन स्वप्रयोजकत्वस्य बुद्धौ स्वप्रयोगाधिकरणतावच्छेदकत्वस्य च तत्तत्क्षणत्वेवश्यं निवेशनीयतया स्वत्वाननुगमात्पदव्यक्तिभेदेन शक्तिभेदस्तदादिपदवाच्यत्वेनागृहीताना चैत्रत्वक्षणत्वादीनां तदादिपदाद्बोधानुपपत्तिश्चेत्यतश्शक्तिग्रहप्रकारं दर्शयितुमाह--**शक्तिग्रहस्त्वि**ति । **सामान्योपलक्षिते**ति । तत्पदत्वबुद्धिप्रकारत्वलट्पदत्वप्रयोगाधिकरणतावच्छेदकत्वविशिष्टकालत्वव्याप्यत्वरूपसामान्यधर्म्मेणोपलक्षिता ये विशेषास्तत्तत्पदव्यक्तित्वघटत्वचैत्रत्वतत्तत्क्षणत्वादयस्तदखिलावगाहीत्यर्थः ।

शक्तिग्रहस्य तथात्वमुपपादयति--**तथाहीत्या**दिना । **तत्पदत्वं** तकाराव्यवहितोत्तराकाराऽव्यवहितोत्तरतकारत्वरूपानुपूर्वीमत्त्वम् । **लट्त्वञ्चा**नुबन्धीभूतटकाराव्यवहितपूर्ववृत्तिताद्दशाकाराव्यवहितपूर्ववृत्तिलकारत्वम् । अनुबन्धानां वाचकतावच्छेदककुक्षावप्रवेशेऽप्युपलक्षणविधयैव तदनुगमकत्वस्यावश्यकत्वात् , अन्यथा लिङादीनामपि लटा सहैकशक्तिकत्वापातात् । **तत्तत्पदत्वव्यक्तीरि**ति । तत्कालीनतत्पुरुषीयोच्चारणकर्म्मीभूततत्पदतल्लड्वृत्त्यानुपूर्व्यवच्छिन्नव्यक्तीरित्यर्थः । तेन सामान्यानुपूर्व्या सह विशेषानुपूर्व्या अभेदेपि नासङ्गतिः, ताद्दशोच्चारणकर्म्मत्वस्यैवेतरव्यावर्त्तकत्वात् । घटादिपदानामुच्चारणभेदेन भिन्नत्वेपि घटत्वादिविशिष्टवाचकतायास्सर्वास्वेव पदव्यक्तिषु सत्त्वाच्छक्तिज्ञाने घट इत्याद्याकारकसामान्यानुपूर्व्यवच्छिन्नस्यैव प्रवेशो न तु तत्तद्घटादिपदव्यक्तीनां तत्तद्व्यक्तित्वेन शक्तिज्ञानीयविषयत्वम् ।

१ तत्तत्त्व० इत्यधिकः पा० मु० पु० ।

**त्वावान्तरत्वोपलक्षितधर्म्मविशिष्टबोधकत्वावगाही वृत्तिग्रहः फलतस्तत्पदत्वावच्छेदेन तत्तद्धर्म्मवाचकतामेवावगाहते । सङ्केतशक्तिपक्षेप्ययमेव प्रकारः शरणीकरणीयः ।**

**एवमवगते सामान्योपलक्षितविशेषेषु वाचकभावे [3]प्रत्यक्षादिना**

तदादिपदव्यक्तीनाञ्चैकस्याश्चैत्रत्वाद्यवच्छिन्नस्यापरस्याश्च मैत्रत्वाद्यवच्छिन्नस्य वाचकतया शक्तिज्ञाने व्यक्तीनां प्रवेशस्यावश्यकतयोच्चारणभेदप्रयुक्तभेदवतीनां व्यक्तीनामानुपूर्व्या एकत्वेपि तदधिकरणकालवृत्तितत्प्रत्यक्षविषयत्वादिकमेव तत्तत्पदत्वव्यक्तिरूपं विशेष्यतावच्छेदकतया शक्तिज्ञानघटकमिति भावः । **वृत्तिग्रह** इति । तत्पदत्वव्याप्यवत्पदं लट्त्वव्याप्यवत्पदं वा बुद्धिप्रकारवतः शब्दप्रयोगाधिकरणतावच्छेदकत्वकालत्वव्याप्यत्वोभयवद्धर्म्मवतश्च बोधकमित्याकारकं तादृशव्याप्यत्वनिष्ठावच्छेदकतानिरूपिततत्कालीनतत्पदत्वादिनिष्ठावच्छेदकतानिरूपिता या विशेष्यता तन्निरूपिता या बुद्धिप्रकारत्वनिष्ठावच्छेदकतानिरूपितघटत्वादिनिष्ठावच्छेदकता शब्दप्रयोगाधिकरणतावच्छेदकत्वकालत्वव्याप्यत्वोभयनिष्ठावच्छेदकतानिरूपिततत्तत्क्षणत्वनिष्ठावच्छेदकता च तन्निरूपितावच्छेदकतानिरूपितबोधकत्वनिष्ठा या प्रकारता तच्छालिशक्तिज्ञानमित्यर्थः । **फलत** इति । बोधकतायाः शक्तित्वमते तत्पदादिजन्यबोधीयविषयताया उपलक्षणीभूततत्पदत्वव्याप्यत्वादावभावेन घटत्वादिविशिष्टे एव सत्त्वादित्यर्थः । **अयमेवे**ति । निरुक्तप्रकार एवेत्यर्थः । **शरणीकरणीय** इति । अन्यथा तदादिपदाद् घटत्वादिमात्रप्रकारकबोधस्यापूर्वचैत्रत्वादिप्रकारकबोधस्य तेषान्नानार्थत्वस्य चानुपपत्त्यापत्त्योः प्रसङ्ग एव स्यादिति भावः ।

उक्तरीत्या शक्तिग्रहे जाते प्रत्यक्षगृहीततदादिपदेषु मानसिकमेव चैत्रत्वादिविशिष्टबोधकत्वरूपं शक्तिज्ञानं सुलभमित्याह—**एवमवगत** इति । **वाच्ये**

---

१ ० तत्तत्त्वोपलक्षित इत्यधिकः पु० पा० ।

२ तत्तत् इत्यधिकः पा० मु० पु० ।

३ प्रत्यक्षादिना वोपस्थिते तत्पदस्य इति मु० पु० पा० ।

चोपस्थिते तदादिपदे तद्व्यक्तित्वादिना वाच्ये वाचके चोपलक्षण-धर्म्मापहारेण तत्पदव्यक्तौ मनसा तत्पदार्थबोधकत्वं प्रतिसन्धीयते, वाचकत्वोपनायिकायाः स्मृतेस्सत्त्वात्। सामान्यसङ्केतग्रहस्य वाचक-भावसन्देहापनायकतयैवोपयोगः। [1]बुद्धिविषयतावच्छेदकत्वावच्छेदेन तत्पदप्रवृत्तिनिमित्तत्वे [2]घटत्वावच्छेदेन बुद्धिविषयत्वे च गृहीते घटत्वं तत्पदप्रवृत्तिनिमित्तं न वेत्यादिशङ्कापनयात्।

यदि च तत्पदव्यक्तिर्घटत्वविशिष्टबुद्धिजनिकेति शक्तिग्रहोभिमतः। तत्र च विरोधिनी तद्व्यक्तिर्घटत्वविशिष्टबोधिका न वा घटत्वं तद्व्यक्तिजन्यप्रतिपत्तिप्रकारो न वेत्यादिशङ्का न सामान्यसङ्केतग्रहा-पनेया, सामान्यधर्म्मानवगाहिनि विशेषविषयके सन्देहे तथाविधनिर्णय-

**वाचके च** घटत्वादिविशिष्टे तत्पदे च। **उपलक्षणधर्म्मापहारेण** बुद्धिविषयता-वच्छेदकत्वतत्पदत्वव्याप्यत्वयोर्म्मोषेण। **प्रतिसन्धीयते** स्मर्य्यते। तत्र हेतु-**र्वाचकत्वोपनायिकाया** इति। **स्मृतेस्सत्त्वादि**ति। दर्शितसामान्यशक्तिज्ञान-जन्यस्मृतेस्सत्त्वादित्यर्थः। ननु तर्हि सामान्योपलक्षितविशेषशक्तिग्रहस्य शाब्दबोधे कथमुपयोग इत्यत आह—**सामान्यसङ्केतग्रहस्ये**ति। सामान्य-निश्चयस्य विशेषसंशयापनायकत्वमुपपादयति—**बुद्धिविषयते**ति। **शङ्कापन-यादि**ति। तथा चावच्छेदकधर्म्मदर्शनविधयैव निरुक्तसामान्यशक्तिज्ञानस्य विशेषसंशयप्रतिबन्धकत्वमिति भावः।

अवच्छेदकधर्म्मदर्शनविधया प्रतिबन्धकत्वं तत्रैव यत्र सामान्यधर्म्मस्यापि धर्म्मिणि निश्चयः, यथा—जलावच्छेदेन वह्न्यभावप्रकारकनिश्चयविशिष्टस्य ह्रदे जलप्रकारकनिश्चयस्य तत्र वह्निबुद्धिप्रतिबन्धकत्वम्। प्रकृते च सामान्यधर्म्मा-नवगाहिन एव शक्तिग्रहस्याभिमतशाब्दबोधोपयोगित्वेन सम्पादनीयतया तत्र संशयत्वमेव निवर्त्तनीयम्। तच्च सामान्यधर्म्मानवगाहिन एव निश्चयात्सम्भवति, न चोक्तशक्तिग्रहस्य तथात्वमिति कुतस्तेन तादृशसंशयापनय इत्याशङ्क्ते—**यदि चे**त्यादिना। **तथाविधनिर्णयस्यैवे**ति। सामान्यधर्म्मानवगाहिनो

१ बुद्धिविषयत्वावच्छेदेन तत्तत्पदप्रवृत्तिनिमित्तत्वे इति मु० पु० पा०।

२ घटत्वत्वावच्छेदेन इति मु० पु० पा०।

स्यैव विरोधित्वादित्युच्यते; तदा भवतु बुद्धिविषयत्वाद्युपलक्षण-धर्म्ममोपेण तत्पदव्यक्तित्वघटत्वाद्यवगाहिनी सामान्यशक्तिग्रहप्रभवा शक्तिस्मृतिरेवान्वयबोधाङ्गम्। [1]तच्छब्दत्वावान्तरत्वस्य तच्छब्दप्रयोग-जनकबुद्धिविषयत्वस्य वाचकतावाच्यतावच्छेदकयोरुद्बोधकाभावादस्मरणे-नानवच्छिन्नतत्पदव्यक्तित्वघटत्वयोरवगाहनेन मनसा पदव्यक्तिर्घट-बोधिकेति स्मरणसम्भवादिति चेत्?

हन्तैवम्। घटेनेत्यानुपूर्वीविशेषावच्छेदेन घटकरणताबोधकत्वमपि मनसा सुग्रहमित्यानुभाविकी शक्तिः स्मारकसमुदायवृत्तिरन्वयबोधाङ्गम्। स्मारकशक्तिरानुभावकशक्त्युपक्षीणेति पक्ष एव ज्यायानिति चेत्?

विशेषनिर्णयस्येत्यर्थः। **स्मरणसम्भवादि**ति। एतत्तत्त्वं प्रागेव तत्पदशक्ति-विचारे दर्शितं तत्रैवानुसन्धेयम्।

सम्प्रति स्फोटवादी निरुक्तरीत्यैव घटेनेत्यादिवाक्यादीनां पूर्वमज्ञानेपि विशिष्टशक्तिग्रह उपपादनीय इति स्वमतमुपसंहरति—**हन्तैव**मित्यादिना। **हन्ते**ति खेदे हर्षे वा। "यत्रोभयोस्समो दोषः परिहारोपि वा समः। नैकः पर्य्यनुयोक्तव्यस्तादृश्यर्थविचारणे॥" इति न्यायस्य जागरूकत्वेपि स्फोटवादे परैर्दोषदर्शनात्खेदः परोक्तसमाधानमेव च तद्दोषनिराकरणाय ममाप्यलमिति स्वस्यानायासेन हर्षो वा। **मनसा सुग्रहमि**ति। निरुक्तरीत्या सामान्यधर्म्मेण ज्ञानानन्तरं विशेषधर्म्मावच्छिन्ने मानसग्रहस्य सुकरत्वादित्यर्थः। **आनुभाविकी** घटान्वितकरणताबोधजनकत्वरूपा। **स्मारकसमुदायः** तादृशविशिष्टार्थस्मरण-जनकघटेनेत्याद्यानुपूर्व्यवच्छिन्नः। **अन्वयबोधाङ्गं** घटीया करणतेत्यादिविशिष्ट-वाक्यार्थविषयकान्वयबोधजनकम्। **स्मारकशक्तिः** प्रत्येकपदार्थमात्रस्मरण-जनिका घटादिप्रत्येकपदशक्तिः। **आनुभावकशक्त्युपक्षीणे**ति। निरुक्त-विशिष्टार्थबोधजनकत्वरूपया समुदायशक्त्यैव विशिष्टार्थान्वयबोधनिर्वाहे प्रत्येकपदशक्तेर्न्न शाब्दबोधप्रयोजकत्वमिति भावः।

---

१ तच्छब्दत्वावान्तरतत्वस्य इति मु० पु० पा०।

**अत्राहुः—अनुभवस्मरणयोस्तुल्यप्रकारताकत्वेन कार्य्यकारणभावाद-वच्छिन्नप्रकारताकानुभवादनवच्छिन्नप्रकारताकस्मरणमनुपपन्नम् ।**

**न चानुपूर्व्वीप्रभृतिविशिष्टं वस्तु सामान्येन प्रतीयते, प्रतीतं वा विशिष्टत्वेन स्मर्य्यते । मनस्त्वसति विशेषदर्शने प्रायेण बाह्यार्थ-**

अत्र बुद्धिप्रकारत्वाद्युपलक्षणीभूतसामान्यधर्म्मावच्छिन्नप्रकारताकानुभवस्य स्वसमानप्रकारताकस्मरणं प्रत्येव कारणत्वात्तादृशानुभवेन घटनेत्यानुपूर्वी-विशेषावच्छेदेन घटान्वितकरणताबोधजनकत्वरूपविशेषधर्म्मनिष्ठनिरवच्छिन्न-प्रकारताकस्य स्मरणस्यासम्भवादुक्तरीतिर्न्न साधीयसी । तदादिपदस्थले च पूर्वदर्शितदिशानुमित्यैव विशेषशक्तिज्ञानम् । तथा च प्रकृते घटनेत्यत्राव्युत्पन्नस्य पटनेत्यत्र च व्युत्पन्नस्य पुंसो वक्ष्यमाणरीत्योपमित्यादिनैव घटीया करणतेत्या-कारकशाब्दबोधजनकाकाङ्क्षाग्रहात्तादृशबोधस्योपपत्तेः । तदर्थं **यादृशानुपूर्व्वीकादन्तप्रातिपदिके**त्यादिग्रन्थोक्तसामान्यधर्म्मज्ञानादिकल्पनमपि नावश्यकम् । एवं सति घटान्वितकरणतायास्तज्ज्ञानस्य वा विशेषरूपेण पूर्वमज्ञाने विशिष्टनिरू-पितशक्तिज्ञानस्यासम्भवान्न विशिष्टबोधजनकत्वस्य शक्तित्वसम्भव इति कुतः स्फोटसिद्धिरित्युत्तरयति—**अत्राहु**रित्यादिना । **कार्य्यकारणभावा**दिति । पूर्वोपदर्शितयुक्त्येत्यादिः ।

सामान्यलक्षणाया अनङ्गीकारेदन्तप्रातिपदिकत्वादिना सामान्यधर्म्मेण पूर्वागृहीतानुपूर्वीविशेषस्य प्रतीतिरनुपपन्नैव । तदङ्गीकारे तस्या उपपत्तावपि स्मरणमपि तेनैव सामान्यधर्म्मेण, न तु तं परित्यज्य विशेषधर्म्मेणेत्याशय-वानाह—**न चानुपूर्व्वी**ति । मनसोपि व्याप्यव्यापकभावादिरूपविशेषाणा निश्चयस्याभावे बाह्यार्थविषयकनिश्चयजनकत्वमुपनयसन्निकर्षस्वीकारेप्यसिद्ध-मेव, संशयस्यैव तत्र प्रायेण दर्शनात्तेनापि नोक्तरीत्या शक्तिनिश्चयसम्भव इत्याह—**मनस्त्वसती**ति । उभयकोट्योरनुपस्थितौ संशयस्यासम्भवात्**प्रायेणे**-त्युक्तम् । तर्हि घटनेत्यत्राव्युत्पन्नस्य घटीया करणतेति बोधः कथमित्यत

**संशायकमेवेति सामान्येनादन्तप्रातिपदिकार्थान्वितटापदार्थबोधकत्व-मेवाकाङ्क्षा । सा च प्रथमतोनुशासनेनादन्तप्रातिपदिकप्रकृतिकेनत्वावच्छेदेन प्रतिपद्यते । यदा तु घटेनेत्यत्रा[1]श्रुतचरमिनसमभिव्याहारं शृणोति, तदा तत्रादन्तप्रातिपदिकसमभिव्याहृतेनपदत्वं प्रतीत्यानुशासनातिदेशवाक्यार्थं [2]स्मृत्वा घटेनेत्यादिपदत्वावच्छेदेन निरुक्तामाकाङ्क्षामुपमिमीते मनसा वा निश्चिनुते, विशेषदर्शनसत्त्वात् ।**

आह—**सामान्येने**ति । घटेन पटेनेत्याद्यखिलतादृशानुपूर्वीसाधारण्येनेत्यर्थः । **सा च** निरुक्ताकाङ्क्षा च । **प्रथमतः** पटेनेत्यादितः शाब्दबोधात्पूर्वम् । **अनुशासनेन** "टाङसि..." इत्यादिना । तथा सति पूर्वाननुभूतेनापि घटेनेत्याद्यानुपूर्वीविशेषावच्छिन्नेन शाब्दबोध उपपन्न एवेत्याह—**यदा त्वि**ति । **अश्रुतचर-मि**ति । पूर्वकालीनश्रावणप्रत्यक्षविषयत्वाभाववदित्यर्थः । **शृणोती**त्यस्य **घटेने**त्यन्वयाद् घटपदोत्तरत्वप्रकारकेनपदविशेष्यकश्रावणप्रत्यक्षवान् भवतीत्यर्थः । **तत्र** घटेनेत्यत्र । **अनुशासनातिदेशवाक्यार्थम्** अदन्तप्रातिपदिकोत्तरमिनपदं तादृशप्रातिपदिकार्थान्वितटापदार्थबोधकमिति तदनुशासनवाक्यार्थम् । **स्मृत्वे**ति । तादृशानुभवजन्यसंस्कारस्य तादृशस्मरणकारणसत्त्वादिति भावः । **उपमिमीत** इति । श्रावणप्रत्यक्षविषयीभूते घटेनेत्यानुपूर्व्यवच्छिन्नेदन्तप्रातिपदिकप्रकृतिकत्वविशिष्टेनपदत्वस्य ज्ञाने सति गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणे गवयात्मकपिण्डप्रत्यक्षादिना गोसादृश्यज्ञाने गवयपदवाच्यत्वस्येवादन्तप्रातिपदिकार्थान्विनटापदार्थबोधजनकत्वरूपाकाङ्क्षाया उपमितेस्सामग्रीसत्त्वादिति भावः । उपमानस्य सादृश्यवैसादृश्यप्रकारकत्वमात्रघटितत्वे त्वाह—**मनसा वे**ति । **निश्चिनुते** अनुमिनोति अवच्छेदकधर्म्मदर्शनविधया मानसप्रत्यक्षं वा करोतीत्यर्थः । पूर्वं विशेषदर्शनाभावे मनसो बाह्यार्थविषयकसंशयजनकत्वस्योक्तत्वाद्विशेषदर्शनसहकृतेनैव मनसा तादृशनिश्चय इत्याह—**विशेषदर्शने**ति । अदन्तप्रातिपदिकोत्तरं यद्यदिनपदं तत्तादृशप्रातिपदि-

---

१ अश्रुतञ्च इति मु० पु० पा० ।

२ स्मरति इति मु० पु० पा० ।

नन्वेवं घटेनेति पदमदन्तप्रातिपदिकार्थान्वितटापदार्थबोधकमिति बुद्धावपि घटपदत्वादन्तप्रातिपदिकमिति निर्णये घटेनेति पदत्र घट-पदार्थान्वितटापदार्थबोधकमित्यवधारणे वा, सत्यां घटटापदजनितायां घटकरणत्वयोरुपस्थितौ घटीया करणतेत्यन्वयबुद्धिप्रसङ्ग इति चेन्न. घटपदमदन्तप्रातिपदिकमिति बुद्धेरपि तत्र सहकारित्वोपगमात्; अन्यथा घटपदोत्तरेनत्वावच्छेदेनादन्तप्रातिपदिकानन्तरितेनत्वादिस्व-रूपावच्छेदकधर्म्मदर्शनाभावादाकाङ्क्षाया एव दुरवधारणत्वापत्तेः ।

एतादृशाकाङ्क्षया प्रातिपदिकत्वेनोपस्थितेन घटपदेन जनितां घटपदा-र्थोपस्थितिं टापदजनितां करणतोपस्थितिञ्चासाद्य जननीयं शाब्दबोधं घटे-नेति पदस्य घटपदार्थान्वितटापदार्थबोधकत्वादिबाधबुद्धिर्न्न विरुणद्धि,

उक्तरीत्याकाङ्क्षानिश्चयस्य सम्भवेपि वक्ष्यमाणबाधनिश्चयकाले तादृ-शान्वयबोधवारणाय घटेनेत्यानुपूर्व्यवच्छिन्नविशेष्यकतादृशान्वयबोधजनकत्व-निश्चयस्य कारणताया आवश्यकत्वादेव विशिष्टशक्तिसिद्धिः स्यादित्याशङ्कते— **नन्वेवमि**ति । **एवं** उक्तप्रकारेणोपमित्यानुमित्या मानसज्ञानेन वा । **अन्वय-बुद्धिप्रसङ्ग** इति । सामान्यधर्म्मानवगाहिविशेषज्ञाने तदवगाहिनिश्चयस्या-विरोधिताया उक्तत्वादिति भावः । **तत्र** घटीया करणतेत्यन्वयबोधे । **सहकारि-त्वोपगमादि**ति । तथा चोक्तबाधनिश्चयसत्त्वे सहकारिविरहान्नोक्तशाब्दबोधा-पत्तिरिति भावः । **अन्यथा** तादृशशाब्दबोधे घटपदमदन्तप्रातिपदिकमिति बुद्धेः सहकारिकारणत्वानुपगमे । **दुरवधारणत्वापत्तेरि**ति । घटपदेदन्तप्रातिपदिकत्व-स्याज्ञाने तदुत्तरमिनपदमदन्तप्रातिपदिकाव्यवहितोत्तरमिति निश्चयस्य विशेष-णतावच्छेदकनिश्चयविरहादसम्भवादिति भावः ।

द्वितीयबाधनिश्चयस्योक्तज्ञानाविरोधित्वात्तयोरेककालीनत्वे बाधविरहेपि निरुक्ताकाङ्क्षाज्ञानजन्यशाब्दबोधे तादृशबाधनिश्चयस्याप्रतिबन्धकत्वात्तत्सत्त्वे तादृशशाब्दबोध इष्ट एवेत्याह—**एतादृशे**ति । **न विरुणद्धी**त्यत्र बाधनिश्च-

इदम्पदमिदानीम्मदीयशाब्दबुद्धेरजनकमिति प्रतीतिवत्फलकरणयोरेकतरस्याविघटनात्।

परन्तु प्रातिपदिकत्वाद्यनुपस्थितिदशायामपि घटेनेत्यानुपूर्वीविशिष्टज्ञानाच्छाब्दबोधदर्शनादपरमस्ति सामग्रीद्वयम्। [1]यद् घटपदार्थान्वितटापदार्थबोधकत्वस्वरूपां घटान्वितकरणताबोधकत्वादिरूपाश्चाकाङ्क्षां यथायथमवगाहमानाभ्यां ज्ञानाभ्यां घटितम्। तयोरेव

यस्य प्रतिबन्धकताप्रयोजकीभूतकारणविघटनादिविरहं प्रयोजकमाह—**इदम्पदमि**त्यादिना। **एकतरस्याविघटनादि**ति। यथेदम्पदमित्यादिज्ञानं न तादृशशाब्दबोधप्रतिबन्धकम्, तत्कारणीभूताकाङ्क्षाज्ञानस्यैतत्कालीनत्वमदीयत्वाद्यविषयकत्वेन तद्विघटकत्वविरहात्, फलीभूततादृशान्वयबोधस्य तु सुतरामविघटकत्वात्, तथा निरुक्तनिश्चयस्यापीति भावः।

नन्वेवमुक्तरीत्या प्रातिपदिकत्वेन घटपदविषयकज्ञानजन्योपस्थितितादृशसामान्याकाङ्क्षाज्ञानघटिताया एव सामग्र्या घटीया करणतेत्यन्वयबोधजनकत्वे घटपदे प्रातिपदिकत्वस्याज्ञानेपि घटपदत्वेन टापदत्वेन च घटेनेत्यानुपूर्वीविशिष्टज्ञानजन्योपस्थित्या तादृशानुपूर्व्यवच्छिन्ने घटपदार्थान्वितटापदार्थबोधजनकत्वस्वरूपाकाङ्क्षाज्ञानघटान्वितकरणताबोधजनकत्वरूपाकाङ्क्षाज्ञानान्यतरेण घटितया सामग्र्या सर्वानुभवसाक्षिकस्तादृशबोधो न स्यादित्यतस्तादृशोभयसामग्र्योरपि तादृशशाब्दबोधप्रयोजकत्वम्। तद्घटकाकाङ्क्षाज्ञानयोरेव घटपदार्थत्वेन घटत्वेन च घटस्यावगाहनान्निरुक्तबाधनिश्चयप्रतिबध्यत्वमित्याह—**परन्त्वि**त्यादिना। समानानुपूर्वीकेनेकविधाकाङ्क्षायाः शाब्दबोधप्रयोजकत्वकल्पनं धूमत्वाद्येकधर्म्मावच्छिन्नविशेष्यताकस्य साध्याभाववदवृत्तित्वसाध्यवदन्यावृत्तित्वस्वव्यापकसाध्यसामानाधिकरण्याद्यनेकविधान्वयव्याप्तीनां व्यतिरेकव्याप्तेश्चावगाहिनोनेकविधनिश्चयस्य वह्न्याद्यनुमितिप्रयोजकत्वं फलबलेन यथा कल्प्यते तथैवेत्याह—

---

१ यत्र इति मु० पु० पा०।

क्रमान्निरुक्तबाधद्वयं परिपन्थि । एकविध एव लिङ्गेऽन्वयव्यतिरेकिणि नानाविधव्याप्तीनामिव तुल्यानुपूर्विकेऽपि पदेऽनेकविधाकाङ्क्षाणामपि ज्ञानं हेतुः । व्यतिरेकव्याप्तिग्रहविरोधित्वेनानुपसंहार्य्य इवाकाङ्क्षा-विशेषपरिपन्थितया विशेषबोधकतावाधोप्याभासतया व्यवह्रियते ।

स्यादेतत्, भवतु सामग्रीद्वयं प्रयोजकम्, तथापि पदजनित-पदार्थोपस्थितीनां घटकरणताबोधकत्वस्वरूपाकाङ्क्षाज्ञानघटितायां सामग्र्यान्नानुप्रवेशः । नहि विशिष्टबोधकत्वज्ञाने पदार्थस्मरणविलम्बेन शाब्दविलम्बः, मानाभावात् । अतएव वसूनसादावविदितप्रकृति-

**एकविध एवे**ति । निरुक्तबाधनिश्चयस्योक्तान्यतराकाङ्क्षाज्ञानप्रतिबन्धकत्वात्तद्विषयस्य शब्ददोषत्वव्यवहारोपि व्यतिरेकव्याप्तिज्ञानप्रतिबन्धकीभूत-ज्ञानविषयस्यानुपसंहारित्वस्य फलीभूतानुमित्यप्रतिबन्धकस्यापि यथा हेत्वा-भासत्वमनुमितितत्कारणज्ञानान्यतरप्रतिबन्धकज्ञानविषयस्यैव हेत्वाभासताया अनुमानचिन्तामणौ व्यवस्थापितत्वात्, तथेहापि फलीभूतशाब्दबोधाप्रतिबन्ध-कस्यापि तस्य कारणप्रतिबन्धकनिश्चयविषयत्वादेवेत्याह—**व्यतिरेकव्याप्ती**ति ।

निरुक्तसामग्रीद्वयस्योक्तशाब्दबोधस्य प्रयोजकत्वेपि प्रत्येकपदवृत्तिज्ञान-जनितप्रत्येकपदार्थोपस्थितीना तत्सामग्र्यां प्रवेशे मानाभावेन विशिष्टशक्ति-ज्ञानजन्यविशिष्टार्थोपस्थितीनामावश्यकतयैव स्फोटसिद्धिः स्यादित्यपि न साधीय इत्याशयेनाह—**स्यादेतदि**ति । प्रत्येकपदवृत्तिज्ञानजन्यप्रत्येकपदार्थो-पस्थितिव्यक्तीनां तदैव विशिष्टार्थान्वयबोधजनकत्वं स्यात्, यदि विशिष्टपदार्थ-बोधजनकत्वज्ञाने तद्विलम्बेन शाब्दविलम्बोनुभवसिद्धः स्यात्, स एव त्वसिद्ध इत्याह—**न हि विशिष्टे**ति । **अतएव** विशिष्टबोधकत्वज्ञानकाले प्रत्येक-पदार्थोपस्थितिविलम्बेन शाब्दविलम्बे मानाभावादेव । **वसूनसादौ** । द्वितीया-द्यन्तयुष्मदस्मत्पदादेशभूते । आदिपदेन त्वा मा ते मे इत्येतेषां परिग्रहः । **अविदितप्रकृतिप्रत्ययविभागोपि** इति । यस्य पुंसः "**श्रीशस्त्वावतु...**"

**प्रत्ययविभागोपि युष्मत्सम्बन्धबोधकत्वमनुसन्धाय तथा प्रमिमीते, इति चेत् ?**

**अभिनवोयमांशिकस्फोटवादः । घटेनेत्यानुपूर्वीविशेषावच्छेदेन**

इत्यादौ त्वापदादिषु द्वितीयान्तयुष्मदाद्यादेशत्वज्ञानं नास्ति स इत्यर्थः । **अपिना** तत्र प्रकृतिप्रत्ययविभागं जानतः पुंसो युष्मदादिसम्बन्धबोधस्य स्फोटानङ्गीकारेपि सम्भवः सूचितः । **युष्मत्सम्बन्धबोधकत्वमि**ति । **सम्बन्धपदं** सम्बन्धत्वेनैव कर्म्मत्वादीनां बोधकम्, न तु कर्म्मतात्वादिना, विशेषरूपेण तादृशबोधे प्रकृतिप्रत्ययविभागज्ञानस्यावश्यापेक्षणीयत्वात् ; अन्यथा "श्रीशस्त्वावतु.." इत्यादौ सर्वैरेव वसादिपदैरेकाकारकबोधस्यैव प्रसङ्गात् । **तथा प्रमिमीत** इति । युष्मदादिसम्बन्धविषयकं प्रमात्मकं शाब्दबोधं करोतीत्यर्थः। विशिष्टस्यैव वस्नसादेर्युष्मदादिसम्बन्धबोधकत्वात्तज्ज्ञानदशायां प्रकृतिप्रत्ययविभागज्ञानस्याभावेपि शाब्दबोधस्योत्पत्तौ कारणविरहाभावादिति भावः ।

अत्र सर्वत्र शाब्दबोधे प्रत्येकपदवृत्तिज्ञानजन्योपस्थितीनां कारणत्वानुपगमेपि यत्र न विशिष्टवृत्तिज्ञानम्, किन्तु दर्शितरीत्या प्रत्येकपदज्ञानजन्यप्रत्येकपदार्थोपस्थितिभ्य एव विशिष्टवाक्यार्थान्वयबोधः, तत्र विशिष्टशक्तेरनावश्यकतया न स्फोटस्य सम्भवः । किन्तु यत्र विशिष्टशक्तिज्ञानजन्या विशिष्टार्थोपस्थितिस्तत्रैव तस्य सम्भव इत्यतस्सर्वत्रैव प्रत्येकपदज्ञानजन्यप्रत्येकोपस्थितीनामेव कारणत्वमुचितम् । वस्नसादिभ्यस्तु सम्बन्धत्वेन सम्बन्धसामान्ये युष्मदादिनिरूपितत्वावगाही शाब्दबोधोसिद्ध एव, द्वितीयादीनां सम्बन्धत्वेन बोधकतायाः कैरप्यनभ्युपगमात् । प्रकृतिप्रत्ययविभागं जानतः पुंसस्तादृशबोधस्यासम्भवादर्द्धजरतीन्यायापातभिया तादृशज्ञानाभाववतस्तत्र शाब्दबोधाभावस्यैवेष्टत्वात् । तथा च केषुचित्पदेषु स्फोटः केषुचिन्नेत्यांशिकत्वमेव स्फोटस्यापतितम् । तच्च तदङ्गीकर्त्तॄणामप्यसम्मतमेवेत्युत्तरयति—**अभिनवोयमि**ति । तथा चाभिनवत्वादुपक्षेणीय एवेति भावः । नन्‍तु तर्हि घटेनेत्यानुपूर्व्यवच्छिन्ने प्रत्येकपदवृत्तिज्ञानस्यासत्त्वे विशिष्टशक्तिज्ञाने च कथं शाब्दबोध इत्यत आह—**घटेनेत्यानुपूर्वी**ति । **स्मरणमेवे**ति ।

**घटत्वावच्छिन्नप्रकारतानिरूपितकरणतात्वावच्छिन्नविशेष्यताकबुद्धिजनकत्वग्रहे पदजन्यपदार्थोपस्थितेरभावे घटकरणतायाः पूर्वानुभूतत्वे स्मरणमेव, नानुभवः; पूर्वमननुभवे तु पदस्य मूकीभाव एव, न तु तादृशसामर्थ्यज्ञानघटिता भिन्ना सामग्री, तत्कल्पने गौरवादिति वस्तुगतिः ।**

**अखण्डस्फोटवादिनस्तु कत्वगत्वादिनोपलभ्यमानावयवा ध्वनयोवाचकाः, तदभिव्यक्तस्फोटस्तु वाचकः । स चावयवशब्दैरारब्धो**

तादृशस्मरणकारणस्यानुभवस्य सत्त्वात् । एवकारव्यवच्छेद्यमाह—**नानुभव** इति । प्रत्येकपदार्थोपस्थित्योस्तादृशान्वयबोधकारणत्वेन तदभावे तस्यासम्भवात् । **पूर्वमननुभवे त्वि**ति । **घटकरणताया** इति पूर्वेणान्वितम् । **मूकीभाव एवे**ति । तत्र स्वकारणानुभवस्य विरहेण स्मरणस्याप्यसम्भवात्पदाना मूकत्वमेवेत्यर्थः । अत्राप्येवकारव्यवच्छेद्यमाह—**न त्वि**ति । **तादृशसामर्थ्ये**ति । घटेनेत्यानुपूर्व्यवच्छिन्ने विशिष्टार्थविषयकबोधजनकत्वज्ञानघटितेत्यर्थः । **भिन्ना सामग्री**ति । प्रत्येकपदार्थोपस्थितिघटितसामग्रीतोतिरिक्तेत्यर्थः । अत्र हेतुस्**तत्कल्पन** इति । **गौरवादि**ति । प्रत्येकपदवृत्तिज्ञानजन्यप्रत्येकपदार्थोपस्थितिघटितैकसामग्र्येव निर्वाहे सामग्रीद्वयकल्पनं गौरवग्रस्तमेवेत्याशयः ।

एतावता पदादिनिष्ठवाचकत्वादिस्वरूपं स्फोटं निराकृत्यावयवीभूतप्रत्येकवर्णजन्यावयविपदादिरूपोखण्ड एव स्फोटः । तन्निष्ठा एव पदत्ववाक्यत्वादयो धर्म्मा इत्यखण्डस्फोटं निराकर्त्तु तन्मतमुपन्यस्यति—**अखण्डस्फोटवादिनस्त्वि**ति । कलसो गौरित्याद्याकारकश्रावणप्रत्यक्षप्रकारीभूतानां कत्वगत्वादिप्रत्येकवर्णवृत्तिधर्म्माणा न वाचकतावच्छेदकत्वम्, तदाश्रयाणां मृदङ्गादिशब्दजन्यशब्दवद्ध्वनित्वात्; किन्तु कादिवर्णैरभिव्यक्तः स्फोट एव वाचक इति तन्निष्ठपदत्वादिरेव तथेत्याशयेनाह—**कत्वगत्वे**ति । **तदभिव्यक्तः** कत्वगत्वादिप्रकारकज्ञानविषयीभूतावयवकध्वनिनाभिव्यञ्जितः । **स च** उक्तः स्फोटश्च ।

द्रव्यविशेषः शब्दस्वरूप एकमिदम्पदमेकं वाक्यमेको ग्रन्थ एको वेद इत्याद्यनुभवसाक्षिकोवश्यमभ्युपेतव्यः। तन्निष्ठा जातयः पदत्व-वाक्यत्वग्रन्थत्ववेदत्वादयः। वर्णसमुदायेनैव पदादिव्यवहारोपदर्शने तु तन्तुमालातिरिक्तस्य पटस्याप्यस्वीकारप्रसङ्गः। स च स्फोटो वर्णानां नित्यत्वादाश्रयविनाशाभावान्नित्य एव, समवेतद्रव्याणां

**द्रव्यविशेषः** कलसादिपदेषु प्रत्येकवर्णानामवयवत्वम्। तैर्जनितः समवायेन तेषु वर्त्तमानः पृथिव्यादिप्रसिद्धनवद्रव्यविजातीय इत्यर्थः। तस्य वर्णसमुदायाति-रिक्तत्वे द्रव्यस्वरूपत्वे चानुभवं प्रमाणयति—**एकं पदमित्या**दि। तथा च तस्य वर्णसमुदायरूपत्वे द्रव्यभिन्नत्वे च समुदायस्यैकत्वानाश्रयत्वात्सङ्ख्याया द्रव्यभिन्ने वृत्तित्वविरहाच्चोक्तानुभवानामप्रामाण्यापत्तेस्तस्यातिरिक्तत्वं द्रव्य-रूपत्वञ्चावश्यकमिति भावः। पदत्वादीनां वर्णसमुदायात्मकपदादिवृत्तित्वेननु-गतत्वे च स्फोटवृत्तित्वविरहादेकत्वाभावादोक्तानुभवानामप्रामाण्यं तदवस्थ-मेवेत्यत आह—**तन्निष्ठा जातय** इति। तथा च पदत्वादीनामपि न समुदाय-वृत्तित्वमननुगतत्वञ्चेति नोक्तानुभवाप्रामाण्यमिति भावः। ननु पदत्वादिकं नातिरिक्तं जातिस्वरूपं वा, किन्तु वर्णसमुदायवृत्त्येव, एकत्वं सङ्ख्यारूपं न तत्रैक-पदार्थः, किन्त्वपेक्षाबुद्धिविशेषविषयत्वस्वरूपं तस्य तत्र निराबाधतयैवोक्तानु-भवानां प्रामाण्योपपत्तौ कृतं जातिस्वरूपपदत्वाद्याश्रयातिरिक्तद्रव्यात्मकस्फोट-कल्पनेनेत्यत आह—**वर्णसमुदायेनैवे**ति। तथा च यथा तन्तुसमुदायातिरिक्त-स्तन्तुभ्यो जनितो विलक्षणद्रव्यस्वरूपः पटो नैयायिकादिभिरप्यवश्यमभ्युपेतः, तथैव स्फोटोप्यतिरिक्तद्रव्यस्वरूपः; अन्यथैकः पट इत्यादिव्यवहाराणामपि तन्तु-समूहादेवोपपत्तावतिरिक्तस्य पटस्याप्यनभ्युपगम एव ज्यायान् स्यादित्याशयः। **नित्य एवे**ति। सादित्वे सत्यविनाशित्वमेवैतन्मते नित्यत्वम्, वर्णैरारब्धत्वस्य तत्र तैरभ्युपगमात्, अनादित्वे सत्यनन्तत्वस्य तस्य तत्रासम्भवात्। तथा च पटादि-द्रव्याणामाश्रयभूततन्त्वादीनामनित्यत्वात्तेषां नाशे सति नाशस्यावश्यम्भावाद-नित्यत्वम्। स्फोटस्य तु वर्णात्मकाश्रयाणां विनाशाभावेन न तथात्वमित्याशयः। ननु यत् समवायेन वृत्तिमत्त्वे सति द्रव्यं तन्नाशप्रतियोगीति व्याप्तेः स्फोटस्यापि तादृशद्रव्यत्वादवश्यं नाशः स्यादित्यत आह—**समवेतद्रव्याणामि**ति। नन्वेवं

विनाशित्वनियमे मानाभावात्। घटादिशब्दानामभिव्यञ्जको[1] वायुविशेषः स्फोटस्य चरमवर्णप्रत्यक्षमभिव्यञ्जकमपेक्षते। पदस्फोटाभिव्यञ्जने घटादिवर्णमालायामर्थसङ्गतेर्वाक्यस्फोटाभिव्यञ्जने पदानामाकाङ्क्षाया ग्रन्थस्फोटाभिव्यञ्जनादौ वाक्यानामेकवाक्यतापन्नत्वस्य च ग्रहः।

**स्फोटस्तु[2] पर्य्यायभेदेन[3] न भिद्यते, समवायिभेदेऽपि द्रव्याभेद-**

वर्णाना तत्समवेतस्य स्फोटस्य च नित्यत्वात्सर्वदैव सर्वेषां तत्प्रत्यक्षप्रसङ्ग इत्यत आह—**घटादिशब्दानामि**ति। **अपेक्षत** इति। तथा च तदभिव्यञ्जकवायुविशेषस्याभावे प्रत्येकवर्णमात्रप्रत्यक्षे च न घटत्वादिप्रकारकशाब्दबोधजनकस्फोटस्याभिव्यक्तिः, किन्तु पूर्वपूर्ववर्णप्रत्यक्षसहकृतवायुविशेषसत्त्वे एव; वर्णानामपि प्रत्यक्षं वायुविशेषस्याभिव्यञ्जकस्य सत्त्वे एवेति नोक्तापत्तिरिति भावः। नन्वेवं पदमात्रवृत्तितादृशस्फोटेनैव सर्वत्र निर्वाहसम्भवाद्वाक्यादिस्फोटोपगमो निरर्थक इत्यत आह—**पदस्फोटाभिव्यञ्जन** इति। **अर्थसङ्गतेरिति ग्रह** इत्यग्रिमेणान्वयः। तथा च घटादिपदमात्रज्ञाने घकारादिसमुदाये घटाद्यर्थनिरूपितसङ्गतिज्ञानमात्रं जायते, न तु ततोऽर्थानुभवः, तस्याकाङ्क्षाज्ञानजन्यत्वादिति वाक्यस्फोटस्याप्यावश्यकतेति भावः। **आकाङ्क्षाया** इति **ग्रह** इत्यनेनैवान्वितम्। तथा च घटमानयेत्यादिवाक्यस्फोटाभिव्यञ्जनं तादृशाकाङ्क्षाग्राहकतयोपयुज्यत इति भावः।

निरुक्तस्फोटस्य घटकलसादिपर्य्यायशब्दभेदेन भेदेननुगम एकस्फोटस्य ग्रहेऽन्यग्रहस्याभावात्तस्य तत्र व्यभिचारश्चेत्यत आह—**स्फोटस्त्वि**ति। पर्य्यायभेदेन घटपदादिपर्य्यायाणा कलसादिपदानां तद्घटितवाक्यादीनाञ्च भेदेनेत्यर्थः। **न भिद्यत** इत्यत्र दृष्टान्तविधया हेतुः—**समवायिभेदेऽपी**ति। तथा

१ कादिशब्दाना वायु० इति मु० पु० पा०।

२ पदस्फोटस्तु इति मु० पु० पा०।

३ ० पदेन इति मु० पु० पा०।

**दर्शनात्। यथा च षड्भीरूपैरारब्धस्य चित्रस्यावयवस्य नील-पीताभ्यां रक्तश्वेताभ्यामन्यतरत्वेनाभिव्यञ्जनम्, तथैवैकस्य[1] स्फोटस्य क्वचिद् घटवर्णमालया क्वचित्कलसवर्णमालयाभिव्यञ्जनन्न विरुद्ध्यते।**

च पटसमवायिकारणानां तन्तूना भेदेऽपि यथा तत्कार्य्यस्य पटस्याभेदः, तथा घकारादिवर्णानां स्फोटकारणाना भेदेऽपि कार्य्यस्फोटस्यैकत्वमेवेति भावः। ननु स्फोटस्यैकत्वे तद्व्यञ्जकत्वं घटपदघटकवर्णानां कलसपदघटकवर्णानां वेत्यत्र विनिगमनाविरहप्रसङ्ग इत्यत आह—**यथा चे**ति। **षड्भीरूपैरि**ति। एतच्च तत्सम्भवस्थलाभिप्रायेण। तेन रूपद्वयादितोऽपि चित्ररूपोत्पत्तेर्न्न न्यूनता। **चित्रस्ये**ति **अभिव्यञ्जनमि**त्यनेनान्वितम्। **अवयवस्ये**ति। निष्ठत्वं षष्ठ्यर्थो **नीलपीताभ्यां रक्तश्वेताभ्याञ्चा**न्वितम्। **अन्यतरत्वेनाभिव्यञ्जनमि**ति। चित्ररूपोपगमे तदसमवायिकारणस्य प्रत्येकरूपस्य तदभिव्यञ्जकत्वे एकरूप-मात्रप्रत्यक्षेऽपि चित्ररूपाभिव्यक्तिप्रसङ्गस्तज्जनकाखिलरूपप्रत्यक्षस्यैव तथात्वं रूपद्वयप्रत्यक्षेऽपि तदभिव्यक्तिदर्शनादनुपपन्नमतो रूपद्वयप्रत्यक्षस्यैव तथात्व-मावश्यकम्। तत्र रूपद्वयपदेन नीलपीतयो रक्तश्वेतयोरेव वा ग्रहणमित्यत्र विनिगमकाभाव इत्यतस्तज्जनकरूपेभ्यो यत्किञ्चिद्द्वयमादायैव तदभिव्यक्ति-जनकत्वं वक्तव्यम्। तत्र चाभिव्यञ्जकतावच्छेदकमन्यतरत्वमन्यतमत्वं वा, अन्यथा व्यभिचारप्रसङ्ग एव स्यादिति प्रकृतेऽपि तथैव घटवाचकस्य स्फोटस्य घकारादिवर्णसमुदायेभ्यः कादिवर्णसमुदायेभ्यश्चैकस्यैव जननेऽपि तदुभय-समुदायान्यतरत्वमेव तादृशस्फोटाभिव्यञ्जकतावच्छेदकमिति नैकसमुदाया-भिव्यक्तस्फोटेपरसमुदायाभिव्यक्तेर्व्यभिचार इति। **अन्यतरत्वेने**त्यस्य च तत्स्थलाभिप्रायकतया, क्वचिदन्यतमेनापि चित्ररूपाभिव्यञ्जनान्न तत्र व्यभिचार इति भावः। अन्यतरत्वञ्चात्र न भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वम्, उभयभेदस्य केवलान्वयितया तद्भेदस्याप्रसिद्धेः, किन्त्वतिरिक्तमेव। नीलपीतो-भयत्वरक्तश्वेतोभयत्वान्यतरत्वं वा भेदघटितं निरुच्य तदवच्छिन्नवत्त्वमेवा-

---

१ तथा च इति मु० पु० पा०।

**तदुक्तं वाक्यपदीये—"यथा मणिकृपाणादौ मुखमेकमनेकधा। तथैव ध्वनिषु स्फोट एक एव हि विद्यते॥" इति। यद्वा प्रतिपर्य्यायं भिन्न एव स्फोटः। अतएव घटकलसयोरेकम्पदमिति न व्यवहारः।**

**अस्तु वा प्रत्येकपर्य्यायाभिव्यञ्जनीयो वर्णमालायामसमवेत**

भिव्यञ्जकतावच्छेदकं बोध्यम्। पर्य्यायभेदेपि स्फोटस्याभेदे हरिं प्रमाणयति— **तदुक्तमि**ति। **यथा मणी**ति। **अनेकधे**ति। न्यूनपरिमाणे मणौ प्रतिबिम्बितस्य मुखस्य न्यूनपरिमाणत्वेन ग्रहेपि तदधिकपरिमाणे कृपाणे प्रतिबिम्बितस्य तस्यैवाधिकपरिमाणवत्त्वेन ग्रहो मुखन्त्वेकमेव, तथा न्यूनसङ्ख्यकघटवर्णमालया तदधिकसङ्ख्यककलसादिवर्णमालया चैकस्यैव स्फोटस्याभिव्यक्तिरित्यर्थः। **यद्वे**त्यनुसरणे बीजमाह—**अतएवे**ति। प्रतिपर्य्यायं स्फोटस्य भेदादेवेत्यर्थः। **न व्यवहार** इति। अन्यथा स्फोटवृत्तेः पदत्वस्य स्फोटैक्येनैक्यात्तत्र तादृशव्यवहारो दुर्वार एव स्यादिति भावः।

उक्तरीत्या प्रत्येकवर्णस्वरूपावयवात्मकसमवायिकारणजन्यत्वं वर्णानामनित्यत्वे स्फोटस्य न सम्भवति, वर्णानां यौगपद्येनोत्पत्तेरसम्भवात्तेषां परस्परसंयोगविरहात्, समवायिकारणस्य च संयोगद्वारैव कार्य्यजनकत्वात् प्रथमस्य द्वितीयेन तत्सम्भवेपि तृतीयादिभिरत्यन्तासम्भवादित्यतः स्फोटस्य वर्णासमवेतत्वमेवावश्यकमित्याशयेनाह—**अस्तु वे**ति। **नानुपपत्तिरि**ति। दर्शिताया अनुपपत्तेर्वर्णानां स्फोटसमवायिकारणत्वानुपगमविरह इत्यर्थः। एतन्मते वायुवृत्तिरेव स्फोटस्तस्यैव च पदत्वादिकम्। तथा चोक्तं वाक्यपदीये प्रथमकाण्डे १०९ तमश्लोके—

"लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्त्तिना।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते॥
तस्य कारणसामर्थ्याद्वेगप्रचयधर्म्मिणः।
सन्निपाताद्विभज्यन्ते सारवत्योपि मूर्त्तयः॥" इति।

एव स्फोटः। तेन वर्णानामस्थिरत्वपक्षे यौगपद्यासम्भवात् स्फोटारम्भस्य नानुपपत्तिः। भवतु वा वोपदेवोक्तानुगतव्यवहारयुक्त्या पदत्ववाक्यत्वादयो जातय एव घटत्वादिजातेर्वाचिकाः, जातेर्वाच्यतायामिव वाचकतायामप्येकत्वादिसम्भवात्। तदाहुः—"शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम्।" इति। वर्णव्यक्तयस्तु

**अस्थिरत्वपक्ष** इति। इदमुपलक्षणम्। तेषां स्थिरत्वपक्षेपि नित्यैकत्ववतां परममहत्परिमाणवत्त्वमेव स्वीकरणीयम्, अन्यथाणुपरिमाणवत्त्वे सर्वदेशावच्छेदेन सत्त्वासम्भवात्सर्वत्रानुपलम्भप्रसङ्गः। मध्यपरिमाणकस्य सावयवत्वनियमेन नित्यत्वासम्भवः। तथा च तेषां स्फोटसमवायिकारणत्वेवयविद्रव्यस्यावयवाधिकपरिमाणवत्त्वं पटादौ सर्वानुभवविषयीभूतमप्यनुपपन्नमेव स्यात्। संयोगाना कर्म्मजन्यत्वनियमेन यथाकाशादीनां परममहत्परिमाणवता क्रियाविरहात्तथाभूतेनात्मादिना संयोगविरहः, तथा वर्णानामपि परममहत्परिमाणवतां परस्परं संयोगासम्भवात्समवायिकारणत्वानुपपत्तिरपि द्रष्टव्या। अतएवेदमपि मतं विहाय वोपदेवमतमवलम्बते—**भवतु वेत्या**दिना। **अनुगतव्यवहारयुक्त्ये**ति। एकं पदमेकं वाक्यमित्यादिव्यवहारान्यथानुपपत्तिरूपया युक्त्येत्यर्थः। **पदत्ववाक्यत्वादय** इति। घटपदत्वघटमानयेत्यादिवाक्यत्वादय इत्यर्थः। तेन सकलपदाखिलवाक्यसाधारण्याः पदत्वादिजातेरभ्युपगमस्य पटादिपदाद् घटादिबोधप्रसङ्गादसम्भवेपि न क्षतिः। **जातय एवे**ति। तेषां प्रत्येकमेकत्वसिद्धौ जातित्वबाधकसाङ्कर्य्यादीनां विरहेण जातिभूतानामेव वाचकत्वमित्यर्थः। **एकत्वादिसम्भवादि**ति। व्यक्तिशक्तिवादे शक्यानन्त्यव्यभिचारादिदोषभियैकस्या घटत्वादिजातेरेव वाच्यत्वं यथा मीमांसकादीनामभिमतम्, तथा घटादिपदानां वाचकत्वेपि तद्दोषाणां जागरूकत्वादेकस्या घटपदत्वादिजातेरेव तथात्वकल्पने लाघवस्य सम्भवादित्यर्थः। ननु तर्हि वर्णव्यक्तीनामन्वयबोधे क उपयोग इत्यत आह—**वर्णव्यक्तयस्त्वि**ति। तथा च घटपदत्वादिजातीनां नित्यतया सर्वदैव सत्त्वात्सर्वत्र सर्वदा तत्प्रत्यक्षस्य

**वाचकजातेरभिव्यञ्जकतयैव वाक्यार्थबुद्धावुपयुज्यन्ते, न साक्षात्। अवाचकशब्दत्वे च ध्वनय इति व्यवह्रियन्ते। तदुक्तमभियुक्तैः—"अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता। काश्चिद्[1] व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥" इति।**

**न चैवं स्फोटस्य जातिरूपत्वे ब्रह्मत्ववादविरोधः, जातेर्ब्रह्मातिरे-**

वारणाय तदभिव्यञ्जकत्वं यकारादिवर्णानामवश्यमुपगन्तव्यमिति तेषान्न वैयर्थ्यमिति भावः। **न साक्षादि**ति। ज्ञायमानकारणतापक्षे स्वज्ञानजन्य-वृत्तिज्ञानजन्योपस्थितिमत्त्वसम्बन्धेन ज्ञातस्य तथात्वे स्वजन्यवृत्तिज्ञानजन्यो-पस्थितिद्वारैव पदज्ञानस्य तथात्वं स्फोटानङ्गीकारिभिरभ्युपगतमिति मयापि तथैव वर्णानामुपयोगोऽभ्युपेयत इति भावः। मृदङ्गादिशब्दनिष्ठजातीनामर्थ-वाचकत्वविरहादेव ध्वनित्वव्यवहार इत्याह—**अवाचकशब्दत्वे** इति। वाचक-त्वसामान्याभाववत्त्वे सति शब्दत्वे इत्यर्थः। **तदुक्तमि**ति। तत्पदेन स्फोटस्य जातिरूपत्वमवाचकशब्दत्वस्य ध्वनित्वव्यवहारप्रयोजकत्वञ्च परामृश्यते। **काश्चिदि**ति। **अस्या** अनुपदोक्तानेकवर्णाभिव्यङ्ग्यताया जातेः। **व्यक्तयः** आश्रयीभूताः। **काश्चित्** मृदङ्गादिप्रभववर्णव्यक्तयः। व्यवह्रियन्त इत्यर्थः।

एवं सति स्फोटस्य ब्रह्मरूपत्वोक्तिरसङ्गता जातीनामनन्तानां तद्रूपताया असम्भवादित्याशङ्कां निराकुरुते—**न चैवमि**ति। **एवं** स्फोटस्य जातिरूपत्वो-पगमे, ब्रह्मत्ववादविरोधोपि नेत्यर्थः। हेतु**र्जातेर्ब्रह्मातिरेकानभ्युपगमादि**ति। **जाते**रित्येकत्वमविवक्षितमद्वैतवादे, निखिलानामेव सत्स्वरूपत्वोपगमान्न तद्विरोधः। अयम्भावः—वेदान्तसिद्धान्ते गोत्वादिजातीनां सत्स्वरूपब्रह्म-भिन्नत्वं नाङ्गीक्रियते। न च तस्य सर्वत्र सत्त्वात् सर्वजातीनां सर्वत्रोपलब्धिः स्यादिति वाच्यम्, अतिरिक्ताया गोत्वादिजातेरभ्युपगमेपि जातिनिष्ठलौकिक-विषयतासम्बन्धेन प्रत्यक्षं प्रति स्वविषयसमवेतत्वसम्बन्धेन प्रत्यक्षस्य

---

१ कैश्चित् इति मु० पु० पा०।

कारणत्वाज्जातिप्रत्यक्षप्रयोजकोक्तसम्बन्धघटकतया गवादिव्यक्तीनामुक्तप्रत्यक्षप्रयोजकत्वेन गोत्वाद्यविशेषितानामेव गोत्वादिजातिव्यञ्जकत्वात्। गोत्वादिजातिविशेषव्यञ्जकतावच्छेदिकायाः कस्याश्चिदन्यस्या जातेस्तैरप्यनुपगमात्। तदुपगमे च तस्या अपि व्यञ्जकतावच्छेदिका काचिदन्या जातिरित्यनवस्थाप्रसङ्गात्। यदि चोक्तकार्य्यकारणभावोपगमेपि पृथिवीत्यादिप्रत्यक्षे गोत्वादिजातीनां विषयत्वं स्यात्, तत्प्रत्यक्षविषयीभूतगवादिसमवेतत्वस्य गोत्वादौ सत्त्वादित्युच्यते, तदोक्तकार्य्यकारणभावं विहाय गोत्वादिप्रत्यक्षे सास्नाद्यवच्छिन्नेन्द्रियसंयोगवत्समवायादिसन्निकर्षस्यैव विशिष्य कारणत्वं वाच्यम्, तावतैव तादृशसन्निकर्षघटकतया गवादिव्यक्तीनां गोत्वादिव्यञ्जकत्वात्। न च तथापि गौरिति व्यवहारः कथमिति वाच्यम्, गोत्वादिजातिमत्त्वेन पराभिमता यावत्यो व्यक्तयस्तावदन्यतमोपरक्तसद्रूपं गौरित्याकारकव्यवहारे कारणम्। एवं घट इत्यादिव्यवहारेपि। नन्वेवं गवादिपदानां तत्तद्व्यक्तिविशिष्टसद्रूपे सद्रूपविशिष्टासु तावतीषु व्यक्तिषु शक्तिर्वाच्या, तथा च तेषा नानार्थकत्वापत्तिरिति वाच्यम्, सर्वासु गोव्यक्तिष्वेकस्या एव शक्तेः सम्भवात्। न चानुगतमेकमवच्छेदकं विना कथमेका शक्तिरिति वाच्यम्, तावद्व्यक्तिबोधजननानुकूला शक्तिर्गोपदे स्वीक्रियते सा चाखण्डकारणतारूपा, तादृशबोधनिष्ठा कार्य्यताप्यखण्डा, तयोश्चावच्छिन्नत्वे मानाभावान्न कोपि धर्म्मस्तदीयाखण्डावच्छेदकताश्रयः। अतएव शक्तिज्ञाननिष्ठा कारणताप्येकैव। सद्रूपविशिष्टतद्व्यक्तिशक्तं गोपदमित्याकारकेषु शक्तिज्ञानेष्वेकस्या एव निरवच्छिन्नाया कारणतायाः सद्रूपविशिष्टतद्व्यक्तिरित्याकारकशाब्दबोधं प्रति स्वीकारात्। गोत्वजात्याश्रयत्वेन पराभिमतव्यक्तीनामन्यतमस्यैव तद्व्यक्तिशब्देन कार्य्यकारणकोट्योर्निवेशात्। अतएव तद्व्यक्तित्वेन घटव्यक्तिमवगाहमानादुक्ताकारकशक्तिज्ञानान्न गोव्यक्तीनां शाब्दबोधः, तत्र तत्कारणत्वस्यास्वीकारात्। एकगोव्यक्तिमवगाहमानाच्छक्तिग्रहादन्यगोव्यक्तिशाब्दबुद्धेर्गोत्वादिजातिस्वीकर्त्तृमते इवास्माकं मतेपीष्टत्वात्। न च कारणत्वादेरखण्डत्वस्वीकारेपि तद्ग्राहकत्वमन्वयव्यतिरेकज्ञानस्यैव वाच्यम्, तच्च ज्ञानं

**कानभ्युपगमात् । तदुक्तम् "सत्यासत्यौ तु यौ भावौ प्रतिभावं व्यवस्थितौ । सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ॥"**

नानुगतैकरूपं विना, व्यक्तीनामानन्त्यादिति गोत्वादिकमेव तादृशं रूपमवश्यं वाच्यमिति वाच्यम्, तृणारणिमण्यादिस्थल इवोपस्थितानां त्रिचतुरादि-व्यक्तीनां प्रत्येकान्वयव्यतिरेकज्ञानेन कारणता प्रथमं तास्वेव गृह्यते, पश्चाद् व्यक्त्यन्तरादपि कार्य्योत्पत्तिदर्शनात्तत्रापि तस्याः सम्बन्धोस्तीति कल्प्यते, न तु सर्वासां कारणव्यक्तीनामन्वयव्यतिरेकज्ञानं तद्ग्राहकम्, नहि 'तृणारणिमणिभ्य एव वह्निरुत्पद्यत इति नियन्तुं शक्यते, तैलघृतमांस-वस्त्रादिभ्योपि तदुत्पत्तिदर्शनात् । न च तावतां प्रथममुपस्थितिरस्ति, येन प्रथमत एव प्रत्येकमन्वयव्यतिरेकधीसम्भवः ।

यत्तु कारणत्वादेरवच्छिन्नत्वेनैवानुभवान्न निरवच्छिन्नत्वमिति तन्न, धूमो वह्निव्याप्य इत्याद्यनुभवेन धूमत्वादौ व्याप्यतावच्छेदकत्वानवगाहनस्य दीधितिकाराद्युक्तत्वेन तद्वदेव दण्डो घटकारणमित्याद्यनुभवेन दण्डत्वादेः कारण-तावच्छेदकत्वेनानवगाहनात् । अथवा तावद्व्यक्तीनां यावन्ति सद्रूपेण सह तादात्म्यानि तावदन्यतमत्वविशिष्टसम्बन्धेन सद्रूपविशिष्टं गौरिति व्यवहारस्य विषयस्तेन सम्बन्धेन सद्रूपं तत्तत्कारणतावच्छेदकम् । न च गौरवाद् दुर्ज्ञेयत्वा-च्चोक्तान्यतमत्वस्य तथात्वासम्भवाद् गोत्वादिकल्पनमेव युक्तमिति वाच्यम्, अखण्डस्योक्तान्यतमत्वस्य स्वरूप एव निवेशेनोक्तदोषाभावात्, क्लृप्तेनैव निर्वाहे-क्लृप्तगोत्वादिकल्पनस्यायुक्तत्वात् । अतएव सद्रूपास्वीकर्त्तृबौद्धैरुक्तान्यतमत्वस्या-न्यापोहनात्मकस्य गवादिपदवाच्यत्वादिकं स्वीक्रियत इति । तदेतत्पक्षद्वयं भगवतो हरेरुक्तिमनुवदतीत्यनुपदं दर्शयिष्यति—**वाक्यपदीये त्वि**त्यादिना । जातेस्सत्स्वरूपब्रह्मानतिरिक्तत्वे प्राचीनवाक्यं प्रमाणयति—**तदुक्तमि**ति । **प्रति-भावं** घटादिप्रत्येकपदार्थे **व्यवस्थितौ** समवायतादात्म्यान्यतरसम्बन्धेन वृत्ति-मन्तौ जातिव्यक्तिस्वरूपौ भावौ **सत्यासत्यौ तत्र** तयोर्मध्ये यत्सत्यं सा जातिः । विधेयप्राधान्यात्स्त्रीलिङ्गनिर्देशः । असत्यास्तु व्यक्तयस्तासां स्वप्न-

**इति। वाक्यपदीये तु[1] "सम्बन्धिभेदात्सत्तैव भिद्यमाना[2] गवादिषु। जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥ तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते। सा नित्या सा महानात्मा तामाहुस्त्वतलादयः॥"**

दशानुभूतगजादितुल्यतायास्तैरुपगमात्। तथा च जातेस्सत्स्वरूपब्रह्मभिन्नत्वे सत्यत्वन्नोपपद्येत, एकस्य ब्रह्मण एव तथात्वादिति भावः। जातेस्सत्स्वरूपब्रह्मरूपत्वे हरिमपि प्रमाणयति—**वाक्यपदीये त्वि**ति। **सम्बन्धिभेदादि**ति। तत्तद्गवादिव्यक्त्युपहितत्वस्य तावद्व्यक्तितादात्म्यानामन्यतमत्वविशिष्टरूपस्य वा सम्बन्धस्य भेदादित्यर्थः। **भिद्यमाने**ति। सत्स्वरूपस्यैकत्वेपि सम्बन्धस्य भेदादेव भिन्नेत्यर्थः। **सत्तैव** सत्स्वरूपमेव। जातिरित्युच्यत इत्यर्थः। तेन सत्तापदस्य द्रव्यादित्रिकवृत्तिजातिरूपसत्तापरत्वस्य तन्मते तस्या अनुपगमादसम्भवेपि नानुपपत्तिः। **तस्यां सर्वे व्यवस्थिता** इति। तत्तस्या निरूपितत्वार्थकत्वात् सर्वे शब्दास्तादृशजातिनिरूपितवाचकत्वसम्बन्धावच्छिन्नाधेयतावन्त इत्यर्थः, व्यवस्थितेराधेयतारूपत्वात्। सर्वेषां शब्दानां सामान्यतो जातिवाचकत्वमुक्त्वा विशेषतोपि तदाह—**तामि**ति। यत**स्सा नित्या** अतएव **महानात्मा** परब्रह्मस्वरूपा, एकस्यैव तस्य वेदान्तिमते नित्यत्वात्, तदतिरिक्तस्य पारमार्थिकत्वाभावात्। क्वचि**न्महासत्ते**ति पाठः। तत्र सत्ताया सत्स्वरूपायां निखिलशब्दवाच्यत्वमेव महत्त्वं बोध्यम्। गोत्वमित्यादौ त्वादिप्रत्ययानामपि सत्स्वरूपवाचकत्वमेवेत्याह– **तामाहुरि**ति। त्वादिभावप्रत्ययार्थः सत्स्वरूपम्। तत्र प्रकृत्यर्थस्य तादात्म्येनान्वयः। न च सत्स्वरूपमात्रस्य त्वादिप्रत्ययशक्यत्वे तत्र प्रकृत्यर्थस्य भाने निर्धर्म्मितावच्छेदककबोधस्यापत्तिरिति वाच्यम्, सद्रूपस्य सदन्याप्रकारकधीप्रकारत्वस्वरूपेण तच्छक्यत्वात्, तादृप्रकारत्वस्यापि

---

१ तु इत्यस्य स्थाने च इति मु० पु० पा०।

२ विद्यमाना इति मु० पु० पा०

**इति वदन्ति, तद् व्यवहारदशायामुपेक्षणीयम् । ३८ ।**

सद्रूपत्वान्नाद्वैतहानिरिति । **इति वदन्ती**ति । **अखण्डस्फोटवादिन** इति पूर्वेणान्वितम् ।

**तदि**ति । ब्रह्मात्मकस्फोटमतम् । **व्यवहारदशायामुपेक्षणीयमि**ति । अविद्यादशायामेव घटपटादिपदैर्व्यवहारस्य सम्भवात्तत्र स्फोटस्य ब्रह्मात्मकत्वज्ञानस्यानुमित्यादिस्वरूपस्य कथञ्चित्सम्भवेपि ब्रह्मज्ञानेन व्यवहाराणामुपपादनस्यात्यन्तमसम्भवादुपेक्षणीयमेवेत्यर्थः । इदमुपलक्षणम् । स्फोटस्यातिरिक्तस्य सिद्धावेव तस्य ब्रह्मात्मकत्वं तदतिरिक्तत्वं वा सिद्ध्येत्, तत्रैव तु न प्रमाणमुपलभामहे । तथाहि—शाब्दिकानां तत्साधनम् । गौरित्यत्र कश्शब्दः ? यस्मादुच्चरितात्ककुदादिमदर्थप्रतिपत्तिः स शब्दः । ततश्च किं गकारौकारविसर्जनीयाः ककुदादिमदर्थप्रतिपादकत्वेन शब्दव्यपदेशं लभन्ते ? आहोस्वित्तद्व्यतिरिक्तः स्फोटादिः ? तत्र न तावद्वर्णा अर्थप्रत्यायकाः, यतस्ते किं समुदितास्तथा ? उत व्यस्ताः ? यदि व्यस्तास्तदैकेनैव वर्णेन गवाद्यर्थप्रतिपत्तिरुत्पादितेति द्वितीयादिवर्णोच्चारणमनर्थकमेव भवेत् । अथ समुदिताः, तदपि न सङ्गतम्, क्रमोत्पन्नानामनन्तरविशिष्टत्वेन समुदायासम्भवात् । न च युगपदुत्पन्नानां समुदायप्रकल्पना, एकपुरुषापेक्षया युगपदुत्पत्त्यसम्भवात्, प्रतिनियतस्थानकरणप्रभवत्वात्तेषाम् । न च भिन्नपुरुषप्रयत्नजन्यगकारौकारविसर्जनीयानां समुदायेप्यर्थप्रतिपादकत्वं दृष्टम्, प्रतिनियतक्रमवर्णप्रतिपत्त्युत्तरकालभावित्वेन शाब्द्याः प्रतिपत्तेः संवेदनात् । न चान्त्यो वर्णः पूर्वपूर्वानुगृहीतो वर्णानां क्रमोत्पादे सत्यर्थप्रत्यायकः, पूर्ववर्णानामुत्तरवर्णं प्रत्यनुग्राहकत्वायोगात् । यतस्तदनुग्राहकत्वं न तज्जनकत्वम् । वर्णाद्वर्णोत्पत्तेरभावात् प्रतिनियतस्थानकरणादिसंपाद्यत्वाद्वर्णानाम् । वर्णाभावेपि वर्णोत्पत्तिदर्शनाच्च । अथार्थज्ञानोत्पत्तौ सहकारित्वमनुग्राहकत्वम्, तदप्ययुक्तम्, अविद्यमानानां सहकारित्वानुपपत्तेः । अतएव प्राक्तनवर्णविज्ञानानामपि सहकारित्वमयुक्तम् । न च पूर्ववर्णानुभवप्रभवाः संस्कारास्तत्सहायतां प्रतिपद्यन्ते, यतः संस्कारास्स्वो-

त्पादकविषयविषयकस्मृतिहेतवो नार्थान्तरज्ञानमुत्पादयितुं समर्थाः। न हि घटज्ञानप्रभवः संस्कारः पटस्मृतिं विदधद्दृष्टः। न च तत्संस्कारप्रभवाः स्मृतयः सहायतां प्रतिपद्यन्ते, युगपदयुगपद्विकल्पाभ्यामनुपपत्तेः। न हि स्मृतीनां युगपदुत्पत्तिरयुगपदुत्पन्नानां वावस्थितिरस्ति। न च समस्तसंस्कारप्रभवैका स्मृतिस्सहकारिणी, परस्परविरुद्धानेकपदार्थानुभवप्रभूतसंस्काराणामप्येकस्मृति-जनकत्वाप्रसक्तेर्नानेकवर्णसंस्कारजन्यत्वं स्मृतेः सम्भवतीति कुतोस्या अन्त्य-वर्णसहकारित्वम्। न चान्यविषयस्मृतिरन्यत्र प्रतिपत्तिं जनयति।

न चान्यवर्णनिरपेक्ष एव गौरित्यत्रान्त्यो वर्णः ककुदादिमदर्थप्रत्यायकः, पूर्ववर्णोच्चारणवैयर्थ्यप्रसक्तेः, घटशब्दस्यान्त्यव्यवस्थितस्यापि तत्प्रत्यायकत्व-प्रसक्तेश्च। तस्मान्न वर्णाः समस्ता व्यस्ता वा अर्थप्रत्यायकाः सम्भवन्ति। अस्ति च गवादिशब्देभ्यः ककुदादिमदर्थप्रतिपत्तिरिति तदन्यथानुपपत्त्या वर्णव्यतिरिक्तोर्थप्रतिपत्तिहेतुः स्फोटाख्यः शब्दः।

श्रोत्रविज्ञाने च वर्णव्यतिरिक्तः स्फोटात्मा निरवयवोक्रमः स्फुटमवभातीति तस्याध्यक्षतोपि सिद्धिः। तथाहि—श्रवणव्यापारानन्तरभाविनी नियतार्थाव-भासा संविदनुभूयते। न चासौ वर्णविषया, वर्णानां परस्परव्यावृत्तरूपत्वा-देकावभासजनकत्वविरोधात् तदजनकस्यातिप्रसङ्गतस्तद्विषयत्वानुपपत्तेः। न चेयं सामान्यविषया, वर्णत्वव्यतिरेकेणापरसामान्यस्य गकारौकारविसर्जनीयेष्व-सम्भवात्। वर्णत्वस्य च प्रतिनियतार्थप्रत्यायकत्वायोगात्। न चेयं भ्रान्ता, अबाध्यमानत्वात्। न चाबाध्यमानप्रत्ययविषयस्यापि स्फोटाख्यस्य वस्तुनो-सत्त्वम्, अवयविद्रव्यस्याप्यप्रसक्तेः। एवमप्यवयव्यभ्युपगमे स्फोटोभ्युपगमो-वश्यम्भावी, तत्तुल्ययोगक्षेमत्वात्। स च वर्णेभ्यो व्यतिरिक्तो नित्यः। अनित्यत्वे सङ्केतकालानुभूतस्य तदैव ध्वस्तत्वात् कालान्तरे देशान्तरे च गोशब्दश्रवणात्ककुदादिमदर्थप्रतिपत्तिर्न स्यात्, असङ्केतिताच्छब्दादर्थप्रति-पत्तेरसम्भवात्। सम्भवे वा द्वीपान्तरादागतस्य गोशब्दादेवार्थप्रतिपत्तिर्भवेत् सङ्केतकरणवैयर्थ्यञ्च प्रसज्येत। तस्मान्नित्यः स्फोटाख्यः शब्दो व्यापकश्च सर्वत्रैकरूपतया प्रतिपत्तेरिति।

अत्र नैयायिकादयः। एकदा प्रादुर्भूता वर्णाः स्वार्थप्रतिपादका न भवन्तीत्यत्राविप्रतिपत्तिरेव। क्रमप्रादुर्भूतानां न समुदाय इत्यत्रापि सैव। अर्थप्रतिपत्तिस्तूपलभ्यमानात्पूर्ववर्णध्वंसविशिष्टादन्त्यवर्णात्। न चाभावस्य सहकारित्वं विरुद्धम्, वृन्तफलसंयोगाभावस्यैव प्रतिपातिगुरुत्वविशिष्टफलप्रपातक्रियाजनने दृष्टत्वोत्तरसंयोगं विदधत् प्राक्तनसंयोगाभावविशिष्टं कर्म्म। परमाणुद्वयसंयोगश्च परमाणौ तद्गतरूपध्वंसविशिष्टो रक्ततामुत्पादयन्। यद्वोपलभ्यमानोन्त्यो वर्णः पूर्ववर्णविज्ञानाभावविशिष्टः पदरूपतामासादयन पदार्थप्रतिपत्तिं जनयति, प्राक्तनवर्णसंवित्प्रभवसंस्कारसव्यपेक्षो वा। न च संस्कारस्य विषयान्तरे कथं विज्ञानजनकत्वमिति वाच्यम्, (तद्भावभावितयार्थप्रतिपत्तेरुपलब्धेः।) पूर्ववर्णविज्ञानप्रभवसंस्कारश्चान्त्यवर्णसहायतां पूर्ववर्णविज्ञानप्रभवतया प्रणालिकया विशिष्टः समुत्पन्नः सन प्रतिपद्यते। तथाहि—प्रथमवर्णे तावद्विज्ञानम्। तेनैव च संस्कारो जन्यते। ततो द्वितीयवर्णविज्ञानम्। तेन पूर्वसंस्कारविशिष्टेनापरो विशिष्टतरः संस्कारो निर्वर्त्त्यत इति यावदन्त्यसंस्कारोर्थप्रतिपत्तिजनकान्त्यवर्णसहायस्तथाभूतसंस्कारप्रभवस्मृतिसव्यपेक्षो वान्त्यो वर्णः पदरूपः पदार्थप्रतिपत्तिहेतुः। अथवा शब्दार्थोपलब्धिनिमित्तादृष्टनियमादविनष्टा एव पूर्ववर्णसंवित्प्रभवाः संस्कारा अन्त्यसंस्कारं विदधति। तस्मात्पूर्ववर्णेषु स्मृतिरुपजातान्त्यवर्णेनोपलभ्यमानेन सहार्थप्रतिपत्तिमुत्पादयति। वाक्यार्थप्रतिपत्तौ वाक्यस्याप्ययमेव न्यायोङ्गीकर्त्तव्यः। वर्णाद्वर्णोत्पत्त्यभावप्रतिपादनञ्च सिद्धसाधनमेव। तदेवं यथोक्तसहकारिकारणसव्यपेक्षादन्त्यवर्णादर्थप्रतिपत्तिरन्वयव्यतिरेकाभ्यामुपजायमानत्वेन निश्चीयमाना स्फोटपरिकल्पनां निरस्यति, तदभावेप्यर्थप्रतिपत्तेरुक्तप्रकारेण सम्भवेन्यथानुपपत्तेः प्रक्षयात्। न हि दृष्टादेव कारणात्कार्य्योत्पत्तावदृष्टान्तरपरिकल्पना युक्तिसङ्गता, अतिप्रसङ्गात्।

किञ्च यद्युपलभ्यमाना वर्णा व्यस्ताः समस्ता वा नार्थप्रतिपत्तिजनने समर्थाः, स्फोटाभिव्यक्तावपि न समर्था भवेयुः। तथाहि— न समस्तास्ते स्फोटमभिव्यञ्जयन्ति, सामस्त्यासम्भवात्। नापि प्रत्येकम्, वर्णान्तरवैफल्य-

प्रसङ्गादेकेनैव स्फोटाभिव्यक्तेर्जनितत्वात्। न च पूर्ववर्णैः स्फोटस्य संस्कारैरन्त्यो वर्णस्तस्याभिव्यञ्जक इति, अभिव्यक्तिव्यतिरिक्तसंस्कारस्वरूपानवधारणात्। तथाहि— न तावत्तत्र वेगाख्यः संस्कारो निर्वर्त्त्यते, तस्य मूर्त्तेष्वेव भावात्। नापि वासनारूपः, अचेतनत्वात्। स्फोटस्य चैतन्याभ्युपगमे च स्वशास्त्रविरोधः। नापि स्थितिस्थापकः, तस्यापि मूर्त्तमात्रवृत्तित्वात्। स्फोटस्य चामूर्त्तत्वाभ्युपगमात्। किञ्चासौ संस्कारः स्फोटरूपस्तद्धर्म्मो वा। न तावदाद्यः कल्पः, स्फोटस्य वर्णोत्पाद्यत्वप्रसक्तेः। नापि द्वितीयः, व्यतिरिक्ताव्यतिरिक्तविकल्पानुपपत्तेः। तथाह्यसौ धर्म्मः स्फोटाद् व्यतिरिक्तोऽव्यतिरिक्तो वा? यद्यव्यतिरिक्तस्तदा तत्करणे स्फोट एव कृतो भवेदिति तस्यानित्यत्वप्रसक्तौ स्वाभ्युपगमविरोधः। अथ व्यतिरिक्तस्तदा तत्सम्बन्धानुपपत्तिः, तदनुपकारकत्वात्। तस्योपकाराभ्युपगमे व्यतिरिक्ताव्यतिरिक्तविकल्पस्तत्रापि पूर्वोक्त एव दोषोऽनवस्थाकारी। न च व्यतिरिक्तधर्म्मसद्भावे स्फोटस्यानभिव्यक्तस्वरूपव्यवस्थितस्य पूर्ववदर्थप्रतिपत्तिहेतुत्वम्; तत्स्वरूपत्यागे चानित्यत्वप्रसक्तिः। अथ न व्यतिरिक्तसंस्कारकृतमुपकारमपेक्ष्य पूर्वरूपपरित्यागादसावर्थप्रतिपत्तिं जनयति, किन्तु संस्कारसाहाय्येऽविचलितरूपः, एककार्य्यकारित्वस्यैव सहकारित्वाभ्युपगमात्। एवं वर्णानामप्यन्यकृतोपकारनिरपेक्षाणामेककार्य्यनिर्वर्त्तनलक्षणसहकारित्ववत्सहकारिसहितानामर्थप्रतिपत्तिजनने किमपरस्फोटकल्पनयाऽप्रामाणिकया कार्य्यम्। किञ्च पूर्ववर्णैः स्फोटस्य संस्कारः क्रियमाणः किमेकदेशैः क्रियते, सर्वात्मना वा? यद्येकदेशैस्तदा तेनार्थान्तरभूता अनर्थान्तरभूता वा? यद्यर्थान्तरभूतास्तदा तेषां तदनुपकारे सम्बन्धासिद्धिः। उपकारे व्यतिरिक्ताव्यतिरिक्तविकल्पोक्तदोषानुषङ्गः। न च समवायादनुपकारेऽपि तेषां तत्सम्बन्धिता, तस्यानभ्युपगमात्। परैरभ्युपगमे च स्वकृतविरोधः। अर्थान्तरभूतत्वे चैकदेशानां तेभ्यः स्वार्थप्रतिपत्तेर्न्न स्फोटस्यार्थप्रत्यायकता, अपि चैकदेशानामर्थप्रतिपत्तिहेतुत्वाभ्युपगमे चरमवर्णानामेव तदभ्युपगतम्। अथाव्यतिरिक्तस्तदेकदेशस्तदा स्फोटस्यैकेनैव संस्कृतत्वादपरवर्णोच्चारणवैयर्थ्यम्। न च पूर्ववर्णसंवित्प्रभवसंस्कारसहितस्तत्स्मृतिसहितोऽन्त्यवर्णः

स्फोटसंस्कारकः, एवम्भूतस्यार्थप्रतिपत्तिजननेपि शक्तिप्रतिघाताभावात् स्फोटकल्पना निरवसरैव। अपि च स्फोटसंस्कारः स्फोटविषयसंवेदनोत्पादनमुतावरणापनयनम्? तत्रैकत्रैकावरणापगमे सर्वदेशावस्थितैः सर्वदा व्यापिनित्यरूपतयोपलम्भनम्, तस्य नित्यत्वव्यापित्वाभ्यामपगतावरणस्य सर्वत्र सर्वदोपलभ्यमानस्वभावत्वात्। अनुपलभ्यमानस्वभावत्वे वा न केनचित्कदाचित्कुत्रचिदुपलभ्येत। अथैकदेशावरणापगमः क्रियते। नन्वेवमावृतानावृतत्वाभ्यां सावयवत्वमस्यानुषज्येत। अथ निर्विभागत्वादेकत्रानावृतः, सर्वत्रावृतोभ्युपगम्यते। तदा तदवस्थाशेषदेशावस्थितैरुपलब्धिप्रसक्तिर्य्यथा च निरवयवत्वादेकत्रानावृतस्तथा तत एवैकत्राप्यावृतः सर्वत्रैवेति मनागपि नोपलभ्येत। किञ्चैकदेशाः स्फोटादर्थान्तरमनर्थान्तरं वा? अर्थान्तरत्वेपि शब्दस्वभावा अशब्दात्मका वा? यद्यशब्दात्मका नार्थप्रतिपत्तिहेतवः, अथ शब्दस्वभावास्तत्रापि यदि गोशब्दस्वभावास्तदा गोशब्दानेकत्वप्रसक्तिः। अथागोशब्दस्वभावा न तर्हि गवार्थप्रत्यायका भवेयुः। अथाव्यतिरिक्तास्तदा स्फोट एव संस्कृत इति। न च देशावस्थितैर्व्यापिनस्तथा प्रतिपत्तिप्रसक्तिरिति पूर्वोक्तमेव दूषणम्। किञ्चैकदेशावरणापाये स्फोटस्य खण्डशः प्रतिपत्तिः प्रसज्येत। अथ स्फोटविषयसंविदुत्पादस्तत्संस्कारः सोपि न युक्तः, वर्णानामर्थप्रतिपत्तिजनन इव स्फोटप्रतिपत्तिजननेपि सामर्थ्याभावान न्यायस्य समानत्वात्। यदि च स्फोट उपलभ्यमानस्वभावः सर्वदोपलभ्येत, अनुपलभ्यमानस्वभावत्वे आवरणापगमेपि तत्स्वभावानतिक्रमान्मनागपि नोपलभ्येत इत्यर्थापत्तितः शब्दव्यवहारविलोपापत्तेः। अनेनैव न्यायेन वायूनामपि तद्व्यञ्जकत्वमयुक्तम्। वायूनाञ्च व्यञ्जकत्वपरिकल्पने वर्णविकल्पप्रसक्तिः, स्फोटाभिव्यक्तावर्थप्रतिपादने वा तेषामनुपयोगात्। स्थिते च स्फोटस्य वर्णोच्चारणात् प्राक् सद्भावे वर्णानां वायूनां व्यञ्जकत्वं परिकल्प्येत, न च तत्सद्भावः कुतश्चित्प्रमाणादवगत इति न तत्परिकल्पना ज्यायसी। यदपि प्रत्यभिज्ञाज्ञानं स्फोटस्य नित्यप्रसाधकं वर्णोच्चारणात्प्रागप्यस्तित्वमवबोधयतीत्यभ्युपगतम्, तदपि प्रत्यभिज्ञानस्य सादृश्यनिबन्धनत्वेनात्र विषये प्रतिपादितत्वसङ्गतम्। एकगोव्यक्तौ

सङ्केतिताद् गोशब्दाद् गोव्यक्त्यन्तरेन्यत्रान्यदा च नित्यत्वमन्तरेणापि प्रतिपत्तिर्यथा सम्भवति तथा प्रतिपादितम्। नातोपि स्फोटस्य प्राग्व्यञ्जकात्सिद्धिरिति

"नादेनाहितबीजायामन्त्येन ध्वनिना सह।
आवृत्तपरिपाकायां बुद्धौ शब्दोवभासते॥" इति

भर्तृहरिवचोपि निरस्तं वेदितव्यम्।

यदपि विभिन्नाकारेषु वर्णेष्वभिन्नाकारं श्रोत्रान्वयव्यतिरेकानुविधाय्यध्यक्षं स्फोटमवबोधयतीत्युक्तम्, तदप्यसारम्। घटादिशब्देन परस्परव्यावृत्तानेकवर्णव्यतिरिक्तस्य स्फोटात्मनोर्थप्रत्यायकस्याध्यक्षप्रतिपत्तिविषयत्वेनाप्रतिभासनात्। नाप्यभिन्नावभासमात्रादभिन्नार्थव्यवस्था, अन्यथा दूरादविरलानेकतरुष्वेकतरुबुद्धेरेकत्वव्यवस्थाप्रसक्तेः। न चाविरलानेकतरुष्वेकत्वबुद्धेर्बाध्यमानत्वान्नैकत्वव्यवस्थापकत्वम्, स्फोटप्रतिभासबुद्धेरपि बाध्यत्वस्य दर्शितत्वात्। न चैकावभासः स्फोटसद्भावमन्तरेणानुपपन्नः, वर्णानामन्त्यवर्णविषयत्वेनाप्येकत्वावभासस्योपपद्यमानत्वान्निरवयस्याक्रमस्य नित्यत्वादिधर्म्मोपेतस्य स्फोटस्यैकावभासज्ञानजत्वाननुभवात्, अन्यथावभासस्यान्यथाभूतार्थस्य व्यवस्थापकत्वाद् व्यवस्थापनेतिप्रसङ्गात्। अवयविद्रव्यं त्ववयवजन्यत्वे तत्त्वेन चाध्यक्षप्रत्यये प्रतिभासत इति न तन्न्यायः स्फोटे उत्पादयितुं शक्यः। तत्र स्फोटात्मा शब्दो वर्णेभ्यो व्यतिरिक्तोसावुपगम्यते तदा वर्णनानात्वे तन्नानात्वप्रसक्तिः। तदेकत्वे वा वर्णानामप्येकत्वप्रसक्तिरिति दिक्। ३८।

( इति सटीकपदवाक्यरत्नाकरे स्फोटनिरासविवरणम्। )

——o——

## ( अथ वचनार्थविवरणम्। )

तत्र वाचकशब्देषु प्रकृतिः प्रत्यय इति पाणिनेः परिभाषा। प्रकृतिर्द्विधा प्रातिपदिकं धातुश्च। सुपः स्त्रीप्रत्ययस्तद्धितमिति विविधाः प्रातिपदिकप्रकृतिकाः प्रत्ययाः। तिङ्कृदिति द्विविधा धातुप्रकृतिकाः। तत्र सुपः किंलक्षणाः कतिविधाः किमर्थाश्चेति प्रस्तूयते—

**स्वौजस्सूत्रेण विहिताः प्रत्ययाः सप्तधा सुपः।**
**त्रिभिस्त्रिभिर्लवैस्तेषामन्वर्थाः प्रथमादयः॥३९॥**

**तत्रेति।** निरूपितेष्वित्यर्थः। **प्रकृतिरि**ति। प्रकृतित्वप्रत्ययत्वादिकमन्यत्र दर्शितरीत्या कथञ्चिदनुगमनीयम्। **पाणिनेः परिभाषे**ति। "प्रत्ययः" इति सूत्रं स्वादीनां प्रत्ययसंज्ञकत्वबोधकम्। प्रकृतिसंज्ञायाः स्वयमविधानेपि प्रथमाद्वितीयादिसंज्ञावत्प्राचीनविहितयैव तया पाणिनीयेपि व्यवहारात्तत्र तस्य परिभाषा बोध्या। **तद्धितमिती**ति शब्दः प्रकारे। तेन तद्धितादिसदृशानां क्यच्क्यङादीनामपि प्रातिपदिकप्रकृतिकत्वेपि न विभागन्यूनतेत्याशयेनाह—**विविधा** इति। णियङ्सनादीनां धातुप्रकृतिकानां तिङ्कृद्भिन्नत्वेपि तिङादिसमभिव्याहारं विना तेषां शाब्दबोधाजनकत्वान्न पृथगुपादानम्। कृतामपि सुप्समभिव्याहारेणैव बोधकत्वेपि धातुप्रकृतिकप्रत्ययसमभिव्याहारस्य तैरनपेक्षणात्पृथगुपादानम्। अथवा तदन्तानां धातुत्वादेव न पृथगुपादानम्। **स्वौजस्सूत्रेण** "स्वौजसमौट्छष्टा..." इत्यादिसूत्रेण। **त्रिभिस्त्रिभिः** सु औ जस् इत्येकम्, अम् औट् शस् इति द्वितीयं त्रिकम्, एवं टादित्रिकपञ्चकमादाय सप्तभिस्त्रिकैरित्यर्थः। **अन्वर्थाः** अर्थं प्रथमोपात्तत्वेन प्रथमात्वादिकमनुलक्ष्यीकृत्य कृताः। **प्रथमादयः** प्राचीनैः कृताः संज्ञा इति शेषः।

"स्वौजसमौट्छष्टा..." इत्यादिसूत्रेण प्रातिपदिकात्परे विहिता एकविंशतिप्रत्यया आद्यन्तवर्णग्रहणेन सुप इति संज्ञायन्ते। तेषां समुदायापन्नानां लवा विभक्तयः प्रथमाद्वितीयादिखण्डत्वयोगात्प्रथमाविभक्तिरिति क्रमेण व्यवह्रियन्ते। एकैकस्य च लवस्यावयवास्त्रिशो भवन्ति ।३९।

**ऐक्यद्वित्वबहुत्वानां क्रमेण प्रतिपादकाः।**
**विभक्तीनामवयवाः प्रत्येकं स्युस्त्रयस्त्रयः ॥४०॥**

एकैकस्या विभक्तेस्त्रीणि त्रीणि वचनानि। तत्राद्यमेकत्वं द्वितीयं द्वित्वं तृतीयं बहुत्वमभिधत्ते। ४०।

**आद्यन्तवर्णग्रहणेने**ति। "आदिरन्त्येन सहेता" इति सूत्रेणेत्संज्ञकान्त्यवर्णाव्यवहितपूर्वत्वेनोच्चरितवर्णानां तन्मध्यस्थितानां स्वस्य च संज्ञाया विधायकेन स्वौजसमौट्छष्टा..." इत्यादिसूत्रस्थान्त्यपकारस्यापि "हलन्त्यम्" इति सूत्रविहितेत्संज्ञावत्त्वात्तद्विशिष्टस्यादेस्सुकारस्य तत्सूत्रमध्यपठितानामौजसादीनां स्वस्य च बोधकत्वं ज्ञापितमिति सुप्पदं स्वाद्येकविंशतिप्रत्ययसंज्ञकमित्यर्थः। प्रत्येकं स्वादीनामवयवत्वस्वरूपं लवत्वं बाधितमित्यतस्समुदायापन्नानामि**त्युक्तम्। भावघञन्तसमुदायपदस्य धर्म्मबोधकत्वात्तदापन्नत्वं तद्विशिष्टत्वं स्वादीनामुपपन्नं बोध्यम्। शब्दस्य द्रव्यत्वे लवत्वमवयवत्वम्, अन्यथा तु समुदायघटकत्वम्। **खण्डत्वयोगादि**ति। सु औ जसां सूत्रे प्रथमखण्डत्वं प्रथमोपात्तत्वम्। एवममादीनां तदुत्तरोपात्तत्वेन द्वितीयखण्डत्वमित्येवं क्रमेण तेषां प्रथमादिसंज्ञान्वर्थेत्यर्थः। ३९।

तेषां सप्तानामपि त्रिकाणां प्रत्येकस्य त्रयो लवास्सु औ जसादयः "सुपः" इति सूत्रविहितैकवचनद्विवचनसंज्ञकाः क्रमेणैकत्वादिबोधका इत्याह—**ऐक्यद्वित्वे**ति। **प्रतिपादका** इति। "द्व्येकयोर्द्विवचनैकवचने" "बहुषु बहुवचनम्" इति सूत्राभ्या तत्तत्सङ्ख्यायामेव स्वादीना सप्तत्रिकाणा विधानादिति भावः। ४०।

**सप्तकानुगता धर्म्मा न लभ्यन्ते यतस्त्रयः ।**
**अतस्सुत्वादिनैतेषां   सङ्ख्यावाचकतेष्यते ॥४१॥**

तेषां वचनानामेकत्वादिवाचकत्वं सुत्वादिना, न तु स्वमौट्टाप्रभृतिसप्तकानुगतधर्म्मेण, तस्यानुगतस्यानतिप्रसक्तस्य लघोर्न्नियमतो ज्ञायमानस्य दुर्लभत्वात् । एकवचनादिपरिभाषाविशेषविषयत्वाज्ञानेपि स्वादिश्रवणमात्रादेकत्वावगमात् ।४१।

**अन्यधर्म्मं पुरस्कृत्य वाचकत्वग्रहं प्रति ।**
**अन्यधर्म्मावलीढस्य नाकाङ्क्षा सहकारिणी ॥४२॥**

तेषां वाचकतावच्छेदकं निरूपयितुमाह—**सप्तकानुगते**ति । **सप्तकं** सु अम् टा ङे ङसि ङस् ङि इत्येकम्, औ औट् भ्याम् भ्याम् भ्याम् ओस् ओस् इति द्वितीयम्, जस् शस् भिस् भ्यस् भ्यस् आम् सुप् इति तृतीयं सप्तकम्, तत्प्रत्येकानुगतास्त्रयो धर्म्मा यतो न लभ्यन्त इत्यर्थः। कारिकास्थमनुगतपदमनतिप्रसक्तलध्वादिपरमित्याशयेनाह—**तस्यानुगतस्ये**ति । प्रमेयत्वादीनामनुगतत्वेप्यतिप्रसक्तत्वम्, तत्प्रत्येकसप्तकान्यतमत्वस्यानुगतानतिप्रसक्तत्वेपि भेदसप्तकघटिततया गुरुत्वम्, सङ्केतसंसर्गेणैकवचनपदवत्त्वस्यानुगतानतिप्रसक्तलघुत्वेपि तज्ज्ञानस्य शाब्दबोधात्पूर्वमनावश्यकतया न तेषामेकत्वादिवाचकतावच्छेदकत्वसम्भव इति भावः । ४१ ।

ननु "सुपः" इति सूत्रेणैकवचनत्वादीनां सुत्वाद्यवच्छेदेन ग्राहितत्वाद् घट इत्यादौ स्वादेः स्मरणे तत्रैकवचनत्वमप्यवश्यमेव ज्ञायत इति तस्यैवैकत्ववाचकतावच्छेदकत्वसम्भवात्सुत्वादीनामनेकेषां तत्त्वं नोचितमित्यत आह—**अन्यधर्म्ममि**ति । **अन्यधर्म्मं** सुत्वादिभिन्नमेकवचनत्वादिकम् । **अन्यधर्म्मा-**

[1]स्वादिसप्तकतिबादिषट्कसाधारणैकवचनत्वावच्छिन्नस्यैकत्ववाचकत्वग्रहजनितेन पदार्थस्मरणेन जन्यमानां [2]पदार्थानामन्वयबुद्धिं न सुत्वावच्छेदेन प्रातिपदिकसाकाङ्क्षत्वबुद्धिर्जनयितुमर्हति, यद्धर्म्मसामानाधिकरण्येनाकाङ्क्षाप्रतिसन्धानं तद्धर्म्मावच्छिन्नवृत्तिज्ञानजनितपदार्थोपस्थितेरेव शाब्दबोधाङ्गत्वात्, अन्यथा सुत्वावच्छेदेनैकत्ववाचकत्वाभावग्रहदशायां सुबन्तरजनित एकत्वस्मरणे घट एक इति शाब्दजननप्रसङ्गात्। सुत्वावच्छेदेनैकवचनत्वादेर्ग्रहस्यापि कारणत्वाभ्युपगमे गौरवात्।

**वलीढस्य** एकवचनत्वादिभिन्नसुत्वादिधर्म्मावच्छिन्नस्य। **न जनयितुमर्ह**तीत्यत्र हेतुमाह—**यद्धर्म्मसामानाधिकरण्येने**ति। **अन्यथा** एकधर्म्मसामानाधिकरण्येनाकाङ्क्षाज्ञानस्यान्यधर्म्मावच्छेदेन वृत्तिज्ञानजन्यपदार्थस्मरणसहकारित्वोपगमे। **शाब्दजननप्रसङ्गादि**ति। सुन्नैकत्ववाचक इति बाधनिश्चयस्यैकवचनमेकत्ववाचकमिति बुद्धिविरोधित्वविरहेण तादृशबाधनिश्चयकालेप्येकत्ववाचकताज्ञानसम्भवादित्याशयः। घट एक इति बोधे सुत्वावच्छेदेनैकवचनत्वज्ञानमपि कारणं वाच्यम्, तथा सत्युक्तबाधनिश्चयस्यैकवचनं सुरेकत्ववाचकमेकवचनमित्याकारकैकवचनत्वावच्छेदेनैकत्ववाचकताज्ञानप्रतिबन्धकतया तदानीं तादृशवाचकतायाः सावेकवचनत्वस्य च ज्ञातुमशक्यतया नोक्तान्वयबोधापत्तिः, एकस्मिन्नप्येकवचने तादृशवाचकताया बाधनिश्चये एकवचनत्वावच्छेदेन तस्या ज्ञानस्यानुभवविरुद्धत्वादित्यपि न सम्भवतीत्याह—**सुत्वावच्छेदेनैके**ति। **गौरवादि**ति। सुत्वादीनां वाचकतावच्छेदकत्वे तादृशकारणताया अकल्पनेन लाघवमिति भावः।

---

१ प्रकृति ० इत्यधिकः पाठः मु० पु० ।

२ पदार्थानाम् इति मु० पु० ना० ।

**ननु व्याकरणेन सुत्वावच्छेदेनैकवचनत्वं ग्राहितमिति श्रोत्रोपस्थितेन सुत्वेन सावेकवचनत्वं गृह्यते । तत्सामानाधिकरण्येन घटपदाकाङ्क्षा तदवच्छिन्नवृत्तिज्ञानेन चैकत्वं [1]स्मरणीयमिति [2]सूपपदो घट एक इत्यन्वयबोध इति चेत् ?**

**एवं सत्यमरमारभ्य देवतापर्य्यन्तं कोशपठितानां नाम्नां तद्गुण-**

असति बाधके विधेयान्वयस्योद्देश्यतावच्छेदकावच्छेदेनैव व्युत्पत्तिसिद्धतया "सुपः" इति सूत्रेणैवचनादिसंज्ञायाः सुत्वाद्यवच्छेदेनैव जाततया सुत्वव्यापकत्वस्यैकवचनत्वे ग्रहे घट इति श्रवणे घटपदोत्तरवर्त्तिनि सौ सुत्वस्य श्रावणप्रत्यक्षे धूमव्यापकत्वस्य वह्नौ ग्रहे धूमस्य पर्वतादौ प्रत्यक्षे वह्निज्ञानवत् सावप्येकवचनत्वावगतिरावश्यकीति सुत्वस्य वाचकतानवच्छेदकत्वेपि न घट एक इत्यन्वयबोधानुपपत्तिर्न्न वा सुत्वावच्छेदेनैकत्ववाचकत्वस्य बाधनिश्चये तादृशशाब्दबोधापत्तिरित्याशङ्कते—**नन्वित्या**दिना । **व्याकरणेन** "सुपः" इति पाणिनीयसूत्रेण । **सुत्वेने**ति हेतुनेति शेषः । **गृह्यते** अनुमीयते । **तत्सामानाधिकरण्येन** एकवचनत्वसामानाधिकरण्येन । पटपदादिप्रकृतिके स्वादौ घटपदाकाङ्क्षाज्ञानस्य नियमतो भ्रमत्वात्सामानाधिकरण्येनैवाकाङ्क्षाज्ञानस्य शाब्दबोधोपयोगित्वम्, न तु वाचकतावच्छेदकावच्छेदेन । वृत्तिज्ञानन्तु वाचकतावच्छेदकीभूतधर्म्मावच्छेद्यत्वावगाह्येव तथेति बोध्यम् । **सूपपद** इति । सावेकवचनत्वग्रहविशिष्टस्य सुत्वावच्छेदेनैकत्ववाचकत्वाभावनिश्चयस्य एकवचनत्वावच्छेदेनैकत्ववाचकताग्रहविरोधितया तदानीं तादृशबोधापत्तिरपि न सम्भवतीति बोध्यम् ।

आधुनिकसङ्केतस्यैव नित्यसङ्केतग्राहकत्वेनुपपत्ति दर्शयति—**एवं सत्यमरमारभ्ये**ति । अमरसिंहकृतनामलिङ्गानुशासने "अमरा निर्जरा देवाः" इत्या-

---

१ स्मार्य्यः इति मु० पु० पा० ।

२ सूपपादः इति मु० पु० पा० ।

पठितत्वस्वरूपानुगतपुरस्कारेणैव देवतावाचकत्वसम्भवात्पर्य्यायाणां प्रत्येकं वाचकत्वानुपपत्तिः। कोशकारपुरुषपठितत्वादि न नित्यसङ्केतविषयो भवितुमर्हतीति चेत्, पाणिनिपरिभाषितत्वादिरपि न तथा स्यात्।

नन्वमरादौ सङ्केतग्राहकेण कोशेन षड्विंशतिवृत्तिधर्म्मो नोपस्थापितो यदवच्छेदेन देवतावाचकत्वं प्रतीयेत, "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रन्तु एकवचनपरिभाषाप्रवृत्तिनिमित्तानुगतधर्म्मावच्छेदेनैकत्वं बोधयतीति चेत्? स्यादेवम्, यदि पाणिनीयपरिभाषाया अनुगतेन

रभ्य "देवताः स्त्रियाम्" इत्यन्तकारिकाभिः पठितानाममरादिनाम्नामित्यर्थः। **वाचकत्वानुपपत्तिरि**ति। अमरापदत्वेनेन्द्रादिवाचकत्वानुपपत्तिरित्यर्थः। तेन तद्गणपठितत्वस्वरूपवाचकतावच्छेदकस्यामरादिपदे एव सत्त्वात्तेन रूपेण वाचकत्वानुपपत्तिविरहेऽपि न क्षतिः। अमरसिंहादिपठितत्वस्य नित्यसङ्केतविषयत्वाभावान्न वाचकतावच्छेदकतेत्यमरादिपदानां प्रत्येकं वाचकत्वानुपपत्तिवारणे तु पाणिनिपरिभाषाविषयत्वस्यापि तथात्वविरहान्नैकवचनत्वस्याप्येकत्ववाचकतावच्छेदकत्वमित्याह—**कोशकारे**ति।

ननु यः कश्चिद्धर्म्मो येन केनापि परिभाषितो न वाचकतावच्छेदकः, किन्त्वतीन्द्रियनित्यसङ्केतस्य ग्राहको यो व्याकरणादिस्तेन यादृशधर्म्मावच्छेदेन येषां पदानां तादृशार्थवाचकता ज्ञापिता तस्यैव धर्म्मस्य तत्पदनिरूपितनित्यसङ्केतविषयतावच्छेदकत्वमिति नामलिङ्गानुशासनस्य नित्यसङ्केतग्राहकत्वेऽप्यमरादिदेवतापर्य्यन्तगणपठितत्वावच्छेदेनामरादिपदानां वाचकताया अज्ञापनान्न तस्य देवतावाचकतावच्छेदकत्वम्, एकवचनत्वावच्छेदेन च स्वादीनामेकत्ववाचकत्वं नित्यसङ्केतग्राहकेण व्याकरणेन ज्ञापितमिति तस्यैकत्ववाचकतावच्छेदकत्वमुपपद्यतेत्याशङ्क्य निराकुरुते—**नन्वमरादावि**त्यादिना। **अमरादौ** अमरनिर्जरपदे। **स्यादेवमि**ति। **एवं** पूर्वोक्तप्रकारेणैकवचनत्वादीनामेकत्वादिवाचकत्वं **स्या**द्यदि प्रवृत्तिः स्यादित्यन्वयः। तथा च पाणिनीयपरिभाषाया

**निमित्तेन प्रवृत्तिः स्यात्, न त्वेवम्। तथाहि—प्रत्याहारास्तावच्छ्रूयमाणाः प्रत्येकवर्णवृत्तिभिरत्वादिभिरेव धर्म्मैरकारादिषु प्रवर्त्तन्ते, न तु तावदन्यतमत्वादिभिः।**

**अतएव अक् इक् प्रभृतिभिश्शब्दैरुपस्थापिता अको दीर्घप्लुतावपि बोधयन्ति। तेन कुमारी आस्त इत्यादावचि परे यकारो युज्यते। तथाहि— इक्शब्देन इत्त्वेन ह्रस्वमात्रवृत्तिधर्म्मेणोपस्थित इः। तेन चाष्टादशभेदभिन्नस्वरसाधारणजात्यवच्छिन्नवाचकेन दीर्घादयोऽपि स्मार्य्यन्ते, द्विरेफपदस्मारितेन भ्रमरपदेनेव षट्चरणः।**

अनुगतवाचकतावच्छेदकधर्म्मग्राहकत्वविरहान्नोक्तप्रकारेणैकवचनत्वादीना तथात्वसिद्धिरिति भावः। पाणिनीयपरिभाषाया अनुगतवाचकतावच्छेदकग्राहकत्वाभावं साधयितुमादौ प्रत्याहाराणामनुगतधर्म्मैरच्त्वादिभिरकारादिवाचकत्वाभावं साधयति—**तथाही**ति। **तावदन्यतमत्वादिभिरि**ति। अकाराद्यन्यतमत्वादिभिरित्यर्थः। अच्त्वादिकमपि तावदन्यतमत्वादिरूपमेव, तेषामतिरिक्तत्वाभिप्रायेण च **आदिभि**रित्यादिपदेनाच्त्वादीनामेव ग्रहणम्।

**अतएव** प्रत्याहाराणामत्वादिनाकारादेरुपस्थापकत्वादेव। **अकः** अ इ उ ऋ ऌ वर्णाः। **दीर्घप्लुतौ** आकारादिकम्। **तेन** अक्पदादीर्घादीनामप्युपस्थापनेन। **यकारो युज्यत** इति। अन्यथाक्षरसमाम्नायपठितानां ह्रस्वाकारादीनामेवाक्पदेन ग्रहणस्य वक्ष्यमाणयुक्त्या व्यवस्थापनेनेक्पदेन दीर्घेकारस्याच्पदेन दीर्घाकारस्य ग्रहणासम्भवादिति भावः। **ह्रस्वमात्रवृत्तिधर्म्मेणे**ति। इत्त्वमित्यत्र तकारान्ताद् भावप्रत्ययेन "तपरस्तत्कालस्य" इति सूत्रेण ह्रस्वमात्रस्यैव तेन बोधनात। प्रत्याहाराणामक्षरसमाम्नायोक्तवर्णबोधकत्वस्यैव सिद्धान्तात्। **तेन** इकारेण। **अष्टादशभेदभिन्नः** सानुनासिकह्रस्वोदात्ताद्यष्टादशभेदभिन्नो य इकारस्वरस्तत्साधारण्या जात्येत्यर्थः। **स्मार्य्यन्ते** "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रेण तादृशेकारस्य स्वसवर्णाष्टादशविधेकारबोधकत्वज्ञापनात्तस्य दीर्घादीनां स्मारकत्वं बोध्यम्। **भ्रमरपदेनेवे**ति।

अयमाशयः—द्विरेफो गुञ्जतीत्यादौ द्विरेफपदात् षट्चरणप्राणिविशेषान्वयबोधस्य सर्वानुमतस्य न द्विरेफपदशक्त्या निर्वाहः, द्वौ रेफौ यत्रेति बहुव्रीहिसमासस्य तस्य समासशक्तिविद्वेषिभिः शक्तेरनुपगमात् । तदभावादेव लक्षणायाः शक्यसम्बन्धरूपाया अप्यसम्भव इति रेफपदस्य रत्वावच्छिन्नशक्तस्य रेफद्वयसम्बन्धिभ्रमरपदे लक्षणा । द्विपदं तादृशार्थे तात्पर्य्यग्राहकम् । तथा च द्विरेफपदलक्ष्यस्य भ्रमरपदस्य तादात्म्येन भ्रमरत्वावच्छिन्नस्वशक्यसम्बन्धेन भ्रमरत्वावच्छिन्ने लक्षणा । ततश्च तादृशप्राणिविशेषस्यान्वयबोधः । एतदर्थमेव लक्षितलक्षणाभिधं वृत्त्यन्तरमङ्गीक्रियते, साक्षाल्लक्षणायास्तत्रासम्भवेन लक्षितस्य भ्रमरस्य लक्षणेति तदर्थात् । न च द्विरेफपदलक्षितेन भ्रमरपदेन षट्चरणस्य शक्त्यैव बोधसम्भवात्तस्य लक्षणाभ्युपगमो निरर्थकः । उक्तलक्षणया रेफद्वय-सम्बन्धित्वेन भ्रमरपदस्य ज्ञानेपि भ्रमरपदत्वेन तस्याज्ञानाच्छक्ततावच्छेदक-स्याज्ञाने शक्तिज्ञानासम्भव इति तु न वाच्यम् । रेफद्वयसम्बन्धित्वेनाखिलानां तथाभूतानां बर्बरस्रस्तरप्रस्तरभ्रमरादिपदाना ज्ञाने सति भ्रमरपदत्वेनापि ज्ञानस्य सम्भवादिति वाच्यम्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व-नियमात्षट्चरणस्य भ्रमरपदार्थत्वे द्विरेफपदार्थत्वविरहेण तत्र द्विरेफपदोत्तर-विभक्त्यर्थसङ्ख्यादीनामन्वयानापत्तेः । लक्षितलक्षणोपगमे च तस्या द्विरेफ-पदनिरूपितत्वात्तस्य द्विरेफपदार्थत्वानपायात् । न च "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा" इति नियमादेकस्यैव भ्रमरत्वस्य कथं शक्यलक्ष्यतयो-रवच्छेदकत्वमिति वाच्यम्, एकरूपेण शक्तिलक्षणयोरुभयोरप्युपगमे शक्त्यैव बोधस्य सम्भवाल्लक्षणाकल्पनं निष्फलमित्यस्यैव तादृशनियमे बीजतया प्रकृते चोक्तरीत्या शक्त्या बोधस्यासम्भवादेव तादृशबीजाभावादेकरूपेण तयोः कल्पनायां विरोधाभावादिति प्राचीनमतम् ।

मिश्रास्तु शक्यसम्बन्धरूपलक्षणाघटकः सम्बन्धस्साक्षात्परम्परासाधारणः । तथा च स्वशक्यप्रतियोगिकपरस्परासम्बन्धरूपलक्षणैव लक्षितलक्षणा, न तु सा वृत्त्यन्तरम् । एवं सति द्विरेफपदस्य स्वघटकरेफपदलक्ष्यभ्रमरपदो-पस्थाप्यत्वसम्बन्धेनैव षट्चरणलक्षकत्वमित्याहुः ।

इक्पदेनैव वा स्ववाच्यवाच्यत्वरूपाजहल्लक्षणयाष्टादशभेदा उपस्थाप्यन्ते, इक्पदस्य ह्रस्वभिन्नेपरिभाषितत्वात् । "आदिरन्त्येन सहेता"

नवीनास्तु द्विरेफपदस्योक्तव्युत्पत्तिलभ्यरेफद्वयसम्बन्धित्वमात्रावच्छिन्न-लक्षकत्वे बर्बरादिपदेष्वपि तादृशलक्ष्यतावच्छेदकस्य सत्त्वात्तत्पदेन नियमतो भ्रमरपदस्यैवोपस्थितिरित्यस्य वक्तुमशक्यतया द्विरेफपदस्य भ्रमरपदपर्य्यायत्वाभावप्रसङ्गाद् बर्बरादिपदार्थानामपि तत्पदेन बोधप्रसङ्ग इति तात्पर्य्यग्राहकद्विपदसमभिव्याहृतरेफपदलक्ष्यरेफद्वयघटितपदसम्बन्धिनो रेफपदलक्ष्यरेफसम्बन्ध्येकदेशे रेफे द्विपदार्थस्य तादात्म्येनान्वयाद् द्वितयरेफ-घटितपदसम्बन्धिनो वा तादृशयोगलभ्यस्यार्थस्य रूढ्यर्थे भ्रमरत्वजात्यवच्छिन्ने तादात्म्येनान्वय इत्यस्यैवोपगन्तव्यतया पङ्कजादिपदवद् द्विरेफपदमपि योग-रूढमेवेत्याहुः ।

तत्र सर्वत्रैव यथा द्विरेफपदेन भ्रमरपदस्मरणद्वारा षट्चरणस्य स्मरणम्, तथेगादिपदेभ्योपि लक्षितलक्षणादिना ह्रस्वेकारादिस्मरणद्वारैव दीर्घादीनां तत्तद्भेदानां स्मरणमिति । द्विरेफपदस्य समासतया शक्तिमत्त्व-विरहेपीगादिपदानां तत्सत्त्वे बाधकविरहात्स्ववाच्यत्वावच्छिन्ने लक्षणयैव ततो दीर्घादीनां स्मरणं सम्भवतीत्याशयेनाह—**इक्पदेनैव** वेति । **अजहल्लक्षणये**ति । स्वार्थस्य ह्रस्वस्यापि ततो बोधात्तल्लक्षणाया अजहत्स्वार्थत्वम् । नन्विगादि-पदानां दीर्घादिष्वपि शक्तिरेवास्ति, किमर्थमुक्तप्रकारादरेणायासाधिक्यमित्यत-स्तेषां तथात्वविरहमुपपादयति—**इक्पदस्ये**ति । अपरिभाषितत्वे हेतुमाह—**आदिरन्त्येने**ति । एतत्सूत्रस्य "अइउण्..." इत्यादिचतुर्दशमाहेश्वरसूत्रघटक-वर्णमात्रबोधिकायाः संज्ञाया विधायकत्वम्, न तु दीर्घाकारादीनामपि, "अइ-उण्..." इत्यादिसूत्रज्ञानात्पूर्वमनुपदिष्टानां तेषामज्ञानात् । अणुदित्सूत्रतस्तद्-वाक्यार्थज्ञानानन्तरमेव तेषां ज्ञानं तत्सूत्रतो बोधश्च "आदिरन्त्येन..." इति सूत्रार्थज्ञानोत्तरमेव, अण्पदपरिभाषायास्तत्पूर्वमज्ञानात् "आदिरन्त्येन..." इति सूत्रार्थज्ञानञ्चेत्संज्ञाविधायकद्वितीय "हलन्त्यम्" इति सूत्रार्थबोधानन्तरम् ।

**इत्यनेन माहेश्वरसूत्रपरिपठितह्रस्वानामेव प्रत्याहारप्रत्याय्यत्वव्युत्पादनात्। "अणुदित्सवर्णस्य चाप्रत्ययः" इत्यनेनापि अत्वाद्यसाधारणधर्म्मैरणां सवर्णग्राहकत्वमुच्यते; अन्यथा ह्रस्वशब्दोपात्तानामणामपि तथात्वप्रसङ्गात्।**

**न च श्रोत्रोपस्थितानामणामेव सवर्णग्राहकत्वम्, न तु शब्दान्तरस्मृतानामिति वाच्यम्, इक्पदोपात्तानामप्यतथात्वप्रसङ्गात्।**

तत्सूत्रार्थबोधश्च वर्णोपदेशकचतुर्दशमाहेश्वरसूत्रज्ञानानन्तरमेवेति तत्पूर्वं कथं दीर्घादीनां ज्ञानं स्याद्येनेगापदेभ्यो दीर्घादीनां बोधः स्यादिति भावः। ननु मा भूत् "आदिरन्त्येन सहेता" इति सूत्रस्य दीर्घादिसाधारण्येन बोधकत्वम्, "अणुदित्सवर्णस्य चाप्रत्ययः" इत्यस्याणां सवर्णग्राहकत्वबोधकत्वात्तेनैवेगादिपदानां दीर्घादिबोधकत्वं ज्ञापनीयमित्यपि निराकुरुते—**अणुदिदि**ति। अस्य सूत्रस्य येन केनचिद्धर्म्मेणाप्युपस्थितानामणां सवर्णग्राहकताप्रतिपादकत्वे "ह्रस्वनद्यापो नुट्" इत्यत्र ह्रस्वपदेनोपस्थितानामप्यणां सवर्णग्राहकत्वप्रसङ्गेन हाहां पप्यामित्यादावपि नुट्प्रसङ्गः स्यादण्त्वेनोपस्थितानां तथात्वे 'आद्गुणः" इत्यत्रात्वेनोपस्थितस्याकारस्य तथात्वानुपपत्तिरित्यत्वादिनैवोपस्थितानामेवाणां तथात्वं तत्सूत्रं ग्राहयतीति भावः।

नन्वणुदित्सूत्रस्य श्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मप्रकारकोपस्थितिविशेष्याणामेव सवर्णग्राहकताबोधकत्वम्, अतो न ह्रस्वपदोपस्थितानां तेषां तथात्वमित्यप्याशङ्क्य निराकुरुते—**न चे**ति। **अतथात्वप्रसङ्गादि**ति। "इको यणचि..." इत्यादिश्रवणे श्रावणप्रत्यक्षीयविषयतावच्छेदकताया इकाराव्यवहितोत्तरत्वविशिष्टकत्वे एव सत्त्वात्तत्प्रकारताकोपस्थितिविशेष्यत्वस्य तादृशककारे एव सत्त्वम्, न तूकारादिष्वपीति भावः। नन्विगादिपदानामष्टादशविधेकारादिवृत्तीत्वजात्यैवाक्षरसमाम्नायोपदिष्टवर्णानामुपस्थापकत्वम्, न तु ह्रस्वमात्रवृत्तिजात्येति तादृशजातिस्वरूपसामान्यलक्षणाप्रत्यासत्त्यैवेगादिपदादष्टादशानामुपस्थितिर्न्न तु ह्रस्वेकारपदस्याष्टादशसु शक्तिरित्यत्रैवाणुदित्सूत्रस्य तात्पर्य्यम्।

**न चेकारोपस्थितिकालेऽष्टादशसाधारणजातेरप्युपस्थितत्वात्तया सामान्यलक्षणयाष्टादशानामुपस्थितिर्न्न तु ह्रस्वानामष्टादशसु शक्तिरित्यत्राणुदित्सूत्रस्य तात्पर्य्यमिति वाच्यम्, एवं सति वृत्त्या पदानुपस्थितेषु तेषु षष्ठ्यर्थानन्वयप्रसङ्गात्। इक्प्रभृतिना प्रत्याहारेण ह्रस्वमात्रवृत्तिधर्म्मावच्छिन्नोपस्थित्यसम्भवात्।**

तथा चेगादिपदेभ्योऽष्टादशानां साक्षादेवोपस्थितेः पाणिनिपरिभाषाया अनुगतप्रवृत्तिनिमित्तग्राहकत्वं निराबाधमित्याशङ्कते—**न चेकारोपस्थिती**त्यादिना । **न तु ह्रस्वानामि**ति। तेषामष्टादशसु शक्तेः सत्त्वतयैवाष्टादशानामप्युपस्थितिसम्भवात्तत्सूत्रस्य वैयर्थ्यमेव स्यादिति भावः। शङ्कां निरस्यति—**एवं सती**ति। वृत्त्याष्टादशसाधारणजातीनामुपस्थितौ ताभिरष्टादशानामुपस्थितिस्वीकारे । **वृत्त्या** सङ्केतलक्षणान्यतररूपया । **षष्ठ्यर्थानन्वयप्रसङ्गादि**ति। प्रकृतिवृत्तिज्ञानजन्योपस्थितिविषयेष्वेव प्रत्ययार्थान्वयस्य व्युत्पत्तिसिद्धत्वेन "इको यणचि..." इत्यादिसूत्रघटकषष्ठ्यर्थसम्बन्धस्य स्वप्रकृतीक्पदनिरूपितवृत्तिज्ञानजन्योपस्थितिविषयत्वविरहिषु दीर्घादिष्वन्वयस्याभावप्रसङ्गेन कुमारी आस्त इत्यादौ दीर्घाकारे परे दीर्घेकारस्य यण् न स्यादिति भावः। यथाकथञ्चित्प्रकृत्युपस्थितेष्वेव प्रत्ययार्थान्वयस्वीकारे दोषान्तराणां सत्त्वेपि स्फुटतया तदुपेक्ष्य प्रकृताणुदित्सूत्रस्य वैयर्थ्यमपि दर्शयति—**इक्प्रभृतिने**ति। उक्तप्रकारेणेक्पदस्य दीर्घादिसाधारणजातिमत्त्वेनोपस्थापकत्वाङ्गीकारेणादिपदस्यापि तेनैव रूपेणोपस्थापकत्वे दीर्घादीनामप्यणुदित्सूत्रं विनैवाकारादिपदेभ्य उपस्थितेस्सम्भवात्तत्सूत्रस्य वैयर्थ्यमेव स्यादिति नोक्तप्रकारेण दीर्घादीनामुपस्थापकत्वमिगादिपदानां पाणिन्यभिमतमिति भावः।

माहेश्वरसूत्रघटकाकारादिषु द्वयी जातिरेका ह्रस्वमात्रवृत्तिरपरा च दीर्घप्लुतसाधारणी। तत्राकारादिपदशक्यतावच्छेदकताया विनिगमनाविरहेणोभयत्र प्राप्तौ द्वितीयस्या एव माहेश्वरसूत्रादिजन्योपस्थितिप्रकारत्वम्, न तु प्रथमाया इत्ये-

ननु माहेश्वरसूत्रपठितेषु ह्रस्वेषु दीर्घादिसाधारण्या अपि जातेः श्रोत्रोपस्थितत्वात्तस्या एव प्रत्येकवर्णानामणादिप्रत्याहाराणाञ्च प्रवृत्ति-निमित्ततावोधकमणुदित्सवर्णस्य चेति सूत्रान्नियमार्थम्, नानाजातीनां श्रोत्रोपस्थिततया तदेकतरपरिच्छेदकत्वादिति चेत्; एवमपि श्रोत्रानु-पस्थितानि तावदन्यतत्वादीन्यादाय परिभाषाप्रवृत्तेरसम्भवात्।

एवं सुप्प्रत्याहारोपि सुत्वादिनैव बोधको न तु निमित्तान्तरेण, नितरां श्रोत्रोपस्थितान् वर्णान् तच्छब्देन परामृष्य "तान्येकवचन-द्विवचनबहुवचनान्येकशः" इत्यधिकृत्य "सुपः" इति सूत्रं प्रत्येक-

तत्परिसङ्ख्यायकमेव "आणुदित्" सूत्रमिति न तस्य वैयर्थ्यमित्याशङ्कते—**नन्वि**ति। **नियमार्थमि**ति। नियमपदं परिसङ्ख्यापरम्, न तु यथाश्रुतम्, "नियमः पाक्षिके सति..." इत्यादिलक्षितस्य तस्य प्रकृतेसम्भवादुभयोर्जात्योः पाक्षिकशक्यता-वच्छेदकत्वस्य केनाप्यप्रापणात्, परिसङ्ख्यायाश्चोभयत्र प्राप्तावेव प्रसरात्। एव-मपि प्रकृते न कोप्युपकार इत्याह—**एवमपी**ति। **प्रवृत्तेरसम्भवादि**ति। अन्यतमत्वस्य श्रावणप्रत्यक्षविषयतावच्छेदकत्वविरहादिति भावः।

एतावतेगादिप्रत्याहाराणामित्वादिजातिभिरेवेकाराद्युपस्थापकत्वं प्रसाध्य प्रत्याहारपरिभाषाया अननुगतप्रवृत्तिनिमित्तकत्वे सुप्प्रत्याहारस्यापि सुत्वादिनैव स्वाद्युपस्थापकतयैकवचनत्वादिकं नैकत्वादिवाचकतावच्छेदकमिति पूर्वोक्तं साधयितुमाह—**एवमि**ति। **निमित्तान्तरेण** एकवचनत्वादिना। अत्र हेतुमाह—**नितरामि**त्यादिना। **नितरामि**ति निपातसमुदायो निश्चयार्थकः। **श्रोत्रोपस्थितानि**ति। "स्वौजस्..." इत्यादिसूत्रश्रवणानन्तरं सु-औ-जसादीनां निश्चयेनोपस्थितिविषयत्वात्तेषामेव तच्छब्दपरामर्शनीयत्वम्, न तु तावदन्यतम-त्वादीनामनुपस्थितानामिति भावः। **प्रत्येकधर्म्मावच्छिन्नानामि**ति। तत्पद-जन्योपस्थितिप्रकारीभूतसुत्वादिधर्म्मावच्छिन्नानामित्यर्थः। "द्व्येकयोः..." इत्यादि सूत्रमपि सुत्वादिनैवैकत्वादिवाचकताग्राहकम्, न त्वेकवचनत्वादिना,

धर्म्मावच्छिन्नानामेकवचनादिपदवाच्यतां ग्राहयति । येन रूपेणैकवचनपरिभाषाविषयत्वग्रहस्तद्रूपेणैकवचनशब्दादुपस्थिते सावेकत्ववाचकताग्राहकं "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रं कदाचिदेकवचनपरिभाषाप्रवृत्तिनिमित्तत्वेन स्वरूपसतोपलक्षणेनानुगतीकृतेषु सुत्वादिषु युगपदेव वाचकतावच्छेदकत्वं ग्राहयेदिति न वाक्यभेदः ।

वस्तुतो द्व्येकयोरित्यतिदेशवाक्यमेकवचनपरिभाषितत्वोपलक्षिते धर्म्मिण्येकत्ववाचकतां बोधयदेकवचनपरिभाषाविषयः सुरिति सुत्वा-

तस्यैकवचनपदपरिभाषाविषयतानवच्छेदकत्वादित्याह--**येन रूपेणैकवचने**ति । नन्वेवं सुरेकत्ववाचकः अम् एकत्ववाचक इत्यादिप्रत्येकधर्म्मावच्छिन्नवाचकताग्रह एव "द्व्येकयोः..." इत्यादिसूत्रजन्यः फलितः । तथा च विशेष्यतावच्छेदकसुत्वादीना भेदेनानेकमुख्यविशेष्यताकान्वयबोधजनकस्योक्तसूत्रस्य भिन्नवाक्यत्वप्रसङ्ग इत्यत आह—**कदाचिदि**ति । सुत्वाम्त्वादिष्वेकवचनपरिभाषाविषयतावच्छेदकत्वग्रहदशायाम्, न तु तद्विरहदशायामित्यर्थः । **ग्राहयेदि**ति । एकवचनपरिभाषाविषयतावच्छेदकधर्म्मवानेकत्ववाचक इत्याकारकं बोधं जनयेदित्यर्थः । **न वाक्यभेद** इति । विशेष्यतावच्छेदकसुत्वादीनां भेदेपि विशेष्यतावच्छेदकतावच्छेदकताया ऐक्यादित्याशयः ।

उक्तबोधस्य सुत्वादौ तादृशविषयतावच्छेदकत्वग्रहसापेक्षतया तद्विरहवतस्तदुत्पत्त्यसम्भवात्तादृशग्रहसहकारेणैतत्सूत्रस्यैकत्वादिवाचकताया उपमापकत्वमेव, न तु तदवच्छेदकधर्म्मग्राहकत्वमित्याह--**वस्तुत** इत्यादिना । **अतिदेशवाक्यमि**ति । यथा गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यं साक्षाद् गवयपदशक्यतावच्छेदकत्वपरिच्छेदकम्, तथैवेदमपि सूत्रमिति भावः । तर्हि कथं सुत्वावच्छेदेनैकत्ववाचकत्वज्ञानं येन सुत्वे वाचकतावच्छेदकत्वं गृह्येतेत्यत आह—**एकवचने**ति । यथा गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थानुभवजन्यसंस्कारवतस्तादृशपिण्डदर्शने तादृशवाक्यार्थस्मरणे अयं गोसदृश इति ज्ञाने

वच्छेदेनोपलक्षणधर्म्मवत्ताग्रहसहकारेण सुत्वावच्छेदेनैकत्ववाचकतामुपमापयति, न तु साक्षाच्छक्ततावच्छेदकधर्म्मपरिग्रहम्[१]। अत एकवचनपरिभाषाणामननुगतप्रवृत्तिनिमित्तकत्वेपि न क्षतिः।४२।

**एकत्वमेकवचनैस्सदृशान्तरवर्जितम्।**
**आख्यायते न हि द्वाभ्यां पशुभ्यामिज्यते शिवः॥४३॥**

"पशुना रुद्रं यजेत..." इत्यादौ कर्म्मार्थतृतीयैकवचनेन सजा-

च गवयो गवयपदवाच्य इत्याकारिका गवयपदवाच्यत्वोपमितिः, तथैव द्व्येकयोः—इति सूत्रार्थज्ञानजन्यसंस्कारवतस्सुपदश्रवणे तादृशातिदेशवाक्यार्थस्मरणे एकवचनपरिभाषाविषयः सुरिति ज्ञाने चैकत्ववाचकः सुरिति सुत्वाद्यवच्छेदेनैवैकत्ववाचकताग्रह इति भावः। **अतः** दर्शितरीत्या तत्सूत्रस्य परम्परया वाचकत्वोपमापकत्वात्। **न क्षतिः** वाक्यभेदप्रसङ्गो द्वितीयबोधस्यासम्भवश्च नेत्यर्थः। ४२।

एवमेकवचनत्वस्वाद्यन्यतमत्वादीनामेकत्ववाचत्वाभावे सुत्वादीनां तदवच्छेदकत्वे च व्यवस्थापितेपि सामान्यत एकत्वस्य स्वादिवाच्यत्वे तस्य केवलान्वयितयाव्यावर्त्तकत्वात् "पशुना रुद्रं यजेत..." इत्यादिविधिवाक्यात् पशुद्वयादिकर्म्मकादपि यागाददृष्टसिद्धिप्रसङ्ग इत्यत आह—**एकत्वमि**ति। **सदृशान्तरेण** स्वभिन्नेन स्वसजातीयेन **वर्जितं** तन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदक**मेकत्वमेकवचनैराख्यायते** अभिधीयते न त्वेकत्वमात्रं तथेत्यर्थः। **अत्र हेतुर्न ही**ति। "कर्म्मणः करणसंज्ञा सम्प्रदानस्य च कर्म्मसंज्ञा" इति वार्त्तिकेन कर्म्मीभूतस्य पशोः करणसंज्ञाविधानात्तत्र तृतीया कर्म्मार्थिकेत्याशयेनाह—**कर्म्मार्थे**ति। **सदृशान्तरवर्जितमि**त्यस्यार्थमाह—**सजातीये**ति। साजात्यस्यापि येन केनचिद्धर्म्मेण स्वप्रकृत्यर्थतावच्छेदकधर्म्ममात्रेण वा विवक्षायां यागाकर्म्मण्यपि पशौ प्राणित्वादिना पशुत्वेन वा तद्यागव्यक्तिकर्म्म-

१ ० धर्म्मपरिच्छेदकम् इति मु० पु० पा०।
२ यजते इति मु० पु० पा०।

**जीयनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकमेकत्वमुच्यते । साजात्यञ्च यागव्यक्तिकर्म्मपशुत्वेन । तथा च यस्यां यागव्यक्तौ यत्पशुकर्म्मत्वस्यान्वयस्तत्र पशौ तद्यागव्यक्तिकर्म्मनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकैकत्वमेकवचनार्थः । तेन न द्विपशुकर्म्मको**

पशुसाजात्यस्य सत्त्वात्तन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं नैकस्मिन्नेकत्वे इत्यत आह—**साजात्यञ्चे**ति । यागकर्म्मपशुत्वेनेत्युक्तावपि पशुद्वयादिकर्म्मकयागकर्म्मत्वविशिष्टपशुत्वस्य पशुद्वय एव सत्त्वात्तन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकमेव प्रत्येकमेकत्वमित्यतो **यागव्यक्तीत्यु**क्तम् । एतच्चैकपशुकर्म्मकयागव्यक्तिकर्म्मत्वविशिष्टपशुत्वस्य पश्वन्तरे विरहान्नानुपपत्तिः । नन्वेवमपि पशुद्वयकर्म्मकस्यापि यागस्य यागव्यक्तित्वादुक्तानुपपत्तिस्तदवस्थैवेत्यत आह—**तथा चेति** । तथा च तत्तद्व्यक्तित्वेन यागादीनां साजात्यघटकत्वे च । **तत्र पशावि**ति । सप्तम्यर्थो निष्ठत्वं **तादृशप्रतियोगितानवच्छेदकैकत्व**मित्यनेनास्यान्वयः । **तेन** तादृशैकत्वस्यैकवचनार्थत्वेन । **यागः** अदृष्टसाधनमिति शेषः । पशुद्वयकर्म्मकयागव्यक्तौ पशुद्वयस्यैव कर्म्मत्वेनान्वयात्तद्यागव्यक्तिकर्म्मत्वविशिष्टपशुत्वस्य पशुद्वयेपि सत्त्वादेकनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्यापरपशुगतैकत्वे सत्त्वान्नैकस्याप्येकत्वस्य तादृशानवच्छेदकत्वमिति तद्यागव्यक्तेस्तादृशैकत्वविशिष्टपशुकर्म्मकत्वाभावान्नादृष्टसाधनत्वमिति भावः । निरुक्तसाजात्यघटितैकत्वस्यैकवचनसामान्यार्थत्वे अत्र घटोस्तीत्यादौ तादृशसाजात्याप्रसिद्धिप्रसङ्गात्समभिव्याहृततत्तत्पदार्थस्वप्रकृत्यर्थस्वार्थकर्म्मत्वादिघटितमेवैकत्वमेकवचनार्थो वाच्यः । तथा सत्येकवचनस्य नानार्थत्वप्रसङ्गस्तत्तत्पदार्थानामानन्त्यादसर्वज्ञदुर्ज्ञेयशक्तिकत्वप्रसङ्गश्चेत्यत एकत्वत्वावच्छिन्नमेवैकवचनार्थः । तस्य प्रकृत्यर्थे समवायमात्रं न संसर्गः, किन्तु समभिव्याहृततत्तत्पदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकव्यापकैकत्वादिव्यक्तिप्रतियोगिकत्वविशिष्ट एव समवायादिरित्यत एव पशुद्वयादिकर्म्मकयागादितो नादृष्टसिद्धिप्रसङ्गः । तादृशविशेषरूपावच्छिन्ना संसर्गता च तत्तदा-

**रुद्रसम्प्रदानको यागः । यागव्यक्तिकर्म्मपशुत्वव्यापकैकत्वव्यक्तिनिरूपितसंसर्गेणैकत्वं प्रकार इति तत्त्वम् । ४३ ।**

काङ्क्षाप्रयोज्यैवेति तत्तद्व्यक्तित्वादिना यागादेः पदानुपस्थितत्वेपि न क्षतिरित्याशयेनाह—**यागव्यक्ती**ति । यागादिपदमेतद्देशादीनामुपलक्षकम् । तेनात्र घटोस्तीत्यादावेतद्देशवृत्तित्वादिविशिष्टघटत्वादिव्यापकैकत्वप्रतियोगिकस्यैव समवायादेः संसर्गत्वेपि न न्यूनता। विशिष्टस्य शुद्धानतिरिक्तत्वेपि विशिष्टधर्म्मावच्छिन्नाधिकरणताया अतिरिक्तत्वान्नाखिलानां पशूनां तद्वत्त्वम्। **एकत्वव्यक्तिनिरूपितः** तत्तदेकत्वप्रतियोगिकः। **संसर्गः** समवायः स्वरूपो वा । तेन द्रव्यगतैकत्वस्य समवायेन गुणादिगतैकत्वस्य च तत्तद्व्यक्तित्वात्मकतया स्वरूपेण प्रकारत्वेपि न क्षतिः। पशुद्वयकर्म्मकयागव्यक्तिकर्म्मत्वविशिष्टपशुत्वस्य तदुभयस्मिन्नेव पशौ सत्त्वान्नैकस्याप्येकत्वस्य तादृशपशुत्वव्यापकतेति न स यागोदृष्टसाधनमिति भावः।

अथैवमप्येतद्देशे बहुघटसत्त्वदशायामत्र घटोस्तीति वाक्यस्य प्रामाणिकत्वे तदनुपपत्तिः, तत्रैतद्देशवृत्तित्वविशिष्टघटत्वव्यापकैकत्वप्रतियोगिकसमवायस्यैव प्रकारताघटकसंसर्गताया वक्तव्यतया तादृशघटत्वस्य तद्देशस्थितेष्वखिलेष्वेव घटेषु सत्त्वात्तद्व्यापकत्वस्यैकस्मिन्नप्येकत्वेभावादिति चेत्? न, तद्वाक्यस्य प्रामाणिकत्वे तदेकवचनार्थस्यैकत्वस्य तद्व्यक्तित्वात्मकस्य घटत्व एवान्वयोपगमादुक्तरीतेस्तत्राभावात्। अथवा "पशुना यजेत..." इत्यादावेकत्वविशिष्टान्यैकत्वमेवैकवचनार्थः । वैशिष्ट्यं(स्व-)तादात्म्यस्वाश्रयपशुकरणकयागकरणपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वाभ्याम्। पशुद्वयकरणकयागकरणत्वस्य पशुद्वय एव सत्त्वात्तदुभयमेकत्वं स्वविशिष्टमेव। यद्वा सङ्ख्यात्मकमेवैकत्वं तदेकवचनार्थः। समवायेन प्रकृत्यर्थान्वितस्य तस्य यागविशेषणीभूतपशुविशेषणतापन्नतया विशेषणतावच्छेदकत्वाद्विशिष्टवैशिष्ट्यबोधमर्य्यादया स्वाश्रयपशुकरणकावच्छिन्नप्रति[1]-

---

१ अत्र स्वाश्रयपशुकरणकत्ववत्त्व स्वावच्छिन्नप्रतियोगिताकभेदवत्पशुकरणकत्वाभाववत्त्वोभयसम्बन्धेन प्रकृत्यर्थान्वितैकवचनार्थैकत्वसङ्ख्याया यागेन्वयोभिप्रेतष्टीकाकर्त्तुरिति बोध्यम्।

**एवं द्वित्वं सजातीयान्तरशून्यं विभक्तितः ।
प्रतीयते सरस्वत्या न मेषैर्य्यजनं त्रिभिः ॥४४॥**

द्विवचनैरपि सजातीयनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकमेव द्वित्वं प्रत्याय्यते; अन्यथा "सारस्वतौ मेषौ भवतः" इत्यत्र त्रिभिर्म्मेषैस्सरस्वतीदेवताकयागस्य विध्यर्थबाधे क्रतुवैगुण्यानापत्तेः । सिद्धान्ते तु मेषकर्त्तृकभावनाक्षिप्तायां यस्यां भावनायां सरस्वतीदेवताकयोर्म्मेषयोः कर्म्मतयान्वयः, तद्भावनाकर्म्मपशुनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकं द्वित्वं द्विवचनाभिधेयं[1] बहुपशुकर्म्मकभावनायां विरुद्ध्यत इति द्वाभ्यां [2]क्रतुसाद्गुण्यम्, न तु त्रिभिः ।४४।

योगिताकभेदवत्पशुकरणकत्वाभाववत्त्वोभयसम्बन्धेन विशेष्यीभूते यागेऽन्वयान्नानेकपशुकरणकयागाददृष्टसिद्धिरित्यादिकं स्वयमूहनीयम् । ४३ ।

एवं द्वित्वमपि न द्वित्वत्वमात्रेणावादिद्विवचनशक्यम्, किन्तु तत्राप्युक्तरीतिरेवानुसरणीयेत्याह—**एवं द्वित्वमि**ति । अत्रोक्तरीत्यनुसरणे हेतुः—**सरस्वत्या** इति । **अन्यथे**ति । द्वित्वत्वमात्रेण द्वित्वस्य प्रत्याय्यत्वे इत्यर्थः । **विध्यर्थबाधे** इति । मेषत्रयादिष्वपि समवायेन द्वित्वस्य निराबाधतया मेषत्रयादिकर्म्मकस्यापि यागस्य मेषद्वयकर्म्मकतया तत्र विध्यर्थेष्टसाधनत्वस्य निराबाधत्वप्रसङ्गे सतीत्यर्थः । निरुक्तरीत्यनुसरणे मेषत्रयादिकर्म्मकयागस्येष्टसाधनत्वप्रसङ्गं वारयति—**सिद्धान्ते त्वि**त्यादिना । **भावनाक्षिप्तायामि**ति । मीमांसकमतेनेदम् । तैर्भावनाविशेष्यकस्यैवान्वयबोधस्योपगमान्मेषस्य कर्त्तृतया भवत्यर्थभावनायामन्वये उत्पन्नयोर्म्मेषयोरुत्पत्त्यनुकूलभावनाया देवतार्थकाणन्तसारस्वतपदार्थसरस्वतीदेवताकत्वस्य च तत्र भावनायां बाधात्तया भावनया यागभावनाक्षिप्यते । तत्रैव सरस्वतीदेवताकाभिन्नयोर्म्मेषयोः कर्म्मतयान्वय इति

---

१ ० विधेयम् इति मु० पु० पा० ।

२ क्रतुषाड्गुण्यम् इति मु० पु० पा० ।

प्रयोक्तृपुरुषजिज्ञासाविषयसङ्ख्यात्वावान्तरधर्म्मविशिष्टशक्तस्य[1] कति-शब्दस्य निर्विषयकत्वेनाबोधकत्वात्। ४५।

प्रायेण प्रकृतेरर्थे सुवर्थवचनान्वयः।
क्वचित्तदेकदेशेपि तात्पर्य्यादनुशासनात् ॥४६॥

द्रव्याणि गुणाः कर्म्माणीत्यादौ बहुत्वस्य, सौमित्रिवासुदेवा-वित्यादौ द्वित्वस्य, गगनं भगवानित्यादावेकत्वस्य, सुपा स्मारितस्य वचनार्थसङ्ख्यायाः प्रकृतिमुख्यार्थ एवान्वयः, न तु तदेकदेशे, द्रव्यत्वादौ बहुत्वस्य सुमित्रापुत्रत्वादौ द्वित्वस्य शब्दस्वरूपे गगनत्वे

श्वविशेष्यकगमनकर्त्तृत्वप्रकारकान्वयबोधवतापि पुरुषेण सङ्ख्यात्वव्याप्यधर्म्म-प्रकारकज्ञानविषयेच्छाबोधकस्य प्रयोगो निराबाधो दृश्यते। तत्र यदि जसा त्रित्वत्वप्रकारेण त्रित्वादीनामुपस्थितिः स्यात्तदा शाब्दबोधस्य त्रित्वत्वावच्छिन्न-प्रकारकस्यैव तद्वाक्यतो जातत्वात्, तस्य च सङ्ख्यात्वव्याप्यत्रित्वत्वप्रकारक-तयोक्तजिज्ञासाप्रतिबन्धकत्वात्तस्या अनुदये तद्बोधकोक्तवाक्यप्रयोगोनुपपन्नः स्यात्। त्रित्वत्वादिव्यापकबहुत्वत्वस्य जसादिशक्यतावच्छेदकत्वे च तत्प्रकारक-बोधस्यैवोक्तवाक्याज्जायमानत्वेन तस्योक्तजिज्ञासायामप्रतिबन्धकत्वेन न तत्प्र-योगानुपपत्तिः, यत्प्रकारताकत्वेन ज्ञानमिच्छावगाहते तत्प्रकारताकस्यैव ज्ञानस्य तत्प्रतिबन्धकत्वादिति बहुत्वत्वमेव बहुवचनशक्यतावच्छेदकम्, न तु त्रित्वत्व-चतुष्ट्वत्वादिकमिति। ४५।

उक्तानामेकवचनाद्यर्थानां सर्वत्र प्रकृत्यर्थे तात्पर्य्यविशेषादनुशासन-विशेषात्प्रकृत्यर्थे बाधाच्च कचित्प्रकृत्यर्थतावच्छेदकेप्यन्वय इत्याह—**प्रायेणे**ति। प्रकृत्यर्थैकदेश एव सर्वत्र तदन्वयो नोपगन्तुं शक्य इत्याह—**द्रव्याणी**त्यादिना। **सुमित्रापुत्रत्वादावि**ति। सुमित्राया वसुदेवस्य चापत्यं पुमानित्यर्थे तद्धित-

१ ० धर्म्मवद्विशिष्ट ० इति मु० पु० पा०।

समग्रैश्वर्य्यादिस्वरूपे भगवत्त्वे चैकत्वस्यान्वयायोग्यत्वात् ।

प्रायिकश्चेदम् । तेन यदादिशन्ति पूज्यपादा इत्यादौ पूजाया-मनिर्द्धारितविशेषस्य "वामे बहुकुशान् कृत्वा दक्षिणे तु कुशत्रयम्..." इत्यादौ बहुपदार्थैकदेशे बहुत्वत्वावच्छिन्नत्रित्वे बहुत्वत्वेन त्रित्व-पर्य्यवसितस्य बहुत्वस्य "स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः..." इत्यादौ तत्तत्पदलाक्षणिकस्वर्गादिपदार्थैकदेशे[1] स्वर्गपदादौ चतुष्ट्वादि-परिणतस्य बहुत्वस्यान्वयेऽपि न क्षतिः ।

अतएव वामकरेण नवकुशधारणम्[2] । कोशे च स्वर्गादिपदं न

प्रत्ययार्थतावच्छेदकमपत्यत्वं पुत्रत्वमेव, "अपत्यं पितुरेव स्यात्" इत्यनेन तद्व्यवस्थापनात् । अतएव युवापत्यगोत्रापत्यत्वाभ्यां विभागोऽप्युपपन्न इत्यभिप्रायेण **पुत्रत्वादावि**त्युक्तम् । तदपि जन्यत्वे सति पुंस्त्वरूपमेकमेव, न तु सुमित्रादिनिरूपकभेदेन भिन्नमिति तत्र द्वित्वस्य निरुक्तस्यान्वयायोग्य-त्वमित्याशयः । **शब्दस्वरूपे** इति । गगनपदस्य शब्दत्वावच्छिन्नशक्तत्व-मभ्युपेत्येदमुक्तम् । **समग्रैश्वर्य्यादिस्वरूपे** इति । एतच्च "ऐश्वर्य्यस्य समग्रस्य..." इत्यादिना पूर्वमेवोक्तम् ।

**प्रायेणे**त्युक्तः फलमाह—**प्रायिकश्चेद**मित्यादिना । **अनिर्द्धारितविशेष-स्ये**ति । **अनिर्द्धारितो** निश्चयाविषयीकृतो **विशेष**स्त्रित्वत्वादिक यस्य तादृशस्य बहुत्वस्येत्यर्थात्पूज्यपादे गुर्वादौ प्रकृत्यर्थे बहुत्वस्य बाधात्प्रकृतिबोध्यैकदेशे पूजायामेव तदन्वय इत्यर्थः । निर्द्धारितविशेषस्यापि बहुत्वस्य प्रकृत्यर्थैक-देशेऽन्वयं दर्शयति—**वामे बह्वि**ति । **बहुत्वत्वावच्छिन्नत्रित्व** इति । सङ्ख्यारूपस्य त्रित्वस्य स्वरूपतो बहुपदार्थतावच्छेदकत्वाभावा**द्बहुत्वत्वा-वच्छिन्ने**त्युक्तम् । बहुवचनेन सर्वत्र त्रित्वस्यैव न बोधः किन्तु चतुष्ट्वादीना-मपीति दर्शयति—**स्वरव्यय**मिति ।

प्रथमे त्रित्वे त्रित्वान्वयोपगमस्य फलमाह—**अतएवे**ति । त्रित्वविशिष्ट-त्रित्वस्य कुशे बोधे तत्र नवत्वस्यैव पर्य्यवसानादिति भावः । इदञ्च

---

१ तत्पद० इत्येव पा० मु० पु० ।

२ नवकुशधारणम् इत्यस्य स्थाने न बहुकुशधारणम् इति मु० पु० पा० ।

**स्वर्गादिस्वरूपपरम्, वाच्यवाचकभावस्य लेशतोप्यप्राप्तेः कोशत्वासम्भवात्, स्वःपदवाच्यं स्वर्गादिपदवाच्यैरभिन्नमिति बोधस्यैवाभ्युपेयत्वात्। अतएव शब्दानां पर्य्यायत्वमप्यर्थतः । स्वर्गनाकादीनान्तु**

छन्दोगाह्निकसूत्रकारकात्यायनमतेन। वाजसनेय्याह्निकसूत्रकारेण तु बहुवचनस्य निरर्थकताभ्युपगमेन बहुपदार्थतावच्छेदकत्रित्वमात्रस्यैव कुशेन्वयस्य व्यवस्थापनात्कुशत्रयस्यैव धारणमिति सिद्धान्तितत्वात्। द्वितीये स्वर्गादिपदानां स्वरूपपरत्वे तत्तत्पदबोध्यत्वस्य भिन्नतया प्रकृत्यर्थ एव बहुवचनार्थान्वयसम्भव इत्यतस्तेषां स्वरूपपरत्वाभावं व्यवस्थापयति—**कोशे चेति** । **कोशत्वासम्भवादिति** । पदानां वाच्यवाचकभावसम्बन्धज्ञापकसन्दर्भविशेषस्यैव कोशत्वेन तस्य तस्मादज्ञाने तत्त्वव्याहतेरित्यर्थः। तेषां वाच्यार्थसुखविशेषावच्छेदकस्थानविशेषपरत्वेपि कोशत्वव्याघातस्तदवस्थो घटः कलस इत्यत्रेव बोधानुपपत्तिश्चेत्यत आह—**स्वःपदवाच्यमिति**। तथा च स्वःपदस्वर्गपदयोस्तादृशसम्बन्धस्य ज्ञापनात्कोशत्वं तस्योपपन्नम्। स्वःपदवाच्यस्वर्गपदवाच्ययोरभेदेपि पदार्थतावच्छेदकतत्तद्वाच्यत्वस्य भिन्नतया नीलो घट इत्यादाविव तेषामभेदान्वयोप्युपपन्नः । प्रकृत्यर्थस्य तत्तत्पदवाच्यस्य "यन्न दुःखेन सम्भिन्नम्..." इत्याद्युक्तसुखविशेषावच्छेदकस्थानस्यैकतया तत्र बहुत्वान्वयस्यायोग्यतयासम्भवेन प्रकृत्यर्थतावच्छेदकस्वर्गादिपदस्वरूपस्यानेकतया तत्रैव बहुवचनार्थचतुष्टयस्यान्वय इति भावः। अत्र स्वरादिपदं नोक्तसुखविशेषार्थकम्, तथा सति तेषामनन्ततया तेष्वेव बहुत्वान्वयसम्भवस्त्रिदशालयत्वस्य तत्रासम्भवश्चेति बोध्यम्।

स्वःपदवाच्येन स्वर्गादिपदवाच्यस्याभेदान्वयोपगमे फलमाह—**अतएवेति**। तादृशबोधाभ्युपगमादेवेत्यर्थः। **पर्य्यायत्वमिति**। तत्पदशक्यतावच्छेदकधर्म्मावच्छिन्नशक्तिमत्त्वे सति तत्पदभिन्नत्वस्य तत्पदपर्य्यायत्वरूपत्वात्तस्य शब्दतोलाभेपि तत्तत्पदवाच्ययोरभेदे लब्धे वाच्यतावच्छेदकयोरप्यभेदस्य

१ स्वर्गादिपदस्वरूपपरम् इति मु० पु० पा० ।

**भेदाभेदौदासीन्येन द्वन्द्वः समासः। अतएव "भेदाख्यानाय न द्वन्द्वः" इति प्राथमिकी प्रतिज्ञाप्येतादृशस्थल उपयुज्यते।**

**स्वरूपपरता तु तत्रैव, यत्र वाचकतावाचिशब्दान्तरं श्रूयते; "मृगे कुरङ्गवातायुहरिणाजिनयोनयः" "विनायके विघ्नराजद्वैमातुर-**

लाभात्तल्लाभ इत्यर्थः। ननु तर्हि तत्तत्पदबोध्यतावच्छेदकवाच्यत्वादीनां भेदात्पदार्थतावच्छेदकभेदप्रयुक्तद्वन्द्वस्य "सरूपाणामेकशेष एकविभक्तौ" इति सूत्रेण "प्रमाणप्रमेय..." इत्यादिन्यायसूत्रवदेकशेपस्यासम्भवेपि "विरूपाणामपि समर्थानाम्" इत्यनेन वक्रदण्डौ कुटिलदण्डावित्यत्रेवैकशेषापत्तेः "स्वर्गनाकत्रिदिवत्रिदशालयाः" इति प्रयोगोनुपपन्न इत्यत आह—**स्वर्गनाकादीनामि**ति। स्वर्गादिपदानामित्यर्थः **भेदाभेदौदासीन्येने**ति। स्वर्गादिपदस्वरूपाणां तत्तत्पदबोध्यतावच्छेदकाना मिथो भेदस्य तत्तत्पदबोध्यस्थानविशेषभेदस्य च सत्त्वेपि द्वन्द्वप्रयोजकत्वाप्रयोजकत्वे तयोरनभ्युपगम्यैव द्वन्द्वः साधुः। पदार्थभेदस्य द्वन्द्वप्रयोजकत्वे उक्तन्यायसूत्रे पदार्थतावच्छेदकभेदस्य तथात्वे वक्रदण्ड इत्यादौ द्वन्द्वानुपपत्तिरिति भेदाभेदयोरुभयोरपि द्वन्द्वे औदासीन्यमेवाभ्युपगन्तव्यमित्यभिप्रायेणैव तत्र द्वन्द्वः कृत इति भावः। अथवा **भेदाभेदौदासीन्येने**त्यस्य घटपटावित्यत्र घटपटपदार्थयोर्भेदं नीलघटयोरभेद इत्यत्र नीलघटपदार्थयोरभेदं ज्ञापयितुं यथा द्वन्द्वस्तथा न प्रकृते इत्यर्थः। ननु तथापि तत्रैकशेषः कुतो नेत्यत आह--**अतएवे**ति। तत्र द्वन्द्वविरहस्यैकशेषस्य चापत्तेरेवेत्यर्थः। **भेदाख्यानाये**ति। यथा घटपटावित्यादौ घटपटयोर्भेदज्ञापनाय द्वन्द्वस्तथात्र कोशे स्वर्गादिपदार्थानां नाकादिपदार्थभेदज्ञापनाय न द्वन्द्वः। स्वर्गादिपदानाञ्चैकशेषे सति तत्तत्पदानां भेदेन ज्ञानाभावप्रसङ्ग इति न तेषामेकशेषोपि कृत इति भावः।

कोशस्थपदानां सर्वेषामेव न तत्तत्पदवाच्ये लक्षणा, किन्तु यत्र वाच्यवाचकभावसम्बन्धस्यान्यथैव लाभस्तत्र स्वरूपपरतापीति दर्शयति—**स्वरूपपरता त्वित्या**दिना। **मृगे** इत्यादिसप्तम्यैव तत्र तत्र वाचकत्वस्य

**गणाधिपाः" "ऐरावतेभ्रमातङ्गैरावणाभ्रमुवल्लभाः .." इत्यादौ। "ऊर्वश्यप्सरसः" "सीता रामदाराः..." इत्यादावनन्वितमेव बहुत्वम्, पदानुपस्थितेषु गुणेषु तदन्वय इति मतस्यात्यन्तमसम्भवदुक्तिकत्वात्।**

**पुष्पवन्तौ नासत्यावित्यादौ तात्पर्य्यवशाद् व्यक्त्योर्जात्योर्वा द्वित्वान्वयः। साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमित्यत्र साधर्म्यवैधर्म्यत्वयोः**

लाभाल्लाघवात्स्वरूपपरतैव कुरङ्गादिपदानामिति भावः। वचनानामपि न सर्वेषां प्रकृत्यर्थतदेकदेशान्यतरान्वितस्वार्थकत्वम्, किन्तु क्वचिदयोग्यत्वादिनानन्वितार्थकतया निरर्थकत्वमपीति कारिकयानुक्तं पूरयति—**उर्वश्यप्सरस** इति। अप्सरःपददारपदयोर्नित्यबहुवचनान्तत्वानुशासनेन तत्तत्पदोत्तरबहुवचनार्थबहुत्वस्य प्रकृत्यर्थे सीतादौ तदेकदेशे तत्त्वादौ च बाधादिति भावः। ननु तत्र तयोर्बहुत्वस्य बाधेपि तद्गतगुणानामेवानन्ततया तत्रैव तदन्वयस्य सम्भवात्सम्भवति सार्थकत्वे निरर्थकत्वोपगमोन्याय्य इत्यत आह—**पदानुपस्थितेष्वि**ति। तथा च दारादिपदाना भार्य्यात्वाद्यवच्छिन्न एव शक्ततया तन्मात्रप्रकारकस्यैव स्मरणस्य तत्तत्पदेभ्यो जायमानत्वाद् गुणादीनां प्रकृत्यर्थत्वादिविरहेण प्रकृत्यर्थान्वितेत्यादिव्युत्पत्तिविरोधभियैव तत्र न बहुवचनार्थान्वयसम्भव इति भावः। न चाजहत्स्वार्थलक्षणया दारादिपदानां तद्गतगुणाद्यवच्छिन्न एवार्थ इति न तेषां पदानुपस्थितत्वमिति वाच्यम्। तथा सत्यपि मुख्यार्थपरतत्तत्पदोत्तरबहुवचनानां निरर्थकत्वस्यैवोपगमनीयत्वात्।

द्विवचनार्थस्य प्रकृत्यर्थादावन्वयादिकमुदाहरति—**पुष्पवन्तावि**त्यादिना। **व्यक्त्योर्जात्योर्वे**ति। प्रकृत्यर्थयोस्सूर्य्याचन्द्रमसोस्तदेकदेशयोस्सूर्य्यत्वचन्द्रत्वयोश्च द्वित्वान्वययोग्यतया तात्पर्य्यमेव तत्र द्वित्वान्वयनियामकमिति भावः। प्रकृत्यर्थे द्वित्वान्वयस्यायोग्यतया तदेकदेशे एव स इत्याह—**साधर्म्येणे**ति। प्रकृत्यर्थीभूताना समानधर्म्माणां विरुद्धधर्म्माणाञ्चानेकत्वान्नी-

**नीलघटयोरभेद इत्यादौ नीलत्वघटत्वयोः । गोदौ[1] ग्राम इत्यादौ त्वनन्वित एव द्विवचनार्थः, नित्यं द्विवचनान्तत्वेनानुशिष्टगोदपदार्थे तदेकदेशे द्वित्वे[2] च द्वित्वस्यान्वयायोग्यत्वात् ।**

**"पशुना रुद्रं यजेत" "वायव्यं श्वेतमालभेत..." इत्यादौ पश्वादौ वेदाः प्रमाणमित्यादौ पदार्थैकदेशे प्रमाणत्व एव तात्पर्य्यवशादेकवच-**

लपदार्थेन सह घटपदार्थस्य तादात्म्यात्तदुभयत्र द्वित्वान्वयस्यासम्भवात्समानधर्म्मत्वादौ तदेकदेश एव स इत्यर्थः। द्विवचनस्य निरर्थकत्वमुदाहरति— **गोदाविति** ।

---

१ टीकाकारोत्र प्रतीकमात्रमवतार्य्य ग्रन्थ न व्याख्यातवान् । अतोत्रत्यं व्याख्यानमुपस्थाप्यते—गोदयोर्निवासो जनपद इत्यर्थे "तस्य निवासः" इत्यनेन विहितस्याणो जनपदे वाच्ये चातुरर्थिकस्य लुप्स्यादित्यर्थकेन "जनपदे लुप्" इति सूत्रेण लुपि "लुपि युक्तवद्व्यक्तिवचने" इत्यनेन प्रकृतिवल्लिङ्गवचनयोः सत्योः गोदाविति । गोदशब्दोत्र यथा पञ्चालादिशब्दाः क्षत्रियेषु जनपदे च रूढास्तथा क्षत्रिये ग्रामविशेषे च रूढः । व्याकरणव्युत्पत्तिस्तु साधुत्वमात्र ज्ञापयति, न तु शक्तिम् । अन्यथा "आतोनुपसर्गे कः..." इत्यादिना निष्पादितो गोदशब्दः गोदातारमभिदध्यात् । न चैवम्, गोदशब्दस्य संज्ञाशब्दत्वात् । संज्ञाशब्द एव सङ्केतितन्नाम रूढमिति कीर्त्यते । अत्र प्रत्ययार्थविशेषणीभूतस्य रमणीयशब्दस्य प्रकृतिवद्द्विवचने सति गोदौ रमणीयाविव गोदौ ग्रामाविति कथन्नेति वाच्यम्, ग्रामशब्दस्य प्रत्ययार्थजनपदविशेषणस्यापि जातिवाचित्वात् लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जाति वर्जयित्वेत्यर्थकस्य "विशेषणानाञ्चाजातेः" इति सूत्रस्याप्रवृत्तेः । एवञ्चोद्देश्यतावच्छेदकविधेययोरैक्येनैको द्वावित्यादिवाक्यादेकत्वद्वित्वाद्यवच्छिन्ने एकत्वद्वित्वादीना भेदान्वयबोधानुदयादेकत्वत्वद्वित्वत्वाद्यवच्छिन्नसमवायादिसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायादिसंसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वादिसम्बन्धेन शाब्दबुद्धौ एकत्वत्वद्वित्वत्वादिभेदस्य कारणताया अवश्य वाच्यतया यथा नोक्तवाक्याद् द्वित्वत्वाद्यन्वयबोधस्तथा प्रकृतेपि द्वित्वान्वयबोधकारणीभूतस्याभावाद् द्वित्वविशिष्टगोदपदार्थे तदेकदेशे द्वित्वे च कथ द्वित्वान्वयबोधस्स्यात् । तथा चानन्वित एवात्र द्विवचनार्थः ।

२ द्वित्वविशिष्टे च इत्यधिकः पा० मु० पु० ।

**नार्थस्यान्वयः । सम्पन्नो व्रीहिः सम्पन्ना व्रीहय इत्यादौ "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति सूत्रेणानुशिष्टैकवचनस्य बहुवचनस्य चार्थ एकत्वं जातावेव, "विंशत्याद्यास्सदैकत्वे ¹सर्वास्सङ्ख्येयसङ्ख्ययोः" इति कोशेनानुशिष्टस्य विंशतिर्ब्राह्मणा इत्यादावेकवचनस्यार्थः सङ्ख्यायामेव पदार्थैकदेशेन्वेति ।**

**यत्र तु विंशतित्वसङ्ख्यायामेव बहुत्वान्वयो विवक्षितस्तत्र बहुवचनमपि प्रमाणम् "असङ्ख्यातास्सहस्राणि" "ये रुद्रा अधिभूम्याम्"**

बहुवचनस्यापि क्वचिदनुशासनविशेषबलादेकत्वार्थकत्वमित्याह—**जात्याख्यायामि**ति । **जातावेवे**ति । प्रकृत्यर्थे व्रीहावेकत्वस्य बाधाद् व्रीहित्वजातावेव तदन्वय इत्यर्थः । **विंशत्याद्या** इति । **सङ्ख्ययो**रिति सप्तम्या वाचकत्वार्थकत्वेन विंशत्याद्यास्सर्वे शब्दाः सङ्ख्याविशिष्टस्य सङ्ख्यायाश्च वाचकाः । तत्र सङ्ख्याविशिष्टवाचकानां प्रकृत्यर्थविंशत्यादीनां बहुत्वान्वययोग्यताया एव नियमतस्सत्त्वात्तदुत्तरं नियमतो बहुवचनस्यैव प्रसक्तेराह—**सदैकत्वे** इति । **सदा** नियमतः । **एकत्वे** एकत्ववाचका इत्यर्थान्नियतैकवचनान्ता इति भावः । तेषामेकत्ववाचकता च सङ्ख्यायाः प्रातिपदिकार्थत्वमते । विभक्त्यर्थत्वे त्वेकत्वादिपदमेकवचनादिपरम्, सप्तमी चाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नाधेयत्वार्थिकेति बोध्यम् ।

सङ्ख्यावाचकाश्च ते शब्दा द्वित्वबहुत्वयोरपि वाचका इत्युक्तं "सङ्ख्यायां द्विबहुत्वे स्तः" इत्यग्रिमचरणेन । तथा च द्विवचनान्तत्वमपि तेषां साध्वित्याह—**यत्र त्वि**त्यादिना । एवञ्च सङ्ख्याविशिष्टवाचकानां विंशत्यादिशब्दानां स्वार्थे बहुत्वस्यैव पर्य्याप्ततया स्त्र्यादिशब्दवन्नित्यबहुवचनान्तत्वस्यैव प्राप्तावप्राप्तं स्वार्थतावच्छेदकसङ्ख्यायामेकत्वान्वयतात्पर्य्यप्रयुक्तमेकवचनान्तत्वमुक्तकोशो विधत्ते । **तेन** ब्राह्मणानां बहुत्वेपि विंशतित्वसङ्ख्याया एकत्वे विंशतिर्ब्राह्मणा इत्येव **प्रमाणम्, न तु** विंशती विंशतय इत्याद्यपि । विंशतित्वसङ्ख्याया अनेकत्वे च **द्विवचनाद्यन्तत्वमपी**त्यत्र वैदिकलौकिकोदाहरणानि दर्शयति—**असङ्ख्याता**

१ सर्वाः इत्यस्य स्थाने सङ्ख्याः इति मु० पु० पा० ।

**इत्याम्नाये "तिस्रः कोट्योर्धकोटी च तीर्थानां वायुरब्रवीत्" इति पुराणे "किमेकयैव विंशत्या बाहुभिस्त्वं विकत्थसे। पश्य रावण नाराचैश्छिन्नाः[1] कतिविंशतिः॥" इति लोके च प्रयोगदर्शनात्। "ते शतानि वयं पञ्च" इत्यत्र शतशब्दोनेकपर्य्यायः, तदर्थैकदेशेनेकत्वे दशत्वादौ बहुत्वान्वयः। ४६।**

इति। नन्वेवं यत्र शतत्वादिसङ्ख्याया एकत्वेपि शतादिपदोत्तरं बहुवचनं दृश्यते तस्य कथं साधुतेत्यत आह—**ते शतानी**ति। महाभारते वनपर्वणि सपरिवारे दुर्य्योधने चित्रसेनेन गन्धर्वेण हृते तत्प्रत्याहरणाय तदनुयायिभिर्विज्ञापितेन युधिष्ठिरेणादिष्टेन भीमेन "अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम्." इत्यादिना तत्प्रत्याहरणमनुचितमित्युक्ते युधिष्ठिरस्य प्रत्युक्तिरिदम्। एतस्य च "परस्परविरोधने। अन्यैस्सह विरोधे तु वयं पञ्चोत्तरं शतम्॥" इति शेषं चरणत्रयम्। **अनेकपर्य्याय** इति। शतशब्दस्य शतत्वसङ्ख्यावच्छिन्नार्थकत्वे दुर्य्योधनस्यैकशतभ्रातृकतया तत्र बहुत्वान्वययोग्यतायाश्शतत्वे विरहेण बहुवचनस्यासाधुत्वं प्रसज्येतेत्यतश्शतशब्दोनेकपर्य्याय एवात्रोपेयः। तत्रानेकत्वमपि बहुत्ववद्द्वित्वादिपर्य्यवसितमेवेति तात्पर्य्यवशादत्र दशत्वस्वरूपमेव तत्, बहुवचनार्थो बहुत्वमपि दशत्वस्वरूपमेवेति दशत्वे दशत्वस्यान्वयबोधे शतैकपर्य्यवसानमिति न तत्प्रयोगानुपपत्तिरिति भावः।

एवमेव "दशशतान्यम्भोजसंवर्त्तिकाः[2]..." इत्यादिमुरार्य्यादिप्रयोगेष्वपि शतत्वादौ बहुत्वत्वेन दशत्वादिसङ्ख्याया एवान्वयाद्बहुवचनस्य साधुत्वम्। शतानीत्येतावन्मात्रोक्तौ तेन रूपेण त्रित्वादीनामप्यन्वयः प्रसज्येतेति दशत्व एव बहुवचनस्य तात्पर्य्यनिश्चयाय दशपदोपादानम्। केचित्तु विंशत्यादिशब्दानां सङ्ख्यातद्विशिष्टोभयवाचकत्वमुक्तकांशादेव सिद्धम्। तेषु सङ्ख्यावाचकानां द्विवचनाद्यन्तत्वमपि सङ्ख्याविशिष्टवाचकानां नित्यैकवचनान्तत्वमित्येवोक्त-

---

१ छिनत्ति इति मु० पु० पा०।

२ एकद्विप्रभृतिक्रमेण गणनामेषामिवास्तं यताम्।
कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्त्तिकाः॥
भूयोपि क्रमशः प्रसारयति ताः सप्रत्यमूनुद्यतः।
सङ्ख्यातु सकुतूहलेव नलिनी भानोः सहस्रं करान्॥ इत्यनर्घराघवे।

**अविवक्षानन्वयो वा सङ्ख्याया यत्र तादृशे।**
**वाक्येपि प्रातिपदिकाद्धातोर्वैकवचः स्मृतम् ॥४७॥**

**यत्र ब्राह्मणेन हतः पतति, ग्रहं सम्मार्ष्टीत्यादावुद्देश्यगता सङ्ख्या न विवक्षिता, यत्र वा चैत्रेण स्थीयत इत्यादावाख्यातोपात्तसङ्ख्यान्वययोग्यः प्रथमान्तपदार्थो भावनान्वयी न दृश्यते, तत्रापि ब्राह्मणग्रहादिप्रातिपदिकात् स्थाधातोश्चैकवचनप्रयोगः प्रायेण**

कोशोनुशास्ति। सर्वत्र तत्पदाना सङ्ख्येयमात्रस्य वाचकत्वे गवां शतानीत्यादौ षष्ठ्यर्थस्यान्वयासम्भवात्तादात्म्यस्य षष्ठ्यर्थत्वे ब्राह्मणानां दशेत्यस्यापि प्रामाण्यप्रसङ्गाद्दशपर्य्यन्तानां सङ्ख्येयमात्रवाचकत्वं विंशत्यादिपरार्द्धपर्य्यन्तानां तदुभयवाचकत्वमिति वदन्ति। ४६।

एकवचनस्याविवक्षितस्वार्थकत्वे प्रकृत्यर्थान्वयायोग्यार्थकत्वेपि वा साधुतामात्रार्थमेकवचनमेव प्रयुज्यते, न तु द्विवचनादिकमपीत्याह—**अविवक्षे**ति। उदाहरति—**ब्राह्मणेने**ति। **सङ्ख्या न विवक्षिते**ति। तत्र प्रथमे एकत्वसङ्ख्याया उद्देश्ये ब्राह्मणेन्वये ब्राह्मणद्वयादिकर्त्तृकहननस्य पातित्यप्रयोजकत्वानुपपत्तिर्द्वितीये च तदन्वये "ग्रहैर्जुहोति" इति वाक्येन तेषां दशानामपि होमकरणत्वज्ञापनाद्दशानां संस्कार्य्यत्वस्यावश्यकतया तदनुपपत्तिरेव स्यादिति ब्राह्मणत्वजात्याश्रयमात्रकर्त्तृकस्य ग्रहत्वाश्रयमात्रकर्म्मकस्य हननस्य सम्मार्जनस्य च विवक्षितस्योपपत्तये एकवचनार्थस्याविवक्षैवेत्यर्थः। एवं तिङुपात्तसङ्ख्यायाः प्रकृत्यर्थधात्वर्थादौ स्वार्थकर्त्तृत्वादिबाधनिश्चयदशायां तत्तात्पर्य्यविरहदशायां प्रथमान्तचैत्रपदार्थादौ चान्वयस्यादर्शनेन समानविशेष्यताप्रत्यासत्त्याख्यातार्थसङ्ख्याप्रकारकबोधे तदर्थकर्त्तृत्वादिप्रकारकशाब्दबोधसामग्र्याः कारणताया आवश्यकतया भावविहिततिङुपात्तस्य कर्त्तृत्वादेर्भावनाया अभावेन तादृशान्वयबोधसामग्र्या दूरपराहतत्वात्कुत्र तदर्थसङ्ख्याया अन्वयः स्यादिति तत्रापि साधुत्वार्थमेवैकवचनमित्याह—**यत्र वा चैत्रेणे**ति।

युज्यते; विभक्तिविनाकृतायाः प्रकृतेरसाधुतया कर्तृकर्म्मभावनार्थां[1]-नादाय तृतीयाद्वितीयातिङां प्रयोगस्यावश्यकत्वे प्रथमोपात्तस्यैकवचन-प्रथमपुरुषादेस्त्यागायोगात् ।

उष्ट्रासिका आस्यन्ते, हंतशायिकाः[2] शय्यन्त इत्यादावपि भाष्यकारप्रयोगज्ञापितमेव बहुवचनानां साधुत्वम्, उष्ट्रासनसदृश-

निरर्थकत्वेऽप्येकवचनस्यैव प्रयोगे हेतुमाह—**विभक्तिविने**ति । "अपदं न प्रयुञ्जीत" इति महाभाष्येण सुप्तिङन्यतरविभक्त्यव्यवहितपूर्ववृत्तित्वरहितस्या-साधुत्वज्ञापनादित्यर्थः । **कर्तृकर्म्मे**ति । ब्राह्मणेनेत्यादौ क्रमेण कर्तृत्वाद्यर्थकत्वं बोध्यम् । **प्रथमोपात्तस्ये**ति । पूर्वमुपस्थितस्येत्यर्थः । **त्यागायोगादि**ति । "उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावात्" इति न्यायादिति भावः ।

ननु तर्हि भावविहितण्वुलन्तस्य कथं बहुवचनान्तत्वम्, तत्रापि विभक्त्यर्थ-सङ्ख्याया अनन्वितत्वादेकवचनप्रयोगस्यैवौचित्यादित्यत आह—**उष्ट्रासिका** इति । अत्र भाष्यकाराणामयमाशयः—भावाख्यातस्थले एकवचनन्न निरर्थकम्, किन्तु धात्वर्थव्यापारान्वितम् । न च तादृशव्यापाराणामनेकत्वात्तत्र कथमेकत्वान्वय इति वाच्यम्, पूर्वापरीभावापन्नानां तेषां समूहालम्बन-ज्ञानस्यैक्यात्तद्गतस्यैवैकत्वस्य स्वाश्रयविषयत्वसम्बन्धेन व्यापारेष्वन्वयस्य सम्भवात् । तदुक्तं हरिणा—

"गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्धया प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ।।" इति ।

न चैवं भावाख्यातस्य द्विवचनाद्यन्तत्वं कथमिति वाच्यम्, तादृशव्यापाराणा-मेकज्ञानोत्तरमपि सम्भवात्तद्विषयकज्ञानान्तरविषयतया पुनःपुनरपि सम्भवेन तत्तज्ज्ञानविषयतयापेक्षाबुद्धिविषयतायास्तादृशज्ञानेषु सत्त्वात्तदात्मकद्वित्व-बहुत्वादीनामपि तदन्वययोग्यतासम्भवात् । एवं सत्यास्यन्ते इत्यादावुपवेशन-शयनव्यापाराणां मुहुरन्तरोत्थाने जागरणे च त्रिचतुःकृत्वो जातानां बहुत्वेन बहुवचनस्योपपत्तिः । इत्थञ्चोपवेशनशयनक्रिययोस्तादात्म्येन विशेषणयोरु-

१ करणकर्म० इति मु० पु० पा० ।
२ हतशायकाः इति मु० पु० पा० ।

**मासनमुष्ट्रासिका, हतशयनसदृशं शयनं हतशायिका, तयोस्तादात्म्येन धात्वर्थान्वितयोः कर्त्तृकर्म्मणोर्भावनान्वयिनः प्रथमान्तार्थस्य चाभावेन तिङुपात्तस्य बहुत्वस्यानन्वितत्वात्। एकवचनमित्येव सूत्रं न त्वेकस्मिन्नेकवचनमिति। तेनैकत्वाद्यविवक्षायामपि सामान्यतः प्राप्तमेकवचनं "द्व्येकयोर्द्विवचनैकवचने" इति विशेषसूत्रेण द्वित्वविवक्षायां बाध्यत इति कल्पयन्ति।४७।**

ष्ट्रासिकाहतशायिकाशब्दयोर्बहुत्वविशिष्टव्यापारे बहुत्वान्यसङ्ख्याविशिष्टस्य तादात्म्येनान्वयस्य व्युत्पत्तिविरुद्धतया समानवचनकत्वस्यैवौचित्याद्बहुवचनान्तत्वम्। प्रकृतग्रन्थस्तु धात्वर्थे सङ्ख्यान्वयोपगमे सङ्ख्यान्वयायोग्यत्वस्वरूपस्यासत्त्वस्य तत्र व्याघातः स्यात्। साक्षात्सङ्ख्यान्वयायोग्यत्वस्य तत्र विवक्षणे वेदाः प्रमाणमित्यत्र प्रमितिकरणस्य तथात्वादसत्त्वापत्तिरित्यादिदोषापाताद् भाष्यप्रामाण्येनैव तस्य बहुवचनान्तत्वं साध्वित्याशयको बोध्यः। **ननु** "द्व्येकयोः.." इत्यादिसूत्रेणैकत्वादिबोधकस्यैवैकवचनादेः साधुत्वानुशासनात्तदभावे कथमेकवचनस्य साधुतेत्यत आह—**एकवचनमि**ति। इदमग्रिमेण **कल्पयन्ती**त्यनेनान्वितम्। तथा च ङ्याप्प्रातिपदिकादेकवचनं स्यादित्यर्थेन "एकवचनम्" इति सूत्रेण सर्वत्रैकवचनस्यैव प्राप्तावेकत्वादिविवक्षायामेकवचनादीना विशेषतो विधायकं "द्व्येकयोः..." इत्यादिसूत्रं बाधकमित्यर्थः। **कल्पयन्ती**ति। एकवचनमित्यानुपूर्वीकस्य सूत्रस्याष्टाध्याय्यामनुपलभ्यमानत्वेपि "द्व्येकयोः" इति सूत्रस्थभाष्यस्वरसात्पूर्वम् "एकवचनम्" इति सूत्रम्। तदर्थः पूर्वोक्त एव। ततः "द्व्योर्द्विवचनम्" इति सूत्रं द्वित्वबोधकस्य द्विवचनस्य विधायकं विशेषविधायकत्वेन पूर्वसूत्रस्य बाधकमित्याकारकस्यैव न्यासस्य भाष्याभिप्रेततया कैयटेन वर्णनात्। एकवचनस्यैकत्वबोधकता तु द्विवचनबहुवचनयोर्द्वित्वबहुत्वबोधकताया "द्व्ये..."इत्यादिसूत्रद्वयेन ज्ञापनात्पारिशेष्यादनुमानसिद्धैवेति कैयटस्याशय इत्यर्थः। ४७।

१ च इत्यधिकः पा० मु० पु०।

**ननु गगनपदार्थैकदेशस्य शब्दस्य बहुत्वविवक्षायां गगनानीति प्रयोगप्रसङ्गः, यदि च सुबुपात्तं बहुत्वन्न पदार्थैकदेशान्वयीति मतम् , तदा कथं वामे बहून् कुशान् कृत्वेत्यत्र बहुत्वे बहुत्वान्वयः ? अन्यथा नवकुशधारणानुपपत्तेः । धर्म्मिणि च बहुत्वविशिष्टे न बहुत्वान्वयः, घटो घट इतिवन्निराकाङ्क्षत्वात् । कथं वा सहस्राणीत्यादौ सहस्रत्वे, पूज्यपादा इत्यत्र पूजायां वा बहुत्वान्वयः ; कथं वा द्वन्द्वपदार्थैकदेशेषु स्वर्गादिष्विति चेत् ?**

पदार्थैकदेशेपि बहुवचनाद्यर्थबहुत्वाद्यन्वयस्य **वामे बहूनि**त्यादावुपगततयान्यत्रापि तथा विवक्षया कथं न बहुवचनादेः साधुतेत्याशङ्कते—**नन्वि**त्यादिना । पदार्थैकदेशे तादृशसङ्ख्यान्वयस्यासाधुत्वे पूर्वोक्तामेवानुपपत्तिमाह—**यदि चे**ति । ननु तत्र बहुत्वे बहुत्वान्वयो नेष्यत एवेत्यत आह—**अन्यथे**ति । बहुकुशधारणस्यैव तदर्थतया कपिञ्जलाधिकरणन्यायेन कुशत्रयधारणस्यैव ततः प्राप्तेरित्यर्थः । ननु तत्र बहुत्वविशिष्टानां कुशानामपि बहुत्वस्य निराबाधतया तत्रैव तदन्वयोभ्युपगम्य इत्यत आह—**धर्म्मिणी**ति । अत्र पूर्वोक्तानुपपत्तेर्जागरूकत्वेपि निराकाङ्क्षत्वादन्वयबोधानुपपत्तिं ततो गरीयसीं दर्शयति—**घटो घट इतिवदि**ति । निराकाङ्क्षत्वमात्रेयं दृष्टान्तो न तु बोधांशे । तेन घटत्वविशिष्टे घटत्वान्वयस्य तत्राप्राप्तावपि नासङ्गतिः ।

अत्र सविशेषणे हीति न्यायाद्विशेष्येन्वययोग्यताया आकाङ्क्षाया वा बाधे विशेषण एव तदन्वयः । विशेषणत्वञ्च सामान्यधर्म्मवत्प्रतियोगिकभेदस्य स्वाश्रयवृत्तित्वप्रयोजकत्वम् । यथा— नीलो घट इत्यत्र घटत्वसामान्यधर्म्मवत्पीतघटादिप्रतियोगिकभेदस्य नीलाश्रयघटवृत्तित्वप्रयोजकत्वन्नीलस्येति तस्य घटे विशेषणत्वम् । शब्दस्य च गगने तथात्वाभावेन विशेषणत्वविरहादुक्तन्यायाविषयतया

उच्यते—

**उपसर्जनतां दैवात् पदार्थो यत्र गच्छति ।**
**तस्मिन्नर्थैकदेशेपि बहुत्वस्यान्वयः सुपाम् ॥४८॥**

**गगनपदस्य शब्दो न मुख्यार्थः। बहुशब्दस्य सङ्ख्यैव मुख्यार्थः । सङ्ख्येये भक्तिः । अतएव "बहुषु बहुवचनम्" इति सङ्ख्यायामेव तत्प्र-**

न गगनानीत्यादिप्रयोगप्रामाण्यमित्याशयेन समाधत्ते—**उच्यत** इत्यादिना। **पदार्थो** बहुत्वविशिष्टादिः, **यत्रैकदेशे** बहुत्वादौ, **उपसर्जनतां** विशेषणतां **गच्छति** निरूपकतया प्राप्नोति। **यत्रे**त्याधेयताया सप्तमी। तेन यन्निष्ठविशेषणता-निरूपको बहुत्वादिविशिष्टः पदार्थ इत्यर्थः। **दैवादि**त्यनेन प्रकृत्यर्थान्वययोग्य-त्वादीनामभावे एव तदेकदेशेन्वय इति सूचितम्। **गगनपदस्ये**ति। शब्दस्य तत्त्वे बहुत्वस्य तत्राबाधात्तत्प्रयोग आपद्येत, तदेव न, निरुक्तमुपसर्जनत्वमपि तत्र नास्ति येन तदापत्तिः स्यादित्याशयः। **वामे बहूनि**त्यत्र बहुत्वस्य बहुपद-मुख्यार्थत्वे भेदान्वयस्यैवोपेयतया कुशपदेन सह सामानाधिकरण्याभावात्तद्वि-रुद्धविभक्तिकत्वप्रसङ्ग इत्यत आह—**सङ्ख्येये भक्तिरि**ति। भज्यते, सेव्यते प्राज्ञेन प्रसिद्धतयोद्घोष्यत इति भक्तिर्धर्मोभिधेयेन सह सामीप्यादिः,

"अभिधेयेन सारूप्यात्सामीप्यात्समवायतः ।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता ॥" इत्युक्तः।

गुणसमुदायवृत्तेश्शब्दस्यार्थस्य भाग एकदेशो भक्तिः । सामीप्यतै-क्ष्ण्यादौ प्रतिपाद्ये श्रद्धातिशयो वा भक्तिः । मुख्यार्थस्य भङ्गः प्राधान्येन बोधजनकत्वाभावो वा भक्तिः। तेन च मुख्यार्थबाधरूढ्यादि-निमित्तकत्वं लक्षणायास्सूचितं भवति। भक्तितो लक्षणात आगतोर्थो भाक्त इत्यभिधीयते। बहुशब्दस्य बहुत्वमुख्यार्थकत्वे पाणिनिसूत्रं प्रमाणयति— **बहुष्वि**ति। ननु बहुवचनस्यैव बहुत्वविशिष्टवाचकताबोधकमुक्तसूत्रमित्यत आह—

**योगः। बहुवचनस्य सङ्ख्येयवाचकतायाः सर्वतन्त्रविरुद्धत्वात्।**

**एवं विंशत्यादिशब्दा अपि सङ्ख्यामेव प्राधान्येनाभिधत्ते। द्रव्यवाचिशब्दसमानाधिकरणास्तु बह्वादयो लक्ष्यार्थोपसर्जनीभूतेपि स्वशक्यार्थे बहुत्वान्वयं बोधयितुमीशते। एवं कृदर्थोपसर्जनीभूते "स्वं रूपं शब्दस्याशब्दसंज्ञा..." इत्यादिग्राहितसङ्गतिके स्वर्गशब्दस्वरूपादौ च बहुवचनार्थान्वयः। ४८।**

**बहुवचनस्ये**ति। **सर्वतन्त्रविरुद्धत्वादि**ति। सुबादिप्रत्ययानां कर्म्माद्याश्रय-वाचकतावादिभिरपि सुपां सङ्ख्यावाचकत्वमेव सिद्धान्तितम्, न तु सङ्ख्येयवाच-कत्वमित्याशयः।

विंशत्यादिशब्दानामप्युक्तकोशेन सङ्ख्यावाचकत्वमेव ज्ञाप्यत इत्याह—**एवमि**ति। **बहून् कुशा**नित्यस्योक्तकारिकार्थाक्रान्तत्वेनैव तत्र बहुपदार्थैकदेशेपि बहुवचनार्थान्वयोविरुद्ध इत्याह—**द्रव्यवाची**ति। **लक्ष्यार्थोपसर्जनीभूत** इति। कुशत्वसामान्यधर्म्मवन्नवकुशातिरिक्तकुशप्रतियोगिकभेदस्य त्रित्वविशिष्टत्रित्वा-श्रयकुशनिष्ठत्वप्रयोजकताया बहुत्वे सत्त्वात्तस्य निरुक्तविशेषणत्वाक्षतेरित्याशयः। एवं **पूज्यपादा** इत्यत्रापि पूजायां निरुक्तविशेषणत्वं बहुत्वेक्षतमिति तत्रापि नानु-पपत्तिरिति बोध्यम्। **स्वरव्यय**मित्यत्र तदन्वयप्रकारमाह—**एवमि**ति। **कृदर्थो-पसर्जनीभूत** इति। स्वर्गादिपदलक्ष्यतादृशानुपूर्वीमत्पदवाच्यविशेषणीभूते इत्यर्थः। **कृदर्थे**त्यस्य कृन्निरूपितवाच्यतावत्त्वरूपं यथाश्रुतं नार्थः, वाच्यपदस्या-त्राभावादसङ्गत्यापत्तेः, किन्तु वस्तुतो वाच्यादिपदघटकण्यत्प्रत्ययात्मककृदर्थ-तावच्छेदकीभूते कर्म्मत्वे इत्यर्थः। तत्र शब्दस्वरूपस्य निरूपितत्वसंसर्गेण विशेषणत्वं वाच्यत्वसामान्यधर्म्माश्रयाद् घटादितः स्वर्गादिपदवाच्यस्य व्यावर्त्त-नादेव बोध्यम्। स्वर्गादिशब्दस्वरूपाणामशक्तत्वे शक्यसम्बन्धरूपलक्षणायास्तत्रा-सम्भवादाह—**स्वं रूपमि**ति। ४८।

गुरुत्वगुणयोरैक्यं तादात्म्यं द्रव्यतेजसोः ।
गुणसौरभगन्धानामभेद इति दर्शनात् ॥४९॥
द्वन्द्वगर्भपदार्थैकदेशे द्वित्वबहुत्वयोः ।
अन्वयो युज्यते किं वा साधुत्वाय विभक्तयः ॥५०॥

गुणसौरभगन्धानामभेद इत्यत्र नित्यमेवोपसर्जनीभूतासु जातिषु यदि बहुत्वान्वयस्तदा द्वन्द्वे भिन्नैव व्युत्पत्तिः। न चेदापो गृहाः सिकता वर्षा सुमनसोप्सरसो लाजा इत्यादाविव साधुत्वार्थकमनन्वितस्वार्थमेवेदृशस्थले बहुवचनम् । ४९, ५० ।

एकत्वं द्वित्वमप्यर्थो जसादेरनुशासनात् ।
आहैकवचनं द्वित्वमाहैकवचनं बहु ॥५१॥

यत्र जात्यन्वितमेकत्वं विवक्षितं तत्र बहुवचनमप्यानुशासनिकं साधु, सम्पन्नो व्रीहिः सम्पन्ना व्रीहय इत्युभयप्रयोगदर्शनात् । सम्पन्नपदादीनान्तु बहुवचनं विशेष्यपारतन्त्र्यप्रयुक्तम् । एवमहं ब्रवीम्यावां ब्रूव इत्यर्थेन्यतरस्यां वयं ब्रूम इति प्रयोगादस्मदर्था-

निरुक्तविशेषणत्वस्य विरहेऽपि द्वन्द्वसमासे द्विवचनाद्यर्थद्वित्वादेः प्रकृत्यर्थेऽन्वयस्य बाधमात्रादेवैकदेशान्वय इति दर्शयति—**गुरुत्वे**ति । उक्तप्रयोगेषु पदार्थतावच्छेदकेषु गुरुत्वत्वादिषु द्वित्वाद्यन्वयस्य निष्प्रयोजनकतया निरुक्तविशेषणत्वस्य तत्राभावेन च निरर्थकत्वमेव, तेषा व्युत्पत्त्यन्तरकल्पनायां गौरवादित्याशयेनाह—**न चेदापो** इति । ४९,५० ।

विशेषानुशासनसत्त्वे एकवचनादीना द्वित्वादिवाचकत्वमपीत्याह—**एकत्वमि**ति । **आनुशासनिकमि**ति । "जात्याख्यायाम्..." इत्याद्युक्तसूत्रज्ञापितमित्यर्थः । **इति प्रयोगादि**ति । "अस्मदो द्वयोश्च" इति वार्त्तिकेन

न्वितमेकत्वं द्वित्वञ्च, यूयङ्कुरुत इत्यत्र युष्मदर्थान्वितमेकत्वं बहुवचनार्थः।

पुनर्वसु पुनर्वसू वा विशाखा विशाखे वा नक्षत्रमिति छन्दसि द्वित्वमेकवचनार्थः। लोके तु पुनर्वसुविशाखाशब्दौ नित्यद्विवचनान्तौ पुष्पवन्तनासत्यपदवत्। तिष्यश्च पुनर्वसू चेति विग्रहे तिष्यपुनर्वसू सिद्ध्यपुनर्वसू इत्यादिद्वन्द्वस्य द्विवचनं बहुत्वमभिधत्ते, "तिष्य-पुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनन्नित्यम्" इत्यनुशासनात्। अत्र बहुवचनस्य विशिष्योपादानादेतादृशस्थले तिष्यपुनर्वस्विति क्लीबैकवचनान्तप्रयोगोप्यस्तीत्यवगम्यते। तेन ज्ञाप्यते "सर्वो द्वन्द्वो विभाषैकवद्भवति" इति तत्र तिष्यपुनर्वस्वित्येकवचनमेव, न तु तिष्य-पुनर्वसुनी इति द्विवचनमिति काशिका। ५१।

विकल्पेन बहुवचनस्यानुशासनादित्याशयः।

**सिद्ध्यपुनर्वसू** इति। सिद्ध्यशब्दो नक्षत्रेर्थे "पुष्यसिद्ध्यौ नक्षत्रे" इत्यनेन निपातितः। ननूक्तसूत्रेण नित्यमेव द्विवचनस्य विधानादेकवचनान्तत्वं कथं तस्येत्यत आह—**अत्रे**ति। तथा च द्विवचनन्नित्यमित्येतावन्मात्रोक्ताव-प्येकवद्भावप्राप्तैकवचनस्य तत्रासाधुत्वे लब्धे बहुवचनस्येति विशिष्योपादानं तन्मात्रस्यैव द्विवचनादेशित्वम्, न त्वेकवचनस्येति लभ्यते। निषेधश्च प्राप्तस्यैव नाप्राप्तस्येत्येकवचनान्तत्वमपि तस्यानुशासनिकमेवेत्याशयः। तच्च ज्ञापनं समाहारद्वन्द्वस्य नित्यनपुंसकत्वानुशासनेन क्लीबैकवचनान्तत्वस्यैवेत्याशये-नाह—**तत्रे**ति। **तिष्यपुनर्वसुनी** इति। क्लीबद्विवचनान्तत्वं तस्य नेत्यर्थः। ५१।

एकवचनादीना सङ्ख्यार्थकत्वे एवोक्तप्रकारभेददर्शनं सङ्गच्छते, तदेव चासिद्धम्, तत्प्रकृतिभूतानां प्रातिपदिकानामेवैकत्वादिसङ्ख्यावाचकत्वादिति

नन्वेकत्वविशिष्टघटादौ प्रातिपदिकानामेव शक्तिरस्तु, सन्तु व्यञ्जकान्येकवचनादीनीति चेत् ?

उच्यते—

**गुरुत्वाविनिगम्यत्वशक्तिग्राहकविप्लवैः ।**
**अप्रसिद्ध्या च शक्यस्य न सङ्ख्या व्यञ्जकाः सुपः ॥५२॥**

सुप्रत्ययान्तघटपदत्वादिना वाचकतायामेकत्वविशिष्टघटत्वादिना वाच्यतायाश्च गौरवं शरीरतः, घटपदोत्तरसुत्वादिना वाचकत्वसम्भवेनैकतरपरिच्छेदकविनिगमकालाभः, "द्व्येकयोर्द्विवचनैकवचने" इति व्याकरणवाक्यार्थबुद्धेः[1] पूर्वमेकत्वादिविशिष्टघटाप्रसिद्ध्या तत्र प्रमाणान्तरस्य शक्तिग्राहकस्य व्याकोपः, सुतराञ्च गगनानि ब्रह्माणीत्यादौ बहुत्वविशिष्टगगनादेर्बहुवचनान्तगगनादिवदशक्यस्याप्रसिद्धिरिति विभक्तीनामेकत्वाद्यर्थ इत्येवोचितम्, न तु सुपो व्यञ्जकत्वम् । ५२ ।

शाब्दिकमतन्निरसितुमाशङ्कते—**नन्वेकत्वे**ति । तर्हि घट इत्यादितोपि द्वित्वबहुत्वयोर्बोधः स्यादित्यत आह—**सन्त्वि**ति । कारिकयोक्तान् सुपां सङ्ख्याया व्यञ्जकत्वविरहस्य तद्वाचकत्वस्य च साधकान् हेतून् प्रत्येकं विवृणोति—**सुप्रत्ययान्ते**त्यादिना । ५२ ।

---

१ व्याकरणस्य वाक्यार्थबुद्धेः इति मु० पु० पा० ।

( इति सटीकपदवाक्यरत्नाकरे वचनार्थविवरणम् । )

——:o:——

## ( अथ प्रथमाविवरणम् । )

**विभक्तिः प्रथमा तेषु स्वौजसः प्रत्ययास्त्रयः ।**
**आभिमुख्यं तदर्थस्तदभीष्टप्रत्ययात्मकम् ॥५३॥**

सुपाम्मध्ये सु औ जस् इति त्रयः प्रत्ययाः प्रथमाविभक्तिरित्यन्वर्था प्राचीनानां तदनुसारिणां पाणिनीयानाञ्च संज्ञा । शक्तिस्तु सन्वादिनैव, उकारजकारयोरनुबन्धयोः प्रयोगे नित्यमश्रयमाणयोर्वाचकानन्तर्भावात् ।

तस्याः प्रथमाया ब्रह्मन् पालय, चण्डमुण्डौ गच्छतम्, देवाः

सुब्विभक्तिषु प्रथमायाः प्रथममुपादानादादौ तदर्थं निरूपयितुं ता विभजते—**विभक्तिः प्रथमे**ति । **तदर्थः** "सम्बोधने च" इति विहितप्रथमार्थं इत्यर्थः । **तद्** आभिमुख्यम् अभीष्टप्रत्ययरूपमित्यर्थः । **अन्वर्थे**ति । प्रथमोपात्तत्वात्तत्संज्ञाया अर्थानुसारित्वमित्यर्थः । **पाणिनीयानाञ्चे**ति । पाणिनिना स्वादीनां प्रथमादिविधायकसूत्रस्याकरणात् "प्रथमानिर्दिष्टं समास उपसर्जनम्" "द्वितीया श्रितातीत..." इत्यादिसूत्रेषु प्रथमादिसप्तसंज्ञाशब्दैस्तेषामेव संज्ञित्वेन व्यवहाराच्च प्राचीनकर्तृकसंज्ञानुसारित्वमेव तेषामित्याशयः । ननूकारजकारयोरेकवचनबहुवचनान्तर्गतयोः कथन्न वाचकतावच्छेदकघटकत्वमित्यत आह—**उकारजकारयोरि**ति । **अनुबन्धयोः** इत्संज्ञकयोः । इदञ्च तयोः "तस्य लोपः" इत्यनेन लोपावश्यम्भावात् **प्रयोगे नित्यमश्रूयमाणत्वे** हेतुः । तथा च देवस्त्राता सारस्वतौ मेषौ सुमनसस्त्रिदिवे इत्यादौ श्रूयमाणतया सकारादीनां वाचकत्वे सिद्धे कृष्णः पालयिता ब्रह्मन् पालय अवी पशू सुमनसो नाके इत्यादौ तेषामश्रूयमाणत्वेपि विसर्गादिना स्मरणादेव शाब्दबोध इति भावः ।

प्रसीदत इत्यादावाभिमुख्यमर्थः । तच्चाभीष्टज्ञानस्वरूपम् । तत्र समवेतसमवायिभावेन प्रातिपदिकार्थस्याभीष्टे ज्ञाने तस्य च विषयतया एकत्वत्कर्त्तृकाशंसाविषयपालनक्रियायामाशंसाविषयपालन-कर्त्तर्य्येकत्र वाख्यातोपात्ते कर्त्तरि कृतौ वा तादात्म्येनाधाराधेय-भावेनाध्याहृतत्वंपदार्थस्य विशेषणतया विशेष्यतया वान्वयः, युष्मदि समानाधिकरणे मध्यमपुरुषविधानात् सम्बोधनप्रथमान्तार्थेन कर्त्तुरन्वयासम्भवात् ।

तथा च ब्रह्मसमवेताभीष्टज्ञानविषय एकत्वत्कर्त्तृकाशं-साविषयपालनक्रियेति आशंसाविषयपालनकर्त्रैकस्त्वमिति वा ब्रह्मन्

तत्र ब्रह्मन् पालयेत्यत्र । **समवेतसमवायिभावेन** समवेतत्वसम्बन्धेन । **प्रातिपदिकार्थस्य** ब्रह्मणः । **एकत्वत्कर्त्तृके**ति । वैयाकरणमतेनेदम् । तैः क्रियामुख्यविशेष्यकस्यैव शाब्दबोधस्योपगमात् पालयेत्येकवचनेनैकत्वस्य युष्मत्पदार्थान्वितस्य लोटा इच्छात्मिकाया आशंसायाः धातुना पालनक्रियायाः अध्याहृतत्वंपदोत्तरप्रथमया तादात्म्येन प्रकृत्यर्थान्वितस्य कर्त्तुरुपस्थिते-स्तादृशक्रियालाभ इति बोध्यम् । **आशंसाविषये**ति तार्किकमते । तैः प्रथमान्तार्थ-स्यैवान्वयबोधीयमुख्यविशेष्यत्वोपगमात् । **कर्त्तरि कृतौ वे**त्यपि तदुभयमते क्रमेण बोध्यम् । एवं **विशेषणतया विशेष्यतया वे**त्यपि । त्वंपदस्याध्याहार आवश्यक इत्यत्र हेतुमाह--**युष्मदी**ति । **कर्त्तुरन्वयासम्भवादि**ति । तथा च तदनध्याहारे आख्यातार्थस्य ब्रह्मादिपदार्थ एवान्वयस्य वक्तव्यतया युष्मत्पदे-नाख्यातस्य सामानाधिकरण्यविरहान्मध्यमपुरुषप्रयोगस्यानुपपत्तिरेव स्यादिति भावः ।

अत्रैवं सति यत्र चैत्र! मैत्रो गच्छतीत्यादिवाक्यजन्यबोधश्चैत्रस्य न जातस्तत्र चैत्रस्य सम्बोध्यत्वानुपपत्तिः, दर्शितस्य सम्बोधनत्वे तादृशज्ञान-वत्त्वस्यैव सम्बोध्यत्वरूपतया तस्य तत्र विरहादित्यतोन्यथा तदर्थमाह—

पालयेत्यत्र वाक्यार्थबोधः ।

सम्बोधनप्रथमायास्तु[1] ज्ञानमिच्छा च खण्डशोर्थः । ज्ञानं विशिष्ट-वाक्यार्थत्वावच्छिन्नविषयतया क्रियायामिच्छा च प्रातिपदिकार्थसमवेत-

**सम्बोधने**ति । **इच्छा चे**ति । मैत्रो गच्छतीत्यादिवाक्यार्थीभूतस्य मैत्रकर्तृक-गमनस्य गमनकर्तृत्वविशिष्टमैत्रस्य वा ज्ञानं चैत्रस्य भवत्वित्यादिविशेष-रूपेणैवेच्छा सर्वत्र सम्बोधनप्रथमाघटिततत्तद्वाक्यस्थले बोध्या । तत्र गमना-दीनामन्यलभ्यतया ज्ञानमिच्छामात्रञ्च प्रथमार्थ इत्यर्थः । तत्रेच्छाया प्रातिपदिकार्थस्य चैत्रादेरिच्छायां समवेतत्वसम्बन्धावच्छिन्नस्वप्रकारता-निरूपितज्ञानत्वावच्छिन्नविशेष्यत्वावच्छिन्नोद्देश्यतानिरूपकत्वेनान्वयः । इच्छा-याश्च स्वोद्देश्यत्वसंसर्गेण ज्ञाने, तस्य च स्वविशेष्यतानिरूपितविषयित्व-संसर्गावच्छिन्नप्रकारतावत्त्वसंसर्गेण वाक्यार्थीभूते तादृशे गमने गमनकर्त्तरि मैत्रे वान्वय इत्याशयेनाह—**ज्ञानमि**त्यादि । **विशिष्टवाक्यार्थत्वे**ति । निरूप्यनिरूपकभावापन्नगमनादिविषतयेत्यर्थः । तेन तादृशविशिष्टवाक्यार्थस्य यत्राप्रसिद्धिस्तत्रापि नानुपपत्तिरिति बोध्यम् । उद्देश्यताया विषयतायाश्च तत्तदिच्छीयत्वेन निरूप्यनिरूपकभावापन्नतत्तद्विषयतात्वेन च संसर्गकुक्षौ निवेशान्नान्यादृशेच्छोद्देश्यत्वादिकमादायातिप्रसङ्गः । **क्रियायामि**ति । कर्त्तरि वेत्यप्यूह्यम् । **प्रातिपादिकार्थसमवेते**त्यनेन प्रातिपदिकार्थस्येच्छायामुक्त-संसर्गेणान्वयः सूचितः । तेनोक्तस्थले सम्बोध्यत्वानुपपत्तिविरहः, तादृशवाक्यार्थ-

---

१ सम्बोधनं बोधोद्देश्यकेच्छा । तत्र ज्ञानमिच्छा च खण्डशः प्रथमार्थः । तत्र प्रातिपदिकार्थः समवेतत्वसम्बन्धेन ज्ञानेन्वेति । प्रातिपदिकार्थान्विते ज्ञाने उद्देश्यता-सम्बन्धेनेच्छान्वेति, ज्ञानञ्च विशिष्टविषयतासम्बन्धेन वाक्यार्थेन्वेति । एव प्रातिपदिकार्थ-समवेतज्ञानस्योद्देश्यतया ज्ञानसमवायितयोद्देश्यत्वस्वरूपं सम्बोध्यत्वमर्थतः प्रातिपदिकार्थस्य प्रतीयते । एतदेव सम्बोध्यत्वं काशिकायामाभिमुख्यपदेनोक्तम् । एव सति ब्रह्मन् पाल्येत्यादौ ब्रह्मसमवेतेष्टज्ञानविषय एकत्वकर्तृकमाशंसाविषयपालनमिति शाब्दिकानां ब्रह्मसमवेतेष्टज्ञानविषय आशंसाविषयपालनकर्तृकत्वमिति तार्किकणा शाब्दबोधः ।

वाक्यार्थज्ञानत्वावच्छिन्नविषयतया ज्ञानेन्वेति। तेन वाक्यार्थविषयकज्ञानसमवायितयोद्देश्यत्वस्वरूपं सम्बोध्यत्वमर्थतः प्रतिपाद्यपुरुषे प्रतीयते। सम्बोध्यत्वञ्चैकवचनसहकृतप्रातिपदिकेनैकत्वविशिष्टस्वप्रवृत्तिनिमित्तधर्म्मावच्छेदेन बोध्यते।

यद्रूपावच्छेदेन च सम्बोध्यत्वं प्रथमाप्रत्याय्यं तद्रूपविशिष्टमेव युष्मदा परामृष्यते, सम्बोध्यतावच्छेदकत्वोपलक्षितधर्म्मविशिष्ट एव युष्मत्पदशक्तेः। अतएव ब्राह्मणास्त्वं प्रसीद, त्वां प्रणमामि, त्वया

ज्ञानस्यानुदयेपि वक्तुस्तादृशेच्छामादायैव तपदुपपत्तेरिति बोध्यम्। तथा च ब्रह्मन्! पालय, चैत्र! मैत्रो गच्छतीत्यादिवाक्याद् ब्रह्मचैत्राभ्यामुक्तसंसर्गाभ्यां विशिष्टा या एकत्वकर्तृकाशंसाविषयपालनक्रियादिरूपविशिष्टवाक्यार्थज्ञानं तयोर्भवत्वित्याद्याकारिका वक्तुरिच्छा, उद्देश्यतासंसर्गेण तद्विशिष्टं यत्तादृशवाक्यार्थज्ञानं निरुक्तविषयतासंसर्गावच्छिन्नप्रकारतावत्त्वसंसर्गेण तद्विशिष्टो यस्तादृशवाक्यार्थस्तद्विषयकोन्वयबोधः। एवमन्यत्रापि बोध्यः। **तेन** निरुक्तसमवेतत्वसंसर्गावच्छिन्नप्रकारतानिरूपितेत्यादिसंसर्गेण चैत्रस्य ज्ञानेन्वयेन। **अर्थत** इति। शब्दतश्चैत्रसमवेतत्वस्य ज्ञाने प्रतीतौ ज्ञानसमवायित्वस्य चैत्रे तथैव लाभादिति भावः। **प्रतिपाद्यपुरुषे** चैत्रादौ। प्रातिपदिकार्थचैत्रत्वादिमात्रावच्छेदेनैव सम्बोध्यत्वस्य प्रत्यायने "ब्राह्मणास्त्वं प्रसीद..." इत्यादीनां वक्ष्यमाणप्रयोगाणामपि प्रामाण्यं प्रसज्येतेत्यत आह—**सम्बोध्यत्वञ्चे**ति। **स्वप्रवृत्तिनिमित्ते**ति। स्वं चैत्रादिपदम्।

एकवचनाद्यर्थैकत्वादीना सम्बोध्यतानवच्छेदकत्वेपि युष्मत्पदेन तद्विशिष्टस्य कथं न परामर्श इत्यत आह—**यद्रूपावच्छेदेने**ति। **सम्बोध्यतावच्छेदकत्वोपे**ति। एतच्च स्वतन्त्रोच्चरितयुष्मत्पदाभिप्रायेण। अनुवादकवाक्यस्थस्य तस्यान्यादृश्येव शक्तिः। सा चाग्रिमकारिकाविवरणव्याख्याने व्युत्पादयिष्यते। **अतएव** एकत्वादिविशिष्टचैत्रत्वादेरेकवचनान्तप्रातिपदिकप्रतिपाद्यसम्बोध्यता-

भुज्यतामित्यादयो न प्रयोगाः, बहुब्राह्मणत्वावच्छिन्नाया एव सम्बोध्यतायाः प्रथमयोपात्तत्वेन तद्रूपावच्छिन्नस्यैव युष्मदा परामर्शे तत्रैकवचनस्यानन्वितार्थकत्वादसाधुत्वाच्च ।

एवं यत्पदगर्भवाक्येन यद्रूपविशिष्टस्योपस्थितिस्तद्रूपविशिष्टपरामर्शिनि तच्छब्देपि वचनैक्यव्यवस्था द्रष्टव्या, ये पचन्ति तमानयेत्यप्रयोगात् । यच्छब्दगर्भवाक्येन बहुत्वविशिष्टपाककर्तृमनुष्यत्वविशिष्टस्योपस्थिततया तद्रूपविशिष्टपरामर्शितच्छब्दार्थे एकवचनार्थस्यानन्वयात् ।

"हे चण्ड ! हे मुण्ड ! बलैर्बहुलैः परिवारितौ ।
तत्र गच्छतङ्गत्वा च सा समानीयतां लघु ॥..."

इत्यादावेकत्वविशिष्टचण्डत्वाद्यवच्छेदेन प्रथमया सम्बोध्यत्वबोधनेपि तादृशरूपद्वयावच्छिन्नपरामर्शिनोपि युष्मच्छब्दाद् द्विवचनन्नानुपपन्नम् । एकघटैकपटावित्यादिद्वन्द्वसमास इव प्रकृत्यर्थतावच्छेदकनानात्वे तावत्समानाधिकरणसङ्ख्याया एव वचनप्रतिपाद्यत्वात् ।

वच्छेदकत्वादेव । **न प्रयोगा** इत्यत्र हेतुर्बहुिति । **अनन्वितार्थकत्वादि**ति । निरुक्तस्य सजातीयद्वितीयराहित्यस्यैकवचनार्थस्य बहुषु ब्राह्मणेषु बाधादित्यर्थः । एकत्वत्वावच्छिन्नस्यैव तत्रैकवचनार्थत्वोपगमे तस्य केवलान्वयित्वादनन्वितत्वाभावादाह—**असाधुत्वाच्चे**ति । विशेष्यवाचकेत्यादिनियमाक्रान्तत्वादिति भावः ।

अत्रैव प्रसङ्गात्पूर्ववाक्यस्यैकवचनादिसहकृतप्रातिपदिकेनोपस्थापितस्यैकत्वादिविशिष्टचैत्रत्वादेरेव तत्पदशक्यतावच्छेदकत्वम्, अन्यथातिप्रसङ्ग इत्याह--**एवमित्यादि**ना ।

ननु तर्हि "हे चण्ड ! हे मुण्ड !"...इत्यादौ **परिवारितौ गच्छतमि**ति द्विवचनं कथं साध्वित्यत आह—**हे चण्डे**ति । **प्रतिपाद्यत्वादि**ति । तथा च चण्डमुण्डेत्युभयपदार्थतावच्छेदकयोश्चण्डत्वमुण्डत्वयोरेकत्वविशिष्टयोर्घटत्वयोश्च नानात्वात्तत्सामानाधिकरण्याद् द्विवचनप्रतिपाद्याया द्वित्वसङ्ख्यायास्तदाश्रये चण्डादाववाधाद्विवक्षायाः सम्भवाच्च नानन्वितार्थकत्वं न वा विशेष्यवाचकेत्यादिनियमाक्रान्तत्वमिति भावः ।

१ गच्छन्तम् इति मु० पु० पा० ।

अतएव—

"यश्च मूढतमो लोके यश्च बुद्धेः परङ्गतः ।
तावुभौ सुखमेधेते सीदत्यन्तरितो जनः ॥..."

इत्यादौ यच्छब्दगर्भवाक्येनैकत्वविशिष्टमूढतमादेरुपस्थापितत्वे तदुभयपरामर्शिनस्तच्छब्दाद् द्विवचनमप्युपपन्नम् । "हे सौमित्रे ! सखायस्ते निर्विशेषस्त्वया गुहः । युवाङ्गत्वा नदीमेनां शीतमानयतं[1] पयः ॥" इत्यत्र यच्छब्दाकाङ्क्षापरिपूरणक्षमेन तच्छब्देन युष्मद् एकशेषे स्मृततच्छब्दार्थं युष्मल्लक्ष्यं वादाय द्विवचनोपपत्तिः ।

पूर्ववाक्यस्थपदविरुद्धवचनकस्य तत्पदस्याप्युक्तरीत्यैव साधुत्वमिति दर्शयति— **यश्चे**ति । **हे सौमित्र** इति । अत्र सम्बोध्यतावच्छेदकत्वस्यैकत्वविशिष्टलक्ष्मणत्व एव सत्त्वात्तत्परामर्शकस्य युष्मत्पदस्य कथं द्विवचनान्तत्वमिति जिज्ञासानिवृत्तये एतस्योपादानम् । **युष्मद एकशेष** इति । स च त्वञ्चेति समासे सर्वादिशब्दपाठक्रमे तच्छब्दाद्युष्मत्पदस्य परत्वात्तस्यैकशेषे तत्पदस्य लोपे च युवामिति प्रयोग इत्याशयः । युष्मल्लक्ष्यं **वादाये**ति । "सर्वनाम्नि न लक्षणा" इति प्रवादस्य निर्युक्तिकत्वादश्रद्धेयत्वाभिप्रायेणेदम् । **द्विवचनोपपत्तिरि**ति । युष्मत्पदसम्बोध्यत्वस्य लक्ष्मणमात्रे सत्त्वेपि तच्छब्दार्थगुहतद्गतद्वित्वस्य द्विवचनप्रत्याय्यस्य तत्रावाधादित्याशयः ।

इयमेव रीतिर्भवच्छब्देपि वोध्या । तेन हे ब्राह्मणा भवान् प्रसीदत्वित्याद्याकाराः प्रयोगा न साधवः । न च वेणीसंहारे द्रोणवधोत्तरमर्जुनसात्यकी प्रत्यश्वत्थाम्नो वाक्ये "अर्जुन ! अर्जुन ! सात्यके ! सात्यके !

"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकम् ।
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः ॥
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना—
मयमहमसृङ्मेदोमांसैः करोमि दिशा बलिम् ॥"

---

१ शीघ्रम् इति क्वचित् पा० ।

**"जानीहि नाथ! दीनोस्मि..." इत्यादावप्रामाण्यशङ्काशून्यनिश्चयोपि ज्ञाधातोरर्थः, अन्यथा मदीयदीनभावस्वरूपवाक्यार्थे प्रथमार्थनाथसमवेताभीष्टज्ञानस्य विषयतयान्वयेन विवक्षितार्थनिष्पत्तौ जानीहीत्यस्य पौनरुक्त्यप्रसङ्गात् ।**

इत्यत्र सम्बोध्ययोरर्जुनसात्यक्योर्द्वित्वाद्बहुवचनान्तभवच्छब्दप्रयोगोसाधुरिति वाच्यम्, तत्र शत्रन्तभूधातोर्निष्पन्न एव भवच्छब्दो न तु युष्मच्छब्दपर्यायस्सर्वादिगणपठितः; तेन तत्र मनुजपशुविशिष्टैरित्यर्थे भवच्छब्दस्य मनुजपशुविशेषणत्वादनुपपत्तेरभावात् ।

सम्बोधनप्रथमाया ज्ञानेच्छार्थकत्वे यत्र तदन्तपदघटितवाक्ये ज्ञानार्थकधातुप्रयोगस्तत्र कथमन्वयबोधः, धात्वर्थस्य प्रथमयैव लाभादित्यत आह— **जानीही**ति। **ज्ञाधातोरर्थ** इति । तथा च तादृशधात्वर्थस्य लोडर्थाशंसाविषयत्वान्वितस्याभेदेन प्रथमार्थेन्वयात्प्रथमामात्रेण तादृशार्थबोधजननस्यासम्भवान्न **जानीही**त्यस्य पौनरुक्त्यमिति भावः । **अन्यथा** ज्ञाधातोर्मुख्यार्थकत्वे ।

इदन्तु बोध्यम्। ज्ञाधातोर्मुख्यार्थकत्वेपि दीनाभिन्नमत्कर्तृकभवनविषयके आशंसाविषयत्वत्कर्तृकज्ञाने, भवनकर्तृत्वान्वितदीनाभिन्नमद्विषयकज्ञानाश्रयत्वान्वितत्वंपदार्थे वा अस्मीत्युत्तमपुरुषजानीहीतिमध्यमपुरुषान्यथानुपपत्त्याध्याहृताहंत्वंपदार्थघटितवाक्यार्थे क्रमेण शाब्दिकतार्किकमतसिद्धे सम्बोधनप्रथमान्तार्थस्योक्तरीत्या नाथप्रकारकज्ञानोद्देश्यकेच्छाप्रकारत्वस्यान्वये नाथस्य मदीयदीनभावविषयकं ज्ञानं जायतामितीच्छायास्सम्भवात्तदीयोक्तविषयित्वसम्बन्धावच्छिन्नप्रकारताया वाक्यार्थीभूतमदीयदीनभावविषयकज्ञानविषयकेनुव्यवसायरूपे ज्ञाने सत्त्वान्न जानीहीत्यस्य पौनरुक्त्यम्; तादृशज्ञानविषयकज्ञानोद्देश्यकेच्छापर्य्यन्तानुसरणञ्च नाथसमवेतमदीयदीनभावविषयकज्ञानेपेक्षात्मकताया लाभाय, उपेक्षात्मके तादृशे ज्ञाने सत्यपि मदीयदीनभावापनयनासम्भवेनानुव्यवसायविषयकज्ञानस्यापेक्षात्मकताया आवश्यकत्वादिति ।

**यत्तु नाथ पालयेत्यादौ सम्बोधनप्रथमान्तपदार्थ एव पालनकृत्यन्वय इति । तदपि न, आभिमुख्ये गुणीभूते प्रथमान्तार्थे आख्यातार्थान्वयायोगात्, अन्यथा नारायण इव नरो गच्छतीत्यादौ नारायणेपि गमनकर्तृत्वान्वयप्रसङ्गात्, युष्मदाख्यातयोराकाङ्क्षारूपसामानाधिकरण्यं विना मध्यमपुरुषस्यासाधुत्वाच्च ।**

**न च युष्मदः स्थानिन्यपि मध्यमपुरुषोनुशिष्यते, युष्मदः स्थानित्वं युष्मत्पर्य्यायसम्बोधनपदप्रयोगेप्युपपद्यत इति वाच्यम्, भवच्छब्दसामानाधिकरण्येपि तथात्वप्रसङ्गात् । ५३ ।**

निरुक्तस्य सम्बोधनघटितवाक्यार्थविषयकबोधस्य धात्वर्थविशेष्यताकत्वेन प्रथमान्तार्थस्य तादृशविशेष्यतालाभाय धात्वर्थस्य प्रथमान्तार्थेन्वय इति कस्यचिन्मतं निरसितुमुपन्यस्यति—**यत्त्विति** । **आख्यातार्थान्वयायोगादिति** । एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र तथान्वयस्य निराकाङ्क्षत्वादित्याशयः । उक्तव्युत्पत्त्यनुपगमे दोषमाह—**अन्यथेति** । नन्वेकत्र विशेषणत्वेनान्वितस्यान्यत्र विशेषणत्वेनैवान्वयो विरुद्धो न तु विशेष्यत्वेनापीति नारायण इवेत्यत्र तादृशान्वये क्षतिविरह इत्यत आह—**युष्मदेति** । तत्पदप्रयोज्याभेदसंसर्गावच्छिन्नप्रकारताप्रयोजकत्वरूपस्य निरुक्तसामानाधिकरण्यस्य तार्किकमते युष्मत्पदाख्यातपदयोरसम्भवादाह—**आकाङ्क्षारूपेति** । सापि तत्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वरूपैव, अन्यस्यात्र प्रवेशे प्रयोजनाभावात् । तथा च प्रकृते आख्यातपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वस्य नाथपद एव सत्त्वात्पालयेतिमध्यमपुरुषानुपपत्तिरेवेत्यर्थः ।

ननु सूत्रे स्थानिन्यपीत्यनेन युष्मत्पदपर्य्यायप्रयोगेपि मध्यमपुरुषविधानान्नानुपपत्तिरित्याह—**नचेत्यादि** । तथा च युष्मत्पदपर्य्यायसम्बोधनपदसामानाधिकरण्यस्याख्याते सत्त्वादेव मध्यमपुरुषोपपत्तिरित्यर्थः । नाथपदस्य सम्बोधनरहितस्य युष्मदर्थावाचकत्वेपि तत्सहितस्य सम्बोध्यत्वविशेषितस्यैव प्रकृत्यर्थस्य बोधकतया तत्पर्य्यायता बोध्या । **तथात्वप्रसङ्गादिति** । भवान्

**स्यादेतत्, यदि सम्बोध्यः पुरुषो ज्ञाने समवेतत्वेन विशेषणम्, विषयतया चेच्छा, तच्च ज्ञानं वाक्ये प्रधानतया प्रतिपाद्यमानभावनायां क्रियायां वान्वेति; तदा सम्बोध्यवृत्तिवाक्यार्थज्ञानस्य सिद्धत्वनिश्चयदशायां वाक्याजन्यत्वनिश्चयदशायाञ्च चैत्र ! त्वं गच्छेत्यादिवाक्यप्रयोगापत्तिः, भाविभूतपुरुषान्तरीयेच्छाविषयत्वस्य चैत्रीयवाक्यार्थज्ञानेबाधितत्वात्, अगृहीतपदसङ्केतं म्लेच्छमुद्दिश्यार्यैः प्रयुज्यमानस्य शुङ्गापसरेत्यादिवाक्यस्य शक्तिभ्रमाजन्यत्वेनोपहास्य-**

पालयेत्यादीनामपि साधुत्वप्रसङ्गादित्यर्थः। एवञ्च स्थानिन्यपीत्यस्य नोक्तार्थकत्वम्, किन्त्वाख्यातसमानाधिकरणयुष्मत्पदस्य प्रयोगोऽध्याहारो वा यत्र तत्रेत्यर्थकत्वाद्भवत्पदप्रयोगे च युष्मत्पदाध्याहारस्य निष्प्रयोजनकतया न तदापत्तिरिति बोध्यम्। ५३।

उक्तरीत्या सम्बोधनप्रथमाघटितवाक्याच्छाब्दबोधोपगमेतिप्रसङ्गमाशङ्कते—**स्यादेतदित्या**दिना। **समवेतत्वेने**ति। समवेतत्वसंसर्गावच्छिन्नप्रकारतयेत्यर्थः। **सिद्धत्वनिश्चयदशायामि**ति। गमनकर्तृत्वप्रकारकज्ञानस्य चैत्रवृत्तित्वनिश्चयकाल इत्यर्थः। **वाक्याजन्यत्वनिश्चयदशायाञ्चे**ति। इदञ्च **शुङ्गापसरेत्यादि**वाक्यस्योपहास्यत्वाभावेपि प्रयोजकम्। **प्रयोगापत्तिरि**ति। तादृशवाक्यप्रयोगस्य प्रामाण्यापत्तिरित्यर्थः। तत्र हेतु**र्भाविभूते**ति। **अगृहीतपदसङ्केतमि**ति। संस्कृतशुङ्गादिपदशक्तिज्ञानाभाववन्तमित्यर्थः। संस्कृतशब्दज्ञानाभावस्य बाहुल्येन म्लेच्छेष्वेव दर्शनादाह—**म्लेच्छमि**ति। **शक्तिभ्रमाजन्यत्वेने**ति। बुबोधयिषाप्रयोज्यवाक्योच्चारणं प्रति वाक्यार्थज्ञानस्य कारणतया म्लेच्छज्ञाने **शुङ्गापसरे**त्यादिवाक्यजन्यत्वस्य बाधनिश्चयदशायां तादृशवाक्यजन्यत्वविशिष्टज्ञानोद्देश्यकेच्छायां प्रथमानिरूपितशक्तेर्ज्ञानस्य प्रमात्वासम्भवात् सिद्धान्ते तस्य शक्तिभ्रमजन्यत्वेनोपहास्यताप्रयोजकत्वम्। निरुक्तरीत्या सम्बोधनपदस्य शक्तिस्वीकारे तु तादृशबाधनिश्चयकालेपि म्लेच्छस्य तादृशवाक्यार्थीभूताशंसाविषयापसारणज्ञानं जायतामित्याकारकेच्छाया

स्वाभावप्रसङ्गाच्च। तत्कालीनतत्पुरुषीयेच्छाविषयत्वस्य तद्वाक्यजन्यत्वस्य च ज्ञाने प्रवेशे सम्बुद्धिपदशक्त्यानन्त्यं दुर्ग्रहत्वञ्च स्यादिति चेत् ?

उच्यते—

**यथा युष्मत्पदादीनां कालपुंवाक्यभेदतः।**
**प्रवृत्तयो न भिद्यन्ते प्रथमायास्तथैव ताः ॥५४॥**

कालपुरुषान्तरीयेच्छाविषयप्रमाणान्तरजन्यवाक्यार्थबुद्धिसमवायितावच्छेदकधर्म्मवति म्लेच्छे युष्मच्छब्दस्यार्य्यैश्शक्तिभ्रमं विना-प्रयोगाद्यथा विशिष्य तत्तत्पदानां तत्तत्प्रयोगजनकेच्छाविषय-

असिद्धमनुमित्यादिस्वरूपं ज्ञानमादायैव सम्भवाच्छक्तिज्ञानस्य प्रमात्वादुपहास्यताप्रयोजकस्य शक्तिभ्रमस्याभावात्तन्न स्यादित्याशयः। उपहास्यताप्रयोजकत्वं शक्तिभ्रमस्य न साक्षात्, तथा सत्यपभ्रंशपदानामपि तज्जन्यत्वात्तत्प्रयोगस्याप्युपहास्यत्वापत्तेः, किन्त्वगृहीतसङ्गतिकपुरुषोद्देश्यकबोधजनकत्वेच्छाप्रयुक्तत्वमेव, तथा म्लेच्छस्य संस्कृतशब्दज्ञानविरहेण तमुद्दिश्य प्रयुक्तस्य शुङ्गापसरेत्यादिवाक्यस्योपहास्यताप्रयोजकत्वम्, अपभ्रंशपदाना शक्तिभ्रमस्य लक्षणाज्ञानस्य च भृत्यादीनां सत्त्वान्न तानुद्दिश्य प्रयुक्तानां तेषामुपहास्यत्वमिति।

अत्र स्वोच्चारणप्रयोजकेच्छाविषयत्वस्वघटितवाक्यार्थविषयकत्वोभयसम्बन्धेन स्वविशिष्टं यज्ज्ञानं तत्समवायितावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने तत्समवायित्वप्रकारकेच्छाविशेष्यतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने वा युष्मत्पदस्य शक्तिः। कालान्तरीणपुरुषान्तरीयज्ञानानां तादृशत्वाभावान्न तत्समवायिनो युष्मत्पदवाच्यत्वम्। तथैव सम्बोधनप्रथमाया अपि निरुक्तोभयसम्बन्धेन स्वविशिष्टं यज्ज्ञानं तत्समवायी तत्समवायित्वप्रकारकेच्छाविशेष्यो वा शक्यः। अनुगमकञ्चोपलक्षणीभूतं तादृशसमवायितावच्छेदकत्वं तादृशविशेष्यतावच्छेदकत्वं वेति नाननुगमो न वा शक्तेरानन्त्यं दुर्ग्रहत्वं वेत्याशयेन समाधत्ते—**उच्यत** इत्यादिना। ५४।

**तत्तत्पदजन्यवाक्यार्थबुद्धिसमवायित्वं तदवच्छेदकत्वं वा प्रवृत्ति-निमित्तं तदनुगमकं वा साधारणधर्म्मपुरस्कारेण वक्ष्यमाणरीत्या गृह्यत इति नाननुगमः, तथा सम्बुद्धिप्रथमाया अपि शक्तिः कालपुरुषवाक्यविशेषोपलक्षिताभीष्टज्ञानेनानुगममावहतीति व्युत्पाद-यिष्यते। ५४।**

**ननु तथापि—**

**"अखण्डशक्तिनिर्भिन्ने वत्से जहति चेतनाम्।**
**हताश राम! कस्यार्थे दग्धं जीवितमिच्छसि॥..."**

**इत्यादौ वक्तरि सम्बोध्यत्वमनुपपन्नम्। तदा हि तस्य पुंसो वाक्यार्थ-ज्ञानस्यासत्त्वे वाक्यप्रयोगोनुपपन्नः। सत्त्वे तु तत्रेच्छा सिद्धे विषये वाक्यार्थबोधश्च न सम्भवत इति प्रथमार्थबाध इति चेत्?**

ज्ञानोद्देश्यकेच्छायाः प्रथमार्थत्वे पुनरन्यामनुपपत्तिमाशङ्कते—**नन्वि**त्यादिना। **अखण्डे**ति। **अकाण्डेति** कचित्पाठः। रावणप्रहितशक्त्या लक्ष्मणे मूर्च्छिते सति रामस्य विलापोक्तिरिदम्। **अखण्डा** खण्डितुमयोग्या या शक्तिस्तया निर्भिन्ने, **अकाण्डे** अकाले शक्त्या निर्भिन्न इति चार्थः। **वक्तरि** रामचन्द्रे। ननु स्वोच्चरितस्यापि वाक्यस्य स्वाभीष्टज्ञानजनकत्वाद्वक्तुः सम्बोध्य-त्वमुपपन्नं स्यादित्यतस्तादृशवाक्यार्थज्ञानस्य वक्तृसमवेतत्वासमवेतत्वे निरस-यति—**तदा हि तस्ये**ति। तद्वाक्यजन्यस्येत्यर्थः। **तदा हि तस्य वाक्यार्थ-ज्ञानस्य पुंसोसत्त्व** इत्यन्वयः। **अनुपपन्न** इति। वाक्यप्रयोगं प्रति वाक्यार्थ-ज्ञानस्य कारणतयेति भावः। **सत्त्वे त्वि**ति। तद्वाक्यजन्यवाक्यार्थज्ञानस्य तद्वाक्यप्रयोक्तृसमवेतत्व इत्यर्थः। **तत्रेच्छे**ति। **न सम्भवत** इत्यनेनान्वितम्। तादृशेच्छायां तादृशवाक्यार्थज्ञानस्य प्रतिबन्धकतया तादृशेच्छाया अनुदय इत्यर्थः। कथञ्चित्तादृशेच्छायाः सम्भवेपि पूर्वसिद्धतादृशज्ञानविषयकशाब्द-बोधो न सम्भवति, सिद्धेरनुमिताविव शाब्दबोधेपि प्रतिबन्धकत्वादित्याह—**सिद्धे विषय** इति।

उच्यते—

**प्रमाणान्तरनिष्पन्नवाक्यार्थज्ञानजन्मना ।**
**वाक्येन जन्याभीष्टा धीर्वक्तर्य्यपि न बाधिता ॥५५॥**
**अचेतनेपि सम्बुद्धिप्रथमा या प्रयुज्यते ।**
**तस्यास्तुल्या गतिस्तेषु निर्दिष्टैर्युष्मदादिभिः ॥५६॥**

प्रमाणान्तरजन्यायां वाक्यार्थबुद्धौ सत्यामपि वाक्यजन्य-वाक्यार्थबुद्धित्वावच्छेदेनेच्छा नानुपपन्ना, श्रवणसिद्धावपि मननेच्छावत् । सिद्धिस्तु शाब्दबुद्धिं प्रति न प्रतिबन्धिका । प्रतिबन्धिका चेदसत्यामेव शाब्दबोधेच्छायामिति वक्तुरपि स्ववाक्यजनिताभीष्ट-वाक्यार्थबुद्धिसमवायितया सम्बोध्यत्वमबाधितमिति । ५५ ।

उक्तानुपपत्तिं निरस्यति—**उच्यत** इति । **प्रमाणान्तर**मनुमानादिकम्, तज्जन्यायामित्यर्थः । **मननेच्छावदि**ति । "श्रोतव्यो मन्तव्यः..." इत्यादिश्रुत्या शाब्दबोधानन्तरम्मननादीनां विधानात्तत्र यथा शाब्दबोधे जातेप्यनुमितिर्ज्जायतामितीच्छा निराबाधा, तथा प्रकृतेनुमानादिना तादृशवाक्यार्थविषयकानुमित्यादौ जातेपि शाब्दबोधो जायतामितीच्छापि निराबाधैवेत्यर्थः । यदुक्तं **सिद्धे विषय** इति तत्राह—**न प्रतिबन्धिके**ति । शाब्दबोधानन्तरमपि शाब्दबोधधाराया आनुभविकत्वादित्यर्थः । अनुभवस्य विवादास्पदत्वे त्वाह—**प्रतिबन्धिका चेदि**ति । तथा च यथानुमितावप्यनुमित्साविरहविशिष्टाया एव सिद्धेः प्रतिबन्धकत्वम्, तथा शाब्दबोधेपि स्वेच्छाविरहविशिष्टाया एव तस्याः प्रतिबन्धकत्वमिति प्रकृते तादृशवाक्यजन्यवाक्यार्थबुद्धिर्ज्जायतामितीच्छामादायैवोक्तवाक्यार्थबोधस्तादृशबोधवत्त्वेन वक्तुः सम्बोध्यत्वन्नानुपपन्नमित्याशयः । इदमुपलक्षणम् । यत्र सम्बोधनपदघटितं वाक्यं मुहुः श्रूयते "नारायणि नमोस्तु ते..." इत्यादौ तत्रैकवाक्यजन्यज्ञानस्य सिद्धत्वेप्यन्यवाक्यजन्यज्ञानेच्छयैव सम्बोध्यत्वस्योपपत्तिरित्यपि बोध्यम् । ५५ ।

नन्वेवमप्यचेतनस्य कथं सम्बोध्यत्वम्, तस्य ज्ञानसमवायित्वविरहादित्याशङ्क्य सम्बोधनप्रथमान्तपर्य्यायियुष्मत्पदप्रयोगस्य तथाविधमध्यमपुरुषस्य च यथाचेतने प्रयोगस्तथैव प्रकृतेपीति समाधत्ते—**अचेतनेपी**त्यादिना । उदाहृ-

[1]जहिहि तरलां लक्ष्मीमेतां त्यजामरपादपान् ।
हृदय ! हतया किन्ते चिन्तामणेरपि चिन्तया ॥
जठरदहनज्वालाशान्त्यै यदि स्युरमी तदा ।
स्वपितुरुदधेरौर्वं निर्वापयेयुरुषर्बुधम् ॥

इत्यादावचेतनस्य हृदयस्य सम्बोध्यत्वबाधेपि प्रथमाप्रयोगो युष्मच्छब्द-मध्यमपुरुषादिप्रयोगेण तुल्ययोगक्षेमः । चेतनक्षेत्रज्ञतादात्म्यारोपेण

रणमाह— **जहिही**ति । इदञ्च ग्रन्थकर्त्तुरमृतोदयनाटके तृतीयेङ्के निर्वेद-स्योक्तिः । युष्मदादिप्रयोगाणां पक्षीभूतसम्बोधनप्रथमाप्रयोगतुल्यत्वात्तद्दृष्टान्ते-नैतत्साधुत्वोपपादनमनुचितमित्यत आह—**चेतनक्षेत्रज्ञे**ति । क्षेत्रज्ञस्य जीवा-

---

१ समस्तनिगमसारभूतोपनिषत्प्रतिपाद्यं वस्तु नाटकमुखेन सुखबोधाय मुमुक्षूणा श्रवण-मनननिदिध्यासनसाक्षात्करणापवर्गप्रतिष्ठानामकैः पञ्चभिरङ्कैरुपनिबद्धस्यामृतोदयनामकस्य निदिध्यामननाम्नि तृतीयेङ्के—"विवेकिनस्त्वापत्तिमालोचयन्तः संसारसुखमपि कुपित-फणिफणामण्डलच्छायप्रतिममित्यपजहति" इति वाचस्पतिवचनात् श्रवणमननाभ्या संसार-विषयकालंप्रत्ययस्वरूपस्यात्मावमानरूपस्य वा निर्वेदस्य या दृढभूमिका, स एव विवेकः । निर्वेदे दृढभूमिके सति श्रद्धा विविदिषा जनयति, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषा साक्षाच्चिकीर्षां प्रसूते" इति श्रुतेः । विविदिषया व्यापारितश्च पुरुषो निदिध्यासनादौ प्रवर्त्तते, सेयं निदिध्यासनपूर्वावस्था सांसारिकविषयाणां हेयत्वप्रतिपादनद्वारा प्रस्तूयते—जहिहीति । हे हृदय ! तरला चपलस्वभावा लक्ष्मीं जहिहि त्यज । अत्र तरलामित्युक्त्या हेयत्वमुक्तं भवति । एतानमरपादपान् कल्पवृक्षांस्त्यज परिहर । अत्र पादपत्वोक्त्या[illegible]-नाश्रयणीयत्वमुक्तं भवति । हतया नष्टस्वभावया चिन्तामणेरपि चिन्तया ते किं स्यादिति शेषः । अत्रापि चिन्तामणिरिति नाम्नैव तस्यापि चिन्तापूर्वकत्वनैयत्यात्परचिन्तापहत्वम-सम्भवीति ध्वन्यते । ननु जठरानलज्वालाशान्त्यर्थमेते आश्रयणीया इत्यत आह—जठरेति । यद्यमी जठरज्वालाशान्त्यै स्युः प्रभवेयुस्तदा स्वपितुरुदधेः समुद्रस्यौर्वमुषर्बुधं वाडवाग्निं जठरस्थमेव निर्वापयेयुः । अतस्तथाननुष्ठानान्नामी परजठरदहनज्वालाशान्तिं कर्त्तुं प्रभ-वन्तीति किमेषामाश्रयणेनेति श्लोकार्थः । शेषोर्थष्टीकाया द्रष्टव्यः ।

सम्बोध्यत्वभ्रमजनकतया गौणवृत्त्यार्थान्तरप्रतिपादकतया वा सङ्क्रमनीयः।

अतएव तुल्ये प्रस्तुतेप्रस्तुततुल्यार्थस्याभिधानमप्रस्तुतप्रशंसा-विशेषस्य लक्षणमुदाहरता काव्यप्रकाशकारेण "कस्त्वं भोः कथयामि दैवहतकं शाखोटकं विद्धि माम्..." इत्यादावकिञ्चनस्य कञ्चिदनुप-कुर्वतो मनस्विनः प्रस्तुतस्य तादात्म्यारोपेण युष्मच्छब्दसम्बुद्धिमच्छ-ब्दोत्तमपुरुषाणामर्थे शाखोटकाभेदेनाध्यवसितोप्रस्तुतोर्थस्सम्बध्यत इत्युक्तम्। प्रस्तुतार्थस्य व्यञ्जनया लक्षणया वोपस्थितिरित्यन्यदेतत्।

त्मनो मनसि तादात्म्यारोपेणेत्यर्थः। इदञ्च भ्रमजनकत्वेनोपात्तम्। **भ्रमजन-कतये**ति। सम्बोध्यत्वाभाववति हृदये सम्बोध्यत्वज्ञानजनकनयेत्यर्थः। **गौण-वृत्त्ये**ति। सादृश्यात्मकशक्यसम्बन्धरूपलक्षणयेत्यर्थः। **अर्थान्तरे**ति। जीवा-त्मेत्यर्थः। तथा च हृदयपदशक्येन मनसा सह सादृश्यसम्बन्धस्य जीवात्मनि सत्त्वाद्धृदयपदस्यात्र जीवात्मैवार्थ इति चेतनस्यैव सम्बोध्यत्वमत्रेति भावः।

**अतएव** वाच्यार्थे प्रस्तुतार्थस्यान्यस्य तादात्म्यारोपेण युष्मत्पदादेः साधुत्वादेवेत्यर्थः। **अप्रस्तुतप्रशंसाविषयस्ये**ति। कार्य्यकारणसामान्यविशेष-तुल्येषु प्रस्तुतेषु कारणकार्य्यविशेषसामान्यतुल्यानामप्रस्तुतानामुक्तौ पञ्च-प्रकारायास्तस्याः पञ्चमभेदस्य श्लेषसमासोक्तिसादृश्यहेतुकत्वात्त्रैविध्येन तदन्तर्गतस्य तृतीयभेदस्य वाच्यार्थे प्रतीयमानार्थानारोपणारोपणप्रयोज्यतया द्वैविध्यात्तत्र द्वितीयभेदस्येत्यर्थः। **प्रस्तुतस्ये**ति। तादृशमनस्विनं प्रत्येव कस्त्वं भो इति प्रश्नात्तस्यैव प्रस्तुतत्वमिति भावः। **तादात्म्यारोपेणे**ति **शाखोटक** इति शेषः। **मच्छब्दः मामि**त्यत्रास्मच्छब्द इत्यर्थः। **सम्बध्यत** इति। तथा च वाच्यार्थे शाखोटके प्रतीयमानार्थस्य मनस्विनस्तादात्म्यारोपस्याभावे तत्र युष्मदाद्यर्थस्यान्वय एव न स्यादिति तदारोपे सत्येवाप्रस्तुतप्रशंसालङ्कारो युष्मदाद्यर्थान्वयश्चोपपन्न इति भावः।

अत्रैवं सति[1] "वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ॥
वामेनात्र वटस्तमध्वगजनस्सर्वात्मना सेवते ।
न च्छायापि परोपकारकरणी मार्गस्थितस्यापि मे ॥"

इति तत्काव्यशेषस्थवटादिपदानामपि लक्षणया व्यञ्जनया वा तादृशमनस्वि-समीपगृहकधनिपुरुषादिपरत्वमावश्यकम्, अन्यथा तन्मुख्यार्थस्य प्रस्तुतेऽर्थे बाधादन्वयानुपपत्तिरेव स्यादिति बोध्यम्।

---

१ अत्र प्रथम चरण मूलकृतोक्तम्। आनन्दवर्द्धनाचार्य्यप्रणीतध्वन्यालोकस्य तृतीयो-द्योते प्रश्नोत्तररूपमिद पद्यम्। तत्र शाकोटकमिति क्वचित्पाठः। शाहोटकमित्यपि। "शाखोटश्च श्मशानाग्निज्वालालीढलतापल्लवादिस्तरुविशेषः" इत्यभिनवगुप्ताचार्य्याः। "शाखोटको भूतावासो वृक्षः" इत्युद्योतकारादयः। भोस्त्वं क इति वृक्षं प्रति पथिकस्य प्रश्नः। कथयामि—दैवेन हतकं शून्यं दुर्भाग्य शाखोटक मा विद्धि जानीहीति पथिक प्रति शाखोटस्योत्तरम्। वैराग्यादिव वक्षि वदसि कथयसि इति पुनः प्रश्नः। साधु सम्यग् विदितं ज्ञात त्वयेत्युत्तरम्। इद वैराग्य कस्मात्कारणादिति पुनः प्रश्नः। कथ्यते—अत्र अस्मिन्प्रदेशे वामेन मार्गाद्वामभागेन वामाचारेण च उपलक्षितः वटः वटवृक्षोऽस्ति, त वटमध्वगजनः पान्थजनः सर्वात्मना छायारोहणभोजनशयनादिना समित्पत्रादिना वा सेवते आदरेणाश्रयति, यद्वा सर्वात्मना गाढानुरागेण सेवते तदधो विश्राम्यति। मार्गो रथ्या सदाचारश्च। तत्र स्थितस्यापि मे मम छायापि परोपकारकरणी परोपकारसंपादिका न भवतीत्युत्तरम्। अत्र 'परोपकारकरणी' इति प्रयोगः अधिकरणल्युड्निष्पन्नकरणशब्दात् स्त्रीप्रत्यये तत्पुरुषसमासे च "मासपचनी" इति महाभाष्यप्रयोगवदनुसन्धेयः, अन्यथा कर्म्मण्यण्प्रत्यये परोपकारिका इति स्यात्। 'परोपकारकरणे' इत्यस्यादरे तु परोपकारायेत्यर्थो बोध्यः।

अत्राचेतनेन वाच्यार्थेन शाखोटकेन सहोक्तिप्रत्युक्त्यसम्भवात् वाक्यार्थे शाखोट-कादिरूपे प्रतीयमानार्थस्यासाधुपुरुषस्य आरोप आवश्यकः। उक्तञ्च प्रतीपोद्योतयोः— "अत्र वाच्यशाखोटके सम्बोध्यत्वोच्चारयितृत्वादिकमनुपपन्नमिति प्रतीयमानाध्यारोपः" इति प्रदीपः। "प्रतीयमानोऽत्र प्रकृतासाधुपुरुषः। न चात्र रूपकम्, प्रकृतेऽप्रकृतारोपे एव तत्स्वीकारात्। एतेन शाखोटकवटपदाभ्या साध्वसाधुपुरुषौ निगीर्य्याध्यवसिता-वित्यतिशयोक्तिरित्यपास्तम्, तत्रारोप्यस्यैव प्राधान्येन सम्बोध्यत्वाद्यनन्वयतादवस्थ्याच्च विद्यमानाया अप्यतिशयोक्तेरेतदङ्गत्वाच्च। अत्र सधनः पूज्योऽधनो निन्द्य इति प्रस्तुत-व्यञ्जनम्। नन्वत्राप्रस्तुतव्यवहारेण प्रस्तुतव्यवहारस्य निगरणमेवास्तु किमनया, तात्पर्य्यानुपपत्तेरपि लक्षणाबीजत्वाद् बोध्यसम्बन्धश्च लक्षणा, वाच्यव्यवहाराभेदेन च

अत्रेदं चिन्तनीयम्—"स्वकर्म्मफलनिर्दिष्टां यां या योनिं व्रजाम्यहम्।
तस्यां तस्यां हृषीकेश! त्वयि भक्तिर्दृढास्तु मे॥"

इत्यादौ भगवज्ज्ञानस्य नित्यप्रत्यक्षात्मकत्वेन सिद्धान्तसिद्धतया भगवतो वाक्यार्थज्ञानं जायतामितीच्छायास्तत्रासम्भवेन भगवति सम्बोध्यत्वयुष्मत्पद-वाच्यत्वयोर्बाधप्रसङ्गभीत्या बाधितविषयेपि विसंवादिनीच्छावश्यं स्वीकार्य्या। तथा सत्येव

"नवपल्लवसंस्तरेपि ते मृदु दूयेत यदङ्गमर्पितम्।
तदिदं विषहिष्यते कथं वद वामोरु! चिताधिरोहणम्॥"
"विश्वरूपकृतविश्व कियत्ते वैभवाद्भुतमणौ हृदि कुर्वे।
हेम नह्यति कियन्निजचीरे काञ्चनाद्रिमधिगत्य दरिद्रः॥"

इत्यादावपि मृताया इन्दुमत्या भगवतश्च सम्बोध्यत्वन्नानुपपन्नम्। एवञ्चाचेतने बाधितविषयिण्या अपीच्छाया विसंवादिन्या एव सम्भवात्तस्यापि सम्बोध्य-त्वयोरुपपन्नत्वेपि चिन्तायाः स्मरणरूपाया इच्छारूपाया वा जीवात्मगुणत्वेन मनस्यन्वयस्य शाखोटके वचनकर्त्तृत्वान्वयस्य,

"शोचनीयासि वसुधे! या त्वं दशरथच्युता।
रामहस्तमनुप्राप्य कष्टात्कष्टतरं गता॥"

इत्यात्रापि वसुधाया अचेतनाया अपि सम्बोध्यत्वोपपादनेपि दुःखात्मकस्य कष्टस्य तत्सम्बन्धित्वान्वयस्य च बाधादेव हृदयादिपदानां क्षेत्रज्ञमनस्विवसुधावा-सिलोकेषु लक्षणावश्यकी। तथा सत्येव तद्वाक्यानां नोपहास्यत्वम्, उक्तरीत्या गृहीतपदसङ्गतिकक्षेत्रज्ञादिकोद्देश्यकत्वात्, अन्यथा हृदयादीना सङ्गतिज्ञान-वत्त्वस्य बाधिततयोपहास्यत्वमेव प्रसज्येतेति। शोचनीयेत्यत्रापि पुत्रशोक-सन्तप्तस्य ब्राह्मणस्य प्रस्तुतस्य तादात्म्यारोपेण "कस्त्वं भोः" इत्यत्रेवाप्रस्तुत-प्रशंसालङ्कारोपि बोध्य इति।

---

प्रस्तुतव्यवहारप्रत्यय इति चेन्न, वाच्यार्थताटस्थ्येनैव व्यङ्ग्यप्रतीतेरत्र सहृदयसंमत-त्वाच्छक्यसम्बन्धस्यैव लक्षणात्वाच" इत्युद्योतः। ध्वन्यालोके तु "न हि वृक्षविशेषेण सहोक्तिप्रत्युक्ती सम्भवत इत्यविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपवर्त्तिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं तात्पर्य्येण वाक्यार्थीकृतमिति प्रतीयते" इत्युक्तम्। अभिप्रेतश्चायमेव पक्षष्टीकाकारमूलकारयोरपीत्यवधेयम्।

यत्र च व्यञ्जनया लभ्योऽर्थः प्रकृतवाक्यार्थे तादात्म्येनाध्यवसितः सन्नन्वयबोधे निविशते, तत्र गुणीभूतव्यङ्ग्यमेव, न त्वप्रस्तुतप्रशंसा। यथा—

[1] "आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीम्।
अम्भोजिनीं क्वचिदपि क्षपितत्रियामः॥

अत्रैव प्रसङ्गाद्यत्र वाच्यार्थस्य व्यङ्ग्यार्थे तादात्म्यारोपस्तत्रैवाप्रस्तुतप्रशंसालङ्कारध्वनित्वम्, यत्र च व्यङ्ग्यार्थस्य वाच्यार्थे तादात्म्यारोपस्तत्र न तादृशध्वनित्वम्, किन्तु गुणीभूतव्यङ्ग्यत्वमेवेत्युदाहरणद्वारा दर्शयति—**यत्र चे**त्यादिना। **आगत्ये**ति। अत्र समासोक्तिरलङ्कारः, प्रकृते रविकमलिनीव्यवहारेप्रकृतस्य

---

१ अर्थशक्तिमूलानुरणनरूपस्य (लब्धक्रमस्य) वस्तुनो वाच्याङ्गतायामपराङ्गव्यङ्ग्य मध्यमकाव्यं प्रसङ्गादुदाहरति—आगत्येति। मौग्ध्याद्विनैवानुनयं त्यक्तमाना प्रति सख्या उक्तिरियम्। हे तन्वङ्गि! क्वचिदपि क्वचिदेव (द्वीपान्तरे एव नायिकान्तरगृहे) क्षपिता अतिवाहिता त्रियामा रात्रिर्येन तथाभूतः सहस्ररश्मिः सूर्य्यः सम्प्रति अधुना प्रभाते जाते सति शनैः (अतिभीत इवातिलज्जित इव) मन्दं मन्दम् आगत्य एत्य एनाम् अम्भोजिनी कमलिनीमेव नायिका पादपतनेन किरणसयोगेनैव चरणपतनेन (प्रणामान्तेन) प्रसादयति विकासयत्येवानुनयति। एतत् पश्येत्यन्वयः। अत्र दर्शनक्रियाया वाक्यार्थं एव कर्म्म। कीदृशीम्—वियोगो द्वीपान्तरे सूर्य्यस्य सञ्चारेण यस्तेन सम्बन्धाभावस्स वियोगो विरहः, तेन विसष्ठुलाङ्गी सङ्कुचिताङ्गीमेव सन्तापकार्श्यादिना विषमाङ्गीमित्यर्थः।

अत्र विनैवानुनयमपगतमाना नायिका सख्या उपालभ्यते। तथाहि—सहस्ररश्मिरित्यनेन बहुनायिकावत्त्व ध्वन्यते। अम्भोजिनीमित्यनेन वर्ण्यायाः पद्मनीत्वम्। क्वचिदपि (क्वचिदेव) इत्यनेनोपनायिकागृहे एवेति निश्चयाभावः। तत्रापि यामत्रयमेव, न त्वधिकमिति। एवञ्चेदृशोपि ईदृशी स्वयमेवागत्य पादपतनेनानुनयतीति ईदृशो हि कामिनोर्व्यवहारः। त्वं पुनर्बहुतरकाल परनायिकासक्ते धूर्त्ते विनैवानुनयं मानं त्यक्त्वा प्रसन्ना असीत्युपालम्भः। एवञ्च नायकनायिकावृत्तान्तकथनमेवाभिप्रेतम्। स च वृत्तान्तो वस्तुरूपो ध्वन्यमानः वाच्ये रविकमलिनीवृत्तान्तेभिन्नतया चारोप्यमाणस्तस्य प्रकृतार्थता सम्पादयन् तदुत्कर्षञ्चाधत्ते इत्यपराङ्गतयैवास्ते। अयमेव समासोक्त्यलङ्कारः।

एनां प्रसादयति पश्य शनैः प्रभाते ।
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥"

**अत्र व्यञ्जनया वृत्त्या प्रतीतिपथमवतरन्नायकयोर्वृत्तान्तो रविकमलिनी-**

नायकनायिकाव्यवहारस्यारोपात् । **व्यञ्जनया वृत्त्येति** । अभिधादिवृत्त्या नायिकादीनामुपस्थितेरसम्भवात्, सहस्ररश्मिपदादीनां तेष्वसङ्केतितत्वादिति यदुक्तं काव्यप्रकाशकृता—"परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः" इति ।

अत्र अभिधया नायकनायिकयोरुपस्थापकपदविरहात्प्राधान्येन तयोरप्रतीत्या नोपमा-रूपकध्वनी, इत्यपि बोध्यम् ।

तथाहि—यथा—

"उल्लास्य कालकरवालमहाम्बुवाहम् ।
देवेन येन जठरोर्जितगर्जितेन ॥
निर्वापितः सकल एव रणे रिपूणाम् ।
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥"

इत्यादौ विशेष्यवाचकपदश्लेषसत्त्वादुपमा व्यज्यमाना प्राधान्येन व्यवतिष्ठते, तथा प्रकृते विशेष्यवाचकपदश्लेषाभावान्नायकसूर्य्ययोर्नोपमा व्यङ्ग्या, यत्र स्वातन्त्र्येण धर्म्मि-द्वयमवगम्यते, तत्रैकधर्म्मान्वये सत्युपमाङ्गीकारात् । एवं धर्म्मिद्वयावगतावेव तादात्म्यारोपे रूपकाङ्गीकारान्न रूपकमपि व्यङ्ग्यम्, किन्तु वस्तुरूप एवेति । यद्यपि पादशब्दस्य श्लिष्टत्वात् (परिवृत्त्यसहत्वात्) शब्दशक्तिमूलत्वमेवास्य सम्भवति, तथापि परिवृत्तिसहशब्दाना बाहुल्यात्तेषा प्राधान्यात् पादपतनशब्दं विनापि नायकनायिकावृत्तान्तप्रतीतेस्तस्य प्राधान्याभावाच्च न तथा सम्भवति ।

नन्वत्र प्रकृतव्यवहारेऽप्रकृतव्यवहाररूपा समासोक्तिः । तस्याञ्च प्रकृताप्रकृतवृत्तान्त-योरभेदो वाक्यार्थः । स चाप्रकृतवृत्तान्तोपस्थितिं विना न पर्य्यवस्यति, तदुपस्थितिश्च व्यञ्जनयैवेति व्यङ्ग्यस्य (नायकनायिकावृत्तान्तस्य) वाच्यसिद्ध्यङ्गत्वमेव, नापराङ्गत्व-मिति चेन्न, अप्रकृतवृत्तान्तस्योपस्थितिं विनापि वाक्यार्थस्य पर्य्यवसानात् समासोक्तौ व्यङ्ग्योपस्थितिं विना वाच्यानुपस्थितेरभावेन वाच्यसिद्ध्यङ्गत्वविरहात्, किन्तु उपस्थितस्य वाच्यस्य व्यङ्ग्येन शोभामात्राधायकत्वादपराङ्गत्वस्यैव सिद्धान्तितत्वात् । एवञ्च यत्र स्वत एव सिद्धरूपस्य वाच्यस्य व्यङ्ग्येनोत्कर्षाधानमात्रं तत्राय प्रभेदः । यत्र पुनर्व्यङ्ग्यं विना वाच्यमेवात्मानं न लभते, तत्र वाच्यसिद्ध्यङ्गत्वमिति व्यङ्ग्यसापेक्ष-निरपेक्षाभ्यामनयोर्भेद इति स्वीकारात् प्रकृते निरपेक्षवाच्यरविकमलिनीवृत्तान्तोत्कर्षकतयैव व्यङ्ग्यस्य स्थितत्वादपराङ्गत्वमेवेति ध्येयम् ।

वृत्तान्ते तादात्म्येन गुणीभूय भासते, न तु प्राधान्येन, दृशिकर्म्मत्वानुपपत्तेः। नापि ध्वनिविधयोदीच्यवाक्यार्थबोधः पश्यतीत्यंशमपहाय, तथा सति खण्डितामानमनिनीषतस्सागसः प्रियस्याशंसां प्रतिपादयतो लोटोनुपपन्नत्वप्रसङ्गात्। न हि तदा मानापनोदनोपायादन्यदाशास्यम्।

न च रविकमलिनीवृत्तान्तदर्शनन्तदुपायः, रविकिरणपतनजनितकमलिनीकुसुमव्याकोशतादर्शनस्य कयापि विधया खण्डिताया मानत्यागाध्यवसायाजनकत्वात्। नायकप्रणिपातजनितमानिनीप्रसादाभेदेनावगतस्य दर्शनन्तु प्रियप्रणामान्तो मान इति निश्चयद्वारा प्रभवति तस्याः प्रणयकोपभङ्गायेति। विस्तरो रसमहार्णवेनुसन्धेयः। ५६।

भावः। **न तु प्राधान्येने**ति। तथा च व्यङ्ग्यार्थस्य प्राधान्याभावादेव ध्वनित्वाभाव इति भावः। तस्याप्राधान्ये हेतुमाह—**दृशी**ति। नायकनायिकावृत्तान्तस्य तदानीमसत्त्वाद् दृश्धात्वर्थे चाक्षुषज्ञाने वाक्यार्थस्य कर्म्मत्वानुपपत्तेः। ननु तादृशवाक्यार्थो न पश्येत्यस्यार्थेन्वितः, अपि तु वाच्यार्थ एव तत्रान्वित इति प्राधान्येनापि तस्य प्रतीतिर्न्निराबाधैवेत्यत आह—**नापी**ति। **उदीच्ये**ति। वाच्यार्थविषयकबोधानन्तरमेव व्यङ्ग्यार्थबोधस्य सर्वत्राङ्गीकारात्तस्योदीच्यत्वं बोध्यम्। तस्य पश्येत्यनेनान्वयाभावेनुपपत्तिमाह—**तथा सती**ति। **अपनिनीषत** अपनयनेच्छावतः। **सागस** अन्यनायिकासङ्गरूपापराधवतः। **आशंसां** मानापनोदनविषयिणीमिच्छाम्। **अन्यदाशास्यमि**ति। प्रकरणेन तन्मात्रस्यैवाशास्यत्वात्तदतिरिक्तं नाशास्यमित्यर्थः।

**न चे**ति। **तदुपाय** इत्यनेनान्वितम्। **तदुपायो** मानापनोदनोपायः। अत्र हेतुः **रविकिरणे**ति। तादृशार्थस्य पश्येत्यनेनान्वये लोटः सार्थकत्वमुपपादयति—**नायके**ति। षष्ठ्यन्तस्य रविकिरणपतनजनितकमलिनीकुसुमव्याकोशो विशेष्यः। तादृशदर्शनस्यापि न साक्षान्मानापनोदकत्वम्, किन्तु निश्चयविशेषद्वारैवेत्याह—**प्रिये**ति। ५६।

**एकतिङ्वाक्यमित्युक्तङ्कात्यायनमहर्षिणा ।**
**सम्बोध्यत्वं क्रियाशेषस्तदर्थ इति शाब्दिकाः ॥५७॥**

समर्थसूत्रे "एकतिङ्वाक्यम्" इति कात्यायनवाक्यम् । तत्र भाष्यकारेण "ब्रूहि देवदत्त !" इति वाक्यमुदाहृतम् । तस्यायमभिसन्धिः—यदि न क्रियया सह सम्बोध्यत्वान्वयः, आख्यातसम्बोधनान्तयोर्व्यपेक्षा न स्यात्, तदा निघातो नाम सर्वानुदात्तस्वरो देवदत्तपदे आमन्त्रिते न युज्येत, "आमन्त्रितस्य च" इति सूत्रेणामन्त्रितप्रत्ययान्तानां पदात्पराणामेव निघातविधानात् । पदयोस्तु व्यपेक्षादिरूपसामर्थ्यविरहे पदसम्बन्धिनो विधेरप्रवृत्तेः, "समर्थः पदविधिः" इति व्यवस्थापनात् ।

अत्र वार्त्तिककारकात्यायनमहर्ष्यनुसारिवैयाकरणमते सम्बोध्यत्वस्य क्रियायामेवान्वयः, न तु प्रकृत्यर्थे इति तन्मतं दर्शयति—**एकतिङि**त्यादिना । **क्रियाशेषः** क्रियाधात्वर्थः । शिष्यते विशिष्यते येनेति करणघञा क्रियाविशेषणमित्यर्थः । तच्च ज्ञानेच्छारूपस्य प्रथमार्थस्य स्वोद्देश्यत्वावच्छिन्नज्ञानत्वावच्छिन्नविशेष्यतानिरूपितमुख्यविशेष्यत्वसम्बन्धावच्छिन्नप्रकारतासंसर्गेण बोध्यम् । **तदर्थ एकतिङ्वाक्य**मित्यस्योदाहरणीभूत—**ब्रूहि देवदत्त !** इतिभाष्यकारीयवाक्यघटकसम्बोधनप्रथमार्थ इत्यर्थः । तस्यैव पूर्वं बहुशो दर्शितत्वाद् बुद्धिविषयत्वस्य तत्राक्षतेः । उक्तसम्बोध्यत्वस्य प्रतिपाद्यपुरुष एव सत्त्वात् । **व्यपेक्षा न स्यादि**ति । तत्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वस्य व्यपेक्षारूपत्वेनाख्यातस्य सम्बोधनपदेन सह तथात्वाभावादित्यर्थः । व्यपेक्षाया अभावेनुपपत्तिमाह—**तदे**ति । तादृशस्वराभावे हेतुः—**आमन्त्रितस्ये**ति । **आमन्त्रितं** सम्बोधनप्रथमान्तम्, 'सामन्त्रितस्य" इति सूत्रेण तस्यामन्त्रितसंज्ञाविधानात् । ननु व्यपेक्षाविरहेऽपि ब्रूहि देवदत्तेत्यत्र ब्रूहीतिपदात्परत्वादेव तस्य निघातस्वरः स्यादित्यत आह—**पदयोस्त्वि**ति । **व्यपेक्षादी**ति । आदिनैकार्थीभावस्य सङ्ग्रहः ।

एकतिङ्वाक्यविद्वेषिमहाभाष्यानुसारिभिः ।
वाक्यबोध्ये प्रधानार्थे सम्बोध्यत्वान्वयो मतः ॥५८॥

महाभाष्यकृतस्तावद् "एकतिङ्वाक्यम्" इति कात्यायनवाक्यन्नानुमन्यन्ते । ते हि पश्य मृगो धावति, जानीहि जगज्जगन्नाथाज्जायत इत्यादौ धावनदर्शनयोर्जनिज्ञानयोः कर्म्मकर्म्मिभावेन, अस्ति साधवस्सीदन्ति, भवति दुर्जना मोदन्त इत्यादौ साधुसीदनसत्त्वयोर्मोदभवनयोश्च कर्त्तृक्रियाभावेन, अनुभवसि स्मरिष्यसि यजसे स्वर्गं भोक्ष्यस इत्यादौ सिद्धसाध्यसमभिव्याहारस्थले त्वत्कर्त्तृकयोरनुभव-

भाष्यकारैरनेकतिङन्तघटितस्यापि वाक्यत्वोपगमाद् "एकतिङ्वाक्यम्" इति कात्यायननियमं भाष्यानुयायिमतेन खण्डयति—**एकतिङिति** । **महाभाष्यानुसारिभिः** वैयाकरणैर्दार्शनिकैश्च । **प्रधानार्थे** शाब्दिकदार्शनिकमतयोः क्रमेण धात्वर्थप्रथमान्ताद्यर्थयोः । अननुमतौ हेतुः—**पश्येत्यादि** । तिङन्तद्वयघटितयोर्वाक्यत्वसिद्धये धात्वर्थयोरन्वयं दर्शयति—**धावनदर्शनयोरिति** । **कर्म्मकर्म्मिभावेन** कर्म्मतानिरूपकत्वसंसर्गेण । **कर्त्तृक्रियाभावेन** कर्त्तृतानिरूपकत्वेन स्वनिरूपितकर्त्तृतावत्त्वेन वा संसर्गेण । मतभेदेन मृगकर्त्तृकधावनस्य धावनकर्त्तृमृगस्य वा दर्शने, जगत्कर्त्तृकजगन्नाथहेतुकजननस्य जगन्नाथहेतुकजननकर्त्तृजगतो वा ज्ञाने, साधुकर्त्तृकसीदनस्य सीदनकर्त्तृसाधूनां वा सत्तायाम्, दुर्जनकर्त्तृकमोदस्य मोदकर्त्तृदुर्जनस्य वा भवनेऽन्वयो बोध्यः । **धावनदर्शनयो**रिति साक्षात्परम्परासाधारण्याभिप्रायेणैकमतेन वा ।

तिङन्तद्वयघटितं वाक्यं प्रदर्श्य बहुतिङन्तघटितं तदाह—**अनुभवसीत्यादि** । **सिद्धसाध्यसमभिव्याहार** इति । सिद्धयोरनुभवयोस्साध्ययोः स्मरणस्वर्गभोगयोः समभिव्याहार इत्यर्थः । मध्यमपुरुषेण त्वमित्यस्याध्या-

स्मरणयोर्यागस्वर्गभोगयोश्च कार्य्यकारणभावेनान्वयमभ्युपगच्छन्तो बहुतिङन्तमप्येकं वाक्यमभ्युपगच्छन्ति ।

स्मरन्ति च "सुबन्तं हि यथानेकं सुबन्तस्य विशेषणम् ।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥" इति ।

अतएव तिङन्ताभिन्नात्परं तिङन्तन्निहन्यत इत्यर्थके "तिङ्ङतिङः" इति सूत्रे "अग्निमीले..." इत्यादावाख्यातान्ते लेशब्दस्य निघातस्वरं विदधति । पचति पश्येतिवाक्ये पश्येत्यस्य वारणार्थं पूर्वपदे तिङ्पर्य्युदासाय "अतिङः" इति प्रयुक्तम् । अन्यथाख्यातयोस्सामर्थ्याभावादेव पदविधेरप्रसक्तौ तदानर्थक्यं स्यात् ।

द्वारादाह—**त्वत्कर्तृकयोरि**ति । **कार्य्यकारणभावेने**ति । अत्रापि मतभेदेन त्वत्कर्तृकवर्त्तमानकालीनानुभवस्य, वर्त्तमानकालीनानुभवकर्त्तृत्वंपदार्थस्य वा, एवं त्वत्कर्तृकवर्त्तमानकालीनयागस्य तादृशयागकर्त्तृत्वंपदार्थस्य वा जनकतासम्बन्धेन भविष्यत्कालीनयोः स्मरणस्वर्गभोगयोरन्वयादेकवाक्यत्वं बोध्यम् ।

धात्वर्थस्य धात्वर्थविशेषणत्वे प्राचां संवादमाह—**स्मरन्ति चे**ति । सुबन्ततिङन्तपदानि सुप्तिप्प्रकृतिपराणि, सुबन्तादीनां विशेषणत्वविरहात् । **अतएव** तिङन्तस्य तिङन्तविशेषणत्वादेव । **अन्यथा** धात्वर्थयोर्विशेष्यविशेषणभावविरहे । **पदविधेः** पदोद्देश्यकस्य निघातस्वरविधेरित्यर्थः । **अप्रसक्ता-वि**ति । "समर्थः पदविधिः" इत्यनेन पदविधेः सामर्थ्यसत्त्व एव प्रसक्तिनियमादित्याशयः ।

ननु "एकतिङ्वाक्यम्" इत्यस्यानेकतिङन्तघटितस्य वाक्यत्वनिषेधे न तात्पर्य्यम्, किन्तु सतिङन्तमेव सुबन्तं वाक्यन्न तु तिङन्तरहितमित्यत्रैवेत्याशङ्क्य

**न च सुप्सहिततिङ्वाक्यमिति युज्यते,**

**"[1]शशी दिवसधूसरो गलितयौवना कामिनी ।**
**सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ॥**

निराकरोति—**न चे**ति । **शशी**ति ।

---

१ सतिङन्तसुबन्तरहित समुच्चयालङ्कृतञ्च भर्त्तृहरिकृते नीतिशतके पद्यमिदम् । शशी चन्द्रो दिवसे धूसरो निस्तेजाः । कामिनी कान्ता गलितयौवना नष्टतारुण्या । सरः कासारः विगतवारिज पद्महीनम् । स्वाकृते. शोभनाकृतेः मुखं वदनम् अनक्षर विद्याहीनम् । प्रभुः धनपरायण. धनलुब्धः । सज्जनः सततं निरन्तर दुर्गतः दरिद्रः । "निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः" इत्यमर. । ख छिद्र लाति आदत्ते ( गृह्णाति ) इति खलः पिशुनः नृपाङ्गणगत. राजप्रासादप्रसिद्धः । एतानि सप्त मे मम शल्यानि बाणाग्राणीत्यर्थः ।

अत्र "तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्कर भवेत् ।
समुच्चयोऽसौ ..."

इति काव्यप्रकाशीयलक्षणलक्षितस्य एकैकस्यापि पदस्य मानसशल्यभूतज्ञान-जननहेतुत्वे तत्रान्येषामपि षण्णा पदानामुपादानात् सदसद्योगसमुच्चयनाम्नोलङ्कारस्य सत्त्वं बोध्यम् । तथाहि—अत्र सदसत्त्व शोभनाशोभनत्वेन सर्वत्र बोध्यम् । शशिनः स्वतः शोभनस्यापि दिवसधूसरत्वादशोभनत्वेन शोभनाशोभनरूपस्य स्वतः शोभनाया अपि कामिन्या गलितयौवनत्वादशोभनत्वेन शोभनाशोभनरूपस्य सरसः स्वतः शोभनस्य पद्महीनत्वादशोभनत्वेन शोभनाशोभनरूपस्य एवंविधस्यान्यस्यापि श्लोकवाक्येऽत्र समुच्चयात् समुच्चयनामालङ्कारः ।

अत्रेदमवधेयम्—"नृपाङ्गणगतः खलः" इत्यत्र नृपाङ्गणगतत्वेन शोभनत्वं खलत्वेन त्वशोभनत्वमितिरीत्या सदसद्रूपतामसमर्थनेऽपि नायमलङ्कारः, किन्तु स्वतः शोभनस्य धर्म्मविशेषसम्पर्कादशोभनस्य सदसतः प्रकरणे स्वतोऽशोभनस्य खलस्य पाठात् सहचरभिन्नत्वं दोष एव । एव सर्वत्र विशेष्यस्य शोभनत्वं विशेषणस्य त्वशोभनत्वमिति प्रक्रान्तम्, इह त्वन्यथेति भग्नप्रक्रमत्वमप्यत्र दोषः । तस्मात् "नृपाङ्गणगतः खलः" इत्यस्य स्थाने 'नृपाङ्गणमसद्युतम्' इति पाठो युक्तः । अन्यथा सहचरभिन्नत्वभग्न-प्रक्रमत्वाभ्यामाक्रान्तमिदं श्लोकवाक्यं समुच्चयालङ्कारवन्न स्यादिति । प्रकृते केवल-सुबन्तचयस्य वाक्यत्वस्वीकारात् सतिङन्तसुबन्तस्य वाक्यत्वस्वीकारेऽव्याप्तिस्स्या-दित्यपि बोध्यम् ।

प्रभुर्धनपरायणः सततदुर्गतस्सज्जनो— ।
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥''...

इत्यादौ सुबन्तचयस्य, पश्य पचतीत्यत्र तिङन्तचयस्य केवलस्यापि वाक्यत्वदर्शनात् । "आख्यातपदं विना पदान्तरसहितसकलपरिकरमपि मूकतयावतिष्ठते" इति कात्यायनप्रलापस्त्वाज्ञामात्रम् ।

इदमुपलक्षणम् । "कष्टा वेधव्यथा कष्टो नित्यमुद्वहनक्रमः ।
श्रवणानामलङ्कारः कपोलस्य तु कुण्डलम् ॥"

इति मुरारिपद्यादिकमपि तादृशमेव बोध्यम् ।

न च यत्र तिङन्तं न श्रूयते तत्रापि वाक्यत्वसिद्धये "अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" इति कात्यायनमहर्षिणोक्तत्वादस्तीत्यस्याध्याहारान्नानुपपत्तिः । तदनध्याहारे तु शाब्दबोधसामग्र्यास्तत्र सत्त्वेपि तिङन्तस्यापि तद्घटकत्वात्तदभावादेव न तस्य शाब्दबोधजनकत्वमिति तस्य वाक्यत्वविरहो न क्षतिकर इत्याशङ्क्य निराकरोति–**आख्यातपदमि**ति । **सकलपरिकरमि**ति । पदान्तरेण सहितः सकलः परिकरो योग्यतादिर्यस्मिँस्तद्वाक्यमिति शेषीभूतेन सम्बन्धः । **मूकतये**ति । स्वकार्य्यशाब्दबोधाजनकत्वेन मूकसादृश्यं तादृशवाक्यस्य बोध्यम् । **प्रलाप** इति । वक्ष्यमाणहेतुभिर्निर्युक्तिकतया तादृशकात्यायनवचनस्य निरर्थकतया प्रलापत्वम् । **आज्ञामात्रमि**ति । तिङन्तरहितवाक्ये सर्वत्रास्तीत्यस्याध्याहारे शाब्दबोधे क्रियाविशेष्यकत्वनियमवादिनान्तेषां भूतले न घट इत्यादौ प्रथमाप्रकृत्यर्थघटस्य नञर्थेभावे प्रतियोगित्वसंसर्गेण विशेषणतयोपस्थितस्य तिङर्थेन्वयो न सम्भवति, "एकत्र विशेषणत्वेन..." इत्यादिव्युत्पत्तिविरोधात् । न च तत्र घटस्य नञर्थे नान्वयः, किन्तु सप्तम्यन्तार्थभूतलवृत्तित्वस्यैव तत्रान्वय इति नोक्तव्युत्पत्तिविरोध इति वाच्यम्, तथा सति तदन्विताभावस्य घटेन्वयस्याभ्युपेतव्यतया [1]कारकतदर्थान्वितनञर्थान्यतरस्य क्रियाति-

---

१ कारकस्य कारकान्वितनञर्थस्य वा क्रियातिरिक्तेन्वयस्याव्युत्पन्नत्वादिति नियमविरोध इयि भावः ।

**व्युत्पत्तिभेदेन कस्यचिदाख्यातार्थः कस्यचित्प्रथमान्तार्थ एव**

रिक्तेन्वयस्य व्युत्पत्तिविरुद्धस्य प्रसङ्गात्। न च तादृशाभावस्यास्तेरर्थे एवान्वयो न तु घटे, घटस्य च तिङर्थकर्त्तरि तादात्म्येनान्वय इति नोक्तविरोध इति वाच्यम्, अतीतघटपरकतादृशवाक्ये तिङर्थस्य कर्त्तुः सत्तारूपधात्वर्थनिरूपिताश्रयतावत्स्वरूपस्यातीतघटे तादात्म्यबाधात्तत्रान्वयासम्भवात्। न च नञर्थस्तत्र भेद एव नात्यन्ताभावः। तथा च सप्तम्यन्तार्थभूतलवृत्तित्वस्य धात्वर्थसत्तायां तद्विशेषणीभूत आश्रये घटविशेषितभेदस्यान्वय इति वाच्यम्, तथा सति तादृशबोधस्य भूतलवृत्तिः सत्ता घटभेदाश्रयतावद्वृत्तिरित्याकारकतापर्य्यवसानाद् घटवति भूतले घटान्योस्तीतिवद् घटो नास्तीत्यस्यापि प्रामाण्यापत्तेः। न च भूतलाधेयत्वान्वितधात्वर्थसत्तायास्तिङर्थे आश्रये, तस्य च नञर्थभेदे, तस्य घटेन्वयाद् भूतलाधेयत्ववत्सत्ताश्रयप्रतियोगिकभेदवान् घट इत्याकारकस्यैव बोधस्य पर्य्यवसानाद् घटवति भूतले तादृशवाक्यस्य न प्रामाण्यप्रसङ्ग इति वाच्यम्, एवं एति शाब्दबोधस्य [1]क्रियामुख्यविशेष्यकत्वनियमभङ्गेन स्वसिद्धान्तविरोधभङ्गात्, नञा भेदबोधनेनुयोगिवाचकपदस्य प्रथमान्तत्वनियमभङ्गप्रसङ्गाच्च। सर्वत्रास्तीत्यध्याहारस्यासम्भवित्वेन तद्वचनं निर्युक्तिकतयाज्ञामात्रमेवेत्याशयः।

**वाक्यबोध्ये प्रधानार्थ** इत्यस्यार्थमाह—[2]**व्युत्पत्तिभेदेने**ति। मीमांस-

---

१ शाब्दस्य क्रियामुख्यविशेष्यकत्वनियमरक्षार्थमस्तीत्यध्याहारो व्यर्थ एव, तादृशनियमभङ्गस्य स्वयमेव स्वहस्तितत्वादिति तात्पर्य्यम्। अतएव भूतले न घट इत्यादौ "प्रतियोगितासम्बन्धेन प्रातिपदिकार्थविशेषितस्य स्वार्थात्यन्ताभावस्यान्वयबोधने नञनुयोगिवाचकपदे सप्तम्यपेक्ष्यते, नापेक्ष्यते विभक्त्यर्थविशेषितस्य" इति सर्वतान्त्रिकसिद्धा व्यवस्थितिरपि सङ्गच्छते।

२ सुबन्तसमुदायस्तिङन्तसमुदायस्सुबन्ततिङन्तोभयसमुदायश्च वाक्यम्, तत्र प्रधानार्थे सम्बोध्यत्वान्वय इति महाभाष्यानुसारिणः। चैत्रः पचतीत्यादौ धात्वर्थः प्रधानमिति शाब्दिकाः। तिङर्थो भावना प्रधानमिति भाट्टाः। प्रथमान्तार्थः प्रधानमिति तार्किकाः। तदनुसारिणोन्येपि दार्शनिकाः। तेषा तेषा तत्र तत्र प्रधानेर्थे सम्बोध्यत्वान्वय इति तात्पर्य्यम्। एवञ्च तिङन्तरहितेपि वाक्ये प्रधानीभूतप्रथमान्तादौ सम्बोध्यत्वान्वयोपगमाद् देवदत्त! यज्ञदत्तः समागत इत्यादौ समागताभिन्नयज्ञदत्ते देवदत्तसम्बोध्यत्वान्वयस्य सामञ्जस्यम्।

वाक्येन प्रधानतया बोध्यते। तत्र तत्रैव सम्बोधनपदार्थस्याभीष्टज्ञानस्य तावद्विशिष्टविषयतया संसर्गेणान्वय इति व्यर्थः क्रियान्वयाभिनिवेश इति। अतएव देवदत्त! को यज्ञदत्त इत्यादौ जिज्ञासाविषय[1]जातिगोत्रगुणादिविशिष्टयज्ञदत्तत्वावच्छिन्नविषयतया देवदत्तसमवेतत्वेनाभीष्टज्ञानमन्वेतीत्युपपद्यत इति सर्वदर्शनसमञ्जसः पन्थाः।

एतेन क्रियामात्रसाकाङ्क्षपदगणने सम्बोधनान्तस्योल्लेखः प्रमादमूलक एवेति ध्येयम् ॥ ५८ ॥

**अन्यत्रामन्त्रणाल्लिङ्गवचने प्राह केवलम्।**
**विभक्तिः प्रथमा कर्माद्याधिक्येऽन्या विभक्तयः ॥५९॥**

कश्चिदिकतार्किकाणां मते क्रमेणाख्यातार्थभावनाविशेष्यकं धात्वर्थविशेष्यकं प्रथमान्तार्थविशेष्यकञ्चान्वयबोधं प्रति तादृशानुपूर्वीरूपाकाङ्क्षायाः कारणतया मतभेदेन व्युत्पत्तेर्भेदस्यावश्यकत्वादित्याशयः। **तत्र तत्रैवे**ति। प्रधानीभूते भावनादावित्यर्थः। **व्यर्थ** इति। क्रियान्वयाभावेऽप्यनुपपत्तीनां वारणादिति भावः। **अतएव** वाक्यार्थप्रधानीभूतप्रथमान्तादौ तिङन्तरहितेऽपि वाक्ये सम्बोध्यत्वस्यान्वयोपगमादेव। **जिज्ञासाविषये**ति। **गुणा**दीत्यन्तेनान्वितम्। **जातिगोत्रे**ति। विधेयवाचककिंपदस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्नविधेयतावच्छेदकत्वप्रकारताकेच्छानिरूपितविशेष्यतावद्धर्म्मवाचकतया यज्ञदत्तत्वावच्छिन्नोद्देश्यताकं जातित्वगोत्रत्वगुणव्याप्यब्राह्मणत्वशाण्डिल्यत्वादिविद्वत्ताद्यवच्छिन्नविधेयताकं ज्ञानं जायतामितीच्छयैव तत्र किंशब्दस्य प्रयोगादिति भावः।

**एतेने**ति। तिङन्तासमभिव्याहृतस्यापि सम्बोधनप्रथमान्तस्य साधुताप्रदर्शनेनेत्यर्थः ॥ ५८ ॥

सम्बोध्यत्वं पुंस्त्वादिलिङ्गमेकत्वादिसङ्ख्या चेतदेवार्थः, न तु तदतिरिक्तोऽपि कश्चिदिति तार्किकसिद्धान्तमाह—**अन्यत्रे**ति। **अन्या** द्वितीयादयः। कर्म्माद्याधिक्ये लिङ्गसङ्ख्ययोः कर्म्मत्वकरणत्वादीनाञ्च बोधिका इत्यर्थः। **कर्म्मे**त्यस्य

---

[1] जातिगोत्रादिगुण० इति मु० पु० पा०।

आमन्त्रणप्रथमाभिन्ना प्रथमा नर इत्यादौ पुंस्त्वम्, लक्ष्मीरित्यादौ स्त्रीत्वम्, बृहन्नलमित्यादौ नपुंसकत्वमेकत्वादिसङ्ख्यास्वरूपं वचनञ्चाभिधत्ते। द्वितीयादयस्तु कर्माद्यधिकमभिदधाना एव लिङ्गवचने प्रतिपादयन्ति, न तु कैवल्येन ॥ ५९ ॥

ननु "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इत्यनुशासनाज्जातिवाचिनो गवादिपदाद् व्यक्तिलाभार्थं प्रथमाया व्यक्तौ, द्रोणो व्रीहिरित्यादौ द्रोणादिपदार्थपरिमाणस्य व्रीहौ [1]भेदान्वयासम्भवाद् गुरुत्वस्वरूपे, [2]तथैवारत्निः कुण्डमित्यादौ परिमाणस्वरूपेपि शक्तिरावश्यकी; अन्यथा व्यक्तेरलाभात् प्रातिपदिकार्थयोर्भेदेनान्वयायोगादिति चेत् ?

भावप्रधानत्वात्सप्तम्या बोधकत्वार्थकत्वाच्च। **पुंस्त्वं** मुख्यं पुंस्त्वादिकमेषु स्थलेषु, ततः खट्वेत्यादौ पारिभाषिकं तदित्युक्तमधस्तात् ॥ ५९ ॥

"प्रातिपदिकार्थे..." इत्यादिसूत्रेण प्रातिपदिकार्थादावपि प्रथमाया विधानात्तस्यापि प्रथमार्थत्वात्कथं लिङ्गवचने एवोपात्ते इत्याशङ्कते—**नन्वि**त्यादिना । **जातिवाचिन** इति। गवादिपदानां जातिविशिष्टव्यक्तिवाचकत्वे व्यक्तेरपि तत एव लाभात्तत्र प्रथमाया वृत्तिकल्पनानर्थक्यमतो जातिमात्रस्यैव वाचकत्वं तेषां तन्मत इत्यर्थः। सूत्रस्थपरिमाणपदेन गुरुत्वस्याप्युपलक्षितत्वादाह—**द्रोणो व्रीहिरित्यादावि**ति। **परिमाणस्ये**ति। "अष्टमुष्टिर्भवेत् कुञ्चः..." इत्याद्युपक्रम्य "चतुराढको भवेद्द्रोणः" इत्युक्तलक्षणकगुरुत्वविशेषस्येत्यर्थः। **भेदान्वयासम्भवादि**ति। गुरुत्वस्य व्रीहेश्च नामार्थत्वादिति भावः। **गुरुत्वस्वरूप** इति। गुरुत्वत्वावच्छिन्न इत्यर्थः। तेन द्रोणपदाद् गुरुत्वत्वव्याप्यजातिविशेषेणैव तादृशगुरुत्वस्योपस्थित्या विधेयांशेऽधिकावगाहिशाब्दबोधस्वीकारान्नानुपपत्तिः। **अन्यथे**ति। तयोः प्रथमार्थत्वानुपगम इत्यर्थः।

१ भेदान्वयात् इति मु० पु० पा०।
२ तथैवारत्निः इति मु० पु० पा०।

उच्यते—

अन्यलभ्यतया जातिमतो गुणवतस्तथा ।
निरर्थः प्रातिपदिकाद्यर्थेषु प्रथमाविधिः ॥६०॥

गवादिप्रातिपदिकादेवाक्षेपाल्लक्षणया शक्त्या वा व्यक्तेर्गुरुत्वपरिमाणवतो लाभसम्भवे व्यर्थः प्रातिपदिकार्थादौ प्रथमावाच्यत्वविधिरिति ॥ ६० ॥

सूत्रेण प्रातिपदिकार्थस्सत्ता व्यक्तिरेव सा ।
आकृतिः परिमाणं [1]तद्वृत्तिधर्म्मोपलक्षणम् ॥६१॥
प्रसिद्धे लिङ्गवचने तावन्मात्रे विवक्षिते ।
प्रथमान्तप्रयोगस्य साधुत्वमनुशिष्यते ॥६२॥

गवादिपदानां जातिविशिष्टवाचकत्वे शक्त्या, जातिमात्रवाचकत्वे आक्षेपाल्लक्षणया(वा)व्यक्तीनां लाभाद् द्रोणादिपदानां तादृशगुरुत्वपरिमाणाश्रये लक्षणयैव तेषां लाभादुक्तानुपपत्त्योरभावात्प्रथमायास्तत्र वृत्तिकल्पनमनुचितमित्याशयेन समाधत्ते—**उच्यत** इत्यादिना ॥ ६० ॥

तर्हि सूत्रस्य किं प्रयोजनमित्याकाङ्क्षायां प्रातिपदिकार्थादीनां विशृङ्खलितविषयताकानां विवक्षाया कर्म्मादीनाञ्चाविवक्षायां प्रथमान्तप्रयोगस्य साधुत्वमात्रप्रयोजनकत्वमेव, न तु प्रथमाशक्तिग्राहकत्वं तस्येत्याशयेनाह—**सूत्रेणे**ति। **व्यक्तिरेव से**ति । प्रातिपदिकार्थस्सत्ता व्यक्तिरेव, न तु तार्किकसिद्धा द्रव्यादित्रिकवृत्तिजातिरूपा । **परिमाणं** परिमाणपदार्थः । परिमीयते ज्ञायते जातिरनेनेति व्युत्पत्त्या गोत्वादिग्राहकमवयवसंस्थानस्वरूपमेवाकृतिपदव्यपदेश्यं परिमाणपदस्यार्थ इत्याशयेनाह—**आकृतिरि**ति । **तद्वृत्ती**ति । व्यक्त्याकृतिवृत्तिधर्म्माणां प्रवृत्तिनिमित्तानामुपलक्षकमित्यर्थः। **तद्व्यक्ती**ति पाठे सा सत्ता व्यक्तिराश्रयो यस्यैतादृशस्य धर्म्मस्योपलक्षकमित्यर्थो बोध्यः। **लिङ्गवचने** प्रसिद्धे, पूर्वमेव तदर्थस्योक्तत्वात् ।

---

( १ ) तद्व्यक्तिधर्म्मोपलक्षणम् इति मु० पु० पा० ।

प्रातिपदिकार्थस्सत्ता, वृत्त्या तथैव व्याख्यानात्। [1]वचनान्येकत्वद्वित्वादिसङ्ख्याः, परिमाणमाकृतिरवयवसंस्थानस्वरूपा, [2]सत्तया प्रवृत्तिनिमित्तसामान्यमुपलक्ष्यते। तावत्सु परस्परं विशृङ्खलितविषयताकेषु विवक्षितेषु कर्म्मादौ [3]चाविवक्षिते प्रथमान्तप्रयोगोनपभ्रष्टतयानादित्वेनाभ्युदयविशेषसाधनत्वेन जातिविशेषेण वा साधुरित्येव "प्रातिपदिक..." इत्यादिसूत्रार्थः, न तु प्रातिपदिकार्थवाचिका प्रथमेत्यनुशासनमिदम्,

"अनपभ्रष्टतानादिर्यद्वाभ्युदयसाधनम्।
व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुता॥"

इत्यनेन लक्षितस्य साधुत्वस्यानुशासनाय व्याकरणप्रवृत्तिरित्याकरेषु "साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।" इति वाक्यपदीये च व्यक्तत्वात्।

**विशृङ्खलिते**ति। लिङ्गसङ्ख्ययोः प्रातिपदिकार्थे एवान्वयात्परस्परं तयोर्विशेष्यविशेषणभावविरहादित्याशयः। तावन्मात्रस्य हरि भजतीत्यादावपि विवक्षितत्वात्तत्रापि प्रथमायाः साधुताप्रसङ्गादाह—**कर्म्मादौ चे**ति। **अनपभ्रष्टतये**ति तृतीयात्रयस्य साधुपदार्थैकदेशसाधुत्वान्वय्यभेदोर्थस्साधुत्वस्य तत्तद्रूपताया अनुपदमेव लक्षणात्। **अनादित्वेने**त्यनपभ्रष्टतयेत्यस्य विवरणम्। तच्च पूर्वनिरुक्तसादित्वविपरीतं बोध्यम्। **न त्वि**ति। तथा च तेन सूत्रेण प्रातिपदिकार्थादीनां प्रथमावाच्यत्वज्ञानं नेत्यर्थः। उक्तत्रितयरूपेण **साधु**रित्यनेन साधुत्वस्य तत्त्रितयात्मकत्वमभिहितं तत्र प्रमाणमाह—**अनपभ्रष्टतये**ति। अत्र पूर्वयोर्गुरुतया लाघवाज्**जातिविशेषणे**ति तृतीयमुक्तमिति बोध्यम्। **व्याक्रिये**ति। व्याक्रियया व्याकरणेन व्यञ्जनीयेत्यर्थः। उक्तरीत्या साधुत्वस्य व्याकरणव्यङ्ग्यत्वादित्याशयः। **आकरेषु** महाभाष्यादिषु।

(१) वचनान्येकत्वद्वित्वबहुत्वसङ्ख्यः इति मु० पु० पा०।
२ तया इति मु० पु० पा०। ३ वा विवक्षिते मु० पु० पा०।

"अशिष्यं प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणकत्वात्" इति सूत्रेऽर्थस्य पदार्थयोर्वाच्यवाचकभावस्य प्रधानोपसर्जनभावस्य च प्रमाणान्तरसिद्धत्वेन व्याकरणाप्रतिपाद्यत्वमिति पाणिनिनैवाभिहितत्वात् [1]"सिद्धे शब्दार्थसम्बन्धे समानायामर्थावगतौ साधुभिश्च गम्यागम्येतिवन्नियमः क्रियते" इति भाष्यस्वरसाच्च।

व्याकरणस्य शक्तिग्राहकमध्ये परिगणनन्तु "प्रातिपदिकार्थ..." इत्यादिसूत्रेण व्यक्तिलिङ्गप्रवृत्तिनिमित्तसङ्ख्याबोधकं प्रथमान्तं साध्विति कण्ठत उक्ते बोधकत्वान्यथानुपपत्त्या वृत्तौ कल्प्यमानायां प्रातिपदिकाप्राप्ययोर्लिङ्गसङ्ख्ययोः सुपां सुबप्राप्ययोर्व्यक्तिप्रवृत्तिनिमित्तयोश्च प्रातिपदिकानां शक्तिः [2]कल्प्यत इति प्रमाणान्तरोत्थापकतया, न तु साक्षात् ॥ ६१, ६२ ॥

सूत्रप्रणेतुः पाणिनेरपि साधुत्वज्ञापनमेवाभिप्रेतमिति तत्सूत्रप्रामाण्येन व्यवस्थापयति—**अशिष्यमि**ति। एतच्च न सूत्रघटकम्, किन्तु "तदशिष्यम्..." इत्यादिसूत्रेणानुवृत्तं सत्तदर्थघटकमिति तद्घटकत्वेनोक्तम्। सूत्रन्तु प्रधानेत्यादिप्रमाणकत्वादित्यन्तं प्रथमाध्यायद्वितीयपाद(५६)शत्तमम्। सूत्रस्यार्थमाह—**अर्थस्ये**ति। **पदार्थयोरि**ति। पदञ्चार्थश्चेति द्वन्द्वोत्तरषष्ठ्या निष्ठत्वं षष्ठ्यन्तार्थद्वयान्वितमर्थः। **प्रमाणान्तरं** लोकव्यवहारादि। **अशिष्यमि**त्यस्यार्थो व्याकरणाप्रतिपाद्यत्वमिति।

नन्वेवं "शक्तिग्रहम्..." इत्यादिना शक्तिग्राहकेषु व्याकरणस्य परिगणनं प्राचामसङ्गतमतः परम्परया तस्य तथात्वमुपपाद्य तत्सङ्गमयति—**व्याकरणस्ये**ति। **बोधकत्वे**ति। वृत्तिग्रहविवरणोक्तरीत्या वृत्तिविरहे बोधकत्वविरहेणेत्यर्थः। **प्रातिपदिकाप्राप्ययोरि**ति। लिङ्गस्य सङ्ख्यायाश्च गवादिपदावाच्यतयानन्यलभ्ययोस्तयोरेव प्रथमावाच्यत्वमिति भावः। **कल्प्यत** अनुमीयते। अनुमानप्रकारश्चाधस्तादेवोक्तः। ६१, ६२।

---

१ सिद्धे शब्दार्थसम्बन्धे समानायामर्थावगतौ साधुभिश्चासाधुभिश्च गम्या च गम्येतिवन्नियमः क्रियते इति मु० पु० पा०। २ कल्पते इति मु० पु० पा०।

**अभेदत्वेन नामार्थे सुपां वृत्तिरिति भ्रमः।**
**व्याक्रियातः प्रतीयन्ते साधुत्वार्थाः सुपो यतः॥६३॥**

यच्च प्राग् व्युत्पादितं स्वरूपभेदाभावत्वेन प्रातिपदिकार्थव्यक्त्योर्विशेषणविभक्तीनामर्थ इति। तदपि न, विशेषणविभक्तीनां साधुत्वमात्रार्थकत्वस्य व्याकरणसिद्धत्वात्।

तथाहि—"लुपि युक्तवद्व्यक्तिवचने" इत्येकं लुप्शब्देन लुप्ते प्रत्यये प्रकृतिलिङ्गवचने एव प्रयोक्तव्ये, न तु लवणादिपदवद्विशेष्यनिघ्नतया लिङ्गवचनान्तरप्रयोगः। यथा—पञ्चाला नाम क्षत्रिया नियतबहुवचनपुँल्लिङ्गविषयास्तेषां निवासे जनपदे तद्धितलुपि कृते पञ्चाला जनपद इति, तथा विदेहाः, कुरवः, मगधाः, मत्स्याः, अङ्गाः, वङ्गाः, कलिङ्गाः, सुह्मा इत्यादीत्यर्थकम्।

पूर्वम् "अन्ये तु..." इत्यादिना विशेषणवाचकनीलादिपदोत्तरप्रथमादीनामभेदार्थकत्वव्यवस्थापनायां "तच्चाग्रे विवेचयिष्यामः" इत्युक्तमतस्तदत्र विविच्य निरसयति—**अभेदत्वेने**ति। **व्याक्रियातः** व्याकरणेन। **यतस्सुपः साधुत्वार्थाः** साधुत्वमात्रम्, न तु तदतिरिक्तं शक्तिज्ञानादिक**मर्थः** प्रयोजनं येषा तादृशार्था इत्यर्थः।

जनपदबोधकपञ्चालादिशब्दानां बहुवचनान्तत्वाद्यनुशासकाना प्राचीनव्याकरणस्थसूत्राणां तेषां तथात्वस्य व्यवहारसिद्धतया वैयर्थ्यं पाणिनिना स्वसूत्रेणैव ज्ञापितमित्याह—**तथाही**त्यादिना। सूत्रे "युक्तवद्" इत्यस्य तद्धितप्रत्ययविशिष्टप्रकृत्यर्थकतया तत्र यल्लिङ्गं या च सङ्ख्या त एव तद्धितप्रत्ययस्य लुपि सत्यपीत्यर्थकत्वं तत्सूत्रस्येत्याह—**लुप्शब्देनेत्या**दिना। **यथे**ति। "तस्य निवासः" इति सूत्रेण निवासार्थे कृतस्याण्प्रत्ययस्य "जनपदे लुप्" इति सूत्रेण लुपि क्षत्रियवाचकस्यैव पञ्चालशब्दस्य पुंस्त्वबहुवचनान्तत्वयोरानुशासनिकतया पञ्चालनिवासवाचकस्य तथात्वाभावा-

अपरन्तु "विशेषणानाञ्चाजातेः" इति, तद्विशेषणानाञ्च तद्व्यक्तिवचने स्यातां जातिवाचिपदं वर्जयित्वा। यथा—पञ्चाला रमणीयाः, जातौ तु पञ्चाला जनपदः, एवं गोदौ बहुक्षीरघृतौ, जातौ तु गोदौ ग्राम इत्यर्थकम्।

एतत्सूत्रद्वितयं प्राचीनवैयाकरणानामनूद्य "तदशिष्यं संज्ञाप्रमाणत्वात्" इति पाणिनिरसूत्रयत्। पञ्चालादीनां नियतलिङ्गवचनत्वं तद्विशेषणानां वा तुल्ययोगक्षेमं न शिष्यम्; यतः [1]संज्ञानियतव्यवहारस्तस्मादेव प्रमाणादनर्थकानां पञ्चालादिषु विशेषणपदेषु तत्तल्लिङ्गवचनवाचितुल्यानुपूर्वीकाणां सुपां प्रतिनियमनस्य सिद्धत्वात्, आपो दारा इतिवदित्यर्थः। ६३।

द्विशेष्यवाचकजनपदनिष्ठतयैकवचनस्यैव प्राप्तौ "लुपि..." इत्याद्युक्तसूत्रेण तत्र बहुवचनान्तत्वमनुशिष्यतेतः पञ्चाला जनपद इत्येव साधुर्न तु पञ्चालो जनपद इति भावः।

पञ्चालनिवासवाचकपञ्चालपदविशेषणवाचकस्य रमणीयादिपदस्य तादृशतद्धितप्रकृतित्वाभावाद्बहुवचनस्याप्राप्तौ द्वितीयसूत्रेण तत्र तद्विधानमित्याह—**अपरन्त्वि**ति। **अजाते**रित्यस्य प्रतिकूल्यमाह—**जातौ त्वि**ति। जनपदग्रामशब्दयोर्जातिवाचित्वात्तत्र नोक्तसूत्रस्य प्रवृत्तिरित्याशयः।

एतत्सूत्रद्वयस्य पाणिनिकर्तृत्वे तेनैव तत्खण्डनं विरुद्धमित्यत आह—**प्राचीनानामि**ति। पाणिनेः स्वसिद्धबोधकं सूत्रमाह—**तदशिष्यमि**ति। सूत्रस्थतत्पदेनोक्तसूत्रद्वयार्थस्य परिग्रह इत्यत आह—**पञ्चालादीनामि**ति। **न शिष्यं** नानुशासनेन ज्ञापनीयम्। अत्र हेतुः—**संज्ञाप्रमाणत्वादि**ति। तदर्थमाह—**यतः संज्ञे**ति। **संज्ञे**त्यस्य विवरणं **नियतव्यवहार** इति। **अनर्थकानामि**ति **सुपा**मित्यनेनान्वितम्। **आपो दारा** इतिवदिति। तथा च

१ संज्ञानियतो व्यवहारः इति मु० पु० पा०।

सुबर्था एव नामार्थाः सुपामल्पत्वलाघवात्।
व्यञ्जकं प्रातिपदिकं मतमित्यप्यसङ्गतम् ॥६४॥
ये तु घटादीनपि प्रातिपदिकार्थान् वाचकसङ्ख्यालाघवेन

यथाप्शब्ददारशब्दादीनां सूत्राननुशिष्टमपि नित्यतत्तल्लिङ्गत्वबहुवचनान्तत्वादिकं नियतव्यवहारेणैव सिद्धम्, न तु तदर्थे विशेष्ये विशेषणे वान्वयो बाधितत्वात्, तथा पञ्चालनिवासादिवाचकलुप्ततद्धितकपञ्चालादिशब्दतद्विशेषणरमणीयादिशब्दानां बहुवचनान्तत्वं लोकव्यवहारत एव सिद्धमिति व्यर्थं तदर्थमनुशासनान्तरकरणमिति भावः।

इत्थञ्च विशेषणपदोत्तरविभक्तेस्साधुत्वमात्रप्रयोजनिकाया अनुशासनमन्तरेणैव सिद्धेर्व्याकरणस्य पदार्थयोर्वाच्यवाचकभावज्ञापकत्वासम्भवादामन्त्रणातिरिक्तं तादात्म्यादि न प्रथमार्थ इति सिद्धे पूर्वोक्तायाः "क्षुदुपहन्तुं शक्यम्..." इत्यादौ सामानाधिकरण्यानुपपत्तेः "शक्यम्" इत्यत्र धातोः कारणतारूपशक्तिवाचकतया कर्म्मप्रत्ययस्य स्वनिरूपितकार्य्यतावन्निरूपितप्रतियोगित्वविशिष्टस्याभेदेन क्षुध्यन्वयोपगमेनैव वारणम्, तादृशकारणतायाः श्वमांसादिनिष्ठत्वात् तन्निरूपितकार्य्यतावत्त्वस्योपहनने ध्वंसे तत्प्रतियोगित्वस्य च क्षुधि सत्त्वं बोध्यम्। "शिखी विनष्टः" "सुरभि चन्दनमाघ्रातम्..." इत्यादौ शिखाविनष्टादौ विनष्टादितादात्म्यस्य बाधेपि "सविशेषणे हि" इति न्यायाच्छाखादावेवाबाधितस्य तस्यान्वयान्न सामानाधिकरण्यानुपपत्तिरिति। ६३।

घट इत्यादौ घटादिर्न्न प्रादिपदिकवाच्यः, किन्तु प्रथमावाच्य एवेति प्रथमायाः प्रातिपदिकार्थवाचकत्वमिति मतन्निराकरोति—**सुबर्था एवे**ति। घटादीनां विभक्तिवाच्यत्वे लाघवमित्याह—**वाचकसङ्ख्ये**ति। एतच्च कारिकास्था-**ल्पत्वलाघवा**दित्यस्य तात्पर्य्यार्थवर्णनम्। अल्पत्वेन लाघवादिति समासार्थैक-

**सुपामेव वाच्यानाहुः। तेषाम्मते यदि घटाद्युत्तरसुत्वेन वाचकतायां प्रविष्टत्वमेव प्रातिपदिकस्य व्यञ्जकत्वम्, तदा क्व लाघवावकाशः। अथ सुत्वेनैव वाचकत्वम्, तत्र च प्रातिपदिकसमभिव्याहारो विकरणादिरवाचकस्योपधानमिवोपयुज्यत इति मतम्, तदापि समासे सुब्विनाकृतादन्वयबोधो न स्यात्, न स्याच्चार्थवत्त्वाभावे प्रातिपदिकसंज्ञैवेति दिक्। ६४।**

**कालापास्तु चैत्रः पचति, ओदनः पच्यते, छेत्तुं साम्प्रतं वृक्षमित्यादौ तिङ्निपातादिभिरभिहितं कारकं प्रथमार्थः।**

देशेऽल्पत्वे **सुपामि**त्यस्यान्वयोऽल्पशब्दस्य नित्यसाकाङ्क्षतया बोध्यः। तथा च सुपामेकविंशतिसङ्ख्याकत्वेन घटादिप्रकृतीनाञ्चानन्ततया लाघवेन सुपामेव घटादिवाचकत्वमिति भावः। एवं सति पट इत्यादावपि घटस्य, घट इत्यत्र पटादीनां बोधः स्यादित्यतो घटादिपदानां घटाद्यर्थव्यञ्जकत्वमवश्यं वाच्यं तत् किमिति वितर्क्य तन्मतं दूषयति—**तेषाम्मत** इत्यादिना। **प्रविष्टत्वं** घटकत्वमवच्छेदकत्वमिति यावत्। **क्वे**ति। अनन्तानामपि प्रकृतीनां स्वस्वोत्तरस्वादिविभक्तिनिष्ठवाचकतावच्छेदकत्वेन प्रवेशापेक्षया सुत्वाद्यघटित-घटपदत्वादीनां वाचकतावच्छेदकत्व एव लाघवमिति भावः।

ननु घटपदं न वाचकतावच्छेदकम्, किन्तु सुत्वमेव, घटादिपदानां व्यञ्जकत्वन्तु घटादिबोधप्रयोजकसमभिव्याहारवत्त्वमवाचकशबादिविकरण-वदित्याह—**अथे**ति। एतन्निरसयति—**समास** इति। तत्र सुपो लुप्ततया वाचकाभावात्तदर्थोपस्थितेरनुदयप्रसङ्गादित्यर्थः। अनुसंहिततया लुप्तविभक्त्यै-वार्थस्योपस्थित्युपगमे त्वाह—**न स्याच्चे**ति। एतच्च वृत्तिमत्त्वमर्थ-वत्त्वमिति मते। ६४।

समभिव्याहृततिङाद्युक्तकर्तृत्वादिकारकाणामेव प्रथमार्थत्वमिति काला-पमतन्निराकर्तुमुत्थापयति—**कालापास्त्वि**ति। **तिङ्निपातादिभिरि**ति। एतच्च सामान्यतः कर्तृत्वमात्रे कर्मत्वमात्रे वा प्रथमायाः शक्तौ चैत्रः पचतीत्यत्र कर्मत्वस्य, तण्डुलः पच्यत इत्यत्र कर्तृत्वस्य बोधवारणायोक्तम्।

तथा च चैत्रः पचतीत्यादौ चैत्राभिन्ने कर्त्तरि पाककर्त्ता चैत्रीयकर्त्तृत्वे वा पाककर्त्तृत्वं तादात्म्येनान्वेति। प्रतिपाद्यतां वा सुबाख्याताभ्यां कर्त्तृत्वत्वेनैकव्यक्तिः, एकत्वत्वेनैवैका सङ्ख्या, अन्यथा ब्राह्मणस्य पाककर्त्तृत्वसम्प्रदानत्वोभयविवक्षायां पचति ब्राह्मणाय देहीति प्रयोगप्रसङ्गात्।

सिद्धान्ते तु तिङुपात्तकारकाणां प्रथमोपात्तकारक एव तादात्म्येनान्वयाच्चतुर्थ्याश्च सम्प्रदानाभिधायित्वात्तदर्थे कर्त्तृत्व-तादात्म्यबाधादेव न तथा प्रयोगः। पचति चैत्रेणेत्यादौ तृतीयो-पात्तकारके न तादात्म्येनान्वयः, तृतीयायास्तिङादिभिरनभिहिते कारके एव साधुत्वात्। धात्वर्थान्वितकर्त्तृत्वं तृतीयार्थो न तिङर्थान्वयद्वारेत्यनभिहितसूत्रार्थः।

तथा सति तत्र बोधाकारमाह—**तथा चे**ति। **चैत्रीयकर्त्तृत्वे वे**ति। यथाक्रमं कर्त्तृकर्त्तृत्वयोर्मतभेदेनाख्यातवाच्यत्वे। कर्त्तृत्वादेर्द्विधा भानं निष्प्रयोजनक-मित्यत आह— **प्रतिपाद्यतां वे**ति। उभयपदाभ्यामेकव्यक्तिबोधो नास्माकमेव, किन्तु परेषामपीत्याह—**एकत्वत्वेनैवैके**ति। इदञ्चाख्यातार्थस्यैकत्वार्थकत्वमते। तस्य तत्त्वविरहे नायं दृष्टान्त इति बोध्यम्। तिङाद्यभिहितस्य कर्त्तृत्वादेः प्रथमावाच्यत्वे "अनन्यलभ्यो हि शब्दार्थः" इति न्यायविरोध इत्यतस्तन्न्याय-स्यात्र सङ्कोचः कर्त्तव्यः, अन्यथा वक्ष्यमाणदोषप्रसङ्ग इत्याह—**अन्यथे**ति। प्रथमायास्तिङाभिहितकारकावाचकत्व इत्यर्थः।

स्वमते तादृशप्रयोगं वारयति—**सिद्धान्ते त्वि**त्यादिना। ननु तथापि तृतीयया कर्त्तृत्वस्योपस्थापनात्तदर्थे तिङर्थकर्त्तृत्वस्य तादात्म्येनान्वय-सम्भवात्तद्विवक्षया पचति चैत्रेणेत्यस्य साधुत्वं दुर्वारमित्यत आह— **पचती**ति। अनन्वये हेतु**स्तृतीयाया** इति। तथा च तद्विधायकसूत्रस्यानभि-हिताधिकारीयतया तिङा कर्त्तुरभिधाने तत्राप्रवृत्तिरित्यर्थः। प्रकृते तृतीया-प्रसङ्गवारणायानभिहितसूत्रस्य तात्पर्य्यार्थमाह—**धात्वर्थान्विते**ति। तथा च

अथवा तिङा स्वार्थस्य प्रातिपदिकार्थान्वयबुद्धौ जननीयायां तदर्थबोधकसुपोपि सहकारित्वम्। अतएव चैत्रः पच्यत इति न प्रयोगः। आख्यातोपात्तद्वित्वान्वये सुब्जनितोपस्थितेरपि सहकारित्वादुभाभ्यां प्रत्ययाभ्यामुपस्थितस्यैकद्वित्वान्वयबोधस्योपगमात्। तथा च कर्त्तृत्वमपि यदि सुपानुपस्थितं स्यान्नाख्यातेन बोधयितुं शक्येतेति तस्य प्रथमान्तार्थतासिद्धिः।

एतेनाप्रथमासमानाधिकरणे लटि शत्राद्यादेशनियमात् पचते देवदत्तायेति प्रमाणम्, न तु पचति देवदत्ताय देहीति वाक्यं प्रमाणम्।

चैत्रेण पचतीत्यत्र तिङर्थकर्त्तृत्वान्वयस्य चैत्रेन्वयात्तृतीयार्थकर्त्तृत्वस्य धात्वर्थपाकेन्वयस्तिङर्थान्वयद्वारैवेति भावः।

तिङुपात्तकर्त्तृत्वस्य प्रथमयोपादानप्रयोजनं पचति ब्राह्मणाय देहीति-प्रयोगवारणात्मकमन्यथैव भविष्यतीति वक्ष्यमाणतयोभयोः कर्त्तृत्वार्थकत्वे साधकान्तरमाह—**अथवे**ति। **स्वार्थस्य** कर्त्तृत्वसङ्ख्यादेः। **तदर्थबोधके**ति। कर्त्तृत्वसङ्ख्यादिबोधकेत्यर्थः। **अतएव** तिङ्प्रयोज्यकर्त्तृत्वादिविषयतानिरूपित-प्रातिपदिकार्थविषयताशालिबोधे कर्त्तृत्वादिबोधकसुपः सहकारित्वादेव। **न प्रयोग** इति। अन्यथा चैत्रो मैत्रश्च गच्छत इति प्रयोगस्य प्रामाणिकतया क्रियापदस्य विशेष्यवाचकपदसमानवचनकत्वनियमोपगमासम्भवात्तादृशप्रयोग-स्याप्रामाण्यानुपपत्तिरिति भावः। उक्तसहकारिताकल्पने तु न तस्य प्रामाण्यमिति दर्शयति—**आख्यातवि**त्यादिना। **सहकारित्वादि**ति। तथा सति तत्रैकत्वबोधकस्य सुपो द्वित्वबोधकत्वाभावात्तद्बोधकद्विवचनस्याभावादेव न तथा प्रयोग इति भावः। **तथा चे**ति। उक्तसहकारित्वकल्पनाया आवश्यकत्वे चेत्यर्थः। तिङः कर्त्तृत्वार्थकतया तस्य चैत्रादावन्वये कर्त्तृत्वार्थकसुपो-भावात्तत्र तिङोपि कर्त्तृत्वमर्थो न स्यादिति तदन्यथानुपपत्त्या सुपोपि कर्त्तृत्वार्थकत्वमावश्यकमित्याशयः।

**एतेने**ति। उक्तरीत्या प्रथमायाः कर्त्तृत्ववाचकत्वसाधनेत्यर्थः। "लटः शतृशानचावप्रथमासामानाधिकरण्ये" इति सूत्रेण धातोः प्रथमासामाना-धिकरण्याभावे (द्वितीयादिना सामानाधिकरण्ये इति यावत्) शतृशानच्-

१ पचते इति मु० पु० पा०।

अतो व्यर्थस्तदुपपादनाय प्रथमाया अभिहितकारकाभिधायित्व-कथनप्रयास इत्यपास्तम्। सङ्ख्यांश इव कारकांशेपि सुप्तिङो-स्तुल्यार्थत्वावश्यकत्वात्। अपाक्षीद्देवदत्तायेति प्रयोगस्य तथा-प्यप्रत्याख्यानाच्च तत्र शतुरप्रवृत्तेः।

यत्र च कृत्तद्धितसमासैः कारकाभिधानं पाचकश्चैत्र इत्यादौ, तत्राप्यध्याहृतास्तिक्रियाकर्त्तृत्वमेव प्रथमार्थः। अतएव "अस्तिर्भवन्ति-परः प्रथमपुरुषेप्यप्रयुज्यमानोप्यस्ति" इति कात्यायनः। प्रथमपुरुष इत्युपलक्षणम्। देवदत्त! त्वं शूरः, अहं ब्राह्मण इत्यादावस्यस्मीत्या-देरप्यध्याहारो ज्ञेयः। द्वितीयादिविभक्तयस्तु तिङ्कृत्तद्धितसमासैर-नभिहिते कारके भवन्तीति सर्वदर्शनसमानमिति वदन्ति।

प्रत्यययोर्विधानात्। प्रकृते ब्राह्मणायेति चतुर्थीसामानाधिकरण्यस्य पच्धातौ विवक्षायां पचते ब्राह्मणायेति शत्रन्तचतुर्थ्यन्तपच्पदस्यैव साधुत्वान्न तिङन्तपच्पदस्य तथात्वमिति भावः। **सङ्ख्यांश इवे**ति। एकत्वांशे सर्वैरपि सुबाख्यातयोस्तुल्यार्थकत्वोपगमात्तस्य दृष्टान्ततयोपन्यासः। **तुल्यार्थकत्वे**ति। पूर्वोक्तस्य चैत्रः पचते इति प्रयोगस्य साधुत्ववारणायेति भावः। ननु चैत्रो मैत्रश्च गच्छत इत्याद्यनुरोधेनासमानवचनकविशेष्यवाचकपदार्थ-विशेष्यकाख्यातार्थसङ्ख्याप्रकारकबोधस्य विशेष्यतावच्छेदकतासम्बन्धेन धर्म्मद्वयादावेवोपगमाच्चैत्रः पचत इत्यत्र चैत्रत्वस्यैकस्यैव तथात्वान्न तत्र तादृशान्वयबोधः। घटौ स्त इत्यत्र घटत्वस्यैकत्वेनाप्रामाण्यप्रसङ्गवारणाया-समानवचनकत्वं विशेष्यवाचकपदे उपात्तमित्यत आह—**अपाक्षीदि**ति। **शतुरप्रवृत्तेरि**ति। अपाक्षीदित्यत्र लटोभावादिति भावः।

ननु प्रथमायास्तिङाद्यभिहितकारकवाचकत्वोपगमे यत्र न तिङन्त-समभिव्याहारस्तत्र प्रथमाया निरर्थकत्वमेवेत्यत आह—**यत्र चे**ति। तत्र क्रियापदस्याध्याहारे कात्यायनवचनं प्रमाणयति—**अस्तिरि**ति। **देवदत्त! त्वं शूर** इत्यादौ प्रथमपुरुषान्तास्तिपदाध्याहारासम्भवादाह—**प्रथमे**ति। प्रथमा-मात्रस्यैवान्यदर्शनविरुद्धं कर्त्तृत्वार्थकत्वमस्माभिरुपगम्यते, द्वितीयादीनान्तु कर्म्मत्वादिवाचकत्वे नास्माकं दर्शनान्तरविरोध इत्याह—**द्वितीयादी**ति।

तान् प्रत्युच्यते—

**उक्तार्थानामप्रयोगाद्विभक्त्यन्तरदर्शनात् ।**
**अर्थतः प्रथमोपात्ता प्रथमैव प्रयुज्यते ॥६५॥**
**पार्थ एव घटो नास्ति हंसीव विमलं जलम् ।**
**कल्को म्लेच्छान्तकः कालास्त्रय इत्यादिदर्शनात्॥६६॥**

चैत्रः पचतीत्यादावाख्यातेन कर्तृत्वेभिहितेनभिहिताधिकारीय-तृतीया न सम्भवत्येव । अनभिहिताधिकारश्च "उक्तार्थानामप्रयोगः" इति न्यायस्यैव ज्ञापकः । अतएव बहुपटुरित्यादौ बहुचोक्तार्थत्वादग्रे कल्पबाद्यनुत्पत्त्या बहुपटुकल्पा इत्याद्याः प्रयोगाः न भवन्ति ।

न च केवला प्रकृतिः प्रयोक्तव्या इति चैत्रपदानन्तरं सुपः प्रयोगस्यावश्यकत्वात् प्रथमोपात्तस्य त्यागे बीजाभावाच्च प्रथमैव

एतन्मतं निरसितुमाह—**तानि**ति । **उक्तार्थानामि**ति । पञ्चम्यन्तद्वयं **प्रथमैव प्रयुज्यत** इत्यन्वितम् । द्वितीयकारिकाया**मित्यादिदर्शनादित्यस्य** न प्रथमार्थः कर्तृत्वमित्यध्याहृतेनान्वयो बोध्यः ।

सङ्क्षेपेण कारिकाद्वयोक्तमर्थं विवृणोति—**चैत्र** इत्यादिना । यदुक्तं चैत्रेण पचतीत्यत्र तृतीयाया अप्रसक्त्या न प्रामाण्यमिति, तदनभिहिताधि-कारस्य स्वतन्त्रत्व एवोपपन्नं स्यात्, तदेव न, तस्य "उक्तार्थानामप्रयोगः"इति-न्यायमात्रमूलकत्वात्, तथा च सति तिङोक्तार्थस्य कर्तृत्वस्य प्रथमया प्रयोगः कथं भवेदित्याह—**चैत्रः पचती**ति । **अतएव** तत्सूत्रस्योक्तन्यायज्ञापकत्वादेव । **न भवन्ती**ति । अन्यथा कल्पब्विधायके "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति सूत्रे "अनभिहिते" इत्यधिकाराभावाद्बहुपटुकल्पा इति प्रयोगप्रामाण्यं दुरुद्धरमेव स्यादित्याशयः ।

प्रथमायाः कर्तृत्वाबोधकत्वे उक्तसूत्रस्य न्यायसिद्धत्वेपि चैत्रेण पचतीति-प्रयोगवारणं दर्शयति—**न चे**ति । केवला प्रकृतिर्न साधुरित्यर्थः । तर्हि द्वितीया-दीनामपि कथन्न चैत्रपदोत्तरं प्रयोग इत्यत आह—**प्रथमोपात्तस्ये**ति । **बीजा-**

साधुः । पचति चैत्रायेति प्रयोगस्तवापि दुरुद्धरः । आख्यातार्थकर्तृत्वादेः प्रातिपदिकार्थेन सह न कुत्राप्यन्वयो येन तथाविधप्रयोगप्रसङ्गः, अपि तु प्रथमार्थेनेति चेत् ? सम्बुद्धिप्रथमार्थे तथाप्यन्वयसम्भवेन चैत्र ! पचतीति प्रयोगप्रसङ्गात्, सम्बोधनप्रथमाया अपि प्रथमात्वेन कर्तृत्ववाचकतासम्भवात् ।

अथ प्रकृत्यर्थविशेषितस्वार्थबोधकभिन्नया प्रथमया सहैवाख्यातस्य तादात्म्येनान्वयबोधोपयिकाकाङ्क्षाभ्युपेतव्या । अतएव

**भावाच्चे**ति । "उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावात्" इति न्यायादिति भावः ।

प्रथमायाः कर्तृत्वावाचकत्वे चैत्रेण पचतीत्यस्य साधुत्वप्रसङ्गरूपदोषस्य सत्त्वेपि तस्यास्तद्वाचकत्वोपगमेपि तिङर्थकर्तृत्वस्य चैत्रादावन्वयतात्पर्य्येण चतुर्थ्यर्थसम्प्रदानत्वे तिङर्थकर्तृत्वतादात्म्यविरहेपि पाककर्तृत्वविशिष्टचैत्रसम्प्रदानकदानबोधस्य निराबाधतया पचति चैत्रायेतिप्रयोगस्य प्रामाण्यं दुर्वारमित्याह—**पचति चैत्राये**ति । उक्तरीत्या शतृशानचोः प्रसङ्गादेव तादृशप्रयोगवारणेप्यपाक्षीदित्यादिकस्यैव दुरुद्धरत्वं बोध्यम् । **तवापि** कालापस्यापि ।

ननु तन्मते आख्यातार्थस्य प्रथमार्थेनैवान्वयो व्युत्पत्तिसिद्धः, न तु प्रातिपदिकार्थेनेति नोक्तप्रयोगप्रसङ्गस्तेषामित्याशङ्कते—**आख्यातार्थे**ति । ननु कर्तृत्ववाचकप्रथमार्थेनैवाख्यातार्थस्यान्वय इति व्युत्पत्तिस्तेषामित्यत आह—**सम्बोधने**ति । सम्बोधनप्रथमाभिन्नप्रथमात्वेन तद्वाचकतायाञ्चातिगौरवमित्याशयः ।

तन्मते उक्तदोषद्वयवारणं पुनराशङ्कते—**अथे**ति । **प्रकृत्यर्थविशेषितः** प्रकृत्यर्थनिष्ठविशेषणतानिरूपितविशेष्यताश्रयो यः **स्वार्थः** कर्तृत्वसम्बोध्यत्वादिस्तद्बोधकभिन्नयेत्यर्थः । तथा च स्वप्रकृतिप्रयोज्यप्रकारतानिरूपितविशेष्यत्वाप्रयोजकप्रथमाप्रयोज्यविशेष्यतानिरूपिततादात्म्यसंसर्गावच्छिन्नप्रकारताप्रयोजकाख्यातेन सहैव तस्या आकाङ्क्षाया सत्त्वात्पचति चैत्रायेत्यत्राख्यातार्थ-

धृतिः स्वाहेत्यादौ छन्दसि व्यत्ययानुशासनबलेन सम्प्रदानत्वार्थिकापि प्रथमा नाख्यातसव्यपेक्षेति चेत् ? तर्हि प्रकृत्यर्थविशेषितकर्तृत्वादि-बोधिकापि प्रथमा कथं तथा स्यात्, चैत्रकर्तृत्वं पाककर्तृत्वाभिन्न-मिति बोधे चैत्रस्य कर्तृत्वविशेषणत्वात् ।

यदि च पाककर्तृत्वाभिन्नकर्तृत्ववांश्चैत्र इति बोधोभ्युपेयते, तदा शुद्धकर्तृत्वत्वावच्छेदेन पाककर्तृत्वान्वयबोधजनने कृतिः पाककृतिरिति वाक्यस्यैवासामर्थ्यं दुरुद्धरम्; तादात्म्यसंसर्गाव-वच्छिन्नतद्धर्म्मविशिष्टनिष्ठप्रकारतानिरूपितविशेष्यताया निरवच्छिन्ना-वच्छेदकतासंसर्गेण वाक्यार्थबुद्धेस्तद्धर्म्मभेदप्रयोज्यत्वात् ।

तादात्म्यस्य सम्प्रदानत्वे बाधाच्चैत्र ! पचतीत्यत्र प्रथमार्थसम्बोध्यत्वस्य प्रकृत्यर्थ-विशेषितत्वान्न तयोः प्रामाण्यमिति भावः । **अतएव** उक्ताकाङ्क्षायां कर्तृत्व-बोधकेत्यपहाय **स्वार्थबोधकेत्य**स्योपादानादेव । **धृतिः स्वाहे**ति । **नाख्यात-सव्यपेक्षे**ति । तस्याः प्रकृत्यर्थविशेषितसम्प्रदानत्वरूपस्वार्थबोधकत्वेन तद्भिन्न-त्वाभावादित्यर्थः । तस्या आख्यातसव्यपेक्षत्वे तु—अस्ति धृतिः स्वाहेत्यादि-प्रयोगप्रसङ्गो बोध्यः । एवं सति चैत्रः पचतीत्यादावपि प्रथमार्थकर्तृत्वे चैत्रस्य विशेषणतयैव भानात्तस्यापि नाख्यातसाकाङ्क्षत्वं स्यादित्याह—**तर्ही**ति ।

ननु तत्र प्रथमार्थे प्रकृत्यर्थश्चैत्रादिर्न विशेषणम्, किन्तु विशेष्यमेवेत्यतो नोक्तानुपपत्तिरित्याशङ्कते—**यदि चे**ति । शङ्कां निरस्यति—**तदे**ति । **वाक्यस्यैवे**ति । तज्जन्यबोधस्यापि तादात्म्यसंसर्गेण पाककृतित्वावच्छिन्न-विधेयतानिरूपितकृतित्वावच्छिन्नोद्देश्यताकस्यैवोपेयतया तत्तुल्यान्वयबोध-जनकस्योक्तवाक्यस्य तदन्वयबोधासामर्थ्यं बोध्यम् ।

इदञ्च [१]विधेयांशेधिकावगाहिनोखिलोद्देश्यघटकं विधेयघटकत्वेनावगाह्य-मानस्योद्देश्याघटकमपि विधेयघटकत्वेनावगाह्यमानस्यान्वयबोधस्य प्राचीनैर-

१ अभेदान्वयबोधस्थले विधेयस्यावश्यमुद्देश्यघटकाश्रयाशात्मकमतोखिलेत्युक्तम् ।

नङ्गीकारात्तन्मतमाश्रित्योक्तम्। तेषां तदनङ्गीकारे त्वायमाशयः—[1]उद्देश्यवाचकपदप्रयोगस्य प्राथमिकत्वनियमेन ततो बोधे जातेबुबोधयिषितानां कृतीनां [2]विधेयत्वेन भानासम्भवात्तदधिकांशस्य तत्र पाकानुकूलत्वादीनां बुबोधयिषितानामेव तत्सम्भवात्तेषाञ्च पाकीयेत्यादिपदादेव लाभसम्भवे पाकानुकूला कृतिरिति वाक्यस्य वैयर्थ्यम्। घटो नील इत्यादौ तु घटपदेन नैल्याश्रयस्य व्यक्तेरवगमेपि नीलगुणवाचकनीलपदादुपस्थितस्य नीलगुणस्य तादात्म्यं घटे बाधितं भेदेन च नामार्थे घटे तदन्वयो विरुद्ध एवेति तावन्मात्रस्य बुबोधयिषितत्वेप्यवर्जनीयतया तदाश्रयबोधकस्य नीलपदस्य प्रयोग इति [3]नानुपपत्तिरिति। नवीनाश्च प्रवृत्तिप्रयोजकस्य नीलादिविशिष्टघटादिज्ञानस्य सम्पादनाय घटो नीलो न वेति संशयनिवृत्तये वा घटो नील इति [4]वाक्यप्रयोगं

---

१ "उद्देश्यवचनं पूर्वं विधेयस्य ततः परम्" इति कथनादिति शेषः।

२ यदि तदंशस्यापि बुबोधयिषया शाब्दमतिः स्यात्, तर्हि उद्देश्यस्यापूर्वत्वाभावाद् विधेयस्य च तद्वैपरीत्यादपूर्वत्वं शाब्दबोधे न स्यात्। अतः उद्देश्यघटकस्य विधेयतया भाने बुबोधयिषाविरह इति भावः।

३ अयम्भावः यदि शाब्दबोधस्यापूर्वत्वरक्षणायोद्देश्यस्य न विधेयत्वम्, तदा नीलो घट इत्यत्रापि नैल्यमात्रस्य विधेयत्वमुचितम्, न त्वाश्रयांशस्यापीति न वाच्यम्, नैल्यस्य घटेन सहाभेदान्वयस्य बाधितत्वात्सर्वानुभवसिद्धस्यात्र नीलघटयोरभेदान्वयबोधस्यापलापप्रसङ्गात्। सर्वो हि अभेदप्रतिपिपादयिषया नीलो घट इति वाक्य प्रयुङ्क्ते, न जातु कश्चित्परीक्षको नीलस्य घट इति। तत्र यदि नीलो घट इत्यादावपि भेदान्वयबोध एव स्यात्, तदा भेदान्वयबुद्धौ समानवचनत्वस्यानियमेन क्व नीलो घट इति, क्व च नीलस्य घट इति प्रयोक्तव्यमित्यगृहीतमूला शाब्दमतिः प्रतिपुरुषं वारविलासिनीव विगतमर्य्यादैव स्यात्। अतोकामेनापि आश्रयांशस्य विधेयकोटौ प्रवेश आवश्यकः। घटो नीलघट इत्यादौ तु विधेयतया नीलस्यैव भानेपि न काचिदपि शाब्दमर्य्यादा भज्यते। अतस्तदंशस्यैव विधेयत्व स्वीकुर्वन्ति प्राचीनाः।

४ प्रवृत्त्युपयोगिविशिष्टविषयकज्ञानसम्पत्तौ संशयनिवृत्तौ च वाक्यरचनायाः प्रयोजनत्वमिति सार्वजनीनम्। तथा च घटो नीलघटो न वेति संशय बोद्धव्यपुरुषनिष्ठमनुमानादिना ज्ञात्वा तन्निवृत्तिमभीप्सवो घटो नीलघट इति वाक्यं प्रयुञ्जन्त इति भावः।

कुर्वन्ति वक्तारः। तत्र प्रथमोपात्तत्वेन घटपदेन घटत्वेन बोधे जातेपि तस्य सामान्यधर्म्मस्य पीतघटेपि सत्त्वान्नीलघटभेदविरोधित्वविरहाद् घटो नीलघटो न वेति नीलघटतद्भेदावगाहिनः संशयस्य न निवर्त्तकत्वम्, घटो नील इति वाक्यजन्यबोधस्य चासमानप्रकारताकत्वेनैवाविरोधित्वम्, समानविषयताकत्वमात्रेण प्रतिबन्धकत्वं प्राचीनाभ्युपगतमपि न प्रामाणिकमित्य-गत्योक्तसंशयनिवर्त्तकतयैव घटो नीलघट इति वाक्यजन्यं विधेयांशेधिकाव-गाहिनं शाब्दबोधं मन्यन्ते, तेषाम्मते च नोक्तदृष्टान्तसङ्गतिरिति बोध्यम्।

तादृशबोधानुदये हेतुमाह—**तादात्म्ये**ति। घटो घट इति वाक्यात्तादा-त्म्यसंसर्गावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंसर्गेण [1]द्रव्यत्वे प्रसिद्धस्य शाब्दबोधस्य घटत्वे वारणाय तादात्म्यसम्बन्धावच्छिन्न-तद्धर्म्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति तद्धर्म्मभेदस्य कारणत्वस्यावश्यकत्वादित्याशयः। जातित्वविशिष्टघटत्वावच्छिन्न-

---

१ एतेन आपत्तिर्नाम तर्कः तर्कयामीत्यनुभवसाक्षिकमानसत्वव्याप्यजातिविशेषाश्रयः। तं प्रति आपाद्यव्यतिरेकनिश्चय आपाद्यव्याप्यापादकवत्तानिश्चयश्च कारणम्। इत्थञ्च यदि क्वचिदपि तादात्म्यससर्गकघटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकः शाब्द-बोधः स्यात्, तदा प्रकृते तादृशशाब्दबोधस्य व्यतिरेकनिश्चयः तादृशशाब्दबोधव्याप्य यदापादकं तथाविधान्वयबोधप्रयोजकसामग्रीरूपं तन्निश्चयश्चापत्तिकारणं स्यात्, न चायं बोधः क्वचित्प्रसिद्धः। अतो न तद्व्यतिरेकनिश्चयो न वा तद्व्याप्यापादकवत्तानिश्चयोतो कारणाभावादापत्त्यभावेन किमर्थं निरुक्तबोधापत्तिवारणाय घटत्वादिधर्म्मभेदस्य कारणत्वम्। घटो नीलघट इत्यादौ विधेयांशेधिकावगाहिनः शाब्दस्य स्वीकारात्तादृशबोधस्य घटत्वावच्छिन्नविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्ननीलघटत्वावच्छिन्नप्रकारताकत्वे सति "अधिकं प्रविष्टन्न तु तद्धानिः" इति न्यायात् घटत्वावच्छिन्नप्रकाताकत्वस्य सुतरां प्राप्ततया घटो घट इत्यादौ घटत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकशाब्द-बोधोत्पत्तौ बाधकाभाव इति तु न वाच्यम्, घटाद्यंशे विशेषणतावच्छेदकविधया नीलादिभाननियामकनीलाद्युपस्थितितात्पर्य्यज्ञानविशेषादिघटितायाः सामग्र्या घटत्वावच्छिन्न-विशेष्यकनीलघटत्वाद्यवच्छिन्नाभेदान्वयबोधस्यैव प्रयोजकत्वेन तस्या घटो घट इत्यादावभावान्नापत्तिस्सम्भवतीति शङ्का निरस्ता। विस्तरस्त्वत्रत्यो विचारः व्युत्पत्तिवादे द्रष्टव्यः।

वाचकतत्पदघटिताद् घटस्स इति वाक्याद् घटत्वावच्छिन्नतादात्म्यसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंसर्गेण जातित्वविशिष्टघटत्वे शाब्दबोधोदयात्तत्र घटत्वभेदाभावाद् व्यभिचारवारणायावच्छेदकतायान्निरवच्छिन्नत्वं विशेषणमुपात्तम् । तच्च प्रकारतावच्छेदकतायामपि बोध्यम् । तेन स घट इति वाक्याज्जातित्वनिष्ठावच्छेदकतानिरूपितघटत्वनिष्ठावच्छेदकताकप्रकारतानिरूपितनिरवच्छिन्नविशेष्यतावच्छेदकतासंसर्गेण घटत्वे शाब्दबोधस्य नानुपपत्तिः । जातित्वेन घटत्वाद्यवच्छिन्नवाचकतत्पदद्वयघटितात् स स इति वाक्याद्दण्डसंयोगवान् दण्डसंयोगवानिति वाक्याच्च तादृशतादृशशाब्दबोधवारणाय विशेष्यतावच्छेदकतावच्छेदकत्वादिघटितसंसर्गघटितकार्य्यकारणभावा अपि स्वयमूह्याः ।

तथा च प्रकृते कृतित्वावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंसर्गेण शाब्दबोधस्य कृतित्वे आपादनीयतया तत्र कृतित्वभेदस्यासत्त्वान्न तदापत्तिर्य्यथा, तथा चैत्रः पचतीत्यत्रापि न तथाविधश्शाब्दबोधस्स्यादित्याशयः ।

उक्तकार्य्यकारणभावस्य नवीनैरप्यवश्यमभ्युपगन्तव्यत्वेन तेषां कृतिः पाककृतिरिति वाक्यात्कथं शाब्दबोध इति तु नाशङ्कनीयम्, तन्मते तद्रूपवृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबोधं प्रति तद्रूपभेदस्यैव कारणत्वोपगमात् । वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन बोध्यम् । एवञ्च विधेयांशेऽधिकावगाहिन उक्तबोधस्य तादृशसम्बन्धेन कृतित्वगतैकत्व एव सत्त्वात्तत्र च पाकीयत्वकृतित्वगतद्वित्वभेदस्य सत्त्वादनुपपत्तेरभावात् । न चावच्छेदकता साक्षात्परम्परासाधारणी ग्राह्या, विशेष्यतावच्छेदकतादौ निरवच्छिन्नत्वन्न निवेशनीयम्, तद्व्यावर्त्त्यस्य घटस्स इत्यादौ शाब्दबोधानुपपत्त्यादेरुक्तपर्य्याप्तिविवक्षयैव वारणात् ।

न चैवमपि नीलघटमुद्दिश्य घटमात्रस्य विधेयत्वविवक्षया नीलघटो घट इति शाब्दबोधापत्तिः, तत्रोक्तसंसर्गेण तस्य घटत्वगतैकत्वे सत्त्वान्नीलत्वघटत्वगत-

द्वित्वभेदस्यापि तत्र सत्त्वादिति वाच्यम्, तद्रूपभेदस्य कारणतां विहाय तद्रूपव्यापकरूपभेदस्य, तद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकतानिरूपितविषयताविशिष्टान्यत्वस्य वा कारणताया वाच्यत्वात्। वैशिष्ट्यं स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वेन। तथा सति घटत्वगतैकत्वव्यापकनीलत्वघटत्वगतद्वित्वभेदस्य तादृशद्वित्वेसत्त्वात् तादृशनीलघटत्वावच्छिन्नविषयतयोक्तसम्बन्धेन वैशिष्ट्यस्यैव सत्त्वाद्वा नापत्तिः, न वा तादृशविषयतापदेन पीतघटत्वावच्छिन्नविषयतादिकस्यापि ग्रहणसम्भवेन तदवच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकसमुदायत्वभिन्नत्वस्य तत्र सत्त्वेप्यापत्तितादवस्थ्यम्।

न चैवमपि जातित्वेन घटत्वावगाहिनो जातिमान् घट इत्यन्वयबोधस्यानुपपत्तिः, घटत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकतानिरूपितजातिमद्घटत्वावच्छिन्नविषयतावैशिष्ट्यस्यैवोक्तसम्बन्धेन जातित्वघटत्वगतद्वित्वे सत्त्वादिति वाच्यम्, तथा सत्येकत्ववृत्तिप्रकारताघटितोक्तसम्बन्धेन शाब्दबोधे तद्धर्म्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितप्रकारताविशिष्टान्यत्वस्यैव, जातित्वघटत्वगतद्वित्ववृत्तिप्रकारताघटिततादृशसम्बन्धेन शाब्दबोधे जातित्वावच्छिन्नघटत्वादिनिष्ठावच्छेदकतानिरूपितप्रकारताविशिष्टान्यत्वस्यैव वा कारणताया वाच्यत्वात्। वैशिष्ट्यं निरुक्तसम्बन्धेनैव बोध्यम्। एवं नीलघटो घट इत्यस्य वारणाय घटो नीलघट इत्यस्योपपत्तये च नीलनीलत्वघटत्वगतत्रित्ववृत्तिप्रकारताघटितोक्तसम्बन्धेन शाब्दबोधे नीलत्वावच्छिन्ननीलनिष्ठावच्छेदकतानिरूपितनिरवच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतावदन्यत्वस्य कारणत्वं वाच्यम्। एवञ्च जातिमान् जातिमानित्यादौ नान्वयबोधापत्तिः। जातिमान् घट इत्यस्य च नानुपपत्तिः, तत्र तादृशसम्बन्धेन शाब्दबोधस्य घटत्वगतैकत्वे सत्त्वात्तत्र जातित्वावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतावदन्यत्वस्य सत्त्वात्।

न च तथापि जातिमान् जातिमद्घट इत्यस्य विधेयांशेधिकावगाहिनोन्वयबोधस्य तथाप्यनुपपत्तिः, तत्र जातित्वजातिघटत्वयोर्द्वित्वात्प्रकारताया द्वित्व-

वृत्तित्वमेव, न तु जातित्वजातिघटत्वगतत्रित्ववृत्तित्वम्, आश्रयस्योभयत्वे त्रित्वपर्य्याप्तेरसम्भवात्। तथा च तादृशद्वित्ववृत्तिप्रकारताघटितसंसर्गेण शाब्दबोधस्य जातित्वघटत्व-(गत)-द्वित्वे सत्त्वात्तत्र तादृशप्रकारतावदन्यत्व-विरहादिति वाच्यम्, स्वरूपत एकं घटत्वमेका जातित्वेन जातिरेकं जातित्वञ्चा वच्छेदकमित्यपेक्षाबुद्धेरनन्तरं घटत्वजातिजातित्वानि त्रीणि विषयतावच्छेदका-नीति बुद्धेस्तत्र निराबाधत्वात् त्रित्वस्यैव तथात्वात्तत्र च तादृशद्वित्ववृत्ति-प्रकारतावदन्यत्वस्य सत्त्वात्।

अथवा विशेष्यतात्वसंसर्गेण शाब्दबोधे स्वनिरूपितत्वस्वनिरूपिता-वच्छेदकतात्वव्यापकत्वोभयसंसर्गेण प्रकारताविशिष्टान्यत्वस्य कारणत्वं निरुच्य सर्वत्र निर्व्वाहः कार्य्यः। व्यापकत्वं स्वसामानाधिकरण्यस्वावच्छेदक-सम्बन्धावच्छिन्नत्वस्वानवच्छेदकानवच्छिन्नत्वस्वानवच्छेदकानवच्छिन्नत्वसम्ब-न्धावच्छिन्नस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन स्वनिरूपितावच्छेदकताविशिष्टान्यत्व-संसर्गेण बोध्यम्। एवञ्च यत्रोद्देश्यविधेययोः सर्वथैक्यं तत्र विशेष्यतायां प्रकारताया उक्तोभयसंसर्गेण सत्त्वात्। उद्देश्यांशे आधिक्येपि तत्सत्त्वात्। विधेयांशे आधिक्ये च त्रितयसम्बन्धघटकतृतीयसम्बन्धस्य विशेष्यतावच्छेदक-नीलत्वाद्यवच्छिन्नत्वस्यैव सत्त्वेन विरहात् स्वनिरूपितावच्छेदकतावत्त्वस्य विशेष्यतायामभावान्नानुपपत्तिः। एवं जातिमान् जातिमद्घट इत्यादावपि।

अत्रावच्छेदकतावत्तानियामकसम्बन्धानां क्रमेण कालिकेन घटत्वविशिष्ट-वाचकतच्छब्दघटितात् स घट इति वाक्यात्कालिकसम्बन्धावच्छिन्नघटत्व-निष्ठावच्छेदकतानिरूपितविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नघटत्वनिष्ठा-वच्छेदकताकप्रकारताकस्य घटो द्रव्यमित्यादिनिरवच्छिन्नावच्छेदकताकविशेष्य-त्वप्रकारताकस्य घटो जातिमानित्यादिवाक्यजन्यघटत्वावच्छिन्नविशेष्यता-निरूपितजातित्वावच्छिन्नघटत्वावच्छिन्नप्रकारताकस्य जातिमान् घट इत्यादि-वाक्यजन्यजातित्वावच्छिन्नघटत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्न-प्रकारताकस्य चान्वयबोधस्यानुपपत्तिवारणं प्रयोजनं बोध्यम्।

तृतीयचतुर्थसम्बन्धनियामकश्च सम्बन्धावच्छेदकत्वसम्बन्धावच्छिन्नस्व-निष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धर्म्मानवच्छिन्नत्वरूपो बोध्यः। तेन स्वत्वस्य परिचायकमात्रतया संसर्गकुक्षावप्रवेशादनवच्छेदकधर्म्मस्याप्रसिद्धिर्घटो द्रव्यमित्यादौ विशेष्यताद्यवच्छेदकतावच्छेदकाप्रसिद्ध्या तद्भिन्नधर्म्मघटित-सम्बन्धाप्रसिद्धिश्चेत्यादिदोषाणामवकाशः। वृत्त्यनियामकसम्बन्धाना प्रति-योगितानवच्छेदकत्वेपि चैत्रो न पचतीत्यादिवाक्यानां प्रामाण्यान्यथानुपपत्त्या तदवच्छेदकतावच्छेदकत्वस्य सिद्धान्तितत्वाच्च न तत्सम्बन्धावच्छिन्नप्रति-योगितावच्छेदकत्वाप्रसिद्धिः।

अत्रावच्छेदकतावैशिष्ट्यनियामकसंसर्गघटकमवच्छेदकत्वं स्वनिरूपित-विशेष्यत्वप्रकारत्वान्यतरनिरूपितमेव साक्षात्परम्परासाधारणं ग्राह्यम्। तेन घटत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टत्वे सति पटत्वावच्छिन्नप्रतियोगिताक-भेदविशिष्टवाचकेन पटत्वावच्छिप्रतियोगिताकाभावविशिष्टत्वे सति घटत्वा-वच्छिन्नप्रतियोगिताकभेदविशिष्टवाचकेन च तत्पदद्वयेन घटितात् स स इति वाक्यात्तादात्म्यसंसर्गावच्छिन्नतादृशाभाव-तादृशभेदोभयावच्छिन्नविशेष्यताशालि-शाब्दबोधस्य नानुपपत्तिः, तादृशविशेष्यतानिरूपितावच्छेदकतानिरूपितसाक्षाद-वच्छेदकत्वस्य प्रतियोगितायामेव सत्त्वाद् घटत्वावच्छिन्नत्वादेस्तदन-वच्छेदकत्वेपि तन्निरूपितसाक्षादवच्छेदकतानिरूपितत्वाभावस्य प्रकारता-वच्छेदकतावच्छेदिकायां प्रतियोगिताया सत्त्वात्। परम्परयावच्छेदकत्वस्य च स्वनिरूपितविशेष्यतानिरूपितप्रकारतानिरूपितपरम्परीयावच्छेदकतावति पटत्वावच्छिन्नत्वेपि सत्त्वात्तदनवच्छेदकत्वमुदासीनधर्म्मेष्वेव तदनवच्छिन्नत्वस्य तत्र सत्त्वादुक्तसंसर्गैः प्रकारतावत्त्वस्यैव विशेष्यतायां सत्त्वात् साक्षात्परम्परया वा तस्य निवेशेनुपपत्तिरेव स्यात्। उक्तविशेष्यत्वप्रकारत्वाद्वारकनिरूपितस्यै-वावच्छेदकत्वस्य निवेशे च पटत्वावच्छिन्नप्रतियोगिताकभेदनिष्ठप्रकारता-वच्छेदकताया घटत्वावच्छिन्नत्वस्य विशेष्यत्वादिद्वारैवावच्छेदकतया तस्य तदनवच्छेदकत्वात्तृतीयसम्बन्धविरहादेव न प्रकारतावत्त्वं तस्याः। एवं वैालिकेन घटत्वविशिष्टवाचकतच्छब्दघटितात् स घट इति वाक्यात्

सम्बन्धभेदेन तद्धर्म्मविशिष्टवाचकतत्पदद्वयघटिताच्च वाक्यादुद्देश्यतावच्छेदक-विधेययोरैक्येप्यानुभविकस्यान्वयबोधस्य नापत्तिः । त्रितयसम्बन्धे स्वानवच्छेदकसम्बन्धानवच्छिन्नत्वस्यासत्त्वाद्विशेष्यताप्रकारतयोस्तत्रापि वैशिष्ट्य-विरहादिति ध्येयम् ।

अथवा तादात्म्यसम्बन्धावच्छिन्नघटत्वान्यधर्म्मानवच्छिन्नघटत्वावच्छिन्न-प्रकारताशालिशाब्दत्वस्यैव घटत्वभेदनिष्ठकारणतानिरूपितकार्य्यतावच्छेदकतया तस्य च नीलत्वघटत्वोभयधर्म्मावच्छिन्नप्रकारताशाल्यन्वयबोधेसत्त्वादेव नानुपपत्तिः । नीलघटो नीलघट इति शाब्दबोधस्योभयधर्म्मावच्छिन्न-प्रकारताकस्य घटत्वे प्रसिद्धस्य नीलत्वविशिष्टघटत्वे आपत्तिस्तु नैव सम्भवति, विशिष्टस्य शुद्धानतिरेकितयेष्टापत्तेः । पर्य्याप्तिघटितसंसर्गेण घटत्वगतैकत्वे प्रसिद्धस्य नीलत्वघटत्वगतद्वित्वे आपत्तिसम्भवेपि तत्र तादृश-द्वित्वभेदस्यैव कारणत्वान्नापत्तिः । द्वित्वस्यापेक्षाबुद्धिविषयत्वरूपस्यानेकतयैक-द्वित्वेपरद्वित्वभेदसत्त्वेपि तादृशद्वित्वसमानाधिकरणभेदप्रतियोगितावच्छेदक-त्वस्यैव कारणत्वस्य वाच्यत्वात् स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य स्वस्मिन्नसत्त्वान् एकत्वे तत्सत्त्वाच्च नापत्त्यनुपपत्ती ।

उद्देश्यांशेधिकावगाहिनशाब्दबोधस्य वारणाय च घटत्वगतैकत्वसमाना-धिकरणभेदप्रतियोतावच्छेदकत्वस्य घटत्वावच्छिन्नप्रकारताशालिशाब्दबोधे कारणत्वं वाच्यम् । कार्य्यतावच्छेदकञ्च घटत्वगतैकत्ववृत्तिप्रकारता-वच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसंसर्गेण शाब्दत्वम् । नीलसुन्दरः सुन्दरनील इति वाक्याच्छाब्दबोधस्योपपत्तये नीलसुन्दरो नीलसुन्दर इति वाक्याच्च तदनुत्पत्तये नीलत्वनिष्टनिरवच्छिन्नावच्छेदकता-निरूपितावच्छेदकतानिरूपितावच्छेदकतानिरूपितसुन्दरत्वावच्छिन्नप्रकारता-निरूपितविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदक-तानिरूपितावच्छेदकतासम्बन्धेन शाब्दबोधं प्रति नीलत्वभेदस्य कारणत्व-मुपगन्तव्यम् । प्रथमे नीलसुन्दरोभेदेन सुन्दरनीले तस्मिन्नभेदेन सुन्दरस्तत्र सुन्दरत्वं तत्र सुन्दरत्वत्वं भासत इति तादृशसम्बन्धेन शाब्दबोधस्य सुन्दरत्वत्वे

**चैत्रकृतिः पाककृतिरित्यादौ तु कृतित्वनिष्ठविशेष्यतावच्छेदकता सामानाधिकरण्येन चैत्रीयत्वावच्छिन्नैव, तद्विशेष्ये विशेषणतया भासमानस्यापि तन्निष्ठावच्छेदकतायां सामानाधिकरण्येनावच्छेदकत्वात्। विशेष्यतायामेव वावच्छेदकताद्वयानिरूपितत्वम्, अवच्छेदकतायां वा**

सत्त्वात्तत्र कारणस्य सत्त्वम्। द्वितीये च नीलत्वजातावेव तस्य सत्त्वं तत्र चोक्तकारणाभाव एवेति बोध्यमिति सङ्क्षेपः।

ननूक्तकार्य्यकारणभावकल्पने यत्र विशेष्यप्रकारयोर्विशेषणभेदप्रयोज्यो-भेदान्वयः, स कथं स्यात्? विशेष्यत्वप्रकारतावच्छेदकयोस्तत्राभेदादित्यत आह—**चैत्रकृतिरि**ति। **चैत्रीयत्वावच्छिन्नैवे**ति। तथा च तादृशशाब्दबोधस्य विशेष्यतावच्छेदकताया निरवच्छिन्नत्वविरहेण नोक्तकार्य्यतावच्छेदकाक्रान्तत्वमिति तत्रोक्तकारणाभावेपि न क्षतिरित्याशयः।

ननु तत्र चैत्रीयत्वस्य कृतावेव विशेषणतया विशेष्यतावच्छेदकत्वमेव, कृतित्वे च तस्याविशेषणतया कथं तन्निष्ठविशेष्यतावच्छेदकतावच्छेदकत्वमित्यत आह—**तद्विशेष्य** इति। कृतित्वादिविशेष्ये कृत्यादावित्यर्थः। **विशेषणतये**ति। स्वरूपादिसंसर्गेणेत्यर्थः। तेन रक्तदण्डो नास्तीत्यादौ समवायेन रक्तत्वस्य रक्तदण्डे विशेषणत्वेपि सामानाधिकरण्येन दण्डत्वनिष्ठप्रतियोगितावच्छेदकतावच्छेदकत्वम्। अतएव तस्य रक्तत्वविशिष्टवैशिष्ट्यावगाहित्वम्। एवञ्च चैत्रीयत्वस्य सामानाधिकरण्येन कृतित्वनिष्ठावच्छेदकतावच्छेदकत्वं निराबाधमिति भावः। तत्र तस्य भानानुपगमे कृतित्वनिष्ठावच्छेदकताया निरवच्छिन्नत्वात्तादृशबोधोनुपपन्न एवेत्यत आह—**विशेष्यतायामेव वे**ति। तथा चोक्तविशेष्यतायाश्चैत्रीयत्वकृतित्वोभयनिष्ठावच्छेदकताद्वयनिरूपितत्वादेव व्युदास इति भावः। अत्रा**वच्छेदकताद्वये**त्यस्य पर्य्याप्तिसम्बन्धेन द्वित्वविशिष्टावच्छेदकत्वार्थकत्वेवच्छेदकतात्रयादिनिरूपितविशेष्यताया अनुपग्रहः। स्वरूपमात्रेण द्वित्वविशिष्टार्थकत्वे एकावच्छेदकतया निरूपिताया अपि विशेष्यतायास्तद्द्वयनिरूपितत्वमेव, अवच्छेदकतात्रयादीनामपि पृथगुपादाने आनन्त्यमित्यतः कल्पान्तरमाह—**अवच्छेदकतायां वे**ति। नन्वेवं घटो घट इत्यत्रापि घटत्वनिष्ठावच्छेदकतायाः स्वविशिष्टत्वात्तदन्यत्वासम्भवात्तज्जन्य-

**स्वनिरूपकविशेष्यतानिरूपकत्वसम्बन्धेनावच्छेदकताविशिष्टभिन्नत्वम् । न च स्वं स्वविशिष्टम्, अन्यत्रात्माश्रयसहनशीलविशेषणत्वादिसम्बन्धेभ्यः ।**

**अथ प्रथमाया निरर्थकत्वे वचनादिमात्रवाचकत्वे वाख्यातोपात्तं कारकन्न प्रथमान्तप्रातिपदिकेन्वियात्, सुबाख्यातोभयोपस्थितव्यक्तेरेव प्रातिपदिकार्थविशेषणतया भानव्युत्पत्तेर्वचनवदिति चेत् ?**

**एवं सत्येकवचनतिङ्तथाविधप्रथमान्तयोराकाङ्क्षाभ्युपगमस्यावश्य-**

बोधस्यापि नोक्तकार्य्यतावच्छेदकाक्रान्तत्वमित्यत आह—**न चेति** । **स्वविशिष्टमि**ति । तथा सति स्वस्यापि स्ववत्ताप्रतीतेः प्रामाण्यप्रसङ्ग इत्याशयः । यत्र स्वरूपादौ तादृशप्रतीतिः प्रामाणिकी तत्रैव स्वस्य स्वविशिष्टत्वमित्याह—**अन्यत्रे**ति । अत्र सर्वत्रैव कल्पे उद्देश्यांशेधिकावगाहिशाब्दबोधस्य कार्य्यतावच्छेदकानाक्रान्ततया तदापत्तिनिवारणं पूर्वोक्तरीत्यैव कर्त्तव्यम् ।

एतावता प्रथमायाः कर्त्तृत्वार्थकत्वमन्वयबोधानुपपत्त्यादिदोषैर्निरस्य वक्ष्यमाणप्रयोजनान्तरार्थं तस्यास्तथात्वमपि न युक्तिसहमित्याशयेनाशङ्कते—**अथे**ति । लिङ्गसङ्ख्यासम्बोध्यार्थकत्वस्य परैरभ्युपगमादाह—**वचनादी**ति । आदिना लिङ्गसम्बोध्यत्वयोः परिग्रहः । **कारकं** कर्त्तृत्वादिकम् । अनन्वये हेतुमाह—**सुबे**ति । अतएव वर्त्तमानत्वादेराख्यातमात्रोपस्थापितस्य न प्रातिपदिकार्थेन्वय इत्याशयः । **वचनवदि**ति । उभाभ्यामेवोपस्थितायाः सङ्ख्यायास्तत्रान्वयस्य परैरप्यङ्गीकारात्तस्य दृष्टान्तत्वम् ।

एतन्निरस्यति—**एवं सत्येके**ति । सङ्ख्यान्वयानुरोधेनैकवचनतिङन्तसमभिव्याहृतैकवचनप्रथमान्तपदत्वस्याकाङ्क्षात्वोपगमेनैव तादृशबोधस्य सम्भवाद् वर्त्तमानत्वप्रकारकबोधे च समानविशेष्यतया तिङ्पदजन्योपस्थितेरेव कारणतया न तस्य प्रथमान्तपदार्थेन्वय इत्येतावतैव निर्वाहात् कर्त्तृत्वार्थकत्वं

कत्वे किमत्र प्रथमायाः कर्त्तृत्वार्थकत्वेनोपकर्त्तव्यम्। अकारकाभिधायित्वेपि प्रथमोपात्तत्यागायोगेनैव प्रथमाप्रयोगसम्भवात्। अन्यथा पार्थ एव धनुर्द्धर इत्यत्रान्यत्र विशेषणतापन्ने पार्थे, घटो नास्तीत्यत्रात्यन्ताभावविशेषणतापन्नेस्तित्वाभावविशेष्ये वा घटे, हंसीव धवला कीर्त्तिरित्यत्र सादृश्यविशेषणे हंस्याश्च कर्त्तृत्वबाधेन प्रथमाप्रयोगोनुपपन्नः स्यात्।

ननु पार्थ एवेत्यादावस्तिर्भवन्तिपरोध्याहर्त्तव्यः, तत्कर्त्तृत्वश्च विशेषणविशेष्ययोरव्याहतमिति पार्थ इव धनुर्द्धरे च प्रथमा; घटो नास्तीत्यत्र कर्त्तृत्वाभाव एवाख्यातप्रथमयोरर्थः, नञ्पदं व्यञ्जकमेव, अन्यथा तिङ्सुबन्तयोर्निर्व्यपेक्षत्वे घटौ घटा वा नास्तीतिप्रयोगप्रसङ्गात्।

तस्या निरर्थकमित्याशयः। ननु कारकानभिधायितदनभिधायिन्योर्विभक्त्योस्तदभिधायिन्या एव सार्थकत्वेन प्रयोग उचित इति प्रथमायाः कर्त्तृत्वावाचकत्वे तत्प्रयोगोनुपपन्न एव स्यादित्यत आह—**अकारकाभिधायित्वेपी**ति। उक्तरीत्या तस्याः कर्त्तृत्वावाचकत्वेप्यनुपपत्त्यादीनां निरासेपि यदि तस्यास्तथात्वेभिनिवेशस्तदानुपपत्त्यन्तरमपि दर्शयति—**अन्यथे**त्यादिना। **अन्यत्र** एवकारार्थे। नामार्थेपि तस्मिन्निपातार्थतया भेदेन विशेषणतायाः सम्भवादाह—**विशेषणतापन्न** इति। तथा च तत्र तिङर्थकर्त्तृत्वस्यानन्वय एवापद्येतेति भावः। तिङर्थस्यैव नञर्थेन्वय इत्यभिप्रायेणाह—**विशेष्ये वे**ति। **कर्त्तृत्वबाधेने**ति। पार्थादेस्तत्र किञ्चित्क्रियां प्रति कर्त्तृत्वाभावात् क्रियापदस्याभावेन तदर्थ एव प्रथमार्थान्वयस्य तैरभ्युपेतत्वाच्च तस्य बाध इत्याशयः।

निरुक्तकात्यायनवाक्यप्रामाण्यात् क्रियापदं तत्राध्याहर्त्तव्यमेवेत्याशयेन शङ्कते—**नन्वि**ति। **तत्कर्त्तृत्वम्** अध्याहृतास्तिधात्वर्थकर्त्तृत्वम्। **अव्याहतमि**ति तयोस्तादात्म्यात्। **कर्त्तृत्वाभाव** इति। आश्रयत्वरूपकर्त्तृत्वस्याभाव इत्यर्थः। एवञ्च तयोस्तादात्म्यं निराबाधमित्याशयः। **अन्यथा** नञ्पदस्यैवाभावार्थकत्वे। **प्रामाण्यप्रसङ्गादि**ति। तिङर्थान्वयिन्येव प्रथमान्तार्थे तिङर्थ-

हंसीव धवला कीर्त्तिरित्यत्र कीर्त्तावस्तिना प्रथमया हंस्यामिव-निपातेन प्रथमया च भवनकर्त्तृत्वमुच्यते; यादृशसुपा यद्यत्कारक-लिङ्गवचनादिर्बोध्यते तादृश एवोपमेय इवनिपातेन प्रत्याय्यते। अतएव "मुक्तामालेव नक्षत्रैर्भूषिता चैव शर्वरी। हंसीव धवलश्चन्द्र-स्सरांसीवामलन्नभः।" इत्यादावुपमानोपमेययोः कारकलिङ्गवचन-वैरूप्यमुपमादोष इति चेन्न,

"शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव।..." इत्यादाविव-निपातेनाभिहिते करणत्वकर्म्मत्वादावुस्ररसयोः प्रथमाप्रसङ्गताद-वस्थ्यात् तृतीयानुपपत्तेश्च।

सङ्ख्यान्वयस्य व्युत्पन्नत्वान्नव्यर्थान्वयिनि तस्मिंस्तस्यान्वयस्यासम्भवा-दिति भावः।

**अस्तिने**ति। अध्याहृतेनेत्यादिः। **भवनकर्त्तृत्वमुच्यत** इति। अध्या-हृतास्तिधात्वर्थाश्रयत्वं बोध्यत इत्यर्थः। इवनिपातस्य कर्त्तृत्ववाचकत्वे युक्तिमाह—**यादृशसुपे**ति। **अतएव** उपमाने यादृशसुपा यद्यत्कारकलिङ्ग-सङ्ख्यादिर्बोध्यते तादृशस्येवनिपातेनोपमेये प्रत्यायनादेव। अस्यो**पमादोष** इत्यग्रेणान्वयः। **उपमानोपमेययोः** मुक्तामालानक्षत्रयोः हंसीचन्द्रयोः सरोनभसोः। प्रथमे भिन्नलिङ्गत्वं भिन्नवचनत्वञ्च द्वितीये भिन्नलिङ्गत्वं तृतीये भिन्नवचनत्वमिति बोध्यम्।

**यादृशसुपे**त्यादिनियमोपगमे दोषमाह—**शरैरुस्रैरि**ति। तत्र शरपदोत्तर-तृतीयया रसपदोत्तरद्वितीयया च करणत्वकर्म्मत्वयोरुपस्थापनादिवनिपातेनापि तयोरुपस्थापनेनभिहिताधिकारीययोस्तयोरसाधुत्वेन प्रथमाया एव प्रसङ्गः स्यादित्यर्थः।

ननु तत्रेवनिपातस्सादृश्यमात्रार्थकः। उस्ररसपदोत्तरं तृतीयाद्वितीये साधुत्वमात्रप्रयोजनके, विशेषणवाचकपदोत्तरत्वात्। उस्रसदृशैश्शरैरससदृशानु-

**दृश्यते च विमलं जलं नद्या इति क्रियानिरपेक्षं वाक्यम्। अस्त्वत्रास्तिर्भवन्तिपर इति चेत्? कल्की म्लेच्छान्तक इत्यादौ भविष्यति तद्योगासम्भवात्। भवन्तिपर इत्युपलक्षणं भविष्यतीत्यस्यापीति चेत्? "कालास्त्रय अतीतं तदात्वमायतिः..." इत्यादिविभाजकवाक्ये आसीदस्ति भविष्यतीत्येकतमस्यापि प्रयोगासम्भवादिति दिक्। ६५,६६।**

दीच्यानिति च तत्र प्राथमिको बोधः। ततश्च रविकर्तृकोत्खननकरणकरसकर्म्मकोद्धरणसदृशशरकरणकोदीच्यकर्म्मकोद्धरणकर्ता रघुरिति विशिष्टवाक्यार्थबोधः। तृतीयाद्वितीयार्थयोः करणत्वकर्म्मत्वयोर्धात्वर्थान्वितत्वात्तयोर्न्नानुपपत्तिः। अतएव तत्रेवशब्दद्वयोपादानं सादृश्यस्य द्विधा भानादित्यत आह— **दृश्यते चे**ति। **विमलं जलमि**ति। उपलक्षणमिदं पूर्वोक्त-शशी दिवसधूसर इत्यादिकानाम्। **कल्की**ति। तत्रास्तिपदाध्याहारे तदर्थवर्त्तमानत्वस्य कल्किनि बाधादित्यर्थः। **उपलक्षणमि**ति। रामो रावणस्य कल्की म्लेच्छस्य हन्तेत्यादौ वाक्यभेदस्यावश्यकत्वे आसीद्भविष्यतीत्यनयोरेवाध्याहारो बोध्यः। **कालास्त्रय** इति। **तदात्वं** वर्त्तमानः। **आयति**र्भविष्यत्। **प्रयोगासम्भवादि**ति। वाक्यभेदस्य तत्रानिष्टतया आसीदस्ति भविष्यतीत्येतेषामध्याहारस्य तत्रासम्भवादित्याशयः। ६५,६६।

( इति सटीकपदवाक्यरत्नाकरे प्रथमाविवरणम्। )

---

१ न च भगवतो दशावतारा मत्स्यः कूर्म्मो वाराहो नरसिंहो वामनो रामो बलभद्रो बुद्धः कल्की चेति विभागवाक्ये केषाञ्चिदवताराणामतीतत्वात् कस्यचिद्विद्यमानत्वात् कस्यचिद्भावित्वाद् आसीदस्तिभविष्यतीत्येकतमस्याप्यध्याहारासम्भव इति वाच्यम्, उद्देश्यवाक्यार्थे विभागवाक्यार्थस्यान्वयविवक्षणे सन्तीत्याध्याहारसम्भवात्। विभागवाक्यार्थे उद्देश्यवाक्यार्थस्यान्वयविवक्षणे तु अस्तिसन्तीत्येवाध्याहारसम्भवेन तत्रैकवचनान्तबहुवचनान्तयोरुभयोरपि साधुत्वात्। न चातीतानागतयोरध्याहृततिङर्थस्य वर्त्तमानसत्ताया कथमन्वय इति वाच्यम्, वर्त्तमानत्वाविवक्षणेपि धात्वर्थे "वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः..." इत्यादिदर्शनात् सम्बन्धे विवक्षिते लट्प्रयोगस्य साधुत्वोपगमादिति बोध्यम्।

## ( अथ कारकद्वितीयाविवरणम्। )

**द्वितीयामौट्शसस्तत्रावनुबन्धावक्षरे टशौ।**
**तस्मादौर्वदति द्वित्वं बहुत्वं ब्रुवते त्वसः ॥६७॥**

अम् औट् शसिति द्वितीया, सम्पदम्, उशनसौ, ग्लाव इत्यादौ श्रूयमाणास्तदीया भागा अम्, औ, अस्, इत्येव वाचकाः। टशावनुबन्धौ वाचकानन्तर्भूतौ। अतएव प्रथमाद्वितीयासाधारणे-

अथ क्रमप्राप्ता द्वितीया निरूपणीया तत्रामादीनां वाचकतावच्छेदकं प्रथममुक्त्वा वैयाकरणमतन्निरूप्य तार्किकमतन्निरूपणीम्, तत्रापि द्वितीया-विभक्तीनां स्वरूपमादावाह—**द्वितीये**ति। "न विभक्तौ तुस्माः" इति सूत्रेण मसयोरनुबन्धत्वप्रतिषेधादाह—**टशा**विति। **तस्माद्** अनुबन्धयोष्टशयोः प्रयोगे नित्यमश्रूयमाणत्वात्। **औः** औत्वविशिष्टः। एवमस इत्यत्रापि। अत्र वदतेर्ब्रुवतेश्चेश्वरेच्छाया इदम्पदममुमर्थं बोधयत्विति पदविशेष्यताकत्वे बोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतार्थः। कर्त्राख्यातस्य चाश्रयत्वम्। धात्वर्थैकदेशे बोधे व्युत्पत्तिवैचित्र्येण **द्वित्वं बहुत्व**मिति द्वितीयार्थस्या-धेयतया प्रकृत्यर्थान्वितस्य विषयत्वस्य निरूपकतयान्वयः। आश्रयत्वस्य निरूपितत्वेन विषयत्वान्वितस्य स्वरूपेणावादिपदेन्वयः। तस्या अस्मात्पदा-दयमर्थो बोद्धव्य इत्यर्थविशेष्यताकत्वे च जन्यबोधविषयत्वनिष्ठप्रकारता-केश्वरेच्छीया विशेष्यता धातोरर्थः। तस्याश्च परम्परया निरूपकत्वं स्वनिरूपक-विषयत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपकजन्यत्वनिष्ठप्रकारत्वावच्छिन्नवि-शेष्यतानिरूपकनिरूपितत्वसम्बन्धावच्छिन्नप्रकारताश्रयत्वरूपं कर्तृत्वं कर्तृ-प्रत्ययार्थः। स्वं तादृशविशेष्यत्वम्। **द्वित्व**मित्यादिद्वितीयार्थाधेयत्वस्य निरूपितत्वेन प्रकृत्यर्थान्वितस्य स्वरूपेण कर्तृप्रत्ययार्थे निरुक्तविशेष्यत्वे-न्वयस्तस्य स्वरूपेणावादिपदेन्वयो बोध्य इति। **ब्रुवते त्वस** इति बहुवचनं छन्दोनुरोधेन। केषुचित्प्रयोगेष्वमादीनां श्रूयमाणत्वात्तेषामेव वाचकत्वं लोपविकाराद्यापन्नेष्वपि तत्तत्स्मरणादेव शाब्दबोध इत्याशयेनाह—**सम्पदमि**ति। **वाचकानन्तर्भूतावि**ति। वाचकतानवच्छेदकावित्यर्थः। **अतएव** टशयोर्वाचकतानवच्छेदकत्वादेव। ङसिङसोरेकत्ववाचकतया सङ्ख्या-वाचकत्वस्य तत्साधारणरूपेणासम्भवेपि लिङ्गवाचकत्वं तत्साधारणरूपेणैव

नौन्वेन द्वित्ववाचकत्वमस्त्वेन बहुत्ववाचकत्वमित्यनुगमोपि सम्भवति । शस्-जस्-ङसि-ङसाँल्लिङ्गाभिधायकैकरूपमभ्युपेयम् । ६७ ।

**फलव्यापारयोस्सर्वधातूनां वृत्तिरिष्यते ।**
**द्वितीयार्थोऽधिकरणं फलगामीति शाब्दिकाः ॥६८॥**

**सर्वधातूनां फलव्यापारयोः पुष्पवन्तादिपदवन्नानार्थवद्वा शक्तिः । एकपदोपात्तयोरपि परस्परमन्वयो न विरुद्धः, परेषामप्याख्यातार्थे कृतौ वर्त्तमानत्वस्य, वैयाकरणानाङ्कर्त्तरि सङ्ख्यायाश्चान्वयबोधदर्शनात् । फलन्तु संयोगविक्लित्त्यादि ताद्रूप्येणैव गमिपच्यादिवाच्यम् ।**

सम्भवतीत्याह—**शसूजसि**ति । अत्रैवं सति सुमनस इत्यादावस्त्वावच्छिन्नस्य सत्त्वेपि कचिद्बहुत्वस्य कचिदेकत्वस्य बोधो योग्यतादिवशादेव । कर्म्मत्वादि-वाचकतावच्छेदकन्तु द्वितीयात्वादिकमिति तज्ज्ञानादेव तद्बोध इति बोध्यम् । ६७ ।

द्वितीयार्थस्य धात्वर्थेनान्वयात्तदप्रदर्शने तन्निरूपणासम्भवात्प्रथमं धात्वर्थमाह—**फलव्यापारयोरि**ति । **सर्वधातूनामि**ति सर्वपदेन कृञादीना-मपि तथात्वमुक्तम् । तच्च विवरणे स्फुटीभविष्यति । **शाब्दिका** इति ।

"फलव्यापारयोर्द्धातुराश्रये च तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥..."

इत्यादिना भूषणे तैः स्वसिद्धान्तस्य दर्शितत्वात् । **पुष्पवन्तादिपदवदि**ति । तत्र यथा बोधत्वावच्छिन्नेच्छीयोद्देश्यताया ऐक्यात् सूर्य्याचन्द्रमसोरेका शक्ति-स्तथात्रापि फलव्यापारयोरेकैव शक्तिरित्यर्थः । तत्रैकस्य चन्द्रादेर्न्नापरत्र सूर्य्यादावन्वयः, अत्र तु न तथा, तयोः परस्परमन्वयस्य वक्ष्यमाणत्वादेकमात्र-तात्पर्य्येणापि धातुपदप्रयोगाच्चेत्यतो दृष्टान्तान्तरमाह—**नानार्थवद्वे**ति । हर्य्या-दिपदवद्वेत्यर्थः । **न विरुद्ध** इत्यत्र दृष्टान्तं स्वमते परमते च दर्शयति—**परेषा-मि**ति । **ताद्रूप्येणैवे**ति । संयोगत्वादिना न तु फलत्वेन, तथा सति संयोगादि-

**व्यापारास्तु रथो गच्छतीत्यत्र स्पन्दविशेषत्वेन, तुरगो गच्छतीत्यत्र प्रयाणत्वेन, वह्निः पचतीत्यत्रोर्द्ध्वज्वलनत्वेन, शरीरं पचतीत्यत्राधिश्रयणावतारणफूत्कारत्वादिना, पुरुषः पचतीत्यत्र प्रयत्नत्वेनावगम्यमानाः [1]सकलव्यापारानुगतधर्म्मविरहादननुगतानां प्रवृत्तिनिमित्तानां स्वरूपसतामनुगमकेन बुद्धिविशेषविषयत्वेन सर्वनाम्नामिव धातूनां शक्याः ।**

फलानामेकमात्रबोधे नियामकान्तरानुसरणप्रसङ्गात, फलत्वप्रकारकबोधानां संयोगादिर्ग्रामवृत्तिर्न्नवेति संशयानिवर्त्तकत्वाच्च ।

एवं व्यापारा अपि तत्तद्रूपेणैव धातुवाच्या इत्याह—**व्यापारास्त्वि**ति । अस्या**वगम्यमाना धातूनां शक्या** इत्यग्रिमाभ्यामन्वयः । **स्पन्दविशेष** उत्तरदेशसंयोगजनकं कर्म्म । **प्रयाणं** प्रकृष्टं गमनं प्रकर्षोल्पकालावच्छेदेनोत्तरदेशसंयोगजनकत्वम् । **प्रयत्नत्वेने**ति । पुरुषस्यात्मनो निष्क्रियत्वात् क्रियात्वेन तथात्वासम्भवात् । निवृत्तिजीवनयोनिरूपप्रयत्नसत्त्वेपि पचतीत्याद्यप्रयोगात् प्रयत्नपदं प्रवृत्तिपरम् । **धर्म्मविरहादि**ति । क्रियात्वजातेर्गुणात्मके प्रयत्नेभावात्सत्तादीनामतिप्रसक्तत्वादनुगताननतिप्रसक्तस्य धर्म्मस्य कथञ्चित्सम्भवेपि तेन रूपेण व्यापाराणा तत्र तत्राप्रतीतेरित्याशयः । **बुद्धिविशेषे**ति । तत्तत्पदप्रयोजकबुद्धीत्यर्थः । **सर्वनाम्नामिवे**ति । यथा तत्र स्वरूपतश्शक्यतावच्छेदकानुगमकस्य बुद्धिविषयत्वस्य न शक्यतावच्छेदकतावच्छेदकत्वं न वा शाब्दबोधे प्रकारत्वं तथात्रापीत्याशयः ।

---

१ रथो गच्छतीत्यादौ व्यापाराणां तत्तद्रूपत्वेनाभिधीयमानत्वे सकलव्यापारानुगतस्य धर्म्मस्यासत्त्वात् सत्त्वे वा तेन धर्म्मेण व्यापाराणामप्रतीतेर्न्नानुगतं प्रवृत्तिनिमित्तमिति बुद्धिविशेषविषयत्वोपलक्षितधर्म्मविशिष्टे सर्वनाम्नामिवाथवा फलजनकतावच्छेदकत्वोपलक्षितधर्म्मविशिष्टे धातूना शक्तिः । अतएव विक्लित्तिजनकतावच्छेदकतया यो धर्म्मो गृहीतस्तद्धर्म्मविशिष्टमेव पचिनोपस्थाप्यते । तेनेन्धनाद्यानयनकर्त्तरि न पचतीति प्रयोग इति पक्षद्वयस्य तात्पर्य्यम् ।

**भवतु वा फलजनकतावच्छेदकत्वमेव प्रयत्नत्वादीनां स्वरूप-सदनुगमकम् । अतएव यद्धर्म्मावच्छेदेन विक्लित्त्यादिजनकताग्रह-स्तद्धर्म्मावच्छिन्नमेव पच्यादिनोपस्थाप्यते ।**

**फलजनकतावच्छेदकत्वमि**ति । **फलं** विक्लित्त्यादि । तत्र रूपादिपरावृत्तिः पूर्वरूपादिनाशविशिष्टापररूपादीनामुत्पत्तिस्वरूपा विक्लित्तिः । पाके सति रूपरसगन्धस्पर्शशिथिलसंयोगानां परावृत्तिदर्शनात् । शक्तिश्च प्रत्येकमेव, अन्यथा तेषाम्मिथो विशेषणविशेष्यभावे विनिगमनाविरहाद् गुरुरूपावच्छिन्नाया अनेकस्याः शक्तेः प्रसङ्गात् । पचतेर्नानार्थत्वेपि तात्पर्य्यस्यैव तत्तद्बोध-नियामकत्वम् । तेन यत्र रूपपरावृत्तेरेव स्फुटमुपलब्धिस्तत्र तस्या एव प्रतीतिरनुभवसिद्धोपपद्यते । अथवैकत्रद्वयमिति रीत्या तेषां व्यापारे विशेषणत्वम् । तच्चानुकूलत्वसंसर्गावच्छिन्नम् । अनुकूलत्वञ्च प्रयोजकत्वमेव । तेन रूपादिपरावृत्तिजनकत्वस्य तेजःसंयोग एव सत्त्वात्फूत्कारादिव्यापारे तस्यासत्त्वेपि न क्षतिः । वह्निः पचतीत्यत्रोद्ध्र्वज्वलनस्य तादृशपरावृत्ति-जनकस्वसंयोगजनकत्वान्नानुपपत्तिः । व्युत्पत्तिवादे गदाधरभट्टाचार्य्यैस्तूक्त-प्रयोगनिर्वाहायैव तादृशपरावृत्तिजनकतेजःसंयोगस्यैव धात्वर्थत्वमुक्तम् । तच्च चैत्रकृतेस्तादृशसंयोगजनकत्वाभावात्तज्जनकाधिश्रयणादिव्यापारजनकत्वेपि परम्परया काष्ठपाटकपुरुषीयकृतावपि सत्त्वात्तद्वारणाय विषयताविशेषसम्बन्धे-नान्वयोपगमे च गौरवाच्चिन्तनीयम् ।

**भवतु वे**त्याद्यनुसरणस्य फलमाह—**अतएवे**ति । फलजनकतावच्छेदक-त्वस्य प्रवृत्तिनिमित्तानुगमकत्वादेवेत्यर्थः । तेनेन्धनाद्यानयनकर्त्तरि पचतीति न प्रयोगः, तदानयनस्य विक्लित्ति प्रत्यन्यथासिद्धतया तत्त्वावच्छेदेन विक्लित्ति-जनकताग्रहासम्भवात् । अत्र कल्पे नापत्तिर्बुद्धिविशेषविषयत्वस्य च तत्रापि सत्त्वात्पूर्वकल्पे तदापत्तिर्दुर्वारैवेति भावः ।

**तत्रैव** अधिश्रयणादिव्यापारेष्वेव । एवकारेण तार्किकाद्युपगतप्रथमान्त-तिङन्तार्थव्यवच्छेदः । **प्रधानतया** प्रकारत्वानवच्छिन्नविशेष्यतया । **विभक्त्यु-पस्थाप्यस्ये**ति । तिङुपस्थाप्यस्येत्यर्थ । **कर्त्तुः** अधिकरणस्य । कृतेर्व्यापारस्य च धातुनैव लाभादाश्रयमात्रस्य तन्मते तिङर्थत्वात् । **अन्वय** इति । पूर्वेण

धात्वर्थव्यापार एव [1]भावनोत्पादना क्रियेति व्यपदिश्यते। तत्रैव प्रधानतया भासमानेऽनुकूलत्वसंसर्गेण फलस्य, आश्रयत्वेन वर्त्तमानत्वादेराधेयत्वेन विभक्त्युपस्थाप्यस्य कर्त्तुरन्वयः । कर्त्तरि चाख्यातोपात्ते तदर्थसङ्ख्याया आधारत्वेन, प्रथमार्थस्य तादात्म्येन, प्रथमार्थे [2]प्रथमोपात्तसङ्ख्यादेराधारत्वेन, फले च कर्म्मविभक्त्युपस्थाप्यस्याधिकरणस्याधेयत्वेन, अधिकरणे च द्वितीयान्तार्थौदनादेरभेदेन, द्वितीयान्तार्थे द्वितीयार्थे वा द्वितीयोपात्तसङ्ख्याया विशेषणत्वम्। तेन चैत्र ओदनं पचतीत्यत्रैकचैत्राभिन्नैकाधिकरणवृत्तिरेकौदनाधिकरणवृत्तिविक्लित्तिजनिका वर्त्तमाना क्रियेत्यन्वयबोधः।

**तत्रैवे**त्यनेनान्वितम्। **आधारत्वेन** समवायादिना। **तादात्म्येने**ति। **कर्त्तर्य्यन्वय** इति पूर्वेणान्वयः। **कर्म्मविभक्त्युपस्थाप्यस्य** द्वितीययोपस्थितस्य। **द्वितीयान्तार्थौदनादेरि**ति। द्वितीया अन्ते यस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणा द्वितीयाप्रकृत्यर्थेत्यर्थः। **द्वितीयार्थे वे**ति। ओदनाभिन्नाधिकरणत्वस्य सङ्ख्याविशेष्यतावच्छेदकत्वापेक्षयाधिकरणत्वस्य तत्त्वे लाघवमित्याशयः। **एकचैत्राभिन्ने**ति। आख्यातैकवचनस्यापि सङ्ख्यार्थकत्वमते एकत्वस्य द्विधा भानमित्यभिप्रेत्येदम्। **एकौदनाधिकरणवृत्तिविक्लित्ती**ति। उक्तविक्लित्तेस्साक्षात्सम्बन्धेन तण्डुले एव सत्त्वम्, ओदने तु स्वाश्रयतण्डुलनिष्पाद्यत्वमेव तस्याधेयतावच्छेदकः सम्बन्धः। ओदनपदं चौदनविष्पादकतण्डुले लाक्षणिकम्। अवयविनि पाकानुपगमे च तादृशतण्डुलारम्भकपरमाणुष्वेव लाक्षणिकमिति बोध्यम्। कर्म्माख्यातस्यापि तन्मते आश्रय एवार्थः। कर्त्राख्यातस्य ततो विशेषश्च चैत्रेण पच्यते तण्डुल इत्यादौ तण्डुलाभिन्नाश्रये तिङर्थसङ्ख्याया अन्वयः। तृतीयार्थे चाश्रये चैत्रस्यान्वयः, न तु सङ्ख्यायाः। तण्डुलं पचतीत्यत्र च तिङर्थाश्रये तिङर्थसङ्ख्यान्वयः, न तु द्वितीयान्तार्थाश्रये इति सङ्ख्यांश एव बोधस्य वैलक्षण्यं तदतिरिक्तांशे चोभयविधवाक्यात् समानाकारक एव बोध इति।

---

१ भावनोत्पादिता इति मु० पु० पा०।

२ ०सङ्ख्यादेराधेयत्वेन इत्यस्य स्थाने सङ्ख्यादेरिति सम्बन्धः इति मु० पु० पा०।

**तिङुपात्ते[1] सुबुपात्तापि सङ्ख्यान्वियादिति द्विवचनादिप्रयोगप्रसङ्गः; आचार्य्यकल्पाः द्विजा इतिवत्।**

**किञ्च पश्य मृगो धावतीत्यादावेकवाक्यत्वं "तिङ्ङतिङ.." इति सूत्रस्वरससिद्धम्। तत्र यदि धावनकर्त्ता मृगो दर्शनक्रियायाङ्कर्म्म-तयान्वेति, तदा मृगात्कर्म्मणि द्वितीयाप्रसङ्गः। अप्रथमासमानाधिकरणस्य लटः स्थाने शतुर्न्नित्यत्वे तादृशप्रयोग एव न साधुः स्यात्।**

प्रत्ययान्तानां नियतलिङ्गवचनत्वमेवेति भ्रमं निराकर्त्तुमाह—**आचार्य्यकल्पा** इति।

**किञ्चे**ति। पूर्वत्रास्वरसबीजं न्यायमतव्युत्पादने स्फुटीभविष्यति। एकवाक्यत्वोक्तिस्तत्र तमित्यस्याध्याहारेणान्वयबोधोपगमनिराकरणाय, तथा सत्येकवाक्यताभङ्गात्। **सूत्रस्वरससिद्धमि**ति। एकवाक्यत्वाभावे "समानवाक्ये निघात..." इत्यादिवार्त्तिकानुसारेणातिङन्तात्परस्यापि पश्येत्यस्य निघातस्वरो न स्यात्, समानवाक्यत्वविरहादिति तत्र तस्यावश्यकत्वमित्याशयः। प्रथमान्तार्थस्य मृगस्य धावनक्रियाकर्त्तृत्वविशेष्यत्वे दर्शनक्रियायां कर्म्मत्वसंसर्गेणान्वयोपगम एव तादृशक्रियाकर्त्तृमृगकर्म्मकदर्शनस्य तात्पर्य्यविषयीभूतस्यान्वयबोधसम्पादनसम्भवात्तथा च दर्शनक्रियाकर्म्मवाचकान्मृगपदाद् द्वितीयाप्रसङ्ग इत्याह—**तत्र यदी**त्यादि। ननु तत्र द्वितीयाप्रयोगे तस्य प्रथमान्तत्वाभावादप्रथमासामानाधिकरण्यस्य धाव्धातौ सत्त्वात्तत्र शतृप्रत्ययप्रसङ्गादेव न द्वितीयेत्यत आह—**अप्रथमे**ति। "लटः शतृशानचौ..." इत्यादिना विहितस्येत्यर्थः। तस्य वैकल्पिकत्वे उक्तप्रयोगसाधुतासम्भवादाह—**नित्यत्व** इति। तथा च तत्र शतृप्रत्ययस्य दुर्वारतया तादृशवाक्यासाधुत्वप्रसङ्ग एवेत्यर्थः।

---

१ च इत्यधिकः पाठः मु० पु०।

सिद्धान्ते तु मृगकर्तृकधावनक्रियाया दृशिक्रियायामन्वय इति धातोः प्रातिपदिकसंज्ञाविरहान्न द्वितीयाप्रसङ्ग इति सर्वथा [1]भाष्याभ्युपेतक्रियाप्राधान्यमेव श्रेयः।

तथा चौदनं पचति चैत्र इत्यत्रेकौदनाधिकरणके [2]विक्लित्त्यनुकूले व्यापारे एकचैत्राभिन्नकर्तृके प्रतीयमाने ओदनादेरन्यलभ्यत्वादधिकरणमात्रं द्वितीयार्थः। अधिकरणत्वञ्चाखण्डोपाधिर्गगना-

स्वमते तस्य साधुत्वं दर्शयति—**सिद्धान्ते त्विति**। शाब्दिकमतसिद्धान्ते चेत्यर्थः। **संज्ञाविरहादि**ति। प्रातिपदिकसंज्ञाविधायकसूत्रे "अधातुः" इति-पर्य्युदासाद्धातुभिन्नस्यैव तत्संज्ञाविधानादित्यर्थः। द्वितीयाया अप्रसक्तौ शतृप्रत्ययस्य सुतरामेवाप्रसङ्गः, प्रथमासामानाधिकरण्यादित्याशयः। स्वमतमुपसंहरति—**इति सर्वथे**ति।

प्रकृतमनुसरति—**तथा चौदनमि**ति। **तथा च** क्रियायाः प्राधान्यव्यवस्थितौ च। **प्रतीयमान** इति। प्रतीतिप्रकारश्चोक्त एव। **अन्यलभ्यत्वाद्** ओदनपदलभ्यत्वात्। ओदनादीनामधिकरणानां जात्यखण्डोपाधिभिन्नतया स्वरूपतश्शक्यत्वासम्भवाच्छक्यतावच्छेदकमाह—**अधिकरणत्वञ्चे**ति। अस्याप्यधिकरणस्वरूपत्वे उक्तानुपपत्तितादवस्थ्यादधिकरणतात्वस्य शक्यतावच्छेदकतावच्छेदकत्वे वक्ष्यमाणदार्शनिकमतसमशीलत्वप्रसङ्गादाह—**गगनाभावादी**ति। इदञ्च समनियतानामभेद इत्याशयेन। एवं सति वाच्यत्वादीनामपि गगनाभावरूपत्वप्रसङ्ग इति समनियतानां नाभेद इत्येवोपगन्तव्यमित्याशये-

---

१ "तिङ्ङतिङः" इति सूत्रेतिङ्पदस्य प्रयोजन महाभाष्यकारेण पश्य धावति मृग इत्यत्र प्रदर्शितम्। तेन तिङन्तपरे धावतिपदे निघातस्वरो निषिध्यते। तत्र पदविधेर्निघातस्य सामर्थ्याश्रिततया तिङन्तयोर्व्यपेक्षायामेवेदं प्रयोजनं सङ्गच्छते। तिङन्तयोर्व्यपेक्षा तु तदैव सम्भवति, यदि क्रियायाः प्राधान्यं स्यात्। क्रियायाश्च धात्वर्थत्वात् तन्मुख्यविशेष्यकत्वमेव शाब्दबोधस्य सर्वत्रायातीति तात्पर्य्यम्।

२ विक्लृत्य० इति मु० पु० पा०।

भावादिस्वरूपोतिरिक्तो वा स्वरूपेणैव जातिवद् द्वितीयापद-प्रवृत्तिनिमित्तम् ।

अतएवाधिकरणत्वमाधेयत्वं वा द्वितीयार्थः, न त्वधिकरणमिति-दार्शनिकमतमपास्तम्, अधिकरणतात्वस्य शक्यतावच्छेदकत्वे गौरवात् । कालं पचतीति प्रयोगप्रसङ्गात् [1]विक्लित्तौ कालवृत्त्य-धिकरणतानिरूपकत्वस्याबाधात् । तत्तत्संसर्गावच्छिन्नाधिकरणतानां तत्तद्धातुसव्यपेक्षद्वितीयाशक्यत्वे नानाशक्तिकल्पनप्रसङ्गः ।

अधिकरणस्य द्वितीयार्थतावादे तु तत्तद्धात्वर्थे फले संसर्ग-

नाह—**अतिरिक्तो वे**ति । **स्वरूपेणैवे**ति । अभावत्वादेरखण्डोपाधेर्दार्शनिकैरपि स्वरूपेणैवावच्छेदकत्वाभ्युपगमादित्याशयः ।

**अतएव** अतिरिक्तस्याधिकरणत्वस्य स्वरूपतश्शक्यतावच्छेदकत्वादेव । **गौरवादि**ति । अधिकरणताभिन्नावृत्तित्वे सति सकलाधिकरणवृत्तित्वस्वरूपस्या-धिकरणतात्वस्यातिरिक्तस्यैकाधिकरणत्वापेक्षया गुरुशरीरत्वादित्यर्थः । तस्या-प्यधिकरणत्ववदतिरिक्तत्वे त्वाह—**कालमि**ति । **विक्लित्तावि**ति । फले एव द्वितीयार्थान्वयस्य वक्ष्यमाणत्वात् । **निरूपकत्वस्याबाधादि**ति । कालस्य कालिकेन जगदाधारतया तत्सम्बन्धावच्छिन्ननिरूपकतायां विक्लित्तिनिष्ठत्वस्य निराबाधत्वाद् द्वितीयार्थाधिकरणत्वे कालस्याधेयतया द्वितीयार्थस्य च विक्लित्तावन्वयो निराबाध एवेत्याशयः । पच्धातुसमभिव्याहारे स्वरूप-संसर्गावच्छिन्नाधिकरणतैव द्वितीयार्थ इति नोक्तापत्तिरत आह—**तत्तदि**ति । **नानाशक्ती**ति । गम्धातुसमभिव्याहारे समवायसंसर्गावच्छिन्नाया ज्ञाधातु-समभिव्याहारे विषयतासंसर्गावच्छिन्नाया एव तस्या द्वितीयावाच्यताया वक्तव्यत्वादित्याशयः ।

स्वमते कालं पचतीति प्रयोगं वारयति—**अधिकरणस्ये**ति । **संसर्ग-**

---

१ विक्लृत्तौ इति मु० पु० पा० ।

विशेषेण द्वितीयार्थाधिकरणान्वय इति व्युत्पत्तिरेव विचित्रा, न तु शक्तिः। अतएव कर्म्मलकारपर्य्यायत्वमपि द्वितीयाया उपपद्यते। चैत्रेणोदनः पच्यते इत्यादौ ह्येकौदनाधिकरणकविक्लित्ति-जनिका एकचैत्राभिन्नकर्त्तृका पचिक्रिया प्रतीयते। तत्रौदनादेर-न्यलभ्यत्वादाश्रयमात्रं लकारार्थः, न त्वाश्रयत्वम्, प्रातिपदिक-सामानाधिकरण्यानुपपत्तेः।

ननु तथापि यत्र कर्त्तृकर्म्मोभयगामि संयोगादिफलम्, तत्र चैत्रश्चैत्रं गच्छतीतिप्रयोगप्रसङ्गः, चैत्राधिकरणकसंयोगजनकस्य गमनस्या-बाधितत्वादिति चेन्न,[1] परया कर्त्तृसंज्ञया बाधितत्वेन द्वितीयाप्रवृत्तेर-

**विशेषेण** स्वरूपादिसंसर्गेण। **न तु शक्तिरि**ति। स्वरूपसम्बन्धावच्छिन्न-द्वितीयार्थाधिकरणत्वावच्छिन्नप्रकारतानिरूपितविक्लित्तित्वावच्छिन्नविशेष्यताके-न्वयबोधे द्वितीयासमभिव्याहारघटिताकाङ्क्षाज्ञानम्, एवं समवायादिसम्बन्ध-मन्तर्भाव्याप्याकाङ्क्षाज्ञानं तत्तद्बोधे कारणमित्येवं कार्य्यकारणभावस्यैवानैक्यम्, शक्तिस्त्वधिकरणत्वावच्छिन्ना एकैवेत्यर्थः। **अतएव** अधिकरणस्य द्वितीयार्थ-त्वादेव। **पर्य्यायत्वं** कर्म्मलकारनिरूपितशक्यतावच्छेदकधर्म्मावच्छिन्न-शक्तत्वम्। **सामानाधिकरण्यानुपपत्तेरि**ति। सामानाधिकरण्यस्याभेदान्वय-घटिततयाश्रयत्वस्य लकारार्थत्वे तेन सहौदनादेस्तदभावादोदनः पच्यते इत्यादिविरुद्धवचनकस्यापि प्रयोगस्यापत्तेरिति भावः।

अधिकरणस्य द्वितीयार्थत्वेपि दोषान्तरमाशङ्क्य निराकुरुते—**नन्वित्या-दिना**। **तथापि** उक्तरीत्या कालं पचतीत्यादेर्वारणेपि। **यत्र** गम्धात्वादौ। सप्तम्यर्थः संयोगाद्यन्वयिवाच्यत्वम्। **संयोगादी**त्यादिना त्यज्धात्वाद्यर्थ-

---

१ न च कर्त्तृसंज्ञया कथं कर्म्मसंज्ञाबाध इति वाच्यम्, "या परानवकाशा च" इति परिभाषणादिति भावः।

भावात्, कर्म्मसंज्ञैव हि द्वितीयानिमित्तम् । अतएव—

"अपादानसम्प्रदानकरणाधारकर्म्मणाम् ।
कर्त्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते ॥"

इति पठन्ति ।

तच्च द्वितीयोपात्तमधिकरणं फलगामि धात्वर्थफलेन्वेति । तथाहि—पच्यर्थविक्लित्तावयवघटितपरम्परया, गम्यर्थसंयोगे त्यज्यर्थविभागे च समवेतत्वेन द्वितीयार्थाधिकरणस्यान्वयः । जानातेरावरणभङ्गः प्राकट्यं वा फलम् । आवरणन्त्वविद्याज्ञानमिति व्यपदिश्यमानो भावविशेष औपनिषदानां प्रसिद्धः । अतीतानामपि सूक्ष्मरूपेणावस्थितानामिदानीन्तनेन ज्ञानेन फलं जन्यते ।

विभागादिपरिग्रहः । अतएव कर्त्तृसंज्ञायाः कर्म्मसंज्ञाबाधकत्वादेव ।

कारिकोक्तस्य फलगामीत्यस्यार्थमाह—**धात्वर्थे**ति । अन्वयमाह—**अवयवघटितपरम्परये**ति । ओदनपदस्यौदननिष्पादकतण्डुललाक्षणिकत्वेवयविनि पाकानभ्युपगमे च स्वारम्भकपरमाणुवृत्तित्वेन, तस्य मुख्यार्थकत्वे स्वनिष्पादकतण्डुलारम्भकपरमाणुवृत्तित्वेनान्वयः । निरुक्ताया विक्लित्तेरोदनेबाधितत्वादित्यर्थः । अवयविनि पाकोपगमे च तण्डुलस्य साक्षादेव । ओदनस्य तु स्वनिष्पादकतण्डुलवृत्तित्वेनान्वयो बोध्यः । आवरणभङ्गस्यान्यैरनभ्युपगमादाह—**प्राकट्य**मिति । ज्ञाततापरपर्य्यायस्य तस्य मीमांसकैरुपगमात्तदनुसारिभिर्वैयाकरणैरपि तस्योपगम इत्याशयः । तत्र च द्वितीयार्थाधिकरणस्याधेयतयान्वयो बोध्यः । अतीतानागतयोरुक्तप्राकट्यस्यावृत्तितयातीतं जानातीत्यादेरनुपपत्तिरत आह—**अतीतानामपी**ति । **सूक्ष्मरूपेणे**ति । अवयविघटाद्यपकृष्टपरिमाणमृदादिरूपेणेत्यर्थः । इदञ्च सत्कार्य्यवादिसाङ्ख्यमते । तदुपपत्तिश्च तद्ग्रन्थे विस्तरत एव कृतेति नात्र तन्यते । उक्तमते भर्त्तृहरिसंवाद-

तेनातीतमनागतं वा जानातीति नानुपपन्नम् । यदाह हरिः—

"तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमतिरोभावे नश्यतीति प्रतीयते ।।" इति ।

जानातीच्छति द्वेष्टि करोति पश्यतीत्यादौ ज्ञानेच्छाद्वेषप्रयत्नदर्शनादीनि फलानि, तदनुकूला मनोयोगादयो व्यापारा एव क्रियाः । अतएव चक्षुः पश्यतीति क्वाचित्कप्रयोगः । तत्र च विषयत्वोद्देश्यत्वबाध्यत्वसाध्यत्वसाक्षात्कारित्वैस्सम्बन्धैर्द्वितीयार्थाधिकरणस्य ज्ञानादौ फलेन्वय इत्यपि केचित् ।

वस्तुतस्तु धातुना प्राधान्येन बोध्यमानो धात्वर्थः क्रिया, तत्र विशेषणतया भासमानो धात्वर्थः फलमिति परिभाष्यते ।

मप्याह—**यदाहे**ति । **सैवे**ति । तिरोभाव एवेत्यर्थः । विधेयस्य नास्तितायाः प्राधान्यात् स्त्रीलिङ्गनिर्देशः । **लब्धक्रमे** क्रमो वृत्तित्वं लब्धो येन तथाभूते, तिरोभावस्य घटादिवृत्तित्व इत्यर्थः ।

प्राकट्यादौ जानात्यर्थफलत्वोपगमे तदनुकूलव्यापारस्य चक्षुपि विरहाच्चक्षुः पश्यतीत्यादिप्रयोगानुपपत्तेराह— **जानाती**त्यादि । **अतएव** ज्ञानादीनां चक्षुरादिष्वसत्त्वेपि मनस्संयोगस्य तत्र सत्त्वादेव । ज्ञानायौगपद्यान्यथानुपपत्त्या प्रत्यक्षं प्रतीन्द्रियसंयोगस्यापि कारणताया व्यवस्थापनादित्याशयः । **तत्र चे**ति । धात्वर्थफले ज्ञानादावित्यर्थः । विषयत्वादीनां क्रमेण ज्ञानादिषु सम्बन्धत्वं बोध्यम् ।

फलक्रिययोः परिभाषाविशेषकरणाज्जानात्यादीनामर्थद्वयवाचकानां फलाधिकरणत्वेन घटादीनां कर्म्मत्वं क्रियाधिकरणत्वेन चैत्रादीनां कर्त्तृत्वमिति शाब्दिकसिद्धान्तमाह—**वस्तुतस्त्व**ति । **प्राधान्येन** मुख्यविशेष्यत्वेन । **क्रिये**ति । धातुपदजन्यबोधीयमुख्यविशेष्यताश्रयः क्रियेत्यर्थः । **तत्र** क्रियायाम् । **विशेषणतये**ति । उक्तविशेष्यतानिरूपितप्रकारताश्रयः फलमित्यर्थः ।

**क्रियायाः साक्षादधिकरणं कर्त्ता, फलस्याधिकरणं कर्म्म । अतएव फलस्यैव प्राधान्यविवक्षायां तण्डुलः पच्यते स्वयमेवेत्यादौ विक्लित्तिरेव क्रिया, तदधिकरणे कर्त्तरि लकारः ।**

**तथा च जानातेर्विषयता ज्ञप्तिश्च, इच्छतेरुद्देश्यता कामश्च, करोतेस्साध्यता यत्नश्च, द्विषेर्द्विष्टता द्वेषश्च, [1]दृशेर्लौकिकविषयता साक्षात्कारश्च, [2]अनुमिनोतेर्विधेयतानुमितिश्चेत्येवं फलव्यापारौ क्रमात्प्रतिपाद्यौ । तत्र फले विषयतादावाधाराधेयभावेन द्वितीयार्था-**

विक्लित्त्याद्यनुकूलव्यापाराणामधिश्रयणादीनां स्वजन्यसंयोगादिमत्तया तण्डुलादीनामपि कर्त्तृत्वापत्तेराह—**साक्षादि**ति । **अतएव** धात्वर्थतावच्छेदकस्य फलत्वादेव । **फलस्यैवे**ति । वस्तुतः फलस्य विक्लित्त्यादेरित्यर्थः । **विक्लित्तिरेवे**ति । धातुपदजन्यबोधीयमुख्यविशेष्यतायास्तस्यामेव सत्त्वादित्याशयः । **तदधिकरणे** विक्लित्त्यधिकरणे कर्त्तरि तण्डुले, वस्तुतः कर्म्मणीत्यर्थः ।

**तथा च** मुख्यविशेष्यत्वादिना विवक्षयैव फलत्वादिकमितिनिर्वचने च । **ज्ञप्ति**र्ज्ञानम्, चौरादिकज्ञप्धातोर्भावे क्तिन्प्रत्ययात् । **काम** इच्छा, "कमु कान्तौ" इत्यत्र "कान्तिरिच्छा" इति वृत्तेः । **द्विष्टता** द्वेषविषयता । तत्र द्वेषस्य पृथगुपादानाद्विषयतामात्रे तात्पर्य्यं बोध्यम् । **लौकिको**ति । लौकिकसन्निकर्षप्रयोज्येत्यर्थः । एतच्चालौकिकसामान्यलक्षणादिसन्निकर्षजन्यप्रत्यक्षमादाय परमाणुं पश्यतीत्यादिप्रयोगाणां प्रामाण्यवारणायोक्तम् । **विधेयते**ति । विषयतामात्रस्य तथात्वे पर्वतपक्षकानुमित्यनन्तरं पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिरतस्तद्विशेषविधेयत्वानुधावनम् । तस्याश्च साध्ये एव सत्त्वान्नोक्तापत्तिः । **फलव्यापारावि**ति । तयोः प्रत्येकमेव शक्तिरिति सूचनाय द्वन्द्वेनोपादानम् । फलविशिष्टव्यापारस्य तथात्वे तण्डुलः पच्यते स्वयमेवेत्या-

---

१ ० लौकिकी इति मु० पु० पा० ।

२ अनुमितेर्विधेयतानुमितिश्च इति मु० पु० पा० ।

धिकरणान्वय इति वैयाकरणाः ।

ननु तन्मते करणाधिकरणव्यापाराणामपि धातुना प्राधान्ये-नाभिधानसम्भवाद्धातूपात्तव्यापाराश्रयत्वेन स्वतन्त्रतया कर्तृत्वं स्यादिति चेत्? स्यादेव,

"असिश्छिनत्ति पचति स्थाल्यपसरति [1]भूधरः ।
ददाति द्विज इत्यादौ कर्तृता कारकान्तरे ॥"

साध्वसिश्छिनत्तीत्यत्रावयववृत्त्यारम्भकसंयोगप्रतिद्वन्द्विविभागश्छिन-धेरर्थः फलम् । तच्चावयविना द्वितीयार्थाधिकरणेन समानाधिकरणतया व्यपेक्ष्यते, न त्वाधाराधेयभावेन । अतएव तृणं छिनत्तीति प्रयोगः, न तु दलद्वयमिति । तत्फलानुकूलो व्यापारः करणनिष्ठो यदा

दावुक्तगतिविरहप्रसङ्गात् । इति वैयाकरणा इति । अग्रेप्येतन्मतस्यैव निरूपणादत्र तदुपसंहाराभिप्रायेण नेदम्, किन्तु मध्ये आवरणभङ्गप्राकट्य-ज्ञानादीनां फलत्वस्यौपनिषदादिमतानुसारेणोक्तत्वाद् वैयाकरणस्य स्वमते वस्तुतस्त्वित्यादिनोक्तं फलत्वादिकमित्युपसंहाराभिप्रायेणैतद्बोध्यम् ।

निरुक्ते कर्तृत्वलक्षणेतिव्याप्तिमाशङ्कते—नन्वित्यादिना । प्राधान्ये-नाभिधानसम्भवादिति । निखिलकारकव्यापाराणामेव व्यापारत्वेन धातु-वाच्यत्वादित्याशयः ।

इष्टापत्त्या समाधत्ते—स्यादेवेति । कारकान्तरे करणादिकारकेस्यादौ कर्तृतेत्यर्थः । समानाधिकरणतया सामानाधिकरण्यसंसर्गेण । व्यपेक्ष्यते तत्सम्बन्धेनाधिकरणान्वयसाकाङ्क्षमित्यर्थः । अतएव सामानाधिकरण्यमात्रेण द्वितीयार्थाधिकरणस्य फलान्वयसाकाङ्क्षत्वादेव । न तु दलद्वयमिति । अवयव-रूपस्य दलद्वयस्य तादृशविभागस्याश्रयतया सामानाधिकरण्यविरहादाधेय-

१ धराधरः इति मु० पु० पा० ।

विवक्षितस्तदा करणस्यापि कर्त्तृत्वमविरुद्धम् । अतएव "विवक्षातः कारकाणि भवन्ति" इति प्रवादः ।

एवं स्थाली पचतीत्यत्राधिकरणस्य [1]विक्लित्त्यनुकूलो व्यापारः सन्तापनादिः, गिरिरपसरतीत्यत्रापादानस्यापसरतिफलविभागानुकूल-कर्म्माभिमुख्यादिः, द्विजो ददातीत्यत्र ददातिफलस्य स्वत्वध्वंसस्य स्वत्वान्तरस्य वानुकूलोनुमित्यादिरसम्भवतीति विवक्षावशात्सर्वस्य कारकान्तरस्य कर्त्तृत्वमवसेयम् । ६८ ।

ननु तथापि कर्म्मवृत्तिव्यापारे प्रतिपाद्ये कर्म्मणामपि कर्त्तृत्वं स्यादिति चेत् ? कुतो न स्यात्,

**अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च ।**
**इत्यादिदर्शनात्कर्मण्यपि कर्त्तृत्वमिष्यते ॥६९॥**

अधिगमविषयत्वं स्मरणविषयत्वं श्रद्धाविषयत्वञ्च धातुना फल-व्यापारयोर्विशेषणविशेष्यभावव्यत्यासेन प्रत्याय्यते । प्राधान्यवशात्

त्वेनैव तत्र तदन्वयस्य योग्यतया तत्र चोक्तद्वितीयायाः साकाङ्क्षत्वविरहादिति भावः । **अतएव** करणादिनिष्ठव्यापाराणामपि धातुजन्यबोधीयमुख्यविशेष्यत्वेन विवक्षायां करणादीनामपि कर्त्तृत्वस्येष्टत्वादेव । **अधिकरणस्य** वस्तुतस्तथा-विधस्य स्थाल्यादेः । ६८ ।

कर्म्मणः कर्त्तृत्वस्योक्तकारिकयानभिधानात्तस्याप्येवं सति कर्त्तृत्वप्रसङ्गः स्यादित्याशङ्कते— **ननु तथापी**ति । इष्टापत्त्यैवात्रापि समाधत्ते—**कुतो न स्यादि**ति । **अधिगच्छती**ति । "यत्कृपावशतस्तस्मै नमोस्तु गुरवे सदा ॥" इत्युत्तरार्द्धम् । **अधिगमविषयत्वमि**त्यादि । **व्यत्यासेने**ति । अन्यत्र विषयताया विशेषणत्वेप्यत्र विशेष्यतयैव धातुना प्रतिपादनादित्यर्थः ।

---

१ विक्लृत्य० इति मु० पु० पा० ।

क्रियाभावप्राप्तस्य फलस्याधिकरणं शास्त्रार्थो भवत्यधिगमादिकर्त्ता।

यत्तु—

"एकदेशे समूहे वा व्यापाराणाम्पचादयः।
स्वभावतः प्रवर्त्तन्ते तुल्यं रूपं समास्थिताः॥"

इतिवाक्यपदीयवाक्यस्य "एकदेशे फलमात्रे व्यापारमात्रे समूहे वा धातवः प्रवर्त्तन्ते। तेन व्यापाराविवक्षायां फलमात्रे फलविवक्षायां व्यापारमात्रे च [1]धातुप्रयोगाः। यथा—पच्यते ओदनः स्वयमेव पचति चैत्र इत्यादौ" इत्यर्थं व्याकुर्वाणा अधिगच्छति शास्त्रार्थं इत्यादौ विषयतारूपफलमात्रं गमिर्वदति। अतएवायमकर्म्मको धातुरिति वदन्ति।

तन्न, तथा सत्यधिगच्छतिस्मरतिश्रद्धातिधातूनां पर्य्यायताप्रसङ्गात्। तस्मादधिगमव्यापारविशेषिता विषयता धात्वर्थ इति सारम्। ६९।

नन्वेवमधिगमादेः फलत्वप्रसक्त्या तदधिकरणानां कर्म्मत्वं

धातूनां फलव्यापारोभयवाचकत्वेपि सर्वत्र न तदुभयविवक्षा, किन्तु क्वचित्फलमात्रस्य, क्वचिच्च व्यापारमात्रस्येत्यधिगच्छतीत्यादौ फलमात्रविवक्षया तादृशप्रयोगो गमादिधातोस्तत्र स्वार्थतावच्छेदकत्वेन फलस्याबोधनादकर्म्मकत्वमेवेति मतं गमिस्मृश्रद्धातीनां तथा सति विषयतामात्रवाचकतया पर्य्यायताप्रसङ्गापत्त्या निरसितुमाह—**यत्त्वि**ति। ६९।

उक्तरीत्या व्यापारविशेषणकान्वयबोधविवक्षायां व्यापारस्यापि फलत्वोपगमे आपत्तिमाशङ्कते—**नन्वेव**मिति। **फलत्वप्रसक्त्ये**ति। विषयताया मुख्यविशेष्यत्वस्याधिगमस्य विशेषणतायाश्च विवक्षासम्भवादित्यर्थः। **तदधिकरणानामि**ति। शिष्यादिष्वधिगमस्मरणश्रद्धानां सत्त्वात्तेषामित्यर्थः।

---

१ धातुप्रयोगः इति मु० पु० पा०।

स्यादिति शिष्यमधिगच्छति शास्त्रार्थं इति प्रयोगप्रसङ्गः; न च "बुभुक्षितन्न प्रतिभाति किञ्चित्" इति दर्शनादिष्टापत्तिः, तत्र कर्म्मप्रवचनीयेन प्रतिना योगाद् द्वितीयाया अकर्म्मण्येव साधुत्वादिति चेत् ?

उच्यते—

विशिष्टवृत्तिस्वीकारादेकदेशेष्वनन्वयात् ।
कर्म्मस्थभावको धातुर्न्न द्वितीयां व्यपेक्षते ॥७०॥

स्मरति शास्त्रार्थं इत्यत्र स्मृधातोः स्मरणविषयतायां विशिष्टायाँल्लँक्षणास्वरूपा वृत्तिः, न तु विशेषणविशेष्यभावव्यत्यासमात्रे कल्पिताभ्यां खण्डशक्तिभ्यान्निर्वाहः, खण्डशक्तिजनितपदार्थोपस्थितेः फलविशेषणकव्यापारविशेष्यकशाब्दबुद्धिप्रयोजिकायां स्मृधातुत्वावच्छेदेन तादृशशाब्दबुद्ध्यभावप्रयोजकीभूताभावप्रतियोगित्वबुद्धावेव सहकारित्वाभ्युपगमात् । व्यापारप्रकारकफलविशेष्यक-

शिष्यादीनां कर्म्मत्वेनिष्टमाह—**शिष्यमि**ति । अकर्म्मकधातुयोगेपि द्वितीयादर्शनादुक्तप्रयोगोपि साधुरेवेत्याशङ्क्य निराकरोति—**न चे**ति । **इष्टापत्तिरि**त्यनेनान्वयः । तत्र भाधातुयोगेपि **बुभुक्षितमि**तिद्वितीया यथा साधुस्तथात्रापीत्यर्थः । दृष्टान्तेकर्म्मकभाधातुयोगे न द्वितीया, किन्त्वन्यथैवेति नेष्टापत्तिस्सम्भवतीत्याह—**तत्रे**ति । **कर्म्मस्थभावक** (इति)। **कर्म्मस्थः** कर्म्मनिरूपितवृत्तितावान् **भावो** व्यापारो यस्य तादृशो धातुरित्यर्थः ।

**स्मरती**ति । **अधिगच्छती**त्यादेरप्युपलक्षकम् । एवमग्रेपि **स्मृधातो**रित्यादौ बोध्यम् । **वृत्तिरि**ति । तन्मते फलव्यापारयोः प्रत्येकमेव शक्तेरुक्ततया विशिष्टे लक्षणाया एवौचित्यात् । खण्डशक्तेरपि तत्र सत्त्वात्तामादायोक्तप्रयोग-

बुद्ध्युपयोगिव्युत्पत्त्यन्तरं तत्र खण्डशक्तिग्रहजनितखण्डोपस्थितेस्सहकारिकल्पनश्चापेक्ष्य विशिष्टोपस्थितेर्जनिका विशिष्टे वृत्तिरेव कल्पयितुमुचिता।

तथा च विशिष्टपदार्थैकदेशे न द्वितीयार्थान्वयो युज्यत इति कर्म्मस्थभावकानां प्रायेणाकर्म्मकत्वमन्यत्र भावदेशकालाध्वभ्यः।

स्मरति शास्त्रार्थ इत्यादौ विषयताफलम्, उद्बोधकादिस्स्मरणीयमात्रवृत्तिर्व्यापार इति फलव्यापारयोर्वैयधिकरण्याभावादकर्म्मकः कर्म्मस्थभावको धातुरित्यपि वदन्ति। ७०।

नन्वेवं पचत्योदन इत्यपि स्यात्, कर्म्मव्यापारविवक्षायामोदनादेः कर्त्तृत्वसम्भवादिति चेत्?

प्रसङ्गः कुतो नेत्याशङ्कां तज्जनितपदार्थोपस्थितेर्व्यापारविशेष्यक एवान्वयबोधे कारणत्वमुपगम्य निराकरोति—**खण्डशक्ती**ति।

**तथा चे**ति। व्यापारविशेषणकबोधे विशिष्टवृत्तिज्ञानस्यैव कारणत्वे चेत्यर्थः। **न युज्यत** इति। "पदार्थः पदार्थेनान्वेति..." इत्यादिव्युत्पत्तेरित्याशयः। **अन्यत्रे**ति। "अकर्म्मकधातुभिर्योगे देशः कालो भावो गन्तव्योध्वा च कर्म्मसंज्ञकः" इति वार्त्तिकेन तेषां कर्म्मत्वातिदेशात्तदन्यस्मिन्नित्यर्थः।

स्मरणादीनान्न स्मरत्यादिवाच्यव्यापारत्वम्, किन्तु स्मरणीयघटादिपदार्थमात्रवृत्तिसम्बन्धादिरुद्बोधक एव व्यापारस्तं विना स्मरणस्यासम्भवात्तदीयविषयताप्रयोजकत्वस्य तत्र निराबाधादिति विषयतायास्तादृशव्यापारस्य च घटादिस्वरूपैकाधिकरणवृत्तितया वैयधिकरण्याभावात्सामानाधिकरण्यस्य सत्त्वाच्च तद्वाचकः कर्म्मस्थभावकः स्मरत्यादिधातुर्न्न सकर्म्मकः, तस्य तन्मते फलाधिकरणावाचकत्वे सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वस्वरूपत्वात्, किन्त्वकर्म्मकत्वमेवेति केषाञ्चिन्मतमाह—**स्मरती**ति।

एवं सति कर्म्मस्थभावकानामकर्म्मकत्वे व्यवस्थापिते ओदनस्य कर्त्तृत्वविवक्षया पचत्योदन इत्यस्य साधुत्वप्रसङ्ग इत्याशङ्कते—**नन्वेवमि**तीति।

उच्यते—

**निर्वर्त्त्ये च विकार्य्ये च कर्म्मवद्भाव इष्यते ।**
**तस्मात्कर्त्तृलकारेपि धातोः स्युर्य्यक्चिणादयः ॥७१॥**

यन्नाम निर्वर्त्त्यं विकार्य्यञ्च कर्म्म, तन्निष्ठभावविवक्षायां सकर्म्मकाद्धातोः कर्त्तृलकारेपि कर्म्मवद्भावोनुशासनसिद्धः । तथा च सूत्रं "कर्म्मवत्कर्म्मणा तुल्यक्रियः" इति । कर्म्मवृत्तिक्रियाश्रयः कर्त्ता कर्म्मवद्भवतीतितदर्थः । तदप्यनुशासनं कर्म्मातिदेशत्वाद्य-क्चिणात्मनेपदादीनि कर्म्मकार्य्याणि विधत्ते । तेन च पच्यते अपाचि ओदन इत्येव प्रमाणम्, न तु पचत्यपाक्षीदिति । ७१ ।

नन्वेवं यत्र भावे लकारस्तत्र कर्म्मकार्य्यं द्वितीया स्यादिति तण्डुलं पच्यत इति प्रयोगप्रसङ्ग इति चेत् ?

तत्रौदनस्य विकार्य्यकर्म्मतया विकार्य्ये निर्वर्त्त्ये च कर्म्मणि कर्म्मवद्भावस्य विधानात्तन्निष्ठव्यापारविवक्षायां कर्त्तरि लकारेपि यगादिप्रसङ्गात्पच्यत इत्येव प्रमाणम्, न तु पचतीति । प्राप्यकर्म्मणस्तु कर्म्मवद्भावाननुशासनात्तत्र यगादीनामप्रवृत्तेरधिगच्छतीत्यादिकमेव प्रमाणम्, न त्वधिगम्यत इत्यादिकमपीति समाधत्ते—**उच्यत** इत्यादिना । निर्वर्त्त्यादिकमनुपदमेव निर्वक्ष्यति । "कर्म्मवत्..."इत्यादिसूत्रे यद्यपि निर्वर्त्त्यविकार्य्यकर्म्मणोर्विशेषतो नोपादानम्, तथापि महाभाष्यादिप्रामाण्यात्तस्य तयोरेव प्रवृत्तिरिति बोध्यम् । **कर्म्मातिदेशत्वाद्**िति । उपदेशशास्त्रस्य साक्षादेव कार्य्यविधायकत्वं यथा— "सार्वधातुके यक्..." इत्यादीनाम् । अतिदेशशास्त्रस्य च तत्तत्कार्य्यविधायकशास्त्रे सम्बन्धात्तत्तत्कार्य्याणां परम्परया विधायकत्वम् । अतएव तस्योपदेशशास्त्राद्धीनबलत्वम् । **न त्वि**ति । शवादेर्बाधेन तस्यासाधुत्वात् । ७१ ।

**नन्वेवमि**ति । कर्म्मवृत्तिक्रियाश्रयस्य कर्त्तुः कर्म्मत्वातिदेशे इत्यर्थः । **भावे लकार** इति । कर्म्मवृत्तिव्यापारस्य विशेष्यतया विवक्षायां फलव्यापारयो-

उच्यते—

कर्म्मवत्कर्म्मणा तुल्यक्रिय इत्यनुशासने।
द्विलकारकनिर्द्देशात् सूत्राल्लित्यनुवर्त्तते ॥७२॥

"लिङाशिषि" इति सूत्रे द्विलकारौ सय्युँक्तौ निर्दिष्टौ। तयोराद्यं लकारमनुवर्त्त्य लकाराभिहितकर्त्ता कर्म्मवत्स्याद्यदि कर्म्मवृत्तिक्रियो भवतीतिकर्म्मवत्सूत्रशरीरं पर्य्यवस्यति। अतो लकारेण कर्त्तुरनभिधाने कर्म्मकार्य्यन्न प्रसज्यते। अतएव कृत्यक्तखलर्थप्रत्यया अपि कर्म्मकर्त्तरि न भवन्ति, कर्त्तुर्लकारेणानभिधानात् कर्म्मत्वातिदेशाप्रवृत्तेः। अतएव स्वयमेव भेतव्यं भिन्नं [1]सुभिदं वा कुशूलेनेत्यादौ भावार्थानां तव्यक्तखलां योगे कर्त्तरि तृतीयैव प्रमाणम्। ७२।

स्समानाधिकरणतया तद्वाचकत्वात्तत्र पचतेरकर्म्मकत्वात्कर्म्मणि तत्र लकारस्यासम्भवाद् भावे लकारस्य सम्भवाच्चेत्यर्थः।

कारिकाया भावार्थमाह—**लिङाशिषी**ति। **अतएव** लकारेण कर्त्तुरनभिधाने कर्मत्वातिदेशादेव। **कृत्यक्ते**ति। "तयोरेव कृत्यक्तखलर्थाः" इति सूत्रेण तेषां [2]भावकर्म्मणोरेव विधानात्। **अतएव** कृत्यक्तखलर्थप्रत्ययानां कर्म्मकर्त्तर्य्यसाधुत्वादेव। **कर्त्तरि तृतीयैवे**ति। भावे प्रत्यये कर्त्तुरनभिधानादित्यर्थः।७२।

---

१ सुभिन्नम् इति मु० पु० पा०।

२ सूत्रघटकतच्छब्देन भावकर्म्मणोः परामर्शादेवकारेण कर्त्तृव्यवच्छेदाच्च कृत्यक्तखलर्थानां कर्म्मकर्त्तर्य्यसाधुत्वमिति भावः।

ननु कोसौ निर्वर्त्त्यविकार्य्यप्राप्यकर्म्मणां विशेष इति प्राप्ते कथ्यते—

यदुत्पत्तिस्वरूपेण फलेन व्यतिषज्यते।
तन्निर्वर्त्त्यं विकार्य्यं विकारैः प्राप्यमतोन्यथा ॥७३॥

यत्कर्म्मोत्पत्तिस्वरूपेण क्रियाजन्यफलेन संसृज्यते तन्निर्वर्त्त्यन्नाम। यथा—कटं करोतीत्यत्रोत्पादनार्थककरोत्यर्थफलीभूतोत्पत्तिसंसृष्टः [1]कटः। यत्तु विकारैर्द्धात्वर्थफलैः संसृज्यते तद्विकार्य्यम्। विकारस्तु क्वचिन्नाशस्वरूपः, यथा—शत्रुं हिनस्तीत्यत्र शत्रुः। क्वचिन्नाशानुकूलोवयवविघटनादिः, यथा—तृणं छिनत्ति कुशूलं भिनत्तीत्यादौ तृणकुशूलादिः। उत्पत्तिविकारभिन्नेन फलेन संसृष्टं कर्म्म प्राप्यम्, यथा—ग्रामं गच्छति रूपं पश्यतीत्यादौ संयोगविषयत्वाधिकरणं ग्रामरूपादिः।

निर्वर्त्त्यादिकर्म्मणाम्मिथो भेदाभावेधिगच्छतीत्यादिष्वपि कर्म्मवद्भावाद्यगादिप्रसक्त्याधिगम्यत इत्यादिप्रयोगप्रसङ्ग इति तेषाम्मिथो भेदं दर्शयितुमाशङ्कते—**ननु कोसावि**ति। **व्यतिषज्यते** सम्बध्यते। **उत्पत्तिस्वरूपेणे**ति। तदन्यक्रियाजन्यफलानां विकारत्वात् तन्मात्रस्योपादानम्। **उत्पादनार्थके**ति। तन्मते करोतेरुत्पत्त्यनुकूलव्यापारार्थकत्वात्। **विकारै**रित्यस्यार्थमाह—**धात्वर्थफलैरि**ति। **यथा शत्रुमि**ति। हिनस्तेर्न्नाशानुकूलव्यापारार्थकतया तदर्थफलस्य नाशस्य प्रतियोगितया शत्रौ सत्त्वादित्यर्थः। **तृणकुशूलादिरि**ति। तत्रावयवविघटनद्वारैव तृणादीनान्नाशः, न तु साक्षादित्यर्थः। **अतोन्यथा प्राप्यमि**तिकारिकाऽर्थमाह—**उत्पत्ती**ति। **यथा ग्राममि**ति। तत्र गमनेन ज्ञानेन वा ग्रामादावुत्पत्तेर्विकारस्याजननात्संयोगादीनाञ्च विकारत्वाभावात्। स एव विकारो यस्मिन् सति कश्चिद्विशेषः प्रतीयते, न चैवं संयोगादिः, तद्वति तदभाववति चैकरूप्यस्यैव दर्शनादित्याशयः।

१ कटः इति पदं ना० मु० पु०।

हरिस्तु—

"सती वाविद्यमाना वा प्रकृतिः परिणामिनी।
यस्य नाश्रीयते तस्य निर्वर्त्त्यत्वं प्रचक्षते॥
प्रकृतेस्तु विवक्षायां विकार्य्यम् .........।"

इत्येकं पक्षमुदाजहार। यस्य कर्म्मणः प्रकृतिः समवायिकारणं परिणामितयोपादानतया नोपादीयते, तत् क्रियाफलोत्पत्तिमन्निर्वर्त्त्यं कर्म्म। यथा—कटं करोतीत्यत्र कटः। न ह्यत्र सदपि कटोपादानं वीरणं तथात्वेन विवक्ष्यते। यत्र च प्रकृतिरुपादीयते तद्विकार्य्यम्। यथा—कनकं कुण्डलं करोतीत्यत्र कुण्डलम्। कनकपदं कनकोपादाने लाक्षणिकं कुण्डलपदसमानाधिकरणम्।

वाक्यपदीये भर्त्तृहरिर्निर्वर्त्त्यादिलक्षणमन्यथैवाह तद्दर्शयति—**हरिस्त्वि**ति। **एकं पक्षमि**ति। तत्कारिकाचतुर्थचरणे "कैश्चिदन्यथा" इत्यनेन पक्षान्तरस्य वक्ष्यमाणत्वादस्यैकपक्षत्वम्। **प्रकृति**रत्र न साङ्ख्यदर्शनसिद्धा, किन्त्वन्यैवेत्याह—**समवायिकारणमि**ति। **परिणामिनी**त्यस्य भावप्राधान्येन निर्देशादाह—**परिणामितये**ति। **सदपी**ति। कटस्य समवायिकारणत्वेन विद्यमानमपीत्यर्थः। **तथात्वेन** कटसमवायिकारणत्वेन। **प्रकृतेस्त्वि**त्यादिनोक्तं विकारलक्षणं विवृणोति—**यत्र चे**ति। **यथे**ति। नन्वत्र समवायिकारणस्य कनकस्य तत्त्वेनैवोपादानात् समवायिकारणत्वेनानुपादानात्कथं तस्य विकार्य्यत्वमित्यत आह—**कनकपदमि**ति। कनकपदस्यान्यथा कुण्डलपदसामानाधिकरण्यमपि न स्यात्कार्य्यकारणयोरभेदस्य कापिलातिरिक्तैरनभ्युपगमादित्याह—**कुण्डलपदे**ति।

कनकपदस्य यथाश्रुतार्थकत्वेपि सामानाधिकरण्यं "क्षुदुपहन्तुम्..." इत्यादाविव, विकार्य्यत्वञ्च परम्परयोपपादनीयम्, उपादानत्वस्य संसर्गविधयैव

अथवोपादानत्वं साध्यता च कृञर्थः । तत्रोपादानत्वेन कनकस्य साध्यत्वेन कुण्डलस्यान्वयः । तथा च कनकोपादानकः कुण्डलसाध्यकः प्रयत्नो वाक्यार्थः ।

विकार्य्ये कर्म्मणि प्रकृतिर्द्विविधा, क्वचित्सती उपादेयकालिकी, यथा—वीरणं कटं करोति, कनकं कुण्डलं करोति, वेणुदलं चक्रं करोतीत्यादौ । क्वचिदविद्यमाना कार्य्यासहवृत्तिः, यथा—काष्ठं भस्म करोति, तण्डुलानोदनं पचतीत्यादौ । अत्र ध्वंस उत्पत्तिश्च फलविधया कृञोऽर्थः, काष्ठध्वंसस्य भस्मोत्पत्तेश्चानुकूलो व्यापारो वाक्यार्थः । पचेरपि [1]विक्लित्तिरुत्पत्तिश्चार्थः, तण्डुलविक्लेदिका ओदनोत्पादिका क्रिया वाक्यार्थः । प्रकृतित्वन्तु काष्ठस्य परम्परया व्यावहारिकमिति तदर्थः ।

विषयत्वादित्याह—**अथवेति** ।

सती वाविद्यमाना वेत्यंशस्यार्थमाह— **विकार्य्ये कर्म्मणीति** । **यथा वीरणमिति** । तत्र तृणविशेषे वीरणे सत्येव कटस्योत्पत्तेरुपादानस्य वीरणस्योपादेयकटसमानकालिकत्वम् । **अत्र** काष्ठमित्यादौ । **विक्लित्तिरुत्पत्तिश्चार्थ इति** । इदञ्च "द्व्यर्थः पचिः" इति महाभाष्यानुरोधेन । व्यापारस्यापि तदर्थत्वं तत्र चानुकूलत्वेनोत्पत्तेरन्वय इति मण्डनमिश्राणाम्मते त्र्यर्थः पचिरिति बोध्यम् । व्यापारस्य चाख्यातार्थत्वं शाब्दिकमतेत आह—**क्रिया वाक्यार्थ इति** । साक्षात्समवायिकारणस्यैव मुख्यप्रकृतित्वं काष्ठस्य च स्वनाशद्वारा भस्मकारणतया न तत्, किन्तु लाक्षणिकमित्याह—**प्रकृतित्वन्त्विति** । **तदर्थ इति** । उक्तहरिकारिकाया अर्थ इत्यर्थः ।

---

१ विकृतिरुत्पत्तिश्च पदार्थः इति मु० पु० पा० ।

पक्षान्तरमप्याह हरिरेव "कैश्चिदन्यथा" निरुच्यमानं

"निर्वर्त्त्यश्च विकार्य्यश्च कर्म्म शास्त्रे प्रदर्शितम् ॥
यदसज्जायते यद्वा जन्मना यत्प्रकाशते ।
तन्निर्वर्त्त्यं विकार्य्यन्तु द्वेधा कर्म व्यवस्थितम् ॥
प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादिभस्मवत् ।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥"

इति । पूर्वमसत एव सत्त्वमध्वस्तसमयसम्बन्धस्य समयसम्बन्ध उत्पत्तिरिति वैशेषिकादयः ।

उक्तकारिकायाश्चचरणांशेन पक्षान्तरस्यापि हरिणैवोक्तत्वात्तमप्याह—**अन्यथे**ति । उत्पत्तेः सत्कार्य्यासत्कार्य्यवादयोर्भिन्नरूपतया तत्प्रदर्शनेनोक्तकारिकाया अर्थमाह—**पूर्वमसत** इति । इदञ्चासत्कार्य्यवादिवैशेषिकादिमते मृदादावसत एव घटादेः कालसम्बन्ध इति वक्ष्यति—**वैशेषिकादय** इत्यनेन । **अध्वस्तसमये**ति । ध्वस्तः समयो यस्येति व्युत्पत्त्या यदधिकरणस्य समयस्य ध्वंस इति विग्रहवाक्येन समासाच्च लक्षणया ध्वंसप्रतियोगिसमयवृत्तित्वस्य लाभे नञ्पदसमभिव्याहारात्तादृशवृत्तितावद्भिन्नस्य लाभः । तत्त्वञ्चाद्यक्षणस्याप्यतीतस्थूलकालात्मकसमयध्वंसप्रतियोगित्वात् क्षणत्वेनैव समयस्योपादानेपि घटादीनां द्वितीयादिक्षणे तादृशप्रतियोगिनि वृत्तित्वात्तद्भिन्नत्वं न स्यादिति स्वाधिकरणक्षणध्वंसानधिकरणसमयवृत्तित्वमेवेत्यत्रैवास्यापि तात्पर्य्यं बोध्यम् । वृत्तिश्च कालिकविशेषणतानिरूपिता ग्राह्या, कालानुयोगिकस्य संयोगस्य घटादौ सत्त्वेपि तस्य वृत्त्यनियामकत्वात् । **वैशेषिकादय** इति । **आदिना** तार्किकादिपरिग्रहः ।

"नासतो विद्यते भावः" इति भगवद्गीतावाक्यस्य यथाश्रुतार्थानुसारेण मृदादौ सूक्ष्मरूपेण विद्यमानानामेव घटादीनामाविर्भाव इति सत्कार्य्यवादि-

कालिकविशेषणतासामान्येन न कोपि कुत्रापि संसृष्टः, दैशिकसंसर्गभेदेन कालिकविशेषणतानां भेदावश्यकत्वात् ।

अतएव गवावयवावच्छेदेन संयोगसंसर्गावच्छिन्नकालिकसंसर्गावच्छिन्नाभावो गोमत्यपि काले वर्त्तते, न तु समवायसंसर्गावच्छिन्नकालिकविशेषणतासंसर्गेण; इदानीमवयवेषु समवायेन गौः, न तु संयोगेनेति प्रतीत्या कालेवयवावच्छेदेन गवाभावस्य विषयीकरणात् । अवयवे संयोगेन गवाभावस्य व्याप्यवृत्तितया [1]कालावच्छेद्यत्वासम्भवात् ।

अतएव चिरान्तरितस्याप्यनुभवयागादेः [2]भावनासुकृतादिसंसर्गा-

साङ्ख्यमतमाह—**कालिके**ति । **कालिकविशेषतासामान्येन** कालिकत्वमात्रावच्छिन्नसंसर्गतया । **संसृष्टः** वृत्तिमान । संयोगाद्यवच्छिन्नत्वविशिष्टकालिकेनैव वृत्तिमानिति व्यवस्थापयितुं कालिकसंसर्गस्य संयोगाद्यवच्छिन्नत्वेन भेदमनुभवप्रामाण्येन व्यवस्थापयति—**दैशिके**ति । दैशिकविशेषणतात्र संयोगादिः ।

कालिकविशेषणताया भेदानुपगमेनुपपत्तिमाह—**अतएवे**ति । कालिकविशेषणताया भेदादेवेत्यर्थः । **वर्त्तत** इति । संयोगावच्छिन्नकालिकस्यातिरिक्ततयावयवावच्छेदेन तत्सम्बन्धावच्छिन्नगवाभावस्य गवि वृत्तेर्निराबाधत्वादित्याशयः । नन्विदानीमिति सप्तम्या अवच्छेदकत्वार्थकतया संयोगसम्बन्धावच्छिन्नावयवनिरूपितवृत्तित्वस्यैतत्कालावच्छेद्योभावो गोवृत्तिरित्याकारक एव तत्र बोध इत्यत आह—**अवयव** इति । तथा च तादृशार्थकत्वे तद्बोधस्य भ्रमत्वनियमप्रसङ्ग इत्याशयः ।

कालिकविशेषणताया भेदे युक्त्यन्तरमप्याह—**अतएवे**ति । **चिरान्तरितस्ये**ति । अनुभवाद्यागाच्च मासवर्षाद्यनन्तरमपि स्मरणस्वर्गादेरुत्पत्त्या द्वित्रक्षणमात्रान्तरिते तत्तत्क्षणसाधारणम्याव्यवहितपूर्वत्वस्य निरुक्त्या तत्रोपपादनेपि मासवर्षादिसाधारणस्य तस्य निरुक्तेरसम्भव इति सूचयितुं

---

१ कालावच्छिन्नत्वासम्भवात् इति मु० पु० पा० ।

२ भवतासुकृतादिसंसर्गावच्छिन्नकालिकविशेषणतया इति मु० पु० पा० ।

**वच्छिन्नकालिकविशेषणतया [1]स्मरणस्वर्गाद्यव्यवहितपूर्वक्षणवृत्तित्वेन तत्करणत्वं सूपपादम्।**

**तथा च ध्वंसप्रागभावादिस्वरूपदैशिकसंसर्गावच्छिन्नकालिकेन सर्वस्मिन्नपि काले प्रत्यासीदत्येव सर्वो भाव इति "नाभावो विद्यते सतः।" जन्म तु प्रकाश एव, प्रकाशस्तु समवायतादात्म्याद्यवच्छिन्न-कालिकविशेषणतया प्रथमः समयसम्बन्ध इति कापिलाः।**

**चिरान्तरितस्ये**त्युक्तम्। **भावना** संस्कारविशेषः। स च तदनुभवजन्य एव ग्राह्यः, अन्यानुभवजन्यस्यैतदनुभवसंसर्गत्वासम्भवात्। अनुभवस्य क्षणिकत्वेपि भावनायाः स्थिरत्वात्तत्सम्बन्धेन तस्य कार्य्याव्यवहितप्राक्क्षणे सत्त्वं निरावाध- मित्याशयः। **सुकृतं** पुण्यम्।

कालिकविशेषणताना भेदप्रदर्शनेन प्रकृते किमायातमित्याह—**तथा चे**ति। **ध्वंसे**ति। अतीतघटादीनां ध्वंसोनागतस्य प्रागभावस्संसर्गघटको बोध्यः। स च स्वप्रतियोगिक एव, अन्यप्रतियोगिकस्य स्वसंसर्गत्वासम्भवात्। **काल** इति भूते ध्वंससंसर्गावच्छिन्नया भविष्यति प्रागभावसंसर्गावच्छिन्नया कालिक-विशेषणतया घटादिनिखिलजन्यभावानां वृत्तित्वम्। वर्त्तमाने च तस्य वृत्तित्वं सर्वसिद्धमेवेति कालत्रयेपि कार्य्याणा वृत्तेर्नोक्तोत्पत्तिमत्त्वं तेषाम्। तत्र प्रमाणं भगवद्गीतावाक्यमेवाह—**नाभावो विद्यते सत** इति। **सतः** कालत्रये वर्त्तमानस्य घटादे**रभावो** नाशो **न विद्यत** इत्यर्थः। तन्मते तस्योत्पत्ति कारिकाद्वितीयचरणेन निरुक्तां विवृणोति—**जन्म त्वि**ति। **प्रकाश एवे**ति। तथा च कारिकास्थतृतीयाभेदार्थिकेति भावः। प्रकाशोपि न दिवाकरादि-प्रकाशरूपः किन्त्वन्य एवेत्याह—**प्रकाशस्त्वि**ति। **समवाये**ति अवयवावच्छेदेन, **तादात्म्ये**ति स्वावच्छेदेन प्राथमिकसमयसम्बन्धाभिप्रायेणोक्तम्।

---

१ स्वर्गस्मरणाव्यवहितपूर्वक्षणवृत्तित्वेन इति मु० पु० पा०।

यदाह हरिरेव—

"उत्पत्तेः प्रागसद्भावो बुद्ध्यवस्थानिबन्धनः।
अविशिष्टः सतान्येव कर्त्ता भवति जन्मनः॥
कारणं कार्य्यभावेन यदा वा व्यवतिष्ठते।
कार्य्यशब्दं तदा लब्ध्वा कार्य्यत्वेनोपजायते॥
यथाहेः कुण्डलीभावो व्यग्राणां वा समग्रता।
तथैव जन्मरूपत्वं सतामेके प्रचक्षते॥" इति।

**एवञ्चासतः सत्त्वं सतः प्रकाशो वा भवत्युत्पत्तिः। धात्वर्थफलोत्पत्तिमन्निर्वर्त्त्यं कर्म्म, यथा—कटं करोति, ओदनं पचतीत्यादौ**

उक्तार्थे हरिं संवादयति—**उत्पत्तेरि**ति। **बुद्ध्यवस्थानिबन्धन** इति। घटादीनामुत्पत्तेः पूर्वं यदसत्त्वज्ञानं तदुक्तरीत्या बुद्धेः प्रागभावघटितकालिकविशेषणत्वावगाहित्वप्रयोज्यम्। एवं नाशात्परतस्तज्ज्ञानं ध्वंसघटितनद्वगाहित्वप्रयोज्यमेवेत्यर्थः। जन्मापि तस्य न किञ्चिद्विशेषाधायकमित्याह—**अविशिष्ट** इति। तत्सदृशः किञ्चिद्विशेषशून्य एव **जन्मनः कर्त्ता** उत्पत्त्याश्रयो भवतीत्यर्थः। ननु तर्हि सर्वदैव तत्रेदानीमुत्पन्न इति व्यवहारः स्यादित्यत आह—**यदे**ति। यस्मिन् काले **कारणं** समवायिकारणं कपालादि, **कार्य्यभावेन घटत्वेन व्यवतिष्ठते** परिणमति, **तदा** तस्मिन् काले **कार्य्यशब्दं लब्ध्वा** लाभः प्राप्तिः सम्बन्धरूपः, स चात्र वाच्यवाचकभावादिः, **कार्य्यत्वेनोपजायते** उत्पन्नत्वव्यवहारविषयो भवतीत्यर्थः। अन्ये पुनरन्यथैव जन्मस्वरूपमाहुस्तदाह—**यथाहे**रिति। **कुण्डलीभाव** इति। यथा—सत एव सर्पस्य सम्बन्धविशेषेण कौटिल्याश्रयत्वम्, न त्वसतस्तस्योत्पत्तिस्तथैव घटादेरपीत्यर्थः।

**एवञ्चे**ति। वैशेषिकादिमतेनोत्पत्तेर्द्वैविध्ये चेत्यर्थः। **तन्निर्वर्त्त्य**मित्यत्र तत्पदेन तादृशोत्पत्तिमत एव परामर्श इत्याह—**धात्वर्थे**ति। कारिकायां

कटौदनादिः। धात्वर्थफलीभूतविकारसंसृष्टं विकार्य्यम्, यथा— शत्रुं हिनस्ति, काष्ठं भिनत्तीत्यादौ शत्रुकाष्ठादिः। यथा वा कनकं कुण्डलं करोतीत्यादौ कनककुण्डलादिः।

"प्रकृत्युच्छेद..." इत्यादिकारिका तु यदुच्छेदेन सम्भूतं निर्वर्त्त्यं कर्म्म सा प्रकृतिर्विकार्य्यं कर्म्म, यथा—काष्ठोच्छेदसम्भूतं भस्म निर्वर्त्त्यं कर्म्मेति काष्ठं विकार्य्यम्। सत्यामेव यस्यां प्रकृतौ गुणोत्पत्तिर्धातुना प्रत्याय्यते, तदपि द्वितीयं विकार्य्यं कर्म्म, यथा— सदेव शलाकास्वरूपं कनकमवयवानामनारम्भकसंयोगमात्रविरोधिना कर्म्मणा भुग्नत्वगुणोत्पत्त्या विकार्य्यम्, कुण्डलपदस्य भुग्नं द्रव्यमर्थः। धात्वर्थोत्पत्तिस्तु भुग्नत्व एवार्थतोन्वेतीत्यर्थिका।

प्राप्यलक्षणमाह हरिरेव—

"क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते॥"

इति। तत्र क्रियाकृतविशेषा उत्पत्तिक्षयोपचयादयो भावविकारा एव [1]गणनीयाः। ७३।

विकार्य्यस्य विभागमात्रकरणात्स्वयं तल्लक्षणमाह—**धात्वर्थफलीभूते**ति। **विकारो** नाशादिः पूर्वोक्त एव बोध्यः। **काष्ठादिरि**ति। **तत्र** विकार्य्ययोर्मध्ये। द्वितीयमाह—**यथा वे**ति।

तत्र प्रथमं विकार्य्यं "प्रकृत्युच्छेद..." इत्यादिना लक्षितमधुना तद्विवृणोति—**प्रकृत्युच्छेदे**ति। द्वितीयमाह—**सत्यामेवे**ति। अनारम्भकस्संयोगः कनकोत्पत्त्यप्रयोजकस्तत्तदाकाशप्रतियोगिकः। **भुग्नत्वगुणे**ति। **भुग्न**त्वं वक्रत्वं तच्च संस्थानविशेषरूपतया संयोगात्मको गुण एवेति भावः। **अर्थतोन्वेती**ति। तादृशद्रव्यस्य कनकस्य विद्यमानतयोत्पत्तेर्बाधादुक्तसंस्थाने एव "सविशेषणे हि" इति न्यायात्तस्या अन्वय इत्याशयः। **इत्यर्थिके**ति। पूर्वेण **कारिका त्वि**त्यनेनान्वितम्।

**क्षयो** नाशः। **उपचयो** वृद्धिः। ७३।

---

१ एवागणनीयाः इति मु० पु० पा०।

तदेवं वैयाकरणमतन्निरूप्य नैयायिकमतमुत्थाप्यते—

**कर्म्मत्वघटका भागा लभ्यन्ते परतो यतः ।**
**द्वितीयार्थस्ततो भेदसम्बन्धाविति तार्किकाः ॥७४॥**

परसमवेतक्रियाविशेषणधात्वर्थफलसमवायित्वं कर्म्मत्वम् । भवति च ग्रामं गच्छतीत्यत्र ग्रामभिन्नसमवेतायां क्रियायां विशेषणीभूतेन संयोगावच्छिन्नस्पन्दवाचकस्य गमेरर्थेन संयोगेन संसृष्टो ग्रामः ।

कर्म्मत्वघटकपदार्थास्तु ग्रामक्रियाफलानि नामधातुभ्यामेव लभ्यन्ते, प्रतियोग्यनुयोगिभावादयस्तु संसर्गमर्य्यादया भासन्त इति न वाचकपदमपेक्षन्ते । कर्म्मफलयोस्सम्बन्धः परत्वस्वरूपो भेदश्चानन्यलभ्यत्वाद् द्वितीयार्थः । प्रातिपदिकार्थविशेषितः सम्बन्धः फले, भेदश्च सामानाधिकरण्येन क्रियायामन्वेति । प्रातिपदिकार्थस्तु

**तदेवमि**ति । उक्तप्रकारेणेत्यर्थः । कर्म्मत्वस्याज्ञाने तद्घटकभागानां ज्ञानमसम्भवीति कर्म्मत्वं लक्षयति—**परसमवेते**ति । **परस्मिन्** भिन्ने **समवेतः** (समवायेन वृत्तिरित्यर्थः ।) भेदश्चोपस्थितत्वाद् ग्रामादिप्रतियोगिक एव बोध्यः । **फलसमवायित्वमि**ति । इदञ्च समवेतानां संयोगविभागादीनामेव फलत्वमित्यभिप्रेत्य । तदन्येषामपि तत्त्वे फलसम्बन्धित्वमेव बोध्यम् । **ग्रामभिन्ने** चैत्रे । **विशेषणीभूतेने**त्यस्यानुकूलत्वसंसर्गेणेत्यादिः अन्वयश्चास्य **संयोगेने**त्यनेन ।

कर्म्मत्वघटकानां सर्वेषामेव न द्वितीयावाच्यत्वम्, किन्त्वनन्यलभ्ययोर्भेदसम्बन्धयोरेवेति येषामन्यलभ्यत्वं तानाह—**ग्रामे**त्यादिना । **कर्म्मफलयो**-र्ग्रामसंयोगयोः । **सम्बन्ध** आधाराधेयभावादिः । तयोश्च न केनापि पदेनोपस्थापनमित्याशयः । न चैवं "कर्म्मणि द्वितीया" इत्यनुशासनविरोधः, कर्म्मणो द्वितीयार्थत्वाभावेन वाचकत्वार्थकसप्तम्या लब्धस्य कर्म्मवाचकत्वस्य तत्राभावादिति वाच्यम्, तस्य कर्म्मणि धात्वर्थतावच्छेदके फलनिष्ठाधेयत्वा-

**भेदे तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितयान्वेति। नञ्पदान्यप्रतिपाद्ये भेदे प्रतियोग्यविशेषणधर्म्मावच्छिन्नस्यापि प्रतियोगित्वस्य संसर्गत्वे विरोधाभावात्।**

न्वयिनि प्रकृतेस्तात्पर्य्ये द्वितीयेत्यत्रैव तात्पर्य्यात्। **तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितये**ति। प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगित्वस्य संसर्गत्वे मल्लो मल्लं गच्छतीत्यत्र मल्लत्वावच्छिन्नप्रतियोगिताकभेदस्य मल्लेभावादन्वयबोधानुपपत्तिरिति **तत्तद्व्यक्तित्वे**त्याद्युक्तम्। एकमल्लेपरमल्लभेदस्य निराबाधतयैवं सति नानुपपत्तिरिति। अभावे प्रतियोगिनः प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगित्वसंसर्गेणैवान्वयस्य व्युत्पत्तिसिद्धतया द्वितीयार्थे भेदे प्रकृत्यर्थस्य तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वसंसर्गेण कथमन्वय इत्यत आह— **नञ्पदान्ये**ति। **विरोधाभावादि**ति। घटो नास्तीत्यादौ नञ्पदवाच्याभावप्रतीतेर्विशिष्टवैशिष्ट्यावगाहित्वान्यथानुपपत्तिरेव प्रतियोगिविशेषणधर्म्मावच्छिन्नप्रतियोगित्वस्य संसर्गत्वे मानमित्याशयेनेदम्।

न चात्र तत्तद्व्यक्तित्वस्य संसर्गघटकत्वोपगमादुपपत्तावप्यपूर्ववाक्यार्थस्थले शाब्दबोधात्प्राग् विशिष्टवाक्यार्थविषयकज्ञानस्यासम्भवेन विशिष्टवाक्यार्थविषयकत्वविशिष्टबोधविषयकत्वेन तस्य हेतुत्वासम्भवात्तत्तत्सम्बन्धावच्छिन्नतत्तद्धर्म्मावच्छिन्नप्रकारतानिरूपिततत्तद्धर्म्मावच्छिन्नविशेष्यताकत्वविशिष्टबोध-विषयकत्वेनैव हेतुताया वक्तव्यतया तात्पर्य्यज्ञाने सम्बन्धस्यापि विशेषणत्वात्तद्व्यक्तित्वाद्यनुपस्थितौ शाब्दबोधाभावप्रसङ्गः। न च शाब्दबोधात्प्राग् वाक्यार्थविषयकज्ञानस्य यत्र कदाचिदप्यजननं तत्र निरूप्यनिरूपकभावापन्नविषयत्वग्राहकानुव्यवसायस्याप्यसम्भवाद्विषयत्वान्तरविशिष्टविषयत्वोपस्थितेर-प्यसम्भवेन विशिष्टवैशिष्ट्यावगाहितात्पर्य्यज्ञानमप्यसम्भवीति वाच्यम्, तद्घटकप्रत्येकपदार्थज्ञानजन्यानुव्यवसायगृहीततत्तद्विषयत्वोपस्थितिमूलकस्य विशेष्ये विशेषणमितिरीत्या तस्य निराबाधत्वादिति वाच्यम्, यद्धर्म्मावच्छिन्नाभावबुद्धिः पुरुषस्य कदापि न जाता तद्धर्म्मावच्छिन्नप्रतियोगित्वस्याग्रहेणानु-

**भवतु वा प्रातिपदिकार्थे आधाराधेयभावेन भेदे, भेदस्तु प्रतियोगितावच्छेदकतया क्रियायां विशेषणम् । विद्यते च गगनवद्भेदो ग्रामे । ७४ ।**

**ननु [1]भेदांशशक्तिर्निरर्थिका, तदनुभवस्य विवादग्रस्तत्वात् । चैत्रश्चैत्रं गच्छतीति [2]प्रयोगश्च परया कर्तृसंज्ञया बाधादेव प्रतिहतः ।**

व्यवसायेन तत्संसर्गत्वस्यापि ग्रहणासम्भवात्तत्र विशेष्ये विशेषणमिति-रीत्यापि तद्घटिततात्पर्य्यज्ञानस्यासम्भव इति तादृशस्थलानुरोधेन विलक्षण-विषयतासम्बन्धेन तत्तत्पदार्थविशिष्टविषयकबोधविषयकज्ञानत्वेन तात्पर्य्य-ज्ञानस्य हेतुताया आवश्यकत्वात्तद्रीत्यैव प्रकृतेपि (तन्-) तद्व्यक्तित्वावच्छिन्न-प्रतियोगित्वस्यानुपस्थितावपि तद्घटिततात्पर्य्यज्ञानसम्भवात्। सर्वत्र शाब्दबोधे तात्पर्य्यज्ञानकारणताया अनुपगमपक्षे तादृशसंसर्गज्ञानस्यानपेक्षणाच्च तदनु-पस्थितिकालेपि तत्संसर्गकशाब्दबोधस्य सम्भवात् ।

घटवति घटाभाववदिति बुद्धेस्सर्वानुमतमेवाप्रामाण्यम्, तन्निर्वाहश्च विशेषणतावच्छेदकावच्छिन्नप्रतियोगित्वसंसर्गावगाहित्वमभावबुद्धेर्नियतमित्य-स्योपगम एवेति नञ्पदं विनाप्यभावबुद्धेरन्वयितावच्छेदकावच्छिन्नप्रतियोगिता-संसर्गावगाहित्वम्मानाभावादसिद्धमित्यत आह—**भवतु वेति । प्रतियोगिता-वच्छेदकतया** तत्संसर्गेण । मल्लो मल्लमित्यत्र गम्यमल्लवृत्तिभेदप्रतियोगिता-वच्छेदकताया गन्तुमल्लवृत्तिगमने सत्त्वान्नानुपपत्तिरिति बोध्यम् । ७४ ।

द्वितीयाया भेदार्थकत्वमाक्षिपति—**नन्वित्यादिना । तदनुभवस्य** भेदानुभवस्य । **विवादग्रस्तत्वादिति** । ग्रामं गच्छतीत्यादौ भेदबोधे प्रयोजना-भावाच्चेति बोध्यम् । ननु संयोगस्योभयनिष्ठतया ग्रामवृत्तेस्तस्य चैत्रेपि सत्त्वाच्चैत्रवृत्तिसंयोगानुकूलव्यापारजनककृतेश्चैत्रेपि सत्त्वाच्चैत्रश्चैत्रं गच्छतीति प्रयोगवारणायैव भेदस्य द्वितीयार्थत्वमावश्यकम् । तथा सति तादृशसंयोगानु-कूलक्रियावच्छेदस्य चैत्रेसत्त्वाच्चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य गमने

१ निरर्थिका इत्यस्य स्थाने अनर्थिका इति मु०पु०पा० । २ प्रयोगप्रसङ्गश्च इति मु०पु०पा० ।

(कर्म्म-) संज्ञैव द्वितीयाप्रयोजिका, न तु वस्तु, अधिशीङोधिकरणादपि द्वितीयादर्शनादिति चेत् ?

उच्यते—

**भूमिं प्रयाति विहगो विजहाति महीरुहम् ।**
**न तु स्वमितिनिर्द्देशे भेद एव निषिध्यते ॥७५॥**

भवति तावत्सार्वजनीनः खगो भुवं गच्छति, न तु स्वमिति प्रयोगः । तत्र खगे भूकर्म्मकगमनकर्त्तृत्वं स्वकर्म्मकगमनकर्त्तृत्वाभावश्चोभयम् ।

अथवा खगकर्त्तृकगमने भूकर्म्मकत्वं स्वकर्म्मकत्वाभावश्चेति

बाधान्नोक्तप्रयोग इत्यत आह--**चैत्रश्चैत्रमि**ति । **परये**ति । संज्ञाद्वयप्रसक्तौ "आकडारादेका संज्ञा" इति सूत्रेणैकस्या एव संज्ञाया विधानात्तत्रापि परस्या एव "विप्रतिषेधे परं कार्य्यम्" इत्यनेन विधानादिति भावः । द्वितीयाप्रयोजिका कर्म्मसंज्ञैव, न तु धात्वर्थतावच्छेदकफलवत्त्वरूपं कर्म्मत्वमिति तत्संज्ञाया बाधे तत्र न द्वितीयाप्रसक्तिरिति बोध्यम् । कर्म्मसंज्ञैव द्वितीयाप्रयोजिका, न तु वास्तविकं कर्म्मत्वमित्यत्र मानमाह—**अधी**ति । तथा च कर्म्मत्वस्य तथात्वे "वैकुण्ठमधिशेते हरिः" इत्यत्राधिकरणवैकुण्ठपदाद् द्वितीया न स्यात्, वास्तविककर्म्मत्वस्य तत्र विरहात् । कर्म्मसंज्ञायास्तथात्वे च "अधिशीङ्स्थासा कर्म्म" इति सूत्रेणाधिकरणस्यापि तस्याधिशयत्यादेर्य्योगे कर्म्मसंज्ञाया विधानान्नानुपपत्तिरिति भावः ।

परत्वस्य द्वितीयार्थत्वं नोक्तप्रयोगापत्तिमात्रेण, किन्तु वक्ष्यमाणप्रयोगाणामसाधुत्वापत्तितोपीत्याशयेनाह—**उच्यत** इति । **सार्वजनीन** इत्यनेन तस्यानपलपनीयत्वं सूचितम् ।

**अथवे**त्यस्यानुसरणे बीजमाह—**तुकारेणे**ति । **न तु स्वमि**ति तुशब्दे-

तुकारेण तत्तदर्थ एवानूद्यते, न तु मैत्रो भुङ्क्ते चैत्रस्तु पचतीत्यत्रेव पूर्ववाक्यविधेयव्यावृत्त्यर्थस्तुकारः, पौनरुक्त्यप्रसङ्गात्। स्वपदसमभिव्याहृतद्वितीया यदि वृत्तित्वमात्रमभिधत्ते, तदा गम्यर्थफले द्वितीयान्तार्थस्य स्ववृत्तित्वस्य गमने वा स्वसमवेतसंयोगजनकत्वस्य कथं नञा निषेधो युज्यते। भेदस्य द्वितीयार्थतावादे तु विहङ्गवृत्तिभेदप्रतियोगितावच्छेदकत्वमेव गमने निषिध्यते। एवं रूपं न गच्छतीत्यत्र

नेत्यर्थः। **तत्तदर्थ** इति। द्वितीयाद्वयान्तार्थमात्रमित्यर्थः। समुदितवाक्यार्थानुवादकत्वं तुकारस्य दर्शयति—**चैत्रो भुङ्क्त** इति। अत्र प्रथमोक्तवाक्यार्थबोधापगमे धात्वर्थाख्यातार्थयोर्द्विधा भानेन पौनरुक्त्यमेव स्यात्। इदमुपलक्षणम्। कर्तृवाचकपदासमभिव्याहारस्थले तथाविधान्वयबोधस्यासम्भवाच्च तत्र कर्तृवाचकपदस्यावश्याध्याहार्य्यत्वोपगमेपि भूमेर्गमनं न महीरुहस्येत्यादौ षष्ठ्या अपि द्वितीयासमानार्थकतया तत्र तादृशबोधस्य सुतरामभावात्, अनुयोगिवाचकपदं विना नञोत्यन्ताभावबोधकत्वस्याव्युत्पन्नतया समवायेन गमनाभावस्य बोधयितुमशक्यत्वाच्च। कर्म्मत्वस्य द्वितीयाद्वयादेवोपस्थितेस्तस्य द्विधा भानेपि पौनरुक्त्यं न दोषावहमित्याशयः। **स्वपदं स्वमि**त्यत्र स्वपदम्। **युज्यत** इति। संयोगे स्ववृत्तित्वस्य तादृशसंयोगजनकत्वस्य च स्वव्यापारे सत्त्वात्तत्र तदभावस्य बाधादित्यर्थः। **निषिध्यत** इति। तथा च द्वितीयार्थस्य भेदस्य स्वप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वसंसर्गेण नञर्थेभावे तस्य स्वरूपेण गमनेन्वयादर्थतो विहङ्गवृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववद् गमनमित्यस्य बोधस्स चाबाधित एव। प्रतियोगितावच्छेदकत्वस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धिरिति तु न वाच्यम्, वृत्त्यनियामकस्यापि प्रतियोगितावच्छेदकसंसर्गताया अग्रे दर्शयिष्यमाणत्वात्। अथवा भेदप्रतियोगितावच्छेदकत्वमेव द्वितीयार्थः, तस्य स्वरूपेणैवाभावो बोध्य इति भावः। नञा सर्वत्र द्वितीयार्थभेदस्यैवाभावो न बोध्यते, किन्तु तात्पर्य्यव-

गम्यर्थसंयोगे रूपवृत्तित्वाभाव एव प्रतिपाद्यते ॥७५॥

ननु तथापि चैत्रो ग्रामं गच्छति न मनुष्यमित्यादिप्रयोगोऽनुपपन्नः, गमिफले मनुष्यसमवेतत्वस्य गमने मनुष्यान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य च निषेधायोगात्; कथं वा चैत्रो मनुष्यं गच्छतीत्यादिको न प्रयोग इति चेत् ?

उच्यते—

**फलान्वियिनि वृत्तित्वे भेदे व्यापारगामिनि ।**
**अन्वेति व्यक्तिरेकैव तत्सामान्यं निषिध्यते ॥७६॥**

या प्रातिपदिकार्थव्यक्तिर्द्वितीयार्थवृत्तित्वेन्वेति, सैव भेदे,

शेन तदन्यतरस्यापीति दर्शयति—**एवमि**ति । तत्रापि भेदस्यैवाभावेन्वये रूपवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य गमने बाधात् संयोगे रूपवृत्तित्वस्य बाधाच्च तस्याप्रामाण्यप्रसङ्ग इति रूपस्यैवाधेयत्वसंसर्गावच्छिन्नप्रतियोगितासंसर्गेणाभावेन्वयोभ्युपेय इति भावः ॥७५॥

यत्र फलव्यापारयोरुभयोरेव नञर्थाभावान्वयायोग्यत्वं तत्र कथमन्वयबोध इत्याशङ्कते—**नन्वित्या**दिना । **गमिफले** गम्धात्वर्थतावच्छेदकसंयोगे । निषेधप्रत्ययस्य बाधितत्वे विधिप्रत्ययस्यावश्यकत्वादाह—**कथं वे**ति ।

यद्व्यक्तिनिरूपितवृत्तित्वं संयोगादिफलेषु प्रतीयते, तद्व्यक्तिनिष्ठभेदप्रतियोगितावच्छेदकत्वमेव व्यापारे प्रतीयत इति नियममाश्रित्योत्तरयति—**उच्यत** इत्यादिना । **सैव भेदे** इति । तथा च स्वनिरूपितविशेषणतावद्वृत्तित्वसमानाधिकरणवृत्तित्वसंसर्गेणैव भेदे मनुष्यपदार्थस्यान्वयोभ्युपेतव्य इत्यर्थः । मनुष्यान्तरनिरूपितवृत्तित्वस्य च तन्मनुष्यनिरूपितविशेषणतावत्संयोगनिष्ठाधेयत्वसामानाधिकरण्याभावादित्याशयः । नञ्समभिव्याहारे एकव्यक्तिनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य तावतापि निषेधासम्भवात्तदर्थं कारिकोक्तेन **तत्सामान्यन्निषिध्यत** इत्यनेनैव न मनुष्यं गच्छतीत्यस्यो-

वृत्तित्वन्तु फलान्वयिभेदप्रतियोगितावच्छेदकतया व्यापारान्वयीति चैत्रो मनुष्यं गच्छतीति न प्रयोगः, वृत्तित्वान्वितमनुष्यव्यक्तेर्भेदा-न्वयायोग्यत्वात् । चैत्रो न मनुष्यं गच्छतीत्यत्र तु तत्तन्मनुष्यवृत्ति-संयोगजनकत्वविशिष्टं यावत्तत्तन्मनुष्यनिष्ठभेदप्रतियोगितावच्छेदकत्वं तावदभावकूट एव नञा प्रतिपाद्यते ।

भवतु वा स्वसमवेतसंयोगजनकत्वस्ववृत्तिभेदप्रतियोगिता-वच्छेदकत्वोभयसंसर्गावच्छिन्नप्रतियोगिताको मनुष्यसामान्याभाव एव

पपत्तिरित्याह—**चैत्रो ने**ति । **नञा प्रतिपाद्यत** इति । तथा च चैत्रात्मक-मनुष्यवृत्तिसंयोगजनकत्वविशिष्टस्य चैत्रात्मकमनुष्यवृत्तिभेदप्रतियोगिता-वच्छेदकत्वस्य चैत्रकर्म्मकान्यदीयगमने प्रसिद्धस्य चैत्रकर्तृकगमनेभावस्य निराबाधतया नोक्तप्रयोगानुपपत्तिः । मनुष्यान्तरकर्म्मकचैत्रकर्तृकगमने यत्किञ्चिन्मनुष्यवृत्तिसंयोगजनकत्वविशिष्टस्य यत्किञ्चिन्मनुष्यवृत्तिभेदप्रति-योगितावच्छेदकत्वस्याभावसत्त्वेपि तादृशतदभावकूटस्य बाधाच्चैत्रो मनुष्यं न गच्छतीति प्रयोगवारणाय कूटवत्त्वानुधावनम् ।

तत्र तावदवच्छेदकत्वस्य द्वितीयादिनानुपस्थित्या तदभावग्रहासम्भव-स्तावदभावकूटस्यासर्वज्ञदुर्ज्ञेयत्वञ्चेत्याह—**भवतु वे**ति । तथा च मनुष्यान्तर-वृत्तिभेदप्रतियोगितावच्छेदकत्वस्य तन्मनुष्यप्रतियोगिकत्वविरहेण तत्संसर्ग-त्वासम्भवान्नोक्तानुपपत्तिरिति भावः । अत्र तादृशोभयस्य वृत्त्यनियामकतया कथमभावप्रतियोगितावच्छेदकत्वमिति न वाच्यम्, वृत्त्यनियामकसंसर्गस्य प्रतियोगितानवच्छेदकत्वमतेपि प्रकारविधया तदवच्छेदकतावगाह्यभावसम-नियतस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तदुपगन्तृभिरनुपगमस्य वक्तुमशक्यत्वात् । अथवा येन सम्बन्धेन प्रतियोगिविशिष्टबुद्धिर्नानुभवसिद्धा तस्यैव वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वम्, यथा—गगनादिसंयोगस्य, तेन सम्बन्धेन गगनविशिष्टबुद्धेरनानुभविकत्वात् । प्रकृते

**गमने नञा बोध्यः । द्वितीया तु संयोगेन घटो नास्तीत्यादौ संयोगादिपदमिव प्रतियोगितावच्छेदकसंसर्गानुवादकतया साधुः ।**

दर्शितोभयसम्बन्धस्य न तथात्वम्, गमने तस्य मनुष्यात्मकप्रतियोगिविशिष्ट-बुद्धिजनकत्वादिति तस्य प्रतियोगितावच्छेदकत्वस्य निराबाधत्वात्। ननु तर्हि द्वितीयायाः कोर्थो वृत्तित्वस्य संसर्गमध्यपातिनो द्विधा भानस्यानौचित्यादित्यत आह—**द्वितीया त्विति**। तथा च तादृशसम्बन्धयोराकाङ्क्षा-प्रयोज्यत्वलाभायैव द्वितीयाप्रयोग इत्याशयः। एवञ्चाधिकरणस्य द्वितीयार्थत्वेप्युक्तरीत्योभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्योक्तस्थलेन्वयबोधसम्भवेपि वक्ष्यमाणगौरवेणैव न तस्य तथात्वमिति बोध्यम्।

न चैवं सर्वत्र द्वितीयायाः साधुत्वमात्रप्रयोजनकत्वमेवास्तु, उक्तोभय-सम्बन्धेन प्रातिपदिकार्थप्रकारकबुद्धौ द्वितीयान्तप्रातिपदिकजन्यायाः गम्यादि-धातुजन्यायाश्चोपस्थितेः कारणत्वादेव ग्रामो ग्रामादित्यादौ घटपदेन लक्षणया व्यापारस्योपस्थितावपि ग्रामं घट इत्यादौ च न तथाविधान्वयबोधः। एवमन्यत्रापि स्ववृत्तिफलसम्बन्धित्वस्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभय-सम्बन्धेन प्रातिपदिकार्थप्रकारकबुद्धौ द्वितीयान्तपदजन्योपस्थितिः सामान्यत एव कारणम्। तेन स्पन्दिजन्यव्यापारोपस्थितेस्तत्राहेतुत्वाद् ग्रामं स्पन्दत इत्यादौ न तथान्वयबोधः। दर्शितोभयसंसर्गस्य कर्म्मत्वरूपत्वेन तत्संसर्गकबुद्धौ "देवाकर्णय संग्रामे..." इत्यादौ व्यभिचारस्तु नैव सम्भाव्यः, तत्र वाक्यार्थस्य तेन संसर्गेणान्वयात्तस्य प्रातिपदिकार्थत्वविरहात्। पाचकमानय, दाक्षि भोजय, स्वेष्टदेवं पूजयेत्यादौ पाचकादीनां वाक्यत्वेपि "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसंज्ञावत्त्वान्न तेष्वपि व्यभिचारः। खगो भुवं गच्छति न तु स्वमित्यादौ च दर्शितोभयात्मककर्म्मत्वसंसर्गस्य वृत्त्यनियामकत्वेपि प्रतियोगितावच्छेदकतायास्त्वयैव स्वहस्तिततया तादृशसंसर्गावच्छिन्नप्रतियोगिताकस्य स्वाभावस्यैव प्रकारतयान्वयबोधसम्भव इति वाच्यम्, वृत्त्यनियामक-सम्बन्धस्य प्रतियोगितावच्छेदकत्वेपि **चैत्रो ग्रामं गच्छति न मनुष्यमित्यादौ**

क्वचिद् द्वितीयायाः साधुत्वार्थकत्वेपि सर्वत्र तथात्वे मानाभावात् । न च कर्म्मत्वार्थकत्वे मानाभाव एव निरर्थकत्वे मानमिति वाच्यम्, द्वितीया न कर्म्मत्ववाचिकेति निश्चयेपि ग्रामं गच्छतीत्यत्र कर्म्मतासंसर्गेण ग्रामस्य गमनेन्वयप्रसङ्गात् । एवं ग्रामीयं न कर्म्मत्वं गमनं न ग्रामकर्म्मताकमिति बाधयोरपि (सत्योः तत्रैव तथान्वयप्रसङ्गात्,) तत्संसर्गकज्ञाने तत्संसर्गाभाववत्तानिश्चस्याविरोधित्वात् । एवं कर्म्म गच्छतीत्यत्रापि कर्म्मणां कर्म्मत्वसंसर्गेण गमनेन्वयप्रसङ्गात् । तस्याः सार्थकत्वे तु न तथा प्रयोगः, कर्म्मेत्यत्र द्वितीयाया निराकाङ्क्षत्वात् । शाब्दिकमते कर्म्मणो द्वितीयार्थत्वात् कर्म्म कर्म्मेत्यभेदान्वयबोधस्य घटो घट इत्यादाविवासम्भवात् । तार्किकमते चाधेयत्वस्य द्वितीयार्थत्वेन निरूपकतया तद्वतः कर्म्मपदार्थत्वेन कर्म्मेतिद्वितीयान्तप्रयोगे द्वितीयार्थाधेयत्वस्योद्देश्यत्वेनोक्तस्य कर्म्मपदार्थस्य विधेयतया अभेदातिरिक्तसम्बन्धेनोद्देश्यविधेयभावेन प्रकृतिप्रत्ययार्थयोरन्वये प्रकृत्यर्थतावच्छेदकप्रत्ययार्थयोर्भेदस्य तन्त्रतयासम्भवात् । अधिकरणाश्रयशब्दयोरपि निरूपकतयाधेयतावदर्थकत्वे निरुक्तरीत्यैवाधिकरणमाश्रयं वा गच्छतीति प्रयोगवारणम् । तयोरधिकरणतावदर्थकत्वे तु आश्रयं श्रयन्तीतिवत्तयोरपि साधुत्वमेवेति बोध्यम् ।

न च यन्मते वृत्त्यनियामकसम्बन्धस्य नाभावप्रतियोगितावच्छेदकत्वं तन्मते का गतिरिति वाच्यम्, तन्मते द्वितीयार्थभेदस्य स्वसमानाधिकरणफलसम्बन्धित्वप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन व्यापार एवान्वयः । तथा च खगो भुवं गच्छति नाभावमित्यादौ स्ववृत्तिभेदस्य स्वसमानाधिकरणसंयोगजनकत्वसम्बन्धेनावच्छिन्नया विशेषणतया खगकर्तृके गम्यर्थव्यापारे सत्त्वेपि प्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नया विशेषणतयासत्त्वात् । तादृशोभयसंसर्गावच्छिन्नविशेषणतासंसर्गावच्छिन्नप्रतियोगिताकस्य स्ववृत्तिभेदाभावस्य गम्यर्थव्यापारे निराबाधत्वात्तत्प्रतीत्युपपत्तिः । चैत्रो ग्रामं गच्छति न मनुष्यमित्यत्र चैत्रात्मकमनुष्यवृत्तिभेदस्य प्रतियोगितावच्छेदकत्वसंसर्गेणावच्छिन्नया मनुष्यान्तरवर्त्तिभेदस्य तादृशसंयोगजनकत्वसंसर्गेणावच्छिन्नया विशेषणतया चैत्रकर्तृके व्यापारेसत्त्वात्तदुभयसम्बन्धावच्छिन्न-

विशेषणतासम्बन्धावच्छिन्नप्रतियोगिताकस्य मनुष्यवृत्तिभेदसामान्याभावस्य तथाविधगम्यर्थव्यापारे निराबाधत्वात्तत्रापि तत्प्रतीत्युपपत्तिः । भूवृत्तिभेदस्य ग्रामवृत्तिभेदस्य च दर्शितविशेषणतया खगकर्तृके चैत्रकर्तृके च गमने सत्त्वात्तत्प्रतीत्युपपत्तिः । विशेषणता तु तत्तदधिकरणस्वरूपातिरिक्ता वास्तु, उभयथैव तस्या वृत्तिनियामकत्वमेव ।

यत्त्वत्र शाब्दिकैर्ग्रामं गच्छतीत्यादौ भेदसामानाधिकरण्यरूपे परसमवेतत्वे द्वितीयाया लक्षणा, न तु भेदे शक्तिर्द्वितीयान्तार्थविशेषितं भेदसामानाधिकरण्यं व्यापारे फले वान्वेतीत्युक्तम् । तन्न विचारसहम्, द्वितीयान्तार्थस्य प्रतियोगितया भेदे तत्सामानाधिकरण्यस्य च व्यापारेऽन्वये मल्लो मल्लं गच्छतीत्यादावभावेऽन्वयितावच्छेदकधर्म्ममात्रावच्छिन्नप्रतियोगितायाः संसर्गत्वेन मल्लत्वावच्छिन्नप्रतियोगितयैवान्वयस्य वाच्यतया तादृशमल्लभेदस्य तद्वृत्तिव्यापारे सामानाधिकरण्यासम्भवात् । व्यापारवतस्ताद्रूप्येण पदानुपस्थितत्वात्तस्य प्रतियोगितया भेदे तत्सामानाधिकरण्यं फलेऽन्वेतीत्यस्यासम्भवात् । तेषाम्मते आश्रयत्वेन तिङोपस्थापितस्य तस्य धात्वर्थे विशेषणतयान्वितत्वाद् द्वितीयालक्ष्यार्थप्रविष्टभेदे विशेषणत्वासम्भवात् । एकत्र विशेषणत्वेनोपस्थितस्याप्यन्यत्र तथान्वयोपगमे तु पश्य मृगो धावतीत्यत्रापि मृगे विशेषणतयान्वितस्य धावनस्य दर्शनेऽन्वयप्रसङ्गात्, भेदस्य लक्ष्यार्थैकदेशतया तत्र पदार्थान्तरान्वयस्य सर्वमतेऽव्युत्पन्नत्वाच्च । युगपद्वृत्तिद्वयविरोधाच्चाश्रयस्य वाच्यत्वं भेदस्य लक्ष्यत्वं तत्र प्रकृत्यर्थस्य तादात्म्येनाश्रये, आधेयतया भेदे, आश्रयस्याधेयतया फले भेदस्य प्रतियोगितावच्छेदकतया व्यापारेऽन्वय इति पक्षस्यासम्भवदुक्तिकत्वात् ।

यदपि नव्यशाब्दिकैर्भेदे द्वितीयाया न शक्तिः, किन्तु द्वितीयार्थाधिकरणविशेषितफलप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति द्वितीयान्तार्थवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकव्यापारोपस्थितेर्विशेष्यतया कारणत्वादेव चैत्रश्चैत्रं गच्छतीत्यत्र न शाब्दबोधः, तादृशव्यापारोपस्थितिविरहादित्युक्तम् । तदप्यसत्, द्वितीयान्तं विनापि गच्छतीत्यादौ फलप्रकारतानिरूपितव्यापार-

विशेष्यताकान्वयबोधस्योदयात्तत्र क्लृप्तसामग्र्येव द्वितीयान्तसमभिव्याहारेऽपि शाब्दबोधस्य सम्भवादुपदर्शितकार्य्यकारणभावे मानाभावात्। खगो भुवं गच्छति न तु स्वमित्यत्र स्वकर्म्मकत्वाभावस्य भेदं विना प्रत्येतुमशक्यत्वात्, द्वितीयान्तसमभिव्याहारात् प्रकृत्यर्थविशेषितद्वितीयार्थस्य विशेषणतया फलेऽन्वयसम्भवाद्दर्शितकार्य्यतावच्छेदकस्यार्थसमाजग्रस्तत्वाच्च।

यदि च पचतीत्यादौ भेदप्रतीतिर्न्नञ्समभिव्याहारेऽपि न भवति, गम्यादौ तूक्तरीत्या भेदप्रतीतिरावश्यकी। तत्र भेदस्य द्वितीयार्थत्वं धात्वर्थत्वं वेत्यत्र विनिगमनाविरहस्तस्य धात्वर्थत्वेऽपि द्वितीयार्थाधेयत्वस्यान्वयः। तस्य च प्रतियोगितावच्छेदकतया व्यापारेऽन्वय इत्यस्यापि सुवचत्वात्। भेदस्य फलविधया गम्यर्थत्वेऽपि भेदसंयोगोभयवत एव गमिकर्म्मत्वाद् ग्रामत्वे भेदमात्रस्य सत्त्वेऽपि ग्रामत्वं गच्छतीति न प्रयोगः। चैत्रो ग्रामं गच्छति न मनुष्यमित्यत्र च संयोगे चैत्रात्मकमनुष्यस्य भेदे चैत्रान्यमनुष्यस्य चाधेयतायाः सत्त्वेन तदभावप्रतीतेरसम्भवेऽपि द्वितीयार्थाधेयत्वस्य संयोगसमानाधिकरणविशेषणतासंसर्गावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेन भेदेऽन्वयोपगमान्मनुष्यनिरूपिताधेयत्वस्य तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तत्र बोधे योग्यतासत्त्वादेव न तस्यानुपपत्तिः। किञ्च भेदस्य द्वितीयार्थत्वोपगमे द्वितीयान्तपदघटितशाब्दसामग्र्यां भेदोपस्थितेः सर्वत्र प्रवेशेन भिन्नविषयकप्रत्यक्षादिकं प्रत्युक्तशाब्दसामग्र्याः प्रतिबन्धकत्वे गौरवम्, विनिगमकाभावादानन्त्यञ्च स्यात्। संयोगादिव्यासज्यवृत्तिफलकगम्यादिधातूनां भेदार्थकत्वे तु तद्घटितशाब्दसामग्र्यामेव भेदोपस्थितेः प्रवेशाल्लाघवं स्यादिति विभाव्यते, तदा भेदो न द्वितीयाया न वा धातोरर्थः, किन्तु गम्यादिफले संयोगे त्यज्यादिफले विभागे च द्वितीयार्थाधेयत्वस्य व्यापारवद्भेदसामानाधिकरण्यविशिष्टसमवायावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेनान्वयोऽभ्युपेतव्यः। तत एव चैत्रश्चैत्रं गच्छतीति प्रयोगवारणात्, चैत्राधेयत्वस्य दर्शितसंसर्गेण संयोगेऽयोग्यत्वात्। चैत्रो ग्रामं गच्छति न तु स्वं न वा मनुष्यमित्यादौ स्वाधेयत्वस्य मनुष्याधेयत्वस्य च दर्शितसम्बन्धावच्छिन्न-

**एवमेव चैत्रस्यैवायं भ्रातेत्यादौ चैत्रान्यनिरूपितानि यावन्ति**

प्रतियोगिताकोभावो नञा बोध्यतेतां निषेधप्रतीतिरुपपद्यते । एवमेव चैत्रश्चैत्रं त्यजति, चैत्रो ग्रामं त्यजति न तु स्वं न वा मनुष्यमित्यत्र शाब्दबोधस्यापत्तिरनुपपत्तिर्वेति विभावनीयम् ।

पदानुपस्थितस्यापि यावदभावकूटस्यान्वयबोधो वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वं वान्येषामप्यावश्यकमेवेति दर्शयति—**एवमेवे**ति। अत्रैवकारार्थोन्ययोगव्यवच्छेदः । एवकारस्थलीयव्युत्पत्तेर्वैलक्षण्येन तदेकदेशेन्यत्वे षष्ठीप्रकृत्यर्थस्य चैत्रस्य प्रतियोगितया सम्बन्धात्मके योगे च भ्रातृपदार्थैकदेशभ्रातृत्वस्य षष्ठ्यर्थनिरूपितत्वान्वितस्य, तस्य चात्यन्ताभावात्मके व्यवच्छेदे, तस्येदंपदार्थे चैत्रपदार्थस्य निरूपितत्वान्वितस्य भ्रातृत्वेन्वयात्तस्यापीदंपदार्थेन्वयाच्चैत्रान्यनिरूपितभ्रातृत्वसम्बन्धाभाववान् चैत्रनिरूपितभ्रातृत्वसम्बन्धवाँश्चायमित्यन्वयबोधः पर्य्यवसितः । स च चैत्रमैत्रोभयभ्रातृकेपि देवदत्ते चैत्रान्ययज्ञदत्तनिरूपितभ्रातृत्वसम्बन्धाभावस्य चैत्रनिरूपितभ्रातृत्वसम्बन्धस्य च सत्त्वात्तत्राप्यबाधितविषयक एवेति तत्तात्पर्य्येणापि चैत्रस्यैवायं भ्रातेति वाक्यस्य प्रामाण्यप्रसङ्गो निर्वक्ष्यमाणभ्रातृत्वस्यानुगतत्वाभावेन चैत्रान्यनिरूपिततत्सामान्याभावस्य बोधयितुमशक्यत्वञ्चेत्यतो भ्रातृत्वे यावत्त्वं निवेश्य तावदभावकूट एव तत्रापि बोधयितव्य इत्याह—**यावन्ती**ति । न च षष्ठ्यर्थो वैशिष्ट्यात्मकस्सम्बन्धः, स चात्राकाङ्क्षावशाद् वक्ष्यमाणोभयसम्बन्धावच्छिन्न एव । तथा चान्यत्वान्वितचैत्रस्य तत्रान्वयात्तस्य चैवकारार्थे व्यवच्छेदेन्वयात्तस्यैव भ्रातृपदार्थैकदेशे शरीरवृत्तिजातावन्वयाच्चैत्रान्यवैशिष्ट्याभाववज्जातिमत्त्वस्य देवदत्ते बाधात्तच्छरीरवृत्तिजातेश्च चैत्रान्यमैत्रविशिष्टत्वादेव न तत्र तादृशप्रयोग इति वाच्यम्, तथा सत्युभयात्मकवृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकताया आवश्यकतया ग्रन्थोक्तरीत्यामेव पर्य्यवसानात्, भ्रातृपदाच्छरीरत्वावान्तरजात्यवच्छिन्नमात्रस्य लक्षणां विना बोधासम्भवाच्च । उक्तस्थल इवात्रापि यावत्त्वस्य पदानुपस्थितत्वादभावकूटस्यासर्वज्ञदुर्ज्ञेयत्वाच्चाह—

**भ्रातृत्वानि तेषाम्, भ्रातृत्वसंसर्गेण चैत्रान्यसामान्यस्य वा व्यवच्छेद एवकारप्रतिपाद्यः । भ्रातृत्वन्तु स्ववृत्तिभेदप्रतियोगितावच्छेदिका स्वजनकपुरुषप्रयोज्यतावच्छेदिका च या शरीरत्वावान्तरजातिस्तद्वत्त्वमिति बौद्धाधिकारविवरणे प्रपञ्चितमस्माभिः । ७६ ।**

**भ्रातृत्वसंसर्गेणे**ति । **चैत्रान्यसामान्यस्ये**ति । चैत्रान्यत्वावच्छिन्नस्येत्यर्थः । तथा च तादृशे देवदत्ते चैत्रान्यस्य मैत्रस्य भ्रातृत्वसंसर्गेण सत्त्वात्तत्सम्बन्धावच्छिन्नचैत्रान्यत्वावच्छिन्नप्रतियोगिताकाभावस्य तत्र सत्त्वासम्भवान्नोक्तप्रयोग इत्यर्थः । **भ्रातृत्वन्त्वि**ति । अत्र विशेषणमात्रस्य शरीरत्वव्याप्यायामुदासीनपुरुषवृत्तिजातौ विशेष्यमात्रस्य स्ववृत्तिजातौ सत्त्वादुभयोपादानम् । तत्र स्वजनकत्वं स्ववृत्त्यसाधारणधर्म्मावच्छिन्नजन्यतानिरूपितजनकतावत्त्वम् । तेन कार्य्यमात्रजनकस्येश्वरस्य व्युदासः । वैमात्रेयस्य भ्रातृपदमुख्यार्थत्वाभावात्पुरुषपदं स्त्रिया अप्युपलक्षकम् । तेन स्वजनकमातृपित्रुभयप्रयोज्यत्वमेव तद्घटकं बोध्यम् । प्रयोज्यत्वं जन्यत्वमेव, मातापित्रोस्साक्षादेव जनकत्वात् । जातौ शरीरत्वावान्तरत्वानुपादाने कुलालस्य घटशरावाद्यनेकजनकत्वाद् घटस्य भ्राता शराव इत्यादिव्यवहारापत्तिरतस्तदुपात्तम् । तत्र च शरीरत्वव्याप्यत्वं चैत्रत्वादिजातीनां परिचायकमात्रम् । लक्षणे तु शरीरवृत्तित्वमात्रं निवेश्यम्, द्रव्यत्वादीनां शरीरत्वव्यापकानां चैत्रादिजनकजन्यत्वावच्छेदकत्वाभावादेव व्युदासात् । न चैवं नैषधीयचरिते "तस्मिन् खण्डनखण्डितोपि सहजे" इत्यत्र भ्रातृपदसमानार्थकसहजपदप्रयोगोनुपपन्नः, नैषधीयचरितवृत्तिजातेः शरीरवृत्तित्वविरहादिति वाच्यम्, तत्र सहजपदस्यैकपुरुषजन्यत्वमात्रावच्छिन्ने लाक्षणिकत्वात् । एवमन्यत्राप्यचेतने भ्रातृपदप्रयोगो निर्वाह्यः ।

एतेन चैत्रान्यभ्रातृत्वस्य व्यवच्छेदे मैत्रे बोधनीये चैत्रान्यभ्रातृत्वञ्च चैत्रान्यजनकजन्यत्वम्, चैत्रान्यस्य स्वस्यैव यज्जनकं तन्निरूपितजन्यत्वस्य स्वस्मिन् सत्त्वात्तद्व्यवच्छेदस्य बाधात् । नापि चैत्रान्यभिन्नत्वे सति तज्जनकजन्यत्वम्, चैत्रान्ययत्किञ्चित्प्रतियोगिकभेदस्यापि स्वस्मिन् सत्त्वात् ।

चैत्रान्यत्वावच्छिन्नभेदविशिष्टस्य तज्जनकजन्यत्वस्य चैत्र एव सत्त्वेन चैत्रमैत्रो-भयभ्रातृकेपि चैत्रस्यैवायं भ्रातेत्यादिप्रयोगप्रसङ्गात् । चैत्रान्यतत्तद्व्यक्तीनां प्रातिस्विकरूपेण भेदघटितस्य चैत्रान्यभ्रातृकत्वस्य युगसहस्रेणापि दुर्ज्ञेयत्वात् । किन्तु तद्भेदावच्छिन्नस्वरूपसम्बन्धेन तज्जनकजन्यतावत्त्वं तद्भ्रातृत्वम्, चैत्रभेद एव च चैत्रजनकजन्यत्वस्यैव सम्बन्धो नान्यस्येति वक्तव्यम् । चैत्रे चैत्रभेदावच्छिन्नस्वरूपसम्बन्धेन चैत्रजनकजन्यत्वस्यासत्त्वेन न तत्र चैत्र-भ्रातृत्वप्रसङ्गः । तद्भेदश्चैककालीनद्वयावृत्तिधर्म्मावच्छिन्नप्रतियोगिताको बोध्यो न त्वेकमात्रवृत्तिधर्म्मावच्छिन्नप्रतियोगिताकः । तेन चैत्रीयशिशुशरीरभिन्नत्वेपि तदीययुवशरीरस्य न तद्भ्रातृत्वप्रसङ्गः, न वोभयभेदमादाय तथा प्रसङ्ग इति निरस्तम् । चैत्रभेदावच्छिन्नस्वरूपसम्बन्धश्चैत्रजनकजन्यत्वस्यैव सम्बन्धो नान्यस्येति न नियमः, किन्तु यस्य स्वरूपसम्बन्धो भेदोपि तस्यैवेत्येव नियमः ।

यत्तु चैत्रान्यावधिकपृथक्त्वाश्रयत्वे सति चैत्रान्यजनकजन्यत्वमेव चैत्रान्यभ्रातृत्वम् । चैत्रीयशिशुशरीरस्य तदीययुवशरीरावधिकपृथक्त्वाश्रयत्वेपि न तस्य तद्भ्रातृत्वं तज्जनकाजन्यत्वात्, प्रथमशरीरस्यैव तज्जन्यत्वात् । एवञ्च युवशरीरे भ्रातृत्वव्यवहारस्तदीयशिशुशरीरवृत्तिचैत्रत्वादिजातिनिबन्धन इति । तदसत्, शुक्रशोणितसन्निपातादिपरम्पराद्वारा प्रथमशरीरवद्युवशरीरेपि पितुर्जनकत्वात्, अन्यथा प्रथमशरीरेपि पितुर्जनकत्वन्न स्यात् । न हि रेतस्सेकेनाहत्यैव प्रथमशरीरमुत्पाद्यते । न च तदवधिकपृथक्त्वे तज्जनकजन्यत्वे च प्रातिस्विकरूपेण भ्रातृत्वप्रतियोगिनां प्रवेशान्न दोष इति वाच्यम्, तथा सत्यनन्तशक्त्या दुर्ज्ञेयत्वापत्तेः ।

केचित्तु स्वाश्रयसमानाधिकरणवृत्त्येककालीनद्वयावृत्तिधर्म्मावच्छिन्न-चैत्रान्यवृत्तिप्रतियोगिताकान्योन्याभावावच्छिन्नस्वरूपसम्बन्धेन चैत्रान्यजनक-जन्यत्वस्य व्यवच्छेदो मैत्रे भासते । सामानाधिकरण्यञ्च फलोपधानाख्यजन्य-तासम्बन्धेन बोध्यमिति प्राहुः ।

अपरे तु अवच्छिन्नमनोनिष्ठान्योन्याभावप्रतियोगितावच्छेदके जनकजन्ये एव भ्रातृपदस्य शक्तिरेकैव, न तु चैत्रमैत्राद्यन्तर्भावेणानन्तशक्तिः। अवच्छिन्नत्वे जनकत्वे च समभिव्याहृतपदार्थस्य भ्रातृत्वप्रतियोगिनश्चैत्रादेरन्वयः। मैत्रस्य भ्राता मैत्र इत्यादिप्रयोगवारणायावच्छेदकान्तस्य शक्तावन्तर्भावः। चैत्रस्य भ्राता मैत्र इत्यत्र चैत्रशरीरावच्छिन्नमनोनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्य चैत्रे मैत्रशरीरजनकजन्यत्वस्य मैत्रे सत्त्वादिति चेन्न, यत्र विशेष्यविधया भ्रातृपदार्थान्वयस्तत्रैव तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वबोधो नान्यत्रेति व्युत्पत्तेः। मैत्रस्य भ्राता चैत्र इत्यत्र तु मैत्रशरीरावच्छिन्नमनोनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वे सति मैत्रजनकजन्यश्चैत्र इत्येवान्वयबोधः। इत्थञ्च मैत्रस्य भ्राता मैत्र इत्यादिप्रयोगो न सम्भवति, अत्र हि भ्रातृपदार्थस्य विशेष्यविधयान्वयो भविष्यति मैत्रे, स च न मैत्रशरीरावच्छिन्नमनोनिष्ठान्योन्याभावप्रतियोगितावच्छेदकः, मैत्रशरीरावच्छिन्ने मनसि मैत्रावच्छिन्नभेदासत्त्वात्। न चैवमपि कायव्यूहस्थलेयमस्य भ्रातेति प्रयोगापत्तिरिति वाच्यम्, इष्टापत्तेः, एकस्यैव मनसो नानाशरीरावच्छिन्नत्वाभ्युपगमेनोक्तापत्त्यभावाच्च।

यत्तु विशेष्यविधया यत्र जनकजन्यरूपभ्रातृपदार्थान्वयस्तत्र विशेषणताविशेषसम्बन्धेन भ्रातृपदार्थप्रतियोगितावच्छेदकधर्म्मावच्छिन्नप्रतियोगिताकान्योन्याभावस्य स्वरूपतः सत्त्वमपेक्षितमिति न मैत्रस्य भ्राता मैत्र इति प्रयोगापत्तिः। इत्थञ्च शक्तावप्यवच्छेदकान्तन्न निवेशनीयमिति। तदसत्, तथा सति मैत्र एव मैत्रान्यत्वभ्रान्त्या मैत्रस्य भ्रातायमिति प्रयोगानापत्तेः, तत्र भ्रातृपदार्थविशेष्ये मैत्रे स्वरूपतो मैत्रान्योन्याभावस्यासत्त्वात्। एवञ्च चैत्रस्य भ्राता मैत्र इत्यादौ चैत्रावच्छिन्नमनोनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वे सति चैत्रजनकजन्यतावान्मैत्र इत्यन्वयबोधः। चैत्रस्यैवायं भ्राता मैत्र इत्यत्र च चैत्रान्यशरीरावच्छिन्नमनोनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वविशिष्टचैत्रान्यजनकजन्यत्वाभाववानित्याकारकोन्वयबोधः। न च चैत्रमात्रभ्रातृकेपि चैत्रस्यैवायं भ्रातेत्यस्याप्रामाण्यापत्तिः, चैत्रान्यदेवदत्तशरीरावच्छिन्नमनोनिष्ठान्योन्याभाव-

स्यादेतत्, अधिकरणत्वं निरूपकतयाधेयत्वं वा स्वरूपेण फलान्वयि न द्वितीयार्थः, कालं पचतीति प्रयोगप्रसङ्गात्, पचिफलस्य कालनिष्ठाधिकरणतानिरूपकत्वात्। तत्तद्धातुसमभिव्याहृतद्वितीयायास्तत्तत्संसर्गावच्छिन्नाधिकरणत्ववाचकत्वे शक्त्यानन्त्यप्रसङ्गात्। तद्वरमधिकरणं द्वितीयार्थः, तस्य तद्धातूपात्ते फले तेन संसर्गेणान्वय इति व्युत्पत्तिवैचित्र्यमिति चेत्?

व्यवच्छेदो मैत्रादौ सुघट इति न काप्यनुपपत्तिरिति प्राहुः। ७६।

उक्तं तार्किकमतमाक्षिपति—**स्यादेत**दित्यादिना। **निरूपकतये**ति **फलान्वयी**त्यनेनान्वितम्। निरूपकत्वस्य वृत्त्यनियामकतया नञ्समभिव्याहारे तण्डुलं न पचति जलं न पचतीत्यादौ तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य बोधयितुमशक्यत्वा**दाधेयत्वस्य** तथात्वमुक्तम्। वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वविरहे प्रमाणाभाव इति तु न वाच्यम्, यतो वृत्त्यनियामकसम्बन्धस्य प्रतियोगिमत्ताबुद्धिजनकत्वविरहो गगनादिसंयोगस्य मूर्त्तेषु सत्त्वेपि मूर्त्तं गगनादिमद् गगनादिकं वा मूर्त्तवदिति प्रतीतेरनुदयात्तादृशसम्बन्धस्य व्यधिकरणसम्बन्धतुल्यत्वाद्यथा तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वम्, तथा वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यापि विरोधिविरहेण केवलान्वयित्वं स्यादिति तत्सम्बन्धस्य प्रतियोगितानवच्छेदकत्वमित्येव वक्तुमुचितम्, अन्यथा तण्डुलं पचत्यपि केवलान्वयितादृशाभावस्य पाके सत्त्वात्तत्कर्त्तरि तण्डुलं न पचतीतिप्रयोगापत्तेरित्यधिकरणत्वं विहायाधेयत्वस्यैव द्वितीयार्थतायास्तार्किकसिद्धान्तविषयत्वम्, तथा सति स्वरूपेणैव तदभावस्य नञ्समभिव्याहारे बोधनान्नानुपपत्तिरित्याशयेन तस्यापि द्वितीयार्थत्वे दोषप्रसङ्गसूचना**याधेयत्वं वे**त्युक्तम्। वस्तुतस्तु तस्यापि तथात्वे वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे द्रव्यं गच्छति नाभावमित्यादावनुपपत्तिः, तदुपपत्तिप्रकारश्च व्युत्पत्तिवादे गदाधरभट्टाचार्य्यैर्विस्तरेण प्रतिपादित इति तत्रैवानुसन्धेयः। **तद्वरमि**ति। अग्रस्य निरसनीयतयेदानीम्मनाक् प्रियमित्यर्थः। आश्रयस्य द्वितीयार्थत्वन्निरस्यति—

**निमित्तमन्तरा शब्दाप्रवृत्तेस्सर्वकर्म्मसु ।**
**निमित्तैक्यासम्भवाच्च न द्वितीयाश्रयार्थिका ॥७७॥**

द्वितीयादिप्रत्ययानां विश्वस्मिन्नेवानवच्छिन्ना शक्तिः, तया स्वरूपेण स्मारिते वस्तुनि तादात्म्येन प्रातिपदिकार्थान्वय इति कल्पो न सम्भवति, स्वरूपतस्तत्तत्पदार्थविषयकबुद्धित्वावच्छेदेन द्वितीया-पदजन्यत्वावगाहिनो नित्यसङ्केतस्य सम्भवेपि लौकिकैस्तद्ग्रहणा-सम्भवात् [1]स्वरूपतो विश्वस्यानुपस्थितेः । नापि विश्वत्वमुपलक्षणीकृत्य सङ्केतग्रहः, तादृशेन ग्रहेण स्वरूपतो विश्वस्य स्मरणासम्भवात् । एवं न कोपि शब्दः प्रवृत्तिनिमित्तविरहितशक्तिमान् ।७७।

**निमित्तमन्तरे**ति । पञ्चम्यन्तद्वयं **न द्वितीयाश्रयार्थिके**ति प्रतिज्ञायां हेतुः ।

द्वितीयाया अधिकरणे स्वरूपत एव शक्तिरिति यदि तेषामाशयस्तदा तमाक्षिपति—**द्वितीयादी**त्यादिना । **विश्वस्मिन्निति** । आश्रयस्य तदर्थत्वे विश्वेषामेवाश्रयत्वेन तच्छक्यत्वमिति भावः । **तया** द्वितीयया । **सङ्केतस्य सम्भवेपी**ति । ईश्वरस्य स्वरूपतोपि तत्तद्व्यक्तिज्ञानसत्त्वादखिलपदार्थविष-यिणी बुद्धिर्द्वितीयापदजन्या भवत्वित्याकारिकायास्तदिच्छाया निराबाधा-दित्यर्थः । **तद्ग्रहणासम्भवादित्यत्र** हेतुः—**स्वरूपेणे**ति । तथा चास्मदादीनां विश्वान्तर्गताखिलपदार्थानां तत्तद्व्यक्तिरूपाणां ज्ञानस्यासत्त्वान्न तेषां स्वरूपत उपस्थितिस्सम्भवतीति भावः । **स्मरणासम्भवादि**ति । तदादिपदेभ्यो बुद्धि-विषयत्वमुपलक्षणीकृत्य स्वरूपतो घटत्वप्रकारकस्मरणस्य घटत्वादीनां जाति-त्वेन स्वरूपतो भानादुपपत्तिः । अत्र तु विश्वस्य जात्यखण्डोपाधिभिन्नत्वान्न तथोपपत्तिरिति बोध्यम् । **न कोपि शब्द** इति । गगनादिपदानामपि शब्दा-श्रयत्वाद्यवच्छिन्न एव शक्तिरित्याशयेनेदम् ।७७।

---

१ स्वरूपेण इति मु० पु० पा० ।

अथ सर्वकर्म्मसाधारणं किमपि निमित्तमाश्रयणीयम् ? तत्राधिकरणत्वन्नाम [1]तत्तत्संसर्गानुयोगित्वस्वरूपं संसर्गभेदाद्भिद्यत एव, न तु सकलसंसर्गानुगतम् । सम्भवदपि गगनाभावादितुल्यशरीरात्माद्यभावादिभिरविनिगम्यतया शक्त्यानन्त्यापादकम् । न च तत्स्वरूपेण भासितुमर्हति, अजातित्वात् ।

तस्मात्—

[2]गोत्वजातिरिवाखण्डमाश्रयत्वममानकम् ।
स्याद्वाभावादिवत् तच्च न स्वरूपेण भासते ॥७८॥

ननूक्तमेव यदधिकरणत्वमतिरिक्तपदार्थस्वरूपमेव द्वितीयाप्रवृत्तिनिमित्तमित्याशङ्कते—**अथे**ति—स्यादेवं यद्यधिकरणत्वमेकं स्यात्तदेव नेत्याशयेनोत्तरयति—**तत्रे**ति । तथा चाधिकरणत्वं नातिरिक्तमेकमिति न तेन शक्त्यैक्यसम्भव इति भावः । ननु गगनाभावस्यैकत्वेन तत्स्वरूपमेवाधिकरणत्वं तथेत्यत आह—**सम्भवदपी**ति । अधिकरणत्वं गगनाभावस्वरूपमुत तत्समनियतात्माभावदिगभावादिरूपं शक्यतावच्छेदकम्, विनिगमनाविरहेण सर्वेषामेव तथात्वे न शक्तेरैक्यमिति भावः । इदमुपलक्षणम् । गगनादिप्रतियोगिताकत्वविशिष्टानां तत्तदभावानामपि नाखण्डत्वम्, निरवच्छिन्नविषयतया तेषामप्रतीतेः । गगनाभाववदित्याद्याकारिकैव प्रतीतिः, तस्याञ्च पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यस्यैव प्रतियोगितया विषयत्वादिति । **अजातित्वादि**ति । जातिपदमखण्डोपाधेरप्युपलक्षकम्, अन्यथाधिकरणत्वस्याखण्डोपाधित्वनिषेधे स्वरूपतो भानस्याखण्डोपाधित्वादेव प्रसक्तेः । निरुक्तरीत्या तस्याखण्डोपाधित्वस्य जात्यादिवृत्तितया जातित्वस्य च विरहान्न स्वरूपतो भानस्य सम्भव इत्याशयः । अधिकरणत्वस्य द्वितीयार्थत्वासम्भवादधिकरणत्वमेव तथेति स्वमतमुपसंहरति—**तस्मादि**ति ।

---

१ तत्तत्संसर्गावच्छिन्नानुयोगित्वस्वरूपम् इति मु० पु० पा० ।
२ कारिकेयं मुद्रितपुस्तकस्य विवरणपाठे एव दृश्यते, न तु कारिकापाठे ।

**तस्मात्संसर्गभेदभिन्नमधिकरणत्वमाधेयत्वं वा द्वितीयार्थः ।**

**संसर्गभेदभिन्नं** समवायादिसंसर्गावच्छिन्नम् ।

न चैवं शक्त्यानन्त्यम्, अधिकरणतात्वादिनाधिकरणतादिसामान्यस्यैव शक्यतया तदवच्छेदकाधिकरणतात्वस्यैक्यादेवैक्यात् । गम्यादिधातुसमभिव्याहारे द्वितीयार्थाधिकरणतात्वाद्यवच्छिन्नस्य निरूपकत्वेन प्रकृत्यर्थान्वितस्य संयोगे फले समवायावच्छिन्नाधिकरणत्वीयस्वरूपसंसर्गेणान्वयः । अतएव जात्यादिनिरूपकाधिकरणत्वस्य समवायसंसर्गावच्छिन्नत्वासम्भवाज्जातिमभावं वा न गच्छतीत्यादावन्वयानुपपत्तिरपि वारिता । कालिकसम्बन्धावच्छिन्नाधिकरणत्वीयस्वरूपसंसर्गस्य द्वितीयार्थाधिकरणत्वान्वयाप्रयोजकत्वात् कालं पचतीतिप्रयोगापत्तिविरहात् । अतएव कालिकविशेषणतादिघटितसंसर्गस्य तदन्वयप्रयोजकत्वार्थं "कालाध्वनोः ..." इत्यादिना पृथगेव द्वितीयानुशासनमिति । अधिकरणत्वं विहायाधेयत्वस्य द्वितीयार्थत्वे बीजं निरुक्तमेव बोध्यम् ।

एवं प्रकृत्यर्थस्यापि न निरूपकत्वमात्रेण द्वितीयार्थाधिकरणत्वादावन्वयः, किन्तु स्वावयवावच्छेद्याधिकरणतानिरूपितत्वेनैव । तत्र च स्वपदं तत्तत्प्रकृत्यर्थपरिचायकमवयवश्च समवायी । तेन गगनादिनिरूपिताधेयत्वस्य संयोगे सत्त्वेपि गगनमात्मानं कालं दिशं वा गच्छतीति न प्रयोगः, गगनादेस्समवायिनोप्रसिद्ध्या तादृशसम्बन्धाप्रसिद्धेः । न चैवमपि गगनं न गच्छतीत्यादौ का गतिः ? गगनस्य तादृशसम्बन्धाप्रसिद्ध्या द्वितीयान्तार्थगगनविशिष्टाधेयत्वाभावस्य बोधयितुमशक्यत्वादिति वाच्यम्, नञर्थाभावे तादृशसम्बन्धावच्छिन्नप्रतियोगितासंसर्गेण गगनान्वयस्यैव तत्रोपगमात् । गगनानुकूलकृतिसामान्याभाववति तादृशप्रयोगस्य प्रामाण्ये तु अभावस्य द्विधा भानमुपगम्य तदुपपादनीयम् । संयोगादीनामव्याप्यवृत्तित्वेपि तदधिकरणताया व्याप्यवृत्तित्वे तु तादृशाधेयत्वस्यैव स्वनिरूपकाधिकरणावयवनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वसमानाधिकरण-समवायावच्छिन्नाधेयत्वीयस्वरूपसंसर्गेण गमित्यज्योः फलयोः संयोगविभागयो-

**यत्त्वधिकरणत्वादेश्शक्यत्वे तद्वृत्तिधर्म्मान्तरं शक्यतावच्छेदक-मावश्यकमित्यनुशासनग्राहितामधिकरणत्वस्वरूपविशिष्टे वृत्तिमेव**

रन्वयोऽभ्युपेतव्यः, तावतैवोक्तप्रयोगाणामुपपत्तिसम्भवात् । प्राचीं गच्छति शकुनिः खं गच्छतीत्यादौ च प्राचीपदेन दिगुपाधिमत उदयगिरिसन्निहित-देशस्य, खपदेन वायुमण्डलस्योपस्थापनान्नानुपपत्तिः । एवमाङ्पूर्वकस्य गम्धातोः प्रयोक्तृपुरुषाधिष्ठितदेशावधिकगमनकर्त्तृदेशसमवेतपरत्वनिरूपिता-परत्वसमानाधिकरणस्यैव संयोगस्य फलत्वम् । आङ्वर्जितस्य च तादृशापरत्व-समानाधिकरणस्यैव तस्य तथात्वात्पाटलिपुत्रस्थे पुरुषे प्रयागात्काशीमाच्छति शक्रप्रस्थं गच्छति, प्रयागाच्च शक्रप्रस्थमागच्छति काशीं गच्छतीति च न प्रयोगः।

अथवाधिकरणतात्वेनाधिकरणतासामान्यमेव द्वितीयार्थः । तत्र च शक्यता-वच्छेदकस्यैक्यादेव शक्तेरैक्यम् । कालिकसम्बन्धावच्छिन्नाधेयत्वस्य विक्लित्ति-संसर्गत्वानभ्युपगमादेव कालं पचतीति प्रयोगवारणम् । प्रकृत्यर्थतण्डुलादिना-न्वितस्याधिकरणत्वस्य स्वनिरूपिततण्डुलसामानाधिकरण्यावच्छिन्नाधेयत्व-संसर्गेणैवान्वयोपगमात्तण्डुलं पचतीत्यादिप्रयोगः । न चाश्रयस्य द्वितीयार्थत्वे सामानाधिकरण्यावच्छिन्नाधेयत्वमेव संसर्ग इति तत्र स्वनिरूपितत्वप्रवेशेन तार्किकाणां गौरवमिति वाच्यम्, सम्बन्धगौरवस्याकिञ्चित्करत्वात् । लक्षणाज्ञानहेतुतावच्छेदकगौरवापादकत्वाद्वाच्यतावच्छेदकगौरवस्यैव दूषणत्वात् । तच्च शाब्दिकमतेधिकणतात्वविशिष्टस्याधिकरणत्वस्य, शक्यतावच्छेदकत्वे अधिकरणसम्बन्धीति ज्ञानस्याधिकरणतात्वविशिष्टाधिकरणत्वावच्छिन्नाधिकरण-विषयतानिरूपितसम्बन्धविषयताकत्वाद् गुरुशरीरत्वम् । तदपेक्षया तार्किकमत-सिद्धस्याधिकरणतासम्बन्धीति ज्ञानस्याधिकरणतात्वावच्छिन्नाधिकरणता-विषयतानिरूपितसम्बन्धविषयताकत्वेन लघुशरीरत्वात्तस्यैव लक्षणाज्ञानविधया कारणताया वक्तुमौचित्यादिति ।

तार्किकमतेऽप्यधिकरणत्वस्य शक्यत्वे शक्यतावच्छेदकमधिकरणतात्व-मतिरिक्तं कल्पनीयमिति तदकल्पनप्रयुक्तलाघवाद् द्वितीयाशक्तिग्राहकानुशासने

किमिति न रोचयेदिति । तत्तु तद्दर्शनसिद्धान्तानभिज्ञत्वद्योतनमात्रम् । ७८ ।

ननु तथापि "भावप्रधानमाख्यातम्" इति निरुक्तस्मृत्या क्रियाया एव प्राधान्यमुपगम्यते, तत्कथं नैयायिकाद्यभिमतः प्रथमान्ताद्यर्थविशेष्यको वाक्यार्थबोधो न विरुद्ध्यत इति चेत् ?

**भावप्रधानमाख्यातमितिनिर्वचनस्मृतेः ।**
**आख्यातार्थेषु भावस्य प्राधान्यमनुशिष्यते ॥७९॥**

"भावप्रधानमाख्यातम्" इति निरुक्तस्मृतेराख्यातार्थेषु सङ्ख्या-

वाचकत्वार्थकसप्तम्यन्तेन कर्म्मणीत्यनेनाधिकरणस्य ग्रामादेः कर्म्मण एव तद्वाच्यत्वज्ञापनाच्च स्वरूपतोधिकरणत्वविशिष्ट एव शक्तिरिति निरसितुमाह— **यत्त्वि**ति । **तद्दर्शनसिद्धान्ते**ति । अयमाशयः—तार्किकमतेधिकरणतात्वादिकं नातिरिक्तः पदार्थः, किन्तु स्वरूपसम्बन्धविशेषात्मक एव । अतएव तैः "सप्तैव पदार्थाः" इति सिद्धान्तितम् । तथा च तत्सिद्धान्तानामभिज्ञानेतिरिक्तमधिकरणतात्वं कल्पनीयमिति न वक्तुं शक्यमिति । ७८ ।

अधिकरणत्वस्य द्वितीयार्थत्वेपि **भूमिं प्रयाति विहग** इत्यादौ खगे **भूकर्म्मकगमनकर्त्तृत्वमि**त्यनेन धात्वर्थस्याख्यातार्थे विशेषणतायाः प्रथमान्तार्थस्य खगस्य मुख्यविशेष्यतायाश्चोक्ततया तत्र "भावप्रधानमाख्यातम्" इति निरुक्तस्मृतिविरोधं निरसितुमाशङ्कते—**नन्वि**ति । **तथापि** अधिकरणत्वस्य द्वितीयार्थत्वेपि । **क्रियाया एव प्राधान्यमि**ति । **भावो** धात्वर्थः, "धात्वर्थः केवलश्शुद्धो भाव इत्यभिधीयते" इति परिभाषणात्, **प्रधानं** (मुख्यो) यत्रेति बहुव्रीहिणाख्यातस्य क्रियामुख्यविशेष्यकान्वयबोधजनकत्वस्यैव ज्ञापनादित्यर्थः ।

तत्र भावयतीति व्युत्पत्त्या भावपदस्य कृतिस्वरूपभावनापरत्वं स्वार्थेष्विति चाक्षेपलभ्यं भावप्रधानमिति षष्ठीसमासे प्रधानपदं भावप्रधानतया प्राधान्यपरमित्याशयेनोत्तरयति—**भावप्रधानमि**ति कारिकया । **सङ्ख्यावर्त्तमान-**

**वर्त्तमानत्वादिषु भावनाया एव धात्वर्थं प्रति प्राधान्यमर्थः, भावपदेन भावनाया अभिधानात् । ७९ ।**

**अथाचार्य्यकल्पा इतिवत् पचन्तिकल्पाः पुरुषा इति प्रयोग-प्रसङ्गः, प्रधानप्रकृत्यर्थस्येषदसमाप्तपाककर्त्तुः सङ्ख्यान्वययोग्यतया तिङुपात्ताया इव सुबुपात्ताया (अपि) बहुत्वसङ्ख्याया अन्वयसम्भवादिति चेत् ? स्यादयं कर्त्तुराख्यातार्थतावादिनां दोषः, भावना तु धातूपात्तेव तिङुपात्तापि न सङ्ख्यान्वयमर्हतीति साधुत्वार्थकमेकवचनम् ।**

**त्वादिष्वि**ति । आदिना भावनायाः परिग्रहः । सा च तार्किकमते कृतिरेव । तथा चाख्यातार्थेषु सङ्ख्याकालभावनासु फलावच्छिन्नव्यापारात्मकं धात्वर्थं प्रति भावनाया विशेष्यत्वमित्येव निरुक्तस्मृतिवाक्यार्थः । तच्चानुकूलत्वसम्बन्धेन धात्वर्थव्यापारस्याख्यातार्थकृतौ सङ्ख्यायाः प्रातिपदिकार्थे वर्त्तमानत्वादेः कृतौ विशेषणत्वादेवोपपन्नमित्याशयः । अन्यथा चैत्रादिपदानामपि व्यक्तिस्वरूपसत्त्वमुख्यविशेष्यकान्वयबोधजनकत्वस्य तदुत्तरेण "सत्त्वप्रधानानि नामानि" इत्यनेन बोधनाच्चैत्रस्तण्डुलं पचतीत्यत्र क्रियाया मुख्यविशेष्यत्वं चैत्रस्य वेत्यन्यतरपरिच्छेदोसम्भव्येव स्यात् । इदमुपलक्षणम् । "सत्त्वप्रधानानि नामानि" इत्यत्र प्रधानपदस्य वाचकपरत्वेन "भावप्रधानम्" इत्यत्रापि तत्पदस्य कृतिवाचकत्वपरत्वसम्भवः । अथवा भावस्य धात्वर्थस्य प्रधानं विशेष्यमाख्यातमिति तदर्थः । "सत्त्वप्रधानानि" इत्यस्य च सत्त्वं व्यक्तिः प्रधानं येष्वित्येवार्थो बोध्यः । ७९ ।

अन्वयबोधस्य प्रथमान्तार्थमुख्यविशेष्यताकत्वोपगमे पूर्वोक्तां **पचन्तिकल्पा** इत्यादिप्रयोगापत्तिन्निरसितुमाशङ्कते—**अथे**ति । **स्यादयमि**ति । तथा च कर्त्तु-राख्यातार्थत्व एव प्रधानस्य कर्त्तुर्लिङ्गसङ्ख्यान्वययोग्यत्वम्, कृतेराख्यातार्थत्वे तु यथा धात्वर्थक्रियाया उभयसिद्धतदन्वयायोग्यत्वं तथा कृतेरपि, तद्वीजस्य कर्म्मत्वस्येव गुणत्वस्यात्रापि तुल्यत्वादित्याशयः । उक्तमर्थमुपसंहरति—

**पचन्तिकल्पं पुरुषा यान्ति रूपं जना इति ।**
**शाब्दिकानामिवास्माकमप्येकवचनं ध्रुवम् ॥८०॥**

ननु पश्य मृगो धावतीत्यत्र मृगस्य धावनक्रियां प्रति प्राधान्येन तस्यैव कर्म्मतया दर्शनेन्वयस्स्वीकर्त्तव्यः, अन्यथा वाक्यभेदप्रसङ्गात् । तथा च मृगपदाद् द्वितीया दुर्वारा स्यात्, “अधातुः”

पचन्तीति । ८० ।

**पश्य मृग** इत्यत्रोक्तामनुपपत्तिं परिहर्त्तुमाशङ्कते—**नन्विति**। **प्राधान्येनेति** । तस्यैव प्रथमान्तार्थत्वाद्धावनक्रियायास्तत्र विशेषणत्वमित्याशयः। **अन्यथेति**। धावनानुकूलकृतिविशिष्टमृगस्य कर्म्मत्वसंसर्गेण धात्वर्थदर्शनेन्वयानुपगमे, तमित्यध्याहार्य्यतत्पदार्थस्य तादृशमृगस्यैव तत्रान्वयस्वीकार इत्यर्थः। **वाक्यभेदप्रसङ्गादिति**। तं पश्येत्यत्र मध्यमपुरुषान्यथानुपपत्त्या त्वंपदस्यावश्याध्याहार्य्यतया तदर्थस्यापि मुख्यविशेष्यताया आवश्यकतयोभयमुख्यविशेष्यताकान्वयबोधजनकत्वेन वाक्यभेदस्यावश्यकत्वादित्याशयः । न च धावनक्रियाया एव कर्म्मत्वेन दर्शनेन्वय इति वाच्यम्, “एकत्र विशेषणत्वेन...” इत्यादिव्युत्पत्तिविरोधप्रसङ्गात्। न च वाक्यभेदे का क्षतिरिति वाच्यम्, तथा सति “तिङ्ङतिङः” इति सूत्रेतिङ्ग्रहणस्य वैयर्थ्यापत्तेः पूर्वमुक्तत्वात्। **तथा चेति** । तादृशकृतिविशिष्टमृगस्य कर्म्मतया दर्शनेन्वयस्यावश्यकत्वे चेत्यर्थः। **दुर्वारा स्यादिति**। मृगस्य कर्म्मतया “कर्म्मणि द्वितीया” इत्यस्य निराबाधं प्रवृत्तेरित्यर्थः। **अधातुरिति** । क्रियामुख्यविशेष्यकान्वयबोधोपगमे धावनस्य कर्म्मत्वेपि तद्वाचकधाव्धातोर्धातु[१]भिन्नत्वाभावादेव न प्रातिपदिकसंज्ञा, मृगस्य कर्म्मत्वे तु तस्य धात्वादिभिन्नत्वात्प्रातिपदिकसंज्ञाया आवश्यकत्वादिति भावः । इदमुपलक्षणम् । तत्र द्वितीयायां सत्यामप्रथमासामाना-

१ धातोरिव पर्य्युदासाभावेन इति मु० पु० पा० ।

**इति पर्य्युदासाभावेन प्रातिपदिकत्वादिति चेत् ? सत्यम्, वाक्यैकवाक्यतयैवात्र वाक्यार्थः कर्म्मत्वेन विवक्षितः, न तु वाक्यं प्रातिपदिकमिति कथं द्वितीया प्रसज्येत । वाक्यं वृत्त्यार्थवत्त्वाभावात् "कृत्तद्धितसमासाश्च" इति नियमविधेर्वा न प्रातिपदिकम् ।**

धिकरण्यस्य सत्त्वादुक्तरीत्या शतृप्रत्यये तादृशप्रयोग एवानुपपन्नः स्यादित्यपि बोध्यम् । **सत्य**मित्यापाततोऽङ्गीकारे । **वाक्यैक्यवाक्यतये**ति । धावति मृग इति वाक्यस्य पश्येतिवाक्येनैकतापन्नतयेत्यर्थः । तथा च धावनानुकूलकृतिविशिष्टस्यैव मृगस्य तत्र कर्म्मत्वम्, न तु केवलस्य, तादृशकर्म्मबोधकञ्च वाक्यमेव, न तु मृगपदमात्रम्, तस्य च प्रातिपदिकत्वविरहादेव न द्वितीयायास्ततः प्रसक्तिरित्याशयः । ननु वाक्यस्यापि कुतो न प्रातिपदिकत्वमित्यत आह— **वाक्यमिति । वृत्त्ये**ति । तार्किकादिभिस्तत्र शक्तिलक्षणयोरन्यतरस्यैवानुपगमादर्थवत्त्वाभावादेव न तस्य प्रातिपदिकसंज्ञेति भावः । शाब्दिकैर्वाक्येऽखण्डस्फोटोपगमे त्वाह—**कृत्तद्धिते**ति । **नियमविधेर्वे**ति । तत्र समासग्रहणं राजपुरुष इत्यादीनां प्रातिपदिकसंज्ञाविधानार्थमेव । सा च तेषां धात्वादिभिन्नतयार्थवत्त्वेन च "अर्थवत्..." इत्यादिसूत्रेणैव सिद्धा, अतस्तद्व्यर्थं सज्ज्ञापयति—"यत्र संघाते पूर्वो भागः पदं तस्य चेत्प्रातिपदिकसंज्ञा, तर्हि समासस्यैव नान्यस्य" इति नियमविधेरित्यर्थः[१] । अत्र संघातस्य प्रातिपदिकसंज्ञा चेदित्येतावन्मात्रोक्तौ राम इत्यस्यापि रम् घञ् ( इति ) संघातवत्त्वात्तदनुपपत्तिः । पूर्वो भागः पदमित्यनुक्तौ बहुगुड इत्यत्र तदनुपपत्तिरत उभयोपादानम् । उत्तरस्तु तत्प्रकृतिकः प्रत्ययो नेत्यपि संघाते विवक्षणीयम् । तेन जन्मवानित्यादौ जन्मन् सु मतुप् (इति) संघाते पूर्वभागस्य पदत्वेप्युत्तरस्य मतुपस्तत्प्रकृतिकप्रत्ययत्वादेव न तदनुपपत्तिरित्यादिविस्तरो मनोरमादौ द्रष्टव्यः । तथा च प्रकृते धावति मृगस्येत्यस्य वाक्यत्वात्तादृशनियमाक्रान्ततया समासत्वाभावाच्च न प्रातिपदिकसंज्ञेति भावः ।

---

१ नियमाकारस्तु—यत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः ।
स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत् ॥ इति ।

अतएव—

देवाकर्णय संग्रामे चापेनासादिताश्शराः ।
मलिनन्ते वपुस्स्नायादित्यादावेकवाक्यता ॥८१॥

सङ्ग्रामाधिकरणकचापकर्त्तृकासादनकर्म्मणां विशिष्टविषयतास्वरूपकर्म्मत्वसंसर्गेण देवसम्बोध्यकाकर्णनक्रियायां मलिनस्य वपुषो विशेषणभागोपसङ्क्रान्तविशिष्टहेतुतासंसर्गेण स्नाने चान्वयेपि न कर्म्मणि द्वितीया न वा हेतौ पञ्चमी, वाक्यस्य प्रातिपदिकसंज्ञाविरहात्। एवं धावतो मृगस्यापि विशिष्टकर्म्मतया दर्शनेनान्वये न ततो द्वितीया। कालय [1]परिस्रवन्ते गाव इत्यादौ परिस्रवनकर्त्तृगवां कालने कर्म्मतयान्वयादेकवाक्यत्वम्। ८१।

**अतएव** वाक्यस्य प्रातिपदिकत्वविरहादेव। अस्य च कारिकान्त**स्थैकवाक्यते**त्यनेनान्वयः। **आसादनकर्म्मणामि**ति। क्तप्रत्ययस्य कर्म्मार्थकत्वादित्याशयः। **विशिष्टविषयतास्वरूपे**ति। सङ्ग्रामादितत्तदर्थविषयतानिरूपितविषयतासंसर्गेणेत्यर्थः। सविषयकार्थकधातुयोगे विषयताया एव कर्म्मत्वरूपत्वा**दाकर्णये**त्यस्य श्रावणप्रत्यक्षविषयार्थकत्वात्तत्समभिव्याहृतशराणां तादृशकर्म्मत्वं बोध्यम्। **मलिनस्य वपुष** इति। **स्नानेन्वयेपी**त्यनेनान्वितम्। **विशेषणभागोपे**ति। **विशेषणभागे** मालिन्ये **उपसङ्क्रान्ता**न्विता या हेतुता, तेन संसर्गेणेत्यर्थः। "सविशेषणे हि..." इत्यादिन्यायेन विशेष्ये वपुषि स्नानहेतुत्वस्य बाधे विशेषणे मालिन्य एव तदन्वय इति भावः। **न द्वितीये**ति। **देवाकर्णये**त्यत्र, **न पञ्चमी**ति **मलिनन्ते** इत्यत्रान्वितम्। **अतएवे**ति पूर्वोक्तस्यार्थमाह—**वाक्यस्ये**ति। ८१।

---

१ परिप्लुवन्ते इति मु० पु० पा०।

ननु तथापि केन विनिगमकेनेदं परिच्छिद्यते, यत्प्रथमान्तार्थ एव प्रधानमिति चेत् ?

उच्यते—

**प्रयाति पुरुषस्तस्य पादयोरभिवाद्य ।**
**इत्यादौ प्रथमान्तार्थः प्राधान्यान्मृग्यते तदा ॥८२॥**

यदि तिङ्प्रथमान्तयोः प्रथमान्तार्थस्य प्राधान्यन्न स्यात्तदा प्रयाति पुरुष इत्यत्र पुरुषस्तच्छब्देन न परामृश्येत, गुणीभूतार्थस्य तच्छब्देन परामर्शासम्भवात् , अन्यथा "दृशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः ।" इत्यत्र राज्ञस्तच्छब्देन परामर्शप्रसङ्गात् । अतएव "अनुमानन्निरूप्यते" इत्युपक्रम्य "तत्रानुमितिः" इति तदा निरूपणपरामर्शासम्भवात् "तत्र निरूपणीयेनुमाने" इति प्रभायामुपाध्यायाः ।

उक्तरीत्यान्वयबोधस्य प्रथमान्तार्थमुख्यविशेष्यताकत्वेनुपपत्तीनां वारणेपि प्रमाणं विना न कस्याप्यर्थस्य सिद्धिरिति तत्र प्रमाणं वक्तुमाशङ्कते—**नन्विति** । उच्यते प्रमाणमिति शेपः । **गुणीभूतार्थस्येति** । शाब्दबोधे विशेषणीभूतस्यार्थस्येत्यर्थः । **तदा** तच्छब्देन । **परामर्शासम्भवादिति** । शाब्दबोधीयमुख्यविशेष्यताश्रयस्यैव परामर्शकस्तच्छब्दः, न तु विशेषणताश्रयस्येत्याशयः । **अन्यथा** गुणीभूतस्याप्यर्थस्य तच्छब्दपरामृश्यत्वे । **दृशैत** इति । इदमुपलक्षणम् । "चैत्रो ग्रामगतस्तत्र मैत्रः किङ्कुरुतेधुना ।" "......चैत्र ! प्रजावतीयम्मे त्वं तस्मै देहि कम्बलम् ।"... इत्यादौ ग्रामभ्रात्रोरपि तच्छब्देन परामर्शप्रसङ्गो बोध्यः । **अतएव** तच्छब्दस्य शाब्दबोधीयविशेषणताश्रयापरामर्शकत्वादेव । **निरूपणपरामर्शासम्भवादिति** । तत्रानुमानस्यैव तादृशमुख्यविशेष्यताश्रयत्वेन निरूपणस्य तत्र विशेषणत्वादित्यर्थः । **निरूपणीयेनुमान** इति । तथा च तत्पदस्यानुमानपरामर्शकत्वात् सप्तम्याश्च घटकत्वार्थकत्वान्निरूपणीयानुमान-

घटकानुमितिरित्यन्वयबोध इत्यर्थः। अत्रेदं बोध्यम्। तत्पदस्य वृत्तिज्ञानीय-मुख्यविशेष्यताश्रयपरामर्शकत्वोपगमे विशिष्टशक्तिवादिवैयाकरणमतेपि राजमा-तङ्गादिपदेषु राजादिपदवृत्तिज्ञानजन्यराजादीनामुपस्थितेरप्यवश्यमुपगन्तव्यतया तज्जनकवृत्तिज्ञानीयमुख्यविशेष्यत्वस्य राजादौ निराबाधतयोपदर्शितानुपपत्ति-स्तदवस्थैव, विशिष्टशक्त्यनङ्गीकारे तु सुतरामिति।

इदमुपलक्षणम्। कृदन्तसमभिव्याहारे चैत्रः पक्तेत्यादौ शाब्दिकैरपि प्रथमान्तार्थस्यैव प्रधानताया वक्तव्यतया चैत्रः पचतीत्यादावपि तेनैव प्रमाणेन प्रथमान्तार्थस्य तत्त्वौचित्यम्। पचतीत्यादौ प्रथमान्तासमभिव्याहारेपि कृतेरेव प्राधान्यन्न क्रियायाः, क्रियायास्तथात्वोपगमे पचन् पचतीतिप्रयोगप्रामाण्यप्रसङ्गः, तज्जन्यस्य वर्त्तमानपाककर्त्तृकर्त्तृको वर्त्तमानपाक इति बोधस्य प्रमात्वात्। अव-गतार्थस्यापि विशेष्यविशेषणभावव्यत्यासेन पुनः शाब्दबोधस्य ज्ञानवतां ज्ञानमित्यादौ ज्ञानसम्बन्धिसम्बन्धवज्ज्ञानमित्यन्वयबोधस्योपगमात्।

तार्किकमते तु विद्यमानपाकानुकूलकृत्यवच्छिन्नविशेष्यतानिरूपिततादृश-कृतिप्रकारताकस्यान्वयबोधस्योद्देश्यतावच्छेदकविधेययोरैक्ये घटो घट इति-वन्निराकाङ्क्षत्वात्तादृशप्रसङ्गविरहात्। एवं पाचको न पचतीत्यादौ क्रियाप्रधान-कोन्वयबोधोसम्भव्येव। तथाहि— यदि तत्र नञो भेदोर्थः। तत्र प्रति-योगितया पाचकपदार्थस्य पाककर्त्तुरन्वयः। तस्याख्यातार्थे कर्त्तर्य्यन्वये पाक-कर्त्तृभिन्ननिष्ठकर्त्तृवृत्तित्वस्य धात्वर्थे पाके बाधादन्वयासम्भवः। पाचकान्य-कर्त्तृको विद्यमानः पाक इत्यस्य पाकस्य पाचककर्त्तृकत्वनियमादसम्भवात्। यदि च नञोत्यन्ताभाव एवार्थस्तदापि पाचकविशेषितस्य तिङर्थकर्त्तुस्तत्र प्रतियोगितयान्वयोसम्भव एव, कर्त्तृविनाकृतायाः क्रियायाः कदाप्यजननेन पाचकाभिन्नकर्त्रभाववान् विद्यमानः पाक इत्यन्वयबोधस्यासम्भवात्। न च नञर्थात्यन्ताभावे पाचकाभिन्नकर्त्तुरधिकरणतयान्वयस्तत्रैवाभावे लडर्थवर्त्तमान-त्वस्याप्यन्वयः, तस्य चाभावस्य प्रतियोगितया पाकेन्वयात् पाचकाभिन्नकर्त्तृ-वृत्तिविद्यमानात्यन्ताभावप्रतियोगी पाक इत्यन्वयबोधो निराबाध इति वाच्यम्,

लकारार्थस्य कालस्य नञर्थान्वये व्युत्पत्तिविरहात् पाके एव तदन्वयस्या-वश्यकतया विद्यमाने पाके च पाचकाभिन्नकर्त्तृवृत्त्यत्यन्ताभावप्रतियोगित्वा-सम्भवात्, पाकेन रक्तेपि घटे श्यामकालावच्छेदेन घटवृत्तित्वस्य रक्तरूपाभावे निराबाधतया घटो रक्तो नेति तदानीमपि प्रतीतेः प्रामाण्यापत्तिः, घटवृत्त्यत्य-न्ताभावप्रतियोगी रक्त इति बोधस्य तत्र निराबाधत्वादिति नञर्थाभावस्य प्रतियोगिनि विशेषणतयान्वयो निराकाङ्क्ष इत्यस्यैवाभ्युपेतव्यतयोक्तान्वयस्या-सम्भवाच्च। न च तत्र प्रतियोगित्वस्य व्याप्यवृत्तित्वाच्छ्यामकालावच्छेद्यत्वा-सम्भवादेव नोक्तप्रतीतिरिति वाच्यम्, अव्याप्यवृत्तिरूपादीनामभावस्या-व्याप्यवृत्तित्वावश्यकतया तत्प्रतियोगित्वस्य व्याप्यवृत्तित्वासम्भवात्। नञर्थस्य प्रतियोगिनि विशेषणतयान्वयोपगमेपि सर्वत्रान्वयबोधस्य क्रियामुख्यविशेष्य-ताकत्वासम्भव एव, गगनं जलं वा न पचतीत्यादौ गगनादिकर्म्मकपाका-प्रसिद्धेः। पाकवृत्त्यत्यन्ताभावस्य गगनादिकर्म्मत्वे प्रतियोगितयान्वये गगन-कर्म्मत्वं पाकवृत्त्यत्यन्ताभावप्रतियोगीत्यन्वयबोधस्य क्रियामुख्यविशेष्यता-कत्वाभावात्। प्रथमान्तार्थस्य मुख्यविशेष्यत्वे तु पाचको न पचतीत्यादौ नञर्थात्यन्ताभावे विद्यमानपाकादिकृतेस्तिङन्तार्थस्य प्रतियोगितयान्वयात्ता-दृशाभावस्य च प्रथमान्तार्थेन्वयात् पाचकपदबोध्ये शुद्धपाककृतिमति वर्त्तमान-त्वविशिष्टपाककृत्यत्यन्ताभावस्यान्वयो दण्डवान् रक्तदण्डाभाववानित्याद्याकारक इव निराबाधः।

न चैवमपि पश्य मृगो धावतीत्यादौ धावनानुकूलकृतिविशिष्टस्य मृगस्य नामार्थतया कर्म्मतया कथं धात्वर्थे दर्शनेन्वयः? अन्यथा तण्डुलादीनामपि पाकेन्वयसम्भवात्तण्डुलः पचतीत्यपि प्रमाणं स्यादिति वाच्यम्, केवलस्यैव कर्म्मतया नामार्थस्य धात्वर्थे भेदान्वयस्यानभ्युपगमात्। तादृशस्य मृगस्य तु न केवलनामार्थत्वम्, अपि तु धातुप्रत्ययनामसमुदायार्थत्वं तण्डुलस्य च केवल-नामार्थत्वमिति तत्रान्वयानन्वययोरुपपत्तेः। अतएव "श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयश्शुभाः।" इत्यत्र शुभात्वविशिष्टोत्पत्तीनां प्रथमान्तपदाभ्यामेवो-पस्थितावपि कर्म्मतया श्रवणेन्वयः। अतएव शुक्लस्तण्डुलः पचतीत्यत्र

शुक्लाभिन्नतण्डुलरूपवाक्यार्थस्य धात्वर्थेन्वयो निराबाध एव। न च तण्डुलः पचतीतिवारणाय विशेष्यतया तण्डुलादिपदजन्यान्वयबोधे विशेष्यतया प्रत्ययजन्योपस्थितेः कारणताया आवश्यकतया कथमुपदर्शितस्थलेन्वयबोधः ? शुक्लस्तण्डुलः कर्म्मत्वमित्यादौ निष्ठत्वसंसर्गेण कर्म्मत्वे शुक्लाभिन्नतण्डुलस्याप्यनन्वयाच्छुद्धतण्डुलत्वावच्छिन्नविशेष्यतायास्तत्र निवेशयितुमशक्यत्वादिति वाच्यम्, तादृशबोधानुरोधेन विशेष्यतया तण्डुलपदजन्यतण्डुलप्रकारकान्वयबोधे विभक्तिजन्योपस्थितिप्रथमान्तशुक्लादिपदसमभिव्याहृतप्रथमान्ततण्डुलादिपदोत्तरपच्यादिधातुजन्योपस्थित्यन्यतरस्यैव कारणतायाः कल्पनात्।

केचित्तु पश्य मृगो धावतीत्यत्र कर्म्मत्वोपस्थापकमितिपदं धावतिपदोत्तरमध्याहृत्य सर्वत्रैव वाक्यार्थस्य कर्म्मत्वस्थलेन्वयबोधस्सुघटः, निपाताव्ययातिरिक्तनामार्थधात्वर्थयोरेव भेदान्वयस्याव्युत्पन्नतया निपातीभूतेतिपदोपस्थापितस्य कर्म्मत्वस्य दृश्धात्वर्थेन्वयस्य निराबाधत्वात्। घटो न चन्द्र इवेत्यादौ निपातीभूतनञर्थेन सह घटचन्द्रादिनामार्थस्यान्वय इव "नातिरात्रे षोडशिनं गृह्णाति..." इत्यादौ नञर्थेन सह धात्वर्थान्वयस्य सर्वसम्मतया तत्रापि निपाताद्यतिरिक्तत्वविशेषणस्यावश्यकत्वात्। अतएव प्राञ्चः अव्ययोत्तरं कर्मत्वाद्युपस्थापिकां द्वितीयादिविभक्तिं नानुमन्यन्ते, धात्वर्थे कर्म्मत्वादिसम्बन्धेनैव तदर्थान्वयस्योपपत्तेरित्याहुः।

अन्ये त्वध्याहृतेतिपदस्यैव धावनानुकूलकृतिविशिष्टमृगवाचकत्वं धावति मृग इति च तस्य तादृशार्थे तात्पर्य्यग्राहकमेव। इतिपदोत्तरलुप्तद्वितीयार्थेकर्म्मत्वस्यैव धात्वर्थेन्वय इत्याहुः। तदुभयमपि वाक्यार्थकर्म्मत्वस्थले इतिपदाध्याहारस्वीकारे तण्डुलः पचतीत्यादावपि तदध्याहारसम्भवात्सर्वत्रैव नामार्थधात्वर्थयोरन्वयस्योपगन्तुमुचितत्वादनादेयम्।

तस्माद्विशिष्टवाक्यार्थस्यैकनामार्थत्वविरहेण भेदेन धात्वर्थेन्वय इत्येव समीचीनम्। विशिष्टस्य शुद्धानतिरिक्तत्वेपि प्रकारतयोर्वैलक्षण्यात्। यद्वा दृश्धातोर्धावनकर्त्तृमृगकर्म्मकदर्शने लक्षणा, धावति मृग इति च तात्पर्य्यग्राहकम्। दृश्धातोर्लक्षणा पदान्तरस्य वेत्यत्र विनिगमकञ्च दृश्धातोर्लक्षणायां

शक्यसम्बन्धस्तादात्म्यम्, पदान्तरस्य तथात्वे तदतिरिक्तो गुरुशरीरक एव सम्बन्ध इति तदंशे लाघवमेवेति । युज्यते चैतत्, अन्यथा [1]"जानामि सीता जनकप्रसूता । ..." इत्यादौ वैयाकरणानामप्यनिर्वाह एव स्यात् । एवं क्रियाविशेष्यकान्वयबोधोपगमे चैत्रः पचतीत्यादौ चैत्रभावनयोरुद्देश्यविधेयभावस्सार्वजनीनोनुपपन्न एव स्यात् । एवं कर्त्तृकर्म्मलकारयोर्बोधस्य वैलक्षण्यानुपपत्तिः, उभयत्रैव क्रियायाः विशेषणत्वात् ।

यदि च कर्त्तृलकारस्थले व्यापारस्य कर्म्मलकारस्थले च फलस्य विशेष्यत्वम्, फलव्यापारयोः खण्डश एव धातोश्शक्तेः । विशिष्टे तथात्वेपि पक्वस्तण्डुल इत्याद्यनुरोधेन विशेष्यविशेषणभावव्यत्यासावश्यकत्वादिति विभाव्यते, तदापि वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे चैत्रो न पचतीत्यत्र चैत्रस्याधेयतासंसर्गावच्छिन्नप्रतियोगितासंसर्गेणान्वयो दुर्घटः । तस्य तथात्वेपि पाकत्वावच्छेदेन चैत्रवृत्तित्वस्य बाधात्पाकत्वसामानाधिकरण्येनैव तस्यान्वयस्य वाच्यतया नञ्समभिव्याहारेपि तथाविधान्वयस्यैवोपेयतया पचत्यपि चैत्रे पाकत्वसामानाधिकरण्येन चैत्रवृत्तित्वाभावस्य निराबाधतया चैत्रो न पचतीत्यस्य प्रामाण्यापत्तेः । नञोसमभिव्याहारे सामानाधिकरण्येन तत्समभिव्याहारे चावच्छेदकावच्छेदेनान्वयस्योपगमे "प्रतियोग्यभावान्वयौ" इति व्युत्पत्तिविरोधप्रसङ्गात् । चैत्राश्रयकः पाकाभाव इति बोधस्य तत्रोपगमे क्रियाविशेष्यकत्वनियमभङ्ग एव स्यात् ।

न च तार्किकमतेपि भूतले न घट इत्यादौ भूतलवृत्तिर्घटाभाव इत्यन्वयबोधस्यैवोपगमात् "प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ" इति व्युत्पत्तिविरोध एव, घटो भूतलवृत्तित्वाभाववानित्याकारकस्य प्रथमान्तार्थमुख्यविशेष्यताकान्वयबोधस्य जातौ न सत्तेत्यादौ समवायेन जातिनिरूपिताधेयताया अप्रसिद्धेर्नञर्थविशेष्यकस्यैवान्वयबोधस्योपेयतयात्रापि तथाविधस्यैव बोधस्यैवौचित्येनासम्भवादिति वाच्यम्, जातौ न सत्तेत्यत्र समवायसम्बन्धावच्छिन्नाधेयत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकजातिवृत्तित्वाभावप्रकारक-

---

१ जानामि सीता जनकप्रसूता ।
जानामि रामो मधुसूदनश्च ॥
वधञ्च जानामि निजं दशास्यः ।
तथापि सीता न समर्पयामि ॥ इति पूर्णश्लोकः ।

सत्ताविशेष्यकान्वयबोधस्यैवोपगमेन प्रकृतेपि तादृशबोधस्यैवोपगमात्। एवं चैत्रेण पच्यते तण्डुल इत्यादौ कर्म्मलकारे कर्त्तुरनभिधानादनभिहिते कर्त्तरि चैत्रपदात्तृतीयायास्साधुत्वम्। तत्र (कर्म्मलकारे) कर्त्तुरनभिधानम्, न (कर्म्मलकारस्य) कर्त्रवाचकत्वम्, लत्वेन लकारसामान्यस्यैव कर्त्तृवाचकतया कर्म्मलकारस्य तदवाचकत्वासम्भवात्। न च कर्त्तृवाचकतावच्छेदककुक्षौ यगाद्यनुत्तरत्वस्य प्रवेशात् पच्यत इत्यत्र लकारस्यातथात्वान्न कर्त्तृवाचकत्वमिति वाच्यम्, कर्त्तरि यकोसाधुत्वादेव चैत्रः पच्यत इत्यस्यासाधुत्वात् प्रयोजनविरहेण तत्र तस्याप्रवेशस्यैवौचित्यात्। न च तदबोधकत्वमेव तदनभिधानम्, चैत्रेण पच्यत इति वाक्यस्य चैत्रात्मककर्त्तृविषयकान्वयबोधजनकस्य तदबोधकत्वासम्भवादिति।

"अनभिहिते कर्त्तरि" इत्यस्य कर्त्तृविशेष्यतया तत्प्रातिपदिकार्थेविवक्षिते सति तत्प्रातिपदिकात्तृतीयेत्येवार्थो वैयाकरणैर्वाच्यः। तथा च क्रियाया मुख्यविशेष्यत्वे चैत्रः पचतीत्यादावपि प्रातिपदिकार्थस्य चैत्रस्य कर्त्तृविशेष्यत्वेनाविवक्षणात्ततोपि तृतीयाप्रसङ्गः। प्रथमान्तार्थस्य मुख्यविशेष्यत्वे तु तस्याख्यातार्थविशेष्यत्वेन विवक्षणादेव न तदापत्तिः। किञ्च "तदधीते तद्वेद" "तद्वहति रथयुगप्रासङ्गम्" इति सूत्राभ्यामधीते वेद वा य इत्येतद्वाक्यार्थे तद्वहति य इत्येतद्वाक्यार्थे चाणप्रत्ययो यत्प्रत्ययश्च विहितौ। तत्र व्याकरणमधीते वेद वा इति वाक्यार्थस्य शाब्दिकमते सकर्त्तृकव्याकरणाध्ययनादिरूपतया रथं वहतीति वाक्यार्थस्य च रथाभिन्नकर्म्मकसकर्त्तृकवहनरूपतया तद्वाचकत्वमेवाणादीनां स्यात्। तार्किकमते च व्याकरणाध्ययनादिकर्त्तृ रथवहनकर्त्तुरेव च तद्वाक्यार्थत्वात्तद्वाचकत्वादणादीनां वैयाकरणो रथ्य इत्यादितो व्याकरणाध्ययनादिकर्त्तुर्बोधोनपायः। न च "क्वचिद्गुणप्रधामत्वमर्थानामविवक्षितम्" इत्युपक्रम्य।

"आख्यातं तद्धितकृतोर्य्यत्रार्थस्योपदर्शनम्।
गुणप्रधानभावस्य तत्र दृष्टो विपर्य्ययः॥"

इति हरिकारिकया तद्वहतीतिसूत्रस्थेन "य एवार्थो रथं वहति स एवार्थो रथस्य बोढा..." इत्यादिभाष्येण च तद्धितादिविवरणस्थले आख्यातस्थलाद्विशेष्य-

विशेषणभावस्य वैपरीत्यमुपेयम् । तथा च वैयाकरणादिपदेभ्यो न तादृशार्थान्वयबोधानुपपत्तिरिति वाच्यम्, यो यदा व्याकरणमधीते रथं वहतीत्यस्य वैयाकरणादिपदविवरणत्वं प्रतिसन्धत्ते, तं प्रति तदा प्रथमान्तार्थमुख्यविशेष्यकान्वयबोधजनकत्वं तद्वाक्यस्यान्यं प्रति अन्यदा च क्रियाविशेष्यकान्वयबोधजनकत्वमित्यस्योपगमे कार्य्यतावच्छेदके तत्तत्कालपुरुषविशेषाणां प्रवेशान्महागौरवम् । यदि च तादृशस्थले सर्वत्रैव प्रथमान्तार्थमुख्यविशेष्यक एवान्वयबोधोभ्युपेयः, तदा तण्डुलं पचतीत्यादिवाक्यैः किमपराद्धम्, येन तत्र न सोभ्युपेयः, द्वयोर्विशेषानाकलनात् । विवरणत्वस्य विवरणजातीयत्वस्य वा पचतीत्यत्रापि पाचकपदविवरणत्वस्य सत्त्वेन विशेषानाधायकत्वात् ।

वस्तुतस्तु तार्किकमते सर्वत्र प्रथमान्तार्थमुख्यविशेष्यक एवान्वयबोध इति न नियमः, कैरप्यभियुक्तैः प्राचीनग्रन्थकारैस्तथालिखनात्, किन्तु यत्र यादृशबोधोपगमे न काप्यनुपपत्तिस्तत्र तादृश एव बोधः । अतएव पचतीत्यादौ प्रथमान्तपदासत्त्वे कृतिविशेष्यकस्य चैत्रेण सुप्यत इत्यादिभावाख्यातस्थले क्रियाविशेष्यकस्यैवान्वयबोधस्य तैरप्युपगमः (क्रियते)। उक्तस्थलयोश्चैत्र इत्यस्य, इति त्वं जानीहीत्यस्य चाध्याहारे कुसृष्टिकल्पनापत्तेः । अतएव लीलावतीप्रकाशविवरणे "यद्यप्येतद्भवने मैत्रेणैव पक्ष्यते तण्डुलम्..." इत्यादिवाक्येन "तेमनकर्त्तृकैतद्गृहाधिकरणकपाकत्वावच्छेदेन मैत्रान्यकर्त्तृकत्वाभाव एवकारेण बोधयितुमशक्यः, शब्दात्ताद्रूप्येणानुपस्थितेः" इति दीधितिकृतां शङ्कापि सङ्गच्छते । एवं न कलञ्जं भक्षयेदित्यादौ नञ्समभिव्याहृतलिङादिघटितवाक्यात् कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववदित्याकारक एव बोधो मणिकारैरभ्युपगतः। तत्र प्रथमान्तपदमध्याहृत्य बलवदनिष्टाननुबन्धित्वाभाववत्कलञ्जभक्षणानुकूलकृतिमानिति प्रथमान्तपदार्थमुख्यविशेष्यकान्वयबोध इति तु न सम्यक्, अध्याहारे प्रमाणाभावात्, तद्वाक्यस्य कलञ्जभक्षणे बलवदनिष्टानुबन्धित्वान्वयबोधद्वारा निवर्त्तकताया अनुपपत्तेश्च । कलञ्जभक्षणकर्त्तुः पुनस्तस्मान्निवृत्तिप्रयोजकत्वेपि येन कदापि कलञ्जभक्षणं न कृतं तं प्रति तथात्वासम्भवात् । तस्य कलञ्जभक्षणानुकूलकृतेरप्रसिद्धेः । अतएव च अन्ध आकाशं न पश्यतीत्यादि-

प्रयोगाणामप्युपपत्तिः, अन्धवृत्तित्वाकाशविषयकत्वोभयाभावप्रकारकस्य दर्शन-विशेष्यकस्यान्वयबोधस्यैव तत्र सम्भवात्। आकाशविषयकदर्शनाभाववानन्ध इति प्रथमान्तार्थमुख्यविशेष्यकान्वयबोधस्याप्रसिद्ध्यासम्भवात्। एवञ्च पश्य मृगो धावतीत्यादौ धावने मृगस्य कर्त्तृत्वेन धावनस्य दर्शने कर्म्मतयान्वयेन क्रियाविशेष्यकस्यैवान्वयबोधस्योपगमेपि बाधकाभावः। विशेष्यविशेषणभावस्य विवक्षाधीनतया क्वचित् क्रियाया विशेष्यत्वेप्यक्षतेः। एवं यत्र न प्रथमान्तार्थ-स्यान्वयबोधे प्रवेशस्तत्र पचति भवति, पक्ष्यति भवत्यपाक्षीद् भवतीत्यादौ वर्त्तमानादिकालवृत्तिपाककृतिवृत्तिभवनाश्रयत्वमित्याकारकस्यैवान्वयबोधस्य तत्रोपगमः। अतएव पचन्ति भवन्तीत्यादयो न प्रयोगाः, सङ्ख्यान्वययोग्यस्य तद्वाक्यार्थाघटकत्वादुत्सर्गत एकवचनस्यैव प्रसक्तेः। एतेन तत्र त्वं जानीहीत्य-स्याध्याहारेण प्रथमान्तार्थमुख्यविशेष्यताकत्वमन्वयबोधस्योपपादनीयमिति निरस्तम्। यत्र न कञ्चिदभिमुखीकृत्य तादृशप्रयोगस्तत्राध्याहारासम्भवाच्च। एतेनान्वयबोधस्य प्रथमान्तार्थमुख्यविशेष्यताकत्वोपगमे [1]"भवद्भिस्स्तूयतेत्र का।" इति स्तवकर्म्मीभूतदेवीविशेष्यकप्रश्ने [2]"स्तोत्रम्ममैतत् क्रियते" इत्यस्य स्तोत्रविशेष्यकान्वयबोधजनकवाक्यस्योत्तरत्वानुपपत्तिः, समानविशेष्यकबोध-जनकवाक्यस्यैव तथात्वात्। तस्य क्रियाविशेष्यकत्वनियमे तु प्रश्नस्यापि स्तोत्रविशेष्यकत्वेन समानविशेष्यकबोधजनकतया तदुपपत्तिः। एवं "ब्राह्मो विवाह आहूय यत्कन्या दीयते स्वयम्।" इति स्मृतिवाक्यादाह्वानपूर्वकस्य स्वयं कन्यादानस्य ब्राह्मविवाहत्वानुपपत्तिः, यत्पदेन पूर्ववाक्यार्थस्यैव परामर्शात्तस्य तदनात्मकत्वात्। क्रियायाः प्राधान्ये तु "प्रयाति पुरुषस्तस्य..." इत्यादाव-नुपपत्तिरिति तटस्थशङ्कापि निराकृता, यथासम्भवं क्वचित् क्रियायाः क्वचित्प्रथ-मान्तार्थस्य प्राधान्योपगमादुक्तानुपपत्तीनामप्रसक्तेः। अथवा प्रथमान्तपदा-समभिव्याहारे दर्शितैव रीतिः, तत्समभिव्याहारे च सर्वत्र प्रथमान्तार्थस्यैव प्राधान्यम्। न चोक्तदोषाः, आद्ये कः कुलीनः? इति प्रश्ने यस्य धनमित्यस्य

१ साब्रवीत्तान् सुरान् सुभ्रूः इति पूर्वार्द्धम्।

२ शुम्भदैत्यनिराकृतैः। इत्युत्तरार्द्धम्।

**अत्र तत्तद्धातुसमभिव्याहृतद्वितीयायास्संयोगविभागादिरर्थः, द्वितीयासाकाङ्क्षधातुत्वमेव सकर्म्मकत्वमिति शुद्धव्यापारस्य धात्वर्थतावादिनः।**

विभिन्नविशेष्यकबोधजनकस्यापि वाक्यस्य वैयाकरणैरप्युत्तरवाक्यत्वोपगमेन समानविशेष्यकबोधजकवाक्यस्यैवोत्तरत्वमित्यनियमात्। द्वितीये तादृशकन्यादानस्य ब्राह्मविवाहत्वं न स्मृत्या बोध्यते, गान्धर्वादिविवाहसाधारण्याय वहधातोः प्रापणार्थकत्वनिर्वाहाय च वरनिष्ठकन्याप्राप्त्यनुकूलविलक्षणव्यापारस्यैव विवाहत्वेन कन्यादानस्य तत्त्वविरहात्। अतएव स्मृतौ विवाहस्याष्टधा विभागस्सङ्गतः, सामान्यधर्म्माक्रान्तानां विशेषरूपेण प्रतिपादनस्यैव विभागत्वात्।

तथा च यत् यदर्थं यादृशविवाहात्मकव्यापाराय आहूय स्वयं दीयते कन्या, स व्यापारो ब्राह्मो विवाह इत्येवोक्तस्मृतेरर्थं इति न कोपि दोषः। "इह भवने..." इत्यादिस्थलेप्येवकारार्थव्यवच्छेदस्योभयत्वावच्छिन्नप्रतियोगिताकतया भानोपगमेनैतद्भवनाधिकरणकपाककर्म्मत्वमैत्रान्यकर्तृकत्वोभयाभाववत्तेमनमिति प्रथमान्तार्थप्रधानक एव बोधः। अन्ध आकाशं न पश्यतीत्यादावपि नञर्थस्य द्विधा भानोपगमेनाकाशविषयताकत्वाभाववद्दर्शनाभाववानन्ध इति, चैत्र आकाशं न पश्यतीत्यादौ चाकाशविषयताकत्वाभाववद्दर्शनवाँश्चैत्र इत्यस्य प्रथमान्तार्थमुख्यविशेष्यकस्यैव बोधस्य सम्भवात्। पश्य मृगो धावतीत्यादौ तूक्तैव गतिः। मेघो गर्जति शृणिवत्यादौ तु गर्जनकर्त्तुर्मेघस्य श्रवणे कर्म्मतयान्वयासम्भवेपि "दधानो निध्वानमश्रूयत पाञ्चजन्यः।..." इत्यादाविव "सविशेषणे हि" इति न्यायाद् गर्जनस्य तथात्वात्। अन्यथा मृगः पलायते, अत्ति शस्यं मारयेत्यादौ बोधस्य क्रियाविशेष्यताकत्वेपि क्रियाया मारणासम्भवादनुपपत्तिरेव स्यादित्यादिकं सुधीभिर्विभावनीयम्।

**अत्र** द्वितीयार्थविचारे। व्यापारमात्रस्य धात्वर्थत्वे फलावच्छिन्नव्यापारवाचकत्वविरहाद् गम्यादीनां सकर्म्मकत्वं न स्यादित्यतस्तदपि तेषां भिन्नस्वरूपमेवेत्याह—**द्वितीये**ति। तच्च फलान्वितव्यापारबोधकधातुत्वपर्य्यवसन्नं

**परे तु धात्वर्थफलावच्छिन्नव्यापारे द्वितीयार्थस्य [1]फलस्यान्वयमभ्युपगच्छन्ति। तदुभयमपि चिन्त्यम्। ८२।**

बोध्यम्। एवञ्च व्यापारमात्रवाचकत्वाविशेषेपि गम्यादीनां द्वितीयासाकाङ्क्षत्वात्सकर्म्मकत्वम्, एधत्यादीनां तथात्वविरहादकर्म्मकत्वमित्याशयः। **शुद्धव्यापारस्ये**ति। व्यापारत्वमात्रावच्छिन्नस्येत्यर्थः। **द्वितीयार्थस्य फलस्ये**ति। संयोगादिकं फलमेव तन्मते द्वितीयार्थः। तस्यानुकूलतया संयोगावच्छिन्नव्यापारेन्वय इत्यर्थः। **चिन्त्यमि**ति। चिन्ताबीजं व्युत्पत्तिवादे विस्तरेण प्रतिपादितमिति नेह तन्यते। ८२।

मीमांसकैः "भावप्रधानमाख्यातम्" इत्यत्र भावपदस्य भावनापरपर्य्यायकृतिपरतया भावनाविशेष्यक एव बोध आख्यातसमभिव्याहारे उपेयते। तथा च पचेन्न पचेच्चैत्रः, चैत्रः शुक्लं तण्डुलं काष्ठैः स्थाल्यां पचति न पचतीत्यादौ सर्वत्रैव लिङर्थप्रवर्त्तनायाः स्वज्ञानजन्येष्टसाधनत्वाद्यनुमितिजन्यत्वस्वरूपप्रयोज्यत्वसंसर्गेण आधेयत्वस्वरूपस्वकर्त्तृकत्वसंसर्गेण प्रथमान्तार्थचैत्रादेर्विषयताविशिष्टानुकूलत्वसंसर्गेण करणत्वेन वा स्वसाध्यतृप्त्यादिफलोद्देश्यकत्वरूपेणाख्यातार्थकृतौ, नञ्समभिव्याहारस्थले च लिङर्थनिवर्त्तनायाः स्वज्ञानप्रयोज्यानिष्टसाधनत्वाद्यनुमितिप्रजोज्यत्वेन तस्यामेव प्रथमान्तार्थचैत्रस्य स्वकर्त्तृकत्वसंसर्गेण, द्वितीयान्तार्थतण्डुलकर्म्मत्वस्य शुक्लकर्म्मत्वस्य च स्वनिरूपकपाकविषयकत्वसंसर्गेण तस्यामेव चैत्रस्याधेयतया नञर्थाभावे तस्य प्रतियोगितया तस्यामेव तण्डुलकर्म्मत्वादीनाञ्च प्रतियोगितयाभावे तस्य स्वाश्रयपाकविषयकत्वेन तस्यामेवान्वयः। अथवा स्ववृत्त्यभावप्रतियोगित्वस्वाभाववत्पाकादिविषयकत्वादिसंसर्गेण चैत्रतण्डुलकर्म्मत्वादेरपि तस्यामेवान्वयः। नीलो घटोस्तीत्यादावपि नीलघटपदार्थयोर्धात्वर्थान्विताख्यातार्थे सत्ताश्रयत्वे भावनायामेवान्वयः। एवं पचत्येव चैत्रः, पचत्यपि चैत्रः, चैत्र एव पचतीत्यादावपि स्ववृत्त्यभावप्रतियोगिक्रियाकर्त्तृत्वनिष्ठभेदप्रति-

---

१ फलान्वय० इति मु० पु० पा०।

शाब्दिकतार्किकयोर्मतं प्रदर्श्य भाट्टदर्शनसिद्धान्तः प्रस्तूयते—

आख्यातार्थे भावनायां वदन्तः कारकान्वयम् ।
भाट्टाः [1]कर्त्तृत्वकर्म्मत्वाद्यखण्डमनुशासति ॥८३॥

आख्यातार्थे भावनायां प्रधानभूतायां कारकाणामन्वयः, न तु धात्वर्थे, तस्यापि भावनायामन्वयात् कारकतया पदार्थानां कारकाणां परस्परमन्वयायोगात् । कारकन्तु कर्म्मकर्त्तृत्वादिकमखण्ड एव पदार्थः । [2]अतएवाध्वर्य्युयजमानयोर्वाक्सय्यँमभावनाकर्म्मत्वं दम्पत्योः कर्त्तृत्वं व्यासक्तमित्युपपद्यत इति भाट्टाः । ८३ ।

योगित्वादिसंसर्गेण चैत्रादेर्भावनायामेवान्वयः । कर्म्माख्यातस्थलेपि यथाख्यातस्य कर्त्तरि लक्षणा, तथैव कर्म्मण्यपीति भावना तत्र प्रतीयत एव । तस्यामेव तण्डुलादेः स्वकर्म्मतानिरूपकपाकविषयत्वसंसर्गेण चैत्रकर्त्तृकत्वस्य चान्वय इति सर्वत्राख्यातार्थस्यैव विशेष्यतया भानम् । तथा च भावनाविशेष्यकान्वयबोधं प्रत्याख्यातजन्योपस्थितित्वेनैकमेव कारणत्वम्, तादृशी व्युत्पत्तिरप्येकैवेति न न्यायमतवद् गौरवम्, किन्तु महालाघवमिति तन्मतमपि प्रसङ्गाद्दर्शयति—**आख्यातार्थ** इत्यादिना । **कारकाणामन्वय** इति । दर्शितरीत्या सर्वेषामेव कर्म्मकरणादीनान्तत्रैवान्वय इत्यर्थः । **न तु धात्वर्थे** इत्यत्र हेतु**स्तस्यापी**त्यादिः । धात्वर्थस्यापि भावनायामेवान्वयाद् भावनान्वितत्वस्यैव तन्मते कारकत्वात्तेषाञ्च "गुणानाञ्च परार्थत्वात्" इति न्यायेन परस्परमन्वयायोग्यत्वादित्यर्थः । **अखण्डपदार्थ** इति । तदुपगमे हेतुरग्रे विवरण एव दर्शयिष्यति । **अतएवे**ति । इदमप्यग्रे विवेचयिष्यति । ८३ ।

ननु तन्मते फलव्यापारोभयवाचित्वस्यैव सकर्म्मकत्वात्तदाश्रयस्यैव कर्म्मकारकान्वययोग्यत्वात् प्रकृते भावनामात्रवाचकस्याख्यातस्य सकर्म्मकत्वा-

---

१ कर्त्तृत्वकर्म्मत्वाद्यखण्डमिति शासति इति मु० पु० पा० ।
२ अतएवाध्वर्युयजमानयोर्वाक्संयमनभावनाकर्म्मत्वम् इति मु० पु० पा० ।

नन्वाख्यातस्य फलव्यापारोभयवाचित्वाभावात्सकर्म्मकत्वमाख्यातार्थभावनायामनुपपन्नमिति । मैवम्,

**करोतिरुत्पादयतिस्साधिर्भावयतिर्जनिः ।**
**विवृण्वते तिङन्तेनोत्पत्तिव्यापारयोरसौ ॥८४॥**

तिङ्प्रत्ययस्तावदुत्पत्त्यनुकूलव्यापारे उत्पत्तिव्यापारयोर्वा वर्त्तते । एकपदार्थयोरन्वयबुद्धावनुकूलत्वस्य संसर्गतयैव लाभसम्भवात् । अतएवोत्पत्तिपरिच्छिन्नव्यापारवाचिनः करोत्यादय आख्यातं विवृण्वते । ८४ ।

भावात्तत्र कथं कर्म्मकारकस्यान्वय इत्याशङ्कते—**नन्वि**त्यादिना । विवरणेनाख्यातस्य फलव्यापारोभयवाचित्वप्रत्ययात्तस्य तथात्वमक्षतमित्याशयेन समाधत्ते—**मैवमि**ति । **विवृण्वत** इति । आख्यातद्विवचनबहुवचनयोस्सङ्ख्यार्थकताया द्वित्वबहुत्वादिबोधकसुपश्चादीनाञ्चाभावे [1]"चन्द्रे कलङ्कः..." इत्यादौ "कथयन्ति..." इत्याद्याख्यातेनैवोपात्तस्य बहुत्वस्य चन्द्रादावन्वयदर्शनादत्रापि तादृशबहुत्वस्य करोत्यादावन्वयो बोध्यः । **अतएव** तिङ्प्रत्ययस्योत्पत्तिस्वरूपफलव्यापारोभयवाचकत्वादेव । एकपदोपात्तयोरपि तयोर्धात्वर्थफलव्यापारोभयवदन्वयो न विरुद्ध इत्यर्थः । **विवृण्वत** इति । पचतीत्यत्र पाकं करोति उत्पादयति जनयति वेत्युत्पत्त्यनुकूलव्यापारार्थकेन करोत्यादिना तिङो विवरणदर्शनादनुकूलत्वस्य संसर्गतयैव लाभसम्भवादुत्पत्तिस्वरूपं फलं व्यापारश्चोभयमेव तिङर्थ इत्यर्थः । ८४ ।

---

१ चन्द्रे कलङ्कस्सुजने दरिद्रता ।
विकासलक्ष्मीः कमलेषु चञ्चला ॥
मुखाप्रसादः सधनेषु सर्वदा ।
विधेः कलङ्कं कथयन्त्यभिज्ञाः ॥ इति पूर्णश्श्लोकः ।

**भावनावयवोत्पत्तावाधारत्वेन सङ्गतम् ।**
**कर्म्म तद् ब्रुवते कापि धातवः कुत्रचित् फिषः ॥८५॥**

पचतीत्यत्र पाकं करोत्युत्पादयति साधयति भावयति जनयतीत्यादिविव्रियमाणस्याख्यातस्यार्थे उत्पादनायामेकदेशीभूताया-[1]मुत्पत्तावाधाराधेयभावेनान्वितः पाको धात्वर्थ एव कर्म्म । अतएव विवरणवाक्ये पाकपदात् कर्म्मत्वानुवादिका द्वितीया । यत्र चौदनं पचतीत्यत्राख्यातार्थीभूतायामुत्पत्तावन्वययोग्यमोदनादि-वृत्तित्वं द्वितीयोपस्थापितम्, तत्र फिषां प्रातिपदिकानामर्थ एव कर्म्म, धात्वर्थस्य तत्र करणत्वेनौदनोत्पत्तावन्वयः । अतएव पाकेनोदनं भावयतीत्येव तादृशवाक्यस्य विवरणम् । ८५ ।

तत्र तिङर्थभावनाजन्योत्पत्तिरूपेण फलेनान्वितं कर्म्म द्विधा, कचिद्धात्वर्थः कचित्प्रातिपदिकार्थ इति दर्शयति—**भावनेत्या**दिना । तत्राद्यमुदाहरति—**पचतीत्यत्रे**ति । **एकदेशीभूतायामि**ति । उत्पत्त्यनुकूलो व्यापार उत्पादना, तत्रानुकूलत्वेन विशेषणीभूतायामित्यर्थः । **अतएव** पच्धात्वर्थस्य पाकस्या-धेयतया करोत्यर्थैकदेशे उत्पत्तावन्वयादेव । **द्वितीये**ति । अन्यथा करोतेः कृतिमात्रार्थकत्वे पाके तस्यासत्त्वाद्धात्वर्थतावच्छेदकत्वस्य कृतावसत्त्वाच्च तदुत्तरं द्वितीयासाधुरेव स्यादिति भावः । द्वितीयमुदाहरति—**यत्र चौदन-मि**ति । तत्र विवरणवाक्यस्थपाकपदार्थपच्धात्वर्थस्य कथं कुत्रान्वय इत्याह—**धात्वर्थस्ये**ति । **अतएव** पाकस्य करणत्वेनोत्पत्तावन्वयादेव । ८५ ।

---

१ ० मुत्पुत्तौ वा० इति मु० पु० पा० ।

अतएव—

**भावनाकर्म्मभूतस्य धात्वर्थस्य विशेषणे ।**
**अग्निहोत्रं जुहोतीति द्वितीया प्रतिपद्यते ॥८६॥**

यत्र नित्यस्थले फलान्तरं [1]न भावनान्वययोग्यम्, तत्र नित्यतया प्राप्तकर्त्तव्यताको जुहोतिधात्वर्थ एव भाव्यतया कर्म्म । अतएव जुहोतिसमानाधिकरणे कर्म्मनामधेयाग्निहोत्रपदे द्वितीया, कर्म्मविशेषणपदत्वात् नीलं घटमानयेत्यत्र नीलपद इवेत्युपपद्यते । ८६ ।

**विना भाव्यान्तरं यत्र नोपपन्ना प्रवर्त्तना ।**
**श्रुतं वा कर्म्म करणीभूय तत्र क्रियान्वयः ॥८७॥**

यस्यां भावनायां स्वर्गादिभाव्यं विना निष्फलत्वेन लिङुपात्तप्रवर्त्तनाया अन्वयासम्भवः, तत्र क्रियाया न कर्म्मत्वेनान्वयः, एक-

**अतएव** तिङ्प्रत्ययस्य फलव्यापारोभयवाचित्वादेव । **यत्र नित्यस्थल** इति । नित्यकर्म्मणः फलाजनकत्वादग्निहोत्रस्य नित्यतया फलाभाव इत्यर्थः । **नित्यतये**ति । यदकरणे प्रत्यवायश्रवणं तस्यैव कर्म्मणो नित्यत्वाभिधानेनाग्निहोत्राकरणे प्रायश्चित्तोपदेशात्तस्य नित्यत्वेन करोत्यर्थककर्म्मत्वस्वरूपकर्त्तव्यत्वस्य तत्र वेदबोधितत्वमिति भावः । **जुहोतिधात्वर्थ** इति । अग्निसंयोगावच्छिन्नव्यापारानुकूलव्यापार इत्यर्थः । **भाव्यतये**ति । भावनाजन्यत्वेनेत्यर्थः । **अतएव** धात्वर्थस्य तत्र कर्म्मत्वादेव । **कर्म्मनामधेये**ति । तादृशधात्वर्थीभूतव्यापारस्यैवाग्निहोत्रेतिनामधेयमिति तत्राभेदेनान्वितस्याग्निहोत्रस्य कर्म्मणि विशेषणत्वान्नीलादिपदोत्तरं द्वितीयावत्तदुत्तरं द्वितीयेत्यर्थः । ८६ ।

काम्यस्थले नोक्तरीतिः, किन्तु भिन्नैवेत्याह—**विने**ति । **प्रवर्त्तना** लिङर्थः । **नोपपन्ना** लिङर्थभावनायामनन्विता । **कर्म्म श्रुतं वा** इति । वाचकपदेनोपस्थापितमाक्षिप्तं कर्म्म यत्रास्ति तत्रेत्यर्थः । **करणीभूये**ति । करणत्वेन धात्वर्थस्य क्रियाया अन्वय इत्यर्थः । एतदेव विवृणोति—**यस्यामि**त्यादिना । **अन्वयासम्भव** इति ।

---

१ न फलान्तरम्० इति मु० पु० पा० ।

**कर्म्मावरुद्धे कर्म्मान्तरस्यानाकाङ्क्षितत्वात्, किन्तु करणत्वेन । अतएव "सोमेन यजेत" इत्यत्र स्वर्गस्वरूपेण स्वर्गकामपदोपात्तेनाक्षिप्तेन वा भाव्येन सकर्म्मिकायां भावनायां करणतया यागादेरन्वयः । तथा च स्वर्गवृत्तेर्यागकरणिकाया उत्पत्तेरनुकूलो व्यापारः प्रवर्त्तनागोचर इति यजेतेत्यत्र वाक्यार्थः । अतएव यजेतेत्यस्य यागेन स्वर्गं भावयेदिति विवरणम् । ८७ ।**

**यजत्यर्थसमानाधिकरणे हि विशेषणे ।**
**तृतीया दृश्यते यागकरणत्वानुवादिका ॥८८॥**

**"ज्योतिष्टोमेन यजेत" इत्यत्र कर्म्मनामधेयज्योतिष्टोमपदात्तृतीया श्रूयते । सा च यागभावनायास्संसर्गतया लब्धस्य करणत्वस्यानुवादकत्व एव सङ्गटते, करणपदसमानाधिकरणे नाम्नि तृतीयायाः कुटिलेन दण्डेन गामानयेत्यादौ दर्शनात् । ८८ ।**

काम्ये स्वर्गादिफलव्यतिरेकेण बहुवित्तव्ययायाससाध्ययागादेर्भाव्यत्वासम्भवादित्यर्थः । **कर्म्मावरुद्धे**ति । तत्र स्वर्गादेरेव भाव्यत्वेन कर्म्मतया धात्वर्थेन्वयेन किम्भाव्यमितिकर्म्माकाङ्क्षानिवृत्तेरित्यर्थः । केन भाव्यमितिकरणाकाङ्क्षाया अनिवृत्तेर्धात्वर्थस्य करणत्वेनैव तस्यामन्वय इत्याह—**किन्त्वि**ति । **पदोपात्तेने**ति । "स्वर्गकामो यजेत" इत्यत्र स्वर्गकामपदस्य श्रवणादेव तदुपात्तस्वर्गस्य भावनायामन्वयः । "विश्वजिता यजेत" "सोमेन यजेत"... इत्यादौ च स्वर्गस्याक्षेपादेव तथान्वय इत्याशयः । **अतएव** स्वर्गस्य कर्म्मतया धात्वर्थस्य करणतयाख्यातार्थभावनायामन्वयादेव । ८७ ।

अतएव च धात्वर्थयागादिकर्म्मनामधेयवाचिज्योतिष्टोमादिपदात् करणीभूतयागादिसामानाधिकरण्यानुरोधात्तृतीयेत्याह—**यजत्यर्थे**त्यादिना । **विशेषणे** ज्योतिष्टोमादिपदे । ८८ ।

नन्वेवं "गोदोहेन पशुकामस्य प्रणयेत्" "दध्नेन्द्रियकामस्य जुहुयात्..." इत्यादौ प्रणयनहवनादेर्धात्वर्थस्य न करणतया भावनान्वयः, दधिगोदोहनादिना करणेनावरुद्धायां करणान्तराकाङ्क्षानुदयात् । नापि कर्म्मतया, पश्विन्द्रियभाव्यावरुद्धायां भाव्यान्तरनिराकाङ्क्षत्वादिति चेत् ?

क्वचित्प्रकरणोपात्तक्रियाया अनुवादकः ।
धातुरन्वयवैधुर्य्यादाख्यातन्न व्यपेक्षते ॥८९॥

यत्र प्रकरणवशादुपस्थितो धात्वर्थः शब्दोपात्ते भावनाकरणकर्म्मणी, तत्र केवलस्य प्रत्ययस्यासाधुत्वादाख्यातप्रयोगमात्रप्रयोजनको धातुरनुवादकः, न तु तदर्थो वाक्यार्थे निविशते, भावनायां कर्म्मत्वकरणत्वान्यसंसर्गेण क्रियाया अनन्वयात् तयोश्चाकाङ्क्षाविरहात् । ८९ ।

यत्र कर्म्मकरणोभयावरुद्धभावनायां तयोरनाकाङ्क्षितत्वात् कर्म्मत्वकरणत्वान्यसंसर्गेण च धात्वर्थस्य भावनायामन्वयायोगः कथं तादृशस्थले तस्य तस्यामन्वय इत्याशङ्कते—**नन्वेवमि**ति । गोदोहस्य दध्नश्च करणतया पशुकामेन्द्रियकामपदोपात्तयोः पश्विन्द्रिययोश्च कर्म्मतया धात्वर्थे हवनेन्वयात् किम्भावयेत् ? केन भावयेत् ? इत्याकाङ्क्षाद्वयस्यापि निवृत्तिरिति शङ्कितुराशयः ।

दर्शितस्थलयोर्धात्वर्थोनन्वित एव, तद्वाक्ययोर्होमप्रकरणस्थत्वादुपस्थितस्य होमस्यानुवादको धातुः, केवलस्य प्रत्ययस्यासाधुत्वादाख्यातप्रयोगप्रयोजनकतयोपयुज्यते, न तु तदर्थो वाक्यार्थे निविशत इत्याशयेन समाधत्ते—**क्वचिदि**ति । **आख्यातन्न व्यपेक्षते** ( इति ) । आख्यातार्थे स्वार्थबोधन्न जनयतीत्यर्थः । ८९ ।

हन्तैवम्, अप्राप्तधात्वर्थके पदोपात्तकर्म्मकरणके "सोमेन यजेत..." इत्यादौ क्रियाया भावनान्वयो दुर्घट इति चेत् ?

**सोमादिशब्दे मत्वर्थलक्षणामवलम्ब्य यः ।**
**विशिष्टविधिरत्रापि भावनाकरणं क्रिया ॥९०॥**

"सोमेन यजेत" इति वाक्यं सोमगुणविशिष्टं यागमेव भावना-करणतयाभिधत्ते । तदुपपादनाय सोमपदस्य सोमवति लक्षणा स्वीकर्त्तव्या । तेन सोमवता यागेन स्वर्गं भावयेदिति वाक्यार्थः ।९०।

एवं सति "सोमेन यजेत" इत्यत्रापि धात्वर्थस्य भावनायामन्वयोनुपपन्न इत्याशङ्कते—**हन्तैवमि**ति । **अप्राप्तधात्वर्थक** इति । एतेन पूर्वस्थल इवात्रापि धात्वर्थस्य प्रकरणादिनाप्राप्ततयाख्यातार्थेन्वयविरहे इष्टापत्तिर्न्न कर्त्तुं शक्यत इति दर्शितम् । **पदोपात्तकर्म्मकरणक** इति । सोमपदस्य श्रुतत्वात्स्वर्गपदस्या-श्रुतत्वेपि प्रवर्त्तनान्वयानुरोधेन स्वर्गकामपदस्याक्षेपात्तस्यापि पदोपात्तत्वं बोध्यम् । तत्र धात्वर्थस्य यागस्यैव करणतया भावनायामन्वयः । सोमपदस्य सोमवति लाक्षणिकतया सोमवदर्थकत्वेन विशेषणवाचित्वादुक्ततृतीयावत्तत्रापि तृतीयेत्याशयेन समाधत्ते—**सोमादी**ति । अत्रेदमपि बोध्यम् । "व्रीहीन-वहन्ति..." इत्यादौ व्रीह्यादीनां सिद्धत्वाद् भावनाफलोत्पत्तावन्वयायोगात् तत्पदोत्तरं द्वितीयाया अनुपपत्तेस्संस्कार्य्यत्वमेव तेषां कर्म्मत्वम्, संस्कारद्वारा तेषामवहननकरणकभावनाफलोत्पत्तावन्वयः । एवञ्चावहननेन व्रीहीन् भावये-दित्यस्यैव तद्विवरणत्वम् । न चैवमपि "सक्तून् जुहोति..." इत्यादौ सक्तूनां सिद्धत्वाद् भाव्युपयोगविरहेण संस्कार्य्यत्वाभावाच्च कर्म्मत्वाद्यनुपपत्तिस्तद-वस्थैवेति वाच्यम्, तत्र करणार्थकत्वेनैव द्वितीयाया उपपत्तेः, सक्तुषु कर्म्मत्वविरहेपि क्षतिविरहात् सक्तुभिर्होमं भावयेदित्यस्यैव तदर्थत्वात् । भाव्यत्वं तत्र होमस्यैव, तच्च फलान्तरसाधनतया यथा पचतीत्यादौ पाकस्य ।

**नन्वेवमुत्पत्त्यवच्छिन्नव्यापारे भावनायामुत्पत्तावधिकरणतयान्वितं कर्म्म, करणतयान्वितं करणम्, व्यापारांशेधिकरणत्वेनान्वितः कर्त्तेत्यधिकरणत्वमाधेयत्वं वा करणत्वं कार्य्यत्वं वा तृतीयादीनामर्थोस्तु; कृतमखण्डकर्तृत्वकरणत्वकर्म्मत्वादिस्वीकारेणेति चेत् ?**

तदुक्तं भट्टपादैः—

"भूतभाव्युपयोगं हि संस्कार्य्यं द्रव्यमिष्यते ।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित् ।।
प्राधान्यमेव तत्रापि द्वितीया वदति स्वतः ।
विरोधात्तेन सम्बन्धी गुणाभावस्तु लक्ष्यते ।।" इति ।

अस्यार्थः—भूतोपयोगस्य संस्कार्य्यतया भाव्यत्वं यथा—बर्हिर्जुहोति..." इत्यादौ परिस्तरणोपयुक्तानां बर्हिषाम्, तत्र होमेन बर्हिर्भावयेदित्यर्थः । भाव्युपयोगस्यापि संस्कार्य्यत्वेन भाव्यत्वं यथा—"व्रीहीनवहन्ति..." इत्यादौ भाविपुरोडाशाद्युपयोगवतां व्रीहीणाम् । सक्तूनान्तु तदुभयोपयोगविरहान्न संस्कार्य्यत्वेन भाव्यत्वं सम्भवतीति । तथाङ्गानामेव भाव्यत्वम्, भाव्यत्वविरहेङ्गत्वस्य विरहात्प्राधान्यमेव तेषां प्रधानतया भाव्यत्वमेव द्वितीया वदति । तच्च न सम्भवति स्वतो विरोधात् सिद्धानां सक्तूनां भाव्यत्वविरहात् तेन सम्बन्धी करणादिर्लक्ष्यते, सगुणाभावः भूतभाव्युपयोगवदङ्गान्य इति । ९० ।

पूर्वोक्तं कर्म्मत्वकरणत्वादीनामखण्डत्वं सिद्धान्तयितुमाक्षिपति—**नन्वेवमि**ति—**अधिकरणतया** अधिकरणतानिरूपकत्वेनाधेयत्वेनेति वा । तदुभयान्यतरस्यैव मतभेदेन द्वितीयार्थत्वात् । **तृतीयादीनामर्थोस्त्वि**ति । **आदि**पदाद् द्वितीयाप्रथमयोः परिग्रहः । तथा च कर्म्मत्वादयो द्वितीयादीनामर्था धात्वर्थतावच्छेदकफलवत्त्वादिकमन्यत्र निरुक्तस्वरूपमेव, न तदतिरिक्तमखण्डस्वरूपमित्याक्षेपकाशयः ।

**स्वर्गे तिङर्थतावच्छेदकोत्पत्तिफलवत्त्वस्य स्वरूपेण व्रीह्यादौ धात्वर्थतावच्छेदकीभूतावहननव्यापारविशेषस्य स्वजन्यसंस्कारकर्म्मत्वसंसर्गेण सत्त्वाद्धा-**

उच्यते—

**भावनाकर्म्मणि स्वर्गे व्रीहौ धात्वर्थकर्म्मणि।**
**कर्म्मानुगतबुद्ध्यैवाखण्डं कर्म्मत्वमिष्यते ॥९१॥**

"स्वर्गकामो यजेत" इत्यत्र स्वर्गो भावनाया "व्रीहीनवहन्ति" इत्यत्र व्रीहिर्धात्वर्थावहननस्य कर्म्मेत्यनुगत्य प्रतीयते व्यवह्रियते च। तत्र धात्वर्थतावच्छेदकेन तिङर्थतावच्छेदकेन सम्बन्धो नानुगमेन निर्वक्तुं शक्यत इति पदप्रमाणकं कर्म्मत्वमखण्डमनुगतमभ्युपेतव्यम्। ९१।

एवं कर्म्मत्वकर्तृत्वादेरखण्डत्वादेव—

**विधिवाक्येषु कर्म्मत्वमध्वर्य्युयजमानयोः।**
**दम्पत्योरपि कर्तृत्वं व्यासक्तमिति युज्यते ॥९२॥**

"अध्वर्य्युयजमानौ वाचं यच्छतः" इत्यत्राध्वर्य्युयजमानयोः कर्म्मत्वम्, "क्षौमे वसानावग्नीनादधीताम्" इत्यत्र दम्पत्योः कर्तृत्वमेकमेव द्वयोः पर्य्याप्यत इति। अधिकं विधौ बोधयिष्यते। ९२।

त्वर्थतिङर्थत्वान्यतरावच्छेदकत्वेन फलानां कथञ्चिदनुगमेपि तत्संसर्गाणां तत्र तत्र भिन्नतयानुगमासम्भवादखण्डकर्म्मत्वं स्वर्गव्रीह्याद्यनुगतम्, एवं करणत्वादिकमपीत्याशयेन सिद्धान्तयति—**उच्यत** इत्यादिना। **पदप्रमाणकमि**ति। संस्कार्य्ये व्रीह्यादौ भाव्ये च स्वर्गादौ कर्म्मपदादनुगतकर्म्मत्वव्यवहारेणेत्यर्थः। ९१।

**अध्वर्य्युयजमानयोः कर्म्मत्वमि**ति। तत्र **वाचमि**त्यस्य द्वितीयान्तत्वेपि तदर्थस्य वाचः संयमकरणकभावनाजन्यभाव्यत्वस्य संयमस्य भाव्यत्वेन भावनायामन्वयात्कर्म्मत्वम्। इत्थञ्च वाचः संयमनभावनाश्रयतयाध्वर्य्युयजमानयोः कर्तृत्वेपि वाक्संयमने संस्कार्य्यतया तयोः कर्म्मत्वमप्यविरुद्धमित्यर्थः। **कर्तृत्वमेकमेवे**ति। आधानभावनाश्रयतया पत्युरेव कर्तृत्वेपि पत्न्या अपि तदेवाधानकर्तृत्वमित्यर्थः। **अधिकमि**ति। कर्तृत्वस्य कृतिरूपतयैकत्वं तदुभयवृत्तित्वञ्च कथमित्यादिकमित्यर्थः।

स्यादेतत्, मतत्रयेपि घटं जानातीत्यादावावरणभङ्गः प्राकट्यं विषयतास्वरूपं वा धात्वर्थफलम्, अजन्येपि व्यापारविशेषणे धात्वर्थान्तरे फलपरिभाषामादाय कर्म्मसंज्ञाप्रवृत्तेः। अखण्डकर्म्मत्वपक्षेपि दर्शनान्तराभिमतकर्म्मत्वव्यङ्ग्यस्यैव तस्याभ्युपगमात्।

एवमपि भगवान् भगवन्तं जानात्यात्मनात्मानं वेत्सीत्यादौ भगवतः क्षेत्रज्ञस्य वाभेदाद् व्यापारफलयोस्तुल्याधिकरणत्वात् परया

अत्र तिङर्थभावनाफलोत्पत्त्यन्वितस्य द्वितीयार्थत्वे ओदनं पचतीतिवत्स्वर्गं यजेतेत्यादिप्रयोगप्रसङ्गः, तण्डुलं पचति ग्रामं गच्छतीत्यादौ तण्डुलादीनां भाव्यत्वसंस्कार्य्यत्वविरहेण द्वितीयानुपपत्तिश्च। सम्बन्धस्य सम्बन्धिनो वा तत्र द्वितीयार्थत्वेन तण्डुलसम्बन्धिपाकग्रामसम्बन्धिगमनयोरेव तत्र प्रतीतिरित्यस्योपगमेपि ग्रामो गमिकर्म्मेति प्रतीतिव्यवहारयोरनुपपत्तिः, भाव्यत्वसंस्कार्य्यत्वाभ्या विना तदभिव्यङ्ग्यस्यातिरिक्तकर्म्मत्वस्य विरहादित्यादिकं दूषणं चिन्तनीयम्। ९२।

**मतत्रयेपी**ति। शाब्दिकमतान्तर्गतावरणभङ्गप्राकट्यविषयतानां फलत्ववादमतानां शाब्दिकमतत्वेनैक्याद् दर्शिततार्किकमीमांसकमताभ्यां त्रैविध्यं बोध्यम्। विषयत्वादीनां धात्वर्थव्यापाराजन्यत्वेपि धात्वर्थे विशेषणतया भासमानस्यैव फलत्वमिति पूर्वं परिभाषणान्न तेषां फलत्वानुपपत्तिरिति स्मारयति— **अजन्येपी**ति। **अखण्डकर्म्मत्वपक्षेपि** (इति।) तस्य नैयायिकादिसिद्धकर्म्मत्वाभिव्यङ्ग्यतया यत्रैव दर्शनान्तराभिमतं कर्म्मत्वं तत्रैवाखण्डकर्म्मत्वमपीत्यर्थः।

**एवमपि** दर्शितमतत्रये आवरणभङ्गादेर्धात्वर्थफलत्वेपीत्यर्थः। **भगवत** ईश्वरस्य, **क्षेत्रज्ञस्य** जीवात्मनः। **अभेदा**दिति **व्यापारफलयोस्तुल्याधिकरणत्वे** हेतुः। **तुल्यत्व**मेकत्वमात्रं समानाधिकरणेत्यत्र समानत्वं यथा। तथा च व्यापाराश्रयत्वेन कर्त्तृत्वस्य फलाश्रयत्वेन कर्म्मत्वस्य भगवदादिषु सत्त्वेपि कर्त्तृसंज्ञायाः करणकर्म्मसंज्ञाबाधकत्वात् कथं भगवन्तमित्यादिप्रयोगसाधुत्व-

**कर्म्मसञ्ज्ञया कुतो न बाधः? कथं वा तत्र क्रियायाः परसमवेतत्वम्? ।**

**यत्त्ववच्छेदकभेदादेकस्यापि कर्त्तृत्वकर्म्मत्वोभयन्न विरुद्धमिति । तन्न, भेदाभेदवादोपगमे चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तेस्तथापि दुर्वारत्वादिति चेत्? सत्यम् ।**

**आधेयत्वञ्च भेदञ्च युगपद् ब्रुवतोप्यमः ।**
**जानासि त्वां त्वमित्यादौ भेदहानेन लक्षणा ॥९३॥**

**यद्यपि त्वमेव त्वां जानासीत्यादौ विषयतास्वरूपफलगाम्याधेयत्वमात्रमभिधया प्रतिपादयितुममा न शक्यते, तस्य पुष्पवन्तादिपदवदेकयोक्त्या फलगाम्याधेयत्वं कर्त्रादिगामिभेदश्चाभिधातुमेव सामर्थ्यात्, तथापि भेदांशापहारेणाधेयत्वमात्रे द्वितीयाया लक्षणा सम्भवत्येव,**

मिति भावः । **परसमवेतत्वमि**ति । तार्किकमते भेदस्यापि द्वितीयार्थत्वात् प्रतियोगितावच्छेदकत्वसंसर्गेण क्रियायामन्वयस्योक्तत्वादुक्तस्थले ज्ञानाद्यात्मकधात्वर्थक्रियायां भगवदादिवृत्तिभेदप्रतियोगितावच्छेदकत्वविरहादित्यर्थः ।

**यत्त्वि**ति । **अवच्छेदकभेदादि**ति । ज्ञानविषयताया ज्ञानाश्रयत्वस्य च स्वस्वावच्छेदकभेदाद्भगवदादिवृत्तित्वमित्यर्थः ।

**सत्यमि**त्यर्द्धाङ्गीकारे । भेदस्य तत्र बाधात्तदंशबोधस्यानभ्युपगमात् । **अमो भेदहानेन** भेदांशपरित्यागेनाधेयत्वमात्रे लक्षणेत्यर्थः । भेदाधेयत्वयोर्द्वयोः शक्यत्वेप्येकांशपरित्यागेनापरांशस्य शक्त्यैव बोधसम्भवात्कृतं लक्षणयेत्याशङ्कायां

---

१ कर्म्मसंज्ञायाः इति मु० पु० पा० ।

२ भेदस्य द्वितीयार्थतावादे आत्मानमात्मना वेत्सीत्यादौ कथं भेदान्वयः? कर्त्तृकर्म्मणोर्युष्मदात्मशब्दार्थयोरैक्यात्, शाब्दिकमते परया कर्त्तृसञ्ज्ञया कर्म्मसञ्ज्ञाया बाधादर्शितस्थले द्वितीयाया एवानुपपत्तिरिति पूर्वपक्षे युष्मदात्मशब्दार्थयोरैक्येपि ज्ञानविषयताया ज्ञानाश्रयत्वस्य च स्वस्वावच्छेदकभेदेन भेदोपगमात् कर्त्तृत्वकर्म्मत्वयोरुपपत्तिरिति समाधानन्न सङ्गच्छते, अवच्छेदकभेदेन भेदोपगमस्य बाह्यमतप्रवेशप्रसञ्जकत्वात् चैत्रश्चैत्रं गच्छतीति प्रयोगप्रसङ्गाच्चेति तात्पर्य्यम् । अत्र मञ्जूषाभूषणसारयोर्विशेषो द्रष्टव्यः ।

**बलवदनिष्टाननुबन्धित्वांशापहारेण विधेरिव श्येनादौ। तथा चात्र भेद-हानेन वाक्यार्थबुद्धिरिति तार्किकसरणिरेव श्रेयसी। ९३।**

**ननु लोके विभक्तौ न लक्षणा, तथाहि वार्त्तिकम्—**

**"सुपां कर्म्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम्।**

**प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा॥" इति।**

**सुपां तिङाञ्च यथानुशासनं कर्म्मादिकारकमेकत्वादिसङ्ख्या चार्थः। तत्रानुशासनानि नियमपर्य्यवसायीनि। स च नियम एकवचनमेवैकत्वं द्विवचनमेव द्वित्वं द्वितीयैव कर्म्मत्वं प्रतिपादयतीत्याकारः। तेन द्वितीयाभिन्ने कर्मत्वबोधकत्वाभावः फलति।**

पुष्पवन्तादिपदवदेकशक्तिकस्यामादेरेकं परित्यज्यापरबोधजनकत्वाङ्गीकारे आधेयत्वपरित्यागेन भेदमात्रबोधतात्पर्य्येण गगनं पचति पश्यति वेत्यस्यापि प्रामाण्यप्रसङ्गः। विक्लित्तौ लौकिकविषयतायाञ्च फले गगनाधेयत्वस्य बाधेपि गगनवृत्तिभेदप्रतियोगितावच्छेदकतायाः फूत्कारादौ चाक्षुषज्ञाने च व्यापारे निष्प्रत्यूहं विद्यमानत्वादिति त्वा त्वं जानासीत्यत्राधेयत्वमात्रस्य पुष्पवन्तादिपदाच्चन्द्रत्वादिमात्रप्रकारकबोधस्येवान्वयाद्यनुपपत्तिमूलिकया लक्षणयैव निर्वाह इत्याह—**यद्यपी**त्यादिना। शक्यार्थयोरेकपरित्यागेनापरांशे लक्षणाया अप्रामाणिकत्ववारणाय दृष्टान्तमाह—**बलवदनिष्टे**ति। **श्येनादावि**ति। "श्येनेनाभिचरन् यजेत" इत्यत्राभिचारस्य पापात्मकानिष्टजनकतया बलवदनिष्टाननुबन्धित्वं तत्र बाधितमिति तत्परित्यागेन कृतिसाध्यत्वेष्टसाधनत्वयोर्लक्षणयैव बोध इत्याशयः। **श्रेयसी**ति। मतान्तरद्वये भेदस्य द्वितीयार्थत्वाभावादधिकरणादेस्तत्र सत्त्वेपि कर्त्तृसंज्ञया तस्या बाधादित्यस्योक्तत्वात्तयोरुक्तप्रयोगसाधुत्वानुपपादकत्वान्न श्रेयस्त्वमित्याशयः। ९३।

लौकिकविभक्तीना लक्षणाविरहात्कथमाधेयत्वस्य द्वितीयार्थत्वं प्रकृते इत्याशङ्कते—**नन्वि**ति। छन्दस्यनुशिष्टार्थेपि विभक्तीनामनेकत्र प्रयोगदर्शनादाह—**लोके** इति। कैयटोक्तमुक्तभाष्यवार्त्तिकविवरणमाह—**सुपां तिङाञ्चे**ति। **अनुशासनानि** "कर्म्मणि द्वितीया..." इत्यादीनि। **तेने**ति। एवकारघटितोक्तवाक्येनेत्यर्थः। **फलती**ति। एवकारस्यान्ययोगव्यवच्छेदार्थकतया तदेकदे-

नन्वेवं द्वितीया क्वचित्कर्म्मापहाय गमनमपि बोधयेदुक्तनियमभङ्गप्रसङ्गविरहादित्यतः पक्षान्तमाह— "नियमः प्रकृतेषु वा ।।" इति । तथा च द्वितीया कर्म्मण्येवेति नियमशरीरम् । तथा च यावन्तोनुशासनसिद्धा द्वितीयार्थास्तस्मात्प्रकृतादन्यमर्थं द्वितीया न प्रतिपादयतीत्यर्थतः फलितमिति तस्य वार्त्तिकस्य विवरणम् । अतः कथम(-न-)नुशिष्टे कर्म्मैकदेशे द्वितीया साधुरिति चेन्न—

**विभक्तिः प्रकृतेष्वेवेत्येवं नियमवादिनि ।**
**चतुर्थे चरणेनास्थां वाकारेणाह वार्त्तिकम् ॥९४॥**

कथितवार्त्तिकचतुर्थचरणेनास्थायां वाकारः, विभक्तिः प्रकृतेष्वेवेति नियमशरीरस्यासम्भवदुक्तिकत्वात् । तत्र हि विभक्तित्वावच्छेदेन प्रकृतभिन्नप्रतिपादकत्वाभावः प्रकृतप्रतिपादकत्वञ्च प्रतीयते, न तु विभक्तिशेन्यत्वे प्रतियोगितया द्वितीयायाः, कर्म्मत्वविषयकबोधजनकत्वस्य च यागे सम्बन्धे, तस्य व्यवच्छेदेत्यन्ताभावेन्वयादुक्तार्थलाभो बोध्यः ।

एतावता द्वितीयायाः कर्म्मत्वभिन्नबोधकत्वाभावस्यालाभात्कर्म्मत्वभिन्नगमनादिबोधकत्वं तस्या अनुशासनसिद्धमेव स्यादित्याशङ्कानिवारणाय ( नियमः प्रकृतेषु वा ।।" इति ) चतुर्थचरणमवतारयति—**नन्वेवमि**त्यादिना । **प्रकृत**पदेनानुशासनसिद्धयावदर्थानामुपस्थापनं तदन्यबोधकत्वं द्वितीयायां व्यवच्छेद्यमित्याह—**तथा चे**ति । **अतः** द्वितीयाया अननुशिष्टार्थबोधकत्वविरहात् । **कर्म्मैकदेशे** आधेयत्वेधिकरणत्वे वा, अधिकरणस्य कर्म्मत्वे तदेकदेशस्य तत्त्वानपायात् ।

**द्वितीयादिविभक्तिः प्रकृतेषु वे**ति नियमासम्भवस्य तत्रानास्थासूचकवाकारेण वार्त्तिककृतैव प्रदर्शनेनाधेयत्वेपि द्वितीया साधुरेवेति समाधत्ते—**विभक्ति**रित्यादिना । वाकारस्यानास्थासूचकत्वे हेतुः—**नियमशरीरस्ये**ति । सामानाधिकरण्येनान्ययोगव्यवच्छेदादीनामेवकारप्रतिपाद्यत्वोपगमेति-

त्वसामानाधिकरण्येन, विभक्तिः कर्म्मण्येव शब्दो वाचक 'एवेत्यप्रयोगादुद्देश्यतावच्छेदकावच्छेदेनान्वययोग्यत्व एवैवकारस्य साधुत्वात् । दृश्यन्ते च निरर्थका अपि निपातसमभिव्याहृताः सुपः । अव्ययार्थानामसत्त्वस्वरूपत्वेन सङ्ख्यान्वयेऽप्ययोग्यत्वात् । प्रातिपदिकार्थस्सत्ता च सुपामर्थ इति प्रागेव निराकृतम् । ९४ ।

ननु भवतु तर्हि प्रकृतेषु विभक्तिरिति परिसङ्ख्या विभक्तिः प्रकृतेतरन्न प्रतिपादयतीति । तस्या एव छन्दसि प्रतिप्रसवः क्रियते—सुपां

प्रसङ्गमाह—**विभक्तिः कर्म्मण्येवे**ति । तथा च विभक्तित्वसामानाधिकरण्येन कर्म्मभिन्नप्रतिपादकत्वविरहस्य करणादिप्रतिपादिकाया ( ? ) कर्म्मप्रतिपादकत्वस्य द्वितीयायाम् , ( शब्दत्वसामानाधिकरण्येन ) गवादिपदे वाचकत्वाभावसम्बन्धाभावस्य वाचकत्वस्य च सत्त्वादुक्तप्रयोगयोः प्रामाण्यं स्यादित्युद्देश्यतावच्छेदकावच्छेदेनैवैवकारार्थव्यवच्छेदादेरन्वय आवश्यक इत्यर्थः । नन्वेवमेवास्त्वित्यत आह—**दृश्यन्ते चे**ति । तथा च तत्रैव प्रकृतप्रतिपादकत्वस्य व्यभिचारान्न विभक्तित्वावच्छेदेन तस्य बोधस्सम्भवतीत्याशयः । ननु तत्र कर्म्मत्वादीनामनन्वयेऽप्येकत्वादिसङ्ख्याया एव सुबर्थस्य तत्रान्वयान्नोक्तव्यभिचार इत्यत आह—**अव्ययार्थानामिति** । ९४ ।

उक्तनियमे प्रकृतप्रतिपादकत्वांशत्यागेन विभक्तित्वावच्छेदेन प्रकृतभिन्नप्रतिपादकत्वमेव व्यवच्छेद्यमिति निपाताद्युत्तरसुपामपि तत्सत्त्वादेव न व्यभिचार इत्याशङ्कते—**नन्वि**ति । परिसङ्ख्यास्वरूपमाह—**प्रकृतेतरन्ने**ति । ननु तर्हि "स्वर्गकामो यजेत" इत्यत्र प्रथमायाः कर्म्मत्वबोधकत्वं भट्टमतसिद्धमननुशिष्टमेव प्रसज्येतेत्यत आह—**तस्या एवे**ति । उक्तपरिसङ्ख्याया एवेत्यर्थः । **प्रतिप्रसवः** सामान्यशास्त्रेण निषिद्धस्यार्थस्य विशेष-

१ एवेत्यप्रयोगादुद्देश्यतावच्छेदकावच्छेदेनोभयभागयोग्यत्वे इति मु० पु० पा० ।

स्विति। तेन "स्वर्गकामो यजेत" इत्यत्र प्रथमैव स्वर्गस्य यागकरणभावनाकर्म्मत्वं लक्षणया प्रतिपादयन्त्यपि नाननुशिष्टविषया। अक्षीणि मे दर्शनीयानि, सुन्दराः पादाः, सम्पन्ना व्रीहय इत्यादौ जातिगतैकत्वाभिधायकं बहुवचनमपि "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इत्यनुशासनप्रतिप्रसूतमिति नास्त्यननुशिष्टे विभक्तीनां लक्षणेति चेत्? तर्हि—

**भेदाधेयत्वयोश्शक्तिरमो नैकार्थमुद्रया।**
**द्वयोरबाधे भेदस्य बाधेन्यस्य समन्वयः॥९५॥**

"कर्म्मणि द्वितीया" इत्यनेन सूत्रेण कर्म्मघटकेषु क्रियाफलतदधिकरणानामन्यलभ्यतया भेद आधाराधेयभाव अमौटूशसां शक्य इति प्रतिपाद्यते। शक्तिर्न यौगपद्येन, पुष्पवन्तपदवद् ग्राहकाभावात्, किन्तु

शास्त्रेण विधानम्। तथा च तत्र कर्म्मत्वबोधकत्वं तेनैवानुशिष्टमित्यर्थः। नन्वेवमपि लौकिकप्रयोगेषु बहुवचनानां कथमेकत्वबोधकत्वमित्यत आह— **अक्षीणी**ति। **जातिगतैकत्वाभिधायकमि**ति। नयनत्वादिजातीनामेकत्वात्तत्रैव सुबर्थसङ्ख्यान्वय इत्यस्योक्तत्वात्। **तर्ही**ति। विभक्तीनां लाक्षणिकत्वविरह इत्यर्थः। **अम** इति द्विवचनबहुवचनयोरप्युपलक्षकम्। **नैकार्थमुद्रया** (इति)। एकशक्तिकपुष्पवन्तादिपदप्रकारेण द्वितीयाया नैकशक्त्या भेदाधेयत्वोभयबोधकत्वम्, किन्तु तदुभयस्य यत्राबाधो ग्रामं गच्छतीत्यादौ तत्रापि खण्डशो द्वितीयाशक्ययोरपि भेदाधेयत्वयोरेव द्वितीयार्थत्वम्। यत्र तु भेदस्य बाधः स्वं जानातीत्यादौ तत्रान्यस्याधेयत्वस्यैव तदर्थत्वात्समन्वय इत्यर्थः।

**कर्म्मघटकेष्वि**ति। द्वितीयायाः कर्म्मवाचकत्वेपि परसमवेतक्रियाविशेषणधात्वर्थफलसमवायिनः कर्म्मत्वस्योक्तत्वात्तत्र क्रियादीनामन्यलभ्यत्वस्याप्युक्तत्वादनन्यलभ्यस्यैव शब्दार्थत्वाद् भेदे आधाराधेयभावे एव द्वितीयावाच्यत्वं पर्य्यवसितमित्यर्थः। **ग्राहकाभावादि**ति। यथा "एकयोक्त्या....." इत्यादिकोषस्तत्र चन्द्रसूर्य्ययोरुभयोरेकशक्तिग्राहकस्तथैकशक्तिग्राहकस्य प्रमा-

**नानार्थरीत्या । आकाङ्क्षावैचित्र्याच्चैकपदोपात्तयोरपि भेदाधेयत्वयोर्य्यौगपद्येनान्वयबुद्ध्यनुप्रवेश औत्सर्गिकः ।**

**यत्र [1]कर्त्तृकर्म्मणोर्भिन्नयोः फलं कर्त्तृभिन्ने वा फलं तत्र भेदाधेयत्वयोर्व्यापारफलान्वयबुद्धिर्द्वितीयया जन्यते । यत्र तु फलस्य व्यापाराधिकरणमात्रगतत्वेन भेदान्वयबाधस्तत्राधेयत्वमात्रं द्वितीयया शक्त्यैव प्रतिपाद्यते । न चानुशासनव्यत्यय इति । बाधसापेक्षवृत्तित्वेनाभिधायामेव लक्षणाव्यपदेशः । बाधश्चात्र फलाधिकरणभिन्ने**

णस्य प्रकृते विरहादित्यर्थः । **नानार्थरीत्या** ( इति ) । हर्य्यादिपदरीत्या सिंहादिप्रत्येकबोधवत्प्रकृते बोध इत्यर्थः । **आकाङ्क्षावैचित्र्याद्**इति । तिङेवकारस्थलीयव्युत्पत्तिवदत्रापि तादृशव्युत्पत्तेः स्वीकारादित्यर्थः । **औत्सर्गिक** इति । तथा च बोधे सत्येकार्थस्य परित्यागो नानुपपन्न इत्यर्थः ।

**यत्र** चैत्रो ग्रामं गच्छतीत्यादौ । **कर्त्तृकर्म्मणोः** चैत्रग्रामयोः । **फलं** संयोगः । **कर्त्तृभिन्ने** घटं जानातीत्यादौ कर्म्ममात्रे घटादौ, फलीभूतविषयतायास्तत्रैव सत्त्वादिति भावः । **यत्र तु** भगवान् भगवन्तं जानातीत्यादौ । तत्र फलस्य ज्ञानविषयताया भगवन्मात्रगतत्वं भगवतश्च व्यापारीभूतज्ञानाश्रयत्वात् ज्ञाने भगवन्निष्ठभेदप्रतियोगितावच्छेदकत्वबाध इत्यर्थः । **न चानुशासनव्यत्यय इती**ति । आधेयत्वस्यानुशासनिकत्वात्तन्मात्रस्य बोधकत्वेपि कर्म्मवाचकताया द्वितीयायामनपायादित्याशयः । नन्वेवं तत्र लक्षणाव्यपदेशो भवदनुमतोनुपपन्नः, चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तिश्च, तत्राधेयत्वमात्रस्यायोग्यत्वादित्यत आह— **बाधसापेक्षे**ति । तथा च वृत्तेः शक्तेर्बाधसापेक्षत्वेनैकमात्रार्थान्वयबोधप्रयोजकत्वमात्रेणैव लक्षणाव्यवहारो मुख्यार्थबाधादिसत्त्व एव लक्षणाया उपगमात्, न तु वस्तुतस्तस्या लक्षणात्वमित्यर्थः । वृत्तौ बाधसापेक्षत्वोपादानादेव चैत्रश्चैत्रमित्यस्यापि वारणमित्यतो बाधस्वरूपं प्रकृते दर्शयति—**बाधश्चात्रे**ति । **फलाधिकरणभिन्ने** इति । फलाधिकरणीभूतयत्किञ्चिद्व्यक्तिभिन्न इत्यर्थः ।

---

१ कर्त्तरि कर्त्तृमात्रे वा फल तदधिकरणान्वययोग्यः कर्त्ता इत्येव पाठः मु० पुस्तके यत्रेत्यनन्तरं जन्यते इति पर्य्यन्तम् ।

व्यापारो न वर्त्तत इति सामान्याकारेणोपतिष्ठते। [1]द्वयनियत-वृत्तिकसंयोगादिफलके धातौ नियमेनोभयान्वय एव। तेन चैत्रश्चैत्रं गच्छतीति न प्रयोगः।

यत्र चैकमात्रवृत्तिविक्लित्यादिफलं तत्र कर्म्मगतव्यापाराभिधायिनि धातौ "कर्म्मवत्कर्म्मणा तुल्यक्रियः" इत्यनेन फलतो द्वितीया प्रतिषिध्यते। "कर्म्मवत्" इति सूत्रन्तु निर्वर्त्त्यविकार्य्य-कर्म्ममात्रविषयकमित्यतः प्राप्यकर्म्मगतव्यापाराभिधायिनि धातौ

भगवान् भगवन्तं जानातीत्यादौ फलाधिकरणीभूतभगवद्भिन्ने व्यापारस्यावृत्तेस्तत्रैव शक्तेर्बाधसापेक्षत्वम्। ग्रामं गच्छतीत्यादौ तु फला-धिकरणयत्किञ्चिद्ग्रामभिन्ने चैत्रे व्यापारस्य वर्त्तमानत्वान्न तत्र तस्यास्तथा-त्वमिति नैकार्थाधेयत्वमात्रतात्पर्य्येण संयोगाद्यर्थकधातुसमभिव्याहृतद्वितीयायाः साधुत्वमिति न चैत्रश्चैत्रं गच्छतीति प्रयोगस्य प्रामाण्यम्, यद्धात्वर्थव्यापारे भेदांशे वृत्तेर्बाधे सापेक्षत्वं तद्धातुसमभिव्याहारे एव द्वितीयाया एकार्थमात्र-बोधकत्वोपगम इत्याशयः।

नन्वेवमपि पच्धात्वर्थतावच्छेदकफलस्यैकमात्रवृत्तितया तत्रोभयबोधस्या-नियतत्वप्रसङ्गेन तण्डुलगतसंयोगजनकतण्डुलव्यापारविवक्षायां तण्डुलस्तण्डुलं पचतीति प्रयोगापत्तिरित्यत आह—**यत्र चैके**ति। **फलतो द्वितीया प्रतिषिध्यत** इति। तत्सूत्रस्य साक्षाद्द्वितीयानिषेधकत्वविरहेऽपि कर्म्मवद्भावाति-देशस्य तत्कार्य्ययगादिविधायकत्वेन कर्म्मणा तुल्यक्रियस्य कर्त्तृत्वेन विवक्षितस्य तण्डुलस्य कर्म्मवद्भावेन तत्कार्य्ययगात्मनेपदप्रथमाविधीनां ज्ञापनाद् द्वितीयाप्रतिषेधात्तत्र द्वितीयाया असम्भवेन नोक्तप्रयोगः, किन्तु पच्यते ओदन इत्येवेत्याशयः। एवं सति चैत्रः स्वं जानातीत्यादावपि कर्म्मवद्भावात्कथं द्वितीयायास्तत्राधेयत्वमात्रार्थकत्वमित्यत आह—**कर्म्मवदि**ति। तथा च ज्ञादिधातूनां कर्म्मणां प्राप्यतया तत्रोक्तसूत्रस्याप्रवृत्तेर्द्वितीयाप्रतिषेधा-

---

१ तेन इत्यधिकः पा० मु० पु०। संयोगे द्वयनियतवृत्तिकत्व व्यासज्यवृत्तित्वरूपं बोध्यम्।

**एवमेव स्वं हिनस्तीत्यत्र ध्वंसं तदनुकूलव्यापारञ्चाभिदधतो [1]हिनस्तेरर्थे ध्वंसे फले द्वितीयालक्ष्यं प्रतियोगित्वमप्यन्वेति। न चापेक्षते प्रतियोगिनि कर्म्मसंज्ञाम्, "आकडारादेका संज्ञा" इति कर्त्तरि तदसम्भवात्। अभिधेयमाधाराधेयभावमात्रन्तु द्वितीया [2]न प्रभवति प्रतिपादयितुम्, भेदमादायैव तस्याः स्वाभिधेयप्रतिपादकत्वात्। अतो न चैत्रश्चैत्रं गच्छतीति प्रयोगः।**

**न चैवं स्वारसिकलक्षणाया अनियम्यत्वे [3]गमनमपि द्वितीयया प्रतिपाद्येतेति वाच्यम्, स्वारसिकलक्षणायामपि भट्टपादैरप्रयोगस्य**

अन्यत्रापि द्वितीयायाः स्वारसिकलक्षणया बोधकत्वं कर्म्मसंज्ञानपेक्षा चेत्याह—**एवमेवे**ति। स्वारसिकलक्षणाया दर्शितनियमाव्यवच्छेद्यत्वात्तया बोधिकायाः कर्म्मसंज्ञानपेक्षत्वादेवेत्यर्थः। **स्व**मित्यत्र स्वपदस्य कर्म्मसंज्ञाविरहप्रयोजकमाह—**आकडारादेके**ति। तथा चोक्तसूत्रेणैकस्य संज्ञाद्वयप्राप्तावेकसंज्ञाया नियमस्य, तत्रापि परस्या अनवकाशायाश्चैव विधेयताया बोधनात्स्वशब्दस्य कर्तृकर्म्मसंज्ञयोः प्रसङ्गे परत्वात्कर्तृसंज्ञैव, न तु कर्म्मसंज्ञेत्याशयः। नन्वेवमुक्तरीत्याधेयत्वमात्रस्य द्वितीयावाच्यस्य तत्र बोधादनुपपत्तेरभावात्कृतं स्वारसिकलक्षणोपगमेनेत्यत आह—**अभिधेयमि**ति। वाच्यार्थमाधेयत्वमित्यर्थः। **तस्याः** द्वितीयायाः। **स्वाभिधेयप्रतिपादकत्वादि**ति। एवञ्च भेदांशमपहाय द्वितीयायाः स्ववाच्यार्थबोधकत्वनियमादुक्तस्थले लक्षणावश्यकीत्याशयः। **अतः** आधेयत्वमात्रमादाय द्वितीयाया असाधुत्वादित्यर्थः।

**न चैवमि**ति। **एवं** स्वारसिकलक्षणयापि द्वितीयाया बोधकत्वे। **अनियम्यत्वे** स्वेच्छामात्रप्रयोज्यत्वे। **गमनमपी**ति। तत्रापि स्वारसिकलक्षणायाः सम्भवादिति भावः। **अप्रयोगस्य** पूर्वपूर्वेषां तत्तदर्थे प्रयोग-

---

१ हिंसेरर्थे इति मु० पु० पा०। २ न इति मु० पु० ना० पा०।
३ गमनमपि इति पा० मु० पु०।

बाधकत्वोपन्यासात्। यदाहुः—"क्रियन्ते साम्प्रतं काश्चित्काश्चिन्नैवाप्रयोगतः॥" इति। उदाहरन्ति (च)—"रक्तं वस्त्रमिति प्रयोगतः क्रियते, रूपं वस्त्रमित्यप्रयोगतो न क्रियते" इति। नेयार्थतापीयमेव यदप्रयोगप्रतिहता लक्षणा। प्रयोजनराहित्यमेव नेयार्थताप्रयोजकमिति। [2]प्रयोजनराहित्यञ्च प्रयोजनप्रत्ययजननयोग्यतावच्छेदकवल्लक्षणात्वविरह इति तत्र तत्र द्रष्टव्यमित्यपि वदन्ति।

"अकथितञ्च" इति सूत्रेण विषये कर्म्मसंज्ञा ज्ञाप्यते। यतेस्तु प्राधान्येन यत्नवाचिनो धात्वर्थफलाभावादकर्म्मकत्वान्न विषये कर्म्मसंज्ञेत्यपरे। ९५।

विरहस्य। **बाधकत्वोपन्यासादि**ति। तथा च विषयत्वे द्वितीयायाः पूर्वपूर्वप्रयोगस्य सत्त्वाद् गमने च तदसत्त्वादेव साधुत्वमसाधुत्वञ्चेत्यर्थः। **यदाहुरि**ति। तन्त्रवार्त्तिकेरुणाधिकरणे कुमारिलभट्टपादा इति शेषः। **क्रियन्त** इति। "निरूढाः लक्षणाः काश्चित्प्रसिद्धा अभिधानवत्।" इति पूर्वार्द्धम्। **अप्रयोगत** इत्यत्राशक्तित इति, **प्रसिद्धा** इत्यत्रासामर्थ्यादिति काव्यप्रकाशवृत्तौ पाठः। तत्राशक्तिरप्रयोग एव, स च प्रयोजनराहित्यस्याप्युपलक्षकम्। **उदाहरन्ती**ति। भट्टपादा इति पूर्वेणान्वयः। **प्रयोगत** इति। वस्त्रे रक्तरूपतादात्म्यविरहेपि पूर्वपूर्वेषां वस्त्रादिपदसामानाधिकरण्येन तथा प्रयोगविरहेण न रूपाश्रये लक्षणेत्यर्थः।

**नेयार्थतापीयमेवे**ति। अप्रयोगप्रतिहता लक्षणैव नेयार्थतानाम काव्यदोष इत्यर्थः। तत्र नेयो न्यायपरिहारेण कवेः स्वेच्छया बोधनीयोर्थो यया तस्या भावस्तत्ता।

---

१ कारिकाया अन्वयः इत्यधिकः पा० मु० पु०।

२ पाठोयं ना० मु० पु०। पुनरग्रे—"प्रयोजनप्रत्ययजननयोग्यतावच्छेदकसल्लक्षणात्वविरहपरम्" इत्येवेतिपदपूर्वं दृश्यते।

उदाहरणञ्चास्य—

"शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि ! चपेटापातनातिथिम् ॥" ( इति । )

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते। तत्र तादृशसमस्तपदस्य विशिष्टार्थवाचकतापक्षेपि रूढेः प्रयोजनस्य वा विरहेण लक्षणाया निषिद्धत्वात्। अत्र प्रयोजनवत्त्वे सति प्रयोगराहित्यं स्वारसिकलक्षणायान्न दोषः, गङ्गाशब्देनादिप्रयोगविरहेपि तीरे लक्षणायाः सर्व्वसम्मतत्वात् । किञ्चापूर्वचैत्रादिपदानां प्राज्ञत्वादिचैत्रादिवृत्तिधर्म्मप्रतिपत्तये राजादिपदानां राजगताधिकधनसम्पत्तिप्रतिपत्तये च चैत्रादिसम्बन्धिनि राजपुरोहिते च चैत्रराजादिपदानां लक्षणा न स्यात्, तत्रानादिप्रयोगविरहात्। प्रयोजनराहित्यमात्रस्यैव दोषत्वेपि रूपं वस्त्रमित्यादिषु लक्षणाविरहोपपत्तौ प्रयोगराहित्यस्य तद्घटकत्वे मानाभावाच्च। नेयार्थताया दूषकताबीजमप्यत एव, रूढिप्रयोजनान्यतरज्ञानस्य लक्षणाप्रयोजकत्वेन तदभावाद् वृत्तिविरहेण तत्तत्पदानामभिमतार्थानुपस्थापकत्वमेवेति प्रदीपादौ व्यवस्थापितम्। अन्यथा प्रयोगराहित्यमात्रस्यैव तथात्वेप्रयुक्तदोषादस्य भेदो न स्यात्। एवं ज्ञाधातोर्बुद्धिः फलं मनोयोगादिर्व्यापारश्चार्थ इत्यपि न सम्यक्, तथा सति भगवज्ज्ञानस्य नित्यतया मनोयोगाद्यजन्यतया भगवान् सर्वं जानातीति प्रयोगानुपपत्तिरित्यादिकोऽस्वरसो **वदन्ती**त्यनेन सूचितः।

विषयत्वे लक्षणाया असम्भवेप्यनुशासनसिद्धमेव तस्य द्वितीयार्थत्वमितिवादिनां तेषामेवापरेपाम्मतमाह—**अकथितञ्चे**ति । कर्त्तृत्वाद्यविवक्षायां स्वस्यापि कर्म्मसंज्ञाया अनेन सूत्रेण सम्भवात् स्वं जानातीति प्रयोगोपपत्तिरित्याशयः। नन्वेवं करोतिपर्य्यायत्वाद्यतेरपि समभिव्याहारे विषयस्यैतत्सूत्रेण कर्म्मसंज्ञायाः प्रसक्तौ घटं यतत इति प्रयोगः स्यादित्यत आह—**यतेस्त्वि**ति । **प्राधान्येने**ति। तथा च यतेर्न्न करोतिपर्य्यायत्वम्, किन्तु यत्नमात्रार्थकतया फलविरहेण सकर्म्मकत्वाभावान्न घटादीनां कर्म्मसंज्ञेत्याशयः। अत्रापि द्वितीयार्थस्य विषयत्वस्य फलान्वयित्वे बुद्धेः फलत्वासम्भवस्य दर्शितत्वाज्जानात्यादियोगे द्वितीयानुपपत्तिः। व्यापारान्वयित्वे च घटं यतत

इत्यस्यापि साधुत्वमित्यादिक एवास्वरसो बोध्यः । तस्मादाधेयत्वमात्रस्य फलान्वयिनो द्वितीयार्थत्वमिति मतमेव आत्मानमात्मना वेत्सि भगवान् भगवन्तं जानातीत्यादौ द्वितीयासाधुत्वोपपादकं सम्यगिति बोध्यम् ।

नन्वेवमेकस्यैव कर्त्तृकर्म्मभावस्य ज्ञेयज्ञातृभावस्य चोपगमे "मनोमयः प्राणशरीरः" इति वाक्यान्मनोमयस्याब्रह्मत्वशङ्कानिरासाय भगवता बादरायणेन "कर्म्मकर्त्तृव्यपदेशाच्च" इति सूत्रितम् । तत्र "एतमितः प्रेत्याभिसम्भवितास्मि" इति श्रुतिवाक्ये एतच्छब्देन मनोमयस्याभिधानात्तस्य जीवत्वे प्राप्तिकर्म्मत्वं द्वितीयया प्रतिपादितं जीवस्य कर्त्तृत्वञ्चाख्यातेनोक्तमित्येकस्य कर्म्मकर्त्तृव्यपदेशो विरुद्ध इति तत्सूत्रस्यार्थः । एवं ज्ञेयज्ञातृत्वयोर्विरोधोपपत्तये तेनैव महर्षिणा "भेदव्यपदेशाच्च" इति सूत्रितम् । तत्र "तमेवैकं जानथ आत्मानम्" इत्यत्र तच्छब्देन द्युभ्वाद्यायतनस्याभिधानात्तस्य ज्ञेयत्वं द्वितीयया प्रतिपादितं जीवस्य ज्ञातृत्वञ्चाख्यातेनोक्तमिति ज्ञेयज्ञातृभावेन भेदेन व्यपदेशान्मुमुक्षोः प्राणभृतः सकाशाज्ज्ञेयस्य द्युभ्वाद्यायतनस्य भेद इति तत्सूत्रार्थः । तत्र कर्म्मत्वकर्त्तृत्वयोर्ज्ञेयत्वज्ञातृत्वयोश्चैकधर्म्मिवृत्तित्वे विरोधाभावाद्भेदकत्वं न सम्भवतीत्युक्तब्रह्मसूत्रद्वयविरोध इति चेत् ? ज्ञेयज्ञातृभावस्य न परस्परं विरोधः, अहं जानामीत्यादौ ज्ञातुरपि ज्ञेयत्वस्य सर्वसम्मतत्वात् । किन्तु विरुद्धधर्म्मविशिष्टयोर्ज्ञेयत्वज्ञातृत्वयोः । एवञ्च द्युभ्वाद्यायतनत्वेन ज्ञेयत्वं ब्रह्मण्येव, मुमुक्षुतया ज्ञातृत्वं जीवेष्वेवेति स्पष्टो विरोधः । एवमेवात्र शाङ्करभाष्यम्—"भेदव्यपदेशश्चेह भवति तमेवैकं जानथ आत्मानमिति । ज्ञेयज्ञातृभावेन प्राणभृत्तावन्मुमुक्षुत्वाज् ज्ञाता परिशेषादात्मज्ञानशब्दवाच्यं ब्रह्मज्ञेयं द्युभ्वाद्यायतनमिति गम्यते, न प्राणभृत्, कुतश्च प्राणभृत् द्युभ्वाद्यायतनेन नाश्रयितव्यः" इति ।[१] (चोप्यर्थः । तेन प्राणभृतो द्युभ्वाद्यायतनत्वे न किमपि प्रमाणमिति तस्य ज्ञातृत्वमेवेति परिशेषात् द्युभ्वाद्यायतनं ब्रह्मैव ज्ञेयमिति तदर्थः । एवं द्युभ्वाद्यायतनत्वेन ज्ञेयतया

---

१ अतः परमव्याख्यातभाष्यमनिरस्तविरोधञ्चावलोक्य पूर्य्यते ।

**धातोरुत्सर्गतो वृत्तिः फलव्यापारयोर्द्वयोः।**
**विद्यन्ते केचन त्र्यर्था दुंह्याच्प्रच्छिरुधादयः ॥९६॥**

**उत्सर्गतो धातूनां फलव्यापारावर्थौ द्वावेवेति प्रपञ्चित-प्रायम्। दुहादयस्त्र्यर्थाः। तथाहि—विभागः स्यन्दनं व्यापारश्च**

ब्रह्मण एव प्राप्तिकर्म्मत्वमिति मनोमयस्य जीवस्य ब्रह्मत्वमिति तादृशज्ञेयता-विशिष्टं प्राप्तिकर्म्मत्वं तादृशज्ञातृताविशिष्टं प्राप्तिकर्त्तृत्वञ्च परस्परविरुद्धमिति। न त्वविशेषितयोः कर्म्मत्वकर्त्तृत्वयोर्ज्ञेयत्वज्ञातृत्वयोर्वा विरोधः, "सर्वत आत्मानं गोपायीत..." इत्यादिश्रुतिवाक्ये रक्षणकर्म्मत्वकर्त्तृत्वयोरेकत्रैव प्रत्यगात्मनि दर्शनात्, "आत्मानं रथिनं विद्धि शरीरं रथमेव हि..." इत्यादिवाक्ये रथित्वेन ज्ञेयत्वज्ञातृत्वयोरेकत्रैव संसारिणि दर्शनात्। तदिदं सर्वं विस्तरेण तत्र तत्र द्रष्टव्यमिति।)

आधेयत्वस्य द्वितीयार्थत्वञ्च "तथा युक्तञ्चानीप्सितम्" इति सूत्रेणैव ज्ञापितम्। तस्य तथा ईप्सिततमवद् युक्तं फलेनेति शेषः। धातुवाच्यमिति तद्विशेष्यम्। अथवा तथा धात्वर्थफलेन युक्तम्, चकारोऽप्यर्थे। तेनानीप्सितमपि कर्म्मसंज्ञकमित्यर्थः। अनीप्सितञ्च द्वेधा—ईप्साया अविषयो द्वेषविषयश्च। तत्राद्यं ग्रामं गच्छँस्तृणं स्पृशतीत्यत्र, द्वितीयो रथ्यां गच्छँश्चाण्डालं स्पृशतीत्यत्र। तथा चाप्यर्थकेन चकारेण धात्वर्थफलवत्त्वस्यैव कर्म्मत्वरूपत्व-मीप्सितानीप्सितयोरविवक्षाज् ज्ञाप्यत इति फलाधिकरणस्य कर्म्मत्वे आधेयत्वस्य द्वितीयार्थत्वं निराबाधमवधारितमिति बोध्यम्। ९५।

इत्थं धातोः फलव्यापारौ प्रत्येकं मिलितौ वा धातुवाच्याविति प्रपञ्चयित्वा दुहादीनां त्र्यर्थकानां समभिव्याहारे द्वितीयार्थं निरूपयितुमाह—**धातोरुत्सर्गत** इति। **रुधादय** इत्यादिपदेन चिब्रूशासिजिदण्डमन्थिपचि-मुष्णातीनां नीहृकृष्वहाञ्च परिग्रहः। **दुहादयस्त्र्यर्था** इति। केचित्तु

१ ० पृच्छि० इति मु० पु० पा०।

**दुहेरर्थः। स्यन्दनत्वं द्रवद्रव्यजन्यतावच्छेदिका क्षीरादिक्रियावृत्तिर्जातिः। गां दोग्धि दुग्धं गोपाल इत्यत्र गोविभागो जनकतया [1]स्यन्दने, तच्च तथैव गोपालव्यापारेऽन्वेति।**

**दानं प्रतिश्रवः व्यापारश्च याचेरर्थः। देयत्वेनाभ्युपगमः**

स्यन्दनानुकूलो व्यापारो दुहेर्द्वितीयाया एव च विभागोऽर्थः। दुग्धपदोत्तर-द्वितीयायाश्चाधेयत्वम्। प्रथमस्यानुकूलतया स्यन्दनेऽन्वयादेव गोविभागानुकूल-दुग्धवृत्तिस्यन्दनानुकूलव्यापारानुकूलकृतिमान् गोपाल इत्याकारकस्यान्वय-बोधस्य सम्भवेपि दुह्यते गौः क्षीरमित्यादौ क्षरणविभागयोर्द्विधा भानप्रसङ्गात् खण्डश एव धात्वर्थत्वमुक्तम्। [2]विभागस्य प्रधानीभूतधात्वर्थान्वये एवापादान-त्वादुक्तस्थले तस्य धात्वर्थविशेषणेऽन्वयात्तद्विवक्षायामपि न पञ्चमी, किन्तु "अकथितञ्च" इति कर्म्मसंज्ञैवेत्याहुः। **दुहेरर्थ** इति। पूर्वसूत्रेण फलाश्रयस्यैव कर्म्मसंज्ञाविधानाद् गोस्तथात्वविरहेण कर्म्मसंज्ञानुपपन्नेति फलविशेषणवतोपि कर्म्मसंज्ञाविधायकम् "अकथितञ्च" इति सूत्रम्। तथा च द्वयोरपि द्वितीययोराधेयत्वमेवार्थः। प्रथमस्य विभागे द्वितीयस्य स्यन्दनेऽन्वय इत्याशयः।

**दानं प्रतिश्रव** इति। इदञ्च शाब्दिकमते। तत्र [3]दानं चतुर्थीविवरणे विस्तरेण निरूपयिष्यतीत्यत्र तन्न निरूपितम्। व्यापारविशेषात्मकस्य तस्य कर्त्तरि राजनि समवायेन वृत्ते राज्ञस्तत्र समवेतत्वेनान्वय इत्याशयेनाह—**राजसमवेतमि**ति। **अभ्युपगम** इति।

---

१ क्षीरस्यन्दने इति मु० पु० पा०।

२ वृक्षात्पर्णं पततीत्यादौ प्रधाने स्पन्दने पतत्यर्थे पञ्चम्यर्थविभागस्यान्वयात् प्रधानीभूतधात्वर्थान्वयिनो विभागस्यापादानत्वरूपत्वात्पञ्चमी भवति, प्रकृते तु स्यन्दनानुकूलव्यापारे विभागस्यान्वयाप्रसक्तेरपादानत्वासम्भवेन द्वितीयार्थविभागस्य स्यन्दनादिरूपफलान्वयित्वाद् द्वितीयोपपत्तिरिति भावः।

३ दानं स्वत्वध्वसेच्छा प्रतिग्रहस्तु ममेदमित्याकारविशेषः स्वीकार इच्छा च याचतेरर्थ इत्यादिकमित्यर्थः।

**प्रतिश्रवः । राजानं कनकं याचते इत्यत्र राजसमवेतं दानमनुकूलतया कनकविषयके प्रतिश्रवे, स च स्वलिप्साप्रकाशके देहीतिवाक्यादौ भिक्षुव्यापारे संसृज्यते । कनकविषयतैव द्वितीयार्थः । एतज्ज्ञापकसिद्धैव विषयस्य कर्म्मसंज्ञा । समवायेन दानप्रतिश्रवयोस्सामानाधिकरण्येपि समवायविषयत्वाभ्यां वैयधिकरण्यमस्तीति भवति प्रतिश्रवांशे धातोः सकर्म्मकत्वम् । प्रतिश्रवो व्यापारश्चेत्युभयमेव धातोरर्थः । प्रतिश्रवश्च समवायिना विषयेण च[1] कर्म्मणा साकाङ्क्ष इति भवति द्विकर्म्मको याचिरित्यपि वदन्ति ।**

"संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ।
अङ्गीकारोऽभ्युपगमप्रतिश्रवसमाधयः ॥"

इत्यमरेण संश्रवादीनां प्रतिश्रवपर्य्यायत्वेनोक्तिस्तु तद्विशेष्यस्य सर्वत्रैकतया बोध्यम् । अभ्युपगमश्च—मयेदमस्मै देयमित्याकारकज्ञानविशेषः । तत्र **कनक**मिति द्वितीयान्तार्थकनकविषयताया निरूपकतयान्वय इत्याह—**कनकविषयक** इति । **भिक्षुव्यापार** इति । अनुकूलत्वेनेति शेषः । **ज्ञापकसिद्धैवे**ति । "अकथितञ्च" इति सूत्रसिद्धमित्यर्थः । नन्वेवं याचतेः फलसमानाधिकरणव्यापारवाचकतयाकर्म्मकत्वप्रसङ्ग इत्यत आह—**समवायेने**ति । दानप्रतिश्रवयोरिच्छाज्ञानविशेषरूपत्वात्समवेतत्वं बोध्यम् । **समवायविषयत्वाभ्यामि**ति । समवायेन दानस्य राजनि उद्देश्यत्वात्मकविषयतया प्रतिश्रवस्य भिक्षौ सत्त्वादित्यर्थः । फलीभूतस्य प्रतिश्रवस्य राजनि व्यापारस्य भिक्षौ सत्त्वात्तत्र फलव्यापारयोर्वैयधिकरण्यस्य स्फुटत्वादाह—**प्रतिश्रवांश** इति । दानस्य धात्वर्थानन्तर्गतत्वेपि फलस्य प्रतिश्रवस्यैव सम्बन्धविशेषेण राजभिक्ष्वोः सत्त्वाद् द्विकर्म्मकत्वं याचेरित्याशयेनाह—**प्रतिश्रव** इति । **समवायेने**ति । तथा च समवायविषयत्वाभ्यामेव तस्य तदुभयवृत्तेर्द्विकर्म्मकत्वं तस्येति भावः ।

---

१ च इति पा० ना० मु० पु० ।

**उत्तरमनुशास्यत्वमनुयोगश्च पृच्छेरर्थः[1]। सामान्यवति विशेषबोधकं वचनमुत्तरम्। जिज्ञासितत्वेन प्रतिपत्तिरनुशास्यता। किमादिशब्दघटितवाक्यादिरनुयोगः। जानपदं पन्थानं पृच्छति पथिक इत्यत्र परम्परया जानपदाश्रितमुत्तरं पथविषयकजिज्ञासितत्वप्रतिपत्तौ, सा च कः पन्था इत्यादिवाक्ये जनकतयान्वेति। अत्राप्युत्तरमात्रं फलम्। तच्च कृतिद्वाराधिकरणेन ज्ञानद्वारा विषयेण कर्म्मणान्वितमित्यपरे।**

अत्रोभयमतेपि राजानं कनकं याचते भिक्षुः, राजा च भिक्षवे न प्रतिश्रृणोतीत्यत्र राजसमवेतप्रतिश्रवस्याप्रसिद्ध्यान्वयबोधानुपपत्तिरिति दानं प्रतिग्रह इच्छा चेति त्रयो याचतेरर्थाः। तत्र प्रतिग्रहो ममेदमित्याकारकज्ञानविशेषः स्वीकारापरपर्य्यायः द्वितीयाद्वयार्थः पूर्ववदेव। राजसमवेतं दानं प्रयोज्यतया प्रतिग्रहे, स चोद्देश्यित्वाख्यविषयितयेच्छायामन्वेति। राजसमवेतदानप्रयोज्यस्य कनकविषयकस्य प्रतिग्रहस्योद्देश्यिनी येच्छा, तदाश्रयो भिक्षुरित्येव तत्रान्वयबोधः। इच्छायां ज्ञाप्यमानत्वं विशेषणं बोध्यम्। तेन राज्ञः कनकं जिघृक्षति, जिघृक्षाबोधकं देहीति वाक्यमप्रयुञ्जाने जने राजानमयं कनकं याचत इति न प्रयोगः, तत्रेच्छाया ज्ञाप्यमानत्वाभावात्। अतएव तत्र राज्ञोयाचितं कनकं जिघृक्षतीत्येव प्रयोगः। प्रतिश्रवविरहेपि प्रतिग्रहसत्त्वादेवोक्तस्थले नानुपपत्तिरिति बोध्यम्।

**उत्तरमनुशास्यत्वमि**ति शाब्दिकमते। **सामान्यवति** सामान्यधर्म्मप्रकारेण ज्ञायमाने। **विशेषबोधकं** विशेषधर्म्मप्रकारकज्ञानजनकम्। **जिज्ञासितत्वेने**ति। जिज्ञासाविषयत्वप्रकारकं ज्ञानमित्यर्थः। **परम्परया** स्वोच्चारणप्रयोजककृतिमत्त्वेन। **पथविषयके**ति। "वाटः पथश्च पन्थाश्च" इति कोषाददन्तस्य पथशब्दस्य साधुत्वम्। याचतेरिवास्यापि द्व्यर्थकत्वं तत्त्वेपि च द्विकर्म्मकत्वं पूर्ववदेवेत्याह—**अत्रापी**ति।

---

१ अर्थः इति मु० पु० पा० ना०।

**विभागानुत्पादः कर्म्मानुत्पादो व्यापारश्च रुधेः । व्रजं गां रुणद्धीत्यत्र व्रजविशेषितो विभागानुत्पादो गोः कर्म्मानुत्पादे, स च पुरुषव्यापारे योगक्षेमसाधारण्या जनकतयान्वेति । व्रजपदादि-समभिव्याहृता द्वितीया भेदमाधेयत्वञ्चाभिधत्ते । तेन गां गां**

जानपदं पन्थानं पृच्छति, जानपदः पथिकाय न किञ्चिदुत्तरयतीत्य-त्रोत्तरस्याप्रसिद्ध्या पूर्ववदत्राप्यनुपपत्तिरिति व्यापारप्रयोज्यविशेषज्ञानेच्छेव धात्वर्थः । तत्र त्रिषु खण्डश एव शक्तिर्द्वितीययोश्च क्रमेण व्यापारीयविषयत्व-संसर्गावच्छिन्नं विषयत्वसंसर्गावच्छिन्नञ्चाधेयत्वमर्थः । प्रकृत्यर्थविशेषितयोस्त-योर्व्यापारे विशेषज्ञाने चान्वयः । व्यापारस्य प्रयोज्यतया विशेषज्ञाने तस्योद्दे-श्यितयेच्छायामन्वयाज्जानपदवृत्तिव्यापारप्रयोज्यस्य पथविषयकस्य विशेष-धर्म्मप्रकारकज्ञानस्योद्देश्यिनी येच्छा, तदाश्रयः पान्थ इति बोधः । इच्छायां ज्ञाप्यमानत्वविशेषणात्प्रतिवादिनो विशेषेण शास्त्रार्थं ज्ञातुमिच्छति किंशब्दादि-घटितवाक्यमप्रयुञ्जाने जने अप्रतिवादिनं शास्त्रार्थं पृच्छतीति न [1]प्रयोगः । तथा [2]"रक्ताशोककृशोदरी क नु गता" इति प्रयोगदर्शनाद् रक्ताशोकं कृशोदरीं पृच्छति रामचन्द्र इत्यत्र रक्ताशोकव्यापारस्य व्यधिकरणीभूतप्रयोज्यत्वस्वरूप-संसर्गस्य कृशोदरीकर्तृकगमनकर्म्मदेशीयविशेषज्ञाने इच्छयावगाहनसम्भवान्ना-नुपपत्तिरिति ।

**योगक्षेमसाधारण्ये**ति । उत्पादात्यन्ताभावरूपस्यानुत्पादस्य नित्यतया तज्जनकत्वाप्रसिद्ध्या दण्डाभावाद् घटाभाव इत्यादिप्रयोगान्यथानुपपत्त्या-

---

१ प्रयोगस्तु प्रतिवादिनोपृष्टं शास्त्रार्थं ज्ञातुमिच्छत्ययमित्यपि बोध्यम् ।

२ रक्ताशोक ! कृशोदरी क नु गता त्यक्तानुरक्त जनम् ।
नो दृष्टेति मुधैव चालयसि किं वातावधूत शिरः ॥
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छदः ।
तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोय कुतः ॥ इति पूर्णश्लोकः ।

रुणद्धीति न प्रयोगः। अतएव द्वितीयायाः केवलाधेयत्वे शक्त्या न निर्वाहः, कर्म्मसंज्ञायास्तां प्रत्यबाधकत्वेन निरुक्तप्रयोगापत्तेः।

संयोगध्वंस आकर्षणकर्म्म व्यापारश्च चिनोतेरर्थः। तरुं पुष्पं चिनोतीत्यत्र तरुसंयोगध्वंसस्तदाकर्षणरूपे पुष्पकर्म्मणि, तच्च पुरुषव्यापारे जनकतया विशेषणम्।

भ्युपगतेन प्रयोज्यप्रयोजकभावेन स्वरूपसम्बन्धरूपेणेत्यर्थः। **न प्रयोग** इति। अन्यथा गोनिष्ठविभागानुत्पादस्य गोनिष्ठकर्म्मानुत्पादे दर्शितजनकत्वेनान्वयस्य निराबाधतया तादृशकर्म्मानुत्पादानुकूलकृतिमान् देवदत्त इति बोधस्तत्र दुर्वार एव स्यात्। भेदस्य तदर्थत्वे तु गोनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य गोनिष्ठव्यापारेसत्त्वान्न तथा प्रयोग इत्याशयः। अत्र च विभागानुत्पादस्य धात्वर्थव्यापारविशेषणीभूतकर्म्मानुत्पादे विशेषणत्वाद् गौणफलत्वेन तद्वतो व्रजस्य गौणकर्म्मत्वं गोश्च प्रधानकर्म्मत्वम्। **अतएव** गां गा रुणद्धीति प्रयोगप्रामाण्यप्रसङ्गादेव। **तां प्रति** कर्म्मसंज्ञां प्रति। एतेन यथा चैत्रश्चैत्रं गच्छतीति प्रयोगः कर्म्मसंज्ञायाः कर्त्तृसंज्ञया बाधाद्वारितस्तथात्र न सम्भवतीति सूचितम्।

**आकर्षणकर्म्मेति**। उत्क्षेपणत्वजात्याश्रयकर्म्मेत्यर्थः। तेन घटं जलं चिनोतीति न प्रयोगः। अन्यथा घटवृत्तिसंयोगध्वंसानुकूलजलवृत्तिकर्म्मानुकूलव्यापारस्य पुरुषे सत्त्वाद् दुर्वार एव स्यात्। यदि चैवं सत्यपि कूपं जलं चिनोतीत्यस्यापत्तिरनुपपत्तिश्च पुष्पस्याधाराकर्षणे तरुं पुष्पं चिनोतीत्यस्येति विभाव्यते, तदा विभागकर्म्म ग्रहणव्यापारश्चेत्युभयमेव चिनोतेरर्थौ वक्तव्यः। तत्र विभागः प्रयोजकतया कर्म्मणि, तच्च ग्रहणव्यापारेन्वेति। कर्म्म च सांसिद्धिकद्रवत्वासमानाधिकरणमेव ग्राह्यम्। तेन जलं चिनोतीत्यस्य नापत्तिः, न वा क्षेत्रं खलं वा धान्यं चिनोति, वनं कच्छं वा शुष्कगोमयाणि

**शाब्दबोधः स्मरणं शब्दश्च [1]ब्रुवेरर्थः। नृपं हितं ब्रवीतीत्यत्र नृपसमवेतशाब्दबोधो [2]हितविषयकस्मरणे, तच्च वचने जनकतयान्वेति। शाब्दबोध एव ब्रवीतिफलम्। स च समवायविषयोभयगामीत्यन्ये।**

चिनोतीत्यस्यानुपपत्तिः। जलं चिनोतीत्यस्य पृथिवीवृत्तित्वस्य कर्म्मणि विशेषणत्वेपि वारणसम्भवाद् भाण्डं तैलं चिनोति, [3]"अयमपि खरयोषित्" इत्यत्र क्षितिरुहशिखरेभ्यो भानुमानर्चिश्चिनोतीत्यनयोरापत्तेरनुपपत्तेश्च[4] वारणाय सांसिद्धिकद्रवत्वासामानाधिकरण्यं विशेषितम्। पञ्चमी चात्र विभागात्मकगुणफलस्यावधित्वविवक्षायां गोभ्यः पयो दोग्धीत्यत्रेव साधुः। मूलोक्तस्य संयोगध्वंसस्य गुणफलत्वे तु तस्य सावधित्वाभावादुक्तपद्ये पञ्चम्यनुपपत्तिरेव स्यात्।

यदि चैवं सत्यपि इष्टकाश्चिनोतीत्यस्यानुपपत्तिः, तत्र संयोगस्यैव सत्त्वेन विभागाभावादित्युच्यते, तदा सजातीयसंयोग उत्पत्तिर्व्यापारश्चापि चिनोतेरर्थो वक्तव्यः। इष्टकावृत्तितादृशसंयोगस्य प्रयोज्यतया भित्तवृत्त्युत्पत्तौ, तस्याः प्रयोजकतया व्यापारेन्वयादिष्टकावृत्तिसजातीयसंयोगप्रयोज्यभित्तिवृत्त्युत्पत्ति- प्रयोजकव्यापारकर्त्तेति भित्तिमिष्टकाश्चिनोतीत्यतो बोधः।

**ब्रुवेरर्थ** इति। यदि शब्दाभावेप्यभिनयादिना बोधनेपि ब्रुवेः प्रयोगः प्रामाणिकस्तदा शाब्दबोधशब्दयोः स्थाने ज्ञानसामान्यव्यापारौ निवेश्यौ। शाब्दानुकूलव्यापारमात्रस्य तदर्थत्वं पूर्ववच्छाब्दबोधस्य फलीभूतस्य समवायेन शिष्ये विषयतया हिते सत्त्वाद्विकर्म्मकत्वं ब्रुवेरिति दर्शयति— **शाब्दबोध एवे**ति। ब्रुविपर्य्याया वदत्यादयोपि द्विकर्म्मका एव।

---

१ ब्रुवः इत्येव मु० पु० पा०।

२ हितविषयस्मरणे इति मु० पु० पा०।

३ अयमपि खरयोषित्कर्णकाषायमीष —
द्विसृमरतिमिरोर्णाजर्जरोपान्तमर्चिः।
मदकलकलविङ्कीकाकुनान्दीकरेभ्यः
क्षितिरुहशिखरेभ्यो भानुमानुच्चिनोति॥ इति पूर्णश्लोकः।

४ अर्चिषस्तेजस्त्वात्तत्कर्म्मणः पृथिव्यवृत्तित्वेनानुपपत्तिरिति भावः।

स्वामित्वध्वंसस्त्यागो व्यापारश्च दण्डेः। गर्गं शतं दण्डयतीत्यत्र गर्गविशेषितः स्वामित्वध्वंसः शतविषयके त्यागे, स च प्राड्विवाकव्यापारेन्वेति। कृतिरुपदेशो व्यापारश्च शास्तेः। कृतिः प्रवृत्तिर्निवृत्तिश्च। उपदेशः कर्त्तव्यत्वेनाकर्त्तव्यत्वेन वा व्यवसायः। शिष्यं धर्म्ममधर्म्मं वा शास्तीत्यत्र यथायथं शिष्यसमवेता प्रवृत्तिर्निवृत्तिरुपदेशयोर्धर्म्माधर्म्मविषयकयोस्तौ च गुरुव्यापारे विशेषणम्। दण्डयतेः प्रभुव्यापारो जयतेस्तु द्यूतादि प्रधानमिति मुख्यार्थकृतोर्थभेदो न गुणकृतः। यथा—आक्षिकं शतं जयतीति।

तेन [1]"शिलोच्चयोपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव॥" इति रघुप्रयोगोप्युपपन्नः।

**त्यागे** इति। स्वत्वनाशविषयकेच्छायामित्यर्थः। सा च स्वत्वनिष्ठैहिकमात्रानिष्टसाधनताज्ञानप्रयोज्यत्वेन विशेषणीया। शतानर्पणे ताडनादेरैहिकानिष्टस्य सम्भावनया शतवृत्तिस्वकीयस्वत्वे द्वेषस्ततस्तन्नाशो भवत्वितीच्छायाः सम्भवात्। तादृशप्रयोज्यतानिवेशाच्च राज्ञे करदानादौ राजा दण्डयतीति न प्रयोगः, करानर्पणस्यैहिकस्येवामुष्मिकस्यानिष्टस्य साधनत्वात्। **प्राड्विवाको** न्यायाधिकृतः। **व्यापारश्चे**त्यत्र तदनुगुणेच्छा बोध्या। तेन शिष्यं धर्म्मं शास्ति स च न धर्म्मे प्रवर्त्तते इत्यत्र नानुपपत्तिः। दण्डयतिजयत्योरर्थयोर्विशेषणांशे साम्यं भेदस्तु विशेष्यांशमात्र इत्याह—**दण्डयते**रिति। **प्रभुव्यापार** इति। प्राड्विवाकव्यापार इत्यर्थः। **द्यूतादी**ति। तथा च जयतेरपि स्वामित्वध्वंसस्त्यागो व्यापारश्चेति त्रयमेवार्थः। तत्र व्यापारः पूर्वत्र प्राड्विवाकस्य, अत्र द्यूतादिकर्त्तुर्जेतुरिति भेद इत्यर्थः।

---

१ एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन। इति पूर्वार्द्धम्।

मज्जनाख्यसंयोगध्वंस उद्गमनाख्यं कर्म्म व्यापारश्च मन्थेः। क्षीरसागरं कौस्तुभं मथ्नातीत्यत्र क्षीरसागरादिसंयोगध्वंसः कौस्तुभादिकर्म्मणि, तच्च विलोडनव्यापारेन्वेति।

स्वामित्वे सति यथेष्टाविनियोगः स्वत्वाभावे सति यथेष्टविनियोगो व्यापारश्च मुष्णातेः। वणिजं हिरण्यं मुष्णातीत्यत्र स्वामिनो वणिजो यथेष्टविनियोगाक्षमत्वं हिरण्यस्य स्वस्य विनियोगयोग्यत्वे, तच्च तस्करव्यापारे [1]प्रयोजकत्वेनान्वेति।

शिथिलावयवरूपा विक्लित्तिर्व्यापारश्च पचेः। तण्डुलानोदनं पचतीत्यत्रौदनोत्पत्तौ [2]तण्डुलविक्लित्तिः, सा व्यापारेन्वेति। एते द्वादशधातवो दुह्यादयः।

**मज्जनाख्य** इति। सर्वावयवावच्छिन्न इत्यर्थः। दधि घृतं मथ्नातीत्यत्र च सामानाधिकरण्येन तादृशसंयोगध्वंसस्य दध्नि सत्त्वात्तदन्वितस्य तस्य प्रयोज्यतया घृतसमवेतोद्गमकर्म्मणि तस्य च प्रयोजकतया विलोडनव्यापारेन्वयो बोध्यः। घृतस्य दधिनाशजन्यत्वेन दध्यवयवसंयोगनाशस्य घृतकर्म्मप्रयोजकताया निराबाधत्वात्।

धात्वर्थैकदेशस्य स्वामित्वस्य वणिज्यन्वयादाह—**स्वामिनो वणिज** इति। विनियोगो दानविक्रयादिस्तस्य स्वेच्छानुरूपदानस्य तस्करेण मुषिते हिरण्ये स्वेन कर्त्तुमशक्यत्वादाह—**यथेष्टविनियोगाक्षमत्वमि**ति। **हिरण्यस्ये**ति। हिरण्यवृत्तिस्वकर्त्तृकविनियोगयोग्यत्वे इत्यर्थः।

---

१ ० अन्वेति इति पा० ना० मु० पु०।
२ तण्डुलविक्लृत्तिः इति मु० पु० पा०।

**संयोगः कर्म्म व्यापारश्च नयतेः। ग्राममजां नयतीत्यत्र ग्रामाद्युत्तरसंयोगोजाकर्म्मणि, तच्च पुरुषव्यापारे प्रेरणायामन्वेति। नयतिना प्रेरणादि, वहतिना पुनराधेयकर्म्मानुकूलमाधारकर्म्म प्रत्याय्यत इति विवेकः। नौकादिस्वकर्म्मणा पुरुषे कर्म्म जनयित्वा देशान्तरन्नयति। नाश्यसंयोगसन्निकृष्टसंयोगादित्रिकं नयतिवत् कृषेरर्थः, वहतिवच्च हरते-**

दुह्यादय इव न्यादयश्चत्वारोपि द्व्यर्था एवेति तानप्याह—**संयोग** इत्यादिना। नयतिवहत्योर्विशेष्यस्य व्यापारस्य भेदाद् भेदार्थकत्वमित्याह—**नयतिने**ति। **प्रत्याय्यत** इत्यनेनान्वितम्। ग्राममजां नयतीत्यतो ग्रामवृत्तिसंयोगप्रयोजकाजावृत्तिव्यापारानुकूलप्रेरणाकर्त्ता पुरुष इति बोधः। ग्रामं भारं वहति पुरुषः, द्वीपं सांयात्रिकं वहति नौरित्यतश्च ग्रामवृत्तिसंयोगप्रयोजकभारवृत्तिव्यापारानुकूलव्यापारकर्त्ता पुरुषः, द्वीपवृत्तिसंयोगप्रयोजकपोतवणिग्वृत्तिव्यापारानुकूलव्यापाराश्रयो नौरित्याकारको बोधः। तत्र नौक्रियाधेयसांयात्रिकव्यापारप्रयोजिका न प्रेरणारूपेत्येव नयतिवहत्योर्भेद इति भावः। इदमुपलक्षणम्। वहतेः क्वचित्सम्बन्धप्रतियोगित्वमर्थः। तत्र सम्बन्धः क्वचित्साक्षात्, क्वचिच्च परम्परारूपः। तेन "वहति यः परितः कनकस्थलीः" इत्यत्र कनकस्थलीवृत्तिसंयोगप्रतियोगित्वं तिङर्थाश्रयतायां वायुर्गन्धं वहतीत्यत्र च गन्धसमवायस्य वायावसत्त्वेपि स्वाश्रयपुष्पादिसंयोगस्य परम्परात्मकस्य प्रतियोगित्वं वायावन्वेति।

**नाश्यसंयोगे**ति। नाश्यो यः संयोगस्तत्सन्निकृष्टस्संयोगः कर्म्म व्यापारश्चेति त्रयमित्यर्थः। संयोगे तादृशसंयोगसन्निकृष्टत्वञ्च कर्षकदेशावधिककर्षणीयदेशवृत्तिपरत्वनिरूपितापरत्वसामानाधिकरण्यम्। तथा च भूमिं शाखां कर्षति फलार्थीत्यत्र भूमिवृत्तितादृशसंयोगप्रयोजकशाखावृत्तिकर्म्मानुकूलव्यापारकर्त्ता फलार्थीति बोधः। **वहतिवच्चे**ति। संयोगः कर्म्म व्यापारश्चेत्यर्थः। स्वगृहं परधनं हरति तस्कर इत्यादितः स्वगृहवृत्तिसंयोगप्रयोजक-

१ ग्रामाद्युत्तरसयोगे इति मु० पु० पा०।

**रिति चत्वारो न्यादयो धातवः। एवं षोडश त्र्यर्थाः। दण्डजयत्यादिवद्ग्रहिरपि त्र्यर्थ इति केचित्। तन्निर्मूलमित्यन्ये। ९६।**

**तेषां त्रयाणामर्थानां [1]द्वे क्रिये मध्यमान्तिमे।**
**आदिमध्ये फले तत्र कृतार्थमनुशासनम् ॥९७॥**

परकीयधनवृत्तिव्यापारानुकूलव्यापारकर्त्ता चौर इति बोधः। **एवं षोडशे**ति। द्वादश दुहादयश्चत्वारो न्यादय इत्येवं षोडशेत्यर्थः। **तन्निर्मूलमित्यन्ये** इति। तदुक्तम्—

"दुह्याच्रुधिप्रच्छिचिब्रूशासिजिमन्थिमुषाम्।
कर्म्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥"

अत्र पचेरनुक्तत्वेपि—

"दुहियाचिरुधिप्रच्छिचिब्रूशासिजिदण्डयः।
मन्थिः पचिश्च मुष्णातिर्द्व्यातवोमी दुहादयः ॥"

इत्यत्र पचेरुक्तत्वात्तमपि षोडशधातुषु गणितवान्। ग्रहेश्च कुत्राप्यनुपादानाद् द्विकर्म्मकत्वं निर्मूलमित्यर्थः।

अत्र [2]करोतेरप्युपादानव्यापारोत्पत्तिव्यापारैतत्त्रितयार्थकस्य द्विकर्म्मकत्वम्। अतएव वीरणं कटं करोति, कनकं कुण्डलं करोतीत्यादौ द्वयोरपि द्वितीयान्तत्वम्। तत्रोपादानव्यापारः क्वचित्संयोगरूपो यथा—आद्ये वीरणवृत्तिसंयोगस्य प्रयोज्यतया कटवृत्तावुत्पत्तौ तस्याश्च पुरुषव्यापारेन्वयः। क्वचित् क्रियारूपा, यथा—द्वितीये, तत्र कनकवृत्तिक्रियायाः प्रयोज्यतया कुण्डलवृत्तावुत्पत्तावन्वयः। क्वचिदवयवसंयोगनाशो यथा—काष्ठं भस्म करोतीत्यत्र परम्परया काष्ठवृत्तिरवयवसंयोगनाशो भस्मोत्पत्तावन्वेतीति बोध्यम्। ९६।

**तेषां त्रयाणामि**ति। दर्शितषोडशधातूनामर्थत्रयमध्ये। **मध्यमान्तिमे** स्यन्दनं व्यापारश्च। **द्वे क्रिये** इति। विधेयप्राधान्यात् स्त्रीपुंसयोर्निर्देशः। **आदिमध्ये** स्यन्दनं विभागश्च फले। **तत्र** गुणीभूतव्यापाराश्रये दुग्धादौ। **अनुशासनम्** "अकथितञ्च" इति सूत्रम्। **कृतार्थं** सप्रयोजनम्।

---

१ द्विक्रिये इति मु० पु० पा०।

२ उपादानव्यापार उत्पत्तिर्व्यापारश्च करोतेरर्थ इति तात्पर्य्यम्।

कर्त्तृप्रत्ययान्तेन धातुना स्वार्थविशेष्यतया प्रतिपाद्यमानो व्यापारः, स्वार्थविशेषणतया प्रतिपाद्यमानं फलम्, स्वजन्यस्मरण-मुख्यविशेष्यतया भासमानः स्वार्थः । तत्र विशेष्यविशेषणते आकाङ्क्षानियम्ये, न तु प्राकृते । तेन कर्म्मप्रत्ययान्तेन धातुना फलस्य प्राधान्येन प्रतिपादनेपि न व्यापारत्वम्, न वा तत्र गुणतया भासमानस्य व्यापारस्य फलत्वम्, न वा फलतावच्छेदकविशेष्ये फले व्यापारत्वम्, न [1]वा व्यापारविशेषणे व्यापारतावच्छेदके फलत्वम् ।

कारिकोक्तमर्थमुपपादयितुं फलव्यापारौ लक्षयति—**कर्त्तृप्रत्ययान्तेने**ति । कर्त्तृत्वस्य कर्त्तुर्वा वाचकस्य तिङ्कृत्प्रत्ययस्याव्यवहितपूर्ववर्त्तिनेत्यर्थः । **व्यापार** इति । कर्त्तृप्रत्ययाव्यवहितपूर्ववृत्तिधातुजन्यान्वयबोधीयमुख्य-विशेष्यताश्रयत्वं व्यापारत्वमित्यर्थः । **स्वार्थविशेषणतये**ति । तादृशविशेष्यता-निरूपितप्रकारताश्रय इत्यर्थः । **आकाङ्क्षानियम्य** इति । 'यन्निष्ठविशेषणता-निरूपितयन्निष्ठविशेष्यतानिरूपकान्वयबोधाभावो यत्पदसमभिव्याहृतयत्पदा-भावप्रयोज्यस्तयोः क्रमेण विशेषणत्वं विशेष्यत्वञ्च' इति नियमविषयीभूते एव विशेष्यविशेषणत्वे अत्र लक्षणे प्रविष्टे इत्यर्थः । **न तु प्राकृते** स्वाभाविके इत्यर्थः । **तेन** धातौ कर्त्तृप्रत्ययान्तत्वोपादानेन । व्यापारलक्षणे स्वार्थ-विशेष्यतुवैत्यस्य फलमाह—**न वा तत्रे**ति । **तत्र** कर्म्मप्रत्ययान्तधातुजन्य-बोधे । विशेष्यतायां स्वार्थनिरूपितत्वनिवेशे फलमाह—**न वा फलते**ति । स्वजन्यस्मरणविषयमात्रस्य स्वार्थत्वे फलतावच्छेदकेपि तादृशस्मरणीय-प्रकारतारूपविशेषणतायास्सत्त्वादुक्तदोषतादवस्थ्यं स्यादिति तदपहाय मुख्यविशेष्यत्वस्य स्वार्थलक्षणे निवेशादेव तद्वारणमित्याशयः । स्वाभाविक-विशेष्यविशेषणभावस्य प्रकृतेनिवेशे प्रयोजनमाह—**न वा व्यापार** इति । तादृशस्मरणविशेष्यतया व्यापारस्य स्वार्थत्वात्तत्र विशेषणीभूतस्यापि

१ वा इति पा० मु० पु० ना० ।

**तथा च गां दोग्धि दुग्धं गोपाल इत्यत्र स्यन्दनं पुरुषव्यापारश्च क्रिये, स्यन्दनं विभागश्च फले। तथा च मुख्यव्यापारशालितया गोपालस्येव गुणीभूतव्यापारवत्तया दुग्धस्यापि कर्त्तृत्वप्रसक्त्या तदपवादाय "अकथितञ्च" इति सूत्रम्।**

**एतेन धात्वर्थफलशालितया गोदुग्धयोर्द्वयोरपि कर्म्मत्वं 'कर्त्तुरीप्सिततमं कर्म्म' "[1]तथा युक्तं चानीप्सितम्" इति सूत्राभ्यामेव सिद्धमित्यकथितसूत्रारम्भो निरर्थक इति समाहितम्, कर्त्तृकर्म्मोभयसंज्ञाप्रसक्तौ परत्वात्कर्त्तृसंज्ञाया एव विनापवादं दुर्वारत्वात्। ९७।**

व्यापारतावच्छेदकस्य विशेषणत्वमवच्छेद्यस्य च विशेष्यत्वमित्यस्य तयोः स्वभावतया तद्विशेषणताया नाकाङ्क्षाप्रयोज्यत्वमिति तद्व्युदास इति भावः।

**तथा च** फलव्यापारयोर्निरुक्तरूपत्वे च। **क्रिये** इति। धात्वर्थे विभागे फले विशेष्यतया स्यन्दनस्य, स्यन्दने विशेष्यतया पुरुषव्यापारस्य क्रियात्वम्, पुरुषव्यापारे विशेषणतया स्यन्दनस्य, स्यन्दने विशेषणतया विभागस्य फलत्वमित्यर्थः। **तथा च** दर्शितरीत्या स्यन्दनपुरुषव्यापारयोः क्रियात्वे च। **कर्त्तृत्वप्रसक्त्ये**ति। धात्वर्थव्यापारवत्त्वस्यैव तत्त्वेन गोपाले दुग्धे च तस्य निराबाधत्वात्कर्त्तृसंज्ञाप्रसङ्गेनेत्यर्थः। **तदपवादाये**ति। कर्त्तृसंज्ञाया अपवादायेत्यर्थः। **अकथितञ्चेति सूत्रमि**ति। कर्त्तृकर्म्मसंज्ञयोरुभयोः प्राप्तावाकडारनियमात्परस्याः कर्त्तृसंज्ञायाः प्राप्तावपि सर्वत्र "अकथितञ्च" इति सूत्रविषये कर्म्मसंज्ञाया एव प्रसङ्गेन तत्सूत्रस्य निरवकाशविधितयापवादत्वेन कर्त्तृसंज्ञाबाधनं तस्य फलमित्यर्थः।

**इति समाहित**मित्यत्र हेतुः—**कर्त्तृकर्म्मोभये**ति। **विनापवादमि**ति। "अकथितञ्च" इति सूत्रासत्त्वे "तथा युक्तं चानीप्सितम्" इत्यस्य ग्रामं गच्छँस्तृणं स्पृशतीत्यादौ तृणादीनां कर्त्तृसंज्ञाया अप्राप्तेस्तत्र चरितार्थतया निरवकाशत्वविरहेणापवादत्वाभावाद् "अकथितञ्च" इत्यस्य तु निरवकाशतया तेन कर्त्तृसंज्ञाबाध इत्याशयः। ९७।

---

१ तथा युक्तमनीप्सितञ्च इति मु० पु० पा०।

**विभागेन परिच्छिन्नं स्यन्दनं ब्रुवतो दुहेः ।**
**एकदेशान्विते कर्म्मसंज्ञार्थं वानुशासनम् ॥९८॥**

भवतु तर्हि विभागजनकस्यन्दनं फलविधया बोधयन् द्व्यर्थ एव [१]दुहादिर्धात्वन्तरवत् । तदर्थैकदेशान्वयं [२]तत्प्रयुक्तां गौणकर्म्मणि कर्म्मसंज्ञाञ्चापूर्वं प्रतिपादयितुम् "अकथितञ्च" इत्यनुशासनम् ।

शाब्दिकास्तु गां दोग्धि दुग्धमित्यत्र गोस्सम्बन्धमात्रविवक्षायां शेषे षष्ठीप्रसक्त्या रजकस्य वस्त्रं ददातीतिवत् तदपवादाय "अकथितञ्च" इति सूत्रारम्भः । तथा च गोसम्बन्धिपयःकर्म्मकसन्दोहनं वाक्यार्थः ।

विभागानुकूलस्यन्दनं व्यापारश्चेत्यादिद्वयमेव दुहादीनामर्थः । तत्र विभागस्य पदार्थैकदेशतया तत्र गवादेरन्वयस्य तत्प्रयुक्तकर्म्मसंज्ञायाश्चानुशासकत्वेनैव "अकथितञ्च" इति सूत्रस्य सार्थक्यमित्यपि सुवचमिति केषाञ्चिन्मतमाह—**विभागेने**ति ।

**शाब्दिकास्त्वि**ति । **गोस्सम्बन्धमात्रे**ति । धात्वर्थतावच्छेदकीभूतविभागे गवानुयोगिकत्वविशिष्टस्य सम्बन्धत्वावच्छिन्नत्वस्य प्रतियोगित्वविवक्षायामित्यर्थः । अतएव दाधातुयोगेपि सम्प्रदानस्य रजकादेस्सम्बन्धस्य तत्त्वेन विवक्षायां षष्ठ्येवेति दृष्टान्तविधया दर्शयति—**रजकस्ये**ति । **तदपवादाये**ति । षष्ठ्यपवादायेत्यर्थः । **सन्दोहनं वाक्यार्थ** इति । गवादिपदोत्तरद्वितीयार्थसम्बन्धस्य विभागे, तस्यानुकूलत्वेन क्षीरवृत्तिस्यन्दने, तस्य च गोपालव्यापारेन्वयाद् गोसम्बन्धिविभागानुकूलक्षीरवृत्तिस्यन्दनानुकूलैकगोपालाभिन्नैकाश्रयको व्यापार इति वाक्यार्थ इत्यर्थः । सन्दोहनस्य विभागानुकूलस्यन्दनानुकूलव्यापाररूपत्वात् ।

---

१ दुह्यादिः इति मु० पु० पा० । २ तत्प्रयुक्ता इति मु० पु० पा० ।

यदि च गोर्विभागाधिकरणत्वविवक्षा, तदा प्राकृती कर्म्मसंज्ञा। गवाधिकरणकविभागानुकूलं पयोधिकरणकं स्यन्दनं [1]तदधिकरणको व्यापार इति बोधः। यदि च गोरवधित्वविवक्षा, तदा गोः पयो दोग्धीति पञ्चमी। गोस्सम्बन्धविवक्षायां षष्ठ्यपि प्रामाणिकीति प्राहुः। ९८।

**दुह्यादयो न्यादयश्च द्विविधास्ते द्विकर्म्मकाः।**
**प्रथमोसौ गौणकर्म्मप्रत्ययप्रकृतिर्गणः ॥९९॥**

यदिदं प्राक् प्रतिपादितं दुहादिरिति न्यादिरिति द्विकर्म्मकधातूनां द्वैराश्यम्। प्रथमो दुहादिर्गणो गौणे फलविशेषणफलाधिकरणे कर्म्मण्याख्यातकृत्यक्तखलर्थानां प्रकृतिः, न तु मुख्ये। न्यादिस्त्वर्थान्मुख्ये मुख्यव्यापारविशेषणफलाधिकरणे प्रतिपाद्ये कर्म्मप्रत्ययान् लभते, न तु गौणे। तत एव तयोर्गणयोरितरांशे

**गोर्विभागाधिकरणत्वे**ति। अधिकरणतात्वेनेत्यादिः। **प्राकृती**ति। दुग्धस्येप्सिततमत्वाद् गोरनीप्सिततमत्वादुक्तसूत्रान्यतरेण कर्म्मसंज्ञेत्यर्थः।९८।

दुहादिषोडशानां द्विकर्म्मकाणां कर्म्मप्रत्ययेन गौणं प्रधानं वा कर्म्माभिधीयत इति जिज्ञासायां "गौणे कर्म्मणि दुह्यादेः..." इत्यादिनोक्तमर्थमाह—**दुह्यादय** इत्यादिना। **(आख्यातकृत्यक्त-)खलर्थाना**मिति। "लः कर्म्मणि..." इत्यादिसूत्रेणाख्यातस्य "तयोरेव कृत्यक्तखलर्थाः" इति सूत्रेण कृत्यादीनां कर्म्मणि-विधानाद् दुहादिद्वादशधातुप्रकृतिकानां तेषां गौणकर्म्मगवादिनिष्ठकर्म्मत्वाभिधायकत्वमिति भावः। न्यादीनां प्रधाने कर्म्मणि विवक्षिते तेषां प्रकृतित्वमिति कारिकायां शब्देनानभिधानादाह—**न्यादिस्त्वर्थादि**ति। दुहादिगणस्य प्रथमस्य गौणकर्म्मवाचकप्रत्ययप्रकृतित्वे ज्ञापिते द्वितीयस्य प्रधानकर्म्मवाचक-तत्प्रकृतित्वमर्थत एव लब्धमित्यर्थः। **तत एवे**ति। गुणकर्म्ममात्रे प्रधान-कर्म्ममात्रे तिङादिप्रत्ययनियमादेव। **तयोर्गणयोः**। दुहादिन्यादिगणयोः।

१ तदधिकरणको इत्यस्य स्थाने तदनुकूलो गोपाधिकरणको इति मु० पु० पा०।

कर्म्मानभिधानाद् द्वितीयैव प्रयोज्या। तथाहि—दुह्यते दोग्धव्या दुग्धा दुर्दोहा गौः क्षीरमित्यादौ कर्म्मप्रत्यया गोः कर्म्मत्वमभिदधते, न तु पयसः।

अतएव राजा शतं याचितः, "अहमिदमचोद्यं चोद्ये" इति पृच्छि-पर्य्यायेण चुदिना भाष्यम्। गामवरुध्यते व्रजः, [1]पुष्पमवचीयते लता, हितमुक्तोऽभ्यसूयति, गर्गाः शतं दण्डयन्ते जीयन्ते वा, धर्म्ममनुशास्यते शिष्यः, [2]"देवासुरैरमृतमम्बुनिधिर्ममन्थे॥" रत्नानि मुषितो वणिक्, ओदनाः पच्यन्ते तण्डुलानित्यादिप्रयोगाश्च दुहादिभ्यो [3]गौणेः। नीयते ग्राममजा, द्वीपमुह्यन्ते नावा सांयात्रिकाः, निकटं कृष्यते कन्दुक इत्यादयश्च प्रधाने कर्म्मणि प्रत्ययं प्रयुञ्जते।

**गतिबुद्ध्यशनार्थेषु शब्दकर्म्मण्यकर्म्मके।**
**अणौ कर्त्ता सणौ कर्म्म नियमादथवा विधेः॥१००॥**

गत्यर्था गमिव्रज्यादयः, बुद्ध्यर्था ज्ञानत्वविशिष्टवाचका

**इतरांशे** दुहादिगणस्य प्रधाने न्यादिगणस्य गौणे।

**अतएव** दुहादिधातूना प्रधानकर्म्मणस्तिङादिभिरनभिधानादेव। **याचित** इति। क्तप्रत्ययस्य गौणकर्म्मराजनिष्ठकर्म्मत्वस्यैवाभिधायकत्वाच्छतपदोत्तरं द्वितीयेत्यर्थः। **अहमिदमि**ति। दुहादिगणे पृच्छतेरपि स्वार्थवाचकधातूपलक्ष-कत्वमतएव भाष्य प्रयोगादवसीयते। **चुदिना भाष्य**मित्यत्रेत्थम्भूतलक्षणे तृतीया। तेन चुदिधातुघटितं भाष्यवाक्यमित्यर्थः। ९९।

"गतिबुद्धिप्रत्यवसान..." इत्यादिसूत्रेण विहितां कर्म्मसंज्ञां कारिकया दर्शयति—**गती**त्यादिना। **गत्यर्था** उत्तरदेशसंयोगानुकूलव्यापारवाचिनः। बुद्धिपदस्य बुद्धित्वावच्छिन्नार्थकतया बुद्धित्वावच्छिन्नवाचकत्वं बुद्ध्यर्थकत्व-

१ ०मपचीयते इति मु० पु० पा०। २ येनापविद्धसलिलस्फुटनागसद्मा। इति पूर्वार्द्धम्। अत्रामृतं मुख्यमुद्देश्यत्वादम्बुनिधिस्तु गौणः।

३ गौणे, इति मु० पु० पा०। पाठोयमग्रेतनक्रियान्वयाभिप्रायकः प्रतिभाति। स च विद्वद्भिः सङ्गमनीयः।

**ज्ञाबुद्ध्यत्यादयः, न तु ज्ञानविशेषार्था जिघ्रत्यादयः । [1]अशनार्था गलसंयोगफलकव्यापारवाचिनो भुज्याद्याः । शब्दकर्म्माणश्शब्द-वाचका इति केचित् । कर्म्मपदं कारकपरम् । तेन शब्दाभिन्नकार-कोपलक्षितक्रियावाचिन इत्यपरे । अकर्म्मका देशकालभावगन्त-व्याध्वभिन्नैः कर्म्मभिरव्यपेक्षाः, न तु [2]कर्म्मव्यपेक्षायोग्या अविवक्षित-कर्म्माणोपि गम्यादयः ।**

मित्याह—**बुद्ध्यर्था** इति । अयम्भावः—बुद्धित्वावान्तरजात्यवच्छिन्नवाचक-स्यापि बुद्ध्यर्थकत्वेन ग्रहणे "दृशेश्च" इति वार्त्तिकवैयर्थ्यम्, दर्शयति हरि भक्तानित्यादौ गतिबुद्धिसूत्रेणैव भक्तस्य कर्म्मसंज्ञासम्भवादिति तद्वार्त्तिकारम्भ-सामर्थ्यादेव बुद्ध्यर्थकत्वं बुद्धित्वावच्छिन्नवाचकत्वं वक्तव्यम् । तथा च दृशेरतथात्वाद् भक्तस्य कर्म्मसंज्ञार्थं "दृशेश्च" इति वार्त्तिकम् । फलन्तु जिघ्रत्यादियोगे कर्त्तुः कर्म्मसंज्ञाविरह इति । **शब्दवाचका** रवत्यादयः । तेन शृणोतेश्शब्दविषयकश्रावणप्रत्यक्षार्थकत्वेन शब्दकर्म्मत्वेप्युक्तसूत्रेण तत्कर्त्तरि कर्म्म-संज्ञाया अप्रवृत्तौ "जल्पतिप्रभृतीनामुपसङ्ख्यानम्" इति वार्त्तिकेन तत्र तद्वि-धानं सङ्गच्छते । ये तु तत्र वार्त्तिके प्रभृतिपदेन श्रुधातोरग्रहणमिति मन्यन्ते, तेषां मतमाह—**क्रियावाचिन** इति । वदत्यादय इत्यर्थः । **कर्म्मभिरव्यपेक्षा** इति । कर्म्माकाङ्क्षाप्रयोजकतावच्छेदकधर्म्मशून्या इत्यर्थः ।

इदञ्च प्राचाम्मते । तथाहि तन्मतम्—गतिबुद्धिसूत्रस्य नियमार्थत्वे सिद्धे णिच्प्रकृतिधातूपात्तव्यापाराश्रयस्य चेत्कर्म्मसंज्ञा, तर्हि गत्याद्यर्थकधातूपात्त-व्यापाराश्रयस्यैवेत्याकारक एव नियमः । तस्य च सजातीयविषयकत्वात् सकर्म्मकगत्याद्यर्थकधातुसजातीयसकर्म्मकधातुविषयक एवेति मासमासयति देवदत्तमित्यत्रासधातोरकर्म्मकतयोक्तनियमानाक्रान्तत्वेन "कर्त्तुरीप्सित..." इत्यादिसूत्रेणैव देवदत्तस्य कर्म्मसंज्ञासम्भवाद् गत्यादिसूत्रेकर्म्मकग्रहणं व्यर्थं सत् न विद्यते देशकालादिभिन्नं कर्म्म येषा तेषामेव धातूनां बोधकम् । तेनोक्तस्थले

---

१ ०फलव्यापार०—इति मु० पु० पा० ।     २ अयोग्या इति छेदेन पठनीयम् ।

कुरून् स्वापयति पथिकम्, मासमासयति गुरुम्, गोदोहं स्थापयति माणवकम्, क्रोशं रमयति यात्रिकानिति प्रयोगवत् पाचयति चैत्रेणेत्येव प्रमाणम्। एषां धातूनां णिजभावे यत्र कर्त्तृसंज्ञा, तत्र णिच्समभिव्याहारे सति कर्म्मत्वं संज्ञायते। गमयति दिगन्तमरातीनित्यत्रारीणां कृतिः, बोधयति धर्म्मम्माणवकानित्यत्र माणवकानामाधारत्वं तदाधेयत्वं वा, भोजयति मिष्टमतिथीनित्यत्रातिथीनां [1]प्रयत्नः, एनं ब्रह्म व्याहरयतीत्यत्रैतस्मिन् कर्त्तृत्वम्, आसयत्यतिथिमित्यादावतिथौ यत्नश्च द्वितीयार्थः। स च णिच्प्रकृतिधात्वर्थान्व-

कालात्मकस्य मासस्य कर्म्मणः सत्त्वेप्यासधातोरकर्म्मकत्वादुक्तसूत्रेण देवदत्तस्य कर्म्मसंज्ञासिद्धिः। उक्तनियमेन तु तस्य मासादिकर्म्मकत्वेन सकर्म्मकतया गत्याद्यर्थकताभावेन च न सा सिद्ध्येत। ओदनादिकर्म्मणोविवक्षास्थले पचेरविवक्षितकर्म्मत्वादकर्म्मकत्वेपि देशादिभिन्नौदनादिस्वरूपकर्म्माकाङ्क्षाप्रयोजकतावच्छेदकधर्म्मवत्त्वेनोक्तनियमाक्रान्तत्वात्पाचयति चैत्रेणेत्येव प्रमाणम्, न तु चैत्रमिति।

देशकालादिभिन्नकर्म्मरहितानामासादिधातूनामकर्म्मकत्वेन तद्योगे णिच्प्रकृत्यर्थकर्त्तुः कर्म्मसंज्ञाया अविवक्षितकर्म्मकाणां पच्यादीनामुक्ताकर्म्मकत्वविरहात्तद्योगे तस्य कर्त्तृसंज्ञाया एव साधुत्वमुदाहरणद्वारा दर्शयति—**कुरूनि**त्यादिना। **चैत्रेणेत्येव प्रमाणमि**ति कृतव्याख्यातमेतत्। **अणौ कर्त्ते**त्याद्युक्तरार्द्धस्यार्थमाह—**एषां धातूनामि**ति। णिजन्तानां "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञाविधानात्तेषा धातुत्वं बोध्यम्। **यत्र** यस्मिन् प्रातिपदिके अरात्यादिपदे णिजभावे अरातयो दिगन्तं गच्छन्तीत्यस्यैव साधुत्वम्। **तत्र णिच्समभिव्याहारे** कर्त्तुररातेः कर्म्मसंज्ञायां गमयति दिगन्तमरातीनिति प्रयोगः साधुरित्यर्थः। **अरीणां कृतिरि**ति। **द्वितीयार्थ** इत्यग्रिमेणान्वितम्। एवमग्रेपि। अरातिपदोत्तरद्वितीयायाः कृतिरर्थः, सा चारिसमवेतैवेत्युक्तम**रीणामि**ति। **आधारत्वमि**ति। तत्र णिच्प्रकृतिधात्वर्थज्ञाने माणवकनिष्ठाधारतानिरूप-

१ प्रपन्नः इति मु० पु० पा०।

यीति दार्शनिकाः । णिच्प्रकृतिधात्वर्थान्वित आश्रयो द्वितीयार्थ इति वैयाकरणाः ।

नन्वेवं गमयति दिगन्तमरीनित्यत्र णिजन्तधात्वर्थव्यापारविशेषणीभूतगमनादिफलवति कर्म्मसंज्ञायाः "कर्त्तुरीप्सिततमं कर्म्म" इत्येव(इत्यनेनैव)सिद्धेः "गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणि कर्त्ता स णौ" इति सूत्रं व्यर्थमिति चेत् ? सत्यम्, नियमार्थमिदं सूत्रम् । णिजन्तप्रधानकर्म्मसंज्ञा ण्यन्तगत्यर्थादिष्वेव, अन्यत्र तु णिच्प्रकृतिधात्वर्थाधिकरणतया कर्त्तृसंज्ञैवावतिष्ठते । तेन चैत्रेण पाचयत्यन्नमिति प्रयोगः सूपपादः । तदाहुः—

"गुणक्रियायां स्वातन्त्र्यात्प्रेरणे कर्म्मताङ्गतः ।
नियमात्कर्म्मसंज्ञायाः स्वधर्म्मेणाभिधीयते ॥" इति ।

गुणक्रियायां [1]णिच्प्रकृत्यर्थव्यापारे, स्वातन्त्र्यं साक्षात्, आश्रयत्वं पञ्चम्यर्थः, स्वधर्म्मेण तृतीयया, [2]तृतीयार्थः प्रयोज्यत्वमभिधानेन्वेति, प्रेरणे

कत्वस्यैव सत्त्वात् । पूर्ववद् वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे त्वाह—**आधेयत्वं वे**ति ।

नियमाकारमाह—**णिजन्तप्रधाने**ति । णिजन्तधात्वर्थनिरूपितप्रधानकर्म्मत्वाश्रयस्य कर्म्मसंज्ञा चेण्ण्यन्तगत्यादिधात्वर्थनिरूपितकर्म्मत्वाश्रयस्यैव नान्यस्येत्यर्थः । **अन्यत्र त्वि**ति । गत्यादिभिन्नणिजन्तपच्यादिधात्वर्थप्रधानीभूतकर्म्मणश्चैत्रादेर्णिच्प्रकृतिभूतपच्यर्थव्यापाराश्रयत्वेन कर्त्तृतया कर्त्तृसंज्ञैवेत्यर्थः । उक्तनियमस्य फलमाह—**तेने**ति । अन्यथा "कर्त्तुरीप्सित .." इत्यादिना गत्यादीनामिव चैत्रस्यापि कर्म्मसंज्ञाप्रसङ्गादित्याशयः । **तदाहुरि**ति । प्राचीना इति शेषः । **गुणक्रियाया**मित्यस्यार्थो **णिच्प्रकृत्यर्थे**ति । **तृतीयार्थ** इति । **स्वधर्म्मेणे**ति तृतीयार्थ इत्यर्थः । **अभिधानेन्वेती**ति । **अभिधीयत** इत्यभि-

[1]—णिच्प्रकृत्यर्थव्यापारस्वातन्त्र्यम् इति मु० पु० पा० ।
[2] तृतीयार्थः प्रयोज्यत्वम् इति पा० मु० पु० ना० ।

णिजर्थे कर्म्मताङ्गतोपीति शेष इति प्राञ्चः।

नवीनास्तु विधायकमेव गत्यादिसूत्रम्, अन्यथा परया कर्त्तृसंज्ञया (कर्म्मसंज्ञायाः) बाधप्रसङ्गात्। प्रयोज्ये कर्त्तृसंज्ञां विना णिच एवानुत्पत्त्या तत्सापेक्षकर्म्मसंज्ञायामुपजीव्यतया कर्त्तृसंज्ञाया एव बलवत्त्वात् हेतुमति णिज्विधीयते। कर्त्तृप्रयोजकश्च हेतुः। स्वकारकविशिष्टा च क्रिया णिजर्थेन्वेति। गुणक्रियाकारकसंज्ञान्तरङ्गतया बलवती। अर्थतः

दधात्यर्थे इत्यर्थः। **गत** इत्यस्यापीतिशेष इत्याहा**पीती**ति। **प्राञ्च** इति। तथा च णिजन्तपच्यादिधातुनिरूपितकर्म्मत्वस्य चैत्रादौ सत्त्वेप्युक्तसूत्रेण कर्म्मसंज्ञाया नियमात्कर्त्तृसंज्ञैव तेषामिति भावः।

गत्यादिसूत्रस्य विध्यर्थकतावादिनवीनमतमुत्थापयति—**नवीनास्त्व**ति। **अन्यथा** गत्यादिसूत्रविरहे। **परये**ति। "कर्त्तुरीप्सिततमं कर्म्म" इत्यतः "तत्प्रयोजको हेतुश्च" इति सूत्रस्य परत्वात्कर्त्तृसंज्ञैव स्यान्न कर्म्मसंज्ञा, गत्यादिसूत्रसत्त्वे तु तस्य विशेषविधितया कर्त्तृसंज्ञाबाधकत्वमित्यर्थः। ननु णिच्प्रकृतिभूतधात्वर्थकर्त्तुः स्वातन्त्र्यविरहात् कर्त्तृसंज्ञाया अप्रवृत्तेस्तस्याः कर्म्मसंज्ञाबाधकत्वं कुत इत्यत आह—**प्रयोज्य** इति। णिच्प्रकृतिधात्वर्थव्यापाराश्रये चैत्रादावित्यर्थः। **कर्त्तृसंज्ञां विने**ति। "हेतुमति च" इति सूत्रेण हेतुसंज्ञकानामसमभिव्याहार एव णिज्विधानाद्धेतुसंज्ञायाश्च "तत्प्रयोजको हेतुश्च" इत्यनेन कर्त्तृप्रयोजकस्यैव विहितत्वाच्चैत्रस्य कर्त्तृसंज्ञाविरहे तत्प्रयोजकस्य मैत्रस्य हेतुसंज्ञाया अभावाण्णिचोनुत्पत्तेरित्यर्थः। न केवलं कर्त्तृसंज्ञायाः परत्वमात्रं कर्म्मसंज्ञाया बाधकत्वप्रयोजकम्, किन्तु कर्म्मसंज्ञोपजीव्यत्वेनान्तरङ्गत्वाद् बहुवचनमपीत्याह—**तत्सापेक्षे**त्यादिना, णिच्सापेक्षेत्यर्थः। तथा च णिजभावे धात्वर्थव्यापारस्य फलत्वविरहेण तद्वतः कर्त्तुश्चैत्रादेः कर्म्मसंज्ञाया असम्भवः। तस्या असम्भवे णिचोसम्भव इति कर्त्तृसंज्ञासापेक्षणिच्प्रत्ययसापेक्षत्वं कर्म्मसंज्ञायास्ततस्तस्या उपजीव्यकर्त्तृसंज्ञापेक्षयाधिकसापेक्षत्वाद् बहिरङ्गत्वम्, कर्त्तृसंज्ञायाश्च तदपेक्षयाल्पसापेक्षत्वादन्तरङ्गत्वम्। एवं णिच्-

प्रधानश्च गुणक्रिया भवति । गमयति चैत्र इत्यत्र हि चैत्रकर्त्तृकव्यापारजन्यं गमनमित्येवान्वयबोध इत्यन्वयानुरोधादेव कर्त्तृसंज्ञाया बलवत्त्वं युज्यते । तदुक्तमभियुक्तैः—

"परत्वादन्तरङ्गत्वादुपजीव्यतया तथा ।
प्रयोज्यस्यास्तु कर्त्तृत्वं गत्यादेर्विधितोचिता ॥"

इति । इति व्याकुर्वते ।१००।

प्रकृत्यर्थक्रियायाः स्वकर्त्तृत्वनिर्वाहकत्वेनैव णिजर्थव्यापारेन्वयाच्च कर्त्तृसंज्ञाया अन्तरङ्गत्वमिति "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषयान्तरङ्गकर्त्तृसंज्ञाया एव प्रसक्तिः स्याद्यदि गत्यादिसूत्रं न स्यादिति तस्य विधायकत्वमावश्यकमेवेति **तत्सापेक्षे**त्यादि **व्याकुर्वत** इत्यन्तविवरणग्रन्थस्याशयः । **गुणक्रिया** णिच्प्रकृतिधात्वर्थरूपा क्रिया । **तत्कारकसंज्ञा** कर्त्तृसंज्ञेत्यर्थः ।

ननूक्तरीत्या कर्त्तृसंज्ञाया बलवत्त्वेपि शाब्दबोधीयविशेष्यताश्रयत्वरूपं शाब्दं प्राधान्यं णिजर्थव्यापारस्यैवेति तदनुरोधिन्याः कर्म्मसंज्ञाया अपि प्राधान्यम्, प्रधानकार्य्यस्य सर्वतो बलवत्त्वात्कर्म्मसंज्ञायाः कर्त्तृसंज्ञाबाधकत्वमिति नोक्तसूत्रस्य विध्यर्थ(क)त्वमित्यत आह—**अर्थत** इति । शब्दार्थत इत्यर्थः । तादृशमर्थमेवाह—**गमयती**ति । तथा च प्राधान्यमपि तत्र प्रकृतिधात्वर्थव्यापारस्यैवेति न ततोपि कर्म्मसंज्ञायाः कर्त्तृसंज्ञाबाधकत्वमित्याशयः । कर्त्तृसंज्ञाया कर्म्मसंज्ञाबाधकताया युक्तत्वे प्राचा संवादमाह—**तदुक्तमि**ति । **कर्त्तृत्वं** कर्त्तृसंज्ञास्तु, तथापि **गत्यादे**र्गत्यादिसूत्रस्य, **विधिता** विधायकतैवोचितेत्यर्थः । तथा च कर्त्तृसंज्ञाया अपवादाद् गत्यादिसूत्रेण कर्म्मसंज्ञाविधानमिति भावः । १०० ।

दर्शितरीत्या कर्त्तृसंज्ञापवादेन णिच्प्रकृतिधात्वर्थव्यापाराश्रयस्यारात्यादेः कर्म्मसंज्ञाविधाने कर्त्तृत्वाभावात्तदीप्सिततमत्वेन दिगन्तस्य कर्म्मसंज्ञा न स्यात्कर्त्तुरेवेप्सिततमस्य "कर्त्तुरीप्सिततमं कर्म्म" इत्यनेन कर्म्मसंज्ञा-

नन्वेवं गमयति दिगन्तमरीनित्यत्रारीणां कर्त्तृसंज्ञापवादे कर्त्तुरीप्सिततमत्वाभावाद् दिगन्तस्य कर्म्मसंज्ञा न प्रवर्त्तेत इति चेत् ?

उच्यते—

**संज्ञान्तरासमाविष्टे स्वतन्त्रे परिभाषितः ।**
**कर्त्तृशब्दः स्वतन्त्रेर्थे गौणो वाचक एव वा ॥१०१॥**

यद्यपि कर्त्तृशब्दः संज्ञान्तरानवरुद्धे स्वतन्त्रे धातूपात्तव्यापारवति पाणिनिना परिभाषितः, आकडारमेकसंज्ञाप्रतिपादनात् । तथापि "कर्त्तुरीप्सिततमं कर्म्म" इत्यत्र कर्त्तृपदं स्वातन्त्र्यमात्रलाक्षणिकम्, समुदायशक्तस्यैकदेशे लक्षणाभ्युपगमात् ।

विधानादित्याशङ्कते—**नन्वि**ति ।

"कर्त्तुरीप्सिततमं कर्म्म" इत्यत्र कर्त्तृशब्दो न कर्त्तृसंज्ञापरः, किन्तु धातूपात्तव्यापाराश्रयात्मकस्वतन्त्रपर एवेत्यरीणा कर्त्तृसंज्ञाविरहेपि स्वातन्त्र्यरयाक्षततया न कर्म्मसंज्ञानुपपत्तिरिति समाधत्ते—**उच्यत** इत्यादिना । **संज्ञान्तरानवरुद्धे** ( इति । ) कर्म्मादिकारकसंज्ञाविरहविशिष्टे धातूपात्तव्यापाराश्रय इत्यर्थः । ननु "स्वतन्त्रः कर्त्ता" इति सूत्रेण धातूपात्तव्यापाराश्रयत्वावच्छिन्नस्यैव कर्त्तृसंज्ञोद्देश्यत्वेन प्रतिपादनात् संज्ञान्तराभावस्य कुतस्तदवच्छेदकत्वमित्यत आह—**आकडारमि**ति । अष्टाध्यायीपाठे "कडाराः कर्म्मधारयः" इत्यतः प्राक् "आकडारादेका संज्ञा" इत्यतः परं पठितानां संज्ञानामुभयस्यैकत्राभावज्ञापनेन कर्त्तृसंज्ञाविधायके तादृशि सूत्रेप्याकडारादित्यस्योपस्थितेः संज्ञान्तरानवरुद्धत्वस्योद्देश्यतावच्छेदकत्वमर्थतो लब्धमित्याशयः । **लक्षणाभ्युपगमादि**ति । धानकर्म्मत्वविशिष्टगोत्वाद्यवच्छिन्नवाचकस्य धेन्वादिपदस्य गोमात्रेपि प्रयोगदर्शनात् संज्ञान्तराभावविशिष्टधातूपात्तव्यापाराश्रयत्वावच्छिन्नसङ्केतितस्यापि कर्त्तृपदस्य धातूपात्तव्यापाराश्रयत्वमात्रावच्छिन्ने लक्षणा नानुभवविरुद्धेति भावः ।

अतएव—

"प्रधानकर्म्मण्याख्येये लादीनाहुर्द्विकर्म्मणाम्।
अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्म्मणः॥"

इति भाष्ये कर्म्मसंज्ञावरुद्धेपि चतुर्थचरणे कर्त्तृशब्दप्रयोगः।

वस्तुतस्तु कर्त्तृशब्दः स्वतन्त्रमात्रस्य वाचकः, संज्ञान्तरानवरोधादेः परिभाष्यतावच्छेदकत्वे गौरवात्। अपवादकैस्तु कर्त्तृसंज्ञाप्रयुक्तानि कार्य्याण्यपोद्यन्ते। आकडारप्रतिज्ञापि कार्य्यं प्रति नियमार्थिकैवेति दिक्। १०१।

कर्त्तृसंज्ञकस्य कर्म्मसंज्ञकत्वे भाष्यं प्रमाणयति—**अतएवेति**। संज्ञान्तरानवरुद्धत्वस्य कर्त्तृसंज्ञाविध्युद्देश्यतावच्छेदकत्वविरहादेवेत्यर्थः। **कर्त्तृशब्दप्रयोग** इति। अन्यथा कर्म्मसंज्ञकस्य कर्त्तृसंज्ञाविरहे कर्म्मणः कर्त्तुरिति सामानाधिकरण्येन प्रयोगोसाधुरेव स्यादित्यर्थः।

लक्षणायाः शक्त्यपेक्षया जघन्यत्वाच्छक्त्या बोधसम्भवे लक्षणानुचितेत्याशयेनाह—**वस्तुतस्त्वि**ति। तर्हि गत्यादिसूत्रस्य तदपवादकत्वं कथमित्यत आह—**अपवादकैस्त्वि**ति। **तत्प्रयुक्तानि कार्य्याणि** (इति।) प्रथमादिविभक्तिरूपाणीत्यर्थः। **अपोद्यन्ते** कर्त्तृसंज्ञकत्वेन यथायथं तयोः प्राप्तौ गत्यादिसूत्रेण तदपोद्यन्त इत्यर्थः। नन्वेवमेकस्योभयसंज्ञाविरहाद् "आकडारात्" इत्यस्य किं प्रयोजनमित्यत आह—**आकडारे**ति। आकडारमेकस्यैकसंज्ञाप्रतिज्ञेत्यर्थः। **कार्य्यं प्रति नियमार्थिके**ति। एकस्योभयसंज्ञावत्त्वे तदुभयप्रयुक्तकार्य्ययोः प्रसक्तौ परसंज्ञाप्रयुक्तमेव कार्य्यम्, न तु सावकाशायाः पूर्वस्याः संज्ञाया इति नियमप्रयोजनिकेत्यर्थः। तथा च प्रकृते कर्त्तृसंज्ञायाः परत्वेपि गत्यादिसूत्रस्य निरवकाशत्वादेव तद्विहितकर्म्मसंज्ञाप्रयुक्तं कार्य्यमरात्यादेरित्याशयः। अत्र प्राचीनमतस्यापि व्यवस्थापनमन्यत्र विस्तरेण प्रतिपादितमिति नेह तन्यते। १०१।

**यथानुशासनं ण्यन्तधातुयोगेन कर्त्तरि ।**
**कर्म्मसंज्ञाविधिक्षेपविकल्पानां व्यवस्थितिः ॥१०२॥**

ण्यन्तधात्वर्थकर्त्तरि कर्म्मसंज्ञाविधिर्जल्पश्रुग्रहदृशाम्, पुत्रमक्षराणि जल्पयति श्रावयति ग्राहयति दर्शयति वेति प्रयोगात् ।

यत्तु शृणोतेः शब्दकर्म्मतया कर्त्तरि कर्म्मसंज्ञासिद्धेर्न पुनर्विधानमुचितमिति, तन्न, श्रुधातोः श्रावणत्वमिव शाब्दत्वमपि प्रवृत्तिनिमित्तम्, "आत्मा श्रोतव्यः" इति श्रौतव्यवहारात् । तथा च धर्म्मं श्रावयति सुतमित्यादिप्रयोगोपपत्तये विध्यन्तरावश्यकत्वात् । न च शाब्दबोधवाचकस्यापि श्रुवेर्बुद्ध्यर्थकतया "गतिबुद्धि..."इत्यादिसूत्रेणोपग्रह इति देश्यम्, बुद्धिसामान्यवाचिनामेव हि बुद्ध्यर्थकतया निर्देशः, न तु

गत्यादिभिन्नानामपि वक्ष्यमाणधातूना केषाञ्चित् कर्त्तरि निरुक्तसूत्रेणाप्राप्तायाः कर्म्मसंज्ञाया विधानम्, केषाञ्चित्प्राप्ताया निषेधः, केषाञ्चिच्च विकल्प इति तानप्यत्रैव प्रसङ्गाद् दर्शयतुमाह—**यथानुशासनमि**ति । अनुशासनं "जल्पश्रुग्रह..." इत्यादिकमनतिक्रम्य विधिनिषेधविकल्पानां व्यवस्थितिः कार्य्येत्यर्थः ।

**शब्दकर्म्मतये**ति । श्रावणप्रत्यक्षार्थकस्य विषयतास्वरूपकर्म्मतायाः शब्दे सत्त्वाच्छब्दकर्म्मत्वं तस्य बोध्यम् । **विध्यन्तरावश्यकत्वादि**ति । अन्यथा शाब्दत्वावच्छिन्नवाचकस्य श्रुधातोरुक्तस्थले गत्याद्यर्थकत्वविरहेण तद्योगे सुतस्य कर्म्मसंज्ञानापत्तेरित्याशयः । **पृथगनुशासनादि**ति । अत्रेदं बोध्यम्—"दृशेश्च" इति वार्त्तिकस्य ज्ञानभिन्नेप्यर्थे प्रवर्त्तमानस्य दृशेः कर्त्तरि कर्म्मत्वज्ञापनमेव प्रयोजनमिति तस्य वैयर्थ्यासम्भवः । अन्यथा—

"यत्पथावधिरणुः परमः सा योगिधीरपि न पश्यति यस्मात् ।
बालया निजमनःपरमाणौ ह्रीदरीशयहरीकृतमेनम् ॥ ...."

इत्यादिमहाकविश्रीहर्षप्रयोगे योगिधियो ज्ञानाश्रयताया असम्भवाद् दृशेरवगाहनार्थकत्वमेवेति योगिधियं परमाणुं दर्शयति योगाभ्यास इत्यत्र योगिधियः,

**तद्विशेषार्थानाम्, "दृशेश्च" इति पृथगनुशासनात्। स्मारयत्येनं गुल्मः स्वयमेवेत्यादौ भाष्यप्रयोगोन्नीतविधिबोधितं[1] स्मरणकर्त्तरि कर्म्मत्वम्।**

"दर्शयैनमपि केवलान्वयिनः सरणिम्" इति दीधितिप्रयोगे जातिमत्त्वसाध्यकस्य सत्त्वहेतोरिदंपदार्थतया ज्ञानवत्तायास्तत्र विरहात् प्राप्तौ दृशेर्ज्ञाक्षणिकत्वेपीदंपदस्य कर्म्मसंज्ञा। प्राप्तेर्गतित्वाद् गत्यर्थकत्वेनैव तत्र तस्याः प्राप्तिरिति तु न वाच्यम्, तत्र गतिवाचकानामेव ग्रहणात्, अन्यथा पचेरपि गतिलक्षकत्वसम्भवात्तत्कर्त्तुरपि कर्म्मसंज्ञाप्रसङ्गात्। एवमयस्कान्तमयो दर्शयतीत्यत्राव्यवहितावस्थानार्थकस्य दृशेः कर्त्तुरयस्कान्तस्य कर्म्मत्वं न स्यादिति गत्यादिसूत्रे बुद्धिपदस्य ज्ञानत्वावच्छिन्नतद्व्याप्यधर्म्मावच्छिन्नार्थकत्वस्वरूपज्ञानसामान्यार्थकत्वाच्छाब्दबोधस्यापि श्रुधातुवाच्यत्वे तेनैव कर्म्मसंज्ञायास्सम्भवात्तद्ग्रहणं व्यर्थम्। एवं सति ज्ञानविशेषवाचकजिघ्रतिस्पृशत्यादिकर्त्तुरपीष्यत एव कर्म्मसंज्ञा। तेन घ्रापयत्योषधीर्गन्धवाहान् सूतः, स्पर्शयति कन्यां वरं परिचारिकेत्यादयः प्रयोगाः साधवः। एवं पुत्रमक्षराणि जल्पयतीत्यादावपि वर्णेतरावृत्तित्वविशिष्टोत्पत्तिर्व्यापारश्च जल्पतेरर्थः। वर्णोत्पत्तेस्तत्फलत्वे धात्वर्थान्तर्भूतकर्म्मत्वेनाकर्म्मकत्वप्रसक्तौ वर्णान् जल्पतीति प्रयोगानापत्तेर्न्निषेधद्वयगर्भता। अथवोत्पत्तिरेव फलतया तदर्थः। एवं ब्रुविवचिगदिप्रभृतीनामपि। व्यापारतया च विवृतादिप्रयत्नास्ताद्रूप्येण तदर्थाः। पुत्रपदोत्तरद्वितीयाया व्यापारान्वयिसमवेतत्वमर्थः। णिचः शिक्षणाज्ञादिः प्रयोजकव्यापारः। एवञ्चाक्षरनिष्ठोत्पत्त्यनुकूलस्य पुत्रसमवेतविवृतादिव्यापारस्यानुकूलो यः शिक्षणादिस्तत्कर्त्ता पितेत्यन्वयबोधः। तथा च जल्पतेः शब्दकर्म्मत्वेनोक्तसूत्रेणैव तत्कर्त्तरि कर्म्मसंज्ञायास्सिद्धौ तद्ग्रहणमपि निरर्थकमेवेति। नन्वेवं सूत्रे बुद्धिपदस्य ज्ञानत्वावच्छिन्नमात्रार्थकत्वे स्मारयत्येनं गुल्मः स्वयमेवेत्यादौ स्मरणकर्त्तुः कथं कर्म्मसंज्ञेत्यत आह—**स्मारयत्येनम्**इति। **भाष्यप्रयोगोन्नीते**ति। "णेरणौ यत्कर्म्म स चेत्कर्त्तानाध्याने" इति सूत्रे भाष्येनाध्याने इत्यस्य प्रयोजनपरमिदमुदाहरणम्। तदर्थश्च—'ण्यन्ताद्धातो रात्मनेपदं स्यादण्यन्तधातोर्य्यत्कर्म्म, णिजन्तधातोस्स

[1] ०बाधितम् इति मु० पु० पा०।

परे तु "शब्दकर्म्म" इत्यत्र कर्म्मपदं कारकवाचि। तथा च यद्रूपावच्छेदेन शब्दः कारकम्, तद्रूपविशिष्टवाचकधातुरेव शब्दकर्म्म इत्युच्यते। श्रावणत्वावच्छेदेन शब्दः कर्म्म, शाब्दबोधत्वावच्छेदेन करणमित्युभयार्थस्य शृणोतेरुपग्रह इति शृणोतौ न पृथग्विधिरिति। एवं ग्रहिरपि न द्विकर्म्मकः।

कर्त्ता चेत्' इति। यथा—हस्तिनमारोहतत्यत्राणीयन्तस्यारोहतेर्हस्ती कर्म्म, तत्रारोहणप्रयोजको न्यग्भावादिव्यापारो णिचा हस्तिगतः प्रत्याय्यते चेत्तदा आरोह्यते हस्ती स्वयमेवेत्येव प्रयोगः। एवं पश्यति शिवमित्यत्र दर्शनकर्म्म शिवः। तत्र दर्शनप्रयोजकः करुणादिव्यापारः शिवगतो णिचा प्रत्याय्यते चेत्तदा दर्शयते शिवः स्वयमेवेत्यादिप्रयोगस्तदुदाहरणम्। ईदृशार्थस्य स्मरणात्मकाध्यानार्थकप्रकृतिकण्यन्तसमुदायेन विवक्षणेप्यात्मनेपदं न भवतीत्यत्रोदाहरणं स्मारयत्येनं वनगुल्मः स्वयमेवेति। अस्य च भाष्योक्ततया साधुत्वनियमेन स्मरणकर्त्तरि कर्म्मसंज्ञाविधेरनुपलब्धत्वेप्यनुमित्यैव विषयीकरणादुक्तोदाहरणे इदंपदस्य कर्म्मसंज्ञेत्याशयः। अत्राप्युक्तरीत्या बुद्धिपदस्यान्यतरावच्छिन्नार्थकत्वे तेनैव कर्म्मसंज्ञा बोध्या। आरोहयते दर्शयते इत्यादौ निषादिनो भक्तस्य चोक्तसूत्रेण "दृशेश्च" इति वार्त्तिकेन च कर्म्मसंज्ञा, ऊर्ध्वदिगवच्छिन्नसंयोगानुकूलव्यापारार्थकस्यारोहतेर्गत्यर्थकत्वात्।

पूर्वोक्तं **शब्दकर्म्मे**त्यत्र कारकपरत्वपक्षमाश्रित्य शाब्दबोधवाचकस्यापि श्रुधातोरशब्दकर्म्मत्वाक्षतेस्तत्कर्त्तरि गत्यादिसूत्रेणैव कर्म्मसंज्ञामुपपादयति—**परे त्वि**त्यादिना। **कारकवाची**ति। कारकसामान्यकर्म्मकरणादिबोधकमित्यर्थः। **यद्रूपावच्छेदेने**ति। यद्रूपपदं श्रावणप्रत्यक्षत्वादिधर्म्मपरम्। **एवं ग्रहिरपी**ति। "जल्पति..." इत्यादिवार्त्तिके प्रभृतिपदेन ग्रहधातोर्न्न ग्रहणमित्यर्थः। पुत्रमक्षराणि ग्राहयतीत्यत्र च ग्रहधातोर्ज्ञानार्थकतया गत्यादिसूत्रेणैव तदाश्रयस्य पुत्रस्य कर्म्मसंज्ञेत्याशयः।

अतएव जायया प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहे [1] "जायाप्रतिग्राहितगन्धमाल्याम्" इति बहुव्रीहिणा जायाकर्त्तृकव्यापारजन्यस्य गन्धमाल्यकर्म्मकप्रतिग्रहस्य कर्त्रीमित्यन्वयबोधः। न ह्ययं जायया प्रतिग्राहिते गन्धमाल्ये यामिति कर्म्मणि बहुव्रीहिः, "ण्यन्ते कर्त्तुश्च कर्म्मणः" इत्यनुशासनात् प्रयोज्यकर्म्मण्येव क्तप्रत्ययस्य साधुत्वात् गौणे कर्म्मणि तदसम्भवात्। न च जायया गन्धमाल्ये प्रतिग्राहितामिति विग्रहादर्द्धपिप्पल्यादिवदसाविति देश्यम्, तत्पुरुषस्योत्तरपद-

यत्र च ग्रहेर्न्न ज्ञानार्थकत्वम्, किन्तु संयोगाद्यात्मकसम्बन्धानुकूलव्यापारार्थकत्वम्, तत्र तत्कर्त्तुः कर्म्मसंज्ञैवेष्टेत्याह—**अतएवे**ति। ग्रहिकर्त्तुः कर्म्मत्वाभावादेवेत्यर्थः। **विग्रहे** इति। ततश्च विग्रहवाक्याज्जायाप्रयोजितयत्कर्त्तृकप्रतिग्रहकर्म्मणी गन्धमाल्ये इति बोधः। समासात्तु जायाकर्त्तृकव्यापारजन्यगन्धमाल्यकर्म्मकप्रतिग्रहकर्त्तरि जायापदस्य लक्षणा, प्रतिग्राहितादिपदं तादृशार्थे तात्पर्य्यग्राहकमित्याशयेनाह—**जायाकर्त्तृके**त्यादि। ननु ग्रहेर्द्विकर्म्मकत्वेपि जायया प्रतिग्राहिते गन्धमाल्ये यामिति विग्रहे बहुव्रीहिणैवोक्तप्रयोगस्तादृशार्थलाभश्च स्यादित्यत आह—**न ह्ययमि**ति। **साधुत्वादि**ति। अण्यन्तधातुकर्त्तरि कर्म्मण्येव कर्म्मप्रत्ययस्य तेनानुशासनेन ज्ञापनादित्यर्थः। **गौणे कर्म्मणी**ति। णिच्प्रत्ययप्रकृतिभूतग्रहधात्वर्थकर्म्मगन्धमाल्ययोरित्यर्थः। तथा च प्रतिग्राहिते गन्धमाल्ये इति सामानाधिकरण्येन विग्रहोसाधुरित्याशयः। **अर्द्धपिप्पल्यादिवदि**ति। पिप्पल्या अर्द्धमिति विग्रहे "षष्ठी" इति सूत्रेण समासे पिप्पल्याः प्रथमानिर्द्दिष्टत्वेनोपसर्जनत्वात्पूर्वनिपातप्राप्तौ "अर्द्धं नपुंसकम्" इत्यनेन तत्र समासो विहितः। तथा सत्यर्द्ध-

---

१ "अथ प्रजानामधिपः प्रभाते।
जायाप्रतिग्राहितगन्धमाल्याम्॥
वनाय पीतप्रतिबद्धवत्साम्।
यशोधनो धेनुमृषेर्मुमोच॥" इति पूर्णश्लोकः।

**लिङ्गग्राहकतया टापो दौर्ल्लभ्यप्रसङ्गादित्याहुः ।**

**गत्यादिसूत्रेण प्राप्ते कर्म्मवद्भावे क्षेपो निषेधो यथा— गतिविशेषितव्यापारवाचकतया [1]गत्यर्थयोर्नीवह्योरादिखाद्योरहिंसार्थस्य भक्षेरकर्म्मकस्य शब्दायतेश्च । तेन नाययति वाहयति भारं भृत्येन,**

शब्दस्यैव प्रथमानिर्दिष्टत्वाद्यथा पूर्वनिपातः, पुँल्लिङ्गार्द्धशब्देन समासे तु ग्रामार्द्धे इति प्रयोगे तस्य परनिपातः, तथात्रापि बहुव्रीहौ निष्ठान्तस्य पूर्वनिपातनियमस्य क्वचित्तत्पुरुषेपि स्वीकारात्प्रतिग्राहितस्य पूर्वनिपातसम्भवादित्याशयः । अत्र तत्पुरुषे निष्ठान्तस्य पूर्वनिपातोऽप्रामाणिक इति दोषस्य स्फुटत्वाद्दोषान्तरमाह— **तत्पुरुषस्योत्तरे**ति । "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति सूत्रेण तस्यानुशासनम् । तथा चात्र गन्धमाल्यपदस्य नपुंसकलिङ्गत्वेन समासेपि तस्यैव साधुत्वात् स्त्रीत्वद्योतकटापोऽसम्भव इत्यर्थः । अत्रैवं सति [2] "अजिग्रहत्तं जनको धनुस्तत् ।" इति भट्टिप्रयोगे ग्रहधातोर्ज्ञानार्थकत्वात्तदाश्रयस्य तत्पदार्थस्य कर्म्मत्वम्, [3] "अयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ।" इति कुमारसम्भवप्रयोगे सुतां ग्राहयितुमयाचितारं न शशाक न कृतवानित्यर्थे देवदेवस्य ग्राह्यर्थेनान्वयाभावः, सुताया एव तदन्वय इति न तत्र तत्कर्त्तृत्वेन देवदेवस्य कर्म्मसंज्ञा, किन्तु करोतिकर्म्मत्वेनैवेति बोध्यम् ।

कारिकोक्तमनुशासनान्तरेण कर्म्मसंज्ञाविधिन्निरूप्य क्षेपं निरूपयति— **क्षेपवि**ति । क्रमेण "नीवह्योर्न्न" "आदिखाद्योर्न्न" "भक्षेरहिंसार्थस्य प्रनिषेधः" "शब्दायतेर्न्न" इति वार्त्तिकैर्गत्यादिसूत्रेण प्रवृत्तायाः कर्म्मसंज्ञाया निषेध

१ ०रदिखाद्यो०—इति मु० पु० पा० ।

२ येनार्दिदद्दैत्यपुर पिनाकी ॥
जिज्ञासमानो बलमस्य बाह्वो—
र्हंसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥ इति शेषं पद्यम् ।

३ अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थमिष्टेप्यवलम्बतेर्थे ॥ इत्युत्तरार्द्धम् ।

आदयति खादयति वान्नं वटुना, शब्दापयति सैनिकैरित्यादय: [1]सूपपदाः। भक्षयति बलीवर्दान् सस्यमित्यादौ भक्षिर्हिंसार्थः, क्षेत्रवृत्तिसस्यानां प्राणित्वात्। नियन्तृकर्त्तृकस्य वहेरप्रतिषेधः, नियन्ता पशुप्रेरकः। तेन वाहयति [2]रथं वाहान् सूतः, वाहयति गोणीर्बलीवर्दान् वणिगित्याद्युपपन्नम्। क्वचित्प्रयोज्ये कर्त्तृकर्म्मसंज्ञयोर्विकल्पः। यथा—हारयति कारयति दर्शयतेऽभिवादयते पिता पुत्रेण पुत्रं वेत्यादिप्रयोगात्कारिहार्य्योस्तिङन्तयोश्चाभिवादिदृश्योः। १०२।

**आधारोऽधिशयत्यादेः कर्म्म तत्र द्वितीयया।**
**कर्त्तृसान्तर आधाराधेयभावोऽनुभाव्यते ॥१०३॥**

अधिशेते, अधितिष्ठति, अध्यास्ते, अभिनिविशते, उपवसत्यनु-

इत्यर्थः। **भक्षे**रित्यत्राहिंसार्थेत्यस्य फलमाह—**भक्षयती**ति। **प्राणित्वादि**ति। अच्छिन्नवृक्षादीनामपि चेष्टाश्रयत्वेन शरीरवत्त्वस्य जीवात्मसम्बन्धेन चेष्टायाः प्राणवायुसम्बन्धेन जीवात्मसम्बन्धस्य भग्नक्षतसंरोहणादिना प्राणवायुसम्बन्धस्यानुमानात्प्राणित्वम्। हिंसा च चरमप्राणशरीरसंयोगध्वंसानुकूला क्रियैवेति, क्षेत्रवृत्तिसस्यानां भक्षणं हिंसास्वरूपमेवेति तत्र कर्त्तुर्न कर्म्मत्वमिति भावः। कारिकोक्तं विकल्पं दर्शयति—**क्वचिदि**ति। 'हृक्रोरन्यतरस्याम्' "अभिवादिदृशोरात्मनेपदे वा" इति सूत्रवार्त्तिकाभ्यां विकल्पेन कर्त्तुः कर्म्मसंज्ञाविधानमित्यर्थः।१०२।

**आधारोऽधिशयत्यादे**रित्यत्रादिपदेनाधिपूर्वक-स्था आस्, उप अनु अधि आङ्पूर्वकवसधातूनामुपग्रह इत्याह—**अधितिष्ठती**ति। न चाधिशयत्याद्यकर्म्मकधातुयोगे देशादीनाम् "अकर्म्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्म्मसंज्ञक इति वाच्यम्" इति वार्त्तिकेन कर्म्मसंज्ञाया विधानाद् "अधि-

---

१ सूपपादाः इति मु० पु० पा०।
२ रथिनम् इति मु० पु० पा०।

वसति वा जनपदमित्यादौ द्वितीया सप्तमीवत् कर्त्तृद्वारकं दैशिकविशेषणतासंसर्गावच्छिन्नं वाधिकरणत्वमाधेयत्वं वाभिधत्ते। तत्रानुशासनिकमाधारस्य कर्म्मत्वम्। यत्र पुनर्भोजनार्थ उपवसिस्तत्र वनेषूपवसतीत्येव प्रमाणम्। "एकादशीमुपवसेद् द्वादशीमथवा पुनः।"... इत्यादौ नाभोजनमुपवसेरर्थः, किन्तु दोषादुपावृत्तस्य गुणैस्सह वासः,

उपावृत्तस्य दोषेभ्यो यस्तु वासो गुणैस्सह।
उपवासस्स विज्ञेय इत्यार्षपरिभाषणात् ॥१०४॥

शीङ्स्थासां कर्म्म" "उपान्वध्याङ्वसः" इति सूत्रयोर्वैयर्थ्यमिति वाच्यम्, वार्त्तिके देशकालपदयोर्देशत्वकालत्वव्याप्यकुरुत्वपाञ्चालत्वदिनत्वमासत्वाद्यवच्छिन्नस्यैव बोधकत्वम्। सूत्रे च देशत्वेन कालत्वेन देशकालातिरिक्तोपि गृहशय्यादिराधारत्वेनोपात्तव्य इति तयोस्सार्थक्यात्। **कर्त्तृद्वारकमि**ति। धात्वर्थस्य शयनादिव्यापारस्य कर्त्तर्य्येव सत्त्वाज्जनपदादौ तस्य साक्षादसत्त्वात् स्वाश्रयसंयुक्तत्वसम्बन्धावच्छिन्नमाधेयत्वं यथाधारसप्तम्या अर्थस्तथात्रापि द्वितीयार्थ इत्यर्थः। दैशिकविशेषणतया व्यापारस्य देशे साक्षादेव सत्त्वादाह— **दैशिके**ति। **तत्रानुशासनिकमि**ति। दर्शितसूत्रद्वयरूपानुशासनज्ञापितमित्यर्थः। "उपान्वध्याङ्वसः" इति सूत्रे "अभुक्त्यर्थस्य न" इति वार्त्तिकेन भोजनाभावार्थकस्योपवसतेर्य्योगे कर्म्मसंज्ञानिषिद्धेत्याशयेनाह—**यत्र पुनरि**ति। ननु तर्हि **एकादशीमुपवसेदि**त्यत्र कथं द्वितीयेत्यत आह— **एकादशीमि**ति। तत्रोपवसतेरुक्तार्थकत्वे स्मृतिं प्रमाणयति—(**उपावृत्तस्ये**ति)। अत्र तृतीयचरणान्तं स्मृतिवाक्यं चतुर्थचरणन्तु "सर्वभोगविवर्जितः।" इति। वस्तुतस्त्वत्रोपवसतेरुक्तार्थकत्वेप्यकर्म्मकत्वमक्षतमेवेत्युक्तवार्त्तिकेनैव **कर्म्मसंज्ञे**ति। अत्र "क्रुधद्रुहोरुपसृष्टयोः कर्म्म..." इत्यादीनि कानिचित्कर्म्मसंज्ञाविधायकसूत्राणि सुगमतया ग्रन्थकृता न व्याख्यातानीति बोध्यम्।१०३।

**कर्म्माणि देशकालाध्वभावाः स्युर्गतकर्म्मणाम् ।**
**आधाराधेयतां धातुर्द्वितीया वात्र भाषते ॥१०५॥**

**अकर्म्मकधातूनां योगे देशादीनां कर्म्मसंज्ञा। देशो जनपदः कुरुपाञ्चालादिः। कालः कालावयवत्वेन परिभाषितः प्रहराहोरात्रमासादिः। अध्वा क्रोशगव्यूतियोजनादिर्गन्तव्यः। भावः क्रिया।**

"अकर्म्मकधातुभिः..."इत्याद्युक्तवार्त्तिकार्थं कारिकयाह—**कर्म्माणी**ति। **गतकर्म्मणां** गतं नष्टं विरहितं कर्म्म येषामिति व्युत्पत्त्याकर्म्मकाणामित्यर्थः। **कर्म्माणि स्युः** (इति।) देशकालादिवाचकशब्दानामकर्म्मकधातुयोगे कर्म्मसंज्ञा स्यादित्यर्थः। **अत्र** उक्तस्थले। **आधाराधेयता**माधाराधेयभावं **धातुर्द्वितीया वा भाषते** (इति।) धातोर्द्वितीयाया वा तत्राधेयत्वादिकं मतभेदेनार्थ इत्यर्थः।

अत्र देशकालादिपदेन तत्तदवान्तरधर्म्मावच्छिन्नवाचकपदानामेव ग्रहणम्, न तु देशत्वादिसामान्यधर्म्मावच्छिन्नवाचकानामित्याशयेनाह—**देशो जनपदे**ति। तेन कुरून् स्वपिति तिष्ठति वेत्येव प्रमाणम्। एवमग्रेपि बोध्यम्। **कालावयवत्वेने**ति। सूर्य्यक्रियात्मककालघटकतया तदवयवत्वपरिभाषाविषयीभूतस्तादृशकालत्वव्याप्यधर्म्मावच्छिन्न इत्यर्थः। कालसामान्यस्य तत्त्वे कालमास्ते इति साधुः स्यान्नेष्यते च तथा, किन्तु मासमास्ते इत्यादिरेवेति भावः। अध्वाप्यध्वत्वावान्तरधर्म्मवानेवेत्याह—**अध्वे**ति। तेन क्रोशमास्ते इत्येव साधुर्नाध्वानमास्ते इति। **भावः क्रिये**ति। गोदोहादिरूपेत्यर्थः। यद्यपि गोर्दुह्यते यत्र काले इत्यर्थेधिकरणघञा निष्पन्नस्य गोदोहशब्दस्य कालवाचकतया तद्ग्रहणेनैव गोदोहमास्ते इत्यत्र कर्म्मसंज्ञासम्भवाद् भावग्रहणमनर्थकम्, तथापि घञन्तप्रतिपाद्यमानकालस्यापि मासादिवत्कर्म्मसंज्ञेति प्रपञ्चार्थं भावपदमित्यवधेयम्।

तत्र कुरून् स्वपिति क्रोशमास्ते इत्यत्र दैशिकसंसर्गावच्छिन्नः, मासमास्ते गोदोहं तिष्ठतीत्यत्र कालिकसंसर्गावच्छिन्न आधाराधेय-भावो धातोः फलविधयार्थः। [१]कुर्वादिदेशादिनिरूपितत्वं द्वितीयार्थ इति केचित्।

आधाराधेयभावे धात्वर्थान्वयिनि द्वितीयानुशिष्यते। अतएव पृथगनुशासनमर्थवत्, इतरथा तु "कर्त्तुरीप्सिततमं कर्म्म" इत्यनेनैव कर्म्मसंज्ञासिद्धेस्तद्वैयर्थ्यात्। कर्म्मसंज्ञा तु मासमास्ते मास आस्यते इति कर्म्मणि सुप्तिङोरुपपादनायेत्यपरे।

तृतीयचरणस्य भावार्थमाह—**दैशिके**त्यादिना **केचिदि**त्यन्तेन। तथा च तत्तदाधेयताप्रयोजको व्यापारो धात्वर्थः। तत्र प्रयोजकतया विशेषणमाधेयत्वं फलं तदन्वयिनिरूपित्वं द्वितीयार्थ इत्यर्थः।

उक्तमते धात्वर्थव्यापारविशेषणीभूतफलवत्त्वस्य मासादौ सत्त्वात् "कर्त्तुरीप्सिततमं कर्म्म" इत्यनेनैव कर्म्मसंज्ञासिद्धावनुशासनान्तरवैयर्थ्यमिति व्यापारमात्र एव धात्वर्थः। तत्र निरूपितत्वेन प्रकृत्यर्थान्वय्याधेयत्वस्वरूपं द्वितीयार्थः प्रयोजकतयान्वेतीतिमतमाह—**आधाराधेये**त्यादिना **वैयर्थ्यादि**-त्यन्तेन। **इतरथा** आधेयत्वस्य फलविधया धात्वर्थत्वे।

मासमास्ते क्रोशं रमते इत्यादौ "कालाध्वनोरत्यन्तसंयोगे" इत्यनेन द्वितीयोपपत्तावपि मासादीनामकर्म्मकत्वे कर्म्मणि तिङ उपपादनमसम्भ-व्येवेत्यनेन कर्म्मसंज्ञा विधीयत इतिमतमाह—**कर्म्मसंज्ञा त्वि**ति। अत्र मास-मास्ते इत्यत्र सुब्विभक्तिप्रदर्शनं दृष्टान्तविधयैव, "कालाध्वनोः..." इत्यादिनापि सुपि तत्प्रयोगस्य साधुत्वात्तत्र कर्म्मत्वबोधस्यानावश्यकत्वात्। तथा च यथा मासमास्त इत्यत्र कर्म्मणि सुप्, तथा आस्यते मास इत्यादौ तिङ्। स च मासादेः कर्म्मत्वविरहेऽनुपपन्न एव स्यादिति भावः।

---

१ तत्र इत्यधिकः पा० मु० पु०।

**[1]तत्पचिक्रियाजन्यविक्लित्त्यधिकरणत्वे सति तत्पचिक्रियानधिकरणत्वं तत्पचिक्रियाकर्म्मत्वम् । तदेव च कर्म्मपदप्रवृत्तिनिमित्तम् । तादृशकर्म्मत्वमुपलक्षणीकृत्य द्वितीयाप्रतिपाद्यत्वं "कर्म्मणि द्वितीया" इति सूत्रेण प्रतिपाद्यते । तत्र चान्नं पचतीत्यत्र पचेर्व्यापारमात्रं द्वितीयायाः फलं [2]विक्लित्तिरर्थः । तत्र चाधाराधेयभावेनान्नस्यान्वय इत्यनन्यलभ्यफलं कर्म्मप्रत्ययप्रवृत्तेर्विषयः ।**

"अनभिहिते" इत्यधिकारे द्वितीयादिविभक्तीनां विधानात्कर्म्मत्वेनभिहिते कर्म्मणि द्वितीया इत्यस्यार्थः । तत्रानभिहितत्वमुपवर्णयितुं प्रथमं व्यापारमात्रस्य धात्वर्थतावादे कर्म्मलक्षणमाह—**तत्पचिक्रिये**त्यादिना । विक्लित्तेस्संयोगात्मिकाया द्विनिष्ठतया व्यापाराश्रये वह्न्यादावपि सत्त्वात्तद्व्यावृत्तये विशेष्यदलम् । कर्म्मपदप्रवृत्तिनिमित्तं "कर्त्तुरीप्सिततमं कर्म्म" इति सूत्रघटितकर्म्मपदनिरूपितशक्यतावच्छेदकताकमित्यर्थः । अधिकरणत्वादेस्तत्तद्रूपेण शाब्दबोधेभाना**दुपलक्षणीकृत्ये**त्युक्तम् । तादृशकर्म्मत्वोपलक्षितसंयोगादीनां संयोगत्वादिनैव द्वितीयाप्रतिपाद्यत्वमिति भावः । **अनन्यलभ्ये**(ति ।) तत्त्वञ्चाधेयत्वस्यापि संसर्गमर्य्यादयैव लाभात्संयोगमात्रस्येति बोध्यम् । **प्रवृत्तेः** शक्तेः ।

ननु व्यापारमात्रस्य धात्वर्थत्वेकर्म्मकत्वसकर्म्मकत्वयोर्व्यवस्थानुपपन्ना, फलावच्छिन्नव्यापारवाचकतायाः कुत्रापि धातावसत्त्वात् सकर्म्मकत्वप्रयोजकताया वक्तुमशक्यतयाकर्म्मकधातुयोगेपि द्वितीयायास्साधुत्वप्रसङ्ग इत्यतो द्वितीयासाकाङ्क्षत्वमेव सकर्म्मकत्वप्रयोजकम्, तन्निराकाङ्क्षधातुत्वमकर्म्मकत्व-(प्रयोजक-)मिति निर्वक्तुं (शक्यते ।) व्यापारत्वावच्छिन्नात्मकैकार्थवाचकत्वेपि केषाञ्चिदेव धातूना तथात्वं न सर्वेषाम्, अन्यथा फलव्यापारोभयस्य फलावच्छिन्नव्यापारस्य वा धातुवाच्यत्वोपगमेपि समानार्थकयोरपि

१ ० विक्लृत्य०—इति मु० पुं० पा० ।

२ विकृतिः इति मु० पु० पा० ।

सकर्म्मकत्वप्रयोजकमित्येके। न व्यापारमात्रं धात्वर्थः त्यजिगम्योः पर्य्यायत्वप्रसङ्गात्; किन्तु फलमपि। तथा च धात्वर्थफलान्वय्याधेयत्वं द्वितीयार्थ इत्यपरे। फलमात्रं धात्वर्थः, तदन्वय्याधेयत्वमधिकरणत्वं वा द्वितीयार्थ इति मण्डनः।

सर्वमतेपि यावदप्राप्तं फलमाधेयत्वं वा तावदेव द्वितीयार्थो न त्वाधारः, तस्य प्रकृत्यैव लाभात्। एवञ्च "अनभिहिते" इत्यधिकारस्यायमर्थः—यत्पदसमभिव्याहृतद्वितीयां विनापि तत्क्रियाकर्म्मत्वं तत्पदार्थे प्रतिपाद्यते, तत्पदाद् द्वितीया न प्रयोक्तव्या, निराकाङ्क्षत्वात्। एवञ्च "उक्तार्थानामप्रयोगः" इति न्यायस्यैवानुवादः। १०५।

सकर्म्मकत्वप्रयोजकत्वात् फलवाचकत्वं धातूनामावश्यकम्। विशेषणोपादानञ्च शब्दोत्पत्त्यनुकूलव्यापारार्थकस्य शब्दायतेः, स्फिग्भूसंयोगानुकूलव्यापारार्थकस्योपविशतेरेवं तत्तत्फलाधिकरणशब्दादिवाचकानां पतत्यादीनां सकर्म्मकत्वव्यावृत्त्यर्थमिति बोध्यम्। **पर्य्यायत्वप्रसङ्गादि**ति। तथा च त्याग इति प्रयोक्तव्ये गमनमित्यपि प्रयुञ्जीतेति भावः।

दर्शितपक्षाणां व्यवस्थापनं तत्तद्ग्रन्थेषु प्रतिपादितमेवेति प्रकृते तदुपपादनन्निराकरणं वा नापेक्षितम्, किन्तु सर्वेषाम्मते तत्तत्कर्म्मत्वस्यैवानभिधाने द्वितीया। तदर्थस्तु न शाब्दिकमतसिद्धमधिकरणम्, तस्य द्वितीयाप्रकृतिग्रामादिपदादेव लाभादनन्यलभ्यत्वविरहात्, किन्तु यावानंशोऽप्राप्तः फलमाधेयत्वं वा तावानेवेत्याह—**सर्वमतेपी**ति। शाब्दिकमतभिन्नमतेपीत्यर्थः। **एवञ्च** कर्म्मत्वस्य द्वितीयार्थत्वे च। पदान्तरेण प्रतिपादितस्य कर्म्मत्वस्य द्वितीययाप्रतिपादने बीजमाह—**निराकाङ्क्षत्वादि**ति। एकपदेन कर्म्मत्वस्योपस्थितौ तत्र जिज्ञासानुदयादित्यर्थः। **न्यायस्यैवानुवाद** इति। अनभिहिताधिकार इति शेषः। "उक्तार्थानामप्रयोगः" इति न्यायस्याप्ययमेवाभिप्राय इत्यर्थः। १०५।

तत्र—

**कर्म्माभिधानमाख्यातसमासाऽव्ययतद्धितैः ।**
**कृता च तदभावे तु द्वितीया वक्ति कर्म्मताम् ॥१०६॥**

पच्यते ओदन इत्यत्र पाककर्म्मत्वमाख्यातेन, प्राप्तोदको ग्राम इत्यत्रोदककर्तृकप्राप्तिकर्म्म बहुव्रीहिणा, नारद इत्यबोधीत्यत्र बुद्धौ नारदकर्म्मकत्वन्निपातेन, शत्य इत्यत्र शतकरणकक्रयकर्म्म तद्धितेन, पक्व ओदन इत्यत्र पाककर्म्म कृता पदान्तरसहकृतेन प्रत्याय्यते; तत्र न द्वितीया, किन्त्वोदनं पचतीत्यादौ । १०६ ।

नन्वेवं कृतपूर्वी कटमित्यत्र क्तप्रत्ययेन कर्म्माभिधानात्कटमित्यत्र द्वितीयानुपपत्तिः, अन्यथा [1]कटः कृतपूर्व इत्यतोपि द्वितीयाप्रसङ्गात् ।

तत्र कैः पदैः कर्म्मत्वप्रतिपादनमित्याकाङ्क्षायामाह—**कर्म्माभिधान**मिति । भावप्राधान्यात्कर्म्मत्वाभिधानमित्यर्थः । **तदभावे** कर्म्मत्वाद्यभिधायकाख्यातात्यन्यतमत्वाभावे । क्रमेणोदाहरति - **पच्यत** इत्यादिना । **बहुव्रीहिणे**ति । प्राप्तमुदकं यमिति विग्रहे बहुव्रीहिसमासेनेत्यर्थः । **निपातेन** इतिना । **तद्धितेन** ( इति । ) तेन क्रीत इत्यधिकारे शतेन क्रीत इत्यर्थे विहितेन यत्प्रत्ययेनेत्यर्थः । **पदान्तरसहकृतेने**ति । पच्यादिपदसमभिव्याहृतेनेत्यर्थः । **तत्र न द्वितीये**ति । दर्शितप्रयोगेषु तादृशान्यतमस्याभावादोदनादिपदाना न द्वितीयान्तत्वमित्यर्थः । **किन्त्वोदनमि**ति । तत्राख्यातस्य कर्त्तरि विहिततया कर्म्मत्वस्य तेनानभिधानात्तादृशान्यतमस्याभावाद् द्वितीयैव कर्म्मत्वबोधिकेत्यर्थः । १०६ ।

**नन्वेव**मिति । **एवं** कर्म्मत्वाभिधायकाख्याताद्यन्यतमसत्त्वे द्वितीयाया असाधुत्वे । **द्वितीयानुपपत्तिरि**ति । कृतः पूर्वं कटोनेनेति कृतपूर्वी देवदत्तः, "सपूर्वाच्च" इति सूत्रेण सोपपदात्पूर्वशब्दात्कर्त्रर्थे इनिप्रत्ययात् । न च क्तप्रत्य-

१ कटः कृतः पूर्वः इति मु० पु० पा० ।

**न च कृतपूर्वीत्यत्र कृतमिति भावक्तान्तम्, कर्म्मयोगे भावे प्रत्यया-**

यस्य कर्म्माभिधायकतया कर्म्मत्वानभिधायकत्वं तत्राक्षतम्, चैत्रेण पच्यते ओदन इत्याद्यनुरोधेन कर्म्मत्वस्यैवानभिधानस्यावश्यकत्वादिति वाच्यम्, विशेष्यत्वविशेषणत्वान्यतरेणैव तदनभिधानस्य चैत्रेण गतो ग्राम इत्यत्र द्विती-यावारणाय तत्प्रयोजकत्वस्य वक्तव्यत्वात्। कृत्प्रत्ययस्यापि विशेषणतया तदभिधायकत्वस्याक्षतत्वात् प्रकृते द्वितीयानुपपत्तिरित्यर्थः। क्तप्रत्ययस्य तदन्य-तमघटकत्वस्यावश्यकत्वमित्याह—**अन्यथे**ति। तस्य तद्घटकत्व इत्यर्थः।

अत्र द्वितीयोपपादकं शाब्दिकमतं निरसितुमाह—**न चे**ति। **भावक्तान्त**मिति। अत्रायमाशयः—कृतं पूर्वमनेनेति विग्रहे अविवक्षितकर्म्मणः कृञ्धातोर्भावे क्तप्रत्ययात्तदन्तेन कृतपदेन पूर्वशब्दस्य समासे "सपूर्वाच्च" इति सूत्रेणेनिप्रत्यये कृतपूर्वीति। तदर्थश्च प्राक्कालिककरणकर्त्तेति। ततः कटस्य कर्म्मत्वविवक्षया तदेकदेशकृतपदार्थकरणे कटमितिद्वितीयान्तार्थान्वयात्कर्म्मणो निष्ठाप्रत्ययेनाभिधानान्न द्वितीयानुपपत्तिरिति। एतन्मतनिषेधे हेतुः—**कर्म्मयोगे भावे प्रत्ययानुत्पत्ते**रिति। **कर्म्मयोगे कट**मिति कर्म्मप्रत्ययान्तस्य धात्वर्थेनान्वये। **प्रत्ययानुत्पत्ते**रिति। कर्म्मसम्बन्धे सति तत्रैव क्तप्रत्ययस्य साधुत्वादिति भावः। न च कर्म्मणोविवक्षया कृतपूर्विशब्दस्य सिद्धौ तत्र कर्म्मान्वय इति न तदनुपपत्तिरिति वाच्यम्, पूर्वं कर्म्मणोविवक्षितत्वे पश्चादपि तद्विवक्षाया असम्भवात्। अन्यथा भावक्तान्तगमिधातोरर्थेप्युक्तरीत्या कर्म्मान्वयसम्भवाद् गतं गम्यते वा ग्राममित्यस्यापि साधुत्वापत्तेरिति। अतएव पूर्वं कृतशब्दः कर्म्मविशेषरूपकर्म्मान्वयमप्रतिपद्यमान एव कर्म्म-सामान्यवाचकक्तप्रत्ययान्ततया व्युत्पादितः पूर्वपदेन समस्यते, पश्चात्कटं कृतवानितिवत्कृतपूर्वी कटमित्यत्रापि द्वितीयान्तार्थस्य कृञर्थेन्वयः। क्तप्रत्ययेन कर्म्मविशेषस्यानभिधानाच्च न द्वितीयानुपपत्तिरिति नव्यशाब्दिकमतमप्यपास्तम्, तथा सत्युक्तरीत्या चैत्रेण पच्यते तण्डुल इत्यादावपि द्वितीयापत्तेर्दुर्वारत्वात्।

कृतपूर्वी कटमितिवत् कर्त्रर्थकेनिप्रत्ययान्तेन्यत्रापि कर्म्मत्वाभिधानेन

[१]नुत्पत्तेः। एवमिष्टी सुरानधीती वेदानित्यादौ निष्ठाभिहिते कर्म्मणि द्वितीयानुपपत्तिः, "पूर्वादिनिः" "सपूर्वाच्च" "इष्टादिभ्यश्च" इति सूत्रैश्च कर्त्तरि विहित इनिः, "श्राद्धमनेन भुक्तमिनिठनौ" इत्यतोनेनेत्यनुषङ्गादिति चेत् ?

उच्यते—

**कटादेः कर्म्मतादात्म्यान्वयायोगात्कटादितः ।**
**द्वितीयोत्पद्यते धातुव्यपेक्षाकृतपूर्विणि ॥१०७॥**

कृतपूर्वी कटमित्यत्र क्तप्रत्ययेन कर्म्मणोभिधानेपि कटे कर्म्मतादात्म्यन्न प्रतिपादयितुं शक्यते, कृतकटपदार्थयोस्तादात्म्यान्वये तन्त्रस्य समानविभक्तिकत्वस्याभावात् सविशेषणस्य कृतशब्दस्य वृत्त्यनुप्रवेशानुपपत्तेश्च, "सविशेषणानां वृत्तिर्न्न" इति कात्यायनस्मरणात् । अतः कटत्वावच्छेदेन कृततादात्म्यान्वयबोधस्य कर्म्मार्थकेनापि कृतपदेनानुपपादनात्कटपदसमभिव्याहारेण द्वितीयोत्पत्तिं को वारयिता ।

द्वितीयानुपपत्तिं दर्शयति—**एवमिष्टी**ति । कर्त्तरीनिविधायकानि सूत्राणि क्रमेणाह—**पूर्वादिनि**रिति । इदञ्च "सपूर्वाच्च" इत्यत्रास्यानुवृत्तिरिति सूचनायोक्तम्। **विहित** इति। कृतपूर्वीत्यत्र द्वितीयेनान्यत्र तृतीयेनेति बोध्यम्। इनेः कर्त्रर्थकत्वे वीजमाह—**श्राद्धमनेने**ति। **अनुषङ्गा**दिति। दर्शितसूत्रेष्वप्यनेनेत्यस्य कर्त्तरि तृतीयान्तस्य सम्बन्धादित्यर्थः।

अत्र प्राचीननैयायिकानुसारेण द्वितीयामुपपादयति—**कटादे**रित्यादिना। **कर्म्मतादात्म्यमि**ति। क्तप्रत्ययार्थकर्म्मणो धात्वर्थान्वितस्य तादात्म्यमित्यर्थः। **सविशेषणस्ये**ति। समासाघटकपदसापेक्षस्येत्यर्थः। **वृत्त्यनुप्रवेशानुपपत्तेश्चे**ति। समासाघटकपदसापेक्षस्यापि वृत्त्यनुप्रवेशे ऋद्धस्य राजमातङ्गा इत्यादिरपि

१ ० नुपपत्तेः इति मु० पु० पा० ।

**कृतपूर्वी कटमित्यत्राश्रय इनितद्धितार्थः। तत्र कृधात्वर्थ-प्रयत्नस्य भावनाया वान्वयः। भावनायाश्च निष्ठोपात्तं कर्म्म, द्वितीयोपात्तं कर्म्मत्वञ्च विशेषणत्वेनान्वेति, वृत्त्यनुप्रविष्टस्य कृतो धात्वर्थविशेषणस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धत्वात्। अतएव प्राप्तोदको ग्राम इत्यत्रोदकं तादात्म्येन कर्त्तरि, कर्त्ता च प्राप्तौ, सा च बहुव्रीहिसमुदायवाच्ये चरमावयवलक्ष्ये वा कर्म्मण्यन्वेति, इत्युदक-कर्त्तृकप्राप्तिकर्म्म ग्राम इत्यन्वयबोधः।**

साधुः स्यादिति भावः। **को वारयिते**ति। कर्म्माभिधायकक्तप्रत्ययस्यातथात्वे-न्यस्य कर्म्माभिधायकस्य तत्रासत्त्वात्कर्म्मणोऽनभिहितत्वात्कटपदोत्तरं द्वितीया दुर्वारेत्यर्थः।

तथा सति तज्जन्यान्वयबोधाकारं तत्र पदार्थान् तदन्वयञ्चाह—**आश्रय** इति। कर्त्रर्थकस्य तस्य कृतेर्धातुनैव लाभादाश्रयमात्रं कृदर्थ इत्यर्थः। **भावनाया वे**ति। उत्पत्त्यनुकूलव्यापारस्य कृञर्थत्वे व्यापारस्यैव तत्रान्वय इत्यर्थः। **भावनायां** कृधात्वर्थभावनायाम्। **निष्ठोपात्तं कर्म्मे**ति। कृतस्सर्वमते धर्म्मिवाचकत्वादुक्तम्। **कर्म्मत्वञ्चे**ति। कर्म्मणस्तदर्थताया निराकृतत्वादुक्तम्। **विशेषणत्वेने**ति। कर्म्मणः स्वनिष्ठोत्पत्तिप्रयोजकत्वेनेत्यर्थः। कर्म्मत्वस्य च निरूपकत्वेन विशेषणतयेत्यर्थः। तथा च प्राक्कालिककटकर्म्मकसविषयककृत्याश्रयो देवदत्त इत्यन्वयबोधः। **व्युत्पत्तिसिद्धत्वादि**ति। वृत्त्यघटकस्यैव तद्घटक-पदार्थान्वितस्वार्थबोधकत्वं व्युत्पत्तिविरुद्धम्, न तु वृत्तिघटकस्यापीति भावः। अत्र दृष्टान्तमाह—**अतएवे**ति। वृत्त्यनुप्रविष्टस्य तद्घटकपदार्थान्वितस्वार्थ-बोधकत्वादेवेत्यर्थः। **कर्त्तरी**ति। क्तप्रत्ययस्य तत्र कर्त्तृकर्म्मणोरुभयोरेव वाचक-त्वात्तदर्थे कर्त्तरीत्यर्थः। **प्राप्तौ** सम्बन्धरूपे धात्वर्थे। **समुदायवाच्य** इति विशिष्टशक्तेरुपगमे। **लक्ष्ये** वेति तदनुपगमे। **कर्म्मणी**ति। क्तप्रत्ययार्थ-कर्म्मणीत्यर्थः। **इत्यन्वयबोध** इति। तथा च तत्र वृत्त्यनुप्रविष्टक्तप्रत्ययस्य विशेषणतया धात्वर्थान्वितत्वदर्शनान्नात्रापि तस्य व्युत्पत्तिविरुद्धत्वमिति भावः।

भाट्टास्तु कारकाणां प्रत्ययार्थभावनायामेवान्वयः, न धात्वर्थे, "गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात् स्यात्" इतिन्यायात्। कृतपूर्वीत्यत्र भावना तद्धितार्थः, स च कृतिरेव। तस्यां द्वितीयोपात्तकर्म्मत्वान्वयः। अतएव "कर्त्तृकर्म्मणोः कृति" इत्यत्र तद्धितार्थकर्म्मत्वे षष्ठीप्रसङ्गवारणाय कृतिग्रहणमप्युपपद्यते इत्याहुः।

तच्चिन्त्यम्, एवं सति कृतमित्यत्रापि प्रत्ययार्थभावनाकर्म्मैवाभिधीयेत। [1]अन्यथानेन कृतमित्यत्र कर्त्तृत्वान्वयस्यानुपपत्तेः।

आख्यातार्थभावनामुख्यविशेष्यकान्वयबोधवादिभट्टमते प्रकृते द्वितीयामुपपादयति—**भाट्टास्त्व**त्यादिना। **इतिन्याया**दिति। धात्वर्थस्याख्यातार्थे गुणीभूतत्वाद् गुणीभूतकारकैस्समं सम्बन्धस्यासम्भवादिति भावः। **कर्म्मत्वान्वय** इति। तथा च तद्धितस्य कृतिवाचकतया तेन कर्म्मकारकस्यानभिधानात् कटमितिद्वितीयोपपन्नेति तेषामाशयः। **अतएव** तद्धितार्थभावनाया द्वितीयार्थकर्म्मत्वान्वयादेव। **तद्धितार्थकर्म्मत्व** इति। तद्धितार्थभावनानिरूपितकर्म्मत्वे विवक्षिते इत्यर्थः। **षष्ठीप्रसङ्गवारणायेति**। उक्तसूत्रे कृद्ग्रहणाभावे कर्त्तृकर्म्मणोर्वाच्ययोरित्येतावन्मात्रार्थकस्य तस्य तद्धितार्थभावनाकर्म्मत्वेन कटस्य विवक्षितत्वात् कृतपूर्वी कटमित्यत्रापि प्रवृत्तिरावश्यकीत्यतः कृदर्थे-कर्त्तृकर्म्मणोर्विवक्षायामित्यर्थलाभायोपात्तेन कृत्पदेनैवात्र तत्सूत्रस्याप्रवृत्तिरित्याशयः।

**तच्चिन्त्यमि**ति। चिन्ताबीजमाह—**एवं सती**ति। **प्रत्ययार्थभावनाकर्म्मैवे**ति। इनिरूपतद्धितार्थकृतिकर्म्मैव क्तप्रत्ययेनाप्यभिधीयेतेत्यर्थः। क्रियाभेदस्यैव कर्म्मभेदनियामकतया दर्शितरीत्या कृधात्वर्थकृतेस्तद्धितार्थकृतिभिन्नत्वाभावेन कर्म्मभेदस्यासम्भवादित्याशयः। **अन्यथा** तद्धितार्थकृतिभिन्नायाः कृतेः कर्म्मणः क्तप्रत्ययेनाभिधाने। **अनेन कृतमित्यत्रे**ति। पूर्वं

१ ० तेन इति मु० पु० पा०।

न च तद्धितार्थस्य [2]कृदर्थस्य वा कृतेर्भेदः, नापि पदभेदात्कर्म्मभेदः, किन्तु क्रियाभेदात्। न च कृतिजन्योत्पत्त्याश्रयः कर्म्मानभिहित इति किमुपकृतं [3]कृतेस्तद्धितार्थतावादेन। किञ्चैवं तद्धितार्थभावनायामपि कारकान्वयस्वीकारे कृतपूर्वीत्यादाविव पूर्वीत्यत्रापि कर्म्मान्वयप्रसङ्गः, "पूर्वादिनिः" इति सूत्रेण कर्त्तरीनिविधानात्। एवं श्राद्धमनेन भुक्तमित्यर्थे श्राद्धीत्यत्र भुजिक्रियायां तद्भावनायां वा इनिप्रत्ययोपात्तायां पाणि-

कृतमनेनेति विग्रहवाक्य इत्यर्थः। **कर्त्तृत्वे**ति। तृतीयार्थकर्त्तृत्वेत्यर्थः। **अन्वयस्यानुपपत्तेरि**ति। विग्रहवाक्यसमासवाक्ययोस्तुल्यार्थकत्वेन समासात्तद्धितार्थकृतिकर्त्तृत्वस्यैव देवदत्तादौ बोधनेन विग्रहवाक्याद्देवदत्तकर्त्तृत्वस्य धात्वर्थकृतौ बोधस्यानुपपत्तिप्रसङ्गात्, तयोर्भेदस्य त्वयोपगमात्। एवञ्च क्तप्रत्ययस्य कृतः कर्म्मणि कटे षष्ठीप्रसङ्गो दुर्वार एवेति भावः। क्रियाभेद एव कर्म्मभेदनियामकः, प्रकृते कृधात्वर्थस्वरूपायाः क्रियायास्तद्धितार्थकृतेर्भेदाभावान्न तद्धितार्थधात्वर्थकर्म्मणोर्भेद इत्याह—( **न चे**ति )। तत्र द्वितीयाप्रसङ्गो दुर्वार इत्याशयं प्रकटयति—**न चे**ति। तथा च तादृशकर्म्मणः क्तप्रत्ययेनाभिधानात्तद्धितस्य कृत्यर्थकत्वमुपगम्यापि तत्र द्वितीया नोपपादयितुं शक्येत्याशयः। कृतेरेकपुरुषसमवेताया अप्यनेकत्वाद्धात्वर्थतद्धितार्थकृत्योर्व्यक्तेर्भेदो नासम्भवीत्यतो दोषान्तरमाह–**किञ्चैवमि**ति। **कर्म्मान्वयप्रसङ्ग** इति। भावनास्वरूपतद्धितार्थे कटमिति द्वितीयार्थकर्म्मत्वान्वयसम्भवात् कटं पूर्वीतिप्रयोगस्य प्रामाण्यप्रसङ्ग इति भावः। **विधाना**दिति। तथा च पूर्ववदत्रापि तद्धितस्य कृतिरूपभावनार्थकत्वं निराबाधमित्याशयः। तद्धितस्य धात्वर्थस्य भावनाया वा बोधकत्वेतिप्रसङ्गान्तरमाह—**एवं श्राद्धमनेने**ति। तत्र करणे इनिप्रत्ययस्तस्य च भवन्मते भुजिक्रियादिरेवार्थ इति भावः।

---

२ कृतार्थस्य वा इति मु० पु० पा०।

३ कृतेर्द्वितीयार्थतावादेन इति मु० पु० पा०।

करणकत्वादेरन्वयसम्भवात् पाणिना श्राद्धीति प्रयोगप्रसङ्गः। तथा च कृतपूर्वी कटमित्यादौ धात्वर्थ एव कटकर्म्मकत्वान्वयः, तदाश्रयमात्रं तद्धितार्थः। एवमधीती वेदानित्यादावपि क्तप्रत्ययार्थ आश्रय उत्पत्तिस्वरूपफले, तच्च प्रयोजकतयाध्ययनव्यापारे, स च तद्धितार्थकर्त्तरि सम्बद्ध्यते। उत्पत्तिस्वरूपे फले वेदाधिकरणकत्वस्य द्वितीयार्थस्यान्वयः, साश्रयोत्पत्तिर्वेदाश्रितेत्यन्वयबोधसम्भवः, प्रकारान्तरेण वेदवृत्तित्वस्योत्पत्तावन्वयस्यासम्भावितत्वेनानभिधानसत्त्वाच्च द्वितीयोत्पत्तिः।

"कर्त्तृकर्म्मणोः कृति" इत्यत्र कृत्पदं कृदर्थविशेषणक्रियापरम्। प्रकृते च क्रिया न कृदर्थे विशेषणम्, अपि तु तद्धितार्थ इत्यतो न षष्ठी। अतएव चाख्यातार्थं प्रति धात्वर्थस्य प्राधान्यमिति वैयाकरणमते तिङन्ते प्रत्ययार्थविशेषणत्वाभावात् क्रियाया न तद्योगे षष्ठीप्रसङ्गः,

**तथा चे**ति। उक्तानुपपत्तिप्रसङ्गभयेनेत्यर्थः। **तदाश्रयमात्रमि**ति। न तु कृतिरिति शेषः। अधीती वेदानित्यत्रापि वेदवृत्तित्वस्योत्पत्तावन्यपदेनाप्रतिपादनाद् द्वितीययैव तत्प्रतिपादनमिति न तत्रापि तदनुपपत्तिरित्याह— **एवमधीती**ति।

द्वितीयामुपपाद्य सूत्रे कृद्ग्रहणं सार्थकयितुमाह—**कर्त्तृकर्म्मणो**रिति। कृत्पदस्य तादृशक्रियापरत्वात्कटमित्यत्र षष्ठीप्रसङ्गवारणमेव तत्फलमित्याह— **प्रकृते चे**ति। न कृदर्थविशेषणं किन्तु विशेष्यम्, कृदर्थकर्म्मणोर्विशेषणत्वेन भावनायां तस्यास्तद्धितार्थ आश्रयेऽन्वयस्योक्तत्वादित्याशयः। **अतएव** उक्तरीत्या कृत्पदस्य सार्थक्यादेवेत्यर्थः। अन्वयश्चास्य **निरस्त**मित्यग्रेतनेन। **तद्योगे षष्ठीप्रसङ्ग** इति। तथा च तिङ्प्रत्यययोगे षष्ठीप्रसङ्गवारणं न कृत्पदप्रयोजनमिति भावः। लादेशे शतृशानजादिस्थले क्रियायाः प्रत्ययार्थविशेषणत्वात्तत्रापि न

**शतृशानजादौ लादेशे "न लोक..."इत्यादिसूत्रेण कारकषष्ठीप्रतिषेधान्नौदनस्य पचन्नित्यादिप्रसङ्ग इति कृद्ग्रहणमनर्थकमिति निरस्तम् ।**

**यत्तु "कर्त्तृकर्म्मणोः कृति" इति सूत्रे कृद्ग्रहणेन ज्ञाप्यते—कृतपूर्वी कटमित्यादावभिहितेपि कर्म्मणि द्वितीयेति । तच्चिन्त्यम्, उक्तयुक्त्या षष्ठीनियमने सिद्धे ज्ञापकतायां बीजाभावात् ।१०७।**

तत्सार्थक्यमित्याह—**शतृशानजादावि**ति । **प्रसङ्ग** इति । तथा च तत्रोक्तसूत्रेणैव षष्ठीनिषेधान्न तत्प्रयोजकत्वमपि तस्येति कृद्ग्रहणं निरर्थकमित्याशयः । **निरस्तमि**ति । कृतपूर्वी कटमित्यत्रैव निरुक्तरीत्या तत्सार्थक्योपपादनादित्याशयः ।

निरुक्तरीत्या कृद्ग्रहणस्य वैयर्थ्येन तज्ज्ञापितमेव कृदभिहितेपि कर्म्मणि कृतपूर्वी कटमित्यत्र द्वितीयेत्यपि शाब्दिकमतम्, तस्य वैयर्थ्याभावाज् ज्ञापकताया असम्भवाद्विचारासहमिति दर्शयति—**यत्त्वि**ति । **षष्ठीनियमन** इति । कृदर्थविशेषणक्रियायोगस्यैव तन्नियामकतया तदभावात्कटमित्यत्र तदप्रवृत्तिनियमन इत्यर्थः । **बीजाभावादि**ति । वैयर्थ्यस्यैव ज्ञापकताप्रयोजकत्वेन तस्याभावादित्यर्थः ।

केचित्तु कृतपूर्वी कटमित्यादौ कृत्याश्रयरूपः कर्त्ता तद्धितप्रत्ययस्यैवार्थः । कृतपदं तस्य तादृशार्थे तात्पर्य्यग्राहकतयैवोपयुक्तम्, न तु कृतिकर्म्मार्थकम् । एवञ्च क्तप्रत्ययेन कर्म्मानभिधानान्न द्वितीयानुपपत्तिः । धात्वर्थकृतेस्तद्धितार्थकृत्यभिन्नत्वेन कारकाणां धात्वर्थान्वयनियमभङ्गस्याप्यप्रसक्तेः । क्तान्तकृधातोस्तादृशतात्पर्य्यग्राहकतया कृतेर्द्धातुप्रयोज्योपस्थितिविषयत्वानपायादित्याहुः ।

वस्तुतस्तु अनभिधानपदार्थपर्य्यालोचनायां न कृतपूर्वी कटमित्यादौ द्वितीयानुपपत्तिशङ्कापि । तथाहि— यथाश्रुतस्य कर्म्मत्वानभिधानस्य द्वितीयानियामकत्वे ओदनः पक्त्वा भुज्यत इत्यादौ कृता कर्म्मत्वानभिधानाद्

द्वितीयापत्तिः । न च कृदाद्यभिहितत्वसामान्याभावस्य तथात्वादुक्तस्थले चाख्याताभिहितत्वस्य कर्म्मत्वे सत्त्वेन तत्सामान्याभावविरहान्न द्वितीयेति वाच्यम्, तथा सति भोक्तव्यमोदनं पचतीत्यादौ कृता कर्म्मत्वस्याभिधानात्तत्रापि द्वितीयानुपपत्तिः । न च तत्र भोजनकर्म्मत्वमेव कृताभिहितम्, न तु पाककर्म्मत्वमिति तत्र तत्सामान्याभावो निराबाध एवेति न द्वितीयानुपपत्तिरिति वाच्यम्, ओदनः पक्त्वेत्यादावपि पाककर्म्मत्वस्यानभिधानात्तत्रापि द्वितीयापत्तितादवस्थ्यात् । न च प्रधानक्रियानिरूपितकर्म्मत्वानभिधानमेव तथा, प्रकृते च भोजनक्रियैव प्रधानम्, भोक्तव्यमोदनमित्यत्र च पाकक्रियैव तथेति तत्कर्म्मत्वस्याभिधानानभिधानाभ्यामापत्त्यनुपपत्तिविरह इति वाच्यम्, तथापि चैत्रेण दृश्यमानं घटं मैत्रः पश्यतीत्यादौ दर्शनक्रियायाः प्राधान्येन ज्ञानभेदेन विषयताभेदे मानाभावाच्चैत्रमैत्रोभयदर्शननिरूपितविषयतायाः कर्म्मत्वरूपायाः कृताभिधानाद् द्वितीयानुपपत्तेः । तस्मात्प्रधानीभूतकृदाद्यन्यतमानभिधानमेवानभिधानपदार्थः । तस्य च कृतपूर्वीत्यत्र क्तप्रत्ययस्य प्राधान्यविरहादेव सत्त्वम् । अथवा प्रातिपदिकार्थविशेषणतामात्रेण कर्म्मत्वाद्यविवक्षणमनभिधानपदार्थः । तत्तत्प्रातिपदिकार्थविशेष्यतया कर्म्मत्वादीनां विवक्षणे द्वितीयादेस्साधुत्वमित्यस्य पर्य्यवसिततया कटविशेष्यत्वेन कर्म्मत्वविवक्षणे न द्वितीयानुपपत्तिशङ्कालेशोपि । सम्भेदेनान्यतरवैयर्थ्यमिति न्यायान्न कृद्द्वितीयान्यतरवैयर्थ्यम्, नित्यसापेक्षत्वाच्च कृतशब्दस्य न वृत्त्यनुप्रवेशानुपपत्तिरपीति सारम् ।१०७।

( इति सटीकपदवाक्यरत्नाकरे कारकद्वितीयाविवरणम् । )

## ( अथोपपदद्वितीयाविवरणम् । )

**अकारकद्वितीयार्थो नामार्थेनापि सङ्गतः ।**
**यथानुशासनन्तस्य व्यवस्थापनमिष्यते ॥१०८॥**

उभयतस्सुभद्रां सङ्कर्षणवासुदेवावित्यत्रोभयशब्दस्य पार्श्वद्वयं तसिलो वृत्तित्वं सुभद्रापदसमभिव्याहृतद्वितीयायाः पार्श्वान्वयिसम्बन्धित्वमर्थः । तथा च सुभद्रापार्श्वद्वयवृत्तिवासुदेवसङ्कर्षणावित्यन्वयबोधः ।

"नाम्नो द्विधैव सम्बन्धस्सर्ववाक्ये व्यवस्थितः ।
सामानाधिकरण्येन षष्ठ्या वापि क्वचिद् भवेत् ॥"

इत्यत्र षष्ठीपदं षष्ठ्यपवादकविभक्तीनामप्युपलक्षणम् । पार्श्वपदेनात्र च

**नामार्थेनापि सङ्गत** इत्यत्रा**पि**रेवकारार्थे, धात्वर्थान्वयित्वेकारकत्वविरहात् । **तस्य** अकारकद्वितीयार्थस्य । **यथानुशासनम्** "उभसर्वतसोः कार्य्या..." इत्याद्यनुशासनमनतिक्रम्येत्यर्थः ।

तत्रादौ –"उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोन्यत्रापि दृश्यते ॥"

इत्यनुशासनसिद्धतसन्तोभयपदयोगिद्वितीयार्थं निरूपयति—**उभयत** इति । **पार्श्वद्वयमि**ति । लक्षणया तद्बोधकमित्यर्थः, सामान्यवाचकपदानां विशेषधर्म्मावच्छिन्नबोधकतायास्तथैव व्यवस्थापनात् । **तसिलो वृत्तित्वमि**ति । सप्तम्यन्ताद्विहितस्येत्यादिः । **सुभद्रापार्श्वद्वय**मिति । सुभद्राप्रतियोगिकसम्बन्धवत्पार्श्वद्वयमित्यर्थः । सप्तम्यन्तोभयत इत्यस्यार्थे सुभद्रामित्यसमानविभक्तिकद्वितीयान्तार्थस्यान्वये प्रमाणमाह—**नाम्नो द्विधैवे**ति । **सामानाधिकरण्येन** समानविभक्तिकत्वेन । तच्च घटो नील इत्यादौ । **षष्ठ्यपवादकविभक्तीनामि**ति । सम्बन्धसामान्ये विहितायाः षष्ठ्याः सर्वत्र प्राप्ततया विशेषविहितत्वेन तदपवादकानां द्वितीयादीनामित्यर्थः ।

पार्श्वानां पञ्जरास्थ्नां समूहो नाभिधीयते, किन्तु तत्सन्निहितो देशः। एकपार्श्वावधिकद्वितीयपार्श्वनिरूपितपरत्वाधिकरणं देश इति यावत्। तेनाग्रपृष्ठयोः पार्श्वद्वयतुल्यान्तरयोर्व्युदासः। दक्षिणपार्श्वदेशस्तु वामपार्श्वावधिकदक्षिणपार्श्वसमवेतापरत्वनिरूपकदैशिकपरत्ववान्, वामपार्श्वाद्दक्षिणपार्श्वमपेक्ष्यापरोयं देश इति प्रतीतेः।

सर्वतः कृष्णं गोपा इत्यत्र सर्वपदं सर्वदिक्परम्, वृत्तित्वं तसः, [1]दिगन्वयिसम्बन्धवत्त्वं द्वितीयार्थः, कृष्णस्य सर्वदिक्षु गोपा इत्यन्वयबोधः। धिक् शाक्यानित्यत्र धिक्शब्दस्य नरकानुबन्ध्याचारो जुगुप्सा नाम द्वेषविशेषो वा गर्हा, द्वितीयाया वृत्तिर्विषयत्वं वार्थः। तथा च शाक्यवृत्तिनरकानुबन्ध्याचारः शाक्यविषयिणी जुगुप्सा वा वाक्यार्थः। [2]"धिगस्तु तृष्णातरलं भवन्मनः" इत्यत्र मन इति द्वितीयान्तमस्तिक्रियाकर्तृ, धिगिति च मनसा न सम्बध्यते, किन्तु क्रियया। तथा च जुगुप्सितसत्तावद्भवन्मन इत्यन्वयबोधः। धिङ्मूर्खेत्यत्र मूर्खसम्बोध्यका जुगुप्सेत्यन्वयबोधः। सम्बोध्यत्वस्याक्षिप्तभवसिपदार्थे

नन्वेवं पार्श्वपदस्य शरीरपञ्जरास्थिसमूहवाचकत्वेनाग्रपृष्ठस्थताद्दशास्थ्नामप्युभयस्य विवक्षितत्वे द्वितीया स्यादित्यत आह—**पार्श्वपदेने**ति। अग्रपृष्ठयोः पार्श्वद्वयसन्निधानवत्त्वात्तदर्थमाह— **एकपार्श्वावधिके**ति। **इति प्रतीतेरि**ति। तथा चाग्रपृष्ठयोस्तथा प्रतीतिविरहान्न तत्सन्निहितत्वमिति भावः।

**शाक्यानित्यत्रे**ति। **शाक्यो** जैनभिक्षुः। **विषयत्वं वे**ति। जुगुप्साया धिक्पदार्थत्वाभिप्रायेण। **न सम्बध्यत** इति। साक्षान्न सम्बध्यत इत्यर्थः। तेन परम्परया तस्य धिक्पदयोगित्वाद् द्वितीयोपपत्तिः। **सम्बोध्यत्वस्यान्वय** इति। तथा च सम्बोधनविवक्षायां प्रथमायाः सर्वतो बलवत्तया न द्वितीये-

---

१ ०— सम्बन्धित्वम् इति मु० पु० पा०। २ समीक्ष्य पश्चान्मम हेमजन्मनः। तवार्णवस्येव तुषारसीकरैर्भवेदमीभिः कमलोदयः कियान्॥ इति पूर्णश्लोकः।

नान्वयो भवन एव धिगिति सम्बध्यत इति केचित्।

उपर्य्युपरि भूलोकमधोधश्चन्द्रमसमध्यधि गगनं रविरित्यत्रो-परिपदस्य ध्रुवावधिकं वा नक्षत्राधिकरणवायुगोलावधिकं [1]वापरत्वं तदधिकरणदेशो वार्थः। [2]तदन्वयिस्वनिष्ठपरत्वनिरूपकत्वं द्वितीयायाः। एवमधःपदस्य [3]भूगर्भावधिकपरत्वनिरूपितापरत्वं तदधिकरणदेशो

त्याशयः। **केचित्** नित्यसक्रियवाक्यवादिनो वैयाकरणाः। न चैवं धिक्पद-स्योक्तद्वेषविशेषार्थकत्वे स्वविषयकद्वेषस्यासम्भवेन धिङ् मामित्यत्र का गति-रिति वाच्यम्, धिक्पदस्य सर्वनाम्नामिव बुद्धिविशेषप्रकारत्वोपलक्षितधर्म्मवति शक्तत्वात्। तथाहि—धिङ् मामित्यत्र दोषगुणाभावान्यतरस्वरूपोपकर्षः। तत्र गुणः पाण्डित्यादिः। दोषः क्रोधलोभादिः। द्वितीया सम्बन्धार्थिका, मत्सम्ब-न्ध्यपकर्ष इत्यन्वयबोधः। धिङ् मूर्खेत्यत्र शास्त्रानभिज्ञो मूर्खपदार्थः। अपकर्षो वस्तुविवेकराहित्यम्। सम्बोध्यत्वं तादृशापकर्षेणैवेति। मूर्खस्यापकर्षेणानन्वयेपि तस्य सम्बोध्यसाधारण्यादेव मूर्खे लाभसम्भवात्। यत्र च न सम्बोध्यसाधार-णोपकर्षः—"कृष्ण! त्वत्सेवका धन्याः धिगस्तु प्राकृतान् जनान्।..." इत्यादौ, तत्र प्राकृतजनसम्बन्धस्यापकर्षे बोधोपपत्तये द्वितीयाया आवश्यकत्व-मेव। एवं धिगध्ययनहीनं जनमित्यत्र पाण्डित्याभावः, धिग् व्याधमित्यत्र कारुण्याभावः, अक्षान्तं धिगित्यत्र क्रोधः, धिक् स्वस्तिवाचनिकानित्यत्र लोभः, अकरुणं धिगित्यत्र परकीयस्य सुखस्य दुःखहानेर्वा द्वेषः, धिक् कृष्णाभक्त-मित्यत्र भक्तिप्रयोज्यगतिविरहः, अभक्तिप्रयोज्याधोगतिर्वा धिक्पदार्थः। द्विती-यार्थस्सम्बन्धस्तत्र तत्रान्वेतीति। एवमन्यत्राप्यूह्यम्।

**वायुगोलार्थके**ति। गगनपदस्य मुख्यार्थकत्वे तन्निरूपितसम्बन्धिनो मध्यभागस्यासम्भवः, तस्यावयवावधिकावयवसमवेतपरत्वनिरूपितापरत्वाश्रय-त्वाद् गगनस्य चावयवाभावादित्यतो वायुमण्डलार्थकत्वमुक्तम्। **भूगर्भे**ति।

---

१ परत्वम् इति मु० पु० पा०। २ ० निरूप्यत्वम् इति मु० पु० पा०।
३ भूगर्भावधिकपरत्वम् इत्येव पा० मु० पु०।

**वार्थः। तदन्वयिस्वनिष्ठपरत्वनिरूपकत्वं द्वितीयायाः। एवमधिशब्द-स्याधेयत्वं वायुगोलार्थकगगनपदसमभिव्याहृतद्वितीयाया निरूपक-त्वमर्थः। तथा च ध्रुवाद्यवधिकस्य भूगोलसमवेतपरत्वनिरूपितस्या-परत्वस्याधिकरणं तदधिकरणदेशवृत्तिर्वा, भूगर्भावधिकस्य चन्द्रनिष्ठ-परत्वनिरूपकापरत्वस्याधिकरणं तदधिकरणदेशवृत्तिर्वा गगननिरूपिता-धेयतावान् रविरित्यन्वयबोधः। "उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः" इत्यत्रोपरिबुद्धीनामुपरीत्यन्वयादुपरिशब्दस्यानाम्रेडितत्वान्न द्वितीया। "उपर्य्यध्यधसः सामीप्ये" इत्यनेन विहिते सामीप्याभिव्यञ्जके [1]द्विर्वचने द्वितीया, वीप्साद्विर्वचने तु षष्ठ्येवेति पुनरभियुक्ताः।**

भूमध्यभागेत्यर्थः। स चोदयास्ताचलान्तराभूतदेशावधिकपरत्वनिरूपितापर-त्वाश्रयः। **उपर्य्युपरि बुद्धीनामी**ति। **अनाम्रेडितत्वादि**ति। उभयोर्भिन्ना-न्वयित्वे सामर्थ्याभावाद् द्विर्वचनासम्भवादाम्रेडितसंज्ञाविरहादनुशासने चाम्रेडितान्तेष्वित्युपादानान्न द्वितीयेत्यर्थः। आम्रेडितपदेनात्र सामीप्यार्थक-द्विरुक्तस्य विवक्षितत्वा**दुपर्युपरि बुद्धीनामि**त्यत्र वीप्सायां द्विर्वचनमिति न तत्र द्वितीयाप्रसक्तिरिति प्राचाम्मतं दर्शयति—**[2]उपर्य्यध्ये**ति।

---

१ द्विर्वचने तु षष्ठ्येव इत्येव पाठः मुद्रितपुस्तके, न तु मध्ये द्वितीया वीप्सा-द्विर्वचने इति।

२ अत्र उपर्य्यधोधिदेशाना स्वसयुक्तसयोगादिपरम्पराघटकसयोगानामल्पत्वरूप सामीप्यमुपर्य्यधोधिदेशेषु बुध्यते। यदि च द्वितीयाप्रकृत्यर्थनिरूपितसामीप्यं प्रतीयते, तदा स्वसयुक्तसंयोगादिपरम्पराघटकसंयोगाना चतुर्दिगवच्छिन्नाना तुल्यत्वरूप सामीप्यमेव बोध्यम्। यथा—उपर्य्युपरि पद्मान् भ्रमराश्चपलाः, पद्मानधोधो नीराणि, कासार-मध्यधि पद्मा इत्यादौ कासारनिरूपित मध्यभागे तादृश सामीप्यम्। अतएव—

"नवानधोधो बृहतः पयोधरान् समूढकर्पूरपरागपाण्डुरम्।
क्षण क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शम्भुना॥"

इत्यत्र नवमेघसमीपाधरस्थितनारदे उत्क्षिप्तगजकृत्तिशम्भूपमा प्रतीयते। दूरावस्थितौ तु न विशिष्टोपमा निर्वहतीति ध्येयम्।

एतासामुपपदद्वितीयानामर्थो नामार्थेन सह सङ्गतः, अनुशासनबलात् । तथाहि स्मर्य्यते—

"उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोन्यत्रापि दृश्यते ॥" इति ।

धिगिति लुप्तसप्तमीकम् । अन्यत्र [1]स्तोकं पचतीत्यादौ क्रियाविशेषणे । एवं सर्वतःपर्य्याययोरभितःपरितःपदयोः, सामीप्यार्थकयोः समयानिषकाशब्दयोर्य्योगे द्वितीया । शोकार्थकहाशब्दयोगे शोच्याद् द्वितीया । शोको विषयगोचरो द्वेषविशेषः । तत्रालम्बनत्वेन विषयत्वं द्वितीयार्थः । हा साधूनित्यत्र साधुविषयको [2]द्वेष इत्यन्वयबोधः । [3]"हा राम ! हा देवर ! तात ! मातः !...॥" इत्यादौ हापदार्थे शोके न रामदेवरतातादेर्विषयत्वेनान्वयः, किन्तु सीतायाः, स्वविषयकद्वेषे हापदार्थे रामसम्बोध्यत्वस्य ।

**लुप्तसप्तमीकमि**ति । तथा च तस्य भिन्नपदत्वेनाम्रेडितान्तेष्वित्यनेन तस्य सम्बन्धविरहाद् **धिक् शाक्यानि**त्युदाहरणेषु तस्यानाम्रेडितत्वेपि न क्षतिरिति भावः । **अन्यत्रापि दृश्यत** इत्यस्यार्थमाह—**स्तोक**मिति । "अभितःपरितःसमयानिषकाहाप्रतियोगेपि" इति वार्त्तिकानुशिष्टद्वितीयायाः क्रमेणार्थमाह—**एव**मिति । **आलम्बनत्वेन** आधारत्वेन । **किन्तु सीताया** इति । तथा च सम्बोधनप्रथमायास्सर्वतो बलवत्त्वात् सैव तत्रेत्याशयः ।

---

१ आदिपदेन चैत्रं यावच्छीतमित्यादौ यावद्योगे "क्क कर्म प्रध्वस्तं फलति पुरुषाराधनमृते" इत्यादौ ऋतेयोगे च द्वितीया बोध्या । अतएव "ऋते द्वितीया च" इति चान्द्रं सूत्रम् । ऋतेशब्दार्थो वक्ष्यते । यावन्निपातस्योत्तरावधिकपरत्वमर्थः । तदन्वयिनिरूपकत्वं द्वितीयार्थ इति ध्येयम् । "क्रियाविशेषणाना कर्म्मत्वं नपुंसकलिङ्गत्वञ्च" इति परिभाषणात् स्तोकं पचतीत्यादौ द्वितीया । नपुसकत्वन्त्वजहल्लिङ्गेतरशब्दानामेव बोध्यम् । तेन सुखहेतुं पश्यतीत्यत्र न क्लीबत्वम् ।

२ विषय इत्यधिकः पा० मु० पु० ।

३ के भूषयन्ति स्तनमण्डलानि कीदृश्युमाचन्द्रमसः कुतः श्रीः ।
किमाह सीता दशकण्ठनीता इति पूर्वपद्यानि ।

प्रत्युपसर्गपूर्वकस्य धातोर्योगे द्वितीया। माणवकं प्रतिभान्ति वेदा इत्यत्र ज्ञानविषयत्वं धात्वर्थः। विशिष्टशक्तस्य धातोः खण्डशः फलावाचकत्वादकर्म्मकत्वम् तत्र ज्ञाने पदार्थैकदेशे माणवकसमवेतत्वान्वयान्माणवकसमवेतज्ञानविषया वेदा इत्यन्वयबोधः। ज्ञानमात्रं प्रतिभातेरर्थः। फलावाचकत्वादयमकर्म्मकः। विषयत्वमाख्यातार्थ इत्यपि वदन्ति।

[1]परत्वद्वयनिरूपितं परत्वद्वयं तदधिकरणदेशो वा भवत्यन्तरापदार्थः। [2]द्वितीययोश्च परत्वान्वयिसमवेतत्वमवधिमत्त्वश्चार्थः। मगधान् विदेहानन्तरा गङ्गेत्यत्र मगधावधिकेन विदेहसमवेतेन विदेहावधिकेन मगधसमवेतेन परत्वेन प्रत्येकं निरूपितं यत्परत्वद्वयं तद्वती तद्देशवृत्तिर्वा गङ्गेत्यन्वयबोधः।

क्वचिदप्राप्तिरन्तरापदार्थः। तद्योगेपि द्वितीयैव प्रमाणम्। प्राप्तिरपि ज्ञापनं गमनश्चेति द्वेधा।

**धातोर्योग** इति। वक्ष्यमाणोदाहरणानुसारेणोक्तम्, केवलस्य प्रतेर्योगेपि तस्याः साधुत्वात्। **विशिष्टशक्तस्ये**ति। ज्ञाननिरूपितत्वविशिष्टविषयताशक्तस्येत्यर्थः। **खण्डशः** जानातिवद् विषयताज्ञानोभयं प्रत्येकरूपेण। **अकर्म्मक** इति। विषयताया ज्ञानस्य च जानात्याद्यर्थतया ज्ञाने विषयताया निरूपकत्वेन विशेषणतया तस्याः फलत्वात्तेन कर्म्मणा जानात्यादीनां सकर्म्मकत्वम्। अत्र च विषयताया विशेष्यत्वमेव, न विशेषणत्वमिति तस्य फलविधया धातुवाच्यत्वाभावेन न धातोस्सकर्म्मकत्वमित्याशयः। **माणवकसमवेतत्वान्वया**दिति। एकदेशेपि ज्ञाने प्रतिशब्दसमभिव्याहाराद् द्वितीयार्थसमवेतत्वान्वयो बोध्यः। **वदन्ती**ति। अत्र मते प्रधानधात्वर्थे द्वितीयार्थान्वयार्थं प्रतेरुपादानमिति बोध्यम्।

---

१ परत्वनिरूपितापरत्वद्वयम् इति मु० पु० पा०।

२ द्वितीयायास्समवेतत्वमवधित्व वार्थः इति मु० पु० पा०।

"अनुरागमयेन भूयसा।
मधुरेणापि रसेन को गुणः॥
प्रियसङ्गमभूमिमन्तरा।
यदि विच्छिन्नपदा सरस्वती॥"

इत्यत्र भारत्या अनुरागप्रकृतिकेनापि भूयसा शृङ्गाररसेन को गुणो यदि प्रिययोः सङ्गमपर्य्यन्तमज्ञापयित्वा मध्ये विच्छिन्नप्रबन्धा चित्राङ्गदचरितकथा सरस्वतीति प्रकृतम्। अत्र सरस्वत्या नदीविशेषस्य लौहित्यबाहुल्येन भूयसा मिष्टेन जलेन को गुणो यदि प्रियस्य समुद्रस्य [1]सङ्गममप्राप्यैव विलीनगतिरसावित्यप्राकरणिक[2]मित्यनयोरुपमाध्वनये प्रतीयते। एवमन्तरेणपदस्याभावोर्थः। तदन्वयिप्रतियोग्यनुयोगिभावो द्वितीयायाः। धनमन्तरेण न सुखमित्यादौ धनसामान्याभावप्रयुक्तः सुखाभाव इत्यन्वयबोधः। द्वितीयार्थप्रतियोगितायां धनस्याधेयतया धनत्वस्यावच्छिन्नत्वेनान्वयाद्धनसामान्याभावलाभः। अभावयोः प्रयोज्यप्रयोजकभावस्तु [3]योगक्षेमसाधारणः संसर्गः।

"अन्तरान्तरेण युक्ते" इति सूत्रानुशिष्टद्वितीयाया अर्थं निरूपयति—**परत्वद्वये**ति। द्विविधस्याप्यप्राप्तेरेकमेवोदाहरणमाह—**अनुरागमयेने**ति। **अज्ञापयित्वे**त्यन्तरापदविवरणम्। द्वितीयाप्यप्राप्तिरत्रैवेत्याह—**अत्र सरस्वत्या** इति। **योगक्षेमसाधारण** (इति।) अलब्धस्य लाभो योगः, लब्धस्य रक्षणं क्षेमः, तत्साधारणस्तत्सदृशः। तथा च जन्यजनकभावादिरूपस्य प्रयोज्यप्रयोजकभावस्य नित्येत्यन्ताभावेसत्त्वेपि यत्र धनाभावस्तत्र सुखाभावो यत्र धनं तत्र सुखमित्यन्वयव्यतिरेकस्वरूप एव स इत्याशयः।

---

१ सङ्गमही० इति मु० पु० पा०। २ ० ध्वनेः इति मु० पु० पा०।

३ योगक्षेमसाधारणः इति पा० ना० मु० पु०।

**कर्म्मप्रवचनीयार्थैर्हेतुत्वादिभिरन्वितः ।**
**नामार्थस्तत्र चाकाङ्क्षां द्वितीया द्योतयत्यसौ ॥१०९॥**

येषां प्रादीनामुपसर्गव्यपदेशबाधेन कर्म्मप्रवचनीयसंज्ञा, तदर्थ एव हेतुत्वादिः। जपमनु प्रावर्षदित्यत्र जपपदाद् द्वितीया जपीया हेतुतेत्यन्वयबोधौपयिकी जपानुपदयोराकाङ्क्षामभिव्यनक्ति, विशेषणविभक्तिवन्निरर्थिकैव। जपहेतुकं वर्षणञ्च वाक्यार्थः।

भवन्तु कर्म्मप्रवचनीया एव द्योतकाः, द्वितीयाया एव हेतुत्वे हेतुमत्त्वे वा शक्तिः। अतएव जपेन प्रावर्षदिति तृतीयाबाधकम् "अनुर्लक्षणे कर्म्मप्रवचनीयस्तद्योगे द्वितीया" इत्यनुशासनमित्यभियुक्ताः।

कर्म्मप्रवचनीयसञ्ज्ञकप्रादियोगे विहितानां द्वितीयानामाकाङ्क्षाद्योतकतामात्रमित्याह—**कर्म्मप्रवचनीयार्थै**रिति। **उपसर्गव्यपदेशबाधेने**ति। कर्म्मप्रवचनीयसंज्ञाविषये आकडारनियमेन पूर्वस्या उपसर्गसंज्ञाया बाधात्तत्रोपसर्गव्यवहारविरह इत्याशयः। **तदर्थ** इति। प्रादीनामर्थ इत्यर्थः। **हेतुत्वादि**रिति। लक्षणपदस्य हेतुत्वार्थकत्वात्। **जपमन्वि**ति। "अनुर्लक्षणे" इत्यनेनानोरत्र कर्म्मप्रवचनीयसंज्ञा। ततश्च "कर्म्मप्रवचनीययुक्ते द्वितीया" इत्यनेन द्वितीया।

हेतुत्वस्य तदर्थत्वे तस्य निरूपकतया प्रवर्षणान्वयित्वान्नञ्समभिव्याहारे गतिविरहादाह—**हेतुमत्त्वे वे**ति। हेतुमत्त्वं जन्यत्वं निरूपितत्वेन प्रकृत्यर्थान्वितं स्वरूपेणैव वर्षणेन्वेतीत्याशयः। **अतएव** द्वितीयायाः सार्थक्यादेव। **तृतीयाबाधक**मिति। जपेन प्रावर्षदित्यत्र तृतीयाया एव हेतुत्वार्थकतया द्वितीयाया निरर्थकत्वे समानविषयकत्वाभावेन बाध्यबाधकभावो न स्यादित्याशयः।

[1]एवमनोः समभिव्याहृतद्वितीयाया वा साहित्यस्वरूपस्तृतीयार्थोऽर्थः। नदीमन्ववसिता सेनेत्यत्र नद्या सहावसिता सम्बद्धा सेनेत्यन्वयबोधः। अनुहरिमुपहरिं वा सुरा इत्यत्रानूपयोर्हीनत्वमर्थः। तेन हरेर्हीनाः सुरा इत्यन्वयबोधः।

वृक्षं प्रति, अभि, परि, अनु, वा द्योतते विद्युदित्यत्र चतुर्णां प्रत्यादीनां लक्षणं वाच्यं द्योत्यं वा। लक्षणन्तु द्योत्यद्योतकभावादिः। वृक्षवृत्तिद्योतकतानिरूपकद्योतनाश्रयो विद्युदित्यन्वयबोधः। आलोकान्तरसंयोगानपेक्षद्रव्यचाक्षुषविषयत्वं द्युतेरर्थः। तत्र चक्षुर्व्यापाराणामाभिमुख्यादिद्वारा कथञ्चिद् वृक्षादेर्द्योतकत्वम्।

**द्वितीयाया वे**ति। उक्तप्रकारद्वयस्यात्रापि सम्भवादिति भावः। **तृतीयार्थोऽर्थ** इति। "तृतीयार्थे" इत्यनुशासनस्य "सहयुक्तेऽप्रधाने" इति विहिततृतीयार्थ इत्यर्थः। **सम्बद्धे**ति। बन्धनार्थकषिञ्धातोः क्तप्रत्ययनिष्पन्नस्यावसितपदस्य सम्बद्धेत्यर्थ इत्यर्थः। **अनुहरिमि**ति। "हीने" "उपोधिके च" इत्याभ्यां सूत्राभ्यामनयोर्द्वितीया। तत्राधिकेऽर्थे कर्म्मप्रवचनीययोगे सप्तम्या वक्ष्यमाणत्वादाह—**हीनत्वमर्थ** इति।

**वृक्षं प्रती**ति। "लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः" इतिसूत्रेणात्र द्वितीया। **अभिपरी**त्यनयोः प्रत्येकं **वृक्ष**मित्यस्य सम्बन्धः। घटो द्योतत इत्याद्यप्रयोगात् दीपादिस्वप्रकाशतेजोवाचकपदसमभिव्याहार एव द्युतेः प्रयोगादाह—**आलोकान्तरे**ति। अस्यापि भाधातुवत् फलावाचकत्वादकर्म्मकत्वं बोध्यम्! उक्तविषयताप्रयोजकत्वस्वरूपद्योतकत्वस्य वृक्षवृत्तित्वमुपपादयति—**तत्र चक्षु**रिति। **व्यापाराणां** सन्निकर्षस्वरूपाणाम्। **आभिमुख्यद्वारे**ति। सान्निध्येन विद्युदाभिमुख्यद्वारेत्यर्थः। **कथञ्चिदि**ति। परम्परयेत्यर्थः।

---

१ एवमनोरर्थः इति मु० पु० पा०।

मुनिमभिविकासमुपेयुषी विलोचने इत्यत्र विकासः पुटविभागः। तत्र मुनेर्विकासकत्वं द्वितीयार्थः। एवं तत्तत्क्रियासमभिव्याहारेण नानार्थकल्पने गौरवाज्जनकतैव लक्षणम्। वृक्षवृत्तिजनकताकं द्योतनं मुनिवृत्तिजनकताकश्च विकासो वाक्यार्थ इत्यपरे। तच्चिन्त्यम्, तथा सति "अनुर्लक्षणे" इति सूत्रप्रणयनवैयर्थ्यात्।

एवमित्थम्भावाख्यानेपि ते चत्वारः। तद्युक्ते द्वितीयायाः क्वचिद्विषयीभावोर्थः। भक्तो विष्णुं प्रतीत्यत्र विष्णुविषयकभक्तिमानित्यन्वयबोधः। क्वचिदुद्देश्यत्वम्। तच्च क्रियाजनकेच्छाविषयत्वम्। शत्रून् प्रति धावतीत्यत्र शत्रुगोचरनाशादीच्छाप्रयोज्या धावनक्रियेत्यन्वयबोधः।

भागे वाच्ये द्योत्ये वा प्रतिपर्य्यनवः कर्म्मप्रवचनीया न त्वभिः।

**मुनिमभी**ति। "निदाघधामानमिवाधिदीधितिम्।
मुदा विकासं मुनिमभ्युपेयुषी॥
विलोचने विभ्रदधिश्रितश्रिणी।
स पुण्डरीकाक्ष इति स्फुटोभवत्॥"

इति शिशुपालवधप्रथमसर्गश्लोक इत्यादिः। **मुनेर्विकासकत्वमि**ति। लोचनयोर्विकास्यत्वमपि बोध्यम्। तथा च विकासकतानिरूपितविकास्यत्वमेव तत्र द्वितीयार्थ इत्यर्थः। **जनकतैवे**ति। तथा चैकस्या जनकतायास्तथात्वान्नोक्तगौरवमिति भावः। चिन्ताबीजमाह—**तथा सत्यनुरि**ति। **वैयर्थ्यादि**ति। तत्रापि लक्षणस्य हेतुतारूपस्यैव विवक्षणादिति भावः। अत्र धात्वर्थनिरूपिता हेतुता विवक्षिता। तत्र च हेतुतासामान्यमेव। अतएव दण्डमनु घट इत्यादौ द्वितीयेत्यतो नोक्तसूत्रस्य वैयर्थ्यमिति विभावनीयम्।

**ते चत्वार** इति। प्रत्यादयश्चत्वार इत्यर्थः। **भाग** इति। भागोसाधारणस्वत्वाश्रयः। **न त्वभि**रिति। "अभिरभागे" इत्यनेन भागे तस्य तत्संज्ञा-

लक्ष्मीर्हरिं प्रतीत्यत्र हरेः स्वामित्वमर्थः। वृक्षं वृक्षमभिसिञ्चतीत्यत्र वीप्साया द्विर्वचने कर्म्मत्वस्य द्वितीययाभिधानाद् वीप्सायां प्रतिपर्य्यन्वभीनां कर्म्मप्रवचनीयसंज्ञा गत्युपसर्गसंज्ञापवादाय। तेनोपसर्गप्रयुक्तषत्वाभावस्वरूपं फलमुपपद्यते।

मासमधीत इत्यादावधिकरणत्वं द्वितीयार्थः। मासत्वावच्छेदेनाधिकरणत्वस्यान्वयः। क्रोशं कुटिला नदीत्यत्र क्रोशत्वादिकमध्व-

निषेधात्। **हरेः स्वामित्व**मिति। स्वत्वनिरूपकत्वमित्यर्थः। वीप्सायां तत्संज्ञायाः फलन्न द्वितीया, तस्या धात्वर्थनिरूपितकर्म्मत्व एव सम्भवादतस्तस्याः प्रयोजनान्तरमाह—**वृक्षं वृक्षमि**ति। एवमध्यादीनां कर्म्मप्रवचनीयसंज्ञाया द्वितीयाफलकत्वाभावान्न तेत्र ग्रन्थकारेण दर्शिता इति ध्येयम्।

**मासमधीत** इति। "कालाध्वनोरत्यन्तसंयोगे" इत्यनेन (सूत्रेण) कालावयवाध्वावयववाचकपदाभ्यामत्यन्तसंयोगे द्वितीया स्यादिर्थकेनात्र मासपदादग्रे क्रोशपदाच्च द्वितीया। तत्रात्यन्तसंयोगो यद्यप्यभिव्याप्तिः, तथापि व्युत्पत्तिवैचित्र्येण तस्य मासपदादेव लाभसम्भवादनन्यलभ्याधिकरणत्वमात्रं तदर्थ इत्याह—**अधिकरणत्व**मिति। त्रिचतुरादिदिनाध्ययनकर्त्तरि मासमधीत इति प्रयोगस्याप्रामाणिकत्वोपपत्तये मासत्वव्यापकत्वस्याध्ययने लाभायाह—**मासत्वावच्छेदेने**ति। अवच्छेदकत्वं व्यापकत्वम्, मासत्वव्यापकत्वेनेत्यर्थः। तथा च द्वितीयार्थे मासपदार्थस्य स्ववृत्तिमासत्वव्यापकत्वसंसर्गेणाधिकरणत्वस्य निरूपकतयाध्ययनेन्वयान्मासत्वव्यापकताया अध्ययनाधिकरणतायां लाभान्नोक्तस्थले तस्य प्रामाण्यम्, किन्तु त्रिंशद्दिनाध्ययनकर्त्तर्य्येव। द्वितीया च तादृशसंसर्गस्याकाङ्क्षाभास्यत्वलाभायैवात्यन्तसंयोगे विहितेति भावः।

अत्र केचित्—अत्यन्तसंयोगोभिव्याप्तिः। सा च यावदवयवसम्बन्धरूपैव। यत्समुदायो मासपदार्थस्त एव तदवयवाः। एवञ्च त्रिंशद्दिनानां मासपदार्थतया तेष्वखिलेषु किञ्चित्किञ्चिदध्ययनसत्त्वेपि मासमधीत इति प्रमाणम्।

त्रिंशद्दिनसम्बन्धश्च दिनपर्य्याप्तत्रिशत्त्वव्यापकत्वम्। तत्र त्रिशत्त्वादेर्म्मासपदादेव लाभाद् व्यापकत्वमात्रं द्वितीयार्थः। व्याप्यविशेषाघटितस्य तस्याप्रसिद्धिर-वृत्तिमात्रे प्रसिद्धावप्यध्ययने तदप्रसिद्धेरभावप्रतियोगितावच्छेदकत्वमभावश्च खण्डश एव द्वितीयार्थः। तत्र प्रथमाभावे प्रकृत्यर्थमासस्याधेयतयान्वयान्मास-वृत्त्यभावप्रतियोगितावच्छेदकत्वलाभः। तस्य तादृशावच्छेदकत्वत्वावच्छिन्न-प्रतियोगितासंसर्गेण द्वितीयाभावे, तस्य चान्वयितावच्छेदकचैत्रकर्तृकाध्ययन-त्वसंसर्गेणाध्ययने, तस्याख्यातार्थे, तस्य प्रथमान्तार्थेन्वयात्तादृशाध्ययनकर्त्ता चैत्र इति मासमधीते चैत्र इत्यतो बोधः। प्रथमाभावे प्रतियोगिवैयधिकरण्य-निवेशान् त्रिंशद्दिनाध्ययनस्यापि दिनावान्तरदण्डादावभावसत्त्वेपि न व्यापकत्व-हानिः। मासपदं त्रिंशद्दिनपरमेव, त्रिंशद्दिनस्थाय्यखण्डवस्तुनस्तथात्वे एक-दिनाध्ययनस्थलेपि प्रतियोगिव्यधिकरणाध्ययनाभावस्य तादृशाखण्डवस्तु-वृत्तित्वासम्भवेन मासमधीत इति प्रयोगापत्तेः। दिनञ्च [1]सूर्य्योदयावधि-सूर्य्योदयान्तरपर्य्यन्तस्थाय्यखण्डवस्तुस्वरूपम्, न तु तत्तत्क्षणकूटस्वरूपम्, तथा सति प्रत्येकक्षणस्यापि मासत्वाधिकरणतया तद्वृत्तित्वस्याध्ययनाभावेक्षततया बाधापत्तेः। दिवसं स्वपितीत्यादौ तु तत्तत्क्षणकूटस्वरूपं दिनमेव दिवसपदार्थः। तेनैकदण्डादिमात्राधिकरणकस्वापकर्त्तरि न तत्प्रयोगस्य प्रामाण्यमिति द्वितीयाया एव व्यापकत्वरूपात्यन्तसंयोगार्थकत्वमिति।

न चैकमासमात्राधिकरणकाध्ययनकर्त्तर्य्यपि तत्प्रयोगस्य प्रामाणिकतया तत्राध्ययने मासान्तरे व्यभिचारान्मासत्वव्यापकताया असम्भवात्तदनुपपत्तिः। पूर्वोक्तरीत्या संसर्गज्ञानस्याप्यन्वयबोधात्पूर्वमावश्यकतया तत्तन्मासत्व-

---

१ ननु सूर्य्योदयान्तरपदेन तृतीयादिदिवसीयसूर्य्योदयस्यापि धारणसम्भवात्तादृशदिन-मादाय वस्तुतो दिवसद्वयाद्यन्तरितेप्यध्ययने मासमधीत इति प्रयोगापत्तिरिति चेन्न, सूर्य्योदयक्षणविशिष्टत्वस्यैव दिनत्वस्वीकारात्। वैशिष्ट्यञ्च स्ववृत्तित्वस्वपूर्वक्षणावृत्तित्व-स्वोत्तरसूर्य्योदयक्षणावृत्तित्वस्वोत्तरसूर्य्योदयक्षणाव्यवहितपूर्वक्षणवृत्तित्वैतच्चतुष्टयसम्बन्धेन। तथा च न चतुर्विंशतिघटिकास्थायिनः पदार्थान्न्यूनो न वाधिकः पदार्थो दिनत्वेन परिग्रहितुं शक्यत इति भावः।

वन्निरूपिताधेयतासंसर्गेण प्रकृत्यर्थान्वयासम्भवादिति वाच्यम्, मासत्वन्ना-खिलमासानुगतमेकम्, तस्य दिनपर्य्याप्तत्रिंशत्त्वस्वरूपतयैकत्वासम्भवात्। त्रिंशत्त्वस्य क्षणकूटरूपदिनानां द्रव्यानात्मकत्वेन सङ्ख्यारूपत्वस्य [1]बुद्धैवै-लक्षण्यस्यानुगमासम्भवाद् बुद्धिविशेषविषयत्वस्वरूपत्वस्य चासम्भवेपि सूर्य्योदयात्सूर्य्योदयान्तरपर्य्यन्तस्थायिनो [2]द्रव्यस्य दिनरूपतया सङ्ख्यारूपस्यैव तस्य सम्भवात्। तथा चाधिकरणत्वस्वरूपद्वितीयार्थे व्युत्पत्तिवैचित्र्येण मासपदार्थतावच्छेदकदिनपर्य्याप्तत्रिंशत्त्वादेश्चैत्रकर्तृकाध्ययनाधारतात्वव्याप्य-धर्म्मावच्छिन्नावच्छेद्यत्वसंसर्गेणान्वयादेकमासाधिकरणकाध्ययनस्थले नानु-पपत्तिः। तादृशाध्ययनाधारतानामनेकत्वेपि तत्तदधिकरणतागतान्यतमत्वेन तदनतिरिक्तवृत्तित्वात्तादृशत्रिंशत्त्वस्य तदवच्छेदकत्वम्। शब्दाच्चैत्राध्ययना-धारताव्याप्यत्वस्य मासपदप्रवृत्तिनिमित्तभानेपि यस्य यन्निष्ठावच्छेद्यता-निरूपकत्वं तस्य तद्व्याप्यत्वमिति सामान्यतो गृहीतव्याप्तिसहकृतोक्ता-वच्छेद्यत्वनिरूपकत्वादेव तत्र तस्य लाभादिति।

---

१ न चापेक्षाबुद्धित्वमनुगतम्, अपेक्षाबुद्धेः कदाचित् प्रत्यक्षरूपायाः कदाचिदनुमिति-रूपायाश्च सम्भवात् प्रत्यक्षत्वादिना साङ्कर्य्येण तस्य जातित्वाभावात्। प्रत्यक्षत्वादि-व्याप्यनानापेक्षाबुद्धित्वस्वीकारे साङ्कर्य्यविरहेपि तासा जातीना पुनरनुगमासम्भवेन बुद्धिविशेषविषयत्वस्वरूपत्वस्य तस्यासम्भवादिति हृदयम्।

२ यथा सूर्य्योदयक्षणविशिष्टस्यैकस्य दिनत्वम्, तथा त्रिंशद्दिनस्थायिन एकद्रव्यस्य मासत्वं तद्गतैकत्वस्यैव च मासपदार्थतावच्छेदकत्वमिति भावः। एतेन दिनस्य द्रव्यात्म-कत्वेपि त्रिंशतामेकदा स्थित्यभावेनाविद्यमानसमवायिकारणकगुणोत्पत्तेरसम्भवात् त्रिंशत्त्वं सङ्ख्यात्मकं कथ तेषु सम्भवतीति शङ्कापि निरस्ता। न चैकद्रव्यस्य मासपदार्थत्वे एकदिनाध्ययनस्थले मासमधीत इति प्रयोगापत्तिः, व्यापकत्वस्य प्रतियोगिवैयधिकरण्य-घटितस्यैव द्वितीयार्थत्वादिति वाच्यम्, व्यापकत्वघटकाभावे प्रतियोगिवैयधिकरण्यमपहाय मासत्वसमानाधिकरणं यन्निरुक्तसूर्य्योदयक्षणोत्पन्नापरसूर्य्योदयप्राक्क्षणस्थायिद्रव्यरूपदिना-वच्छेद्याधिकरणत्व तन्निरूपकत्वस्य निवेशात्। तथा च यत्किञ्चिद्दिनाध्ययनस्थले मासत्वाधिकरण यदध्ययनानधिकरण दिन तदवच्छेद्याधिकरणनिरूपकत्वस्याध्यनाभावे सत्त्वान्नोक्तप्रयोगापत्तिरिति ध्येयम्।

परिमाणविशेषः, तदवच्छेदेन कौटिल्यस्याप्यन्वयो व्युत्पत्तिवैचित्र्यात्। क्रोशत्वव्यापककौटिल्यवती नदीत्यन्वयबोधः। देशविधया कालविधया चावच्छेदकत्वं द्वितीयार्थः। तथा च मासमधीत इत्यत्र मासावच्छेदेनाध्ययनवत्ता क्रोशं कुटिलेत्यत्र क्रोशावच्छिन्नकुटिलता च प्रतीयते। त्रिचतुरादिदिनमात्राध्ययनादेरधिकरणता तु मासेन नावच्छिद्यते, किन्तु तदेकदेशेनेत्यपि वदन्ति ।१०९।

**कौटिल्यस्ये**ति। तच्च [१]तिर्य्यग्गमनजन्यावयवसंयोगसामानाधिकरण्यम्, तदभावः सरलत्वम्। **देशविधये**ति। दैशिकसम्बन्धस्वरूपः कालिकसम्बन्धस्वरूपश्चेत्यर्थः। स च व्याप्यवृत्तिर्ग्राह्यः। तत्त्वञ्च प्रकृत्यर्थतावच्छेदकव्याप्यदेशकालानवच्छिन्नत्वम्। अतएव त्रिचतुरादिदिनमात्राध्ययनाधिकरणतायाः प्रकृत्यर्थतावच्छेदकमासत्वव्याप्यदिनगतत्रित्वाद्यवच्छिन्नतया तामादाय न मासमधीत इति प्रयोगः। **वदन्ती**त्यनेन [२]चैत्रो मासं काश्यां तिष्ठतीत्यादेः काशीसंयोगस्य मासत्वव्यापकस्यैकस्याभावेनाप्रामाण्यप्रसङ्गात्मकोऽस्वरसः सूचितः ।१०९।

( इति सटीकपदवाक्यरत्नाकरेकारकद्वितीयाविवरणम्। )

---

१ न च तिर्य्यग्गमनवदवयवसमवेतत्व तत्, तथा सति कुटिलदण्डादौ कौटिल्यानुपपत्तेः, तदवयवे तदा तिर्य्यग्गमनस्याभावात्। सामानाधिकरण्यमेककालावच्छिन्नं बोध्यम्। तेन पूर्वं कुटिलेनन्तर सरले दण्डे न कौटिल्यप्रतीतिव्यवहारौ। रूपादौ कौटिल्यप्रतीतिव्यवहारयोरभावात् सामानाधिकरण्य द्रव्यत्वविशिष्टमपि बोध्यम्।

२ अत्र काश्यामिति सप्तम्यन्तार्थस्य स्थाधात्वर्थसयोगेन्वयान्मासत्वव्यापककाशीवृत्तिसयोगवान् चैत्र इति बोधः। स चाय बोधः चैत्रो यद्येकस्मिन्नेव स्थाने निश्चलो भूत्वा तिष्ठेत्तदैव प्रामाण्य लभेत, यदा तु काश्यामेव वर्त्तमान इतस्ततो भ्रमति तदा तु न, तत्तत्क्रियया पूर्वपूर्वसयोगस्य नाशेन सयोगस्य मासत्वव्यापकत्वाभावादिति भावः।

## ( अथ कारकतृतीयाविवरणम्। )

**टाभ्याम्भिसस्तृतीयात्रानुबन्धष्टस्तया पुनः।**
**तिङादिनानभिहितः कर्त्ता करणमुच्यते ॥११०॥**

टाभ्याम्भिसिति तृतीया। तत्र टकारोऽनुबन्धः। आत्वेनैव वाचकता। तस्यास्तृतीयायाः कर्त्ता करणं कर्त्तृत्वकरणत्वे अर्थः। तत्रापि पचतीत्यादावाख्यातेन, पाचक इत्यादौ कृता, पक्वपूर्वीत्यादौ तद्धितेन, पक्वोदन इत्यादौ समासेनाभिहिते कर्त्तरि न तृतीया, उक्तार्थत्वेन प्रयोगानर्हत्वात्।

एवमक्षा दीव्यन्त इत्यत्राख्यातेन साधकतमे कर्म्मसंज्ञया फलतः करणस्यैवाभिधानात्, पचनं काष्ठमित्यत्र कृता, पक्वौदनं

अथ क्रमागतस्तृतीयार्थौ निरूपयितव्यस्तत्र केषां तृतीयेतिसंज्ञेत्याह—**टाभ्याम्भिस** इति। **अनुबन्ध** इति। "चुटू" इत्यनेन प्रत्ययाद्यस्य तस्येत्संज्ञाविधानाद् भ्याम्भिसोर्मकारसकारयोः "हलन्त्यम्" इत्यनेनेत्संज्ञायाः प्राप्तावपि "न विभक्तौ तुस्माः" इत्यनेन तन्निषेध इति भावः। **तया** तृतीयया। **पुन**रिति वाक्यालङ्कारे। **तिङादिने**ति। "कर्त्तृकरणयोस्तृतीया" इति सूत्रस्यानभिहिताधिकारीयत्वेनाभिधानञ्च तिङादिभिरेवेति तैरनभिहित एव कर्त्ता करणञ्च तृतीयार्थ इत्यर्थः **आत्वेनैवे**ति। सुमनसेत्यादावाकारस्य श्रूयमाणत्वाट्टस्य क्वचिदप्यश्रूयमाणत्वान्न तस्य वाचकतावच्छेदककुक्षौ प्रवेश इति भावः। **कर्त्ता करण**मिति शाब्दिकमते। कर्त्तर्य्यनभिहितत्वविशेषणस्य प्रथमं प्रयोजनमाह—**तत्रापी**ति।

करणे तस्य तदाह—**एवमक्षा** इति। **कर्म्मसंज्ञये**ति। "दिवः कर्म्म च" इति सूत्रेण दीव्यतेः कर्म्मणो विकल्पेन कर्म्मसंज्ञयेत्यर्थः। **फलत** इति। आख्यातस्य कर्म्मत्वार्थकत्वेपि प्रकृते कर्म्मकरणयोः पर्य्यायत्वादित्यर्थः। **पचनमि**ति।

काष्ठमित्यत्र बहुव्रीहिणा, स्नानीयं चूर्णमित्यादौ कृत्येन, शत्या गौरित्यादौ च तद्धितेनाभिहिते करणे तृतीयापि व्याख्याता।

**चैत्रेण सूपः पच्यत इत्यत्र [1]विक्लित्त्यनुकूलः प्रयत्नः पचेरर्थः, आश्रयस्तृतीयायाः। आश्रये तादात्म्येन चैत्रः, आश्रयः समवेतत्वेन प्रयत्ने चान्वेति। प्रयत्न एव च प्रधानम्। तत्रैव सूपाभिन्नाश्रयकं फलमन्वेति, "स्वतन्त्रः कर्त्ता" "कर्त्तृकरणयोस्तृतीया" इति सूत्राभ्यां तृतीयाया आश्रयवाचकत्वानुशासनात्। स्वतन्त्रो हि धातूपात्त-व्यापाराश्रयः। तथा च तद्धातूपात्तव्यापाराश्रयबोधिका तद्धातु-साकाङ्क्षा तृतीयेति सूत्रयोरेकवाक्यतयार्थः। तत्र धातोरुपादानस्य शाब्दबोधाविषयत्वात् व्यापारस्य च धातुनैव लाभादनन्यलभ्ये आश्रये तृतीयाया वृत्तिः पर्य्यवस्यतीति वैयाकरणाः।**

पच्यतेनेनेत्यर्थे करणे ल्युटेत्यर्थः। **बहुव्रीहिणे**ति। पक्व ओदनो येनेति विग्रहे बहुव्रीहिसमासेनेत्यर्थः। **स्नानीयमि**ति। "कृत्यल्युटो बहुलम्" इत्यनेन स्नान्त्यनेनेत्यर्थेनीयर्प्रत्ययः करणे विहित इत्याशयः। **तद्धितेने**ति। शतेन क्रीत इत्यर्थे यत्प्रत्ययेनेत्यर्थः। **तृतीयापि व्याख्याते**ति। उक्तार्थत्वेन प्रयो-गानर्हत्वादुक्तस्थलेषु न तृतीयेत्याशयः।

तृतीयायाः कर्त्ता करणञ्चार्थ इति शाब्दिकमतमादावाह—**चैत्रेणे**ति। **प्रयत्न** इति। व्यापार इत्यर्थः। **प्रधानमि**ति, क्रियामुख्यविशेष्यकस्यैवान्वय-बोधस्य शाब्दिकैरुपगमात्। आश्रयवाचकत्वमेव तस्या अनुशासनसिद्धमित्याह—**स्वतन्त्र** इति। स्वतन्त्रात्मकस्य कर्त्तुस्तृतीयावाच्यत्वस्यानुशासनेन ज्ञापना-दाश्रयमात्रं कथं तदर्थ इत्यत आह—**तत्रे**ति। स्वतन्त्रपदार्थघटकधातूपात्तस्ये-त्यर्थः। **शाब्दबोधाविषयत्वादि**ति। तत्त्वज्ञानुभवविरोधादिना बोध्यम्।

---

१ विक्लृत्त्य० इति मु० पु० पा०।

आश्रयांशस्यापि तृतीयाप्रकृतिलभ्यत्वादनन्यलभ्यतरमाश्रयत्वमाधेयत्वं वा, प्रयत्नस्य च धात्वर्थत्वाभावे स एव तृतीयार्थः। अतएव पाकं करोतीत्यादौ धात्वर्थबहिर्भावेन कृतेर्न्निवेशः। शेषमाख्याते व्याख्यास्यत इति तार्किकाः।

पच्यत इत्यत्रापि पाकः क्रियत इति कृञा विवरणात् कर्म्मलकारस्यापि कृत्यादिस्वरूपा भावनैवार्थः। तदन्वयिकर्त्तृत्वमखण्डं तृतीयार्थः, अन्यथा दम्पत्योर्व्यासज्यवृत्तिकर्त्तृत्वमनुपपन्नं स्यादिति मीमांसकाः।११०।

तत्र तार्किकमतमनुसृत्य तृतीया विव्रियते—

**प्रयत्नवृत्तिविषयिप्रकारिप्रतियोगिताः।**
**तत्तद्धातुव्यपेक्षिण्या प्रतीयन्ते तृतीयया ॥१११॥**

तार्किकमतमाह—**आश्रयांशस्यापी**ति। **तृतीयाप्रकृतिलभ्यत्वादि**ति। तादृशप्रयत्नाश्रयस्य चैत्रस्यापि चैत्रपदादेव लाभान्नानन्यलभ्यत्वमित्यर्थः। आश्रयस्याश्रयत्वेनानन्यलभ्यत्वेपि चैत्रत्वादिनान्यलभ्यत्वमाश्रयत्वाधेयत्वयोश्च न केनापि रूपेणान्यलभ्यत्वमिति सूचनाय तरप्प्रत्ययान्तोपादानम्। **धात्वर्थत्वाभाव** इति। फूत्कारादिव्यापारस्यैव व्यापारत्वेन धातुवाच्यत्वम्, न तु प्रयत्नस्यापीति तस्याप्यनन्यलभ्यत्वात् तृतीयार्थत्वसम्भवादित्याशयः। **अतएव** प्रयत्नस्य धातुवाच्यत्वाभावादेव। **कृतेर्निवेश** इति। पचतीत्यस्य विवरणे कृतिवाचकस्य कृधातोरुपादानमित्यर्थः। अन्यथा पाकपदेनैव प्रयत्नस्यापि लाभात् करोतीत्यस्य वैयर्थ्यापत्तेरित्याशयः। **आख्याते** आख्यातार्थविचारे।

मीमांसकमतमाह— **पच्यत इत्यत्रापी**ति। ११०।

**प्रयत्ने**ति। अत्र **प्रयत्नवृत्ति**शब्दयोर्द्वन्द्वानन्तरं **विषयिप्रतियोगिप्रकारि**पदानां द्वन्द्वोत्तरतल्प्रत्ययान्तेन द्वन्द्वः। तेन द्वन्द्वान्तश्रूयमाणतापदस्य विषयि-

**चैत्रेण गम्यत उच्यत इत्यादौ प्रयत्नस्तृतीयार्थः। स च समवायेन चैत्रविशेषितः साध्यतया गमने वचने च विशेषणम्। रथेन गम्यत इत्यादौ वृत्तिराधेयत्वम्। तेन स्वद्यते, रुच्यते, प्रतिभायते, प्रकाश्यत इत्यादौ विषयविषयिभावः, इच्छामात्रार्थकयोः स्वदतिरोचत्योः, ज्ञानमात्रार्थकयोः प्रतिभातिप्रकाशत्योः विषयत्वार्थककर्तृप्रत्ययेनैव सह साकाङ्क्षत्वात्।**

**तेन 'प्रतिबिम्ब्यँत इत्यत्र प्रकारप्रकारिभावः, प्रतिहतचक्षुर्जनितभ्रमार्थकप्रतिबिम्बँतौ प्रकारत्वार्थककर्तृप्रत्ययस्यैव सव्यपेक्षत्वात्।**

प्रकारिणोरेव सम्बन्धः, न तु प्रयत्नवृत्त्योरपीति बोध्यम्। बह्वचः पूर्वनिपातस्तु "अल्पाच्तरम्" इत्यस्यानित्यत्वेनेति पूर्वमेवोक्तम्।

कारिकोक्तप्रयत्नादीना तृतीयावाच्यत्व क्रमेणोदाहरति—**चैत्रेणे**ति। **साध्यतया** साध्यत्वाख्यविषयतया। तेन प्रकारत्वादिविषयतायाः संयोगत्वादौ सत्त्वेपि न क्षतिः। **वृत्तिराधेयत्वमि**ति। न तु सङ्केतरूपेति शेषः। रथस्याचेतनत्वात्तत्समवेतत्वस्य प्रयत्नेसम्भवादिति भावः। विपयित्वादीनां तृतीयार्थत्वं सविषयकार्थकधातुयोग एवेति तान् दर्शयति—**तेन स्वद्यत** इति। **तेन** मोदकेन। **प्रतिभायते प्रकाश्यते** इत्युभययो**स्तेने**त्यस्य सौन्दर्य्येणेत्यर्थः। **इच्छामात्रार्थकयोर्ज्ञानमात्रार्थकयो**रित्युभयत्र मात्रपदं स्वदत्यादीनां चतुर्णां फलवाचकतयाकर्म्मकत्वेन भावाख्यातान्तत्वसूचनाय। **कर्तृप्रत्ययेनैवे**ति। कर्त्रर्थविहितटादिविभक्त्येत्यर्थः। तथा चोक्तस्थलेषु तृतीयाया विषयत्वं विषयित्वं वार्थः। आधेयतया निरूपितत्वेन वा प्रकृत्यर्थान्वितस्य तस्य निरूपकतया स्वरूपेण वा धात्वर्थेच्छाज्ञानयोरन्वय इति भावः।

**तेने**ति। मुखेनेत्यर्थः। **प्रतिहते**ति। प्रतिघाताख्यसंयोगविशिष्टं यच्चक्षुस्तत्संयोगप्रयोज्यभ्रमार्थक इत्यर्थः। प्रतिघातश्च देशान्तरसंयोगजनकक्रियाजनकः मार्गसंयोगत्वेन गन्तव्यसंयोगप्रयोजकश्च संयोगः। आद्यो यथा—

१ प्रतिबिम्बते इति मु० पु० पा०।

**न हि मुखं प्रतिबिम्बँत इतिवदादर्शः प्रतिबिम्बँत इति प्रयोगः । तेन नश्यत इत्यत्र प्रतियोग्यनुयोगिभावः । अत्र प्रयत्नत्वं जातिस्तृतीयाप्रवृत्तिनिमित्तं लाघवात् । अन्यत्र लक्षणा । व्यापारश्चाधिश्रयणादिः क्रियाजनकतावच्छेदकधर्म्मत्वेनोपलक्षणेनानुगतप्रवृत्तिनिमित्तेन करणप्रत्ययेन प्रतिस्वमुपस्थाप्यः ।**

**यदि चाधेयत्वादिकमखण्डम्, तदा तद्विशिष्टेपि शक्तिरेवेति [1]तेन तेन धातुना तत्तदर्थबोधौपयिकी तृतीयाकाङ्क्षा भिद्यते ।१११।**

मुखचक्षुस्संयोगजनिकायाश्चक्षुर्निष्ठपरावर्त्तनरूपायाः क्रियाया जनको दर्पणमुखसंयोगः । द्वितीयो यथा—स्फटिकाधस्स्थितेन पद्मरागेण चक्षुस्संयोगप्रयोजकः स्फटिकचक्षुस्संयोगः । अत्र तन्तुचक्षुस्संयोगाधीनपटचक्षुस्संयोगजन्यपटचाक्षुषस्य प्रतिबिम्बँत्ववारणाय भ्रमपदम् । तादृशो भ्रमश्च मुखवानादर्श इत्याद्याकारकः । तत्र मुखस्य प्रकारतया प्रकारप्रकारिभाव एव तृतीयार्थ इत्याशयः । विषयविषयिभावस्य तथात्वे बाधकमाह—**न हि मुखमि**ति । तथा चादर्शविषयताकत्वस्योक्तभ्रमे सत्त्वेपि तत्प्रकारताकत्वविरहादेवोक्तप्रयोगस्याप्रामाण्यमिति भावः । बुद्धौ चैतन्यं प्रतिबिम्बँते चैतन्येन प्रतिबिम्ब्यँत इत्यत्र प्रकृतिपरिणामविशेषरूपायां बुद्धौ संयोगाद्यभावेपि प्रतिबिम्बँतेश्चैतन्ये प्रयोगाद् भ्रममात्रं धात्वर्थस्तृतीयार्थस्तु पूर्ववदेवेति बोध्यम् ।

अत्र प्रयत्नादीनां तृतीयातो बोधदर्शनाच्छक्यतावच्छेदकजिज्ञासायामधिश्रयणादिव्यापाराणामनेकतया सकलानुगतैकरूपस्याभावेन तत्तद्रूपेण करणतृतीयावाच्यत्वे तस्या नानार्थत्वापत्तिस्तच्छक्तेरसर्वज्ञदुर्ज्ञेयत्वञ्चेत्याशङ्कान्निराकरोति—**व्यापारश्चे**त्यादिना । **प्रतिस्वमि**ति । प्रत्येकमित्यर्थः ।

प्रयत्नत्वजातिवदाधेयतात्वादीनामप्यखण्डत्वे तेषामपि तत्प्रवृत्तिनिमित्तत्वं गौरवाभावादित्याह—**यदि चे**ति ।१११।

---

१ तेन इत्यस्य स्थाने न इत्येव पा० मु० पु० ।

**व्यापारसान्तरो हेतुः फलेनोपहितोथवा ।**
**करणं तत्र सुब्वाच्यो व्यापार उपधेयता ॥११२॥**

**सव्यापारकं [1]कारणं करणम् । तथा च यदाधिश्रयणादिस्वरूपो व्यापारो धातुनोपस्थाप्यते, तदाधिश्रितस्य कर्त्तृत्वम् । यदि च न धातुनाभिधीयते विवक्ष्यते च धात्वर्थजनकतया, तदा [2]स्थाल्यादिः सर्वोपि कारकगणः करणमेव । तदाहुः—**

**"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।**
**विवक्ष्यते यदा तत्र करणं तत्तदा स्मृतम् ॥**

अधिकरणस्थाल्यादिव्यापारस्य धातुना मुख्यविशेष्यतया विवक्षणे स्थाल्यादीनां धात्वर्थव्यापाराश्रयत्वात्कर्त्तृत्वम् । तस्य धात्वर्थक्रियाजनकत्वेन विवक्षणे व्यापारवतः कारणस्य करणत्वाद् व्यापारस्य च तज्जन्यत्वघटितत्वेन तादृशव्यापारजन्यधात्वर्थक्रियायास्सत्त्वेन स्थाल्यादीनां करणत्वमिति शाब्दिकमतं दर्शयति—**व्यापारे**त्यादिना । **व्यापारसान्तर** इति । स्वजन्यव्यापारमन्तराकृत्य फलजनकः साक्षात्फलाजनक इत्यर्थः । तेन विक्लित्त्यौदनं पचतीति न प्रयोगः, तत्र विक्लित्तेरोदनोत्पत्ति प्रति साक्षादेव जनकत्वात् । **हेतुः करण**मित्यन्वयः । **अथवे**ति पक्षान्तरे । **फलेनोपहितः** फलोपधायकः करणमित्यन्वयः । तत्र फलोपधायकस्य करणरूपत्वे व्यापारः सुब्वाच्य उपधेयतास्वरूपो वाच्यार्थ इत्यर्थः ।

**कर्त्तृत्वमि**ति । धात्वर्थव्यापाराश्रयस्यैव तत्त्वादिति भावः । **अभिधीयत** इति विक्लित्त्यनुकूलत्वेन न विवक्ष्यते । **धात्वर्थजनकतये**ति विक्लित्त्यनुकूलव्यापारजनकत्वेन **विवक्ष्यत** इति पूर्वेणान्वितम् । **करणमेवे**ति । विक्लित्त्यनुकूलव्यापारस्य तज्जन्यत्वात्तेनैव तस्य व्यापारवत्त्वमित्याशयः । विवक्षाधीनमेव कर्त्तृत्वकरणत्वादिकमित्यत्र हरिकारिकां प्रमाणयति—**क्रियाया** इति ।

१ कारणम् इति पा० ना० मु० पु० ।
२ स्थाल्यादिः इत्यस्य तदापदपूर्वमेव पा० मु० पु० ।

वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा व्यवस्था दृश्यते यतः ॥" इति ।

तथा च काष्ठेन पच्यत इत्यत्र काष्ठनिष्ठव्यापारजन्य एकाधिकरणकविक्लित्तिजनकः[1] पाक इत्यन्वयबोधः । तदाश्रयव्यापारोभयं व्यापारमात्रं वा तृतीयार्थः । काष्ठव्यापारयोराधाराधेयभावो व्यापारपाकयोश्च जन्यजनकभावश्च संसर्गः ।

वस्तुतो व्यापारेण तृतीयार्थेन प्रकृत्यर्थस्य क्वचित्कार्य्यकारणभावात्मकस्संसर्गः । यथा—अनुभवेन स्मरति, यागेन स्वर्गं गच्छति, चक्षुषा पश्यति, श्रोत्रेण शृणोतीत्यादौ तृतीयार्थेषु संस्कारापूर्वसन्निकर्षशब्देष्वनुभवयागचक्षुःश्रोत्राणां जन्यत्वं संसर्गः । क्वचिदाधाराधेयभावः । चिकीर्षया प्रवर्त्तते, परामर्शेनानुमीयते, शब्देन शृणोतीत्यादौ प्रत्यासत्तीभूतश्चिकीर्षापरामर्शशब्दानां समवायस्तृतीयोपात्त आधाराधेयभावेन प्रकृत्यर्थविशेषितः प्रवृत्त्यनुमितिश्रवणेषु जन्यजनकभावेनान्वेति ।

**वस्तुतस्तदनिर्देश्यमि**ति । कर्त्तृत्वादिकं यतो न व्यवस्थितमतः कर्त्तृत्वादिनियतधर्म्मेण तदनिर्देश्यमित्यर्थः । **व्यापारमात्रं वे**ति । आश्रयस्य प्रकृतिलभ्यत्वाल्लाघवाच्च व्यापारस्यैव तदर्थत्वौचित्यमित्याशयः ।

आधेयत्वस्य संसर्गत्वे**नुभवेन स्मरती**त्यादौ संस्कारादिव्यापाराणामनुभवाद्यवृत्तित्वेनानुपपत्तिरित्यत आह—**वस्तुतो व्यापारे**णेति । **जन्यत्वं संसर्ग** इति । तथा च संस्कारादीनामनुभवादिजन्यत्वान्नानुपपत्तिरित्याशयः । **प्रत्यासत्तीभूत** इति । चिकीर्षादीना साक्षात्प्रवृत्त्यादिजनकत्वात्समवायस्य तद्व्यापारत्वाभावेपि तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारस्य न तृतीयार्थत्वम्, किन्तु धात्वर्थव्यापारप्रयोजकस्यापीति तत्र समवायस्य कार्य्यकारणभावसंसर्गविधयावच्छेदकत्वात्प्रवृत्त्यादिप्रयोजकत्वेन स एवोक्तस्थलेषु तृतीयार्थ इति भावः । **आधाराधेयभावेने**ति । स्वनिष्ठप्रतियोगितानिरूपकत्वेनेत्यर्थः ।

[1] ०विक्लृत्ति० इति मु० पु० पा० ।

सर्वत्र वा करणतृतीयार्थे प्रकृत्यर्थस्य जन्यजनकभावसंसर्गेणै-वान्वयः। चिकीर्षया प्रवर्त्तत इत्यादौ हेतौ तृतीया, न तु करणे, दण्डेन घट इतिवत्, इति वैयाकरणाः।

अनुमानीयः परामर्श इत्यत्र करणे छप्रत्ययात् परामर्शेनानुमीयत इत्यत्र करण एव तृतीया। करणत्वन्तु फलोपधायकत्वम्। स एव तृतीयार्थ उपहितत्वं वा। हेतुतृतीयायास्तु स्वरूपयोग्यत्वमर्थ इत्यन्ये।११२।

**दिवोर्थकरणे कर्म्मप्रत्यया अपि साधवः।**
**अक्षादौ कर्म्मकरणोभयसंज्ञासमुच्चयः ॥११३॥**

स्मरति तावत्पाणिनिः—"दिवः कर्म्म च" इति सूत्रम्। दिवस्साधकतमं करणं कर्म्म च संज्ञायत इति तदर्थः। सञ्ज्ञाद्वय-समावेशार्थकश्चकारः। अतएव मनसादेव इत्यत्र मनसः करणसंज्ञाप्रयुक्ता

व्यापारवतः कारणस्यैव करणत्वादनुमितौ साक्षात्कारणस्य परामर्शस्य व्यापारवत्त्वविरहेण कथं करणत्वमित्यत आह—**करणत्वन्त्विति**। **फलो-पधायकत्वं** कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्यसमानाधिकरणात्यन्ता-भावाप्रतियोगित्वम्। लाघवादाह—**उपहितत्वं वेति**। कार्य्याव्यवहित-पूर्वक्षणवृत्तित्वरूपमित्यर्थः। तर्हि "हेतौ" इति तृतीयातोस्याः को भेद इत्यत आह—**हेतुतृतीयायास्त्विति**। **स्वरूपयोग्यत्वं** कार्य्याव्यवहितक्षणाद्यघटित-कारणतावच्छेदकधर्म्मवत्त्वम्। **इत्यन्य** इति। अत्र छप्रत्ययस्य करणमात्रार्थकत्वे पटीयास्तन्तव ओदनीयः पाक इत्यादिप्रयोगानुपपत्तिप्रसङ्गाद्धेतुमात्रं सम्बन्धि-मात्रं वा तदर्थः, न तु करणम्, इत्यनुमानीयः परामर्श इत्यत्रापि स एवार्थः, न तु करणम्। एवमुपहितत्वस्य कार्य्यविशेषघटितस्य तदज्ञाने दुर्ग्रहत्वं तत्तत्कार्य्य-व्यक्तीनामनुगमासम्भवेन शक्तेरनैक्यप्रसङ्गश्चास्वरसबीजं बोध्यम्।११२।

**संज्ञाद्वयसमावेशार्थक** इति। संज्ञाद्वयस्यैकत्र समावेशोन्यत्र निषिद्धोत्र चकारेणैकत्रैव संज्ञाद्वयसमावेशो ज्ञाप्यत इत्याशयः। **अतएव** एकपदे संज्ञा-

तृतीया, कर्म्मसंज्ञया च कर्म्मोपपदप्रयुक्तोणप्रत्ययः, "मनसः संज्ञायाम्" इति तृतीयाया अलुक् ।

एवं स्थिते दीव्यतेः करणत्वमभिदधती द्वितीया तृतीया च साधुः । अक्षैरक्षान् वा दीव्यतीत्यत्र दीव्यतेः क्रीडासुखसाधन-व्यापारोर्थः । तत्र चाक्षाः [1]करणत्वेनानुयन्ति । तेनाक्षकरणकसुख-[2]साधनक्रीडाव्यापारो वाक्यार्थः ।

यत्तु दिवस्साधकतमे करणसंज्ञाप्रयुक्तं कार्य्यं देवना अक्षा इत्यत्र ल्युट्, कर्म्मसंज्ञाप्रयुक्तन्तु अक्षा दीव्यन्त इत्यत्र लः । अक्षैर्दीव्यतीत्यत्रोभयसंज्ञाप्रयुक्तकार्य्यप्रसक्तौ [3]करणसंज्ञया कर्म्मसंज्ञा तत्प्रयुक्तं कार्य्यं वा प्रतिषिध्यते । तस्मादक्षान् दीव्यतीति न प्रमाणमिति ।

द्वयस्य समावेशादेव । **अण्प्रत्यय** इति । "कर्म्मण्यण्" इति सूत्रेण कर्म्मण्यु-पपदे विहित इत्यर्थः । तत्र मनःपदेन देवपदस्य समासे एवोपपदत्वं "तत्रोपपदं सप्तमीस्थम्" इत्यनेनानुशिष्टम्, समासे च विभक्तेर्लोपात्कथम्मनसेति सविभक्तिकस्य साधुत्वमत आह—**मनसः संज्ञायामिति** । **करणत्वेनानु-यन्ती**ति । तृतीयार्थकरणत्वे पातादिरूपव्यापारे प्रकृत्यर्थस्याक्षादेराधेयतया-न्वयस्तादृशव्यापारस्य जन्यत्वसंसर्गेण धात्वर्थव्यापारेन्वय इत्याशयः ।

**तत्प्रयुक्तं कार्य्यं** वेति, "आकडारादेका संज्ञा" इति सूत्रस्य कार्य्यनिषेधे एव तात्पर्य्यस्य वर्णितत्वात् ।

---

१ करणत्वेनान्वयन्ति इति मु० पु० पा० ।

२ ० क्रीडन० इति मु० पु० पा० ।

३ परया इत्यधिकः पा० मु० पु० ।

तन्न, एवं "दिवः कर्म्म च" इति सूत्रे चशब्दवैयर्थ्यप्रसङ्गात्, ऐच्छिकविकल्पेन कार्य्यद्वयोपपादकतयैव चकारसार्थकता, व्यवस्थितविकल्पस्य [1]संज्ञाद्वयबलादेव सिद्धेः। अक्षा दीव्यन्त इत्यत्र साधकतमत्वमाख्यातेनाभिहितमिति न करणतृतीया, न वा देवना अक्षा इत्यत्र कर्म्मणि द्वितीया प्रसज्यते, [2]ल्युटोक्तार्थत्वात् ।११३।

**अधर्म्मसाधने दाने दाणोर्थे सम्प्रदानताम् ।**
**तृतीया कथयत्येवं संज्ञः कर्म्मणि कर्म्मताम् ॥११४॥**

यत्र दाण्प्रकृतिकेन यच्छतिनाधर्म्मसाधनं दानमुपस्थापितम्, तत्र चतुर्थ्यर्थे सम्प्रदानत्वे तृतीया। तेन दास्या संयच्छते धनमित्यादौ दासीसम्प्रदानकं दानं वाक्यार्थः। न पुनरिहाधर्म्मसाधनत्वमपि

**तन्ने**ति। करणसंज्ञया कर्म्मसंज्ञायाः कथं बाधः? कर्म्मसंज्ञाया एव परत्वात्तस्या एव करणसंज्ञाबाधकत्वस्याकराडनियमेन प्रसक्तेरिति दूषणस्योक्तमतस्य दीव्यतियोगे तृतीयाद्वितीयोभयस्यासाधुत्वे एव तात्पर्य्यम्। तेन तत्र करणसंज्ञाया एव बाधादक्षान् दीव्यतीत्येव प्रमाणम्, न त्वक्षैर्दीव्यतीति तात्पर्य्यप्रकाशनेन वारणसम्भवाद् दूषणान्तरमाह—**एवं दिव** इति। ननूक्तरीत्या देवना अक्षा इत्यत्र करणसंज्ञैव अक्षा दीव्यन्त इत्यत्र कर्म्मसंज्ञैवेति व्यवस्थितविकल्पकार्थकत्वादेव चकारस्य सार्थक्यमित्यत आह—**व्यवस्थितविकल्पस्ये**ति। **संज्ञाद्वयबलादे**वेति। एकत्र संज्ञाद्वयस्याकडारनियमादसम्भवेन सूत्रोक्तस्य तस्य निरवकाशत्वमिति क्वचित्करणसंज्ञैव, क्वचिच्च कर्म्मसंज्ञैवेति ज्ञापनादेव सिद्धेरित्यर्थः। एकस्यैवाक्षपदस्योभयसंज्ञावत्त्वे कुतो न द्वितीयातृतीये इत्यत आह—**अक्षा दीव्यन्त** इति।११३।

**सम्प्रदानत्वे तृतीये**ति। "[3]अशिष्टव्यवहार..." इत्यादिवार्त्तिकेनेत्यादिः।

---

१ संज्ञाद्वयविधानबलादेव इति मु० पु० पा०।

२ ल्युटा उक्तार्थत्वादिति छेदः।

३ "अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया स्यात्" इति पूर्णं वार्त्तिकम्।

शाब्दबुद्धिविषयः, आक्षेपलभ्यत्वात् । संयच्छत इति तु "दाणश्च सा चेच्चतुर्थ्यर्थे" इत्यनुशासनेन संपूर्वकाद्दाण आत्मनेपदं प्रयोज्यं यदि सा तृतीया चतुर्थ्यर्थे इत्यर्थकेन सिद्धम् ।

एवं सम्पूर्वकस्य ज्ञाधातोरवेक्षणार्थकस्य कर्म्मणि विषयतास्वरूपं कर्म्मत्वमपि तृतीयाया द्वितीयायाश्चार्थः । पित्रा पितरं वा सञ्जानीत इत्यत्र पितृविषयकमवेक्षणं वाक्यार्थः । सञ्जानीत इति "सम्प्रतिभ्यामनाध्याने" इत्यनुशासनेन सम्पूर्वकात्प्रतिपूर्वकाच्च ज्ञ आत्मनेपदं भवति यद्याध्यानं स्मरणं न संज्ञोर्थ इत्यर्थकेन सिद्धम् । आध्याने तु मातरम्मात्रा वा सञ्जानातीत्येव प्रमाणम् ।

केचित्तु आध्याने मातरम्मातुर्वा सञ्जानातीत्येव साधुर्न्न तु मात्रेति, तृतीयायाः परया षष्ठ्या बाधात् । अतएव पितुस्संज्ञानमित्यादौ कृद्योगषष्ठ्या तृतीयाया बाध इत्याहुः । तच्चिन्त्यम् ।११४।

**शाब्दबुद्धिविषय** इति, तस्य धातुना तृतीयया वानुपस्थापनात् । **आक्षेप लभ्यत्वादि**ति । मानान्तरेणानुमानादिना बोध्यत्वादित्यर्थः । दाण्धातोः परस्मैपदित्वात्कथं तत आत्मनेपदमित्यत आह—**संयच्छत इति त्वि**ति ।

**एवं संज्ञ** इति कारिकांशार्थमाह—**एवं संपूर्वकस्ये**ति । **द्वितीयायाश्चार्थ** इति । "संज्ञोन्यतरस्यां कर्म्मणि" इत्यनेन विकल्पेन विहिताया इत्यादिः । **अवेक्षणम्** असाधारणधर्म्मेण ज्ञानम् । **षष्ठ्या बाधादि**ति । "अधीगर्थदयेशां कर्म्मणि" इत्यनेन स्मरणेर्थे विहितयेत्यादिः । **अतएव** षष्ठ्या तृतीयाबाधकत्वादेव । **तच्चिन्त्यमि**ति । षष्ठ्या तृतीयाया बाधे तुल्ययुक्त्या द्वितीयाया बाधो दुर्वारश्चिन्ताबीजम् । पितुस्संज्ञानमित्यत्र तु वृत्तिकारमते कृद्योगे कर्म्मार्थकषष्ठ्या द्वितीयातृतीययोरुभयोरेव बाध इति । ११४ ।

( इति सटीकपदवाक्यरत्नाकरे कारकतृतीयाविवरणम् । )

## ( अथोपपदतृतीयाविवरणम् । )

**प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् ।**
**अवच्छेदकतावृत्तिप्रकारत्वादि शंसति ॥११५॥**

प्रकृत्यादिभ्यो विहिता तृतीया क्वचित्तादात्म्यमभिधत्ते। यथा—प्रकृत्या चारुरित्यत्र । सुखजनकसाक्षात्कारविषयधर्म्मवाँश्चारुपदार्थः। चारुपर्य्याया एवाभिरामहृद्यसुन्दरमञ्जुलादयः। मनोभिरामो नयनाभिराम इत्यादौ पदार्थैकदेशे सुखजनकसाक्षात्कारे नयनमनोजन्यतादात्म्यान्वयः। यावदाश्रयभावी स्वाधिकरणनिष्ठात्यन्ताभावाप्रतियोगी स्थूलकालावच्छेदेन स्वाश्रये वर्त्तमानस्यात्यन्ताभावस्याप्रतियोगी वा धर्म्मः प्रकृतिरित्युच्यते, सतो जातिरीश्वरस्य सार्वज्ञ्यं जलस्य शैत्यं पृथिव्या गन्धो गुणस्य द्रव्यसमवेतत्वं प्रकृतिरिति प्रयोगात्। उत्पत्तिक्षणे शैत्याभावो जले, पाकक्षणे गन्धाभावः

**प्रकृत्यादिगणाज्जाते**ति। "प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति वार्त्तिकानुशिष्टेत्यर्थः। उदाहरति—**प्रकृत्ये**ति। प्रकृतिपदार्थमाह— **यावदाश्रयभावी**ति। अस्यैव विवरणं **स्वाधिकरणे**ति। **सतो जाति**रिति। सत्तावत्सु द्रव्यादित्रिषु जात्यभावस्येश्वरे सर्वज्ञत्वाभावस्य चासत्त्वाज्जातिसर्वज्ञत्वयोस्सत्तावत ईश्वरस्य च प्रकृतित्वसम्भवेपि जलादिषु शैत्यादीनामभावस्य तत्तत्कालावच्छेदेन सत्त्वात्तत्त्वं न स्यादतः **स्थूलकालावच्छेदेने**ति वृत्तित्वविशेषणमुपात्तमित्याह--**उत्पत्तिक्षण** इति। **गन्धाभाव** इति। वह्निसंयोगात्परमाणौ द्व्यणुकादौ वा क्रिया, तया परमाण्वाद्यन्तरेण विभागे आरम्भकसंयोगनाशे द्व्यणुकादिनाशे परमाणौ द्व्यणुकादौ वा गन्धनाशो यत्र तत्रेत्यर्थः। न च तस्मिन्नेव क्षणे गन्धान्तरस्योत्पत्तिस्सम्भवति, पूर्वगन्धनाशस्य

**पृथिव्याम्, समवायिनाशक्षणे द्रव्यसमवेतत्वाभावो गुणे विद्यमानोपि न स्थूलकालावच्छेदेन। विद्या ब्राह्मणस्य, मत्सरः खलस्य, संयोगो द्रव्यस्य, कर्म्म मूर्त्तस्य प्रकृतिरित्यादौ जात्यादिप्रकृतिसादृश्याद-भीक्ष्णानुवृत्तेः प्रकृतिपदं गौणम्। चारुपदार्थैकदेशधर्म्मान्वयि-तादात्म्यं प्रकृतिपदप्रकृतिकतृतीयार्थः। प्रकृत्यभिन्नचारुत्ववानित्यर्थः।**

गन्धान्तरोत्पत्तौ हेतुत्वादिति भावः। **समवायिनाशक्षण** इति। स्वसम-वायिनो द्व्यणुकस्य नाशोत्तरक्षणे एव निरुक्तरीत्या श्यामादिरूपनाशाद् द्व्यणुकनाशक्षणे तद्रूपादौ द्रव्यसमवेतत्वाभावो निराबाधः। यथाश्रयो द्रव्यं क्षणमगुणं तथा विनश्यदवस्थो गुणोपि क्षणमनाश्रित इति भावः। **न स्थूलकालावच्छेदेने**ति। तथा च क्षणानवच्छिन्नत्वस्य प्रकृतिपदार्थघटक-वृत्तित्वे विशेषणेन तत्तत्कालावच्छिन्नवृत्त्यभावमादाय न शैत्यादीनां प्रकृतित्व-हानिः। अत्र च धर्म्मेसाधारण्यं विशेषणं देयम्। तेन घटस्य गुणो जातिर्वा प्रकृतिरित्यादिको न [1]प्रयोगः। **जात्यादिप्रकृती**ति। **सतो जाति**रित्यत्र जातेः प्रकृतित्वस्य निराबाधतया तत्सादृश्यादित्यर्थः। **अभीक्ष्णानुवृत्ते**रिति। अनेकवृत्तित्वादित्यर्थः। एतच्च **सादृश्यादि**त्यत्रान्वितम्। तेन जातिवृत्त्यनेक-वृत्तित्वस्य विद्यादौ सत्त्वात्प्रकृतिसदृशे प्रकृतिपदलक्षणयैवोक्तस्थलेषु निर्वाह इति भावः।

अत्र यद्यपि संयोगो द्रव्यस्येत्यादौ वृत्तित्वे देशानवच्छिन्नत्वविशेषणे-नाप्युपपत्तिः सम्भवति, तथापि विद्या ब्राह्मणस्येत्यस्य कदाप्यनधीतविद्ये ब्राह्मणे तदुभयविशिष्टवृत्तिताया विद्याभावे सत्त्वान्नोपपत्तिस्सम्भवतीति तेषां गौणत्वमुक्तम्।

एतेन भूयःकालिकस्वाश्रयनिरूपितवृत्तितावाँस्तादृशो धर्म्मः, स्वाश्रय-निरूपितवृत्तितावतः प्रतियोगिजातीयासमानकालिकस्य नाशस्य प्रागभावस्य

१ प्रयोगस्तु कम्बुग्रीवादिमत्त्वं प्रकृतिरिति।

**जात्या ब्राह्मण इत्यादौ स्वरूपेणोपस्थितेपि ब्राह्मणत्वे जातितादाम्यान्वयो नानुपपन्नः ब्राह्मणपदं वा पुण्यप्रयोज्यजातिपरम्।**

**गोत्रपदार्थ** इति। एतस्यैव वंशपदार्थत्वमपि बोध्यम्, गोत्रवंशयोः पर्य्यायत्वात्। पुरुषश्च तादृशगोत्रप्रवर्त्तक एव ग्राह्यः। चैत्रमैत्रगोत्रा एते इति प्रयोगवारणायारभ्ये उत्तरकालिकत्वं विशेषणीयम्। (तेन) चैत्रमैत्रोत्तरकालिकत्वस्य चैत्रमैत्रादावभावान्नोक्तप्रयोगः। तथापि रघुयदुकुरुवंशोद्भवेषु तत्तदुत्तरकालिकेषु रघुयदुकुरुगोत्रा एते इति प्रयोगप्रसङ्गः। तद्वारणस्य ब्राह्मणत्वविशेषणेन सम्भवेपि प्रभाकरकुमारिलोदयनादिवंशोद्भवेषु प्रभाकरादिगोत्रा एते इति प्रयोगाभावादृषित्वमपि ब्राह्मणे विशेषणीयम्। तच्च वेदार्थसाक्षात्कर्त्तृत्वस्वरूपं प्रभाकरादौ बाधितमिति न तत्प्रसङ्ग इति बोध्यम्। **गौण** इति। पत्न्याः स्वारम्भकशुक्रारभ्यत्वविरहान्मुख्यसगोत्रतायास्तस्यामसम्भवात्स्वसहचारित्व-लक्षणधर्म्मेण सादृश्याद्धर्म्मशास्त्रातिदेशादेव सगोत्रत्वम्, तत एव च पितृसगोत्रत्वव्यपदेशस्ततो निवर्त्तते। कन्यादानात्पूर्वन्तु पितृसगोत्रत्वमेव तस्याः। अतएव कन्यादानवाक्यं पितृगोत्रघटितमेवेति बोध्यम्। **गर्गापत्यत्व** इति। अत्र गोत्रापत्यविहितयञ्प्रत्ययार्थैकदेशोत्पत्तिजनकत्वरूपारम्भकत्वैकदेशे उत्पत्तौ प्रकृत्यर्थस्याधेयतयान्वयाद् गोत्रापत्यस्य वंशजन्यत्वरूपतया वंशस्योक्तगोत्रतादात्म्याद् **गर्गारम्भके**त्याद्यर्थलाभ इति बोध्यम्। **पुरुषारम्भके**ति। निरुक्तस्वरूपगोत्रप्रवर्त्तकपुरुषोत्पादकेत्यर्थः।

**नानुपपन्न** इति। जातिपदाज्जातित्वेन ब्राह्मणपदात्स्वरूपतो ब्राह्मणत्वस्योपस्थितेर्जातिमान् घट इत्यादाविव नानुपपन्न इति भावः। तृतीयार्थाभेदस्य पदार्थैकदेश एवान्वय इति नियमस्याप्रयोजकत्वज्ञापनायाह--**ब्राह्मणपदं वे**ति। तथा च पुण्यप्रयोज्यत्वविशिष्टाया जातौ शुद्धाया जातेस्तादात्म्यान्वयोपि दण्डवान् रक्तदण्डवामित्यादाविव नानुपपन्न इति भावः। ननु तृतीयार्थाभेदस्य पदार्थैकदेशान्वय एव व्युत्पत्तिसिद्ध इति कथं पदार्थीभूतायां तादृशजातौ

पृथिवीजलयोर्द्रव्यत्वेन साधर्म्यमित्यत्र प्राधान्येनोपस्थितेपि पदार्थे पदार्थान्तरतादात्म्यं बोधयन्ती तृतीया दृश्यते, न परं पदार्थैकदेशत्वापन्न एव।

एवम् अर्घ्यादिकया सपर्य्यया पर्यपूपुजत्, "वाजपेयेन यजेत.." इत्यादौ क्रियायां प्रातिपदिकार्थतादात्म्यमपि तृतीया बोधयति। विशेषणान्तरविशेषितसपर्य्यायाः पूजातादात्म्यान्वये न निराकाङ्क्षत्वम्, प्रमानुभव इति सहप्रयोगदर्शनात्। यथार्थानुभव-

जातितादात्म्यान्वय इत्यत आह—**पृथिवीजलयो**रिति। **पदार्थे** साधर्म्यपदबोध्ये समानधर्मे, समानो धर्मो येषामिति व्युत्पत्त्या तस्यैव ततो लाभात्। **पदार्थान्तरतादात्म्य**मिति। द्रव्यत्वपदबोध्यद्रव्यत्वतादात्म्यमित्यर्थः। **न परं** न केवलम्। तथा चोक्तनियमोऽप्रामाणिक एवेति भावः।

धातुवाच्येपि तृतीयार्थाभेदस्यान्वयप्रदर्शनेनोक्तनियमस्याप्रामाणिकत्वं द्रढयति—**एवमर्घ्यादिकये**ति।

"तमर्घ्यमर्घ्यादिकयादिपूरुषः।
सपर्य्यया साधु सपर्यपूपुजत्॥
गृहानुपेतुं प्रणयादभीप्सवो—
भवन्ति नापुण्यकृताम्मनीषिणः॥"

इति शिशुपालवधप्रथमसर्गघटकमिदम्। **क्रियायां** पूजारूपायां यागरूपायाञ्च। **प्रातिपदिकार्थतादात्म्यमि**ति। सपर्य्यावाजपेयतादात्म्यमित्यर्थः। ननु द्वितीये वाजपेयपदयजधातुभ्यां वाजपेयत्वेन यागत्वेन चोपस्थितयोस्तादात्म्यान्वयस्य सम्भवेपि सपर्य्यापदपूजधातुभ्यां पूजात्वेनैकरूपेणोपस्थितयोः कथं तादात्म्यान्वयो घटो घट इत्यादितुल्यत्वादत आह—**विशेषणान्तरे**ति। अर्घ्यादितादात्म्यविशिष्टाया इत्यर्थः। **न निराकाङ्क्षत्वमि**ति। विधेयांशेधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारादिति भावः। तादृशशाब्दबोधस्य प्रामाणिकत्वाय

१ एव इति पदं ना० मु० पु०।

**वाचको हि प्रमाशब्दः । अतएव "जगाद मधुरां वाचं विशदाक्षरशालिनीम्" इत्यत्र वाचमिति क्रियाविशेषणमुपादेयम्, मधुरत्वादिविशेषणावच्छिन्नवाचस्तादात्म्यस्य गदधात्वर्थफलेन्वयेपि[१] साकाङ्क्षत्वात्, वाक्शब्दस्याजहल्लिङ्गतया क्रियाविशेषणत्वेपि क्लीबत्वासम्भवादिति वामनः ।**

**प्रकाशकारोपि तत्रापुष्टार्थत्वमेवोदाजहार, न त्वभवन्मतयोगम् ।**

दृष्टान्तमाह—**प्रमानुभव** इति । प्रमाशब्दस्य विशेषणान्तरविशिष्टवाचकत्वादेवोक्तप्रयोग इत्यतस्तस्य तत्त्वं दर्शयति—**यथार्थानुभवो ही**ति । इदमुपलक्षणम् । भूमिरुर्बरा देशो राजन्वानित्यादावपि सर्वसस्यवत्त्वविशिष्टाया भूमेर्भूमौ, शोभनराजवद्देशस्य देशेन्वयो न निराकाङ्क्ष इत्यपि बोध्यम् । **अतएव** विशेषणान्तरविशिष्टस्य तद्धर्म्मावच्छिन्नस्य तद्धर्म्मावच्छिन्नेन्वयस्य निराकाङ्क्षत्वविरहादेव । अन्वयश्चास्ये**ति वामन** इत्यग्रिमेण । ननु क्रियाविशेषणस्य क्लीबत्वानुशासनाद्वाचमिति कथं साध्वित्यत आह—**वाक्शब्दस्ये**ति । तथा चानियतलिङ्गक्रियाविशेषणस्यैव क्लीबत्वानुशासनमिति न तस्यासाधुत्वमिति भावः ।

एतादृशस्थले निराकाङ्क्षत्वविरहः काव्यप्रकाशकारस्यापि सम्मत इत्याह—**प्रकाशकारोपी**ति । **तत्र** विशेषणान्तरविशिष्टतद्धर्म्मावच्छिन्नतादात्म्यस्य तद्धर्म्मावच्छिन्नेन्वयबोधजनककाव्ये—

"अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥"

इत्यादौ । **अपुष्टार्थत्वं** यदनुपादानेपि विवक्षितार्थस्य बाधो न भवेत्तादृशं विशेषणवाचकमित्यर्थः । उक्तपद्येतिविवितते निरवलम्बे व्योम्न्यविश्रान्तं गमनागमने कुर्वतो रवेरुत्कर्षो विवक्षितः । तत्र गगनस्यातिविततत्वमग्नेरौष्ण्यमिवार्थादेव लभ्यते, सरणित्वं मरुदुल्लासितसौरभत्वञ्च तादृशोत्कर्षाप्रयोजकमेवेति

१ ० अपि इति पद ना० मु० पु० ।

**मधुरं जगाद इत्येतावतैव वाचि धात्वर्थफले मधुरतादात्म्यान्वये मधुरवाक्तादात्म्यस्यार्थात्प्राप्तावाक्षेपलभ्यस्य पदेनाभिधानादपुष्टो-**

तेषामपुष्टार्थत्वम्। तथा च तत्तद्विशेषणविशिष्टगगनान्वयबोधस्य निराकाङ्क्षत्व-विरहेपि विशेषणवैयर्थ्यमेव तत्काव्यस्य दुष्टताप्रयोजकमित्याशयः प्रकाश-कारस्य। **न त्वभवन्मतयोगमि**ति **उदाजहारे**ति पूर्वेणान्वितम्। **अभवन्** अविद्यमानो **मतो**भिमतो **योगः** सम्बन्धो यत्र वाक्य इति व्युत्पत्त्या पदार्थयोरन्वयस्यासम्भवो यत्र, तद्वाक्यघटितकाव्यस्याभवन्मतयोगदोष-वत्त्वम्। अभवन्मतसम्बन्धश्चानेकधा वृत्तौ दर्शितः। तत्राकाङ्क्षाविरह-निबन्धनस्स—[1]"सङ्ग्रामाङ्गणमागतेन भवता..." इत्यादावुदाहृतः। आकर्णन-क्रियायां कोदण्डादिप्रातिपदिकार्थानां प्रत्येकं कर्म्मतयान्वये कोदण्डं शरानित्या-दिद्वितीयान्तप्रयोगः स्यात्। वाक्यार्थस्य तथात्वे तु सर्वत्र प्रथमैव साधुः स्यात्, प्रातिपदिकार्थमात्रे तस्या एव विधानात्। यथा—

"यो यो वीरस्समायातस्तं तं श्रृणु महीपते!।
भीष्मो द्रोणः कृपः कर्णः सौमदत्तिर्धनञ्जयः ॥..."

इत्यादाविति। तत्राकाङ्क्षाविरहान्नाभिमतान्वयस्सम्भवतीति प्रकृतेपि **वाच-**मित्यादेर्न्निराकाङ्क्षत्वे**तिवितते**त्यादीनामपि तत्त्वमेव, तुल्यत्वात्। तथा च तस्यापुष्टार्थत्वोदाहरणत्वमयुक्तमेव स्यादिति प्रकाशकारस्यैतादृशस्थले निरा-काङ्क्षत्वं नाभिप्रेतमित्यस्यावश्यकल्प्यत्वादत्र नाभवन्मतयोगत्वम्, निराकाङ्क्ष-त्वविरहादित्याशयः। अपुष्टार्थत्वं योजयति—**मधुरं जगादे**ति। **वाची**ति। वाक्पदोपस्थापितवाण्यामित्यर्थः। **धात्वर्थफल** इति। गदधातोर्व्यक्तवा-

---

१ सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते।
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ॥
कोदण्डेन शराः शरैररिशिरस्तेनापि भूर्मण्डलम्।
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम् ॥ इति पूर्णश्श्लोकः।

यमर्थः । आकाङ्क्षाविरहे त्वभवन्मतयोग एव स्यात् । एवमर्घ्यादिना पर्य्यपूपुजदित्येतावतैव सामञ्जस्ये सपर्य्ययेत्यपुष्टार्थः स्यान्न तु निराकाङ्क्षत्वमिति दिक् ।

सपर्य्ययेति करणानुवादिका तृतीया, धात्वर्थस्य भावनायां करणत्वेनान्वयादिति तु भाट्टाः ।

क्वचित्तृतीयाया अवच्छेदकत्वमवच्छिन्नत्वं वार्थः । वह्नित्वेन वह्नेः कारणत्वं कार्य्यत्वं प्रतियोगित्वं प्रकारत्वं विशेष्यत्वमित्यादौ कारणत्वादिषु वह्नित्ववृत्त्यवच्छेदकतानिरूपकत्वं वह्नित्वनिरूपकावच्छिन्नवत्त्वं वार्थः । समवायेन रूपवानित्यत्र तु मत्वर्थैकदेशेधिकरणतायां समवायावच्छिन्नत्वं समवायेन ध्वंसो नास्तीत्यत्र नञर्थे समवायावच्छिन्नत्वं प्रकारः । व्युत्पत्तिवैचित्र्याच्च ययैव प्रतियोगितया ध्वंसो

गर्थकत्वं वागनुकूलव्यापारार्थकत्वपर्य्यवसन्नमेव, तद्विशेषणीभूते इत्यर्थः । अभवन्मतयोगाभावे बीजमाह—**आकाङ्क्षे**ति । तथा चाकाङ्क्षाविरहाभावादेव न तत्राभवन्मतयोग इति भावः ।

**वह्नित्वेने**ति । अवच्छेदकत्वे आधेयतयावच्छिन्नत्वे निरूपितत्वेन प्रकृत्यर्थस्यान्वयात्तादृशो वाक्यार्थो बोध्यः । **समवायावच्छिन्नत्वं प्रकार** इति । अभावे स्वाश्रयप्रतियोगिताकत्वसंसर्गेण विशेषणमित्यर्थः । प्रथमान्तार्थस्य ध्वंसस्यान्यप्रतियोगितयाभावेन्वये समवायेन ध्वंसो नास्तीति प्रयोगः प्रमाणं न स्यादिष्यते च तत्प्रतीतेः केवलान्वयिविषयत्वमिति समवायावच्छिन्नत्वस्य यत्प्रतियोगिताघटितसंसर्गेणाभावविशेषणत्वं तत्प्रतियोगितैव ध्वंसस्य तत्र संसर्ग इत्यवश्यमभ्युपेयम्, तथा सति स्वरूपसम्बन्धावच्छिन्नप्रतियोगितायास्तत्र संसर्गताविरहेण नोक्तानुपपत्तिः, तथाविधोन्वयश्च व्युत्पत्तिवैचित्र्य-

१ निराकाङ्क्षमिति इति मु० पु० पा० ।
२ दिक् इति पदं ना० मु० पु० । ३ करणानुवादी इति मु० पु० पा० ।

नञर्थे विशेषणं तद्घटितसंसर्गेणैव तृतीयार्थोपि, इत्यर्थात् समवायावच्छिन्नध्वंसप्रतियोगिताकः संसर्गाभावो लभ्यते। संसर्गीभूतप्रतियोगितायामपदार्थेपि व्युत्पत्तिवैचित्र्यात्समवायावच्छिन्नत्वं प्रकार इति स्वतन्त्राः।

एतेन पटत्वेन घटो नास्ति शशीयत्वेन शृङ्गो नास्तीत्यादिप्रयोगाणां प्रामाणिकत्वे तेपि व्याख्याताः।

तच्चेदमवच्छेदकत्वं क्वचिद् घटकतास्वरूपमपि। यथा—धूमत्वेन वह्निव्याप्तिः, वह्न्यावयःपिण्डेन धूमव्यभिचारः, वह्निधूमयोः पर्वतेन सहभाव इत्यादौ धूमव्यापकवह्निमद्वृत्तिधूमत्वे व्याप्तौ धूमत्वस्य, धूमाभाववद्वृत्तिवह्न्यादौ व्यभिचारे धूमाभाववदयःपिण्डस्य, वह्निधूमसामानाधिकरण्ये सहभावे पर्वतस्य च घटकत्वात्।

समेनैति विषमेण गच्छतीत्यादौ कर्त्तृद्वारकमधिकरणत्वं दैशिकविशेषणतासंसर्गावच्छिन्ना वृत्तिर्वा तृतीयार्थः। भूगर्भावधिकतुल्यान्तरा

मन्तरेणासम्भवीत्यत आह—व्युत्पत्तीति। स्वतन्त्रा इति। पदार्थस्य संसर्गेन्वयोद्दष्टचर इति तस्योपगमादेव तेषां स्वातन्त्र्यं बोध्यम्।

व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावस्यानङ्गीकारे तेषां प्रामाण्यासम्भवादाह—प्रामाणिकत्व इति। तादृशाभावोपगम इति शेषः। व्याख्याता इति। तत्रापि तृतीयान्तार्थपटत्वाद्यवच्छिन्नत्वं स्वाश्रयप्रतियोगिताकत्वसंसर्गेणाभावेन्वेतीति निरुक्ता रीतिरेव तत्रापीत्यर्थः।

घटकतास्वरूपमपीति वक्ष्यमाणप्रयोगेषु स्वरूपसम्बन्धादिस्वरूपस्य तस्यासम्भवात्। घटकत्वादिति। तद्विषयताव्यापकविषयताकत्वादित्यर्थः। अत्र प्रथमे स्वस्य स्वभिन्नत्वप्रसक्त्या स्वावच्छेदकत्वाभावः। "विशिष्टस्य व्याप्तित्वं शुद्धस्य तदवच्छेदकत्वम्..." इत्यादिदीधितिकारोक्तरीत्या तत्सम्भवेपि द्वितीयतृतीययोस्तदसम्भव एवेति बोध्यम्। भूगर्भावधिकेति। यदीयसकला-

यस्य सर्वेवयवाः स देशस्सम इत्युच्यते। तदितरो विषमः। अत्र सप्तम्यर्थे तृतीया, न तु गमनस्य समविषमदेशवृत्तिव्यापारजन्यत्व-विवक्षया करणे, तथा सति "समस्तृतीयायुक्तात्" इत्यत्र सकरण-कादित्येव मुनिरवक्ष्यत्, न तु तृतीयायुक्तादिति।

रजतत्वेन पुरोवर्तिनं जानातीच्छति करोति द्वेष्टीत्यादौ प्रकारत्वे तृतीया। विशेष्यत्वं धातोः फलविधया द्वितीयाया वार्थः। तत्रैव निरूपकत्वेन तृतीयार्थस्यान्वयः।

वयवानां प्रत्येकं प्रत्येकं स्वसंयुक्तसंयोगादिपरम्पराणां तुल्यत्वं स भूभाग इत्यर्थः। **तथा सती**ति। निरुक्तविवक्षया करणे तृतीयास्वीकारे। **सकरणकादित्येवे**ति। सम्पूर्वकाच्चरधातोस्तृतीयायुक्तादात्मनेपदं तेन सूत्रेण विधीयते। रथेन सञ्चरत इति तदुदाहरणम्। तत्रापि रथवृत्तिव्यापारजन्यत्वस्य धात्वर्थसञ्चरणे विवक्षायां करणे तृतीयासम्भवात् सूत्रे सकरणकादित्येव लाघवात्कथन्नोपात्तम्। ततो ज्ञाप्यतेधिकरणस्य करणत्वविवक्षया तृतीयासाधुरिति सञ्चरणाधिकरणस्य करणत्वविवक्षया तृतीयासाधुरिति न ततस्तृतीया, फलञ्च **समेनैती**त्यावपि न करणे तृतीयेत्याशयः।

**रजतत्वेने**ति। **फलविधये**ति। विशेष्यताविशिष्टज्ञानाद्यर्थको जानात्यादि-रित्यस्योक्तत्वात्। तस्य द्वितीयार्थत्वे भगवान् जानातीत्यादावनुपपत्तेरुक्तत्वाद् वाकारोनास्थायां बोध्यः। तावतापि घट इति घटघटत्वसमवायान् जानाती-त्यादिप्रयोगस्याप्रामाण्यप्रसङ्गः, तत्र दर्शितज्ञानीयविशेष्यताया घटत्वसमवाय-योरभावादतो विषयत्वमेव तथात्वेन बोध्यम्। **तत्रैवे**ति। विशेष्यत्वे इत्यर्थः। सुबर्थयोः परस्परमन्वयो व्युत्पत्तिवैचित्र्याभ्युपगममन्तरेणासम्भव्यपि तदभ्युपगमेनैवात्र तथान्वय इति बोध्यम्। तथा च रजतत्वप्रकारतानिरूपित-पुरोवर्त्तिनिष्ठविशेष्यताकज्ञानं वाक्यार्थः। विशेष्यतायाः धात्वर्थत्वे तु प्रकृत्यर्था-न्वितस्य द्वितीयार्थाधेयत्वस्य तत्रान्वयादुक्तार्थलाभो बोध्यः। विस्तरस्त्वत्र व्युत्पत्तिवादे द्रष्टव्यः।

[1] "लक्षणस्वरूपप्रामाण्यादिभिरनुमाने निरूपणीये" इत्यत्र शाब्दबोधानुकूलव्यापारो निरूपेरर्थः। तत्समभिव्याहृततत्कर्म्मकृत्यप्रत्ययस्य [2]निरूपणजन्यशाब्दबोधविषयतावदर्थः। कृत्यप्रत्ययार्थैकदेशे विशेष्यतायां निरूपकतया तृतीयार्थस्य प्रकारत्वस्यान्वयः। तेन लक्षणादिप्रकारतानिरूपिता या निरूपणजन्यशाब्दबोधविषयता तद्वत्यनुमाने इति वाक्यार्थबुद्धिः।

तत्र विशेष्यतामात्रं कृत्यप्रत्ययार्थः, शाब्दबोधस्य धातुनैव लाभात्, कर्म्मप्रत्ययोपसन्दाने धातुना व्यापारविशेषितस्य फलस्याभिधानादिति व्यापारफलयोः पृथक्शक्तिवादिनः।

अन्ये तु धातुना फलविधयोपात्तं कर्म्मप्रत्ययास्ताद्रूप्यणाभिदधते। तेन शाब्दजनकव्यापारजन्यशाब्दबोधविशेष्यो निरूपणीयपदार्थ इति मन्यन्ते।

परिच्छिन्नत्वमपि क्वचित्तृतीयार्थः। द्विद्रोणेन धान्यं क्रीणातीत्यादौ द्रोणो गुरुत्वविशेषः। [3]द्विद्रोणमिति पात्रादित्वान्न स्त्रीत्वम्।

**वाक्यार्थबुद्धि**रिति। अत्र शाब्दबोधस्य द्विधा भानादाह—**तत्रे**ति। **ताद्रूप्येणे**ति। येन रूपेण फलत्वं तेनेत्यर्थः। तथा चात्र शाब्दबोध एव कर्म्मप्रत्ययार्थस्तस्यानुमाने विशेष्यतयान्वय इति भावः।

**गुरुत्वविशेष** इति गुरुत्वत्वावान्तरजातिमान्। फलद्वयन्तु "प्रसृतिः" इत्यारभ्य "चतुराढको भवेद्द्रोणः..." इत्याद्यन्तेन सङ्ख्यापरिमाणग्रन्थादावुक्तः। **न स्त्रीत्वमि**ति। द्वयोर्द्रोणयोस्समाहार इत्यर्थे "तद्धितार्थोत्तर..." इत्यादिसूत्रेण विहितस्य समासस्य "सङ्ख्यापूर्वो द्विगुः" इति सूत्रेण द्विगुसंज्ञकतया "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इत्यनेन प्राप्तमपि स्त्रीत्वं "पात्राद्यन्तस्य

---

१ ०स्वरूप० इति पा० ना० मु० पु०। २ ०विषयता इत्यस्य स्थाने ०विशेष्यता० इति मु० पु० पा०। ३ पाठोय मु० पु० ना०।

[1]परिच्छिन्नत्वं क्रयकर्म्मत्वान्वयितृतीयार्थः। तच्च द्विद्रोणसमवायिद्रव्यद्वयारम्भकपरमाणुत्वसमनियता या सङ्ख्या तत्सजातीयसङ्ख्याव्यापकत्वम्। व्यापकत्वन्तु आधारतया स्वाधारद्रव्यारभ्यत्वेन वा संसर्गेणावच्छिन्नत्वं प्रवेशनीयम्। तथा च क्रयकर्म्मत्वन्नाम क्रयजनितं स्वत्वम्। तच्चैकमेव सकलेषु धान्यतदारम्भकेषु धान्येष्वेव वा। भवति च परमाणुष्वपि स्वत्वस्वीकारे साक्षादेव तादृशसङ्ख्यायाः कोटित्वादिव्यापकत्वम्। इतरथा तु [2]धान्यमात्रवृत्त्यपि स्वत्वं परम्परया तथेति द्विद्रोणसमवायिद्रव्यारम्भकपरमाणुत्वसमनियता या सङ्ख्या तत्सजातीयसङ्ख्याव्यक्तिं प्रति साक्षात् परम्परया वा व्यापकस्य धान्यवृत्तेः स्वत्वस्य जनिका [3]क्रयक्रियेत्यन्वयबोधः।

न" इत्यनेन प्रतिषिद्धमित्यर्थः। **तच्चे**ति। परिच्छिन्नत्वञ्चेत्यर्थः। **द्विद्रोणे**ति। द्विद्रोणत्वं द्रोणत्वावान्तरजातिविशेषो द्रोणद्वित्वं वा। तत्र द्वितीयमभिप्रेत्याह—**द्रव्यद्वये**ति। प्रथमस्य तथात्वे एकद्रव्यस्येति बोध्यम्। अत्र तुलाया एकभागे स्थितेन द्विद्रोणपरिमितधान्यादिना परिच्छिन्नस्य धान्यान्तरादेः क्रयणे निरुक्तप्रयोगात् परिच्छेदकद्विद्रोणपरिमितद्रव्यारम्भकपरमाणुत्वसमनियता कोटित्वादिसङ्ख्या, तत्सजातीया परिच्छिन्नधान्यपरमाणुगता तादृशी सङ्ख्या, तद्व्यापकत्वं क्रयनिरूपितकर्म्मत्वस्येति बोध्यम्। क्रमकर्म्मत्वे तादृशव्यापकत्वं सङ्गमयति—**तथा चे**ति। निरुक्तस्य व्यापकत्वरूपपरिच्छिन्नत्वस्य तृतीयार्थत्व इत्यर्थः। **क्रयकर्म्मत्वन्नामे**ति **व्यापकं भवती**त्यग्रिमेणान्वितम् (?)। **तच्च** तादृशस्वत्वञ्च। **तदारम्भकेषु** तदवयवेषु। **भवति चे**ति **साक्षादेवे**ति। पूर्वोक्ताधिकरणतयेत्यर्थः। तस्यापि समवायावच्छिन्नाधिकरणतायाः समवायात्मकत्वात् समवायेनेत्येव तात्पर्य्यम्। **इतरथा त्वि**ति। तादृशस्वत्वस्य धान्यमात्रवृत्तित्वे त्वित्यर्थः। **परम्परये**ति स्वाधिकरणद्रव्यारभ्यत्वेन। तेन च परमाणुगतसङ्ख्याया धान्यवृत्तितया तत्र समवाये तादृशस्वत्वस्य सत्त्वादित्याशयः।

---

१ पदमिदं न दृश्यते मु० पु०। २ तद्धान्य० इति मु० पु० पा०। ३ क्रय० इति पद ना० मु० पु०।

एकदेशिनस्तु द्वाभ्यां द्रोणाभ्यामारब्धं गुरुत्वान्तरं द्विद्रोणम्। तत्समवायित्वं धान्यान्वयितृतीयार्थः। एको धान्यराशिरिति प्रतीत्यातिरिक्तस्य राशेस्तत्र [1]धान्यत्वस्य च स्वीकारात्, अन्यथावयविमात्रासिद्धिप्रसङ्गादित्याहुः।

तच्चिन्त्यम्, राशौ धान्यत्वादीनां स्वीकारे धान्ययवाद्युभयादिघटितराशौ तुल्ययुक्त्या धान्यत्वयवत्वाद्यभ्युपगमेन यवत्वादिना साङ्कर्य्यप्रसङ्गात्।

यत्तु—एकजातीयमवनमनं प्रति द्विद्रोणस्वरूपस्यावयविगुरुत्वस्य तावताञ्च परमाणुगुरुत्वानां वैकल्पिकी कारणता।

**एकदेशिनस्त्व**ति। **द्रोणाभ्यामारब्धमि**ति। परिच्छेदकद्रव्यद्वयगतद्विद्रोणजन्यमित्यर्थः। **स्वीकारादि**ति। तथा च तादृशगुरुत्वान्तरस्य धान्यराशिवृत्तित्वं नानुपपन्नम्, अन्यथा तु राशेः प्रत्येकधान्यरूपत्वे तेषु तादृशगुरुत्वस्य समवायित्वं दुर्घटमेव स्यादिति भावः। **अन्यथे**ति। राशेः प्रत्येकानतिरिक्तत्वे इत्यर्थः। **असिद्धिप्रसङ्गादि**ति। घटादीनामपि परमाणुराशिस्वरूपत्वाद्राशेश्च प्रत्येकानतिरेकस्य त्वयोपगमादिति भावः।

**धान्यत्वादीना**मित्यादिपदेन तादृशगुरुत्वस्य परिग्रहः। **साङ्कर्य्यप्रसङ्गादि**ति। पृथग् धान्ययवत्वयोः स्वस्वाभावसमानाधिकरणयोर्य्यवधान्योभयराशिवृत्तित्वात्। यवाद्यर्थिप्रवृत्त्यप्रसङ्गभयेन तत्र धान्ययवोभयत्वरूपातिरिक्तजातिकल्पनस्यासम्भवात्। तादृशोभयत्वादिजातीनां राशितत्प्रागभावध्वंसानाञ्चानन्तानां कल्पनाद् गौरवञ्च। एको महान् धान्यराशिरिति प्रतीतिस्तु विलक्षणसंयोगवत्त्वौपाधिकीति। घटादीनामवयविनान्तु परमाणुरूपत्वेऽप्रत्यक्षत्वप्रसङ्ग इति तत्रावयवेभ्योवयविनोतिरिक्तत्वमावश्यकमिति भावः।

**तावताञ्चे**ति। तदाश्रयारम्भकपरमाणुसमसङ्ख्यकानामित्यर्थः। **वैकल्पिकी**

---

१ तत्र धान्यत्वस्य इत्यस्य स्थाने तस्य धान्ये सत्त्वस्य इति पा० मु० पु०।

द्विद्रोणप्रयोज्यजातीयावनमनप्रयोजकानि यावन्ति गुरुत्वानि तावद्भिराश्रयघटितपरम्परया संसृष्टत्वं धान्येषु तद्वृत्तिस्वत्वे वा प्रतीयत इति ।

[२]तन्न, अवयविगुरुत्वस्य साक्षात्पतनं प्रत्येवासमवायिकारणत्वम् । अवनमने तु परमाणुगुरुत्वानामेव तथात्वम्, अन्यथा सर्षपराशि-जनितावनमनापेक्षया लोहपिण्डजनितावनमनस्य प्रकर्षप्रसङ्गात्, कारणोत्कर्षेण कार्य्योत्कर्षावश्यम्भावादिति न्यायद्वितीयाध्याये विवृतत्वादिति दिक् ।११५।

अवयविगुरुत्वतावत्परमाणुगुरुत्वान्यतरत्वावच्छिन्ना । **द्विद्रोणप्रयोज्ये**ति । तथा च द्विद्रोणप्रयोज्यावनमनप्रयोजकतावद्गुरुत्वं द्विद्रोणपदार्थः । तृतीयार्थो वैशिष्ट्यं तच्च स्वाश्रयद्रव्यारभ्यत्वस्वरूपमित्याह—**तावद्भिराश्रये**ति । **स्वत्वे वे**ति । अत्र च सामानाधिकरण्यं तृतीयार्थः । तच्च स्वत्वस्य धान्यमात्रवृत्तित्वे स्वाधिकरणे स्वाश्रयारम्भकत्वसम्बन्धेन वृत्तित्वरूपं बोध्यम् । **अन्यथे**ति । अवयविगुरुत्वस्याप्यवनमने कारणत्वोपगमे । **प्रकर्षप्रसङ्गादि**त्यत्र हेतुः—**कारणोत्कर्षेणे**ति । लोहपिण्डजनितावनमनस्य लोहपिण्डसमवेतगुरुत्वजन्यत्वे तद्गुरुत्वस्य सर्षपराशिगुरुत्वावधिकोत्कर्षवत्त्वेन कार्य्ययोरप्युत्कर्षापकर्षयोः प्रसङ्गात् । परमाणुगुरुत्वमात्रस्य तथात्वे तु सर्षपपरमाणुगुरुत्वानां लोहपिण्ड-परमाणुगुरुत्वानाञ्चोत्कर्षापकर्षभावाभावेन न तत्प्रसङ्ग इत्याशयः । ११५ ।

---

२ तन्न इत्यस्य स्थाने तत्र इति पा० मु० पु० ।

**सामानाधिकरण्यादिः सहार्थः स्यादनेकधा ।**
**तृतीयार्थस्तदीयत्वमभेदः कारकं तथा ॥११६॥**

संयोगिसंयुक्तत्व-समवायिसमवेतत्व-देशदैशिकत्व-कालकालिकत्वादिरनेकविधस्सहार्थः। स च यत्र नामार्थविशेषितो नामार्थेनान्वेति तत्र प्रतियोगित्वं तृतीयार्थः। सङ्कर्षणेन सह वासुदेव इत्यत्र सङ्कर्षणप्रतियोगिकसंयोगवदधिकरणसंयुक्तो वासुदेव इति, सह रूपेण रस इत्यत्र रूपप्रतियोगिकसमवायवदधिकरणसमवेतो रस इति, सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यत्र दशपुत्रप्रतियोगिकदैशिकसंसर्गवति देशे दैशिकेन संसर्गेण विद्यमाना गर्दभीति, सह पत्न्या पतिरित्यत्र [1]पत्निप्रतियोगिककालिकाधिकरणे कालिकेन संसर्गेण विद्यमानः [2]पतिरित्यन्वयबोधः।

"सहयुक्तेप्रधाने" इति सूत्रविहिततृतीयार्थोपि सहार्थस्यानैक्यादनेकविध इत्याह—**सामानाधिकरण्यादि**रिति। देशदैशिकत्वं कालकालिकत्वञ्च स्वप्रतियोगिकदैशिकसंसर्गवान् तादृशकालिकसंसर्गवांश्च यो देशः कालश्च तन्निरूपितदैशिकसम्बन्धावच्छिन्नं कालिकसम्बन्धावच्छिन्नञ्च वृत्तित्वम्। **स च यत्रे**ति। धात्वर्थान्वये कर्तृत्वादीनां तृतीयार्थताया वक्ष्यमाणत्वात्। **प्रतियोगित्वमि**ति। कारिकास्थं **तदीयत्वं** तत्प्रतियोगित्वम्। तत्र तत्पदार्थस्य प्रकृत्या लाभात् प्रतियोगित्वमात्रं तृतीयार्थ इत्यर्थः। तत्र प्रकृत्यर्थसङ्कर्षणादीनामाधेयतया तस्य निरूपकतया सहार्थैकदेशे आद्यसंयोगेन्वय इत्याशयेनाह—**सङ्कर्षणप्रतियोगिके**ति।

---

१ ० कालिक० इति पदं ना० मु० पु०।
२ ० बोधपदं न दृश्यते मु० पु०।

सह दिवसैर्दीर्घाः श्वासदण्डा इत्यत्र दीर्घपदस्य चिरस्थिरः आयतश्चार्थस्तृतीयायाश्चाभेदः। स च चिरस्थिरे दीर्घपदार्थे, स च समानकालीनत्वे सहार्थे, स चायते दीर्घपदार्थेन्वेति, व्युत्पत्तिवैचित्र्यात्। एवञ्च दिवसाभिन्नचिरस्थिरसमानकालीनदीर्घाभिन्नाः श्वासदण्डा इत्यन्वयबोधः। [1]तृतीयार्थाभेदान्वये च समानलिङ्गवचनादि न तन्त्रम्, सीतया दारवानित्यादिप्रयोगात्। तेन कन्यया सह रमणीयो वर इति नानुपपन्नम्।

एवमेव पुत्रेण सहागतः पितेत्यादौ पुत्राभिन्नो य आगतस्तत्समानकालीनागताभिन्नः पितेत्यन्वयबोधः, गमनविशिष्टयोस्समानकालीनत्वे भासमाने गमनयोरपि तद् भासते, विशिष्टान्वयबोधसामग्री-

अभेदं तृतीयार्थमुदाहरति—**सह दिवसैरि**ति। नन्वभेदान्वये समानलिङ्गकत्वस्य समानविभक्तिकत्वस्य च तन्त्रत्वस्योक्तत्वादुक्तस्थले विभिन्नविभक्तिकयोः कथमभेदान्वय इत्यत आह—**तृतीयार्थाभेदान्वये चे**ति। तथा चाभेदसंसर्गकबोध एव तयोस्तथात्वम्। अत्र चाभेदप्रकारको बोधो विरुद्धविभक्तिकपदार्थयोरपि नानुपपन्न इति भावः। विभिन्नलिङ्गकस्थलेभेदप्रकारकबोधमुदाहरति—**सीतये**ति। **तेन** विभिन्नलिङ्गकयोरप्यभेदप्रकारकान्वयबोधोपगमेन। **नानुपपन्न** इति। तत्रापि कन्याभिन्नरमणीयसमानकालीनरमणीयाभिन्नो वर इति बोधस्य सम्भवादिति भावः।

एतादृशस्थले सहार्थान्वयिरमणीयादिपदार्थानां द्विधा भानमित्यन्यत्रापि दर्शयति—**पुत्रेणे**ति। एतावतागमनकर्त्रोः पितापुत्रयोः समानकालीनत्वमेव लब्धम्, न तु गमनयोः, स्मरिष्यते च तयोरपि समानकालीनत्वबोध इत्यत आह-**गमनविशिष्टयोरि**ति। **सामग्रीस्वभावादि**ति। असति बाधके उद्देश्यतावच्छेदकविधेययोरप्यन्वयस्यान्यत्र दृष्टत्वादिति भावः। कृत्प्रत्ययानां कर्त्रर्थक-

१ तृतीयार्थाभेदान्वये इति मु० पु० पा०।

स्वभावात्। पुत्रेण सहागच्छति, पुत्रेण सहागत्य तिष्ठतीत्यादौ कर्त्तृत्वे तृतीया, तदन्वितमागमनं सहार्थे समानकालीनत्वे, तच्च द्वितीयागमने, तच्चाख्यातार्थकर्त्तृत्वे [1]क्त्वार्थभावादावन्वेति।

धनेन सह गाँल्लभत इत्यादौ तृतीयार्थः कर्म्मत्वम्। तल्लाभे स सहार्थे स गोकर्म्मकलाभे स कर्त्तृत्वादावन्वेति। धनकर्म्मकलाभसमानकालीनगोकर्म्मकलाभकर्त्तेत्यन्वयबोधः।

दण्डेन सह [2]चक्रेणोत्पद्यते, अध्वर्युणा सह सदस्याय ददाति, शक्रपदेन सह स्वर्गात्पतति, पित्रा सह मातुः स्मरति, नावा सह नद्यान्तिष्ठतीत्यादौ सम्प्रदानापादानविषयाधिकरणत्वानि यथायथं तृतीयार्थः। सहयुक्तधातुनाभिहितयोः क्रिययोः पदान्तरनिर्द्दिष्टस्सर्वोऽपि कारकगणो यौगपद्येनान्वेति, अन्यत्र तृतीयानिर्द्दिष्टात्। तेन ग्रामं गच्छति पुत्रे नगरं गच्छति पितरि पुत्रेण सह नगरं गच्छति पितेति

तया तदन्तार्थे प्रातिपदिकार्थान्वयस्य सम्भवेऽपि तिङ्प्रत्ययस्यातथात्वात्तत्राभेदार्थकत्वं तृतीयाया न सम्भवत्यत आह—**पुत्रेण सहागच्छती**ति। **द्वितीयागमने** पितृकर्त्तृकागमने। व्युत्पत्तिवैचित्र्येण गमनादीनां द्विधा भानस्योक्तत्वात्। **भावादावन्वेती**ति। "अव्ययकृतो भावे" इत्यनुशासनेन क्त्वो भावार्थकत्वमुत्तरकालस्तु संसर्गमर्य्यादयैव भासत इत्यनुशयेनेदम्।

प्रधानक्रियाकारकसजातीयं कारकं तृतीयार्थ इत्याशयेन कर्म्मत्वादीनामपि तदर्थत्वमुदाहरति—**धनेन सहे**ति।

**क्रिययोरि**ति। धात्वर्थक्रियाया एकरूपेण वाच्यत्वेऽपि विशेष्यत्वविशेषणत्वाभ्या भेदाद् द्विवचननिर्द्देशः। तथा च सहार्थविशेष्यविशेषणयोः क्रिययोरित्यर्थः। **तृतीयानिर्द्दिष्टादि**ति। दर्शितस्थले पुत्रादीनामेकगमनक्रियाकर्त्तृत्वाद् द्वितीये गमने तस्यान्वयस्यासम्भवादिति भावः। सर्वेषां कारकाणामुभयक्रियान्वयोपगमस्य प्रयोजनं दर्शयति—**तेने**ति।

१ क्त्वार्थभावादौ इति पदं न दृश्यते मु० पु०। २ चक्रेणोत्पाद्यते इति मु० पु० पा०।

न प्रयोगः, द्वयोरपि क्रिययोर्नगरकर्म्मत्वान्वयध्रौव्ये नगरकर्म्मकपुत्रकर्त्तृकगमनस्य बाधात् । गवा सह धनं लभत इत्यत्र गोकर्म्मकलाभे धनकर्म्मकलाभे चाख्यातोपात्तो गुणविधया प्रथमानिर्दिष्टो वा प्रधानविधया भासते । सहार्थ एव वा समानकर्त्तृकत्वम् । तेन गोश्चैत्रेण [1]धनस्य मैत्रेण लाभे गवा सह धनं लभते मैत्र इति न प्रमाणम् ।

पत्न्या सह यजत इत्यत्र गौणं कर्त्तृत्वं तृतीयया निर्दिश्यते । यदि दम्पत्योर्न्न व्यासक्तं किमप्यखण्डं कर्त्तृत्वम् । [2]सहयुक्ते द्वे क्रिये, एका सहार्थं प्रति विशेषणमपरा प्रधानम् । यस्य च कारकस्य प्रधानक्रियायां नान्वयः, तज्जातीयं गुणक्रियान्वयितृतीयया न प्रतिपाद्यते । "सहयुक्तेऽप्रधाने" इति सूत्रस्यायमर्थः—सहयुक्तक्रियान्वयिनोस्तुल्यजातीययोः

यत्र तृतीयार्थकर्म्मत्वादिकारकस्य गुणीभूतक्रियायामन्वयो न कर्त्तृत्वस्य, तत्र प्रधानक्रियाकर्त्तुरेव गुणक्रियाकर्त्तृत्वमनुभवसिद्धम्, तस्य च दर्शितस्थलेषु कथं लाभ इत्याकाङ्क्षायामाह—**गवा सहे**ति । **पुत्रेण सहागत** इत्यत्र तृतीयार्थस्यैव कर्त्तृत्वरूपत्वात्तत्र कर्त्तुर्भेदे तथाविधप्रयोगस्यासम्भवादिति भावः । **आख्यातोपात्त** इति कर्त्तृत्वमिति शेषः । **प्रथमानिर्दिष्टश्चै**त्रादिः कर्त्तृत्वेनेति शेषः । **इति न प्रमाणमि**ति । तत्र क्रिययोरेककर्त्तृकत्वविरहादिति ।

**गौणमि**ति । एकदेशाधिकरणकत्वरूपसाहित्यद्वारकमित्यर्थः । पत्नीसाहित्यस्य शौचादिवदधिकारिविशेषणत्वात् "यत्कर्त्तव्यं तदनया सह" इत्यभिधानात् । मीमांसकमते पूर्वोक्तमखण्डं कर्त्तृत्वं पत्यौ पत्न्यामपि व्यासज्य वर्त्तत इति तस्यां गौणकर्त्तृत्वोपगमो न तादृशाखण्डकर्त्तृत्वानङ्गीकारे इत्याह—**यदि ने**ति । सूत्रार्थे **तुल्यजातीययो**रित्यस्य निवेशे प्रयोजनमाह—**तेन ग्रामेणे**ति । **न प्रमाणमि**ति । तत्र कारकयोर्ग्रामचैत्रयोः कर्म्मकर्त्तृका-

---

१ धनस्य मैत्रेण इति पदं न्ना० मु० पु० ।

२ सहयुक्तेन इति मु० पु० पा० ।

कारकयोर्म्मध्ये [1]यदप्रधानं प्रधानक्रियाकारकम्, तस्मिन्नभिधेये तृतीयेति। तेन ग्रामेण सह चैत्रो गच्छतीति न प्रमाणं प्रमाणञ्च ग्रामेण सह गृहं गच्छति चैत्र इति। एकक्रियाकारकत्वं साहित्यमिति प्रवादे त्वेकपदोपात्तत्वेन क्रिययोरैक्यव्यपदेशः।

यत्तु पुत्रेण सहागच्छतीत्यादौ यत्कारकान्वयिनी या [2]क्रिया तत्कारकविशिष्टतत्क्रियासमानकालीनत्वं सहशब्दार्थः। तदेकदेशे कारकेन्वितं वृत्तिमत्त्वं तृतीयाभिधत्ते। तथा च [3]पुत्रवृत्तिकर्तृता-विशिष्टागमनसमानकालीनागमनकर्तेत्यन्वयबोधः। न च तत्कारकान्वयिनी सा क्रिया पदान्तरेण न प्रतिपादिता, तथा सति सहपदन्तत्र मूकम्। अतएवात्र [4]पुत्रकर्म्मकागमनसमानकालीनमागमनं

रकयोरेकजातीयत्वाभावात्, तस्य स्ववृत्तिकारकत्वव्याप्यधर्म्मवत्त्वरूपत्वादित्याशयः। **प्रमाणञ्चे**ति ग्रामगृहयोरुभयोरपि कर्म्मकारकत्वादित्याशयः। ननूभयक्रिययोस्सहार्थान्वये एकक्रियाकारकत्वं साहित्यमिति प्रवादे क्रियाया एकत्वोक्तिरसङ्गतेत्यत आह—**एकक्रिये**ति।

एकैव क्रिया सहार्थान्वयिनीति मतन्निरसितुमाह—**यत्त्वि**ति। **तथा चे**ति। गमनक्रियायास्तत्र कर्तृकारकपित्रन्वयित्वात्कर्तृविशिष्टागमनसमानकालीनत्वमेव तत्र सहार्थस्तदेकदेशे कर्तृत्वे तृतीयान्तार्थपुत्रवृत्तित्वान्वयः। तादृशसहार्थस्य धात्वर्थागमने तस्याख्यातार्थे तस्य पितर्य्यन्वय इत्याशयः। नन्वागमनक्रियाया धातोरेव लाभान्न तस्य सहार्थघटकत्वमित्यत आह—**न च तत्कारके**ति। **पदान्तरेण न प्रतिपादिते**ति नेत्यन्वयः। आगमनमात्रस्य धातुतो लाभेपि कर्तृकारकविशिष्टत्वेनालाभाल्लक्षणया ततस्तस्य लाभोपगमे सहपदस्य वैयर्थ्यमित्याशयः। **अतएव** तत्तत्कारकविशिष्टक्रियाया-

१ यदप्रधानमप्रधानक्रियाकारकम् इति मु० पु० पा०।
२ क्रिया इति पदं ना० मु० पु०। ३ ० वृत्ति ० इति ना० मु० पु०।
४ पुत्रकर्म्मकागमन० इत्यस्य स्थाने पुत्रकर्तृकागमन० इति पा० मु० पु०।

पुत्रकर्तृकपाकसमानकालीनमागमनञ्च न प्रतीयत इति ।

तन्न, तथा सति यशसा सह मूर्छति शत्रुरित्यादौ श्लेषभित्तिक-सहोक्त्यलङ्कारे यशःकर्तृकवृद्धिसमानकालीनमोहकर्त्ता शत्रुरित्यन्वय-बोधानुपपत्तेः । मूर्छतीत्यनेन कर्तृत्वान्विताया मोहक्रियाया एवाभि-धानात् सहशब्देन यशःकर्तृकवृद्धिसमानकालीनत्वाभिधानासम्भ-वात् । सम्भवे वा यशसा सह मुह्यति तव शत्रुरित्यत्रापि तथा प्रतीयेत ।

तस्मान्मूर्छतिना श्लिष्टार्थेन वृद्धिर्म्मोहश्चोपस्थितः । तत्र वृद्धौ तृतीयार्थयशःकर्तृत्वस्य, वृद्धेस्सहार्थसमानकालीनत्वे विशेषणतया विशेष्यतया चान्वये तद्धातुजन्यक्रियोपस्थितिस्तन्त्रमिति मुह्यतिना वृद्धेरनुपस्थापनाद् यशसा सह मूर्छति शत्रुरिति न प्रयोगः ।

स्सहार्थघटकत्वादेव ।

मतमेतन्निराकुरुते—**तन्ने**ति । **तथा सती**ति । तत्तत्कारकविशिष्टक्रिया-घटितस्य सहार्थत्वोपगम इत्यर्थः । **श्लेषभित्तिके**ति । श्लेषमूलकेत्यर्थः । सहोक्त्यलङ्कारे—

"सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्"

इत्युक्तलक्षणे । अन्वयबोधानुपपत्तौ बीजं **मूर्छतीत्यनेने**त्यादि । तत्तद्धात्वनुप-स्थापिताया अपि क्रियायास्सहार्थघटकत्वे तत्र तादृशवृद्धिसमानकालीनत्वाभि-धानोपगमेतिप्रसङ्गमाह—**सम्भवे चे**ति । **तथा प्रतीयेते**ति । वृद्धिक्रियायाः कर्तृत्वादिकारकविशिष्टाया धात्वनुपस्थितत्वस्योभयत्र तुल्यत्वादित्याशयः ।

क्रियाद्वयं धातूपात्तसहार्थान्वयीति स्वमते तत्रानुपपत्तिन्निराकुरुते—**तस्मादि**ति । क्रियाद्वयस्य धातूपस्थितत्वस्यावश्यकतया **यशसा सह मुह्यती**त्यस्य वारणमित्याह—**सहार्थे**ति । दर्शितमते सहार्थस्य तत्तत्क्रिया-

---

१ ० पाक० इत्यस्य स्थाने गमनपदं दृश्यते मु० पु० ।

न वा सहशब्दस्य क्रियाकारकभेदेनार्थभेदः। रूपप्रागभावेन सह गन्धप्रागभाव इत्यादौ क्लृप्तया समानकालीनत्वशक्त्यैव निर्वाहात्। तृतीयायाः करणकर्त्तृत्वयोः क्लृप्तशक्तिकयोः कारकचतुष्टये शक्तिचतुष्टयं कल्प्यत इत्यतिलाघवम्।

ननु गां पुत्रे धनं पितरि लभमाने पुत्रेण सह धनं लभत इत्यपि [1]प्रसज्येत। न च तृतीयानिर्दिष्टभिन्नकारकस्यैकरूपावच्छिन्नत्वेन गुणप्रधानक्रिययोरप्यन्वयबोधसामग्र्यपेक्षणीया, अत्र च न धन-कर्म्मताया गुणक्रियायामन्वयसम्भव इति न तथा प्रयोग इति वाच्यम्; एवं सति "शिशुः पयो धास्यति सागरैस्सह" इत्यत्र श्लेषभित्तिकसहोक्तौ धास्यतीत्यनेन धारणपानक्रिये उपस्थिते, तयोर्धारणे सागरकर्त्तृत्वस्य सहार्थसमानकालीनत्वे धारणस्य पाने सहार्थस्य पयःपदार्थक्षीरकर्म्मत्वस्य चान्वयः। गुणक्रियायां

कारकघटितत्वादनन्तत्वम्, सिद्धान्ते तु समानकालीनत्वमात्रं सहार्थ इति लाघव-मित्याह—**न वा सहे**ति।

**इत्यपि प्रसज्येते**ति। लाभे गोकर्म्मकत्वधनकर्म्मकत्वयोः पुत्रकर्त्तृकत्व-पितृकर्त्तृकत्वयोश्च सत्त्वादुक्तरीत्यापि तद्वारणासम्भवादित्याशयः। **न चे**ति। **वाच्य**मिति परेणान्वितम्। **पुत्रेणे**ति तृतीयानिर्दिष्टस्य कर्त्तृत्वादिकारकस्य पुत्रत्वादिविभिन्नरूपावच्छिन्नस्यैव क्रिययोरन्वयादाह—**तृतीयानिर्दिष्टभिन्ने**ति। **अन्वयसम्भव** इति। तस्या गोकर्म्मताकत्वेन धनकर्म्मताकत्वबाधान्न गुणक्रिययोरेकरूपावच्छिकर्म्मत्वकारकस्यान्वय इति नोक्तप्रयोगप्रसङ्ग इत्याशयः। **उपस्थित** इति। धाधातोर्धारणार्थकस्य धेट्धातोः पानार्थकस्य भविष्यति धास्यतीत्येकानुपूर्वीकस्यैव प्रयोगस्य साधुत्वात्। **पयःपदार्थे**ति।

---

१ प्रसज्यते इति मु० पु० पा०।

सागरकर्तृकधारणे न तदन्वयः, बाधात्, किन्तु पयःपदार्थसलिलकर्म्मत्वस्येति नैकरूपावच्छिन्नस्य कारकस्य द्वयोरन्वयसम्भव इत्यनुपपत्तितादवस्थ्यात् । एतेनैककर्म्मत्वाद्यपि कर्त्तृत्वार्थकतृतीयासमभिव्याहृतस्य सहपदस्यार्थ इत्यपि निरस्तमिति चेन्न; गुणप्रधानक्रिययोरेकपदार्थकर्म्मकत्वाद्यन्वयस्यैव व्युत्पत्तेः ।

इदमत्राकूतम्—शिशुः सागरैस्सह पयो धास्यतीत्यादौ शिशुपदेन शिशोः, सागरपदेन समुद्रस्य, सहपदेन समानकालीनत्वस्य, धास्यतिपदेन खण्डशो भाविधारणकर्त्तृत्वपानकर्त्तृत्वानाञ्च, पयःपदेन नीरक्षीरयोर्द्वितीयया कर्म्मत्वस्योपस्थितिः । सागरकर्त्तृकधारणे नीरकर्म्मतायाः शिशुकर्त्तृकपाने क्षीरकर्म्मत्वस्य योग्यताज्ञानं परस्परं पदानामाकाङ्क्षाज्ञानञ्चेति शाब्दसामग्री । तया सागरकर्त्तृकनीरकर्म्मकधारणसमानकालीनशिशुकर्त्तृका क्षीरकर्म्मिका भाविपानक्रियेत्यन्वयबोधः ।

यत्र पयश्शब्देन क्षीरमात्रस्योपस्थितिस्समानफलोपधायकपयःपदजनितनीरस्मृतिः, [1] तद्योग्यताज्ञानादिविरहात्प्रधानक्रियायां [2] न नीरकर्म्मत्वान्वयस्तत्र तदघटिता भिन्नैव सामग्री [3] ।

लुप्तद्वितीयाविभक्तिकपयःपदबोध्येत्यर्थः । **न तदन्वय** (इति) । क्षीरकर्म्मत्वान्वयो नेत्यर्थः । **एतेने**ति । **शिशुः पयो धास्यती**त्यादावुक्तदोषेणेत्यर्थः । **व्युत्पत्ते**रिति । तथा च **पुत्रेण सह गौर्ल्लभत** इत्याद्युक्तप्रयोगस्य नापत्तिरित्याशयः ।

**शिशुः पयो धास्यती**त्यत्रानुपपत्तिं वारयितुमाह—**इदमत्रे**ति । **तदघटिते**ति । पानादिविशेष्यकनीरकर्म्मकत्वप्रकारकयोग्यताज्ञानाद्यघटितेत्यर्थः ।

१ यत्र च इत्यधिकः पा० मु० पु० । २ प्रधानक्रियायामपि इति पा० मु० पु० ।
३ इति दिक् इत्यधिकः पा० मु० पु० ।

श्लेषस्थले एकपदोपात्तयोरभेदो व्यञ्जनया प्रतीयते। वैयञ्जनिक-बोधे बाधो न विरोधी। श्लेषमूलकाभेदाध्यवसायाच्च क्रिययोरेक-कर्म्मत्वं सहपदेन ध्वननवृत्त्या प्रत्याय्यते। एवमेव सकलकलं पुरं चन्द्र-मण्डलमिवेत्यादौ कलकलसहितस्य सकलकलायुक्तस्य च श्लेषभित्ति-काभेदात्स एव साधारणधर्म्मतया परिस्फुरतीति तु रसविद्याविदः।

श्लेषस्थले पयःपदस्य पयःपदवाच्यत्वावच्छिन्ने लक्षणा, तत्कर्म्मत्वञ्च धारणपानयोरप्यबाधितमेव। एवं पुरचन्द्रयोः सकल-कलपदप्रतिपाद्यत्वमेव साधारणो धर्म्म इति व्यञ्जनाविद्वेषिणः।

नन्वेवं "पुमान् स्त्रिया" इति सूत्रे "स्त्रिया सहोक्तौ पुमान् शिष्यते..." इत्यादिव्याख्यानमनुपपन्नम्, मुख्यक्रियाकर्म्मण्यन-भिहिते गौणक्रियाकर्म्मणि सहयुक्ततृतीयाया असाधुत्वात्; अन्यथा ग्रामेण सह गच्छतीत्यपि प्रसज्येत, तथा च प्रकृते स्त्रीकर्म्मकोक्तिसमानकालीनायामुक्तौ पुमान् शिष्यत इति कथमवगम्यत

**इति रसविद्याविद्** इति। तथा चालङ्कारिकमते दर्शितस्थले क्षीरकर्म्मकधारण-कर्तृत्वस्य बोधेपि व्यञ्जनयैव धारणपानक्रिययोरेककर्म्मकत्वं क्षीरनीरयोर-भेदस्य तयैव प्रतीयमानत्वादिति न तत्रानुपपत्तिरिति।

**व्यञ्जनाविद्वेषिण** इति। दार्शनिकमते लक्षणया पयःपदस्य स्ववाच्यत्वा-वच्छिन्नबोधकत्वे एकरूपावच्छिन्नकर्म्मकत्वं क्रिययोर्नानुपपन्नमिति भावः।

**इत्यादिव्याख्यान**मिति। सिद्धान्तकौमुदीवृत्तिरित्यर्थः। **मुख्यक्रिया** शिष्धातुनोपात्ता। तत्र धातोः कर्तृप्रत्ययान्ततया तत्कर्म्मणोनभिहितत्वम्। **गौणक्रिया उक्ता**वित्यत्र वच्धातूपात्ता वचनक्रिया। **तत्कर्म्मणि** स्त्रियाम्। **अन्यथा** तत्रापि क्रियायाः साधुत्वे। **प्रसज्येते**ति। उक्तव्युत्पत्तिस्वीकारे तु गमनक्रियाया आख्यातेनानभिधानान्न तत्र तृतीयेति भावः। तत्र सहार्थतृतीयाविरहे विवक्षितार्थस्य ततो न लाभ इत्याह—**तथा चे**ति।

इति चेत् ? पुंस इति कृद्योगलक्षणषष्ठ्यन्तपदमनुषज्य पुमान् स्त्रियेति वाक्योपपादनीयत्वात्। एवमेव "यत्कर्त्तव्यं तदनया सह" इत्यत्रापि पत्येतिपदमध्याहरणीयमिति प्राञ्चः।

वस्तुतो यत्रैकद्रव्ये क्रियाद्वयनिरूपितं कारकमभिधानीयम्, तत्र प्रधानीभूतक्रियाकारकप्रतिपादिका विभक्तिरेव प्रयोक्तव्या, गुणक्रियाकारकं[1] तत्समभिव्याहृतप्रथमादिविभक्त्यैव प्रतिपाद्यते संसर्गमर्य्यादयैव वा भासते, पक्त्वौदनो भुज्यत इत्यादौ तथा दर्शनात्। उक्तञ्च—

"प्रधानेतरयोर्य्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥

तत्र सहार्थे तृतीयाया असाधुत्वे। **कृद्योगलक्षणे**ति। "कर्त्तृकर्म्मणोः कृति" इति सूत्रेण क्तिप्रत्ययान्तवच्धातुसमभिव्याहारे विहिता या षष्ठी तदन्तेत्यर्थः। **उपपादनीयत्वादि**ति। सहार्थसमानकालीनत्वान्वयिनी वच्धातूपात्तैव क्रियाद्वयीति न तत्र प्रधानक्रियाकर्म्मणोनभिधानमित्याशयः। अन्यत्रापीदृशस्थले प्रधानक्रियाकारकबोधकपदमध्याहृत्यैवान्वयबोधः सम्पादनीय इत्याह—**एवमेवे**ति। अध्याहाराभावे पतिकर्त्तृकक्रियायाः प्राधान्येन तत्कारकस्य कर्त्तृत्वस्य तव्यतानभिधानात्तत्राप्युक्तस्थलवदनुपपत्तिरेव स्यादिति भावः।

प्रधानक्रियाकारकस्य गुणक्रियानिरूपितं कारकमनुक्तमपि प्रतीयत एवेत्यध्याहारं विनापि नोक्तस्थलयोरनुपपत्तिरिति नव्यमतं दर्शयति—**वस्तुत** इत्यादिना। **एकद्रव्ये** ओदनादौ। **क्रियाद्वयं** पाकभोजनादिरूपम्। प्रथमादिविभक्तीनां कर्म्मत्वे शक्तौ गौरवमित्यभिप्रेत्याह—**संसर्गमर्य्यादयैवे**ति। धात्वर्थे नामार्थस्य भेदान्वयो व्युत्पत्तिवैचित्र्यात्समाधेयः। **तथा दर्शनादि**ति। द्वितीयान्तौदनपदाद्यसत्त्वेपि पाके ओदनकर्म्मकत्वबोधस्यानुभविकत्वादित्यर्थः। अत्र हरिसंवादमप्याह—**उक्तञ्चे**ति। **प्रधानेतरयो**रिति।

---

१ असमस्त एव पा० मु० पु०।

प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा तदा गुणे तद्वदनुक्तापि प्रतीयते ॥" इति ।

स्त्रिया सहोक्तौ पुमान् शिष्यत इत्यत्र प्रधानक्रियायाः शिष्यतिनोपात्तायाः [1]कर्म्मकारके आख्यातेनोपात्ते गुणक्रियाया वचनस्य कर्म्मत्वं विनापि कृद्योगषष्ठ्या प्रथमया प्रतिपाद्यते संसर्गमर्य्यादया वा भासत इति न पुंस इति पदमध्याहर्त्तव्यम् । एवमेव शाकेन सह पक्त्वौदनो भुज्यते पत्न्या सह पक्त्वा भुङ्क्त ओदनं पतिरित्यादयोपि प्रयोगाः सूपपादाः ।

शाब्दिकास्तु सहपदं व्यञ्जकमेव, न तु वाचकम्, क्रियायाः समानकालीनत्वादिसंसर्गेणान्वयः । अतएव सहपदप्रयोगं विनापि पुत्रेणागच्छति पितेति वाक्यप्रामाण्यं वृद्धो यूनेत्यादिनिर्द्देशेन ज्ञाप्यत इति प्राहुः ।

कारिकाद्वयं कृतव्याख्यानमधस्तात् । प्रकृते योजयति—**स्त्रियेति** । तथा च **पुमान् स्त्रिये**त्यत्र नानुपपत्तिरिति भावः ।

**प्राहु**रित्यस्वरसः । स च "सहयुक्तेऽप्रधाने" इत्यत्र सहपदवैयर्थ्यप्रसङ्गः, निरर्थकेन सहशब्देन योगस्यान्वयरूपस्यासम्भवात् । समभिव्याहारमात्रस्य योगरूपत्वे सहार्थैर्य्योग इत्यर्थस्यासम्भवेन साकमादियोगे तृतीयानुपपत्तेः । **वृद्धो यूने**त्यत्र तु न सहयोगे तृतीया, किन्तु प्रकृत्यादित्वात्, तदर्थश्च समभिव्याहारः । तथा च युवशब्दसमभिव्याहारवान् वृद्धशब्द एकविभक्तौ शिष्यत इति तदर्थ इति ।

न च समानकालीनत्वस्य सहार्थत्वे—[2]"प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन ॥" इत्यत्र लक्ष्मणप्रसवसमानकालिकत्वं शत्रुघ्नप्रसवे

१ कर्त्तृकारके इति मु० पु० पा० ।

२ कौशल्ययासावि सुखेन रामः प्राक् कैकयीतो भरतस्ततोभूत् । इति पूर्वार्द्धम् ।

**व्यक्तिर्जात्या सह भासत इत्यत्र क्रिययोस्तादात्म्यं सहार्थः ।**

बाधितमिति कथं सहार्थान्वयः । न चात्र लक्ष्मणप्रसवकालाच्छत्रुघ्नप्रसवकाल-पर्य्यन्तस्थूलकाल एव ग्राह्यः, तथा सति—

"प्रासोष्ट बीभत्समुदारचेष्टमेका पृथा वायुसुतेन साकम् ।" इत्यपि प्रमाणं स्यादिति वाच्यम्, तत्र सूतिमारुतात्मकस्यैव कालकालोपाधेः कालपदेन ग्रहणात् । सूतिमारुतस्य प्रसवप्रयोजकत्वञ्च याज्ञवल्क्येनोक्तं यथा—

"नवमे दशमे मासि प्रबलैः सूतिमारुतैः ।
निस्सार्य्यते बाण इव यन्त्रच्छिद्रेण स ज्वरः ॥" इति ।

तत्र मारुतानामनैक्यैप्येकस्थूलकालवृत्तितयैक्यम्, य एव सूतिमारुता लक्ष्मणप्रसवे प्रयोजकास्त एव शत्रुघ्नप्रसवेपि न तु भिन्नाः, कल्पनागौरवात् । लक्ष्मणनिर्गमनकाले शत्रुघ्ननिर्गमनन्तु तत्र लक्ष्मणस्य प्रतिबन्धकतयैव न भवति । अतएवैकेनैव पुरुषव्यापारेण कमलपत्राणां सूचीभेदने प्रथमपत्रभेदन-काले न द्वितीयपत्रभेदनम्, प्रथमपत्रस्य प्रतिबन्धकत्वात् । तत्र षूङ्धात्वर्थो जरायुजशरीरस्यान्तरवयवावच्छेदेन शरीरान्तरेण यः संयोगस्तन्नाशकता-वच्छेदकवैजात्याश्रयो व्यापारश्च । तादृशवैजात्यन्तु सूतिमारुतसंयोगजक्रिया-विशेषजन्यतावच्छेदकतया सिद्धम् । तादृशजातिपरिचयायैव जरायुजशरीराद्यु-पादानम्, न तु तस्य धात्वर्थघटकता, तेन तस्य धात्वर्थान्तर्भूतकर्म्मकत्वा-भावान्नाकर्म्मकत्वम् । तेन व्याधिवशाङ्केकादीनां शरीरान्निर्गमेपि प्रसूत इति न प्रमाणं न वा बालस्य क्रोडात् क्रोडान्तरगमनेपि तत्, भेकस्य जरायुजत्वाभावात् तादृशबालसंयोगस्यान्तरवयवावच्छिन्नत्वस्य चाभावात् । तरुः फलानि सूते वसुधा भटान् सूत इत्यादौ तु लक्षणयोत्पत्तिव्यापारावेव षूङोर्थः । तथा च प्रकृते लक्ष्मणवृत्तिविजातीयविभागानुकूलव्यापारस्याश्रयः सुमित्रेत्यन्वय-बोध इति ।

समानकालीनत्वातिरिक्तस्यापि सहार्थत्वमुदाहरणद्वारा दर्शयति—**व्यक्तिरिति** । **क्रिययोः** भासधात्वर्थज्ञानरूपयोः । **तादात्म्यमिति** । तत्र

**भासतेर्ज्ञानमाख्यातस्य तृतीयायाश्च विषयतालक्षणं गौणं कर्त्तृत्वम् । तथा च जातिकर्त्तृकभानाभिन्नं व्यक्तिकर्त्तृकं भानमित्यन्वयबोधः । जात्या सह व्यक्तिमवगाहते बुद्धिरित्यत्र तृतीयाद्वितीययोर्विषयतारूपं कर्म्मत्वमवगाहतेर्निरूपकत्वफलको विषयितारूपो व्यापारः, आख्यातोपात्तं गौणमगौणं वा कर्त्तृत्वं प्रकृत्यर्थविशेषितं तद्विशेषणं वा, गौणप्रधानक्रिययोर्विशेषणतया विशेष्यतया वा, प्रथमान्तविशेष्यकशाब्दबुद्धिपक्षे गुणक्रियाया द्वेधान्वयः । तथा च जातिकर्म्मकावगाहनकर्त्री बुद्धिर्जातिकर्म्मकावगाहनसमानकालीनव्यक्त्यवगाहनकर्त्रीत्यन्वयबोधः । सहपदतुल्यार्थाश्च [2]साकंसार्धंसमंशब्दाः ।११६।**

ज्ञानस्यैक्यैन समानकालीनत्वबोधस्य निष्प्रयोजनत्वादिति भावः । **भासतेरि**ति । अर्थ इति पूर्वेणान्वयः । एवं **विषयतारूपं कर्म्मत्वं व्यापार** इत्यादिष्वपि । **गौणमगौणं वे**ति । आश्रयत्वस्य तत्राख्यातार्थत्वं तस्य चाश्रयतात्वस्य जात्यखण्डोपाध्यतिरिक्तत्वे कृतित्वस्य शक्यतावच्छेदकतया गौणत्वम्, कृतित्वादिवदाश्रयतात्वादीनामप्यखण्डत्वे विनिगमनाविरहेण तस्यापि शक्यतावच्छेदकत्वमित्यगौणत्वमिति भावः । **तद्विशेषणं वे**त्यादिकन्तु धात्वर्थप्रथमान्तार्थयोरन्वयबोधीयविशेष्यतापक्षभेदेनोक्तम् । **विशेष्यतया वे**त्यस्या**न्वय** इत्यग्रिमेणान्वयः । क्रियामुख्यविशेष्यकबोधे जातिकर्म्मकावगाहनसमानकालिकं व्यक्तिकर्म्मकं बुद्धिकर्त्तृकावगाहनमिति बोधे गुणक्रियायाः सकृदेवान्वयसम्भवः । प्रथमान्तार्थस्य विशेष्यत्वे जातिकर्म्मकावगाहनसमानकालीनव्यक्तिकर्म्मकावगाहनकर्त्री बुद्धिरिति बोधोपगमेऽन्यस्या बुद्धेर्जातिविषयिण्याः सत्त्वेपि तादृशप्रयोगस्य प्रामाण्यप्रसङ्ग इत्यत आह—**प्रथमान्ते**ति । ११६ ।

---

१ ० कर्त्तृ० इति मु० पु० पा० ।

२ साकसार्धसम शब्दाः इति मु० पु० पा० ।

**महाशरीरे वैजात्यविशेषो या समग्रता ।**
**तद्भावो यद्विकारात्तृतीया तत इष्यते ॥११७॥**

सन्ति तावच्छरीरेषु समग्रत्वलक्षणा मनुष्यत्वव्याप्या ब्राह्मणत्वव्याप्या वा जातयः । यदवच्छिन्ने विजातीयानां त्वगसृगस्थिपादादीनां समवायिकारणता । अस्थिवृत्तिसमवायेन महाशरीरोत्पत्तौ तादात्म्येनास्थि कारणम् । अतो न मांसे व्यभिचारः । काणखञ्जशरीरादौ च न सा जातिः, तदवच्छिन्नसमवायिकारणस्याविकृतचक्षुर्गोलकपादादेरभावात् । एवमधिकावयवेपि त्रिलोचनादौ न सा जातिः, अधिकस्य तृतीयलोचनस्य तत्सामग्र्यामनुप्रवेशात् ।

"येनाङ्गविकारः" इतिसूत्रानुशिष्टमङ्गविकारार्थिका तृतीयां निरूपयति—**महाशरीर** इति । **तद्भावः** तादृशजातिविशेषाभावः । **यद्विकारात्** यन्निष्ठविकारप्रयोज्यः । **समग्रत्वलक्षणे**ति । **सर्वावयवविशिष्टत्वं** समग्रत्वं तस्य चान्यथा निरूपणासम्भवाद्विलक्षणजातिस्वरूपत्वमिति भावः । मनुष्यत्वव्याप्यत्वस्य ब्राह्मणत्वक्षत्रियत्वादावपि सत्त्वात्तदभावस्य चक्षुरादिनिष्ठविकाराप्रयोज्यत्वादाह—**ब्राह्मणत्वव्याप्या वे**ति । **ब्राह्मणत्व**पदं क्षत्रियत्वादीनामप्युपलक्षकम् । नातो न्यूनता । चैत्रत्वादिजातीनान्तु चक्षुर्विकारवत्यपि सत्त्वान्न तादृशसामग्र्यरूपत्वमिति बोध्यम् । **यदवच्छिन्ने** तादृशवैजात्यावच्छिन्ने । विजातीयानामविकृततत्तदवयवजनकेषु तेषु वैजात्यस्यावश्यकत्वात्त्वक्त्वादिना जनकत्वे विकृतचक्षुरादिमत्यपि तादृशजातिमत्त्वप्रसङ्ग इत्याशयः । समवायमात्रस्य कार्य्यतावच्छेदकत्वे महाशरीरस्य समवायेन मांसेपि सत्त्वादस्थ्नस्तादात्म्येन तत्राभावाद् व्यभिचारप्रसङ्गादस्थ्यादिवृत्तित्वविशिष्टस्यैव तस्य प्रत्येकं तथात्वमित्याह—**अस्थिवृत्ती**ति । काणखञ्जशरीरादौ तादृशजात्यभावे बीजमाह—**तदवच्छिन्ने**ति । **तत्सामग्र्या**मिति । तादृशजात्यवच्छिन्नशरीरोत्पादकसामग्र्यामित्यर्थः ।

तथा च "येनाङ्गविकारः" इति सूत्रे "येनाङ्गेनाङ्गिनो विकारस्तत्र तृतीया" इतिवृत्तेरयमर्थः—यत्समवेतत्वप्रयुक्तो महाशरीरत्वजातेरभावः खण्डशरीरे, ततः प्राणिप्रतीकात्तृतीयेति। अवयवस्य विकारस्तु फलतस्सिद्ध्यति, विकृतावयवसमवेतत्वस्य महाशरीरत्वाभावप्रयोजकत्वात्। अक्ष्णा काण इत्यत्राक्षिपदं गोलकपरम्। समवेतत्वप्रयुक्तसामग्र्याभावस्तृतीयार्थः, काणपदस्य चक्षुरधिष्ठितगोलकारब्धत्वे सति चक्षुरनधिष्ठितगोलकसमवेतशरीरमर्थः।

**तथा च** तादृशवैजात्यस्य काणखञ्जादावसत्त्वे च। **वृत्ते**रिति। सूत्रेऽङ्गशब्दस्यार्श आदित्वादजन्तत्वेनाङ्गिनः शरीरस्य वाचकत्वं येनेत्यनेन च तदवयवोऽङ्गं हेतुत्वेन निर्दिष्टमिति तादृशी वृत्तिर्भट्टोजिदीक्षितानाम्। **यत्समवेतत्वे**ति। यत्पदस्य सूत्रस्थावयववाचकत्वेनावयविनोऽङ्गस्य तत्समवेतत्वादेव तच्छरीरे तादृशजात्यभाव इति भावः। **प्रयुक्त** इति। वृत्तौ लक्ष्यत इत्यस्य प्रयोज्यत इत्यर्थकत्वादिदं लब्धम्। तेनाक्षि काणमस्येत्यत्र तृतीयार्थान्वययोग्यशरीरस्य शब्देनालाभान्न तत्र तृतीया। न च तथापि चैत्रपदेन शरीरस्योपादानादक्ष्णा चैत्र इति कुतो न प्रमाणमिति वाच्यम्, तृतीयार्थस्य चैत्रत्वावच्छिन्नेऽन्वयस्यायोग्यत्वात्। सामान्यतोऽक्षिसमवेतत्वप्रयुक्तसामग्र्याभावस्य चैत्रे विरहात्। वृत्तौ "येनाङ्गेन विकृतेन" इत्यनेनाङ्गे विकारवत्त्वस्योक्तत्वादुक्तार्थे तस्यालाभादाह—**अवयवस्ये**ति। फलतः सिद्धौ हेतुः—**विकृतावयवे**ति। **चक्षुरधिष्ठिते**ति। चाक्षुषप्रयोजकेत्यर्थः। गोलकस्य तथात्वञ्च स्वच्छिद्रद्वारा चक्षुषो निर्गमेण सन्निकर्षसम्पादनेन बोध्यम्। अथवा चक्षुरधिकरणत्वमेव चक्षुरधिष्ठितत्वम्, चक्षुषो गोलकान्तर्वृत्तित्वात्। तेन प्रयोजकत्वस्य फलोपधायकतारूपत्वे निमीलितैकलोचने काणपदप्रयोगापत्तिः। स्वरूपयोग्यतारूपत्वे पुष्पकादिना गोलकच्छिद्रमुद्रणेऽपि काणपदप्रयोगप्रसङ्ग इति समाहितम्। **शरीरमर्थ** इति। द्वयोरेव चक्षुषोर्नाशेऽन्धत्वम्, न तु काणत्वमतो विशेष्यविशे-

तथा च गोलकसमवेतत्वप्रयुक्तसमग्रत्वाभाववान् चक्षुरधिष्ठितानधिष्ठितगोलकसमवेतः पुरुष इत्यन्वयबोधः । गोलकस्य विकारः कनीनिकोपघातादिप्रयुक्तो वैजात्यविशेषाभाव आक्षेपलभ्यः, अविकृतचक्षुरारभ्यत्वस्य महाशरीरत्वाभावप्रयोजकत्वाभावात् । प्रयोज्यप्रयोजकभावस्तु व्याप्यव्यापकभावः स्वरूपसम्बन्धविशेषो वा ।

एवं पादेन खञ्ज इत्यत्र पादवृत्तेस्तत्संस्थानवृत्तेर्वा जातिविशेषस्याभाववति पादे समवेतः खञ्जपदार्थः । तथा च पादसमवेतत्वप्रयुक्तसामग्र्याभाववान् यथास्थितपादसमवेत इत्यन्वयबोधः ।

पणोभयोपादानम् । **कनीनिकोपघातादि**ति । कनीनिकाया गोलकस्य नाशो यद्बलादुत्खातैकगोलके काणपदप्रयोगः । **आदि**पदात् क्वचिच्चक्षुर्नाशः, यद्बलात्प्रसन्नैकचाक्षुषप्रयोजकगोलके मांसवृद्धियुतैकगोलके च काणपदप्रयोगः । क्वचित्पुष्पकादिः, यद्बलात्तद्वत्येकगोलके काणपदप्रयोगः । न च पुष्पकादिना चक्षुर्नाश एवेति वाच्यम्, पुष्पकाद्यपनये चाक्षुषानुत्पत्तिप्रसङ्गात् । चक्षुरन्तरोत्पत्तिकल्पने च तन्नाशतत्प्रागभावादीनां कल्पनापेक्षया पुष्पकादीनां चक्षुर्निर्गमप्रतिबन्धकत्वकल्पनाया एव लघीयस्त्वात् । यत्र पुष्पकाद्यपनयनेपि न चाक्षुषं तत्र पुष्पकादिप्रयोजकव्यक्तिविशेषस्य चक्षुर्नाशकत्वकल्पनमेवोचितमिति । एवञ्चोक्तरीत्या नानाविधनाशादिप्रयोज्यवैजात्याभावो विकार इत्यर्थः । **आक्षेपलभ्य** इति । अत्र हेतु**रविकृते**ति । अत्यन्ताभावस्य नित्यत्वाज्जन्यत्वादिस्वरूपप्रयोज्यत्वं तत्र बाधितमत आह—**प्रयोज्ये**ति । लाघवात् **स्वरूपसम्बन्धविशेषो वे**त्युक्तम् ।

**जातिविशेषस्ये**ति । जातमात्रबालस्यापि विसदृशपादाद्यवयववत्त्वं तादृशजातिविशेषाभावादेवेति तस्यावश्यकत्वम् ।

ननु यच्छरीरे पूर्वं गोलकद्वयमेवासीदेकगोलकस्योत्खनने काणपदप्रयोगस्तत्र प्रमाणम्, तच्च न सम्भवति विशेष्यदलस्य तत्राभावादेवं पूर्वं पादद्वयसत्त्वे एकपादस्य छेदने खञ्जपदप्रयोगोप्यनुपपन्नः, तत्र तादृशवैजात्याभावा

यदि चामूलमुत्खातैकगोलको लूनपादको वा काणः खञ्जश्च भवति, तदा चक्षुरधिष्ठितगोलकद्वयासमवेतत्वे सति चक्षुष्मद्गोलकसमवेतः काणः, समग्रपादद्वयासमवेतः पादसमवेतः खञ्जः, तादृशस्थले चाक्ष्णा पादेनेति सम्बध्यते।

वस्तुतस्तु तृतीयाया विकारोऽर्थः। स च क्वचिन्नाशः, क्वचिदुपघातः, क्वचिच्छापादिः। तथा चाक्ष्णा काण इत्यत्राक्षिविकारप्रयुक्तचक्षुश्शून्यत्ववद्गोलकवान् [1]चक्षुष्मद्गोलकवान् तत्प्रयुक्तचक्षुष्मद्गोलकद्वयासमवेतत्ववान् [2]चक्षुष्मद्गोलकसमवेतत्ववान् वेत्याकारको बोधः। काकगोलकस्य तु शाप एव विकारः। अतएव [3]"एनमक्ष्णा काणीचकार चरमो रघुराजपुत्रः।" इति मुरारिः। मुखेन त्रिलोचन इत्यत्र मुखे लोचनत्रयवत्ताप्रयुक्तो विकारः सामग्र्यविशेषस्याभाव-

दित्यत आह—**यदि चेति**। **काण** इति। तथा चोक्तशरीरस्यैकगोलके चक्षुष्मति समवेतस्य तद्द्वयासमवेतत्वं तदेकसमवेतत्वञ्च निराबाधमेवेति न तत्राप्रसङ्गः। **तादृशे चेति**। निरुक्ते काणपदार्थे खञ्जपदार्थे चेत्यर्थः। **सम्बध्यत** इति। अक्ष्यादिसमवेतत्वप्रयुक्तसमग्रत्वाभावस्तृतीयान्तलभ्यस्तत्र स्वरूपेणान्वेतीत्यर्थः।

निरुक्तरीतौ तृतीयार्थस्य गुरुशरीरत्वादाह—**वस्तुतस्त्विति**। द्विविधस्य काणपदार्थस्य दर्शितत्वादुभयविधमेवान्वयबोधमाह—**तथा चेति**। विकारस्य नाशोपघातादिमात्ररूपत्वे वक्ष्यमाणमुरारिप्रयोगासङ्गतेराह—**काकगोलकस्य त्विति**। मुखस्य त्रिलोचनवत्त्वेऽन्यविकारविरहादाह—**सामग्र्यविशेषस्येति**।

---

१ चक्षुष्मद्गोलकवान् इति पा० ना० मु० पु०।

२ चक्षुष्मद्गोलकसमवेतत्ववान् इति पा० ना० मु० पु०।

३ 'ऐषीकमस्त्रमुदपास्यदथ' इति पूर्वतन पद्यम्। एतमक्ष्णा काणीचकार च रामो रघुराजपुत्रः इति मु० पु० पा०।

**स्तत्प्रयुक्तो महाशरीरत्वाभावः, गोलकाभ्यां सुखं मुखेन शरीरं प्रारभ्यत इत्यभिप्रायेण "मुखेन त्रिलोचनः" इति भावः। वपुषा चतुर्भुज इत्यत्र वपुःपदं शरीरपूर्वार्द्धपरमिति दिक्। ११७।**

तादृशजातेस्त्रिलोचने विरहे बीजमाह—**गोलकाभ्यामि**ति। तथा च गोलकद्वयसमवेतमुखसमवेतैव सा जातिर्न्न गोलकत्रयसमवेतमुखसमवेतेति भावः। **इति माघ** इति।

"स बाल आसीद्वपुषा चतुर्भुजः।
मुखेन पूर्णेन्दुमुखस्त्रिलोचनः॥
युवाकराक्रान्तमहीभृदुच्चकै—
रसंशयं सम्प्रति तेजसा रविः॥"

( शिशु० प्र० स० ७० श्लो० ) इति तच्छेषम्। वपुःपदस्य शरीरपरत्वेवयवत्वाभावात्तृतीयाया अप्रसक्तेराह—[1]**वपुःपदमि**ति।

---

१ यदि नाशस्वरूपापचय इवोपचयोपि न तृतीयार्थस्तदा चतुर्भुजशब्दस्य चतुस्सङ्ख्यकभुजसमवेतोर्थः। तत्र वपुर्विशेषितस्तृतीयार्थाभेदोन्वेति वर्णेन लोहित इतिवत्। मुखेन त्रिलोचन इत्यत्र च मुखविशेषितमाधेयत्व तृतीयार्थो लोचनत्रयेन्वेति, अवयवस्याप्यवयविवृत्तित्व वृक्षे शाखेति प्रतीत्यनुरोधात् स्वीक्रियते। वपुषा मुखेनेत्युभयत्र तृतीया तु न "येनाङ्गविकारः" इति सूत्रसिद्धा, किन्तु "प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति वार्त्तिकसिद्धा। एव पाणिना कुणिः नासिकयाघ्राता जिह्वयारसयिता श्रोत्रेण वधिरस्त्वचास्पृशक इत्यादिपु क्रमेण तृतीयार्थविकाराः अङ्गुलीगलनघ्राणसन्निकर्षप्रयोजकनिर्गमप्रतिबन्धककफादिघ्राणनाश–रसनिर्गमप्रतिबन्धकरोगादिरसनादिनाश–श्रोत्रसन्निकर्ष–प्रयोजकनिर्गमप्रतिबन्धकरोगादिकृतशब्दानुत्पाद–स्पर्शनेन्द्रियनिर्गमप्रतिबन्धकगजचर्मादिरोगस्पर्शननाशस्वरूपाः करद्वयप्रयोज्यकार्य्याभाववत्त्वे सति तथाविधकार्य्ययोग्यपाणिमत्त्वघ्राणजाभावरसनाभावश्रावणप्रत्यक्षाभावस्पार्शनाभावस्वरूपेषु कुणित्वाघ्रातृत्वारसयितृत्ववधिरत्वास्पृशकत्वेषु अन्वय लभन्ते। यदि च पाणिभ्या कुणिरिति प्रयोगस्तदा करद्वयप्रयोज्यकार्य्याभाववत्त्वमेव कुकरत्वरूपः कुणिपदार्थो ज्ञेयः। एवमन्यत्रापि।

**हेतौ तृतीया हेतुस्तु कारको ज्ञापको द्विधा ।**
**जन्यत्वं ज्ञाप्यता तस्या अर्थ इत्यैकदेशिनः ॥११८॥**

"हेतौ तृतीया" इत्यनुशासनेन हेतोः प्रकृतिलभ्यतया हेतुत्वे तृतीयावाच्यत्वमनुशिष्यते । हेतुश्च जनको ज्ञापकश्च । दण्डेन घटो धूमेन वह्निरित्यादावाधाराधेयभावेन दण्डहेतुत्वयोर्धूमज्ञापकत्वयोश्च निरूपकतया[1] कारणताघटयोर्ज्ञापकतावह्न्योश्चान्वयः ।

मणिकृतस्तु न ज्ञापकत्वं तृतीयार्थः, चक्षुषा रूपमिति [2]प्रसङ्गात्, धूमस्याज्ञापकतया धूमेन वह्निरित्यप्रयोगप्रसङ्गादननुशासनाच्च; किन्तु धूमेन वह्निरित्यत्र धूमपदं धूमज्ञाने वह्निपदं वह्निज्ञाने [3]ज्ञायमाने वा लाक्षणिकं हेतुता च तृतीयार्थः । तथा च धूमज्ञानवृत्तिहेतुतानिरूपकज्ञानविषयो वह्निरित्यन्वयबोधः ।

**हेतुत्व** इति । तथा च कर्म्मणीत्यादौ कर्म्मादिपदवद् भावप्रधान एव सूत्रे निर्देश इति भावः । जनकोपि द्विविधः—साक्षात्सम्बन्धावच्छिन्नजनकताश्रयः परम्परासम्बन्धावच्छिन्नजनकताश्रयश्च । तत्राद्यो यथा—तन्तुभिस्तन्तुसंयोगेन वा पट इत्यत्र । द्वितीयमाह—**दण्डेने**ति । ज्ञापकमुदाहरति—**धूमेने**ति ।

**प्रयोगप्रसङ्गादि**ति, रूपज्ञापकत्वस्य चक्षुषि निराबाधत्वात् । **धूमस्याज्ञापकतये**ति । अतीतानागतधूमादिना वह्न्यादेरनुमितेरनापत्त्या धूमज्ञानमेव वह्निज्ञापकन्न तु धूम इति भावः । **अननुशासनाच्चे**ति । हेतुपदस्य ज्ञापकतार्थकताया अदृष्टचरत्वात्, प्रयोजनविरहेण रूढिज्ञापककोशादीनामभावाच्च न लक्षणेति भावः । वह्निज्ञानस्य वह्निपदलक्ष्यत्वे तस्यैकदेशे विशेषणतयान्वयो व्युत्पत्तिविरुद्ध इत्यतो **ज्ञायमाने वे**त्युक्तम् । पदार्थैकदेशे पदार्थान्तरस्य विशेषणतयान्वयस्तु बहुशो दृष्ट इति नानुपपत्तिः ।

---

१ च इत्यधिकः पा० मु० पु० । २ ०प्रयोगप्रसङ्गात् इति मु० पु० पा० ।
३ ज्ञायमाने इत्यस्य स्थाने ज्ञायमानवह्नौ इति मु० पु० पा० ।

चेष्टया पचतीत्यादौ चेष्टाज्ञाननिष्ठहेतुतानिरूपकज्ञानविषय-भावनेत्यन्वयबोधः । भावनावाचिन आख्यातस्य ज्ञायमानभावनायां लाक्षणिकत्वादाख्यातार्थैकदेशे ज्ञाने निरूपकतया तृतीयार्थहेतु-त्वस्यान्वयः विभक्त्यर्थयोर्न्न परस्परमन्वय इति पुनरप्रामाणिकम् ।

एवं प्रत्यक्षोपजीवकत्वेन निरूप्यत इत्यादौ त्वप्रत्ययः प्रत्यक्षोप-जीवकत्वज्ञाने लाक्षणिकः । तन्निष्ठजनकतानिरूपकत्वं निरूपणे भासते । प्रत्यक्षोपजीवकत्वसङ्गतेर्ज्ञानञ्च तज्जिज्ञासाया जिज्ञापयिषाया वा प्रयोजकत्वेन निरूपणजनकम् । यजेतेति वेदेन याग इष्टसाधन-मित्यादावपि वेदज्ञानजन्यज्ञानविषयेष्टसाधनत्ववान् याग इत्यन्वय-बोध इत्याहुः ।

**चेष्टये**ति । चेष्टापदं चेष्टाज्ञाने तिपदं ज्ञायमानकृतौ लाक्षणिकं प्रथमान्त-पदासमभिव्याहारादाख्यातार्थो विशेष्य इत्याह—**चेष्टाज्ञाने**ति । सुबर्थहेतुत्वस्य तिङर्थभावनायामन्वयो विभक्त्यर्थयोर्मिथोन्वयस्य विरोधादनुपपन्न इत्यत आह—**अप्रामाणिक**मिति । प्रामाणिकत्वेपि सुबर्थस्य सुबर्थेनैवान्वयस्य तथा-त्वमिति भावः ।

त्वप्रत्ययान्तस्य शक्त्यभावेन लक्षकत्वासम्भवादाह—**त्वप्रत्ययस्ये**ति । तादृशज्ञानस्य निरूपणजनकत्वमुपपादयति—**प्रत्यक्षोपे**ति । अनन्तराभिधान-प्रयोजकजिज्ञासाजनकज्ञानविषयस्य सङ्गतित्वात्प्रत्यक्षनिरूपणानन्तरानुमान-निरूपणे प्रत्यक्षोपजीवकं किमित्याद्याकारकजिज्ञासाजनकत्वस्य प्रत्यक्षोपजीव कत्वज्ञाने सत्त्वात्तद्विषयप्रत्यक्षोपजीवकत्वस्य सङ्गतित्वम्, तावतैव निरूपण-जनकत्वं निरूपणप्रयोजकजिज्ञासाप्रयोजकत्वात्परम्परया तत्र निराबाधमिति भावः । तादृशजिज्ञासाया शिष्यादिनिष्ठाया गुरुकर्त्तृकनिरूपणप्रयोजकत्वे व्यधिकरणयोस्तयोः कल्पितपरम्परासम्बन्धेन कल्पनीयमतो लाघवाद् गुरुनिष्ठा शिष्यवृत्तिज्ञानानुकूलव्यापारेच्छैव समवायेन तादृशनिरूपणप्रयोजिकेत्याशयेन **जिज्ञापयिषाया** वेत्युक्तम् ।

एकदेशिनस्तु जनकत्वं ज्ञापकत्वं वा न तृतीयार्थः, तथा सति घटो न रासभेनेतिवद् घटो न दण्डेनेति प्रयोगप्रसङ्गात्; दण्डनिष्ठहेतुताया अभावस्य घटे सुतरां सत्त्वात्। न च निरूपकतासम्बन्धो वृत्तिनियामको येन तत्संसर्गावच्छिन्नप्रतियोगिताको हेतुत्वाभावो नञा तृतीयासमभिव्याहृतेन [1]बोध्येत। नापि वृत्त्यनियामकसम्बन्धः प्रतियोगितावच्छेदक इति जन्यत्वं ज्ञाप्यत्वञ्च तृतीयार्थ इत्याहुः।

तच्चिन्त्यम्, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे घटो न पारिमाण्डल्येनेत्यादौ घटे पारिमाण्डल्यजन्यत्वाभावोप्रसिद्धप्रतियोगितया न बोधयितुं शक्यः, तृतीयार्थे [2] निरूपकतासंसर्गावच्छिन्नप्रतियोगिताकः पारिमाण्डल्याभावश्चाप्रसिद्ध इत्यनन्वयप्रसङ्गादिति। [3]अधिकमुपरिष्टात्।

"हेतौ" इति सूत्रे फलमपि हेतुः। अध्ययनेन वसतीत्यत्राध्ययन-

कारिकाया उत्तरार्द्धस्य तात्पर्य्यं दर्शयति—**एकदेशिनस्त्व**ति। **सुतरां सत्त्वादि**ति स्वरूपसंसर्गावच्छिन्नप्रतियोगिताकस्येत्यादिः। **जन्यत्वं ज्ञाप्यत्वञ्चे**ति। तथा च घटो न दण्डेनेत्यादौ निरूपितत्वेन प्रकृत्यर्थान्वितस्य स्वरूपेणाभावो बोध्यस्स च घटे बाधित एवेति न तस्य प्रामाण्यमिति भावः।

**फलमपि हेतु**रिति। तृतीयार्थहेतुत्वे प्रकृत्यर्थस्य यथाधेयतयान्वयस्तथा

---

१ बोध्यते इति मु० पु० पा०।

२ च इत्यधिकः पा० मु० पु०।

३ गगनं न पारिमाण्डल्येनेत्यादिवाक्यन्त्वयोग्यमेव। तस्य योग्यत्वे नञा द्वेधाभावो गगनमन्धो न पश्यतीत्यत्र द्वेधा नञर्थबोधवद् बोध्यते। अतः प्रकृत्यर्थाभावविशिष्टजन्यत्वस्याभावो गगने प्रतीयत इत्यादिकमित्यर्थः।

फलको वासो [1]वाक्यार्थः। तत्फलकत्वञ्च तदिच्छाप्रयोज्याचार-विषयत्वम्, न तु तज्जनकत्वम्, निर्वाणेन सुगतमुपास्ते जाल्म इत्यादौ सुगतोपासनायां निर्वाणजनकताया बाधात्॥ ११८॥

तुलोपमान्यशब्दार्थसादृश्यप्रतियोगिताम्।
तृतीयाप्याह षष्ठ्येव स्यात्तुलोपमयोर्द्वयोः॥११९॥

सादृश्यवाचकपदसव्यपेक्षा तृतीया षष्ठी च सादृश्यान्वितं प्रतियोगित्वमभिधत्ते। चन्द्रेण चन्द्रस्य वा सदृशं तुल्यं समं वा मुखमित्यादौ चन्द्रप्रतियोगिकसादृश्यवन्मुखमित्यन्वयबोधः। तत्र यदि सादृश्यमतिरिच्यते, तदा तत्प्रतियोगित्वमपि तथा। यदि च वृत्तितद्धर्म्मवानेव सदृशपदार्थः, तदा वृत्त्यन्वयिनिरूपकत्वमेव

निरूपितत्वेनापीति भावः। **तदिच्छेति**। [2]**आचारः** कृति**र्विषयत्वं** साध्यत्वाख्यं ग्राह्यम्। तेनाध्ययनत्वेन वसतीत्यादीनामप्रामाण्यम्॥ ११८॥

**तृतीयाप्याहे**ति। "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इत्यनुशिष्टेत्यादिः। अपिना पूर्वोक्तं द्वितीयायाः प्रतियोगित्वार्थकत्वं समुच्चिनोति। **षष्ठी चे**ति। अन्यतरस्यांग्रहणेन तत्र षष्ठ्या अपि साधुत्वज्ञापनात्। **अतिरिच्यत** इति मीमांसकैस्तस्य तथात्वोपगमात्। **तथा** तृतीयाषष्ठ्योरर्थः। तार्किकादि-भिस्तद्भिन्नत्वे सति तद्वृत्तिधर्म्मवत्त्वस्यैव तथात्वोपगमादाह—**यदि चे**ति।

---

१ अध्ययनेन वसतीत्यत्राध्ययननिरूपितहेतुताकोऽध्ययनजन्यतानिरूपको वा वासो वाक्यार्थः। प्रथमे बोधे तृतीयार्थहेतुत्वे कार्य्यस्य हेतुतानिरूपकत्वात् प्रकृत्यर्थस्य निरूपित-त्वेनान्वयः। द्वितीये च तृतीयार्थजन्यत्वे कार्य्यस्याधिकरणत्वादाधेयतया प्रकृत्यर्थस्यान्वय.।

२ "अल महीपाल! तव श्रमेण" इत्यत्र फलोद्देश्यककृतिविषयः फलाजनकोऽलपदार्थः निष्फलस्य कृतिविषयस्य श्रमजनकत्व निराबाधमिति श्रमजन्यतानिरूपकत्वमलपदार्थेऽन्वेति। अतएव फलहेतुताया नामार्थान्वयान्न कारकत्वमिति। एव दुःखेनाधीत दुःखेनार्जित दु.खेन विद्या दुःखेन धन श्रमेण यदुपार्जितमित्यत्र फलहेतुत्वान्वयो बोध्यः।

[1]तृतीयार्थः। तथा च चन्द्रनिरूपकवृत्तिमद्धर्म्मवन्मुखमित्यन्वयबोधः। सादृश्यघटकभेदे च तृतीयार्थः प्रतियोग्यनुयोगिभावस्वरूप एवान्वेति, घटेन रहितं शून्यं वा भूतलमित्यादौ प्रतियोगित्वार्थकतृतीया-दर्शनात्।

भेदाविशेषितसाधर्म्यार्थकसदृशशब्दादियोगेपि वृत्त्यन्वितनिरूपक-त्वार्थिका तृतीया, रामरावणयोर्युद्धं रामरावणयोर्युद्धेन सदृशमित्यपि प्रयोगात्। एतादृशानन्वयालङ्कारे प्रथमतो रामरावणयुद्धनिरूपित-वृत्तिकधर्म्मवद्रामरावणयुद्धमिति बोधः। ततो भेदांशमपहाय साधर्म्य-मात्रे लाक्षणिकपदप्रयोगफलविधया निरुपमं रामरावणयुद्धमिति वैयञ्जनिको बोधः। स मानसः शाब्दो वेत्यन्यदेतत्। सदृशपदन्निरु-पमे, युद्धपदं रामरावणयुद्धेतरत्र लाक्षणिकं रामरावणयोरिति पदं

तथा च भेदो वृत्तिमद्धर्म्मश्चेति द्वयं सदृशपदार्थतावच्छेदकम्, तत्र भेदे प्रतियोगित्वस्य वृत्तौ निरूपकत्वस्य तृतीयार्थस्यान्वय इत्यर्थः। **तृतीयादर्शनाद्**िति। प्रकृत्यादित्वाद्विहितायास्तस्यास्तथात्वदर्शनादिति भावः।

**साधर्म्यार्थके**ति। वृत्तिमद्धर्म्मावच्छिन्नस्य लक्षणया बोधिकेत्यर्थः। लक्षणाप्रयोजनं युद्धे निरुपमत्वबोध इति वक्ष्यति। **युद्धेन सदृशमि**ति।

"गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव ॥..."

इत्यादिप्राचीनप्रयोगानुसारेण तृतीयाघटितप्रयोगेपि तादृशस्थले साधुरेव। तत्र च युद्धे स्वभेदस्यासत्त्वात्सदृशपदमुक्तार्थे लाक्षणिकं तृतीया च निरूपकत्व-मात्रार्थिकेत्याशयः। लक्षणाप्रयोजनं दर्शयति—**एतादृशे**ति। **अनन्वयालङ्कारे**

"उपमानोपमेयत्वे एकस्यैवैकवाक्यगे।
अनन्वयः........................................ ॥"

इति लक्षणलक्षितेलङ्कारे इत्यर्थः। **मानसः शाब्दो वे**ति। व्यञ्जनानङ्गीकारा-

---

१ तृतीयार्थः इत्यस्य स्थाने प्रतियोगित्वतृतीयार्थः इति पा० मु० पु०।

लक्षणातात्पर्य्यग्राहकमिति काव्यमार्गविरुद्धम्; निरूढलक्षणायाः प्रयोजनशून्यत्वेन नेयार्थत्वोपगमात् ।

सादृश्यवाचिनोरपि तुलोपमयोर्योगे चन्द्रस्य तुलामुपमां वा मुखं धत्त इत्येव प्रमाणम्, न तु चन्द्रेणेति । कथं तर्हि "तुलां यदारोहति दन्तवाससा" इति, [1]"स्फुटोपमं भूतिसितेन शम्भुना" इति प्रयोग इति चेत्? सहपदस्याध्याहारेण तदर्थस्य संसर्गविधया वा भाने सह-युक्ते तृतीयाप्रयोगात् । तथा च दन्तवासःकर्त्तृकतुलाकर्म्मकारोहण-समानकालीनतुलारोहणकर्त्रेति भूतिसितशम्भ्वभिन्नस्फुटोपमसमानका-लीनस्फुटोपमाभिन्ननारदमिति चान्वयबोधः ।

ङ्गीकाराभ्यां द्वैविध्यं बोध्यम् । काव्यमार्गविरोधे वीजं **निरूढलक्षणाया** इति ।

सूत्रस्थातुलोपमाभ्यामित्यस्य प्रयोजनं दर्शयति—**सादृश्यवाचिनोरपी**ति । **संसर्गविधया वे**ति । शाब्दिकमतेनेदम् । इदमुपलक्षणम् । सूत्रेतुलोपमाभ्यामि-त्यनेन प्रतियोगित्वार्थकतृतीयैव तुलोपमशब्दयोगे निषिद्धा, न तु करणत्वाद्य-र्थिकापीति **दन्तवाससे**त्यत्रारोहतिलक्ष्यार्थज्ञानान्वयिकरणत्वमेव तृतीयार्थः । दन्तवासःपदञ्च दन्तवासोज्ञाने लाक्षणिकम् । तस्य करणत्वे तस्य धात्वर्थेन्वया-द्दन्तवासोज्ञानकरणकसादृश्यप्रकारकज्ञानविशेष्यमित्यन्वयबोधः, प्रतियोगिज्ञानं विना सादृश्यज्ञानासम्भवात् । **शम्भुने**ति हेतुतृतीया, स्फुटशब्दार्थोभिव्यक्त-स्तदैकदेशाव्यक्तौ शम्भुहेतुकत्वस्यान्वयाच्छम्भुहेतुकाभिव्यक्तिमदभिन्नोपमाश्र-याभिन्नं नारदमित्यन्वयबोधः । शम्भोस्तादृशाभिव्यक्तिहेतुत्वञ्च प्रतियोगिज्ञान-द्वारेति बोध्यम् ।

संयोगसमवायोपमादौ समानकालिकत्वमयोग्यमव्यावर्त्तकञ्चेति तत्र न

१ नवानधोधो बृहतः पयोधरान् समूढकर्पूरपरागपाण्डुरम् ।
क्षण क्षणोत्क्षिप्तगजेन्द्रकृत्तिना . . .. ॥ इति पूर्वम् ।

परे तु चैत्रेण सय्युँज्यते समवेतीत्यादौ निरूपकत्वम्, निर्वैरेण वैरायते निर्मत्सरेण सह स्पर्द्धते इत्यादौ विषयविषयिभावः, तेन सहोपमीयते तुल्यत इत्यादौ तदीयत्वादिः सहार्थः। अतएव [1]"तदुत्त-माङ्गजैः समभ्रमर्येव तुलाभिलाषिणी।" इति श्रीहर्षः। सहयुक्ते तृतीया तु साधुत्वार्थेत्याहुः ।११९।

प्रकारो द्विविधो विशेषणमुपलक्षणञ्च। तत्र तद्बुद्धिसमानकालीनत्वे सति तद्बुद्धिप्रकारो विशेषणम्, प्रमेयो द्रव्यं गौरिति प्रतीतौ गोत्वादि। तद्बुद्ध्यसमानकालीनत्वे सति तद्बुद्धिप्रकार उपलक्षणम्, यथा—गुरुणा टीका कुरुणा [2]क्षेत्रमित्यादौ कुरुगुरू। अत्र[3] तत्काल-

तद्घटितो बोधः, किन्त्वन्यथैवेति मतमाह—**परे त्विति**। चैत्रप्रतियोगिकस्य संयोगमात्रस्य समवायमात्रस्य च ततो बोधात्समानकालिकत्वं स्वस्य स्वस्मिन बाधितमनस्तत्राध्याहृतसहपदार्थः संसर्गो वा, किन्तु प्रतियोगित्व-स्वरूपं निरूपकत्वं तृतीयार्थ इति भावः। एवं **निर्वैरेणे**त्यादावपि बोध्यम्। **अतएवे**ति। समानकालिकत्वस्यावबोधेपि तृतीयायाः साधुत्वादेवेत्यर्थः। आहु-रित्यस्वरसः। स च सहशब्दस्य निरर्थकत्वे पुत्रेण सहागच्छतीत्यादौ पुत्रकर्तृ-कत्वस्यानवगमरूपो बोध्यः ।११९।

"इत्थम्भूतलक्षणे तृतीया" इति सूत्रे इत्थम्भूतपदस्य किञ्चिन्निरूपितप्रकार-त्वाश्रयार्थकतया तादृशतृतीयार्थं निरूपयितुमादौ प्रकारद्वैविध्यमाह—**प्रकार विति**। **अत्र** गुरुणा टीकेत्यादौ। **तत्काले**ति। तादृशप्रयोगाधिकरणकालेत्यर्थः।

---

१ स्वबालभारस्य तदुत्तमाङ्गजैः समभ्रमर्येव तुलाभिलाषिणी।
अनागसे शसति बालचापल पुनः पुनः पुच्छविलोलनच्छलात्॥ इति पूर्णश्लोकः। अत्र 'तुलाभिलाषिणः' इत्यपि पाठः दृश्यते।

२ क्षेत्रमित्यत्र इति पा० मु० पु०।

३ हिपदमधिक दृश्यते मु० पु०।

निष्ठस्य ध्वंसस्य कादाचित्काभावस्य वा प्रतियोगित्वं सम्बन्धश्च तृतीयार्थः। तथा चाविद्यमानस्य गुरोष्टीका कुरोः क्षेत्रमित्यन्वयबोध इति केचित्।

[1]अतएव "इत्थम्भूतलक्षणे तृतीया" इति सूत्रेतीतार्थको[2] निष्ठाप्रत्ययः[3] साधुः। इत्थम्भूतस्यातीतस्य लक्षणे सम्बन्धे बोध्ये तृतीया साधुरिति सूत्रार्थ इत्येतन्मतोत्तम्भनावसरे मिश्राः।

विशेषणत्वं प्रकारत्वञ्च पर्य्यायशब्दौ। यो यस्यां बुद्धौ यत्र प्रकारस्स तत्र विशेषणम्। विशेषणस्योपस्थापकमविशेषणमुपलक्षणम्।

अनित्यप्रतियोगिकात्यन्ताभावस्यानित्यत्वे तमादायापि लक्षणसम्भवादाह—**कादाचित्के**ति। तत्र तादृशप्रतियोगित्वं प्रकृत्यर्थे विशेषणतया सम्बन्धश्च विशेष्यतयान्वेतीत्याशयेनाह—**तथा चे**ति। विद्यमानध्वंसादिप्रतियोगित्वमेवाविद्यमानत्वमित्यतस्तादृशबोध इति बोध्यम्। **अतएव** अविद्यमानत्वस्य तृतीयार्थत्वादेव। **एतन्मतोत्तम्भने**ति। निरुक्तरीत्या **कुरु**णेत्यादिस्थले बोधवादिमतोत्थापनावसर इत्यर्थः। **मिश्रा** इति, प्रत्यक्षालोके इत्यादिः।

केचित्तु विद्यमानस्यापि गृहोपरि भ्राम्यतः काकादेरुपलक्षणत्वादुक्तमते तदनुपपत्तिरित्यन्यथा विशेषणत्वादिकं परिष्कुर्वन्ति, तन्मतमाह—**विशेषणत्वमि**ति। विशेषणेपि स्वात्मकविशेषणोपस्थापकत्वसत्त्वादतिप्रसङ्गवारणाया-

---

१ अतएव इति पद ना० मु० पु०।

२ अपिपदमधिकं दृश्यते मु० पु०।

३ अपिपदमधिक विद्यते मु० पु०।

४ पूर्वोक्तस्थले पूर्वोक्तरीत्या बोधनिर्वाहाय इत्थम्भूतेत्यत्रातीतार्थको निष्ठाप्रत्ययोतीतस्य लक्षणे सम्बन्धे तृतीया भवतीति सूत्रार्थाभिप्रायेण प्रत्यक्षालोके "अतीतार्थान्यप्रत्ययेनासत्त्वबोधनात्" इति पक्षधरमिश्रैरुक्तमिति तात्पर्यम्।

**मणिकृन्मतानुयायिनस्तु विशेषणमुपलक्षणमिति परिभाषा नानार्था । यत्र दण्डी पुरुष इति ज्ञानं तत्र ततो निर्दण्डिपुरुषव्यावृत्तो दण्डी पुरुष इति निश्चयस्तत्र दण्डो विशेषणमित्युच्यते । यत्रैकस्या[1] व्यावृत्तेरनुयोगिता प्रतियोगिता वैकधर्म्मावच्छिन्ना तत्र तदनुयोगितावच्छेदकत्वेन तत्प्रतियोगितावच्छेदकाभावप्रतियोगित्वेन च प्रतीयमानत्वं विशेषणपदप्रवृत्तिनिमित्तम् । अतएव श्वेतेतरकरवीरस्य कुवलयस्य व्यावृत्तौ पुण्डरीकत्वावच्छेदेन गृह्यमाणायां श्वेतत्वं न**

जटाभिस्तापसः दण्डेन पुरुष इत्यादौ साक्षात्सम्बद्धजटादण्डादीनामुपलक्षणत्वानुपपत्तिर्बोध्या ।

चिन्तामणिकारमते विशेषणमुपलक्षणञ्चान्यादृशमेवेति तदपि दर्शयति— **मणिकृन्मते**ति । **नानार्थे**ति । तत्त्वञ्चानुपदमेव दर्शयिष्यति । **निर्दण्डिपुरुषे**ति । व्यावृत्तिर्भेदस्तदाश्रयो व्यावृत्तः । **विशेषणमित्युच्यत** इति । तत्रैकस्यैव पुरुषभेदस्य प्रतियोगिता पुरुषत्वावच्छिन्ना पुरुषविशेषणीभूताभावप्रतियोगितावद्दण्डावच्छिन्नापि, अनुयोगितापि दण्डपुरुषत्वोभयावच्छिन्नेति तादृशभेदानुयोगितावच्छेदकत्वतत्प्रतियोगितावच्छेदकीभूताभावप्रतियोगित्व - ज्ञानस्य दण्डे सम्भव इत्याशयः । **अतएव** अनुयोगित्वप्रतियोगित्वयोरेकधर्म्मावच्छिन्नत्वस्य विशेषणपदप्रवृत्तिनिमित्ततावच्छेदकत्वोपादानादेव । **न कमलविशेषणमि**ति । श्वेतेतरकरवीरभिन्नं तादृशनीलकमलभिन्नं वा पुण्डरीकमिति प्रतीतौ प्रतियोगितावच्छेदकताया नीलत्वकमलत्वोभयस्मिन्ननुयोगितावच्छेदकतायाश्च श्वेतत्वकमलत्वोभयस्मिन्नेव सत्त्वात्प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नत्वस्यानुयोगितायामसत्त्वाद् विवक्षितञ्च तथैवेत्याशयः । **श्वेतेतरकरवीरस्ये**त्युपादानन्तु पुण्डरीकपदार्थतावच्छेदकश्वेतत्वेनुयोगितावच्छेदकत्वस्य प्रतियोगितावच्छेदकीभूताभावप्रतियोगिता-

१ एव इत्यधिकः पा० मु० पु० ।

कमलविशेषणम्। अतएव चेदं विशेषणत्वं न व्यावृत्तिबुद्धेर्विषयः, किन्तु तदनुव्यवसायादेः। काकवन्तो गृहा देवदत्तस्येत्यादौ देवदत्त-स्वत्वरहितगृहव्यावृत्तिः संस्थानविशेषावच्छेदेन गृह्यत इति काको न विशेषणम्, अपि तु विशेषणान्यत्वे सति व्यावृत्तिबुद्धिप्रकारतया [1]व्यावृत्त्यवच्छेदकोपस्थापकतया वा व्यावर्त्तकतयोपलक्षणम्। अतएव "प्रमेयत्वादेर्विशेषणोपलक्षणबहिर्भावात् प्रकारो द्विविधः" इति प्रतीकं

वच्छेदकत्वस्य च लाभायेति बोध्यम्। **अतएव चेदमि**ति। विशेषणपदप्रवृत्ति-निमित्तस्य निरुक्तप्रतीतिविषयत्वरूपत्वादेवेत्यर्थः। **न व्यावृत्ती**ति। निर्दण्डि-पुरुषव्यावृत्तो दण्डी पुरुष इति व्यावृत्तिप्रकारकस्योक्तज्ञानस्य न विषय इत्यर्थः। तादृशज्ञानानन्तरमेव तत्र तत्प्रतीतिविशेष्यतायास्सम्भवात्तज्ज्ञानस्य तद्विषयकत्वस्यासम्भावितत्वात्। **किन्त्वि**ति। पूर्वज्ञानीयविशेष्यताया अनुव्यवसाये सर्वत्र भानादित्याशयः। **काकवन्तो देवदत्तस्य गृहा** इत्यत्रो-पलक्षणीभूतकाकस्य न विशेषणत्वमिति दर्शयति—**संस्थाने**ति। उत्तृणत्वा-वच्छेदेनेत्यर्थः। **न विशेषणमि**ति। अनुयोगितावच्छेदकत्वस्योत्तृणत्वे प्रतियोगितावच्छेदकीभूताभावप्रतियोगित्वस्य देवदत्तस्वत्वे सत्त्वात् काका-सत्त्वकालेपि देवदत्तस्वत्वरहितगृहभेदस्य तत्प्रतीतिविषयतायाश्च देवदत्तगृहेषु सत्त्वात्काकस्य तन्न्यूनवृत्तित्वेनानुयोगितावच्छेदकत्वासम्भवादित्याशयः। **उपलक्षणमि**ति। तथा च व्यावृत्त्यनुयोगितानवच्छेदकत्वे सति व्यावर्त्तकत्व-मुपलक्षणत्वं काकेषु निराबाधमिति भावः। व्यावर्त्तकत्वं भेदज्ञानजनकत्वम्, तदपि काकानां न साक्षात्, किन्तु काकज्ञानेनोत्तृणत्वादिज्ञानं ततस्तादृशोत्तृण-त्वादिज्ञानमित्युक्तमप्युपलक्षणत्वं तत्राप्रसक्तमेवेत्यत आह—**व्यावृत्त्ये**ति। तथा च व्यावृत्तिज्ञानजनकज्ञानजनकत्वरूपं परम्परयैव व्यावर्त्तकत्वमुपलक्षणघटकमतो नाप्रसङ्ग इति भावः। **अतएव** विशेषणत्वोपलक्षणत्वयोर्व्यावृत्तिघटितत्वादेव। **बहिर्भावादि**ति। तेषां केवलान्वयितया कुत्राप्यवृत्तिविरहादुक्तलक्षणशून्यत्वा-

---

१ व्यावृत्त्यवच्छेदकोपस्थापकतया वा व्यावर्त्तकतया इत्यस्य स्थाने तदुपस्थापकतया व्यावर्त्तकतया वा इति मु० पु० पा०।

गृहीत्वा "व्यावर्त्तक इति" [1]विशेषो मिश्रैः पूरितः ।

इयाँस्तु विशेषः—मिश्रमते विशेषणत्वं वस्तुसदेव व्यावृत्त्यधिकरणतावच्छेदकत्वम् । तच्च [2]संयोगाद्यवच्छेदकत्ववत्स्वरूपसम्बन्धविशेषः । तस्य प्रामाणिकत्वद्योतनाय मणौ "प्रत्याय्य व्यावृत्तिः..." इत्यादिनिर्देश इति । तत्र "व्यावृत्त्युल्लेखानन्तरमेव हि विशेषणप्रत्ययः" इति मणिवाक्यं दुरुपपादम् । उपलक्षणतृतीयायास्तु नोपलक्षणत्वं शक्यम्, किन्तु वस्तुसत्युपलक्षणे प्रातिपदिकेनोपस्थापिते सम्बन्धमात्रम् । काकेन देवदत्तगृहा इत्यत्र काकसम्बन्धिनो देवदत्तगृहा इत्यन्वयबोधः । प्रमेयत्वादि च न स्वरूपसद्व्यावर्त्तकमिति न प्रमेयत्वेन घट इति प्रयोगः ।

दित्यर्थः । **इति प्रतीकमि**ति । मणिग्रन्थप्रतीकमित्यर्थः । **पूरित** इति । तेन प्रमेयत्वादीनां व्यावर्त्तकत्वाभावाद् द्विविधप्रकारत्वान्तर्भावासम्भवेपि न मणिकृतो न्यूनतेत्याशयः ।

**मिश्रमत** इति । "प्रत्याय्य व्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यावर्त्तकं विशेषणम्" इति मणिग्रन्थस्य "व्यावृत्त्यधिकरणताया अवच्छेदकत्वं स्वरूपसम्बन्धविशेषः संयोगादाविव तेन समं तस्य" इति मिश्रैर्व्याख्यानकरणात् स्वरूपसत एव विशेषणत्वं तदभिमतमित्याशयः । **तत्र** तन्मते । **दुरुपपादमि**ति । एवकारेण तदुल्लेखं विना विशेषणत्वप्रतीतिविरहस्य तद्ग्रन्थतो लाभात् स्वरूपसतो विशेषणत्वे तदनुपपन्नमिति सूचितम् । **नोपलक्षणत्वमि**ति । निरुक्तोपलक्षणत्वस्य काकेन देवदत्तगृहा इति वाक्यार्थबोधानन्तरमेव, काकज्ञानात्पूर्वं तज्ज्ञानासम्भव इति भावः । **इत्यन्वयबोध** इति । तथा च तत्र सम्बन्धमात्रं तृतीयार्थ इति भावः । **न प्रयोग** इति । प्रमेयत्वस्य व्यावर्त्तकत्वाभावेन विशेषणत्वोपलक्षणत्वयोरसम्भवात् ।

---

१ विशेषो इत्यस्य स्थाने शेषो इति मु० पु० पा० ।

२ ० अवच्छेदकत्वात् इति मु० पु० पा० ।

यस्तु पशुना यजेतेत्यादौ पशुगतमेकत्वं विशेषणम्, [1]ग्रहं सम्मार्ष्टीत्यत्र ग्रहगतमुपलक्षणमिति छान्दसानां व्यवहारः, स[2] विशिष्टान्वयतदनन्वयनिबन्धनः। विशिष्टान्वयस्तु [3]त्रिविधः—पशुना यजेतेत्यादौ तृतीयोपात्तकर्म्मतायां यागभावनायां वा पशोरन्वये एकत्वावच्छिन्नप्रतियोगिताकः संसर्गो भासत इत्येकः। पशौ तद्विशेषणतापन्नैकत्वे च प्रकारता पर्य्याप्तेति द्वितीयः। एकत्वे प्रकारत्वद्वयं [4]साक्षात्सम्बन्धावच्छिन्नं पशुविशेष्यतया निरूपितमेकम्, [5]परम्परासंसर्गावच्छिन्नं कर्म्म-

**यस्त्वि**ति। अस्य **व्यवहार** इत्यग्रिमेणान्वयः। **विशेषणमिति**। तेनानेकपशुकरणकयागान्नादृष्टसिद्धिरित्यस्योक्तत्वात्। **निबन्धन** इति। पशुना यजेतेत्यादौ तृतीयार्थकर्म्मत्वे एकविशिष्टस्यान्वयादेकत्वस्य विशेषणत्वम्। **ग्रह**मित्यत्रैकत्वविशिष्टग्रहस्य सम्मार्जनकर्म्मत्वेनन्वयात्तस्योपलक्षणत्वमित्यर्थः। विशिष्टान्वयस्यानेकप्रकारेण सम्भव इत्याह- **विशिष्टान्वयस्त्वि**ति। **यागभावनायां वे**ति, मीमांसकैराख्यातार्थभावनायामेव सर्वकारकान्वयस्योपगमात्। **संसर्गो** निष्ठत्वं कर्म्मत्वे भासत इत्यर्थः। **प्रकारता** कर्म्मत्वनिष्ठविशेष्यतानिरूपिता। तृतीयपक्षस्य समानाधिकरणविषयतयोरभेदोवच्छेद्यावच्छेदकभावो वेति प्रकारद्वयालम्बनत्वमित्याह—**प्रकारत्वद्वयमि**ति। **साक्षादि**ति। समवायसंसर्गावच्छिन्नमित्यर्थः। **परम्परे**ति। कर्म्मत्वनिष्ठविशेष्यतानिरूपितायाः स्वाश्रयवृत्तित्वं भावनानिष्ठविशेष्यतानिरूपितायाः स्वसमानाधिकरणकर्म्मताकत्वं प्रकार-

---

१ ग्रहम् इति मु० पु० पा०। २ च इत्यधिकः पा० मु० पु०।

३ त्रिविधः इत्यस्य स्थाने विविधः इति मु० पु० पा०।

४ साक्षात्सम्बन्धावच्छिन्नं पशुविशेष्यतया निरूपितमेकम् इत्यस्य स्थाने अन्योन्यावच्छिन्नमेकम् इति मु० पु० पा०।

५ परम्परासंसर्गावच्छिन्नं कर्म्मताविशेष्यतया भावनाविशेष्यतया वा निरूपितं द्वितीयम् इत्यस्य स्थाने पशुविशेष्यतया द्वितीयं भावनादिविशेष्यतया निरूपितम् इति मु० पु० पा०।

ताविशेष्यतया भावनाविशेष्यतया वा निरूपितं द्वितीयम्; एकमेव वाऽभिन्नविशेष्यताद्वयनिरूपकसंसर्गतायुगलावच्छिन्नमिति तृतीयः कल्पः ।

तथा च यदि दण्डावच्छिन्नः पुरुषसम्बन्धो विवक्षितः, तदा दण्डस्य विशेषणत्वमितरथा[1] 'तूपलक्षणत्वम्[2]। उपलक्षणतायां दण्डेन पुरुषमानयेति प्रमाणम्। प्रमेयः प्रमेयपदवाच्य इत्यादौ विशेष्यान्वयिवाच्यतादात्म्यान्वयितया प्रमेयत्वमपि विशेषणमित्याहुः।

तत्र तृतीयायाः सम्बन्धमात्रार्थकतया प्रमेयत्वेन द्रव्यत्वेन वा वा पुरुषमानयेत्यादिकः कुतो न प्रयोग इत्युच्यते—

**अभावप्रतियोगित्वं वैशिष्ट्यञ्च तृतीयया ।**
**कथ्यते तत्र लक्ष्यस्य पुरुषादेर्द्विधान्वयः ॥१२०॥**

तायाः संसर्गविधयावच्छेदकमित्यर्थः। तत्र च तयोरवच्छेद्यावच्छेदकभावमते द्वित्वमभेदे त्वेकत्वमेवेत्याशयेनाह—**एकमेव** वेति ।

**तथा च** विशेषणत्वोपलक्षणत्वयोर्विशिष्टान्वयानन्वयनिबन्धनत्वे च। **वाच्ये**ति। अन्यथा प्रमेयपदवाच्यतायाः प्रमेयत्वेनुपपत्तिरिति भावः।

विशेषणत्वोपलक्षणत्वयोरेवं निरूपणेपि तृतीयायास्सम्बन्धमात्रार्थकत्वेतिप्रसङ्गमाशङ्कते—**तत्रे**ति। **कुतो न प्रयोग** इति। प्रमेयत्वद्रव्यत्वयोस्सम्बन्धस्य पुरुषे निराबाधादित्याशयः।

---

१ ०मितरथा तूपलक्षणत्वम् इत्यस्य स्थाने ०मितरधातूपलक्षणत्वम् इति मु०पु०पा० ।

२ ईदृशविशिष्टविषयतामापन्नो विशेषणमनापन्न उपलक्षणमिति तात्पर्य्यम्। अतएव चिन्तामणौ "उद्देश्यान्वयप्रतियोगी धर्म्मो विशेषणम्, तदन्यदुपलक्षणम्" इति। एवञ्च काकवन्तो देवदत्तगृहा इत्यत्र उद्देश्याया देवदत्तस्वत्वशून्यगृहव्यावृत्तेरन्वयिताच्छेदकत्व काकस्य न सम्भवतीति काको न विशेषणम्। यदि चाकाकव्यावृत्तिरुद्देश्या तदा विशेषणमेव। एव ग्रहमित्यादावेकत्वविशिष्टग्रेहकर्म्मत्वस्य सम्मार्गेन्वयो नोद्देश्यः, किन्तु प्रस्तुतसकलग्रहकर्म्मत्वस्येत्येकत्वं न विशेषणमिति भावः।

**दण्डेन पुरुष इत्यादावभावप्रतियोगित्वं वैशिष्ट्यञ्च तृतीयार्थः। तत्राभावे पुरुषस्तत्प्रतियोगित्वञ्च दण्डत्वावच्छेदेन दण्डे, स च वैशिष्ट्ये, तत्पुरुषेन्वेतीत्युपलक्ष्यस्य विशेषणतया विशेष्यतया च द्वेधा वाक्यार्थानुप्रवेशः। पुरुषनिष्ठात्यन्ताभावप्रतियोगिदण्डविशिष्टपुरुष इत्यन्वयबोधः। प्रत्येकं गुणानां द्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वेपि न गुणत्वावच्छेदेन तथेति गुणेन द्रव्यमिति न प्रयोगः, उपलक्षणतावच्छेदकधर्म्मावच्छेदेन तृतीयार्थान्वयव्युत्पत्तेः।**

**"कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः।**
**पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम्॥"**

**इत्यत्र कलक्वणितगर्भकण्ठत्वमेवोपलक्षणतावच्छेदकम्। तत्र न पारावतनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वबाधः।**

**तत्राभावे** इति। आधेयतयेति शेषः। **अन्वेती**त्यनेनान्वितम्। **उपलक्ष्यस्य** पुरुषादेः। उपलक्षणतावच्छेदकावच्छेदेन तृतीयार्थाभावप्रतियोगित्वस्यान्वयोपगमप्रयोजनमाह–**प्रत्येक**मिति। **न गुणत्वे**ति। नित्यगुणानामभावस्य द्रव्ये विरहाद् द्रव्यनिष्ठाभावीयप्रतियोगितायां अतिरिक्तवृत्तितया न गुणत्वस्यावच्छेदकत्वम्, दण्डसंयोगाभावदशायां पुरुषे दण्डसामान्याभावस्यैव सत्त्वेन दण्डत्वस्य तादृशप्रतियोगितावच्छेदकत्वमित्याशयः। **तत्र ने**त्यादि। कण्ठत्वमात्रस्योपलक्षणतावच्छेदकत्वे तु तदवच्छिन्नाभावस्य पारावते बाध एवेति तत्र तृतीयानुपपत्तिरेव स्यादिति भावः। [1]प्रकृत्यादित्वादत्र तृतीयेत्यपि वदन्ति। एवं सति पुरुषनिष्ठात्यन्ताभावप्रतियोगित्वस्य प्रमेयत्वत्वाद्यवच्छेदेनायोग्यतया प्रमेयत्वेन दण्ड इत्यादयो न प्रयोगा इति बोध्यम्।

---

१ आधेयत्वार्थिका तृतीया "प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति वार्त्तिकसिद्धेति तात्पर्य्यम्। एवञ्च कलक्वणितगर्भकण्ठे समवेते पारावते परिभ्रमणोत्तरप्रियाचुम्बनकर्त्तृत्वान्वयोपि बोध्यः।

**अत्यन्ताभावो वैशिष्ट्यञ्च तृतीयार्थः । अत्यन्ताभावेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगितया वैशिष्ट्ये च निरूपकतया दण्डस्यान्वयः, पुरुषत्वसामानाधिकरण्येन दण्डाभावो दण्डवैशिष्ट्यञ्चान्वेतीत्यपि वदन्ति ।**

**अवच्छिन्ना प्रतियोगिता तृतीयार्थः । तत्रावच्छिन्नत्वे दण्डस्य पुरुषत्वविशिष्टे च प्रतियोगित्वस्यान्वयः । तथा च दण्डावच्छिन्नप्रतियोगितावान् पुरुष इत्यन्वयबोधः । पुरुषत्वव्यापकं प्रमेयत्वादिकं तद्व्याप्यं चैत्रत्वादि च न पुरुषत्वावच्छिन्नप्रतियोगितावच्छेदकम्, व्याप्यव्यापकभावापन्नयोरेकप्रतियोगितानवच्छेदकत्वादिति प्रमेयत्वेन चैत्रत्वेन वा पुरुष इति न प्रयोग इत्यपरे ॥ १२० ॥**

प्रतियोगित्वस्य संसर्गमर्य्यादयैव लाभसम्भवादभावमात्रं वैशिष्ट्यञ्च तृतीयार्थः, तावतापि प्रमेयत्वेन पुरुष इत्यादिवारणमिति मतं दर्शयति—**अत्यन्ताभाव**विति । **दण्डस्यान्वय** इति । एवञ्चात्र कल्पे दण्डस्य पुरुषस्य च विशेषणतामात्रेण विशेष्यतामात्रेण चान्वय इत्यपि पूर्वस्माल्लाघवमिति भावः ।

अत्राप्युभयत्र दण्डपुरुषयोर्भानमावश्यकमित्यतः कल्पान्तरमाह—**अवच्छिन्ने**ति । **इत्यन्वयबोध** इति । दण्डी पुरुषो नास्तीत्यभावप्रतियोगितावच्छेदकताया दण्डेपि सत्त्वात्तन्निरूपितप्रतियोगितायाः पुरुषवृत्तित्वं निराबाधमिति भावः । प्रमेयत्वेन पुरुष इति वारयति—**पुरुषत्वे**ति । तयोः प्रतियोगितानवच्छेदकत्वे बीजं **व्याप्ये**ति । **एकप्रती**ति । प्रमेयः पुरुषो नास्तीत्यभावप्रतियोगिताया लाघवात् पुरुषत्वमात्रेणावच्छेदाद् व्यापकीभूतस्य प्रमेयत्वादेस्तदनवच्छेदकत्वेप्यनतिप्रसङ्गात् । चैत्रः पुरुषो नास्तीत्यभावप्रतियोगितावच्छेदकता च न चैत्रत्वे पुरुषत्वव्याप्ये सम्भवति, न्यूनवृत्तित्वात्, चैत्रभिन्नपुरुषवति देशे पुरुषत्वावच्छिन्नप्रतियोगिताकाभावप्रतीतिप्रसङ्गाच्चेति भावः ।

अत्र सम्बन्धस्स एव तृतीयार्थो य उद्देश्यप्रतियोगी । तत्त्वञ्चोद्देश्यताया व्यावृत्तेरन्वयितावच्छेदकत्वम् । यथा—काकेन देवदत्तगृहा इत्यत्र काकस्य

**[1]यजेत पशुना रुद्रमित्यादौ दानवाचके ।**
**यजतौ कर्म्मतामाह तृतीयाधारतां क्वचित् ॥१२१॥**

**पशुना रुद्रं [2]यजेतेत्यादौ पशुं रुद्राय ददातीत्यन्वयबोधः ।**

स्वप्रयोज्यसंस्थानविशेष उत्तृणत्वं सम्बन्धस्तस्य देवदत्तस्वत्वशून्यगृहव्यावृत्तेरुद्देश्याया अन्वयितावच्छेदकत्वात् । प्रमेयत्वस्य पुरुषे तादृशसम्बन्धविरहान्न प्रमेयत्वेन पुरुष इति प्रयोगः । जटाभिस्तापस इत्यत्र जटानां केशसंयमप्रयोजकव्रतवत्त्वरूप एव सम्बन्धस्तृतीयार्थः । व्रतस्य केशासंयमप्रयोजकत्वन्तु तापसानां केशसंयमनिषेधेन केशसंयमेन कर्त्तव्यजपादिकर्म्मणः कालातिपातशङ्कया । यदि च संयतकेशोपि तापसस्तदा केशसंयमादेस्तत्कर्त्तव्यजपाद्यविरोधित्वेन स्वप्रयोजकीभूताभावप्रतियोगिकेशसंयमाप्रयोजितावैगुण्यकव्रतवत्त्वमेव तृतीयार्थः । अवैगुण्यमनिषिद्धत्वं कर्त्तव्यजपादिलोपविरहो वा । केशसंयमप्रयुक्तजपादिलोपस्य विषयासक्ते केशिनि सत्त्वान्नाप्रसिद्धिः । केशसंयमप्रयुक्तजपादिलोपविरहस्य संयतासंयतकेशयोर्व्रते समानत्वादिति दर्शितव्रतवत्त्वमेव तापसव्यावृत्तेरुद्देश्याया अन्वयितावच्छेदकम्, तस्य जटायाः सत्त्वदशायामप्यवैकल्यात् । अतएव "संस्थानविशेषवत्त्वादिना" इति मणिग्रन्थे "व्रतविशेषवत्त्वादिरादिपदार्थः" इति दर्पणे [3]ठक्कुराः । व्रतविशेषो जटासम्बन्धतावच्छेदको दर्शित एवेत्यप्याहुः ॥१२०॥

**पशुना रुद्रं यजेते**त्यत्र "कर्म्मणः करणसंज्ञा सम्प्रदानस्य च कर्म्मसंज्ञा" इति वार्त्तिकेन विहितायास्तृतीयायाः कर्म्मत्वं द्वितीयायाश्च सम्प्रदानत्वमर्थ इति दर्शयति—**यजेते**ति । **क्वचित्** "नक्षत्रे च लुपि" इति सूत्रविहिततृतीया-

---

१ यजते इति मु० पु० पा० । २ यजत इति मु० पु० पा० ।

३ इमे च ठक्कुराः वर्त्तमानदरभङ्गामहाराजस्य पूर्वजाः महेशठक्कुर इत्यभिधानाः । तेषां गङ्गेशकृतचिन्तामणिग्रन्थव्याख्यानभूतपक्षधरकृतालोकोपरि दर्पणाख्या टीका सम्प्रति मिथिलाविद्यापीठतः प्रकाश्यमाना वर्त्तते । तदुक्त प्रारम्भे ठक्कुरैः —

"गौर्य्यां गिरीशादिव कार्त्तिकेयो यो धीरया चन्द्रपतेरलम्भि ।
आलोकमुद्दीपयितु नवीन सदर्पणं व्यातनुते महेशः ॥" इति ।

कर्म्मणि तृतीया, सम्प्रदाने द्वितीया । पुष्येण स्नायादित्यत्र कालिकाधारत्वं तृतीयार्थः । पुष्यपदं पुष्यचन्द्रसंयोगावच्छिन्नकालपरम् । भोगेन प्रसित उत्सुक इत्यत्र तृतीयाविषयत्वलक्षणं गौणमाधारत्वमभिधत्ते ॥ १२१ ॥

**कालाध्वात्यन्तसंयोगक्रिया चेदपवर्गिणी ।**
**तृतीया युज्यते तर्हि द्वितीयैवान्यथा भवेत् ॥१२२॥**

"अह्ना क्रोशेन वानुवाकोधीतः..." इत्यादावहस्त्वक्रोशत्वादिव्यापिकीं कालिकीं दैशिकीमाधारतां तृतीया ब्रूते, यदि फलवती क्रिया धातूपात्ता । फलत्वन्तु यदिच्छाप्रयोज्याचारविषयः क्रिया

प्रयोगे । तत्सूत्रार्थश्च—लुप्ततद्धितान्तार्थे वर्त्तमानान्नक्षत्रविशेषार्थकशब्दात्तृतीयासप्तम्यौ भवत इति । **पुष्यचन्द्रे**ति । पुष्यनक्षत्रस्थितचन्द्रेत्यर्थः । **कालपर**मिति । इदञ्च लुप्ततद्धितस्याननुसन्धाने पुष्यपदं तादृशार्थे निरूढलाक्षणिकमित्याशयेन । **भोगेने**ति । "प्रसितोत्सुकाभ्यां तृतीया च" इति सूत्रेण तृतीयासप्तम्योर्विकल्पेन विधानमिति । प्रसितशब्दार्थो धारापन्नज्ञानवान् तादृशेच्छावान् वा । उत्सुकशब्दार्थ उत्कटेच्छारूपोत्कण्ठावान् । तृतीयासप्तम्योर्विषयत्वमर्थ इति भोगविषयकतादृशज्ञानादिमानिति तद्वाक्यजोन्वयबोधः[1] ।

"अपवर्गे तृतीया" इति सूत्रस्य "कालाध्वनोरत्यन्तसंयोगे" इत्य(-त्रा-)नुवृत्त्या धातूपात्तायां कालाध्वात्यन्तसंयोगवत्यामपवर्गे फलप्राप्तौ द्योत्यायां कालाध्ववाचकेभ्यस्तृतीयेत्यर्थस्तदनुसृत्याह—**कालाध्वे**ति । **अपवर्गिणी** फलप्राप्तिमती **चेत्, तर्हि** तदा कालाध्ववाचकशब्दात्तृतीया युज्यते । **अन्यथा** क्रियायामनपवर्गिण्यां **द्वितीयैव** "कालाध्वनोः..." इत्याद्यनुशिष्टा प्रमाणमित्यर्थः । अत्र फलत्वं न धात्वर्थे विशेषणतया भासमानत्वम्, किन्त्वन्यदेवेत्याह— **फलत्व-**

---

१ एव "केशैः केशेषु वा प्रसितः केशैः केशेषु वा उत्सुकः" इति काशिकोदाहरणेपि एषैव रीतिरनुसर्त्तव्या ।

तत्त्वम्। तदुपहितक्रिया तथा। अध्ययनाचारश्च दृढसंस्कारेच्छाप्रयोज्य इति दृढसंस्कारोपहिताध्ययने धातुर्लाक्षणिकः। यत्र तु क्रियायान्न फलोपधानं मासमधीतोपि नाभ्यस्त इति, तत्र द्वितीयैव प्रमाणम्।

अत्यन्तसंयोगमात्रं तृतीयार्थः। अन्यस्तु व्यञ्जनागम्यः। दिवसेन भवान् युद्धयेतेत्यत्र दिवसाभिव्यापकभवत्कर्त्तृकं युद्धमिति प्रथमः, विजयफलेनोपहितं युद्धमिति द्वितीयश्च बोध इति प्रकाशकाराः। तत्र तव शत्रुर्दिवसमयुद्धयत, न तु दिवसेनेत्यत्र गतिश्चिन्त्या। फलोपहितत्वस्य पदार्थतावादे तु दिवसाभिव्यापकयुद्धकर्त्ता दिवसाभिव्यापकफलोपहित-युद्धकर्त्तृत्वाभाववांश्च तव शत्रुरित्यन्वयबोधः॥ १२२॥

**न्त्वि**ति। [1]अध्ययनादिका क्रिया यदिच्छाप्रयोज्यकृतिविषयेत्यर्थः। **तदुपहिता** फलनिरूपितफलोपधायकत्वरूपकारणतावती क्रिया। **तथा** अपवर्गिणी। तादृशक्रियाया धातुवाच्यत्वासम्भवादाह— **लाक्षणिक** इति। **अपवर्गिणी** त्यस्य प्रयोजनमाह— **यत्र त्वि**ति।

व्यञ्जनावादिकाव्यप्रकाशकारमतमाह— **अत्यन्ते**ति। **अन्यः** क्रियायां फलो-पहितत्वम्। **गतिश्चिन्त्ये**ति। दिवसाभिव्यापकयुद्धकर्त्तृत्वस्य शत्रौ सत्त्वा-त्तदभावस्य बोधयितुमशक्यत्वादिति भावः। फलोपहितत्वस्य धातुलक्ष्यत्वोपगमे तत्र गतिं दर्शयति— **फलोपहितत्वस्ये**ति। **कर्त्तृत्वाभाववांश्चे**ति। [2]सामान्य-वति विशेषाभावस्य सत्त्वं सर्वसम्मतमेवेति भावः।१२२।

( इति सटीकपदवाक्यरत्नाकरेकारकतृतीयाविवरणम्। )

---

१ अह्ना क्रोशेन वानुवाकोधीत इत्यत्राध्ययनमुच्चारणमनुसन्धानं वा धात्वर्थः। दृढसंस्कारोपहितमध्ययनमिह धातुनोपस्थाप्यते। तत्र धात्वर्थे तृतीयार्थोऽत्यन्तसंयोगः कालिकं दैशिकं वा व्यापकत्वमन्वेति। तथा चाहर्व्यापकस्य क्रोशव्यापकस्य वा दृढसंस्कारोपहिताध्ययनस्य कर्म्मानुवाक इति शाब्दबोधः। दैशिकव्यापकत्वं कर्त्तृघटितपरम्परा-संसर्गावच्छिन्नमिह बोध्यम्।

२ घटवान् नीलघटाभाववानितिवत् दिवसाभिव्यापकयुद्धे शत्रुकर्त्तृकत्वप्रतीतेः शत्रौ तथाविधयुद्धकर्त्तृत्वप्रतीतेर्वा विरोधाभावात् विजयफलकदिवसाभिव्यापकयुद्धे शत्रुकर्त्तृ-कत्वाभावस्य शत्रौ तथाविधयुद्धकर्त्तृत्वाभावस्य वा प्रतीतिसम्भवान्निषेधप्रतीत्युपपत्ति-रिति तात्पर्य्यम्।

## ( अथ कारकचतुर्थीविवरणम् )

[1]ङेभ्याम्भ्यस्चतुर्थी सा सम्प्रदानत्ववाचिका ।
सम्प्रदानन्तु दानस्य क्रियाया वा फलोपयुक् ॥१२३॥

ङेभ्याम्भ्यसिति चतुर्थी । तत्र ङकारोनुबन्धो न वाचककोटिप्रविष्टः । चतुर्थ्यर्थस्तु सम्प्रदानत्वम् । तत्र ददातेः स्वत्वध्वंसजनको व्यापारोर्थः । अतएव स्वत्वध्वंसवत्तया हिरण्यादेः कर्म्मत्वम् । [2]अतएवोत्सर्गेपि ददातिर्मुख्य एव, विक्रयादावपि ददातिप्रयोगो दृश्यते गोमिथुनमादाय कन्यां ददातीत्यादौ ।

यद्वोपेक्षायां ददातिव्यवहाराभावात्स्वत्वानुकूलस्त्यागो ददात्यर्थः । त्यागस्तु न मम किन्त्वस्येत्याकारो न ममेत्यनेनोपेक्षासाधारणेन

क्रमप्राप्तां चतुर्थीं निरूपयति—**ङेभ्याम्भ्यसि**त्यादिना । **न वाचके**ति तस्य क्वचिदपि प्रयोगेऽश्रूयमाणत्वादेकारमात्रस्य सुमनसे इत्यादौ श्रूयमाणत्वादेत्वमेव वाचकतावच्छेदकम् । रामायेत्यादावपि यकारेणैकारस्मरणादेव बोधः । सकारयोस्तु "हलन्त्यम्" इति सूत्रप्राप्तेत्संज्ञा "न विभक्तौ तुस्माः" इत्यनेन निषिध्यते । अतोनुबन्धत्वाभावाद्रामकृष्णाभ्यान्नमः देवेभ्यः समर्पयतीत्यादौ श्रूयमाणत्वाच्च वाचकताकुक्षिप्रवेश इति भावः । "चतुर्थी सम्प्रदाने" इति सूत्रे सम्प्रदानपदस्य कर्म्मादिपदवद्भावप्रधानत्वोपगमादाह-**सम्प्रदानत्वमि**ति । दाननिरूपणं विना चतुर्थ्यर्थनिरूपणासम्भवादादौ दाधातोरर्थमाह—**तत्र ददातेरि**ति । **अतएव** परस्वत्वजनकत्वस्य व्यापारे विशेषणत्वादेव । **उत्सर्गेपि** त्यागमात्रेपि । **विक्रयादावपी**ति । अत्राप्यतएवेत्यस्यानुषङ्गः ।

**उपेक्षायामि**ति । स्वत्वध्वंसानुकूलव्यापारमात्रस्य तथात्वे उपेक्षिते निष्प्रयोजनकेपि स्वस्वत्वध्वंससत्त्वाद्ददातिकर्म्मत्वप्रसङ्ग इति त्यागरूपो व्यापार

१ ङेभ्याम्भ्यस्चतुर्थी इति मु॰ पु॰ पा॰ ।
२ अतएव इति पा॰ मु॰ पु॰ ना॰ ।

**स्वत्वध्वंसं प्रति जनकः। स्वत्वध्वंसप्रकारतानिरूपितविशेष्यतासंसर्गेण तत्पुरुषीयत्यागस्य विशेषणतया तत्पुरुषीयस्वत्वध्वंसं प्रति जनकत्वात्, किन्त्वस्येत्यनेन परस्वत्वं प्रति त्यागस्य जनकता स्वत्वध्वंसो व्यापारः। अतएव चिरान्तरितेपि त्यागे सम्प्रदानानुमत्या तदीयं स्वत्वं जन्यते, न जन्यते च [1]चौरकर्तृकत्यागेन परस्वत्वम्, पूर्वस्वामिस्वत्वस्य स्वत्वान्तरप्रतिबन्धकत्वात्।**

एव तथेति भावः। निरूक्तापत्तिवारणाय त्यागस्वरूपमाह--**त्यागस्त्वि**ति। **इत्याकार** (इति।) इच्छेत्यर्थः। **न ममेत्यनेने**ति। न ममेत्यंशेनेत्यर्थः। **स्वत्वध्वंसे**ति। पुरुषान्तरीयत्यागमादाय व्यभिचारवारणाय त्यागे तत्पुरुषीयत्वं विशेषितम्। **विशेषणतये**ति। स्वरूपसंसर्गेणेत्यर्थः। त्यागो न केवलं स्वत्वध्वंसजनकः, किन्तु परस्वत्वजनकोपीत्याह—**किन्त्वि**ति। तदंशेनेत्यर्थः। **जनकते**ति। स्वरूपेण [2]तत्पुरुषीयस्वत्वं प्रति तत्पुरुषीयस्वत्वप्रकारतानिरूपितविशेष्यतासंसर्गेण त्यागः कारणमित्यर्थः। निरुक्तत्यागस्य मन्निरूपितस्वत्वध्वंसवदिदमेतत्पुरुषनिरूपितस्वत्ववदित्याकारकेच्छारूपतयोक्तकार्य्यकारणभावद्वयलाभः। परस्वत्वजनकत्वं त्यागस्य न साक्षात्, किन्तु स्वस्वत्वध्वंसद्वारैवेत्याह—**स्वत्वे**ति। **अतएव** स्वस्वत्वे ध्वंसस्य व्यापारत्वादेव। **जन्यत** इति। अन्यथा त्यागस्य तत्र तदानीमभावात्स्वत्वोत्पत्तिर्न्न स्यात्। स्वत्वध्वंसस्य व्यापारत्वे तु पूर्वकालीनत्यागजन्यस्वस्वत्वध्वंसस्येदानीमपि सत्त्वान्न तदनुपपत्तिः। परानुमतिमात्रस्य तत्स्वत्वजनकत्वे तु चौरादिकर्तृकत्यागादपि चैत्रादीनामनुमतिमात्रेण स्वत्वोत्पत्त्यापत्तिरिति पूर्वस्वत्वध्वंसस्तत्रावश्यं कारणतया अभ्युपगन्तव्य इत्याशयेनाह--**न जन्यत** इति। तत्र स्वत्वानुत्पत्तौ बीजमाह-**पूर्वस्वामी**ति।

---

१ चोर ० इति मु० पु० पा०।

२ स्वत्वञ्च यथेष्टविनियोगार्हत्वम्।

यत्तु त्यागस्योपेक्षासाधारणेन रूपेण स्वत्वनाशं प्रत्येव जनकत्वम्, न तु स्वत्वे;[1]

"सप्त वित्तागमा धर्म्या लाभो दायः क्रयो जयः ।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥"

इत्यत्र "याजनाध्ययनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्" इत्यत्र च प्रतिग्रहस्यैव स्वत्वोपायत्वाभिधानात् । प्रतिग्रहस्यापीदम्ममेत्याकारानुमतिस्वरूपस्य समित्कुशाद्युपादानसाधारणेन रूपेण स्वत्वजनकत्वम्; तत्पुरुषनिरूपितस्वत्वं प्रति तत्पुरुषसमवेतस्वीकारस्य विशेष्यतया कारणत्वात् । तथा च स्वत्वमात्रं चतुर्थ्यर्थः । तत्र प्रकृत्यर्थस्य [2]निरूपितत्वेनान्वयः । जनकतया स्वत्वस्य ददात्यर्थे फले स्वत्वध्वंसेन्वयाद् ब्राह्मणाय गान्ददातीत्यादौ ब्राह्मणनिरूपितस्वत्वजनकगोनिष्ठस्वत्वध्वंसजनकत्यागवानित्यन्वयबोधः । व्यधिकरणस्वत्वं प्रति गवि स्वत्वध्वंसस्याजनकतया स्वत्वे गोवृत्तित्वमर्थाल्लभ्यते । तेन पुत्रस्वाराज्यकामनया दीयमानायां गवि पुत्राय गान्ददातीति न प्रयोगः इति ।

**स्वत्वनाशं प्रत्येवे**ति । न तूक्तस्वजन्यस्वत्वध्वंसद्वारा स्वत्वेपीत्यर्थः । तत्र प्रमाणमाह—**सप्ते**ति । **प्रतिग्रहस्यैवे**त्येवकारेण त्यागमात्रस्य कारणत्वव्यवच्छेदो न तु तदन्येषाम् । तेन स्वत्वध्वंसस्य लाभादीनाञ्च तद्व्यवच्छेदविरहान्नोक्तस्मृतिवाक्यविरोधो न वाग्रिमग्रन्थेन स्वत्वनाशस्य तत्कारणत्वोक्तेर्विरोध इति बोध्यम् । **समित्कुशे**ति । तथा च समित्कुशादिषु कस्यचित्त्यागस्यासत्त्वेपि स्वीकारमात्रेण तत्र स्वत्वोत्पत्तिरिति भावः । ननूक्तबोधाद् ब्राह्मणनिरूपिते स्वत्वे गोवृत्तित्वालाभाद् वक्ष्यमाणस्थले पुत्राय गान्ददातीति प्रयोगः स्यादित्यत आह—**व्यधिकरणे**ति । ध्वंसस्य प्रतियोगिसमानदेशत्वात्त्यागीयविशेष्यताया

---

१ प्रमाणाभावात् इत्यधिकः मु० पु० पा० ।

२ निरूपकत्वेन इति मु० पु० पा० ।

तत्र स्वत्वध्वंसजनकव्यापारमात्रस्य ददात्यर्थत्वे उपेक्षायामपि ददातिप्रयोगापत्तिः। दानस्य स्वत्वं प्रत्यकारणत्वेन्यमुद्दिश्य त्यक्तेन्यस्योपादाने स्वत्वोत्पत्तिप्रसङ्गात्। उपादानमात्रस्य स्वत्वकारणत्वे समित्कुशादाविव प्राप्तनाष्टिकहिरण्यादावप्युपादानमात्रेण स्वत्वोत्पत्तिप्रसङ्गात्। उपादानेन स्वत्वे जननीये समित्कुशादीनां तादात्म्येन सहकारित्वाभ्युपगमे तु दानस्यापि विशेषसामग्रीघटकत्वमावश्यकम् तत्पुरुषीयस्वत्वप्रकारतानिरूपितविशेष्यतासंसर्गेण त्यागस्य तत्पुरुषस्वत्वं प्रति कारणत्वं स्वत्वध्वंसस्तु व्यापारः। ब्राह्मणाय गान्ददातीत्यादौ निरूपकत्वं स्वत्वं वा चतुर्थ्यर्थः। तथा च ब्राह्मणनिरूपि-

गव्येव सत्त्वाच्च तत्रैव स्वत्वध्वंसस्य सत्त्वम्, तस्य च स्वाराज्यादिनिष्ठं स्वत्वं व्यधिकरणमेवेति तत्कारणत्वस्य तादृशध्वंसेसम्भावितत्वाद् गोनिष्ठत्वे एव ब्राह्मणनिरूपितत्वमाक्षेपाल्लभ्यत इति भावः।

तत्र दर्शितमते। **प्रयोगापत्तिरि**ति। तत्रापि स्वत्वध्वंससत्त्वात्। **दानस्ये**ति। निरुक्तत्यागस्येत्यर्थः। **अन्यमुद्दिश्ये**ति। चैत्रायाहन्दद इति त्यागे मैत्रस्य स्वीकारे इत्यर्थः। **स्वत्वोत्पत्तिप्रसङ्गादि**ति। तत्कारणीभूतस्य निरुक्तस्वीकारस्य सत्त्वादिति भावः। दानस्य तत्कारणत्वे तु इदन्न ममेत्याकारकेच्छाया विशेष्यतया मैत्रे विरहान्न तदापत्तिरिति बोध्यम्। **प्राप्तनाष्टिके**ति। अन्यपुरुषीयहिरण्यस्य कथञ्चित्तत्पुरुषान्नाशे तदन्यपुरुषेण प्राप्तौ तस्य स्वीकारमात्रेण स्वत्वोत्पत्तिप्रसङ्गादित्यर्थः। **समित्कुशादीनामि**ति। तथा चोक्तस्थले सहकारिणोभावान्नापत्तिरिति भावः। **विशेषसामग्री**ति। उपादानेन स्वत्वे जननीये दानमपि सहकारीत्यर्थः। तथा सति दर्शितकार्य्यकारणभाव एव फलित इति तमाह—**तत्पुरुषीये**ति। एवं सति "सप्तवित्त..." इत्यादिस्मृतिवाक्ये प्रतिग्रहस्य दानोपलक्षकत्वं बोध्यम्। **निरूपकत्वमि**ति। अस्य प्रकृत्यर्थेनाधेयतयान्वितस्य स्वनिरूपितनिरूप्यतासंसर्गेण स्वत्वेन्वयाद् ब्राह्मणनिरूपितत्वं

तस्य ब्राह्मणसमवेतस्वामित्वनिरूपितस्य वा स्वत्वस्य स्वत्वध्वंसव्यापारेण जनकस्त्यागो वाक्यार्थः ।

भवतु वा स्वत्वस्योद्देश्यत्वाख्यविषयतासंसर्गेण त्यागान्वयात्स्वत्वोद्देश्यकस्त्याग एव ददात्यर्थः । अतएव स्वत्वानुपहितेप्युत्सर्गे ब्राह्मणस्य सम्प्रदानत्वं ददातेश्च मुख्यत्वमुपपद्यते ।

यत्तु उत्सर्गेणापि समनन्तरमेव सम्प्रदानस्वत्वं जन्यते । अतएव तदुद्देश्येन त्यक्ते धने तस्मिन्नप्रतिगृह्यैव निधनमुपगते तत्पुत्राणां स्वत्वोत्पत्तिरुपपद्यते, तद्व्यक्तिमरणजन्यस्वत्वध्वंसस्य स्वत्वध्वंसव्यापारेण तद्व्यक्तिमरणस्य वा तत्पुत्रस्वत्वं प्रति जनकत्वात् । अपुत्रव्य-

स्वत्वे फलितं बोध्यम् । अत्र स्वत्वे गोवृत्तित्वस्य शब्दतोलाभादाह—**स्वत्वं वे**ति । स्वत्वे ब्राह्मणस्य स्वनिष्ठस्वामित्वनिरूपकत्वेनान्वयादाह— **ब्राह्मणसमवेते**ति । इदञ्च सप्रतियोगिकस्यापि स्वामित्वस्य तारत्वादिवज्जातित्वोपगमेन । अन्यथा तु ब्राह्मणनिष्ठेत्येव बोध्यम् ।

**अतएव** स्वत्वध्वंसजनकत्यागस्य ददात्यर्थत्वमुपेक्ष्य स्वत्वोद्देश्यकत्यागस्य तथात्वादेव । **ब्राह्मणस्ये**ति । तथा चासन्निहितेपि ब्राह्मणायाहन्ददइति वाक्यार्थान्वयो नानुपपन्न इति भावः ।

स्वत्वध्वंसजनकत्यागस्य ददात्यर्थत्वेपि दर्शितानुपपत्तिं वारयतो मतमाह— **यत्त्वि**ति । **स्वत्वं जन्यत** इति । तथा च तादृशत्यागस्यापि स्वत्वजनकत्वमक्षतमेवेति न ब्राह्मणस्य सम्प्रदानत्वानुपपत्तिरिति भावः । **समनन्तरमेव** अव्यवहितोत्तरमेव । एवं सति दानेन स्वत्वजनने वैमत्यस्य प्रतिबन्धकत्वम्, अन्यथा तदुद्देश्येन त्यक्तस्य धनस्य वैमत्येन तेनास्वीकारेपि तत्स्वत्वोत्पत्तिप्रसङ्ग इति बोध्यम् । **अतएव** स्वीकारात्पूर्वमुत्सर्गानन्तरं स्वत्वोत्पत्तेरेव । **तस्मिन्** त्यागोद्देश्ये ब्राह्मणादौ । **तत्पुत्राणां** त्यागोद्देश्यमृतब्राह्मणपुत्राणाम् । पितृस्वत्वध्वंसस्य पुत्रस्वत्वे कारणत्वं साक्षाद् व्यापारविधया वेत्यत्र हेतुरनुभवसंस्कारयोरिवात्रापि

क्तिमरणजनितस्वत्वध्वंसस्य तत्पत्नीस्वत्वं प्रत्येव जनकत्वम्, "अपुत्रस्य धनं पत्न्यभिगामि" इति स्मरणात्। ऋतुमपेक्ष्य निधनमुपगते पितरि जातमपि स्त्रीस्वत्वं पुत्रोत्पत्त्या नाश्यते, पितृमरणजनिततत्स्वत्वनाशेन च मातृस्वत्वनाशानन्तरं पुत्रस्वत्वं जन्यते। [1]पुत्रोत्पत्तिपूर्वं मात्रा विक्रीते न पुत्रस्वत्वोत्पत्तिः, क्रेतृपुरुषस्वत्वस्य प्रतिबन्धकस्य नाशकाभावादित्यवश्यमुत्सर्गे व्यवहितस्यापि पुंसः स्वत्वं जन्यत इति।

[2]तन्न, एवमपि मृतं प्रोषितमुद्दिश्य त्यक्ते तत्पुत्रस्य स्वत्वानुत्पादप्रसङ्गात्, उत्सर्गे व्यवस्थान्तरस्यावश्यमाश्रयणीयत्वात्। ब्राह्मणमात्रमुद्दिश्य त्यक्ते तुलापुरुषादौ ब्राह्मणसामान्यस्वत्वोत्पादप्रसङ्गात्। परस्वे दातुर्विभज्य वितरणेप्यनधिकारप्रसङ्गात्।

बोध्यः। एवञ्च त्यागमात्रस्य स्वत्वाजनकत्वे ब्राह्मणनिरूपितस्वत्वस्य तद्धनेभावात्तद्ध्वंसस्य तन्मरणजन्यस्य तत्रात्यन्तमसम्भवात्तत्पुत्राणां त्यागोद्देश्यत्वविरहात्स्वीकारेपि स्वत्वोत्पत्तेरसम्भव एव स्यादिति भावः। **स्मरणादि**ति। विष्णुस्मृतेरित्यर्थः। **ऋतुमपेक्ष्ये**ति। ऋतुकालाभिगमनेन गर्भाधानं कृत्वेत्यर्थः।

एतन्मतन्निरसयति-**एवमपी**ति। त्यागाव्यवहितोत्तरमेव सम्प्रदाने स्वत्वोत्पत्तिस्वीकारेपीत्यर्थः। **मृतमि**ति। विदेशे मृतस्य ब्राह्मणादेर्म्मरणाज्ञानेन तदुद्देश्येन धनत्यागसम्भवात्तत्र तत्स्वत्वोत्पत्तेरसम्भवात्तद्ध्वंसादिना तत्पुत्रस्वत्वोत्पादासम्भवादित्यर्थः। **व्यवस्थान्तरस्ये**ति। उत्सर्गेण स्वत्वे जननीये प्रतिपादन सहकारीतिनियमस्येत्यर्थः। तेन यथानामगोत्राय ब्राह्मणायाहन्दद इति त्यागानन्तरं दात्रा प्रतिपाद्यत इत्युक्ते पुरोहितादेस्स्वत्वोत्पत्तिरिति। तत्र प्रतिपादनस्य सहकारित्वानुपगमे दोषमाह—**ब्राह्मणमात्रमि**ति। नन्वस्तु तुलापुरुषादौ ब्राह्मणसामान्यस्यैव स्वत्वम्, किं तेनेत्यत आह—**परस्व** इति। सिद्धान्ते तु प्रतिपादनात्पूर्वं तत्र परस्वत्वविरहादविभज्य वितरणं दातुरुपपन्नमिति भावः।

---

१ पुत्रोत्पत्तिपूर्वं इत्यस्य स्थाने तादृशस्थले च इति पा० मु० पु०।
२ तत्र इति मु० पु० पा०।

इत्थञ्च सम्प्रदानमित्यन्वर्थसंज्ञाबलाद् दानफलस्वत्वनिरूपकत्वमेव चतुर्थ्या मुख्यार्थ इति दार्शनिकाः ।

शाब्दिकास्तु ददातेः स्वत्वध्वंसः स्वत्वञ्च फलविधयार्थः । त्यागक्रियाफलद्वयमप्येकेनैव साकाङ्क्षम् । द्वितीयोपात्तमधिकरणं स्वत्वे ध्वंसे च यौगपद्येनान्वेति । गां ददातीत्यत्र गोवृत्तेः स्वत्वस्य स्वत्वध्वंसस्य चानुकूलस्त्यागो वाक्यार्थः । तेन ग्रामलाभकामनया [1]दीयमानायां गवि गां ग्रामं ददातीति न प्रयोगः । चतुर्थी तु धात्वर्थफलान्वयिप्रीत्यादिफलान्तरमभिधत्ते । तेन गां ददाति ब्राह्मणायेत्यत्र ब्राह्मणप्रीतिजनकगोवृत्तिस्वत्वस्य गोवृत्तिस्वत्वध्वंसस्य चानुकूलस्त्यागो वाक्यार्थः। प्रीतिमजनयत्यपि स्वत्वे यदि ददातिप्रयोगस्तदा तत्रेष्यमाणप्रीतिजनक-

**इत्थञ्च** निरुक्तरीत्या स्वत्वे दाधात्वर्थविशेषणतया फलत्वज्ञापने च । **अन्वर्थसंज्ञे**ति । सम्प्रदीयतेऽस्मै (इति) सम्प्रदानमित्यर्थमनुगता या "कर्म्मणा यमभिप्रैति स सम्प्रदानम्" इति सूत्रविहिता संज्ञा, तद्बलादित्यर्थः । दाधात्वर्थनिरूपितकर्म्मत्ववता गवादिना सम्बन्धवत्त्वप्रकारकेच्छानिरूपितविशेष्यताश्रयस्य सम्प्रदानसंज्ञेति तत्सूत्रार्थः । तत्र सम्बन्धस्स्वत्वमेव, तद्वत्त्व ब्राह्मणस्य निरूपकतयैवेति तस्य सम्प्रदानत्वं निर्बाधमिति भावः ।

**फलद्वयमपी**ति । स्वत्वं स्वत्वध्वंसश्चेत्यर्थः । **एकेनैव** गवादिना । एवकारेण तयोर्ब्राह्मणसाकाङ्क्षत्वव्यवच्छेदः । **तेन** स्वत्वतद्ध्वंसयोरेकसाकाङ्क्षत्वोपगमेन । **न प्रयोग** इति । तादृशव्यापारे गोवृत्तिस्वत्वध्वंसजनकत्वस्य ग्रामवृत्तिस्वत्वजनकत्वस्य च सत्त्वेनैकत्र तयोरन्वयाभावादित्याशयः । चतुर्थ्यास्तत्र कोऽर्थ इत्याकाङ्क्षायामाह—**चतुर्थी त्वि**ति । **तेन** चतुर्थ्याः प्रीत्यर्थकत्वेन । यत्र राजाज्ञादिना निषिद्धदानप्रतिग्रहस्तत्र सम्प्रदानस्य न तद्धनलाभेन प्रीतिरित्यत आह—**प्रीतिमजनयत्यपी**ति । **इष्यमाणमि**ति । इच्छाविषयतावत्प्रीतिजनकत्वं

१ दीयमानायाम् इत्यस्य स्थाने नीयमानायाम् इति मु० पु० पा० ।

त्वमेव चतुर्थ्यर्थः। इच्छायां [1]चतुर्थीप्रकृत्यर्थस्य विषयतयान्वयः। ब्राह्मणविषयतानिरूपितप्रीतिविषयतानिरूपितजनकत्वविषयतानिरूपितविषयताभिप्रायः स्वत्वेन्वेति।

अतएव "कर्म्मणा यमभिप्रैति स सम्प्रदानम्" इति सूत्रे फलगोचरमभिप्रायविशेषणमेव[2] चतुर्थ्यर्थतया पाणिनिरुदाजहार। तत्र सम्प्रदानपदं नान्वर्थसंज्ञकम्, येन दानजन्यफलभागेव सम्प्रदानसंज्ञस्स्यात्; किन्तु क्रियान्तरजन्यफलवदपि सम्प्रदानमिति संज्ञायते "क्रियाग्रहणं कर्त्तव्यम्" इति वार्त्तिकात्। चतुर्थ्युपात्तश्च फलं क्वचिदनुकूलतया धात्वर्थफलेन्वेति। यथा—ब्राह्मणाय ददातीत्यत्र दानफलस्वत्वे प्रीतिः, वृक्षायोदकं सिञ्चतीत्यत्र क्रियाफले जलसंयोगे वृक्षपुष्टिः, "यदग्नये च प्रजापतये च जुहोति" इत्यत्र च वह्निसंयोगफलप्रक्षेपात्मकहोमफले वह्निसंयोगेग्निप्रजापतिसाम्यं[3] तत्प्रीतिर्वा, विप्रायान्नं निर्वपतीत्यत्र

प्रीतीच्छा वा चतुर्थ्यर्थ इत्यर्थः। **स्वत्वेन्वेती**ति। ब्राह्मणसमवेतप्रीतिजनकस्वत्वजनकं दानं भवत्वितीच्छाया विशिष्टविषयतायास्तादृशप्रीतिविरहस्थलेसम्भवेपि निरूप्यनिरूपकभावापन्नविषयताशालिनीं विसंवादिनीच्छामादायैवोक्तसम्बन्धप्रसिद्धिरित्याशयः।

कारिकोक्तं **क्रियया वे**त्यर्थमाह—**तत्रे**ति। **फलं** प्रीत्यादिकम्। **वृक्षपुष्टि**रिति। पुष्टिरुपचयो बृहदवयवनिष्ठारम्भकसंयोगसामानाधिकरण्यम्। धात्वर्थश्च द्रवद्रव्यप्रतियोगिकसंयोगानुकूलव्यापारः। तथा च जलवृत्तिद्रवद्रव्यप्रतियोगिकसंयोगानुकूलो वृक्षसम्बन्धिपुष्ट्युद्देश्यको व्यापारो वाक्यार्थः। **प्रजापतिसाम्यमि**ति। तादृशसंयोगानुकूलत्यागे समानकालिकत्वमित्यर्थः। तच्च "सायमग्निहोत्रम्" इत्यस्य तद्वाक्यघटकत्वात् सायंपदेनैव लब्धमत आह—**तत्प्रीतिर्वे**ति।

---

१ चतुर्थ्यन्तप्रकृत्यर्थस्य इति मु० पु० पा०।

२ ० विषयमेव इति मु० पु० पा०।

३ स्वाम्यम् इति मु० पु० पा०।

निर्वापफले [1]विक्लित्तौ विप्रभोजनम्, "खण्डिकोपाध्यायश्शिष्याय चपेटां ददातीत्यत्राभिघातफलकक्रियाफलेऽभिघाते शिष्यव्यथा, अजां ग्रामाय नयतीत्यत्र कर्म्मानुकूलव्यापारात्मकनयनफले कर्म्मणि ग्रामसंयोगः।

यत्र च नयतिना संयोगोऽप्युपात्तस्तत्र परया कर्म्मसंज्ञया सम्प्रदानताबाधादजां ग्रामं नयतीत्येव प्रमाणम्। एवं गमनजन्यफलस्य चैत्रेऽपि सम्भवेन चैत्रश्चैत्राय गच्छतीति प्रयोगापादनमपि परास्तम्, परया कर्त्तृसंज्ञया सम्प्रदानसंज्ञाबाधात्।

क्वचिच्चतुर्थ्यर्थः प्रधानक्रियायामन्वेति। यथा—"आत्मने वै पुत्रः प्रियो भवति" इत्यत्र पुत्रप्रियभावे आत्मनः प्रीतिः, पत्ये शेते प्रौढा वधूरित्यत्र प्रौढवधूकर्त्तृकशयने पतिः, ग्रामाय गच्छतीत्यत्र शुद्धस्पन्दार्थकगमिधात्वर्थे ग्रामसंयोगः। अतएव गत्यर्थकर्म्मणि

अग्निप्रजापतिसमवेतप्रीतिरित्यर्थः। **निर्वापफले** अधिश्रितपात्रप्रक्षेपानुकूलव्यापारात्मफले इत्यर्थः। विप्रभोजनमिति। उद्देश्यतयेत्यादिः। **चपेटामि**ति। आहन्यमानः करश्चपेटा, तामित्यर्थः। ददातेस्तत्र लक्षणयाभिघातानुकूलो व्यापारोऽर्थः। **शिष्यव्यथा** (इति।) शिष्यसमवेतो दुःखविशेषस्तस्य जनकतयाभिघातेऽन्वय इत्यर्थः। **कर्म्मानुकूले**ति। धात्वर्थस्य संयोगाघटितस्य विवक्षायामित्यादिः। **परये**ति। द्वितीयोक्तरीत्या ग्रामस्य सम्प्रदानसंज्ञाप्राप्तिर्बोध्या। तथा च क्रियाजन्यसंयोगस्वरूपफलस्य तत्र ग्रामे सत्त्वेऽपि न सम्प्रदानसंज्ञेति भावः। एवं कर्त्तुरपि तादृशसंयोगवत्त्वे कर्त्तृसंज्ञया सम्प्रदानसंज्ञाया बाध इत्याह— **एवं गमने**ति।

**शुद्धस्पन्दार्थके**ति। संयोगाविशेषितव्यापारार्थकेत्यर्थः। **प्रत्याख्येयः** तत्कार्य्यस्य ग्रामाय ग्रामं वा गच्छतीत्यादिप्रयोगस्य निरुक्तरीत्या व्यापारमा-

---

१ विक्लृत्तौ इति मु० पु० पा०।

**विभाषाचतुर्थीविधिः प्रत्याख्येयः, गमिफलस्य धातुनोपादाने चतुर्थीति न्यायसिद्धतया ग्रामाय चलति वृक्षाय स्पन्दते इत्यादाविव ग्रामाय गच्छतीति प्रयोगस्याप्युपपन्नत्वात्। पाकमात्रस्य धातुनोपादाने ओदनाय तण्डुलाय वा पचतीत्यादिप्रयोगोपीष्ट एवेत्याहुः।१२३।**

त्रस्य संयोगावच्छिन्नव्यापारस्य च धात्वर्थताविवक्षायां ग्रामस्य सम्प्रदानकर्म्मसंज्ञयोस्सम्भवादेवोपपत्तेस्तत्सूत्रं निरर्थकमित्यर्थः।

आहुरित्यस्वरसः। स च प्रीतीच्छायाश्चतुर्थ्यर्थत्वे तस्या [1]निरुक्तपरम्परयान्वये गौरवम्, पत्नीप्रीतिजनके श्वसुराय दाने पत्न्यै ददातीति प्रयोगापत्तेश्च। एवं "यदग्नये..." इत्यादावपि प्रीतेस्तथात्वे वह्निप्रीतिजनककृत्तिकादेवताकहोममादाय वह्नये जुहोतीत्यस्यापत्तेः विष्णुप्रीत्यर्थं क्रियमाणे दाने (होमे च) विष्णवे ददाति जुहोति वेत्यस्यापत्तेः। मन्मते तु यद्देवताको होमस्तत्प्रीतिरेव जुहोत्यर्थव्यापारस्योद्देश्येति विष्णुप्रीतेर्होमदेवताप्रीतिफलत्वान्न तथा प्रयोगः। तन्मते विष्णुप्रीतीच्छाया दर्शितविषयतासम्बन्धेन ददातिफले गोनिष्ठविप्रस्वत्वे हविर्निष्ठवह्निसंयोगे च सत्त्वादुक्तप्रयोगस्य दुर्वारता। न च सम्बन्धघटकविषयतावज्जनकत्वं साक्षादेव विवक्षितमिति नोक्तदोष इति वाच्यम्, तथा सति गोनिष्ठविप्रस्वत्वमपि तदीयप्रीतेर्न्न साक्षाज्जनकमिति विप्राय गान्ददातीत्यस्यानापत्तेः, गोनिष्ठस्वत्वस्य दुग्धदानादिद्वारैव विप्रसुखजनकत्वात्। एवं वृक्षायोदकमासिञ्चतीत्यत्रापि पुष्टीच्छा न चतुर्थ्यर्थो गौरवात्, वृक्षपुष्टीच्छया क्रियमाणे कूपखननादौ वृक्षाय कूपं खनतीत्यस्यापत्तेश्च। आत्मने इत्यत्रापि नात्मप्रीतीच्छा चतुर्थ्यर्थः, पुत्रप्रियभावस्यात्मप्रीतीच्छाप्रयोज्यत्वाभावात्। नाप्यात्मप्रीतिः, भवत्यर्थानन्वयात्। तस्मात्तत्र क्रियाशून्यवाक्ये तादर्थ्यचतुर्थ्या उपकारकत्वमर्थः प्रियपुत्रेन्वेति। तथा दर्शितवाक्ये एवं पत्ये शेत इत्यत्रापि प्रीतीच्छा न चतुर्थ्यर्थः, गौरवात्,

---

१ प्रीतिविषयतानिरूपितजनकत्वविषयतानिरूपितविषयतया ददातिफले स्वत्वेन्वयेतिगौरवमिति तात्पर्य्यम्।

**रुच्यर्थधातुसाकाङ्क्षा चतुर्थी प्राह धर्म्मताम् ।**
**स्पृहिणा यतिना सव्यपेक्षा तु विषयत्ववाक् ॥१२४॥**

पतिप्रीतीच्छया क्रियमाणे शयनानुकूलपल्यङ्कस्थापने पत्ये पल्यङ्कं स्थापयतीति प्रयोगापत्तेः । तस्माद्यथा वृक्षपुष्टिः सेचनव्यापारे, तथा पतिप्रीतिरपि शयनव्यापारे उद्देश्यित्वेनान्वेत्यतः पुष्टिप्रीत्योरजनकयोः सेचनशयनयोर्न्न दर्शितप्रयोगानुपपत्तिः । एवमजां ग्रामं नयतीत्यत्र ग्रामसंयोगेच्छायाश्च-तुर्थ्यर्थत्वे ग्रामसंयोगेच्छयाजाग्रहणेजां ग्रामाय गृह्णातीति प्रयोगापत्तिः । ग्रामाय गच्छतीत्यादौ गमेः शुद्धव्यापारार्थकत्वे चतुर्थ्यर्थत्वेनैव संयोगे विवक्षितेनेनैव चतुर्थ्युपपत्तौ "गत्यर्थकर्म्मणि..." इत्यादिसूत्रन्निरर्थकमित्यपि न युक्तम्, धात्वर्थफलस्य चतुर्थ्या प्रतिपादने धारणजन्यसंयोगस्य धातुना-विवक्षायां दण्डाय दधातीति प्रयोगापत्तिः । ग्रामाय चलति स्पन्दते इत्यत्र च [1]धातोस्संयोगार्थकत्वविरहाच्चतुर्थ्या तद्बोधसम्भवः । तण्डुलायौदनाय वा पचतीत्यादिकन्तु न प्रमाणम्, प्रमाणञ्चेत्तण्डुलोपकारकत्वस्यौदनजनकत्वस्य च चतुर्थ्या प्रतिपादनात्तादर्थ्ये सा चतुर्थी । यदि दण्डाय दधातीत्यादिकमपि प्रमाणमेवेति मन्येत, तदापि गत्यर्थकर्म्मणि चतुर्थीविधेः प्रत्याख्यानन्न युक्तम्, यतस्तेन द्वितीयया सह वैकल्पिकी चतुर्थी विधीयते, ग्रामादिप्रकृत्यर्थविशेषित-माधेयत्वं संयोगस्वरूपफलान्वयि तदर्थः । सम्प्रदानचतुर्थी तु फलमेवाभिधत्ते, न तु फलान्वय्याधेयत्वमिति दिक् । १२३ ।

**रुच्यर्थे**ति । "रुच्यर्थानां प्रीयमाणः" इति सूत्रविहितेत्यर्थः । रुचिर्विषय-जन्योभिलाषः उत्कटेच्छारूपः । औत्कट्यं द्वेषप्रतिवन्धकतावच्छेदको जातिविशेषो विषयताविशेषो वा । **धर्म्मतां** समवायावच्छिन्नवृत्तित्वम् ।

---

१ चलतिस्पन्दत्योः स्पन्दमात्रार्थकतया सयोगरूपफलावाचकत्वात् चतुर्थ्या संयोग-रूपफलप्रतिपादने ग्रामस्य धात्वर्थान्यफलसम्बन्धितयाभिप्रेतया भवति सम्प्रदानत्वमिति तात्पर्य्यम् ।

चैत्राय मोदते रोचते स्वदते मोदक इत्यत्र रुच्यादेरभिलाषोर्थः। तत्समभिव्याहृतमाख्यातन्तु विषयत्वं चतुर्थी समवेतत्वमभिधत्ते। तेन चैत्रसमवेताभिलाषविषयो मोदक इत्यन्वयबोधः।

स्पृहयतिसमभिव्याहृतमाख्यातन्तु समवायित्वमभिधत्ते[1]। तेन पुष्पेभ्यः स्पृहयति पटाय यतते इत्यत्र पुष्पविषयाभिलाषवान् पटविषयकयत्नवानित्यन्वयबोधः। पटमुद्दिश्य तन्तं साधयत्यपि प्रयत्ने तदुद्देश्यत्वेन विषयत्वमिति पटाय यतत इति निराबाधः।

"स्त्रीषु प्रवीरजननी जननी तवैव।
देवी स्वयं भगवती गिरिजापि यस्यै॥
त्वद्दोर्वशीकृतविशाखमुखावलोक—
व्रीडाविदीर्णहृदया स्पृहयाम्बभूव॥"

इत्यत्र रेणुकासदृशी भवेयमित्यभिलाष एव स्पृहा, तस्याश्च रेणुकाविषयत्वाबाधः।

यदि च विषयतामात्रस्य चतुर्थ्यर्थत्वे पुष्पत्वाय स्पृहयतीति प्रयोगापत्त्या स्वनिष्ठविषयतानिरूपितमुद्देश्यत्वमेव स्पृहिसमभिव्याहृतचतुर्थ्यर्थः। भवति च पुष्पम्मे स्यात् पुष्पवानहं स्यामित्यभिलाषविषयत्वमुद्देश्यत्वस्वरूपम्[2], इष्टसाधनं पुष्पं पुष्पम्ममेति ज्ञानद्वयेन इष्टसाधनं पुष्पम्ममेति विशिष्टज्ञानेन वा तादृशेच्छाजननात्, इति रेणुकासदृशी भवेयमित्यभिलाषो न रेणुकां किन्तु तत्सादृश्यमुद्दिशतीति रेणुकायै भगवती स्पृहयतीति प्रयोगोनुपपन्न इति विभाव्यते।

तदा स्वीक्रियतां तादात्म्येनोद्देश्यप्रकारकोभिलाषः, ब्राह्मणोहं स्यामितीच्छाकारोल्लेखदर्शनात्। तत्र च ब्राह्मण इष्टसाधनं ब्राह्मणोह-

---

१ चतुर्थी तु विषयताम् इत्यधिकः पा० मु० पु०।

२ इष्टसाधनम् इत्यधिकः पा० मु० पु०।

मित्यादिज्ञानद्वयमेकं वा कारणमित्यन्यदेतत् । तथा रेणुकाहं भवेयमित्यभिलाष एव स्पृहा, तत्र च रेणुकाया निरुक्तमुद्देश्यत्वं निराबाधमिति दिक् ।

**नन्वेवं "स्पृहणीयगुणैर्म्महात्मभिः" इत्यत्र कर्म्मणि कृत्यप्रत्ययो**

वस्तुतस्तु प्रीयमाणग्रहणेन प्रीतिमतः सम्प्रदानत्वोक्त्या सुखात्मिका प्रीतिरेव चतुर्थ्यर्थः । तस्य [1]सामानाधिकरण्योद्देश्यित्वाभ्यां धात्वर्थे रुचावन्वयः । तेन देवदत्ताय रोचते मोदकः पथीत्यत्र पथो न [2]सम्प्रदानत्वम् । समवेतत्व-मात्रस्य रुचिमानित्युपादानेपि लाभसम्भवादिति बोध्यम् ।

**इति दिगि**ति । दिक्पदेन पुष्पेभ्य इत्यादौ पुष्पाणां सिद्धतया सिद्धे विषये इच्छाया असम्भवादुद्देश्यत्वन्न चतुर्थ्यर्थः, किन्तु सूत्रे[3] ईप्सितपदोपादाना-दीप्साविषयः प्रतीयते, ईप्सा चाप्तीच्छा, आप्तिस्सम्बन्धः । तथा च स एव चतुर्थ्यर्थः । स च पुष्पेभ्य इत्यत्र स्वत्वं संयोगो वा । रेणुकायै इत्यत्र तादा-त्म्यम् । ते चोद्देश्यित्वेनेच्छायामन्विते, इति पुष्पनिष्ठस्वत्वादिविषयस्पृहाश्रयः रेणुकातादात्म्यविषयकस्पृहाश्रय इत्यन्वयबोध इति सूचितम् ।

**स्पृहणीये**ति । चरिते वर्त्मनि यच्छताम्मनः ।
विधिहेतुरहेतुरागसां विनिपातोपि समः समुन्नतेः ॥

---

१ सम्बन्धघटकसामानाधिकरण्यानिवेशे देवदत्तस्यान्यदीयसुखेच्छाविषयमोदके देवदत्ताय रोचते मोदक इति प्रयोगापत्तिः । तदुपादाने च सुखेच्छयोर्वैयधिकरण्यान्न दोषः । एवञ्च यत्र देवदत्तसुखस्य सामानाधिकरण्यमिच्छायान्तत्र देवदत्तसुखस्य समानाधिकरणो-द्देश्यिनी योत्कटेच्छा, तद्विषयो मोदक इति देवदत्ताय रोचते मोदक इति वाक्यजन्यो बोधः ।

२ प्रीयमाणत्व देवदत्तस्यैव न तु पथ इति न तस्य सम्प्रदानत्वम् । प्रीयमाण-पदाभावे तु पथोपि स्यादिति भावः ।

३ "स्पृहेरीप्सितः" इति सूत्र इति भावः ।

**दुरुपपादः, निरवकाशया सम्प्रदानसंज्ञया कर्म्मसंज्ञाया धात्वन्तरलब्धावकाशाया बाधादिति चेत् ?**

**उच्यते—[1]दानीयो ब्राह्मण इति प्रयोगात् सम्प्रदानत्वप्रवृत्तिनिमित्तकोनीयर्प्रत्यय इत्यवगम्यते । तेन स्पृहणीयो गुण इत्यत्र सम्प्रदान एव कृत्यप्रत्ययो न कर्म्मणि ।**

**एतेन**

**"परस्परेण स्पृहणीयशोभनम् ।**
**न चेदिदं द्वन्द्वमयोजयिष्यत् ॥"**

**इत्यपि व्याख्यातम् ।**

इति शेषम् । **निरवकाशये**ति । पुष्पेभ्य इत्यादावपि पुष्पाणां "कर्त्तुरीप्सिततमं कर्म्म" इत्यनेन कर्म्मसंज्ञायाः प्राप्तेः "स्पृहेरीप्सितः" इत्यस्य निरवकाशत्वं बोध्यम् । **धात्वन्तरे**ति । हरिं भजतीत्यादौ भजत्यादिधातुसमभिव्याहारे "स्पृहेरीप्सितः" इत्यस्याप्राप्तेस्तत्र सावकाशाया इत्यर्थः । तथा च कर्म्मणि विहितस्यानीयरस्तत्राप्रसक्तिरिति भावः ।

[2]**एतेन** स्पृहयतियोगे कर्म्मसंज्ञायाः शेषषष्ठ्याश्च बाधकत्वस्य सम्प्रदानसंज्ञायां सत्त्वेन । **परस्परेणे**ति । "दानीयो विप्रः" इति वाक्यपदीयग्रन्थानुरोधेन बाहुलकात्सम्प्रदानेनीयर्प्रत्ययस्य साधुत्वोपगमात् "स्पृहणीयशोभम्..." इत्यादावपि सम्प्रदाने एवानीयर्, न तु कर्म्मणीति भावः ।

"स्पृहेरीप्सितः" इत्यस्य "कर्त्तुरीप्सिततमं कर्म्म" इत्यनेन सह विषयभेदादपोद्यापवादकभावविरहात्कर्म्मण्येवानीयर्प्रत्ययस्तत्रेति हरदत्तोक्तिमाह—

---

१ दानीयो ब्राह्मण इत्यारभ्य इत्यवगम्यते इत्यन्तस्य स्थाने दानीयो ब्राह्मण इति प्रयोगात् सम्प्रदानतानीयरोपि प्रवृत्तेर्निमित्तमिति गम्यते सम्प्रदानत्वप्रवृत्तिनिमित्तकोनीयर्प्रत्यय इति दानीयो ब्राह्मण इति प्रयोगदर्शनादवगम्यते इति मु० पु० पा० ।

२ अव्याख्यातमूलग्रन्थः व्याख्यानेन पूरितः ।

हरदत्तस्तु "स्पृहेरीप्सितः" इति सूत्रं स्पृहाकर्म्मणि न सम्प्रदान-संज्ञां विधत्ते, तथा सति तुल्यविषयतया निरवकाशया विशेषसंज्ञया धात्वन्तरसावकाशायाः कर्म्मसंज्ञायाः बाधः स्यात्, किन्तु यत्र स्पृहिरिच्छामात्रवाचितया फलावाचकत्वादकर्म्मकस्तत्र विषयता-त्वेनोद्देश्यत्वभावेन वा विषयताभिधायिचतुर्थीसम्पत्तये संज्ञा विधीयते । यत्र विषयतास्वरूपफलावच्छिन्नाभिलाषवाचिस्पृहिः, यत्र वा विषयतैव सम्बन्धत्वेनाभिधानीया, तत्र कर्म्मणि द्वितीया शेषषष्ठी च प्रमाणम् ।

अतएव—

"स्पृहयन्ति गुणान् मनीषिणः ।
परिवादन्तु परस्य दुर्जनः ॥" इति,
"कुमार्य्य इव कान्तस्य ।
त्रस्यन्ति स्पृहयन्ति च ॥"

इति च[1] प्रयोग उपपद्यत इत्याह । १२४ ।

**हरदत्तस्त्विति** । वस्तुतस्तु यत्र स्पृहेरुत्कटेच्छार्थस्तत्रैवाप्तिरूपे सम्बन्धे चतुर्थी विधीयते । यत्र चेच्छासामान्यमेव स्पृहेरर्थस्तत्र चतुर्थ्या अप्रसक्तेर्न्न कर्म्म-प्रत्ययानुपपत्तिः । न चैवं सति "रुच्यर्थानाम्..." इत्यादिनैव [2]चतुर्थीसिद्धेरुक्त-सूत्रवैयर्थ्यमिति वाच्यम्, प्रीयमाणे स्पृहेर्य्योगे चतुर्थीनिषेधसूचनाय [3]तत्सूत्रप्रणयनात् । तेन चैत्राय पुष्पेभ्यः स्पृहयतीति न प्रमाणम् । ईप्सित-ग्रहणन्तु प्रीयमाणेऽधिकरणे च सम्प्रदानतानिषेधार्थम् । पुष्पेभ्यो वने स्पृहय-तीत्यत्र न सम्प्रदानतेति । १२४ ।

---

१ च इति पा० ना० मु० पु० ।

२ उत्कटेच्छार्थकतया रुच्यर्थकत्वाद्धेतोरिति यावत् ।

३ ईप्सिते स्पृहेर्योगे चतुर्थीविधानाय चेत्यपि बोध्यम् ।

**श्लाघह्नुङ्स्थाशपां कर्म्म राधेर्विप्रश्नगोचरः ।**
**उत्तमर्णो धारयतेर्भजते सम्प्रदानताम् ॥१२५॥**

उत्कर्षप्रकारकप्रतिपत्तेरनुकूलव्यापारः शब्दो वा श्लाघेः, अदर्शनस्यानुकूलो व्यापारो ह्नुतेः, प्रकाशनस्यानुकूलो व्यापारस्सम्मुखावस्थानादिस्तिष्ठतेः, अपकर्षप्रकारकप्रतिपत्तेरनुकूलो व्यापारश्शपेरर्थः । नरपतये श्लाघत इत्यत्रोत्कर्षप्रकारकप्रतिपत्ति-

"श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" "राधीक्ष्योर्यस्य विप्रश्नः" "धारेरुत्तमर्णः" इतिसूत्रत्रयानुशिष्टचतुर्थ्यर्थं निरूपयति—**श्लाघह्नुङिति** । **कर्म्मत्वमपवदन्ती**ति । कर्म्मत्वापवादिकेत्यर्थः । तथा च **नरपतये श्लाघत** इत्यादौ श्लाघादिधातुयोगे प्राप्तायाः कर्म्मसंज्ञाया अपवादायैव दर्शितं सूत्रत्रयमिति भावः ।

वस्तुतस्तु सूत्रे ज्ञीप्स्यमानग्रहणाज् ज्ञानेच्छा चतुर्थ्यर्थ इति ज्ञायते । तत्र ज्ञानस्य धातुत एव लाभादिच्छामात्रं चतुर्थ्यर्थः । अन्यथा "चतुर्थी सम्प्रदाने" इति सूत्रानन्तरं "श्लाघह्नुङ्स्थाशपां कर्म्मणि" इत्येव लाघवान्मुनिः सूत्रयेत् । किञ्च कर्म्मसंज्ञापवादाभ्युपगमे [1]"अपह्नुवानस्य जनाय यन्निजा— मधीरतामस्य [2]कृतं स्मरेण यत् ॥..." इत्यादौ कर्म्मप्रत्ययस्य द्वितीयादेरनुपपत्तिप्रसङ्गः । तत्रेच्छाया चतुर्थ्यर्थे प्रकृत्यर्थस्य नरपतेः समवेतत्वसंसर्गावच्छिन्नतादृशज्ञाननिष्ठोद्देश्यतावच्छेदकतानिरूपकत्वेन तादृशज्ञाननिष्ठविशेष्यतानिष्ठोद्देश्यतावच्छेदकतानिरूपितावच्छेदकतानिरूपकत्वेन चान्वयः । नरपतेर्नरपतिविशेष्यताकोत्कर्षप्रकारकं ज्ञानं भवत्वितीच्छायां ज्ञाननिष्ठोद्देश्यतानिरूपितसमवेतत्वसंसर्गावच्छिन्नदेवदत्तनिष्ठावच्छेदकतानिरूपकत्वस्य

---

१ अबोधि तज्जागरदुःखसाक्षिणी निशा च शय्या च शशाङ्ककोमला ॥ इत्युत्तरार्द्धम् ।

२ कृतं मनोभुवा इत्यपि पा० ।

स्वरूपफलान्वयिनि विशेष्ये नरपतिं स्तौतीतिवत् कर्म्मसंज्ञाप्रसक्त्या तदपवादाय चतुर्थी विधीयते । जाराय ह्नुते बन्धकीत्यत्र जारं प्रच्छादयतीत्यादाविवादर्शनस्वरूपाप्रकाशसमवायितया जारादेः, शिशवे शपत इत्यत्र शिशुन्निन्दतीत्यादाविवापकृष्टज्ञानविशेष्यतया शिशोः प्रसक्तं कर्म्मत्वमपवदन्ती सम्प्रदानसंज्ञा विधीयते । [1]कृष्णाय तिष्ठते गोपीत्यत्र तङन्ततिष्ठतेर्योगे उक्तेर्थे एव चतुर्थी ।

यत्र तु स्थेयत्वेन निर्णायकत्वेनाश्रयणं तङन्तस्य तिष्ठतेरर्थस्तत्र

तथाविधोद्देश्यतानिरूपितदेवदत्तनिष्ठावच्छेदकतानिरूपकत्वस्य च सत्त्वात् । अन्यविशेष्यकोत्कर्षप्रकारकनरपतिज्ञानस्य नरपतिविशेष्यकोत्कर्षप्रकारकान्यदीयज्ञानस्य चेच्छायां तथा प्रयोगवारणाय सम्बन्धद्वयोपादानम् । एवं **जाराय ह्नुते बन्धकी**त्यत्रापि धात्वर्थफलेदर्शने चतुर्थ्यर्थस्येच्छायाः, इच्छायां विशेषणतासंसर्गावच्छिन्नाधेयतासंसर्गावच्छिन्ना यादर्शननिष्ठोद्देश्यतावच्छेदकता, तन्निरूपकत्वेन प्रकृत्यर्थस्यान्वयः । "अधीरतामस्य जनाय" इत्यत्र निह्नुत्यर्थादर्शनप्रतियोगिनि द्वितीयार्थस्य विशेष्यत्वस्य तत्सम्बन्धावच्छिन्नाधेयत्वस्य [2]वान्वयः । वस्तुतो गगनं निह्नुत इत्यप्रयोगात् सतोसत्त्वेन प्रतिपादनं निह्नुतेरर्थः । तत्रासत्त्वप्रकारकप्रतिपत्तौ पूर्ववच्चतुर्थ्यर्थस्यान्वयः । **कृष्णाये**ति । चतुर्थ्यर्थे इच्छायां समवेतत्वसंसर्गावच्छिन्नप्रकाशनिष्ठोद्देश्यतानिरूपितावच्छेदकतानिरूपकत्वेन प्रकृत्यर्थस्य, इच्छायाश्चोद्देश्यतया प्रकाशनेन्वयः ।

"प्रकाशनस्थेयाख्ययोश्च" इति सूत्रेण निरुक्ते प्रकाशने स्थेये च फलविधया स्थाधातुप्रतिपाद्ये आत्मनेपदं विधीयते । तत्र प्रकाशनमात्रे विवक्षिते ज्ञीप्स्यमानपदाच्चतुर्थी, न तु [3]स्थेये इत्याह—**यत्र त्वि**ति । **स्थेयत्वेने**त्यस्य विवरणं **निर्णायकत्वेने**ति । **आश्रयणं** विनिवेदनम् । समानदेशत्वसम्बन्धा-

---

१ पाठोयं मु० पु० ना० । २ वा इत्यधिकः पा० मु० पा० ।

३ स्थेयो मध्यस्थो निर्णायक इति यावत् ।

न सम्प्रदानता। अतएव [1]"संशय्य कर्णादिषु तिष्ठते यः॥" इति भारविः। संशयानन्तरितस्य कर्णादौ निर्णायकत्वेनाश्रयणस्य कर्त्ता य इति तदर्थः। यत्र च नोपालम्भश्शपेरर्थः, किन्तु शपथः शुद्धयशुद्धिविवेचकः पुत्रदारशिरस्स्पर्शादिरर्थः, तत्र पुत्रेण शपतीत्येव प्रमाणम्, न तु पुत्रायेति।

अतएव—

"आचम्य चाम्बु तृषितः [2]करको शपेयम्।
भावानुरक्तललनासुरतैश्शपेयम् ॥
जीयेय येन कविना यमकैः परेण।
तस्मै वहेयमुदकं घटकर्परेण॥"

इति घटकर्परः।

[3]वासुदेवाय राध्यति गर्ग इत्यत्र दैवपर्य्यालोचनं राधेरर्थः, चतुर्थ्यास्तु समवेतत्वम्। तथा च वासुदेवसमवेतं दैवं गर्गः

वच्छिन्नाधेयत्वं कर्त्तृघटितपरम्परासंसर्गावच्छिन्नं कर्त्तृवृत्तित्वं सप्तम्यर्थो धात्वर्थे विनिवेदनेन्वेति। तथा च संशयोत्तरकालीनकर्णाद्यधिकरणकविनिवेदन-कर्त्तेति तद्वाक्यजन्यो बोधः। कर्णादेर्निर्णायकत्वं विनिवेद्यत्वञ्च मानान्तर-गम्यमिति केचित्। एवं निरुक्तोपालम्भनार्थकस्यैव शपेर्योगे चतुर्थी, नान्यस्येति दर्शयति—**यत्र चेति**। **शुद्धयशुद्धी** सत्यासत्यप्रतिज्ञे।

---

१ जहातु नैन कथमर्थसिद्धिः।
संशय्य कर्णादिषु तिष्ठते यः॥
असाधुयोगा हि जयान्तरायाः।
प्रमाथिनीना विपदा पदानि॥ इति पूर्णश्लोकः।

२ करकौ इति मु० पु० पा०।

३ वासुदेवाय राध्यति गर्ग इत्यस्य स्थाने वासुदेवमपराध्यति गर्ग इति मु० पु० पा०।

**पर्य्यालोचयतीति वाक्यार्थः । राधिरीक्षतेरप्युपलक्षणम् । तेन कृष्णायेक्षते गर्ग इत्यत्र निरुक्तैव गतिः । मम पुत्रस्य कीदृशं शुभमशुभं वेति विविच्य प्रश्नगोचरता तु वासुदेवपदेन न प्रतिपाद्यते, किन्तु व्यञ्जनयैव । प्रश्नानन्तरितशुभाशुभपर्य्यालोचनं वा राधेरर्थः ।**

**ईक्षते**रिति । कारिकायामित्यादिः । "राधीक्ष्योर्यस्य विप्रश्नः" इति सूत्रे उभयस्यैवोपादानात् । **न प्रतिपाद्यत** इति । तत्र तस्य वृत्तेरभावादिति भावः । व्यञ्जनानङ्गीकारे त्वाह—**प्रश्ने**ति

---

१ तथा च तादृशस्य धात्वर्थत्वे धातुनैव वासुदेवस्य कीदृग शुभमशुभं वेति प्रश्नगोचरतायाः शुभाशुभयोः प्रतिपादनाद्धात्वर्थेनोपसंग्रहाद्याकर्म्मकावेतौ । अतएव राध्यतीति श्यन्नुपपद्यते, अन्यथा "राधोकर्म्मकाद्वृद्धावेव" इति गणसूत्रेणाकर्म्मकादेव तद्विधानादनुपपत्तिस्स्यात् । निरुक्तवाक्याच्छाब्दबोधश्च वासुदेवसमवेतप्रश्नानन्तरितशुभाशुभपर्य्यालोचनाश्रयो ज्योतिर्विद्गर्गनामा ऋषिरिति । वस्तुतस्तु सूत्रघटकविप्रश्नः न विविधविषयकप्रश्नः, किन्तु शुभाशुभप्रश्नः, शुभाशुभजिज्ञासाप्रयोज्यकिमादिशब्दघटितवाक्यमिति यावत् । तत्र जिज्ञासैव चतुर्थ्यर्थः । जिज्ञासाया यत्सम्बन्धित्वेन शुभाशुभजिज्ञासा तत्सम्बन्धिशुभाशुभविषयतानिरूपितविषयिनया प्रकृत्यर्थस्य दैवपर्य्यालोचने धात्वर्थे प्रयोज्यत्वसम्बन्धेन जिज्ञासाया अन्वयः । विलक्षणविषयितया प्रकृत्यर्थस्यान्वयोपगमे च मैत्रपुत्रस्य किं शुभमशुभ वेति प्रश्ने मैत्राय राध्यतीति न प्रयोगः, किन्तु पुत्रसम्बन्धित्वेन जिज्ञासाया उल्लेखात् पुत्राय राध्यतीत्येव । धात्वर्थे तादृशजिज्ञासाप्रयोज्यत्वस्यान्वयाद्धात्वर्थघटकशुभाशुभे प्रकृत्यर्थसमवेतत्वमर्थाल्लब्धम् । न चेदमप्रामाणिकम्, "कृष्णाय राध्यतीक्षते वा नैमित्तिकः पृष्टः सन् देवदत्तस्य दैव पर्य्यालोचयतीत्यर्थः" इतिकाशिकोक्त्या विप्रश्नवाक्यस्य धात्वर्थाघटकत्वेन चतुर्थ्यर्थत्वविरहेण च प्रतिपादनात् तादृशजिज्ञासायाश्चतुर्थ्यर्थत्वसङ्गतेः । यत्र प्रश्नवाक्यमन्तरेणैव स्वस्य शुभाशुभजिज्ञासा, तत्रापि वराय कन्यायै वा राध्यति नैमित्तिक इति प्रयोगः प्रामाणिक एव । एवञ्च कृष्णाय राध्यतीक्षते वा गर्ग इत्यत्र कृष्णविषयशुभाशुभजिज्ञासाप्रयोज्यशुभाशुभपर्य्यालोचनाश्रयो गर्ग इत्यन्वयबोध इति ध्येयम् ।

गर्गाय शतं धारयतीत्यत्र ऋणत्वनिरूपितमधमर्णत्वं धारयतेरर्थः। फलीभूतर्णत्वाश्रयतया शतस्य कर्म्मत्वम्, उत्तमर्णत्वं चतुर्थ्यर्थः। तथा च गर्गवृत्त्युत्तमर्णत्वनिरूपितशतवृत्त्यृणत्वप्रतियोगिकाधमर्णत्वाश्रय इत्यन्वयबोधः। उत्तमर्णत्वं स्वामित्वविशेषः। ऋणत्वाधमर्णत्वे स्वत्वस्वामित्ववदतिरिक्तावेव पदार्थौ, अनुगतप्रतीतिव्यवहारयोरविशेषात्। स्वत्वाभाव ऋणत्वमिति चेदृणत्वाभाव एव स्वत्वमित्यपि स्यात्।

यदि [1]चोद्धारनाश्यपापविशेषस्य साधनं विनियोग एव ऋणत्वम्, तदा पापासाधनविनियोग एव स्वत्वमिति स्यात्। अविनियोगकालेपि [2]स्वव्यवहार ऋणव्यवहारेण तुल्ययोगक्षेमः। शास्त्रमपि ऋणत्वे स्वत्वे च तुल्यम्। शास्त्रेननुगतप्रवृत्तिनिमित्तकर्णपदघटितत्वमिव तादृशस्वपदघटितत्वमपि सिद्धान्ततत्त्वे विस्तरतो व्यवस्थापितमिति नेह तन्यते॥ १२५॥

[3]सिद्धान्ततत्त्व इति। वस्तुतस्तु उद्धारनाश्यपापजनकग्रहणाहितो व्यापारो धारयतेरर्थः। फलीभूतग्रहणविषयतया शतादीनां कर्म्मत्वम्। [4]उत्तमर्णः [5]प्रयोक्ता पुरुषः। प्रयोगश्च कलाजिघृक्षा, तज्जनकज्ञानजन्यसंस्कार उपकारकता कीर्त्तिजनकः पुण्यविशेषो वा चतुर्थ्यर्थः। तथाविधपापवानधमर्णः। एवञ्च गर्गनिष्ठकलाजिघृक्षादेः प्रयोज्यं यत्तथाविधं शतकर्म्मकग्रहणं तत्प्रयोज्यव्यापारो भोजनादिस्तदाश्रयत्वं वाक्यार्थः। ऋणमपि तथाविधग्रहणकर्म्मेति ऋणं

१ चोद्धरताख्य० इति मु० पु० पा०।

२ स्वव्यवहारो इति मु० पु० पा०।

३ सिद्धान्ततत्त्वनामा कश्चिद्ग्रन्थः ग्रन्थकर्त्तुरस्तीति प्रतीयते।

४ उत्तममृणं यस्य स उत्तमर्ण इति विग्रहो बोध्यः।

५ "यदीयं धनं स स्वामी प्रयोक्ता उत्तमर्णः" इति काशिकावचनादिति शेषः।

**क्रुधद्रुहेर्ष्यासूयार्थधातुभिस्सव्यपेक्षया ।**
**चतुर्थ्या विषयीभावस्समवायोभिधीयते ॥१२६॥**

क्रुधिकुपिरुषादयो धातवः केवलद्वेषगुणवाचका अकर्म्मकाः । शत्रवे [1]क्रुध्यतीत्यादौ द्विष्टतालक्षणविषयताविशेषोर्थः । द्विषिस्तु द्विष्टतोपलक्षितं द्वेषमभिधत्त इति न क्रुधिपर्य्याय इति शत्रुं द्वेष्टीत्येव प्रमाणम् । द्रुहेर्द्विष्टाचरणमर्थः । शत्रवे द्रुह्यतीत्यत्र चतुर्थ्या द्वेषान्वयी समवायोर्थः । शत्रुसमवेतद्वेषविषयकाचारवानित्यन्वयबोधः । परक्रिया-

धारयतीत्यत्र ग्राह्यं गृह्णातीत्यत्रेवान्वयो बोध्यः । एवमर्थान्तरेपि धारयतेः प्रयोगे चतुर्थी दृश्यते, यथा—

"सेवनवेतनमृणमिह ।
मह्यं दीनाय धारयसि ॥
अतिचण्डि ! चण्डखण्डिनि ! ।
वदाम्यपर्णेतिभीतितो भवतीम् ॥..." इत्यादौ ।

तत्र धारयतेरभीष्टफलदानानुकूलो व्यापारोर्थः । ऋणपदलक्ष्यमवश्यदेयं वेतनपदलक्ष्यं साध्यम् । तथा च सेवनसाध्यावश्यदेयकर्म्मको योभीष्टप्रयोजकदानानुकूलो व्यापारस्तदाश्रयस्त्वमिति बोधः । मह्यमिति चतुर्थ्यर्थः पुण्यविशेषः, स प्रयोज्यत्वेन व्यापारेन्वेति । १२५ ।

"क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति सूत्रानुशिष्टचतुर्थ्यर्थमाह—**क्रुधे**त्यादिना । तदर्थश्च क्रोधाद्यर्थकधातुयोगे क्रोधविशेष्यवाचकानां सम्प्रदानसंज्ञेति । यत्र येन वेत्यपहाय यं प्रतीत्युक्त्या चतुर्थ्या नानाविधोर्थ इति ज्ञाप्यते, तदेतदाह—**विषयीभावस्समवाय** इत्यनेन । समवेतत्वञ्च समवाय एवेत्याशयेन विवरणे **समवेतत्व**मित्युक्तम् । अतएव "क्रोधस्तावत् कोप एव, द्रोहादयोपि कोपप्रभवा एव गृह्यन्ते, तस्मात्सामान्येन विशेषणं यं प्रति कोप इति" ( इति ) सिद्धान्तकौमुद्यामुक्तम् । **विशेषोर्थ** इति चतुर्थ्या इत्यादिः । द्विषेर्द्वेषमात्रार्थकत्वे तद्योगेपि चतुर्थीप्रसङ्गादाह—**द्विषिस्त्व**ति । **न क्रुधि-**

---

१ क्रुप्यति इत्यधिकः पा० मु० पु० ।

गोचरो द्वेष ईर्ष्या । सपत्नीभ्य ईर्ष्यतीत्यत्र क्रियान्वयिसमवेतत्वं चतुर्थ्यर्थः । सपत्नीसमवेतक्रियान्न सहत इति बोधः । परसमवेत-क्रियायामीर्ष्यतिना फलविधया निर्दिष्टायां तद्विषये कर्म्मणि द्वितीयैव प्रमाणम् । भार्य्यामीर्ष्यति मैनाममद्राक्षीदित्यत्र भार्य्या-विषयकमन्यसमवेतदर्शनं न सहत इति बोधः । परगुणेषु दोषत्वारोपणमसूया । वादिनेसूयतीत्यादौ वादिसमवेतं ज्ञानं भ्रमत्वेनाख्यापयतीत्यर्थः ।

यत्तु प्रकाशकारचरणैः—

"भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥" इत्यत्र "विधिं प्रत्यसूया व्यज्यते" इत्युक्तम् । तत्रेदमाकूतम् - विधेर्नैसर्गिको गुणो निद्रादरिद्रीकरणम्, तच्च [1]शाठ्यहेतुकत्वेन दोषत्वेन कामिना स्वप्नसमागमविच्छेदविह्वलेनारोपितमिति गुणे दोषारोपरूपासूया-भावोभिव्यज्यते[2] । शत्रुमभिक्रुध्यति द्रुह्यति वेत्यादौ कर्म्मसंज्ञा तु "क्रुधद्रुहोरुपसृष्टयोः कर्म्म" इत्यनुशासनसिद्धा ।१२६।

**पर्य्याय** इति, विषयतायाः शक्यतावच्छेदकस्य तत्राधिक्यात् । **परसमवेते**ति । चतुर्थीप्रकृतित्वेन विवक्षितार्थभिन्नसमवेतेत्यर्थः ।

**भ्रातस्तावदि**ति । जाने कोपपराङ्मुखी प्रियतमा स्वप्नेद्य दृष्टा मया ।
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ॥
नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियाम् ।
इत्येतत्पूर्वचरणत्रयम् । इदञ्च व्यभिचारिभावस्य व्यङ्ग्यत्वे उदाहरणम् ।१२६।

---

१ शाठ्यहेतुकत्वेन दोषत्वेन इत्यस्य स्थाने शाठ्यहेतुकत्वस्वरूपेण दोषत्वेन इति मु०पु०पा० ।

२ विधेर्नैसर्गिके निद्रादरिद्रीकरणे गुणे शाठ्यहेतुकत्वस्वरूपदोषत्वसमारोपेण गुणे दोषारोपरूपोसूयाभावस्याभिव्यक्तिस्संप्रदायमते । वस्तुतस्तु अनिन्द्ये विधौ विधित्वे वा शठतादात्म्यस्य शठत्वतादात्म्यस्य वारोपस्स्वप्नसमागमविच्छेदेन विह्स्तेन कामिना कृत इत्यनिन्द्ये दोषारोपरूपासूयाभिव्यक्तिरिति पक्षस्साधीयान् प्रतिभाति । गुणा दोषाश्चात्र प्रातिस्विकरूपेण प्रकरणादिवशादसूयतिनोपस्थाप्यन्ते । गुणाः निन्दाप्रयोजकान्ये पदार्था वैशेषिकसिद्धास्दोषास्तु निन्दाप्रयोजकाः प्रत्येतव्याः ।

**प्रतिश्रवाश्रवौ याच्ञापूर्वस्वीकारवाचिनौ।**
**याचनान्वितकर्त्तृत्वं चतुर्थी तत्र भाषते ॥१२७॥**

प्रतिशृणोतेराशृणोतेश्च याचनापूर्वको देयत्वेनाभ्युपगमोर्थः।

यत्तु—

"संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः।
अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥

इति नामलिङ्गानुशासने आश्रवप्रतिश्रवावपि संश्रवपर्य्यायत्वेन पपाठ, तदर्थैक देशाभिप्रायेण।

द्विजाय गां प्रतिशृणोतीत्यादौ चतुर्थ्याः कर्त्तृत्वमर्थः। स च याचनान्वयी, द्वितीयोपात्तकर्म्मत्वं याचनाङ्गीकारयोरुभयोस्सम्बध्यते। तथा च द्विजकर्त्तृकगोकर्म्मकयाचनापूर्वको देयत्वेनाभ्युपगमो वाक्यार्थः।

[1]एवमनुगृणातेः प्रतिगृणातेश्च शंसनपूर्वकं प्रोत्साहनमर्थः। शंसनं कथनम्, प्रोत्साहनं हर्षानुकूलो व्यापारः। [2]होत्रेनुगृणात्यध्वर्य्युः प्रतिगृणाति वेत्यत्र चतुर्थ्या शंसने हर्षे चान्विता वृत्तिरर्थः। तथा च होतृवृत्तिशंसनपूर्वकस्य होतृहर्षानुकूलस्य व्यापारस्य कर्त्ताध्वर्य्युरित्यन्वयबोधः।१२७।

प्रतिपूर्वकस्याङ्पूर्वकस्य च शृणोतेः पूर्वस्य कर्त्ता तदर्थप्रयोजकक्रियाकर्त्ता तद्धातुयोगे सम्प्रदानसंज्ञको भवतीत्यर्थ–(केन) "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता" इति (सूत्रेणा)–नुशिष्टचतुर्थ्यर्थं निरूपयति—**प्रतिश्रवे**त्यादिना। **याच्ञे**ति।

नन्वेवमभ्युपगममात्रार्थकसंश्रवपर्य्यायत्वं प्रतिश्रवाश्रवयोरमरोक्तमनुपपन्नमित्यत आह—**यत्त्वि**ति। **तदर्थैके**ति। तत्पदं **यत्त्वि**ति यत्पदपरामृष्टां पाठक्रियां परामृशति। **अर्थैकदेशाभिप्रायेण** अभ्युपगमस्य सर्वत्र वाच्यता तुल्येत्यभिप्रायेणेत्यर्थः।१२७।

---

१ एवमनुगृणोतेः प्रतिगृणोतेश्च इत्यस्य स्थाने एवमनुशृणोतेः प्रतिशृणोतेश्च इति मु० पु० पा०। २ होत्रेनुगृणात्यध्वर्य्युः प्रतिगृणाति वा इत्यस्य स्थाने होत्रे प्रतिशृणोत्यध्वर्य्युरनुशृणोति वा इति मु० पु० पा०।

**परिक्रयस्य करणे सम्प्रदानत्वमिष्यते ।**
**नियम्य काले भृत्या यस्स्वीकारस्स परिक्रयः ॥१२८॥**

भृतिर्वेतनादि, तद्दानपूर्वको यस्स्वत्वानुकूलो व्यापारस्स क्रयः, स नियतकालावच्छेदेनैकत्र विद्यमानस्य स्वत्वस्य जनको यदि, तदा परिक्रय इत्युच्यते। परिक्रयजन्यं स्वत्वं तत्रैव वस्तुनि मासमात्रमवस्थाय नश्यति, मासानन्तरन्तु स्वत्वान्तरमुत्पद्यते। व्यवस्थावशादेकमेव वा स्वत्वम्। यद्यत्कालावच्छिन्नवस्तुविषयकं तदा तदा धर्म्मव्यवहारप्रयोजकमित्यपि लीलावतीप्रकाशे वर्द्धमानोपाध्यायैरुद्भावितम्। परिक्रयकरणञ्च भृतिस्संप्रदानसंज्ञं विभाषया। शतेन शताय वा परिक्रीतो वृष इत्यत्र तृतीयाचतुर्थ्योः करणत्वमर्थः, स च स्वत्वे-

"परिक्रयणे सम्प्रदानमन्यतरस्याम्" इति सूत्रं करणल्युटा परिक्रयकरणं सम्प्रदानसंज्ञकं भवतीत्यर्थकम्, तदनुशिष्टा चतुर्थीं निरूपयति— **परिक्रयस्ये**ति। **नियम्य काले** इति। मासादिकालनियमं कृत्वेत्यर्थः। **व्यापार** इति। इच्छारूप एव [1]व्यापारोत्र बोध्यः। भृतिश्शतादिका। भृतिदानजनितं तादृशं स्वत्वं भोगमेव जनयति, न तु विक्रयदानादिकमपि, परिक्रेतुर्विक्रयादिजनकस्वत्वस्य तादृशभृतिदानेनाजननात्। **मासमात्रमवस्थाये**ति। प्रतिमासं यत्र भृतिर्दीयते तदभिप्रायेणेदम्। यत्र तु वर्षादिकालावच्छिन्नत्वघटिता व्यवस्था

---

१ तुभ्यमेतावद्वेतन दीयते, तद् गृह्णन् एतावन्तं कालं त्वं मम कर्म्मकरो भव इत्येवं परिमितकालं भृत्या स्वीकरणं परिक्रयणमित्युक्तं कारिकाया सम्प्रदायानुसारेण। भोगजनकनियतकालकस्वत्वफलकव्यापारस्येच्छारूपस्य परिक्रयत्वाभिधानञ्च टीकाकर्तुः वस्तुतः रोचते मह्यम्। एवञ्च शतेन शताय वा परिक्रीतो वृषभ इत्यत्र करणत्वं व्यापारोर्थः। स च परस्वत्वोपहित दान शतवृत्तिस्वत्वं प्रति तादात्म्येन शतस्य जनकत्वात् स्वत्वोपहिते दाने स्वत्वद्वारक शतस्य जन्यत्वमिति शतव्यापारत्वमक्षतमिति शतजन्यतत्कर्म्मकदानजन्यस्येच्छोद्देश्यस्य भोगजनकनियतकालकस्वत्वस्याश्रयो वृषभ इत्यन्वयबोधोपि ज्ञेयः।

न्वेति, शतस्य स्वत्वजनकदानव्यापारवत्तया स्वत्वकरणत्वाबाधात्। तथा च शतकरणकस्वत्वजनकः परिक्रय इत्यन्वयबोधः।

परे तु भृतिदानजनितनियतकालकस्वत्वजनकपरिग्रहः परिक्रय इत्युच्यते। तत्र भृतौ तादात्म्येन शतस्यान्वयः। संसर्गतया लब्धकरणत्वस्यानुवादिका तृतीया चतुर्थी वा "ज्योतिष्टोमेन यजेत..." इत्यादिवदित्याहुः।

ग्रामाय गच्छतीत्यत्र कर्म्मत्वमपि चतुर्थ्यर्थः, "[1]गत्यर्थकर्म्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" इत्यनुशासनात्। चेष्टायामिति ज्ञानार्थकगमेर्व्युदासः। अनध्वनीत्यध्वने गच्छतीति प्रयोगवारणाय। तेन मनसा व्रजति हरिमित्येव प्रमाणम्, न तु हरये इति। चेष्टापदं क्रियासामान्यपरम्, ग्रामाय गच्छति रथ इति प्रयोगात्। अत्र चेष्टाभिन्ने गत्यर्थेऽध्वनि च चतुर्थीनिषेधमात्रे तात्पर्य्यम्। स्पन्दमात्रवाचिनि गमौ तज्जन्यफलवति सम्प्रदानचतुर्थ्यैव, ग्रामाय गच्छतीति प्रयोगस्योपपन्नतया पृथग्विधेरनवकाशादिति महाभाष्यकृतः। १२८।

तत्र प्रतिमासं भृतेरदानेपि व्यवस्थाबलादेव वर्षावच्छिन्नं स्वत्वमेकमेवेत्याह—**व्यवस्थे**ति। **दानव्यापारवत्तये**ति। स्वत्वध्वंसेच्छाविषयतयेत्यर्थः।

**ज्ञानार्थकगमेरि**ति। घटमवगच्छतीत्यादाविव्यर्थः। एवमश्वेन गच्छतीत्यत्र करणे चतुर्थीवारणं **कर्म्मणी**त्यस्य प्रयोजनमिति बोध्यम्। **अध्वने गच्छती**ति। अयञ्च निषेधः—आक्रान्ताध्वविषयक एव। तेन यदा पन्थानमाक्रमितुमिच्छति तदा चतुर्थी भवत्येव, उत्पथेन पथे गच्छतीत्यादौ यथेति बोध्यम्। १२८।

( इति सटीकपदवाक्यरत्नाकरे कारकचतुर्थीविवरणम्। )

---

१ गत्यर्थधातुयोगे तदर्थकर्म्मणि चेष्टाया तदर्थे सति अध्ववर्जिते द्वितीयाचतुर्थ्यौ भवत इति सूत्रार्थः। ओदन पचतीत्यत्र कर्म्मणि चतुर्थीवारणाय गत्यर्थग्रहणम्।

## ( अथाकारकचतुर्थीविवरणम् । )

**साहश्यमपकर्षो वा यतो मन्यतिकर्म्मणि ।**
**अनादृते नञा बोध्यश्चतुर्थी तत इष्यते ॥१२९॥**

न [1]त्वां तृणाय तृणं वा मन्य इत्यत्र सादृश्यमपकर्षो वा नञर्थः। "द्रौणिर्म्मर्य्यादया हीनो ब्राह्मणो नैष दुर्मतिः..." इत्यादौ व्यस्तनञापि निकर्षबोधनात्। तृणपदसमभिव्याहृतया द्वितीयया चतुर्थ्या वा नञर्थान्वयिप्रतियोगित्वमुच्यते साधुत्वमात्रार्था वा। तथा च तृणप्रतियोगिकेन सादृश्येनापकर्षेण वा त्वां जानातीति शाब्दोन्वयः । ततोनादृतस्त्वमिति वैयञ्जनिको मन्यतेः कर्म्मण्यनादरबोधः, न तु शाब्दः। यत्र तु नानादरो व्यञ्जनया प्रतीयते,

"मन्यकर्म्मण्यनादरे विभाषाप्राणिषु" इति सूत्रेण मन्यतिकर्म्मान्वयिनि प्राणिवर्जिते तद्वाचकपदाद्द्वितीया चतुर्थी च भवत्यनादरे गम्यमान इत्यर्थकेनानुशिष्टयोश्चतुर्थीद्वितीययोरर्थं निरूपयति—**सादृश्यमिति**। **नञर्थ** इति।

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥"

इत्यभियुक्तोक्त्या द्वयोरपि तत्सम्भवादन्वययोग्यत्वाच्चेति बोध्यम्। ननु सादृश्यादीनां नञ्पदाद्बोधस्समास एव अनिक्षुश्शर इत्यादौ, न तु व्यासे तत्र भेदात्यन्ताभावयोरेव प्रतीतिरित्यत आह—**द्रौणिरिति**। "नानुयाजेषु..." इत्यादौ सप्तमीवत्तयोरपि साधुत्वमात्रमेव प्रयोजनमित्याशयेनाह—**साधुत्वेति**। सूत्रेनादर इत्यनेनानादरस्य गम्यमानत्व एव सप्तमी, न तु शाब्दबोधविषयत्वमित्युक्तम्। तेन **न त्वामित्यादितोनादरस्य** शाब्दाभावेपि व्यञ्जनयैव बोधान्नानुपपत्तिरित्याह—**ततोनादृत** इति।

---

१ त्वा इति मु० पु० पा०।

तत्र वृषलन्न द्विजं मन्य इत्यादौ न चतुर्थी साधुः। दृश्यते च वैयञ्जनिकबोधमपेक्ष्य साधुता पदानाम् ।

अतएव रूपं वस्त्रमित्यादौ वैयञ्जनिकप्रयोजनप्रतिपत्त्यभावे रूपपदस्य तद्वत्यसाधुतया नेयार्थता नाम दोषः । अतएव "वद वद जितः स शत्रुर्न्न हतो जल्पँस्तव तवास्मि ।...[1]" इत्यादौ हर्षभयादौ द्योत्ये पुनरुक्तं साधु, [2]नेतरथा । न चात्र शब्देन हर्षादिः प्रतीयते । "सुन्दर ! सुन्दर ! वृथा ते सौन्दर्य्यम् । अर्जुन ! अर्जुन ! [3]सात्यके ! सात्यके ! तव मांसैर्दिशां बलिं करोमि..." इत्यादावामन्त्रितस्य वाक्यादेर्द्विर्भावोऽस्याक्रोधादौ द्योत्ये [4]साधुर्न्नापरथा ।

भवतु वा तृणसदृशतदपकृष्टादौ तृणपदस्य लक्षणा, तस्य त्वत्पदार्थे तादात्म्येनान्वयः, नञ्पदमनादृतवाचि, तृणवदनादृतं

ननु पदसाधुत्वं न वैयञ्जनिकबोधप्रयोज्यम्, किन्तु शाब्दबोधप्रयोज्यमेवेत्यनादरस्य शाब्दाभावे चतुर्थ्यादेः कथं साधुत्वमित्यतो वैयञ्जनिकबोधस्यापि तत्त्वं दृष्टान्तद्वारा साधयति—**अतएवे**ति । **तद्वत्यसाधुतये**ति । प्रयोजनाभावे (सति) लक्षणाया असम्भवेन वस्त्रनिरूपितायाश्शक्तेश्च तत्र सुतरामभावाद्वस्त्रपदसामानाधिकरण्येन तत्प्रयोगस्यासाधुता बोध्या । **हर्षभयादावि**ति । व्यञ्जनया लभ्य इत्यर्थः । द्विरुक्तेरपि तत्र सङ्केताभावेन व्यञ्जनयैव तद्बोधसम्भव इत्याह—**न चात्रे**ति ।

व्यञ्जनानङ्गीकारे दर्शितरीत्याप्यनादरस्य बोधासम्भवे कथं चतुर्थ्यादिरित्यत आह—**भवतु वे**ति । **यदि शाब्दिकस्मृतिविरोधान्न भयं तर्हि तृणवदना-**

---

१ चित्र चित्रमरोदीद्धा हेति पर मृते पुत्रे ॥ इत्युत्तरार्द्धम् ।

२ नेतरधा इति मु० पु० पा० ।

३ सात्विके सात्विके इति मु० पु० पा० ।

४ ० अपरधा इति मु० पु० पा० ।

अतएव—

[1]"तृणाय मत्वा रघुनन्दनस्त[2]द्रक्षःप्रधानं प्रधनान्निरास्थत् ॥" इति भट्टिः । [3]"तृणाभ्याम्मन्यते कामक्रोधौ यः पश्च कारयन् ॥" इति श्रीहर्षः । तत्र भेदबोधन इव निकर्षसादृश्यादिबोधनेपि प्रतियोग्यनुयोगिपदयोस्तुल्यवचनत्वं तन्त्रम् । तेन तृणाय युवाम्मन्य इत्यादिको न प्रयोगः । न त्वान्नावमन्नं काकं शृगालं वा मन्य इत्यत्र चतुर्थीनिषेधाय प्राणिवर्जितादिति । प्राणिनस्तु "नौकाकान्नशृगालानां प्राणित्वं पारिभाषिकम् ।" इति स्मृत्या परिभाषिताः । तेन त्वां शुने कीटाय वा मन्य इत्याद्युपपन्नमनुपपन्नश्च न त्वामन्नाय मन्य इति ।

अन्ये तु न त्वां तृणाय मन्य इत्यादौ तृणपदस्य तृणसदृशोर्थः । तस्य च [4]त्वंपदार्थभेदान्वयोपपादकतया कर्म्मानुवादिका द्वितीया प्रसक्ता दण्डिनं पुरुषं जानातीतिवत्, तत्र मन्युकर्म्मविशेषणे सदृशलाक्षणिके पदे द्वितीयेव चतुर्थ्यनुशिष्यते । मन्यतेर्मुख्यकर्म्मणि तु न चतुर्थी, "मन्यकर्म्मण्यनादरे विभाषाप्राणिषु" इत्यनुशासनेनादर इत्यस्यानादरनिमित्तकसादृश्यप्रतियोगिवाचकपदार्थ इत्यर्थकस्य कर्म्मविशेषणत्वात् । नञ्पदस्य चानादरोर्थः । आदरो नामेष्टानिष्टसाधसादृश्यबोधकमित्यर्थः । तेन मुखं पद्मम्मन्ये इत्यत्र युक्तसादृश्ये न चतुर्थी । अतएव नञ्पदं विनापि चतुर्थ्यास्साधुत्वादेव ।१२९।

---

१ इत्थं प्रवाद युधि संप्रहार प्रचक्रतू रामनिशाविहारौ । इति पूर्वार्द्धम् ।

२ ० णाणेन रक्षः प्रधनात् ० इति पाठान्तरम् ।

३ एकद्विकरणे हेतू महापातकपञ्चके । इति पूर्वार्द्धम् । न तृणे मन्यते ० इत्यपि पाठः, स च चतुर्थ्या वैकल्पिकत्वाद् द्वितीयान्ततृणपदघटितः ।

४ त्वत्पदार्थं इति मु० पु० पा० ।

नत्वेन प्रतिसन्धानम्, तदभेदश्च त्वत्कर्म्मकमननत्वावच्छेदेनान्वेतीति तस्यापि हिताहितान्यतरसाधनत्वमर्थतः पर्य्यवस्यतीत्याहुः' ।१२९।

**नमस्स्वस्तिस्वधास्वाहाऽलंवषड्भिर्व्यपेक्षिता ।**
**चतुर्थी सम्प्रदानत्वविषयत्वादि शंसति ॥१३०॥**

पुष्पं शिवाय नम इत्यत्र दानकर्म्म नमःपदार्थः। चतुर्थी सम्प्रदानत्वार्था। तथा च शिवसम्प्रदानकदानकर्म्म पुष्पमित्यन्वयबोधः। ब्राह्मणाय गौर्नम इति वाक्यमपि प्रमाणमेव, परन्तु नेदं त्यागवाक्यं धर्म्म्यम्,

"नामगोत्रे समुच्चार्य्य सम्यक् श्रद्धान्वितो वदेत्।
सङ्कीर्त्य देशकालादि तुभ्यं सम्प्रददे इति ॥"

इति दानवाक्यस्य प्रतिनियमनात्।

भवतु वा मन्त्रकरणकत्यागकर्म्म नमःपदार्थः। मन्त्रस्य करणत्वन्तु त्यागजन्यं परमापूर्वं प्रधानापूर्वं वा प्रति करणत्वमङ्गापूर्वद्वारा

**सम्प्रदानत्वमि**ति। तच्चात्र प्रीतिरेव, तस्य च नमःपदार्थे दाने जनकत्वेनान्वयः।

ननु ब्राह्मणादिसम्प्रदानके दाने नम इत्यन्तवाक्यस्याविहितत्वादप्रयोगेपि प्रीत्यादिना दाने मित्राय गौर्नम इत्यादिवाक्यानां प्रामाण्यं स्यादित्यत आह—**भवतु वे**ति। तथा च प्रीत्यादिना दाने मन्त्रकरणकत्वविरहान्न तथा प्रयोग

---

१ अत्र परम्परया मननकर्म्मणः चतुर्थ्यर्थसादृश्यस्य नामार्थान्वयेपि अलं न पचतीत्यत्र नञर्थान्वयिद्वितीयार्थकर्म्मत्वस्येव धातुसमभिव्याहारेणैव स्वविशेषणकशाब्दबोधविषयत्वात् कारकलक्षणसत्त्वेनाकारकचतुर्थीमध्ये परिगणनं कुतस्सङ्गतमिति विद्वद्भिर्विवेचनीयम्।

जनकत्वम् । श्रूयते हि मन्त्राणां करणत्वार्थिका तृतीया । तथा च मन्त्रकरणकोपकारजनकत्यागकर्म्मणि नमःपदार्थे त्यागेन्वयितदुद्देश्यकत्वं चतुर्थ्यर्थः । तथा च शिवोद्देश्यकस्य मन्त्रकरणकस्य त्यागस्य कर्म्म पुष्पमिति बोधः । भवति च शिवाय नम इति वाक्यम्मन्त्रः, चतुर्थ्यन्तनमोन्तवाक्यस्य मन्त्रत्वपरिभाषणात् ।

तादृशमन्त्रस्तु देवतोद्देश्यकत्यागस्यैवोपकारकः, न तु ब्राह्मणसम्प्रदानकस्येति ब्राह्मणाय गौर्नम इति वाक्यन्न प्रमाणम् । [1]ब्राह्मणस्य देवतात्वविवक्षायान्तु ब्राह्मणाय नम इति वाक्यं दानाङ्गब्राह्मणपूजादौ दृश्यते । मन्त्रवाक्ये शिवादीनां देवतात्वं पुनरर्थगम्यम्, न तु श्रौतम् । [2]श्रौतन्तु "ऐन्द्रं दधि..." [3]इत्यादौ । तत्र तद्धितेन हि इन्द्रशब्दस्य स्वरूपपरतायां चतुर्थ्यन्तकरणकयागकर्म्माभिधीयते, तदेकदेशे चतुर्थ्यन्ते तादात्म्येनेन्द्रस्यान्वयः ।

इति भावः । **श्रूयते हीति** "जुहुयाद्वारुणैर्मन्त्रैः..." इत्यादावित्यर्थः । **मन्त्रकरणकोपकारेति** । मन्त्रात्मककरणजन्यमपूर्वमित्यर्थः ।

**न तु श्रौतमिति** । श्रुतेभ्यश्शिवचतुर्थी (?) नमःपदेभ्यो वृत्त्याद्यभावेन तस्यानुपस्थितिरिति भावः । **तद्धितेन हीति** । "सास्य देवता" इत्यनेनेन्द्रो देवतास्येत्यर्थे विहितेनाण्प्रत्ययेनेत्यर्थः । **स्वरूपपरतायामिति** । अयम्भावः—देवतायाश्चैतन्ये प्रमाणाभावः । तथाहि—देवतावाचकेन्द्रादिपदानाम् "इन्द्राय स्वाहा..." इत्यादिमन्त्रात्मकाचेतन एव शक्तिः, तस्यैव देवतात्वम्, न तु सहस्राक्षस्य, "इन्द्रः सहस्राक्ष..." इत्यादिवाक्यानां प्रवर्त्तकत्वेनार्थवादतयाप्रामाण्यात् ।

---

१ अत्र अपि इत्यधिकः पा० मु० पु० ।
२ पाठोय ना० मु० पु० ।
३ इत्यादौ तत्र तद्धितेन इत्यस्य स्थाने इत्यादितद्धितेन इति पा० मु० पु० ।

अथ शिवाय गां दद्यादित्यादौ त्यागजन्यफलभागित्वरूपदेवतानिष्ठसम्प्रदानत्वश्रुतेर्वरदातृत्वश्रुतेश्चाचेतनमन्त्राणां कथं शिवादिपदशक्यत्वम्, तस्य दर्शितसम्प्रदानत्वविरहात्। अपि च मन्त्राणां शिवादिपदशक्यत्वे तत्तन्मन्त्रानुपूर्वीविशेषाणामेव शक्यतावच्छेदकतयैकशक्यतावच्छेकविरहाच्छिवादिसहस्रनाम्नां पर्य्यायत्वानुपपत्तिः। एवं वाजपेययागस्येन्द्रपदफलकत्वात्तद्विरोधापत्तिश्चेति चेत्?

अस्त्वेतावतापीन्द्रादिपदानां सहस्राक्षत्वादिविशिष्टे शक्तिः। एवमपि तस्य देवतापदवाच्यत्वे मानाभावः, देशनादेशितचतुर्थ्यन्तपदनिर्देश्यत्वरूपदेवतात्वस्य देवतापदशक्यतावच्छेदकत्वात्। तन्निर्देश्यत्वञ्च वेदबोधितचतुर्थ्यन्ततयोच्चार्य्यत्वम्। तच्च 'ऐन्द्रं दधि भवत्यमावास्यायाम्" "आग्नेयं हव्यं निर्वपेत्..." इत्यादौ देवतार्थे विहितेन तद्धितेनेन्द्रादिपद एव बोध्यते, न तु सहस्राक्षादौ। अतएवेन्द्रादिपदमेव देवता, न तु शक्रादिपदम्, तत्र चतुर्थ्यन्ततया निर्देश्यत्वस्य वेदेनाबोधनात्। न च "इन्द्राय स्वाहा" इत्यस्यैव मन्त्रत्वेन तस्य चतुर्थ्यन्तत्वविरहाद्देवतात्वानुपपत्तिरिति वाच्यम्, इष्टापत्तेः, इन्द्रायेत्यस्यैव तथात्वात्, स्वाहादिपदानां त्यागमात्रार्थकत्वात्। तत्र च वेदबोधितत्वन्न विशेषणं येन पूर्वं वेदजन्यज्ञाने जाते तादृशबोधितत्वज्ञानात्तद्घटितदेवतात्वं वेदेन बोधनीयम्, वेदेन देवतात्वग्रहे वेदबोधितत्वं ग्राह्यमित्यन्योन्याश्रयः। प्रकारान्तरेण तद्ग्रहे तत्प्रत्यक्षमूलकत्वात्पूर्वपूर्ववेदजन्यज्ञानमूलकोत्तरोत्तरतादृशज्ञाननिर्वाहेपि प्रथमतस्तादृशवेदजन्यबोधे तदसम्भव इत्यादिदूषणं प्रसज्येत। तथा च देशनादेशिता या चतुर्थ्यन्तता तद्विशिष्टपदत्वमेव देवतात्वम्, घटायेत्यादिचतुर्थ्यन्तता न वेदबोधितेति तन्निरासः। केवलेन्द्रपदस्य चतुर्थ्यन्तत्वाभावादेव व्युदासः। "ऐन्द्रं दधि..." इत्यादौ तद्धितेन चतुर्थ्यन्तं बोध्यत इतीन्द्रायेत्यस्य देवतात्वम्। चतुर्थीपदञ्च चतुर्थ्यर्थार्थकसुप्परम्। तेन "धृतिः स्वाहा..." इत्यादौ चतुर्थीविरहेपि नाव्याप्तिः, तत्र चतुर्थीनिषेधेन प्रथमाया एव तत्स्थलाभिषिक्तत्वात्। वैज्ञानिकं वा चतुर्थ्यन्तत्वं निविष्टम्, "धृतिः स्वाहा.." इत्यादौ चतुर्थीज्ञानस्यावश्यकतया नानुपपत्तिः। अतएव लुप्तचतुर्थीकेपि "भूः स्वाहा..." इत्यादावपि

**यदि पुनरिन्द्रो नाम सचेतनो[1] देवता प्रामाणिकी, तदेन्द्रपदार्थ इन्द्रः प्रतिपाद्यप्रतिपादकभावात्मकेनैव संसर्गेण चतुर्थ्यन्ते पदेन्वेति।**

नानुपपत्तिः। इन्द्रो देवतेति सामानाधिकरण्येन प्रयोगस्तु इन्द्रपदस्येन्द्रायेति पदपरत्वादिति मीमांसकमते ऐन्द्रमित्यादाविन्द्रादिपदं स्वरूपपरमेवेति। **चतुर्थ्यन्ते**ति। अण्प्रत्ययस्य चतुर्थ्यन्तत्वप्रकारकनिर्देशकर्म्मीभूतपदरूपदेवताकरणमेवार्थ इत्याशयः।

अचेतनानां मन्त्राणा न देवतापदवाच्यत्वम्, किन्तु सहस्राक्षादिसचेतनानामेव, "इन्द्रः सहस्राक्ष..." इत्यादिप्रसिद्धपदसामानाधिकरण्यस्थले इन्द्रपदार्थे सहस्राक्षाभेदान्वयस्यानुभाविकत्वात्, इन्द्रमुपासीतेत्यादाविन्द्रपदार्थे तथा सत्युपासनान्वयासम्भवाच्च। अचेतने उपास्यत्वविरहात्। शिवादिपदानां सम्प्रदानत्वविरहात्सहस्रनाम्ना पर्य्यायत्वानुपपत्तेश्चेत्यादेरुक्तत्वाच्च। तस्मान्मन्त्रकरणकहविस्त्यागोद्देश्यत्वमेव देवतापदप्रवृत्तिनिमित्तम्। न चैवं द्रव्यान्तरत्यागोद्देश्ये देवतात्वविरहप्रसङ्गः, हविःपदस्य द्रव्यसामान्यपरत्वात्, प्रयोजनविरहेणानुपादेयत्वाच्च। एवं तादृशोद्देश्यतायोग्यत्वमेव तत्। तेनोद्देश्यताशून्यकालेपि न देवतात्वानुपपत्तिः। योग्यता चेन्द्रादिशरीरत्वावच्छिन्नैव ग्राह्या। नातस्तच्छरीरानवच्छिन्नस्येन्द्राद्यात्मनस्तथात्वप्रसङ्गः। शरीरे समवायेन चैतन्यविरहेप्यवच्छेदकतया चेतनत्वान्नाचेतनस्य देवतात्वम्। मन्त्रकरणकहविर्भागित्वमात्रस्य तथात्वे तु मुक्तस्य पित्रादेः श्राद्धे "आकाशाय स्वाहा..." इत्यादावाकाशादेश्च हविर्भागित्वविरहादव्याप्तिः। उद्देश्यता च विसंवादीच्छामादाय तत्रापि निराबाधा। तादृशत्यागादेर्मन्त्रकरणकत्वस्य मानाभावाद्सम्भव इति तु न वाच्यम्, मन्त्रोच्चारणपूर्वकत्वेन विधिबोधितो यस्त्यागस्तत्र हविस्सम्बन्धितया विषयत्वमेव त्यागे विशेषणम्। आकाशादेरचेतनस्यापि

---

१ सचेतना इति पा० मु० पु०।

भवतु वेन्द्रप्रतिपादकमिन्द्रपदार्थः, तादात्म्यमेव चतुर्थ्यन्ते पदे भासते । अतएव शक्राय स्वाहेत्यादिप्रक्षेपवाक्यमश्रौतम् । "यदग्नये च प्रजापतये च जुहोति..." इत्यादौ त्वग्निवृत्त्युद्देश्यताक एव होमः श्रौतः, तत्र चतुर्थ्यन्ताग्निपदकरणकत्वं न्यायगम्यमिति तद्धितापेक्षया दुर्बला चतुर्थी, साक्षाद्देवताश्रुत्यभावात् ।

हविस्सम्बन्धित्वेनेच्छाविषयताया अक्षतेः । तदुद्देश्यकत्यागस्य "आकाशाय स्वाहा..." इत्यादिशास्त्रबोधितत्वात् । महादानाङ्गहोमादौ मन्त्रपाठपूर्वकत्वेन दानाङ्गहोमादिरेव विहितो दानन्तु होमादिपूर्वकत्वेनैव विहितम् । दानस्यापि तुभ्यं सम्प्रददे इत्यादिवाक्योच्चारणपूर्वकत्वेन शास्त्रबोधितत्वान्मन्त्रपर्य्यन्तनिवेशः । घृतादेरपि देवतासम्बन्धादिप्रकारेण त्यागविषयतया तत्रातिव्याप्तिवारणाय हविस्सम्बन्धितयेति । "कोदात्..." इत्यादिमन्त्रपाठपूर्वकत्वेन विधिबोधिते प्रतिग्रहे द्रव्यसम्बन्धितया ग्रहीतुर्विषयतया तत्रातिप्रसङ्गवारणाय त्यागत्वनिवेश इति संक्षेप इति नैयायिकास्तन्मतमनुसृत्याह—**यदि पुनरिन्द्रो नाम**ेति ।

चेतनस्य देवतात्वमतेपि प्रतिपाद्यतासम्बन्धेन "इन्द्राय स्वाहा..." इत्यादिमन्त्रविशिष्टस्यैव देवतात्वमवश्यमङ्गीकार्य्यम्, अन्यथेन्द्रपदपर्य्यायशक्रादिपदैरपि तादृशस्थले त्यागापत्तेः । तथा च विनिगमनाविरहेण प्रतिपाद्यतासम्बन्धेन मन्त्रविशिष्टोर्थः प्रतिपादकतासंसर्गेणार्थविशिष्टो मन्त्रो वेत्युभयमेव देवता, केवलयोस्तथात्वे दोषाणां दर्शितत्वात् । तत्राद्ये वेदबोधिता या चतुर्थ्यन्तता, तद्विशिष्टपदप्रतिपाद्यत्वमेव देवतात्वम्, अन्त्ये च तादृशचतुर्थ्यन्तत्वविशिष्टत्वमेवेत्याशयेनाह—**भवतु वे**ति । **होमः श्रौत** इति । चतुर्थ्यर्थोद्देश्यत्वस्य निरूपकतया धात्वर्थेन्वयात्तस्य शाब्दबोधविषयत्वमिति भावः । **न्यायगम्यमि**ति । उद्देश्यताया अग्निवृत्तित्वे ज्ञाते होमस्य करणाकाङ्क्षायामुपस्थितत्वाच्चतुर्थ्यन्ताग्निपदस्यैव तन्निरूपकत्वनिश्चयान्न

यदाहुः—

"तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः ।

देवतात्वश्रुतिस्तत्र दुर्बलन्तु परम्परम् ॥" इति । यथा,

तथा[1] शिवाय नम इति वाक्येपि नमःपदार्थैकदेशत्यागान्वितमुद्देश्यत्वाभिधं सम्प्रदानत्वमेव चतुर्थी प्रतिपादयति । उद्देश्यत्वन्तु तन्निष्ठा प्रीतिरेव । तेन शिवप्रीतिजनकत्यागकर्म्मवाक्यार्थः । परमात्मनि शिवे प्रीतेस्तज्जनकत्वस्य च[2] बाधितत्वे प्रीत्युद्देश्यतैव चतुर्थ्यर्थः । तत्रालम्बनत्वेन शिवस्यान्वयः, शिवः प्रीयतामिति बाधितविषयकेच्छासम्भवात् । तादृशेच्छाप्रयोज्यत्वं त्यागे प्रतीयते, फलेच्छाया उपायेच्छाप्रयोजकत्वात् । एवं शिवाय नम इत्यत्र नतिरपि नमसोर्थः, तदन्वयिविषयत्वञ्चतुर्थ्यर्थः, शिवविषयिणी नतिरित्यन्वयबोधः ।

तस्य शाब्दबोधविषयत्वम्, किन्तूपस्थितं परित्यज्येत्यादिन्यायानुसन्धानजन्यबोधविषयत्वमेवेत्यर्थः । **तद्धितेने**ति । तत्राद्यद्वयं दर्शितस्थलद्वये । **मन्त्रलिङ्गेन** "त्रातारमिन्द्रम्..." इत्यादौ बोध्यम् ।

शिवादीनामर्थगम्यं देवतात्वमिति पूर्वोक्तं "यदग्नये च" इति दृष्टान्तेन निगमयति **तथे**ति । **तत्रालम्बनत्वेने**ति । इच्छायां विषयतयेत्यर्थः । **नति**रुत्कर्षप्रतिपत्त्यनुकूलो[3] व्यापारः ।

---

१ च इत्यधिकः पा० मु० पु० । २ च इति पा० ना० मु० पु० ।

३ चतुर्थ्यर्थस्तु तादृशप्रतिपत्त्यन्वयिविशेष्यित्व समवेतत्वञ्च । तथा च शिवसमवेतशिवविशेष्यताकोत्कर्षप्रकारकप्रतिपत्त्यनुकूलो व्यापारो वाक्यार्थः । व्यापारस्तु नमःपदप्रयोक्तुरेव बोध्यः । यदि चाभिवाद्यस्य नोत्कर्षप्रतीतिस्तदोत्कर्षप्रतिपत्तीच्छैव नमस्कारो बोध्यः । अतः शिवसमवेतप्रतिपत्तेर्नित्यतया व्यापारस्य तदनुकूलत्वविरहेपि न क्षतिः, शिवस्य जन्यप्रतिपत्तिविरहेपि तदुद्देश्यकेच्छासम्भवादुत्कर्षप्रतिपत्तेरुद्देश्यतयेच्छायामन्वयात् । इच्छापि व्यापारवत्प्रयोक्तुरेव बोध्येति ।

प्रजाभ्यः स्वस्तीत्यत्र [1]सम्बन्ध एव चतुर्थ्यर्थः, प्रजासन्बन्धि-कुशलमित्यन्वयबोधः। आशंसायान्तु प्रजाभ्यः प्रजानां वा स्वस्ति स्यादित्युभयमपि प्रमाणम्, "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशल-सुखार्थहितैः" इत्यनुशासने पर्य्याययोर्मद्रभद्रयोर्ग्रहणादायुष्यकुशला-दीनामपि पर्य्यायग्रहणावगमात्। अतएव "आशास्यैर्हितकुशलाद्यर्थै-र्योगे चतुर्थी वा" इति भागुरिः। अनुशासने च आयुष्यं [2]चिरजी-वितम्। मद्रं भद्रञ्च मङ्गलम्। साक्षात्सुखसाधनं पुत्रजन्मादि कुशलम्। अनामयं दुःखसाधनाभावः। सुखमात्मविशेषगुणः स्वतः [3]कमनीयः। अर्थः प्रयोजनमिच्छाविषयः। हितं कालान्तरभावीष्टसाधनं याग-भैषज्यादि। आशिषीति मार्कण्डेयस्यायुष्यमस्तीत्यादौ चतुर्थीव्यु-दासाय। अनाशिष्यपि स्वस्तियोगे चतुर्थीप्राप्तये षष्ठीनिषेधाय च "नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च" इति सूत्रे कुशलपर्यायस्य स्वस्तेः पृथग्ग्रहणम्।

स्वाहापदस्यापि होमकर्म्मार्थः। तत्र होमान्वय्युद्देश्यत्वं चतु-र्थ्यर्थः। हविरग्नये स्वाहेत्यत्राग्न्युद्देश्यकहोमकर्म्म हविरित्यन्वयबोधः। वह्निसंयोगजनकप्रक्षेपोत्तराङ्गकस्त्यागो मुख्यो जुहोतेरर्थः। ब्राह्मण पाण्याद्यधिकरणकप्रक्षेपाङ्गकत्यागे होमादौ तु जुहोतिर्गौणः। [4]तथा

ग्रहणावगमादिति। तथा चाशीर्बोधकस्वस्तिपदसमभिव्याहारेपि तत्सू-त्रस्य प्रवृत्तिरिति भावः। अतएव तत्सूत्रे आयुष्यादिपदपर्य्यायाणां ग्रहणादेव।

---

१ सम्बन्ध आधेयत्वारूपः। स च स्वस्तिपदार्थे कुशलेनिष्टसाधनाभावरूपेन्वेतीति ध्येयम्।

२ चिरञ्जीवितम् इति मु० पु० पा०।

३ कामनीयः इति मु० पु० पा०।

४ तथा इत्यस्य स्थाने तत्र इति मु० पु० पा०।

"अग्नये कव्यवाहनाय स्वाहा" इत्यत्र स्वाहापदमपि । तथा पितृभ्यः स्वधेत्यत्र पित्रुद्देश्यकस्त्यागः स्वधापदार्थः । तत्र पितृत्वं त्रैवर्णिकसपिण्डितत्वम् । [1]पारशवस्य पिता न त्रैवर्णिकसपिण्डितः, किन्तु देवतामात्रमिति तत्र न स्वधाशब्दप्रयोगः । त्रैवर्णिकेन [2]सपिण्डितस्य [3]पाराशवेन क्रियमाणे प्रत्याब्दिकादौ न स्वधाशब्दप्रयोगः, तस्य स्वधाशब्दप्रयोगनिषेधात् । [4]प्रत्यवायसहेन पारशवेन प्रयुक्तस्तथाविधशब्दश्शाब्दबुद्धिं जनयत्येव, बाधकाभावात् ।

भवतु वा स्वधाकरणकत्यागकर्म्मैव स्वधापदार्थः, शूद्रकर्तृकत्यागस्तु न स्वधाकरणकः ।

अलमिति पर्य्याप्त्यर्थकानां ग्रहणम् । पर्य्याप्तिरपि स्वाम्यं निग्राहकत्वञ्च । अलं जगते प्रभुः समर्थः शक्तो भगवानित्यादौ जगन्निरूपितस्य स्वाम्यस्य निग्राहकत्वस्य वाधिकरणं भगवानिति बोधः । प्रभ्वादियोगे षष्ठ्यपि साधुः, "प्रभुर्बुभूषुर्भुवनत्रयस्य" इति माघः ।

[5]देवतासम्प्रदानकर्म्म वषट्पदार्थः । वषडिन्द्रायेत्यादाविन्द्रोद्देश्य-

**पारशवः** शूद्रः ।

**षष्ठ्यपि साधु**रिति । "तस्मै प्रभवति" "स एषां ग्रामणीः" इति सूत्रयोः प्रभवतेस्तदर्थार्थकग्रामणीशब्दस्य च योगे चतुर्थीषष्ठ्योर्निर्देशादिति भावः ।

---

१ पाराशवस्य इत्यस्य स्थाने पाराशरस्य इति मु० पु० पा० ।

२ सपिण्डतस्य इत्यस्य स्थाने असपिण्डितस्य इति मु० पु० पा० ।

३ पारशवेन इत्यस्य स्थाने पाराशरेण इति मु० पु० पा० ।

४ प्रत्यवायसहेन पारशवेन इत्यस्य स्थाने प्रत्यवायावहस्तेन पाराशरेण इति मु० पु० पा० ।

५ ० क० इत्यधिकः पाठः मु० पु० ।

कस्य देवतासम्प्रदानकस्य कर्म्मेत्यन्वयः। उपलक्षणमिदम्, सनकादिमनुष्येभ्यो हन्तेत्यत्र हन्तयोगे चतुर्थीदर्शनात्। मनुष्येभ्यो दानं तत्कर्म्म वा हन्तपदार्थः।१३०।

ननु नमस्यति नमस्करोति वा देवानित्यत्र नमस्यतेर्नमस्करोतेश्च नत्यनुकूलो व्यापारोर्थः, "नमोवरिवश्चित्रङः क्यच्" इति सूत्रेण क्यज्विधानात्। तत्र "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इति [1]सूत्रात् करण इत्यस्यानुवृत्तेः [2]शब्दायतिवन्नमस्यतिरकर्म्मक एव स्यात्, [3]धात्वर्थान्तर्भूतकर्म्मत्वात्। एवं नमस्करोतिरपि।

यदि च नमस्यतिनमस्करोतिधातू [4]नतावेव रूढौ, न तु यौगिकौ, व्याकरणव्युत्पादनं पुनरुणादिव्युत्पादनवद्बालोपलालनम्, तथा च

**हन्तयोग** इति। इदमप्युपलक्षणं हुँफट्वौषडादीनाम्[5]। तेन कवचाय हुँ, अस्त्राय फट्, नेत्राय वौषडित्यादौ चतुर्थ्याः साधुत्वं बोध्यम्।१३०।

**नत्यनुकूलो व्यापार** इति। नमःशब्दस्य नतिः क्यचः करणरूपो व्यापारः, अनुकूलत्वं तयोस्संसर्गमर्य्यादया लब्धमिति भावः। **एवं नमस्करो-**

---

१ सूत्रात् करण इत्यस्यानुवृत्तेः इत्यस्य स्थाने सूत्रस्यानुवृत्ते इति पा० मु० पु०।

२ तथा च इत्यधिकः पा० मु० पु०।

३ नमस्यतेर्नमस्करोतेश्च नमस्कारानुकूलप्रयत्नार्थकतया फलसमानाधिकरणव्यापारवाचित्वादकर्म्मकतया नमोयोगे द्वितीयानुपपत्तिः प्रत्युत चतुर्थी एव स्यादिति भावः।

४ नमस्यतिनमस्करोतिधात्वोः नमस्कारे रूढत्वे च फलस्योत्कर्षप्रकारकप्रतिपत्तेर्व्यधिकरणवाचित्वात् सकर्म्मकतया द्वितीयोपपत्तावपि नमोयोगे चतुर्थीविधानेन द्वितीयाचतुर्थ्योर्विकल्पः स्यादिति तात्पर्यम्।

५ एतदर्थमेव सूत्रे चकारः पठितः। काशिकाकृतस्तु चकारः पुनरस्यैव समुच्चयार्थः। तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति, स्वस्ति गोभ्यो भूयात्, स्वस्ति ब्राह्मणेभ्यो भूयादित्याहुः।

देवान्नमतीतिवद्देवान्नमस्करोतीत्यपि [1]विषयत्वस्वरूपगौणकर्म्मार्थक-द्वितीयायोगादुपपद्यत इत्युच्यते, यदि [2]च सकर्म्मकलक्षणोक्तरीत्या मुण्डयतेरिव नमस्यतेरपि सकर्म्मकत्वमित्यभिधीयते, तदा स्वयम्भुवे नमस्कृत्येत्यादिप्रयोगोनुपपन्नः, [3]"उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायात् ।

उच्यते—

**अध्याहृततुमन्तस्य धातोः कर्म्मानुशंसति ।**
**फलेभ्यो गच्छतीत्यादौ चतुर्थी व्याक्रियोदिता ॥१२१॥**

**विद्यते तावत् [4]"क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" इति**

**तिरपी**ति । तत्र कृधातोरेव व्यापारोर्थः । **सकर्म्मकलक्षणोक्तरीत्ये**ति । द्वितीयासाकाङ्क्षेत्यादिलक्षणोक्तरीत्येत्यर्थः ।

**उच्यत** इति । **स्वयम्भुवे नमस्कृत्ये**त्यादौ चतुर्थ्युपपत्तिरुच्यत इत्यर्थः । **व्याक्रिया** व्याकरणम्, **तेनोदिता** कथिता तदनुशिष्टेति यावत् । **स्थानिन**

१ ० कर्म्मत्व० इत्यधिकः पा० मु० पु० ।

२ च इति ना० मु० पु० पा० ।

३ पदान्तरयोगनिमित्तिका विभक्तिः उपपदविभक्तिः, क्रियावाचिधातुयोगनिमित्तिका विभक्तिः कारकविभक्तिः, उभयोः प्राप्ते कारकविभक्तेर्बलीयस्त्वमित्यर्थः । तच्च न्यायसिद्धम् । तथाहि—क्रियाकारकयोर्हि सम्बन्ध अन्तरङ्गः । उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति बलाबलभावस्सुतरामिति ध्येयम् ।

४ क्रिया अर्थः प्रयोजन यस्याः सा क्रियार्था, क्रियार्था क्रिया उपपद यस्येति विग्रहः । तुमुनो विशेषणमेतत् । उपोच्चरित पदमुपपदम् । क्रियायाः क्रियार्थत्वे "तुमुन्ण्वुलौ क्रियाया क्रियार्थायाम्" इति सूत्रेण तुमुनो विधानात् क्रियार्थोपपदत्व फलविधया क्रियाप्रयोज्यत्वरूप बोध्यम् । यथा—फलेभ्यो यातीत्यत्र फलाहरणक्रियार्था यानक्रिया, तद्वाचके उपपदे आहरणक्रिया प्रति फलाना कर्म्मत्वाच्चतुर्थीति ।

क्रियान्तरगुणीभूतक्रियावाचकधातुप्रकृतिकस्य तुमुनः स्थानिनो नित्यमप्रयुज्यमानस्य कर्म्मणि चतुर्थी स्यादित्यर्थिका व्याक्रिया। फलेभ्यो गच्छतीत्यत्राहर्त्तुमित्यध्याहृतम्, तत्कर्म्माभिधायिनी चतुर्थी। तथा च फलकर्म्मकाहरणार्थकं गमनं वाक्यार्थः। एवं स्वयम्भुवे नमस्कृत्येत्यादेरपि प्रीणयितुमित्यस्याध्याहारेण स्वयम्भुवं प्रीणयितुन्नमस्कृत्येत्यन्वयबोधः ।१३१।

**उपकारकता नाम तादर्थ्यं तस्य भूयसी।**
**विधा तादर्थ्यविहितचतुर्थ्या प्रतिपाद्यते ॥१३२॥**

तादर्थ्ये [1]विहिता चतुर्थी, तादर्थ्यञ्चोपकारकत्वम्, [2]सोर्थो यस्येति बहुव्रीहेः। अनन्तरो भावप्रत्ययोर्थार्थवतोस्सम्बन्धमभिधत्ते, "कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन" इति हरेरनुशासनात्। अर्थार्थवतोश्चोपकार्य्योपकारकभाव एव सम्बन्धः। उपकारकता च बहुविधा। क्वचित्कार्य्यकारणभावः, पटाय तन्तवो घटाय

इत्यस्यार्थो **नित्यमप्रयुज्यमानस्ये**ति ।१३१।

**तादर्थ्यविहिते**ति। "तादर्थ्ये चतुर्थी वाच्या" इति वार्त्तिकानुशिष्टेत्यर्थः। **बहुव्रीहेरि**ति। अर्थपदस्योपकारपरतया विग्रहवाक्याद्यन्निरूपितोपकार्य्यतावान् स इत्यस्य, समासाच्च तन्निरूपितोपकारकतावतो बोधः। तत्र निरूपितत्वस्य संसर्गमर्य्यादया तत्पदार्थस्य प्रकृत्या लाभादुकारकतामात्रं चतुर्थ्यर्थ इति भावः। **भावप्रत्यय** इति। तदर्थस्य भाव इत्यर्थे "गुणवचनब्राह्मणादिभ्यः" इति सूत्रेण विहितः ष्यञ्प्रत्यय इत्यर्थः। घटत्वमित्यादौ भावविहितत्वप्रत्ययादीनामसाधारणधर्म्मवाचकत्वात्सम्बन्धाभिधायकत्वस्य कथन्तानिवृत्तयेनुशासन-

---

१ विहिता इत्यस्य स्थाने अनुशिष्टा इति मु० पु० पा०।
२ तस्यार्थो यस्येत्यपि विग्रहो बोध्यः। तेन सोर्थ इत्यनेन जनकत्वरूपं तस्यार्थ इत्यनेनोपकारकत्वमपकारकत्वञ्च लभ्यते।

दण्ड इत्यादौ। क्वचित्तन्निष्ठोपकारजनकत्वम्, यथा—[1]अश्वाय घासो [2]ब्राह्मणाय दधीत्यादौ। क्वचित्तदपकारकत्वम्, यथा—मशकेभ्यो धूमो हरिणाय वागुरेत्यादौ। तादर्थ्यप्रकाराः सर्वे कारणत्वोपकारकत्वापकारकत्वानि यथायथं चतुर्थ्यर्थाः ।१३२।

**तुमर्थाद्भाववचनादिति सूत्रेण साधिता।**
**चतुर्थी तुल्यकर्त्तृत्वमुद्देश्यत्वञ्च शंसति ॥१३३॥**

"तुमर्थाच्च भाववचनात्" इति सूत्रेण विहिता चतुर्थी तुमर्थावभिधत्ते। तुमर्थस्तु तुल्यकर्त्तृकत्वं तदुद्देश्यत्वञ्च। पक्तुं गच्छतीत्यत्र पाकतुल्यकर्त्तृका पाकोद्देश्यका गमनक्रिया वाक्यार्थः।

शाब्दिकास्तु "भाववचनाश्च" इति सूत्रेण भावे विहिता

माह—**कृत्तद्धितेति**। **क्वचित्तदपकारकत्वमिति**। अपकारकत्वमपि चतुर्विधं नाशकत्वमपचायकत्वमनुत्पादकत्वं दुःखजनकत्वञ्च। तत्राद्यं तापायोशीरं विषाय सुधेत्यादौ। द्वितीयं दन्तिने नवबन्धः जलाशयेभ्य उष्णोपगम इत्यादौ। तृतीयं दाहाय मणिर्न्नरकाय दीपदानमित्यादौ। चतुर्थमुदाहरति—**यथेति**।

यत्तु इच्छाप्रयोज्येच्छाविषयव्यापाररूपमेव तादर्थ्यञ्चतुर्थ्यर्थः। तदेकदेश इच्छायां प्रकृत्यर्थान्वय इति, तदसत्, एकदेशान्वयस्य व्युत्पत्तिवैचित्र्योपगमात् सम्भवेपि अश्वाय घास इत्यादिदर्शितस्थलेपु "दुःखायैव दयालुता..." इत्यादौ च दुःखेच्छाया अप्रसिद्धेश्चतुर्थ्यनुपपत्तेः।

**यथायथमिति**। पटाय तन्तव इत्यादौ कारणत्वादिकं प्रत्येकमेव चतुर्थ्यर्थ इत्यर्थः। अनुगमश्च सर्वनामरीत्या कर्त्तव्यो नानार्थत्वं वोपगन्तव्यम्। १३२।

---

१ अत्रोपचायकत्वरूपमुपकारकत्वम्।

२ सुखजनकत्वरूपमुपकारत्वम्।

घञादयः क्रियार्थायां क्रियायां विधीयन्ते । ततश्च तादर्थ्यस्य घञा प्राप्तत्वात् प्रातिपदिकार्थमात्रे प्रथमा प्रसक्ता, तदपवादाय "तुमर्थाच्च भाववचनात्" इत्यनेन चतुर्थ्यनुशिष्यते ।

एतेन भावघञन्तात् पाकादिशब्दात्तादर्थ्यचतुर्थ्या पाकाय गच्छतीत्यादिप्रयोगोपपत्ताविदन्तुमर्थादित्यनुशासनमनर्थकमिति न समर्थम् ।

नन्वेवमपि भाववचनानां तादर्थ्यार्थकत्वविधायकमनुशासनमेव व्यर्थम्, भावघञन्तात्तादर्थ्यचतुर्थ्यैव पाकाय व्रजतीत्यादिप्रयोगोपपत्तेरिति चेन्न,

क्रियायाः क्रियान्तरतादर्थ्यविवक्षायां विशेषविहितेन तुमुना घञोपवादात् पाकायेत्यस्यानुपपत्त्या घञो विशेषविध्यन्तरावश्यकत्वादित्याहुः । १३३ ।

चतुर्थ्यर्थो ज्ञापितत्वमुत्पातत्वोपलक्षिते ।
गुणीभूतं भाति यथा वाताय कपिला तडित् ॥१३४॥

वाताय कपिला तडिदित्यत्र वस्तुत उत्पातभूतायां तडिति वातविशेषितं ज्ञापकत्वं चतुर्थ्या प्रतिपाद्यते । उत्पातास्तु

**क्रियार्थायामि**ति । क्रियायाः क्रियार्थत्वं फलविधया क्रियाप्रयोजकत्वम् । **तादर्थ्यस्ये**ति । प्रयोज्यत्वस्वरूपस्येत्यादिः । **प्रथमा प्रसक्ते**ति । तादृशघञन्त पाकशब्दस्य कर्म्मादिसंज्ञाविरहेण द्वितीयादीनामप्राप्तत्वादुत्सर्गतः प्रातिपदिकार्थमात्रे विहिता प्रथमा प्रसक्तेत्यर्थः ।

**एतेन** चतुर्थ्याः प्रथमापवादकतया सप्रयोजनत्वेन । **न समर्थमि**ति । न समीचीनार्थकमित्यर्थः । १३३ ।

ज्योतिस्संहितायामुपलक्षिता दिव्यभौमान्तरिक्षा बहुविधाः । उत्पातत्वमपि वाक्यार्थबुद्धौ विषय इति पुनरप्रामाणिकम् । धातुयोगे कारकविभक्तीनामिवोत्पातवाचिपदयोगे ज्ञापकत्वार्था चतुर्थी साधुरिति सूचयितुम् "उत्पातेन ज्ञापिते च" इत्यनुशासने उत्पातग्रहणात् । १३४ ।

**ज्योतिस्संहितायामि**ति । मयूरचित्रकादिग्रन्थेष्वित्यर्थः । **बहुविधा** इति । विद्युद्वैकृतादयः । **अप्रामाणिकत्वादि**ति । एकस्यानुगतस्य तस्याभावात् । **उत्पातवाचिपदयोग** इति । [1]उत्पातपरिभाषाविषयतावच्छेदको यो यो धर्म्मस्तद्विशिष्टप्रतिपादकशब्दयोग इत्यर्थः । १३४ ।

( इति सटीकपदवाक्यरत्नाकरेकारकचतुर्थीविवरणम् । )

---

१ प्राणिनिष्ठशुभाशुभसूचकभूतविकाराः वैद्युद्वैकृतादयः महोल्कासंप्लवनादयश्च उत्पाताः । तदुक्तम्—

"वाताय कपिला विद्युत् ।
आतपायातिलोहिनी ॥
पीता वर्षाय विज्ञेया ।
दुर्भिक्षाय सिता भवेत् ॥..."

इत्यादि । तथा चैवमादिर्यश्शास्त्रकारीयसङ्केतस्तादृशविषयतावच्छेदकाः रक्तोपरागत्वमहोल्कासप्लवनत्वविद्युद्वैकृतत्वादयस्तद्विशिष्टवाचकाः रक्तोपरागादयस्तेषा योगे चतुर्थीति भावः ।

## ( अथ कारकपञ्चमीविवरणम् )

**ङसिभ्याम्भ्यस इत्येषा विभक्तिः पञ्चमी तया ।**
**अपायत्वं ध्रुवत्वञ्चेत्यपादानत्वमुच्यते ॥१३५॥**

ङसिभ्याम्भ्यसिति पञ्चमी । तत्र ङकारोनुबन्धः । तरोः पत्रं पततीत्यत्रापादानत्वं पञ्चम्यर्थः । तच्च ध्रुवत्वे सति तत्तत्क्रियाजन्यविभागाश्रयत्वम्, 'ध्रुवमपायेपादानम्" इत्यनुशासनात् । ध्रुवत्वं तत्क्रियानाविष्टत्वम् । तथा च तत्क्रियानधिकरणत्वे सति तत्क्रियाजन्यविभागाश्रयत्वम् । अतएव न पत्रस्य स्वनिष्ठक्रियापादानत्वं न वा कुड्यात्पततोश्वात्पततीत्यादौ पतनान्तरवत्यश्वे तदितरकर्तृकपतनापादानत्वहानिः ।

**अनुबन्ध** इति इकास्याप्युपलक्षणम्, तयोः क्वचिदपि प्रयोगेश्रूयमाणत्वान्न [1]वाचकताकुक्षिप्रवेशः । **अपादानत्वमि**ति । "अपादाने पञ्चमी" इति सूत्रेपादानपदस्य पूर्ववद्भावप्रधानत्वात् । **इत्यनुशासनादि**ति । तदर्थश्च ध्रुवं [2]यदपाययुक्तमपाये विभागे साध्ये यदवधिभूतं तत्कारकमपादानसंज्ञं स्यादिति । **विभागाश्रयत्वमि**ति । अपादानत्वमिति शेषः । **अतएव** विशेष्यविशेषणयोरुपादानादेव । **न पत्रस्ये**ति, तत्र विशेष्यस्याभावात् । विशेष्यविशेषणयोरुभयत्रैकैव क्रिया ग्राह्येत्याशयेनाह—**न वे**ति । **हानिरि**ति । तथा च क्रियाविशिष्टत्वमपादानत्वम् । वैशिष्ट्यं स्वानधिकरणत्वस्वजन्यविभागाश्रयत्वाभ्या बोध्यमित्याशयः ।

---

१ तथा च अस्त्वभ्यान्त्वभ्यस्त्वैरैव वाचकत्वमिति भावः ।

२ अपायो विश्लेषस्सम्बन्धापगमस्सयोगनाशरूप इति यावत् । विश्लेषस्य साध्यत्वं क्रियाजन्यत्वरूपम् । तेन स्वतःसिद्धविश्लेषवतो ध्रुवस्य नापादानत्वप्रसक्तिरतो मेरोरयमायातीति न प्रयोग इति ध्येयम् ।

यत्तु हरिणा—

"अपाये यदुदासीनं चलं वा यदि वाचलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥
पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते ॥
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्म्मजे ।
विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते ॥
मेषान्तरक्रियापेक्षमवधित्वं[1] पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं[2] कर्त्तृत्वञ्च पृथक् पृथक् ॥

इत्युक्तम् ।

तत्रापाये विभागे सतीति शेषः । उदासीनं विभागजनकक्रियानधिकरणम् । अतदावेशाद् विभागजनकक्रियानधिकरणत्वात् । ननु परस्परस्मान्मेषावपसरत इत्यादावुभयकर्म्मजन्ये विभागे विभागजनकक्रियानधिकरणत्वं न कस्यापि मेषस्येत्याशङ्कते—"उभावपि..." इत्यादिना । न विभागजनकत्वेन क्रिया प्रकृते निवेशनीया, किन्तु ताद्रूप्येणेति नानुपपत्तिरिति समाधत्ते—"प्रविभक्ते..." इत्यादिना ।

दर्शितहरिकारिका(?)त्रयं (-चतुष्टयं) विवृण्वन्नुक्तार्थसंवादकत्वं तेषामित्याशयेनाह—**तत्रापाय** इति । **सतीति शेष** इति । अन्यार्थकसप्तम्या अत्रासङ्गतेरिति भावः । **क्रियानधिकरणत्वादि**ति । तथा च निरुक्तापादानत्वमेव तस्याभिमतमित्याशयः । **प्रविभक्ते** इति । भिन्ने इत्यर्थः । तथा चैकमेषक्रियान-

---

१ अवधित्व विभागजनकतत्क्रियावदन्यत्वे सति तत्क्रियाजन्यविभागवत्त्वम् । पृथक् पृथक् क्रियायाः क्रियात्वेन विभागजनकत्वेन वानिवेशाद् भिन्न भिन्नमित्यर्थः । यद्यतिरिक्तशक्तिस्वरूपमवधित्वम्, तदाप्येतदभिव्यङ्ग्यमेव तदिति ध्येयम् ।

२ कर्त्तृत्वं क्रियाश्रयत्वम् । अत्रापि क्रिया तद्रूपेणैव निविशत इति भावः ।

तुस्तथापिपर्य्यायः। नन्वपादानसंज्ञावरुद्धे कथं कर्त्तृसंज्ञा मेषयोः, आकडारादेकसंज्ञाप्रतिज्ञानादित्याशङ्क्य भिन्नभिन्नक्रियानिरूपित-कारकान्तरसमावेशो न विरुद्ध इत्यभिप्रायेणाह—"मेषान्तर..." इत्यादि। विवरणवशात्कथित एवार्थे पर्य्यवसानम्।

तत्र क्रियादेरन्यलभ्यत्वाद्विभागजनकत्वं भेदप्रतियोगितावच्छे-दकत्वञ्च पञ्चम्यर्थः। तथा च तरोः पत्रं पततीत्यत्र तरुसमवेत-विभागजनिका तरुनिष्ठभेदप्रतियोगितावच्छेदिका च पतनक्रिया वाक्यार्थः। पञ्चम्यर्थे विभागे तदर्थैकदेशे भेदे च तरुत्वादिनैक एव प्रकृत्यर्थो यौगपद्येनान्वेति। तेन पत्रान्तरनिष्ठान्योन्याभावप्रति-योगितावच्छेदिकामेतत्पत्रस्य तर्वादिविभागजनिकामेतत्क्रियामादाय पत्रात्पत्रं पततीति न प्रयोगः

यत्तु विभाग एव पञ्चम्यर्थः। न चैवं पत्रात्पत्रं पततीति-प्रयोगप्रसङ्गः, पत्रस्य परया [1]कर्त्तृसंज्ञयापादानसंज्ञाबाधात्, संज्ञाया

धिकरणत्वस्यापरस्मिन् मेषे सत्त्वात्तद्विशिष्टत्वं तत्राप्यक्षतमेवेति भावः। **तथापिपर्य्याय** इति। यद्यपि विभागजनकत्वावच्छिन्नक्रियानधिकरणत्वं तत्र बाधितम्, तथाप्येकक्रियामादाय न हानिरित्यर्थः। **न विरुद्ध** इति। आकडार-सूत्रेणैकक्रियानिरूपितसंज्ञाद्वयस्यैव निषेधादिति भावः।

**यौगपद्येनान्वेती**ति। तरुपदात्तरूणां तत्तद्व्यक्तित्वेनानुपस्थितेरननुगम-प्रसङ्गाच्च तरुत्वेनोपस्थितायास्तद्व्यक्तेस्तेनैव रूपेण द्वितीयार्थवद् व्युत्पत्ति-वैचित्र्येणाधेयत्वसंसर्गेणान्वय इत्यर्थः। एकस्यैव तरोरुभयान्वये प्रयोजन-माह—**तेने**ति।

भेदप्रतियोगितावच्छेदकत्वस्य पञ्चम्यर्थत्वानुपगमेपि पत्रात्पत्रं पततीति-प्रसङ्गं वारयताम्मतं निरसितुमाह—**यत्त्वि**ति। **बाधादि**ति। कर्त्तृसंज्ञायाः

---

१ ० संज्ञाया ० इति मु० पु० पा०।

एव विभक्तिनिष्पादकत्वादिति ।

[1]तन्न, एवमपि तरोः पत्रं पतति न पत्रादित्यत्र पत्रसमवेतविभागजनकत्वाभावबोधने बाधप्रसङ्गः । [2]तत्र हि न गुणात्पततीतिवद्विभागे न प्रकृत्यर्थसमवेतत्वस्य न वा पतने तत्समवेतविभागजनकत्वस्याभावः प्रत्येतुं शक्यते, अयोग्यत्वात् ।१३५।

ननु सिद्धान्तेपि पत्रसमवेतक्रियायां पत्रनिष्ठविभागजनकत्वपत्रान्तरनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसत्त्वान्निषेधोनुपपन्नः । न च तत्तत्पत्रापादानकत्वसमुदायो निषिध्यत इति पूर्वोक्तप्रायं साम्प्रतम्,

परत्वादिति भावः ।

**विभागे**ति । जनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकविभागाभावस्य धात्वर्थपतने बोधने इत्यर्थः । विभागमात्रस्य पञ्चम्यर्थत्वे जनकत्वस्य संसर्गताया एवोपगमात् । **बाधप्रसङ्ग** इति, पत्रनिष्ठायाः पतनक्रियायाः स्वाधिकरणपत्रनिष्ठविभागजनकत्वात् । यथा गुणान्न पततीत्यादौ भवन्मतेपि प्रकृत्यर्थस्याधेयत्वसम्बन्धाभाव एव नञा पञ्चम्यर्थैकदेशे विभागे बोधनीयः, गुणसमवेतत्वस्य विभागेयोग्यतयान्वयासम्भवात्, तथैवास्मन्मतेपि न पत्रादित्यादौ पञ्चम्यर्थे विभागे प्रकृत्यर्थस्याभावो बोधनीय इत्याशङ्कां निराकुरुते—**तत्र ही**ति । तथा च गुणसमवेतत्वस्यायोग्यतया विभागेनन्वयात्तदभावस्य तत्रान्वयः स्वीक्रियते, अत्र तु तद्वैपरीत्यान्न तथान्वयसम्भव इत्यर्थः । १३५ ।

भेदप्रतियोगितावच्छेदकत्वस्य पञ्चम्यर्थत्वोपगमेपि पत्रान्न पतति पत्रमित्यादावन्वयानुपपत्तिमाशङ्कते—**नन्वि**ति । **सिद्धान्तेपि** । न्यायसिद्धान्तेपीत्यर्थः । **निषेधोनुपपन्न** इति । पत्रात्पत्रं पततीत्यस्यापत्तिश्चेत्यपि बोध्यम् । **तत्तत्पत्रापादानकत्वे**ति । तत्तत्पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वेत्यर्थः ।

---

१ तन्न इत्यस्य स्थाने तत्र इति मु० पु० पा० ।

२ तत्र इत्यस्य स्थाने अत्र इति मु० पु० पा० ।

युगसहस्रेणापि ग्रहीतुमशक्यत्वात् । न च स्ववृत्तिविभागजनकत्वस्व-वृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसंसर्गावच्छिन्नप्रतियोगिताकः पत्र-सामान्याभाव एव क्रियायां भासते, पञ्चमी तु प्रतियोगितावच्छेदक-संसर्गानुवादिकेत्यपि युज्यते, वृत्त्यनियामकसंसर्गे प्रतियोगितावच्छे-दकत्वस्याभावात्, भावे वा विभागप्रतियोगिकत्वविशिष्टजनकत्व-स्वरूपसाक्षात्संसर्गावच्छिन्नप्रतियोगिताकाभावस्य पत्रापादानकक्रिया-यामपि निराबाधतया पत्रात्पतति पतङ्गे न पत्रात्पततीति प्रयोग-प्रसङ्गात् । न च परम्परामुद्रया तादृशसंसर्गावच्छिन्नप्रतियोगिता-काभाव एव पञ्चम्यन्तपत्रपदसमभिव्याहृतनञा बोध्यते, परम्परा हि विभागनिरूपकत्वजनकत्वान्येव परस्परविशृङ्खलितानि संसर्गः, तत्र पत्रत्वावच्छिन्नप्रतियोगितानिरूपिता विभागसंसर्गता तया निरूपिता

**पूर्वोक्तप्राय**मिति । द्वितीयाविवरणे दर्शितमित्यर्थः । **ग्रहीतुमशक्यत्वादि**ति । तत्तद्व्यक्तित्वेन पत्राणामसर्वज्ञदुर्ज्ञेयत्वादित्यर्थः । **संसर्गानुवादिके**ति । एतदपि पूर्वोक्तप्रायमेवेति बोध्यम् । दर्शितोभयसंसर्गस्य वृत्त्यनियामकत्व-मित्याशयेनाह—**वृत्त्यनियामकसंसर्ग** इति । यो हि संसर्गो विशिष्टबुद्धि नार्जयति स एव न प्रतियोगितावच्छेदकः, प्रकृते तु तरोः पत्रं पततीत्यादि-प्रयोगादुक्तोभयसम्बन्धस्य विशिष्टबुद्धिजनकत्वात् प्रतियोगितानवच्छेदकत्वम-प्रामाणिकमित्याशयेनाह—**भावे वे**ति । **विभागप्रतियोगित्वे**ति । विभाग-निष्ठनिरूप्यतानिरूपितनिरूपकतावज्जनकत्वस्यैव प्रथमसंसर्गार्थतया पतङ्गनिष्ठे पतने जनकत्वमात्रस्य सत्त्वेपि पतनप्रतियोगिकत्वतादृशपतनानुयोगिकत्वयोर-भावात्पत्रपतनयोस्संसर्गताया दर्शितविशिष्टसंसर्गेसम्भवादित्यर्थः । **साक्षा-त्संसर्गे**ति । तस्य तत्त्वमनुपदमेव प्रतिपादयिष्यति । **विशृङ्खलितानि** विशेष्यविशेषणभावानापन्नानि । **विभागसंसर्गते**ति । विभागस्य पत्रप्रति-योगिकत्वात्तवनुयोगिकत्वाच्चेति भावः । **तया** विभागनिष्ठसंसर्गतया ।

**निरूपकत्वे, तया जनकत्वे संसर्गता, तन्निरूपिता चानुयोगिता नञर्थाभावे भासते, विभागीयत्वविशिष्टजनकतास्वरूपसाक्षात्संसर्गे विशिष्टधर्म्मावच्छिन्ना जनकतावृत्तिरेकैव संसर्गता प्रतियोगित्वानुयोगित्वाभ्यान्निरूप्यत इति विवेक इति वाच्यम्, परम्परासंसर्गतासु**

**निरूपिता निरूपकत्वे संसर्गते**ति परेणान्वयः । **तया** निरूपकत्वनिष्ठ-संसर्गतया । **तन्निरूपिता चे**ति । जनकत्वनिष्ठसंसर्गतानिरूपितप्रतियोगिता-निरूपितेत्यर्थः । **नञर्थाभावे** इति । निरुक्तजनकत्वस्य तदीयप्रतियोगिता-वच्छेदकसंसर्गतयाभावस्य तन्निष्ठसंसर्गतानिरूपितप्रतियोगिताकत्वं निराबाध-मिति । इदमुपलक्षणम् । द्वितीयसंसर्गतापि भेदानुयोगित्वप्रतियोगिता-वच्छेदकत्वानि विशृङ्खलितान्येव संसर्गः । तत्र भेदे पत्रत्वावच्छिन्ननिरूपिता संसर्गता, तया निरूपितानुयोगित्वे, तया प्रतियोगितावच्छेदकत्वे संसर्गता, तन्निरूपितानुयोगिता नञर्थाभावे भासते इत्यपि बोध्यम् । **विशिष्टधर्म्मा-वच्छिन्ने**ति । विभागनिष्ठनिरूप्यतानिरूपितनिरूपकताविशिष्टजनकत्वत्वा-वच्छिन्नेत्यर्थः । **प्रतियोगितानुयोगित्वाभ्यामि**ति । पत्रत्वावच्छिन्नप्रति-योगितया अभावत्वावच्छिन्नानुयोगितया च तादृशजनकतात्वावच्छिन्नैकैव संसर्गता निरूप्यत इत्यर्थः । **इति विवेक** इति । साक्षात्परम्परासंसर्गयो-रयमेव विशेषो यत्प्रथमे एकैव संसर्गता, द्वितीयेनेकेत्यर्थः । एवञ्चोक्तस्थले पत्रत्वावच्छिन्नप्रतियोगितानिरूपितनिरुक्तविशिष्टधर्म्मावच्छिन्नजनकत्वनिष्ठ - संसर्गतानिरूपितप्रतियोगिताकाभावस्य तादृशजनकतायाः पत्रत्वावच्छिन्न-प्रतियोगिताकत्वविरहेण पतङ्गपतने सत्त्वेपि यथा वह्नित्वावच्छिन्नप्रतियोगिता-निरूपितसंयोगत्वावच्छिन्नसंसर्गतानिरूपितप्रतियोगिताकाभावस्य ह्रदादौ सत्त्वेपि संयुक्तसंयोगेन वह्न्यभावस्य तत्रासत्त्वम्, तत्र परम्परासंसर्गतायां प्रथमसंयोगत्वावच्छिन्नसंसर्गताया एव वह्नित्वावच्छिन्नप्रतियोगितानिरूपित-

---

१ जनकतावृत्तिरेकैव ससर्गता इत्यस्य स्थाने ससर्गता जनकता इति मु० पु० पा० ।

**प्रथमा प्रतियोगितया चरमा पुनरनुयोगितया, प्रथमैवानुयोगितया चरमैव प्रतियोगितया निरूप्यत इत्यत्र विनिगमकाभावात् ।**

**दृश्यन्ते च प्राचान्निबन्धेषु प्रतियोगिविश्रान्तास्संसर्गरचनाः ।**

त्वादन्तिमायां तस्या तन्निरूपितत्वविरहात्, तथा पत्रत्वावच्छिन्नप्रतियोगिता-निरूपितविभागत्वावच्छिन्नसंसर्गतानिरूपितनिरूपकत्वनिष्ठसंसर्गतानिरूपित - जनकत्वनिष्ठसंसर्गतानिरूपितप्रतियोगिताकाभावस्य तत्राभावान्नोक्तप्रयोगप्रसङ्ग इत्याशयः । **प्रथमा** प्रकृते विभागत्वावच्छिन्ना । **प्रतियोगितया** पत्रत्वा-वच्छिन्नप्रतियोगितया **निरूप्यत** इत्यग्रिमेणान्वयः । **चरमा** जनकतात्वा-वच्छिन्ना संसर्गता । **अनुयोगितया** नञर्थाभावत्वावच्छिन्नानुयोगितया । **प्रथमैवे**त्याद्येवकारद्वयेन तदतिरिक्तसंसर्गतानामनुयोगित्वादिनिरूपितत्व-व्यवच्छेदः । **विनिगमकाभावादि**ति । जनकतानिष्ठाया विशिष्टसंसर्गतायां पत्रत्वावच्छिन्नप्रतियोगितानिरूपितत्वस्योपगमे परम्परासंसर्गताघटकजनकत्व-निष्ठसंसर्गताया तदभावस्य प्रमाणाभावेनायुक्तत्वादित्यर्थः । तथा चैकसंसर्गता-वत्परम्परासंसर्गाणामपि प्रतियोग्यनुयागिनोर्भेदाभावेनोक्तविवेकविरहेण दर्शित-प्रयोगप्रसङ्गो दुर्वार एवेति भावः ।

यदि परम्परासंसर्गतासु प्रथमाया एव प्रतियोगितानिरूपितत्वं चरमाया एवानुयोगितानिरूपितत्वमिति नियमस्तदा चिन्तामण्याद्याकरग्रन्थेषु व्याप्य-व्यापकभावादिसंसर्गाणा प्रतियोगिवृत्तित्वोक्तिर्विरुद्धा स्यादित्यत आह— **दृश्यन्ते चे**ति । यथा साक्षात्संसर्गस्य संयोगादेर्द्विनिष्ठतया घटभूतलोभय-वृत्तित्वेपि प्रतियोगितया घटमात्रे सत्त्वम्, अतो भूतलस्यैव संयोगेन घटवत्त्वन्न तु घटस्य भूतलवत्त्वम्, तथैव व्यापकत्वादिपरम्परासंसर्गाणामपि प्रतियोगि-मात्रस्यैवानुयोगिनि वैशिष्ट्यधीजनकत्वम्, न तु अनुयोगिनोपि प्रतियोगिनि तथात्वम् । तेन वह्नेरेव व्यापकतया धूमवत्त्वम्, न तु धूमस्यापि वह्निमत्त्वमित्य-नुभवसिद्धम् । तत्र चरमसंसर्गताया अनुयोगितामात्रनिरूपितत्वे प्रतियोगिनि

**न चोभयप्रतियोगितानुयोगिताभ्यां प्रथमचरमसंसर्गतयोर्निरूपणेऽपि विशिष्टसंसर्गतातो विवेक उपपद्यत इति वाच्यम्, विलोमानुलोमपरम्परासंसर्गावच्छिन्नप्रतियोगिताकाभावयोरविशेषप्रसङ्गात् ।**

धूमादौ तादृशसंसर्गविरहप्रसङ्गादुक्तानुभवानुपपत्तिरेव स्यादित्याशयः। **न चोभये**ति । उभयत्वं प्रतियोगितायामनुयोगितायाञ्चान्वितम् । तथा च विभागत्वावच्छिन्ना प्रथमा संसर्गता पत्रत्वावच्छिन्नप्रतियोगितयेवाभावत्वावच्छिन्नानुयोगितयापि निरूप्यते, जनकतात्वावच्छिन्ना चरमा संसर्गताप्यभावत्वावच्छिन्नानुयोगितयेव पत्रत्वावच्छिन्नप्रतियोगितयापि निरूप्यत इत्यस्य विनिगमनाविरहेण सिद्धावपि विशिष्टधर्म्मावच्छिन्ना संसर्गता एकैव, निरुक्तपरम्परासंसर्गता तु भिन्नेत्यावतैव तयोर्विवेक इति नोक्तप्रसङ्ग इति भावः। **विलोमानुलोमे**ति । विभागनिरूपकजनकतावत्त्वजनकतानिरूपकविभागाश्रयत्वादिसंसर्गावच्छिन्नप्रतियोगिताकाभावयोरित्यर्थः । **अविशेषप्रसङ्गादि**ति । पत्रत्वावच्छिन्नप्रतियोगिताकत्वस्य विभागत्वावच्छिन्नसंसर्गतायां सत्त्वाज्जनकतात्वावच्छिन्नसंसर्गतायाञ्चासत्त्वादेव तयोर्वैलक्षण्यम्, तच्च तत्रापि निरुक्तरीत्या तत्सत्त्वेऽप्यनुपपन्नमेव स्यादित्यर्थः । अत्र प्रथमाया एव प्रतियोगितानिरूपितत्वमित्यत्र संयोगेन वह्न्यभाववत्यपि ह्रदादौ संयुक्तसंयोगावच्छिन्नप्रतियोगिताकस्य तस्यासत्त्वं निर्विवादम् । तच्च परम्परासंसर्गतासु चरमायास्संयोगत्वावच्छिन्नसंसर्गताया अपि वह्नित्वावच्छिन्नप्रतियोगितानिरूपितत्वेऽनुपपन्नमेव स्यादतस्तदन्यथानुपपत्तिरेव तत्र विनिगमकम् । अतएव संयोगसंसर्गावच्छिन्नप्रतियोगिताकवह्निसामान्याभावबुद्धिं प्रति संयोगत्वावच्छिन्नसंसर्गताकवह्निनिश्चयस्य प्रतिबन्धकत्वमुपपन्नम्, वह्नित्वावच्छिन्नप्रतियोगितानिरूपितसंयोगत्वावच्छिन्नसंसर्गतानिरूपितह्रदत्वावच्छिन्नानुयोगिताकनिश्चयत्वस्यैव तादृशप्रतिबन्धकतावच्छेदकत्वात्, अन्यथा महानसीयसंयोगेन वह्निप्रकारकस्यापि निश्चयस्य तादृशबुद्धिप्रतिबन्धकतया तदसंग्रहभयेन प्रतिबन्धकतावच्छेदकीभूतसंसर्गतायां संयोगत्वमात्रा-

विस्तरतो व्युत्पादितश्च सिद्धान्ततत्त्वे परम्परायाः संसर्गत्वस्यैव नितरां प्रतियोगितावच्छेदकत्वस्य निराकरणमिति चेत् ?

उच्यते—.

**निष्पुष्पवन्तमितिवदुभयप्रतियोगिकः ।**
**पञ्चम्यर्थस्याप्यभावो विविधाः प्रतियोगिताः ॥१३६॥**

पुष्पवन्तौ नेत्यादौ द्वित्वोपस्थापकस्य द्विवचनस्य सत्त्वेपि निष्पुष्पवन्तमित्यव्ययीभावे सूर्य्याचन्द्रमसोरत्यन्ताभावो न्यून-

वच्छिन्नत्वस्य निवेशयितुमशक्यतया संयुक्तसंयोगेन वह्निमानिति निश्चयस्यापि प्रतिबन्धकत्वापत्तिः, तत्रापि संयोगत्वावच्छिन्नसंसर्गतानिरूपकतायास्सत्त्वात् । प्रथमाया एव संयोगत्वावच्छिन्नसंसर्गताया वह्नित्वावच्छिन्नप्रतियोगिता-निरूपितत्वे तु ह्रदत्वावच्छिन्नानुयोगितायां तन्निरूपितत्वस्यासत्त्वाद्दर्शित-प्रतिबन्धकतावच्छेदकरूपस्य तत्रासत्त्वात् । द्वितीयाया तादृशसंसर्गतायाञ्च वह्नित्वावच्छिन्नप्रतियोगितानिरूपितत्वस्यैवाभावात्तामादायापि तत्र तस्य सत्त्वासम्भवात् । प्राचीनग्रन्थेषु परम्परासंसर्गाणां प्रतियोगिविश्रान्तत्वं प्रथम-संसर्गतामादायैवेति विभागजनकत्वादीनां परम्परामुद्रया प्रतियोगितावच्छेदक-संसर्गत्वे नोक्तदोष इत्यतः परम्पराणां संसर्गत्वं प्रतियोगितावच्छेदकत्वञ्चा-प्रामाणिकमेवेति नोक्तरीतिस्साधीयसीत्याशयेनाह—**विस्तरत**इति ।

विभागजनकत्वभेदप्रतियोगितावच्छेदकत्वपर्य्याप्तप्रतियोगिताकाभाव एव नञ्समभिव्याहृतपञ्चम्या बोध्यते । तत्र जनकतात्वावच्छेदकतात्वयोर्व्यासज्य-वृत्तिप्रतियोगितान्यूनवृत्तित्वेप्युभयत्वेनोभयस्यानुपस्थितावप्यवच्छेदकत्वं निष्पु-ष्पवन्तमित्यादाविवात्राप्युपेयत इत्याशयेन समाधत्ते—**निष्पुष्पवन्तम**िति । पुष्पवन्तौ नेत्यादावुभयत्वस्य विभक्त्युपस्थितत्वात्तदंशे दृष्टान्तता न स्यादित्यतो निष्पुष्पवन्तमित्यव्ययीभावानुसरणमित्याह—**पुष्पवन्ता**विति । **अव्ययीभावे** पुष्पवन्तस्याभाव इत्यर्थाभावेऽव्ययीभाव इत्यर्थः । **सूर्य्याचन्द्र-**

वृत्तिभ्यामपि सूर्य्यत्वचन्द्रत्वाभ्यामवच्छिन्नव्यासक्तप्रतियोगिताकः प्रतीयत इति न पत्रादित्यादौ विभागजनकत्वभेदप्रतियोगितावच्छेदकत्वपर्य्याप्तप्रतियोगिताकोऽप्यभावो भासत इत्यभ्युपेयम् ।

यदि च पुष्पवन्तपदादेः सूर्य्यचन्द्रोभयाद्यर्थः, तदा भवतु पञ्चम्या अपि निरुक्तोभयन्तथा । सा चोभयत्वावच्छिन्ना प्रतियोगिता जनकतात्वनिष्ठयावच्छेदकतात्वनिष्ठया चावच्छेदकतया निरूप्यते । उभयत्वनिष्ठावच्छेदकतैव वा सामानाधिकरण्येन जनकतात्वावच्छेदकतात्वाभ्यामवच्छिद्यते । जनकतात्वनिष्ठावच्छेदकता निरूपकत्ववृत्त्या,

**मसो**रिति । द्वन्द्वोत्तरं "देवता द्वन्द्वे च" इति सूत्रेणानङागमे सूर्य्यपदस्य दीर्घान्तत्वं बोध्यम् । **न्यूनवृत्तिभ्यामि**ति । व्यासज्यवृत्तिप्रतियोगितायाः सूर्य्याचन्द्रमसोरुभयोरेव सत्त्वात्तत्र प्रत्येकं सूर्य्यत्वादेरभावात् प्रतियोगिताया व्यासज्यवृत्तित्वानुपगमे प्रत्येकाभावपर्य्यवसितस्य तादृशाभावस्यैकसत्त्वे विरहप्रसङ्ग इति भावः ।

शक्तिविचारदर्शितदिशा पुष्पवन्तपदस्योभयत्वावच्छिन्ने शक्तिविरह इत्यत आह—**यदि चे**ति । **सूर्य्यचन्द्रे**ति । अत्र बाहुलकादानङाभावो बोध्यः । **तथा** (इति ।) विभागजनकत्वभेदप्रतियोगितावच्छेदकत्वोभयत्वावच्छिन्नमेव पञ्चमीवाच्यं भवत्वित्यर्थः । उभयत्वस्य प्रतियोगितावच्छेदकतया प्रतियोग्यंशे तस्यैव साक्षाद्विशेषणत्वम्, जनकतावच्छेदकत्वे त्वाधेयतयोभयत्व एव विशेषणमित्युभयत्वनिष्ठैवावच्छेदकता जनकतात्वावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपिता, तत्रापि साक्षात्सम्बन्धेन तयोरुभयत्वेविशेषणत्वेन सामानाधिकरण्यमेव तदवच्छेदकस्सम्बन्ध इत्याशयेनाह—**उभयत्वे**ति । जनकत्वावच्छेदकत्वयोर्निरूपकत्वप्रतियोगित्वयोस्तयोश्च विभागभेदयोर्विशेषणत्वात्तेपामप्युक्ताभावप्रतियोगितावच्छेदकत्वमित्याह—**जनकतात्वे**ति । तृतीयान्तानां **निरूप्यत** इति परेणान्वयः । पञ्चम्यर्थयोरुभयत्रैव प्रकृत्यर्थान्वयस्य सिद्धान्तितत्वाद् भेदे विभागे

सा च विभागवृत्त्या, अवच्छेदकतात्वनिष्ठा तु प्रतियोगितावृत्त्या, सा च भेदनिष्ठयावच्छेदकतया निरूप्यते। स्रोतोद्वयमुखभूतन्तु भेदविभागयोरवच्छेदकताद्वयमेकयैव पत्रत्वावच्छिन्नयावच्छेदकतया निरूपितम्। एतमेवाभावं यत्र पत्रे विभागजनकत्वम्, तत्र भेदप्रतियोगितावच्छेदकत्वं क्रियायान्नास्तीति वाक्येन प्रामाणिका व्यवहरन्ति।

न ह्यस्माद्वाक्यादनुगतार्था बुद्धिर्न्न जायत इत्यानुभविकम्, एतादृशाभावावगाहिनः पत्रत्वावच्छिन्नैकप्रकारतानिरूपितविभागभेदो-

चोभयत्रैव पत्रत्वावच्छिन्नस्य विशेषणत्वाद् भेदनिष्ठं विभागनिष्ठञ्चावच्छेदकत्वं पत्रत्वावच्छिन्नावच्छेदकतयैकयैव निरूप्यत इत्याह—**स्रोतोद्वये**ति। यथा पर्वतादितः प्रवृत्तो जलपात एकमेवाधोदेशमागत्यानेकेषु स्रोतस्सु पतति, तथैव प्रकृते पत्रत्वावच्छिन्नमेकमेवावच्छेदकत्वं विभागे भेदे चावच्छेदकताद्वयं स्रोतोरूपे पतितमित्याशयः। **एतमेवे**ति। पत्रत्वावच्छिन्नावच्छेदकतानिरूपिता या विभागत्वावच्छिन्ना भेदत्वावच्छिन्ना चावच्छेदकता, ताभ्यान्निरूपिता या जनकतात्वावच्छेदकतात्वाभ्यामवच्छिन्नावच्छेदकता, ताभ्यान्निरूपिता योभयत्वावच्छिन्ना प्रतियोगिता सामानाधिकरण्येनोभयत्वनिष्ठा चावच्छेदकता, तन्निरूपकं तन्निरूपितप्रतियोगितानिरूपकं वाभावमित्यर्थः। **यत्र तत्रे**ति सप्तम्यर्थो निष्ठत्वं तस्य विभागे भेदे चान्वयः। तथा च यन्निष्ठविभागजनकत्वं तन्निष्ठभेदप्रतियोगितावच्छेदकत्वाभावः क्रियावृत्तीति बोधो यत्तत्पदाभ्यामेकव्यक्तेरेवोपस्थितेरुक्ताभावस्य तादृशवाक्याभिलप्यत्वं बोध्यम्।

**अनुगतार्था** दर्शितैकाभावविशेष्यिका। **विशिष्टबुद्धिः** क्रियावृत्तित्वप्रकारताका निरुक्ताभावत्वावच्छिन्नविशेष्यताका बुद्धिः। तादृशबोधोत्पत्तौ बाधकाभाव इत्याह—**एतादृशे**ति। **संशयादेरिवे**ति। **आदिना** समुच्चय-

भयविशेष्यताकस्य प्रकारताद्वयनिरूपितैकविशेष्यताकस्य संशयादेरिव विशेष्यताद्वयनिरूपितैकप्रकारताकस्यापि बोधस्याभ्युपेयत्वात् । अतएव संशयाव्यवहितोत्तरं प्रत्यक्षमिति वाक्येन मानान्तरेण वा यस्मात्संशयादव्यवहितं तस्मादुत्तरं प्रत्यक्षं प्रत्याय्यते, संशयत्वावच्छिन्नप्रकारतयाव्यवधानोत्तरविषयतयोस्ताभ्याञ्च प्रत्यक्षविशेष्यताया निरूपणे फलत एकतमसंशयाव्यवहितपूर्वस्य [1]चिरातीतसंशयोत्तरस्य प्रत्यक्षस्यानवगाहनात् ।

येप्यव्यवधानोत्तरत्वाभ्यां संसर्गाभ्यां संशयवत्प्रत्यक्षमेव प्रकृतवाक्यादिना प्रतिपाद्यत इति गौडा व्यपदिशन्ति ।

परिग्रहः । यथा संशये एकत्रद्वयमितिरीत्या तत्तदभावप्रकारताद्वयनिरूपितैकैव विशेष्यता, तथा द्वयोरेकमितिरीत्या विशेष्यताद्वयनिरूपितैकैव प्रकारता स्वीक्रियत एवेत्यर्थः । **अतएव** निरुक्तैकप्रकारताया अभ्युपगमादेव । न केवलं शाब्दबोध एवोक्तप्रकारता, किन्तु ज्ञानसामान्य एवेत्याशयेनाह—**मानान्तरेण वे**ति । **प्रत्याय्यत** इत्यत्र बीजं **संशयत्वावच्छिन्ने**त्यादि । **अव्यवहितोत्तरविषयतयो**रिति । अव्यवहितोत्तरत्वं नाखण्ड एकः पदार्थः, किन्त्वव्यहितत्वमुत्तरत्वञ्च । तत्राव्यवहितत्वं स्वप्रागभावाधिकरणक्षणप्रागभावानधिकरणत्वे सति स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वम् । उत्तरत्वञ्च स्वाधिकरणक्षणध्वंसाधिकरणत्वम् । तन्निष्ठयोर्विभिन्नधर्म्मावच्छिन्नयोर्विशेष्यतयोरित्यर्थः । **निरूपणे** इति । उभयोरपि तत्र संशयत्वेनैकस्यैव संशयस्य प्रकारत्वात्तदुभयविशेष्यताद्वयस्यैकप्रकारतानिरूपितत्वे तदुभयस्य चैकत्रैव प्रत्यक्षे विशेषणत्वात् प्रत्यक्षत्वावच्छिन्नविशेष्यतायाः प्रकारताद्वयनिरूपितत्वे इत्यर्थः । **फलत** इति । एकसंशयनिरूपिताव्यवधानोत्तरत्वस्यैकस्मिन् प्रत्यक्षे लाभादित्यर्थः । **अनवगाहनादि**ति । तत्र संशयत्वावच्छिन्नाया एकस्याः प्रकारताया अभावात्तादृशसंशयद्वयस्य तादृशबुद्धौ विषयत्वाभावादित्यर्थः ।

---

१ चिरातीतसंशयोत्तरस्य इत्यस्य स्थाने चिरातीतसंशयानन्तरस्य इति मु० पु० पा० ।

ते किल [1]संसर्गताद्वयनिरूपितापूर्वप्रकारताभ्युपगमे किं फल-मुपलभन्त इति त एव जानन्ति। संशयीयं नाव्यवधानमव्यत्रधान-घटकाश्च न परस्परसंसृष्टा इत्यादिविपरीतदर्शने तादृशबुद्धचनुदये-[2]नाव्यवधानघटकपदार्थोपस्थित्यपेक्षस्याव्यवधानादौ [3]विशेष्यत्वस्या-भ्युपगमावश्यकत्वे संसर्गत्वे प्रमाणाभावः परमधिकः।

एवमेव धूमत्वादिसामान्यधर्म्ममन्तर्भाव्य वह्न्यादेः कारण-त्वमपि सुग्रहम्। तद्धूमाव्यवहितपूर्वक्षणावच्छेदेन तद्धूमाधिकरणे विद्यमानस्याभावस्य प्रतियोगितासामान्याभावो वह्नौ धूमकारणता।

न च निरुक्ताव्यवधानोत्तरत्वयोर्गुरुशरीरतया तदपेक्षया लाघवेन स्वध्वंसाधिकरणक्षणध्वंसाधिकरणत्वविशिष्टस्वाधिकरणक्षणध्वंसाधिकरणत्वरूपमेकमेवाव्यवहितोत्तरत्वं विशेष्यमिति वाच्यम्, तत्रापि स्वत्वस्य द्विधा निवेशेन संशयस्यैव तत्पदबोध्यतयैकत्रैकस्यापरत्रापरस्य संशयस्योपादाने दर्शितदोषानुद्धारादुक्तरीतेरेवाश्रयणीत्वात्, उत्तरत्वप्रवेशे चिरान्तरितपूर्वकालस्य तत एव वारणात्प्रागभावघटितविशेषणस्य तत्रानुपादेयत्वाच्च।

ननु तदुभयत्वावच्छिन्नैकैव संसर्गतेति नापूर्वप्रकारताभ्युपगमः, फलञ्चाव्यवधानादिघटकपदार्थोपस्थिति विनापि तयोः संसर्गत्वेन भानं निराबाधमिति यदि गौडा ब्रूयुस्तदाप्याह—**संशयीयमि**ति। **पदार्थोपस्थित्यपेक्षस्ये**ति। तत्तत्पदार्थोपस्थितिप्रयोज्यस्येत्यर्थः। तथा च तदानीमन्वयबोधवारणायाव्यवधानादिघटकपदार्थोपस्थितीनामावश्यकतया तस्य संसर्गत्वमप्रामाणिकमेवेति भावः।

**एवमेव** एकावच्छेदकतानिरूपितावच्छेदकताद्वयोपगमादेवेत्यर्थः। **धूमकारणते**ति। फलोपहितेत्यादिः। स्वरूपयोग्यतायां कार्य्याव्यवहितप्राक्क्षणस्या-

---

१ ० भ्युपगमेन इति मु० पु० पा०।

२ ०पस्थित्यपेक्षस्याव्य —० इत्यस्य स्थाने ०पस्थित्यपेक्षाया वा इति मु० पु० पा०।

३ अत्र समस्त एव पा० मु० पु०।

**स चैक एव, न तु धूमव्यक्तिघटितकूटात्मकः, युगसहस्रेणापि दुर्ग्रहत्वात् । सम्भवति चैकयैव धूमत्वावच्छिन्नावच्छेदकतया निरूपितमव्यवहितपूर्वक्षणावच्छिन्नेऽधिकरणत्वे चावच्छेदकताद्वयम्, ताभ्यान्निरूपितं विद्यमानत्वे, तेन चाभाव एकैकमवच्छेदकत्वम्, तन्निरूपिता प्रतियोगितात्वावच्छिन्ना प्रतियोगितेति तन्निरूपकोऽनुगत-**

निवेशात्। **न त्वि**ति । तत्र धूमत्वावच्छिन्नाया एकप्रकारताया विरहादिति भावः ।

इदमत्रावधेयम्। परम्परायाः संसर्गत्वानभ्युपगमो न सर्वत्र, तथा सति सुरभि जलं लोहितः स्फटिक इत्यादौ समवायिसंयोगस्यापि संसर्गत्वाप्रसक्त्या निरुक्तप्रतीतीनामनुपपत्तिप्रसङ्गात् । एवं प्रतियोगितानवच्छेदकत्वमपि न सर्वेषां वृत्त्यनियामकसंसर्गाणाम्, तथा सति कर्पूरगन्धो न तडागजले, किन्तु कुम्भजले, मञ्जिष्ठारागो न मैत्रपटे, किन्तु चैत्रपटे इत्यादौ सर्वानुभवसिद्धस्य समवायिसंयोगसंसर्गावच्छिन्नप्रतियोगिताकाभावप्रत्ययस्यानुपपत्तिप्रसङ्गात् ; किन्तु येन संसर्गेण विशिष्टबुद्धिर्न्न प्रामाणिकी, तस्यैव संसर्गत्वविरहः प्रतियोगितानवच्छेदकत्वञ्चेति विभागजनकत्वादीनां विशिष्टबुद्धिजनकत्व-स्यानुभविकत्वे दर्शितायास्तव्यतिरेकेणैव निर्वाहस्सम्भवति, तस्यातथात्वे च निरुक्तायास्तस्यावश्यकतेति । १३६ ।

---

१ ० वच्छिन्ने इत्यस्य स्थाने ० वच्छिन्नत्वे इतिं मु० पु० पा० ।

२ प्रकृते विभागो भेदश्च पञ्चम्यर्थः। विभागस्य जनकत्वेन भेदस्य स्वसमाना-धिकरणविभागजनकत्वविशिष्टप्रतियोगितावच्छेदकत्वेन सम्बन्धेन पतनादिक्रियायामन्वयः। तरोः पत्रं पतति न पत्रादित्यादौ पत्रवृत्तिभेदस्य दर्शितेन सम्बन्धेनावच्छिन्नप्रति-योगिताकोऽभावो नञा पतने बोध्यते, नञ्विनिर्मुक्तवाक्ये येन सम्बन्धेन यस्य यत्रान्वयस्तत्र नञ्समभिव्याहारे तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्तस्याभावस्तत्रान्वेतीति व्युत्पत्तेः। सम्बन्धकोटौ वैशिष्ट्यनिवेशाद् भेदस्य पत्रान्तरनिष्ठस्य प्रतियोगितावच्छेदकत्व-सम्बन्धेन पतने सत्त्वेऽपि न निषेधप्रतीत्यनुपपत्तिः। अथवा भेदस्य पतनादिक्रियायामन्वय-घटकस्सम्बन्धः निरुक्तविशिष्टप्रतियोगितावच्छेदकत्वविशिष्टा विशेषणतैव । नञ्समभि-व्याहारेऽपि एतादृशससर्गस्य टीकोक्तप्रतीत्यनुपपत्त्या ससर्गत्व प्रतियोगितावच्छेदकत्वञ्चा-भ्युपेत्य निषेधप्रतीतिनिर्वाहस्सम्भवतीति ध्येयम् ।

स्सामान्याभावः । तद्बुद्धिं प्रति च धूमत्वावच्छिन्नप्रकारता-निरूपिताव्यवहितपूर्वक्षणावच्छिन्नत्वाधिकरणवृत्तिविशेष्यताद्वयनिरूपित-विद्यमानत्वाद्येकविषयताको व्यभिचारग्रह एव विरोधी, न तु धूमान्तराव्यवहितप्राक्क्षणावच्छेदेन धूमान्तराधिकरणविद्यमानवह्न्य-भावावगाहीति । अधिकं बौद्धाधिकारविवरणे विवृतमासीत् । १३६ ।

नन्वेवमपि वृक्षाद्वेपते कम्पत इत्यादिप्रयोगो दुर्वारः, आसनाच्चलित इत्यादेरिव तस्येष्टत्वेपि तरोस्त्यजतीति स्यादिति चेत् ?

**ब्रूतेत्यजिजहात्यादिर्विभागफलिकां क्रियाम् ।**
**उक्तार्थानामप्रयोगान्न चापादानपञ्चमी ॥१३७॥**

त्यजत्यादिना विभागजनकक्रियावाचिना पञ्चम्यर्थस्य क्रोडी-कृतत्वादुक्तार्थानामप्रयोग इति तर्वादिपदान्न पञ्चमी, किन्तु विभागान्विताधेयतार्थिका द्वितीयैव । परया कर्म्मसंज्ञयापादानं बाध्यत इति वैयाकरणाः । १३७ ।

**दुर्वार** इति । पञ्चम्यर्थविभागस्य जनकतया विभागजनकत्वस्य धात्वर्थे कम्पादावन्वयसम्भवादित्याशयः । **इत्यादेरिवे**ति । निरुक्तप्रयोगयोर्वारणाय फलव्यापारोभयवाचकधातुजन्योपस्थितेः पञ्चम्यर्थविभागान्वयबोधे कारण-त्वोपगमे चलतेरपि फलावाचकतयासनाच्चलित इत्यत्र पञ्चम्यनुपपत्तिः । न च चलतेः सन्निहितदेशसंयोगफलकव्यापारवाचकत्वात् फलवाचकत्वन्निराबाधमिति वाच्यम्, तथात्वेपि धात्वर्थान्तर्भूतकर्म्मतया तस्याकर्म्मकत्वादकर्म्मकधातु-योगेपि पल्यङ्कात्पीठे समुपविशतीत्यादौ पञ्चमीदर्शनात्तत्र न तदनुपपत्तिरिति चेत्, न, कम्पत्यादियोगेपि तस्यास्तथात्वस्येष्टत्वादिति भावः । **स्यादिति चेदि**ति । त्यज्धातोर्विभागव्यापारोभयवाचकतया निरुक्तहेतुतास्वीकारेपि तत्र पञ्चमी दुर्वारेत्याशयः । **न पञ्चमी**ति । अयम्भावः—विभागानुयोगित्वस्वरूप-

नन्वेवमपसरत्यादेर्विभागफलकक्रियावाचितया सभातोपसरतीत्यादौ पञ्चम्यनुपपत्तिः, न हि स्पन्दत्यपसरत्योरेकार्थकत्वम्, अनुभवविरोधादिति चेदुच्यते—

ये देशान्तरसंयोगफलकस्पन्दवाचिनः ।
अकर्म्मका निरेत्याद्याः पञ्चमी तान् व्यपेक्षते ॥१३८॥

मपादानत्वम् । तत्र विभागस्य धातुतोऽलाभे विभागः पञ्चम्यर्थः । यथा—वृक्षात्पत्रं पततीत्यादौ । पञ्चम्यर्थविभागान्वये संयोगव्यापारोभयवाचकधातुजन्योपस्थितेस्तन्त्रत्वात् । यत्र तु विभागस्य धातुत एव लाभस्तत्र पञ्चम्या अनुयोगित्वमात्रमर्थः । वृक्षाद्विभजत इत्यादौ यथा । तदन्वये तु प्रधानीभूतधात्वर्थव्यापारे साक्षाद्विशेषणतानापन्नस्य विभागस्योपस्थितिस्तन्त्रम्, विभजतिना तादृशस्यैव विभागस्योपस्थितेः । गोभ्यः पयांसि दोग्धीत्यत्र स्यन्दनविशेषणतयोपस्थितस्यापि विभागस्य न प्रधानव्यापारे साक्षाद्विशेषणत्वम् । इत्थञ्च तरोस्त्यजतीत्यादौ विभागस्य धातोरेव लाभादनुयोगित्वमेव पञ्चम्यर्थो वाच्यः । तदन्वये तन्त्रस्य तादृशोपस्थितेस्तत्रासत्त्वान्न तस्य प्रामाण्यमिति । प्रधानव्यापारे साक्षादविशेषणीभूतविभागवाचकधातुजन्योपस्थितिः पञ्चम्यर्थानुयोगित्वान्वये तन्त्रमिति फलितार्थः । तेन तरोस्त्यज्यत इत्यत्र विभागस्य व्यापाराविशेषणतया भानेपि त्यजेर्विशेषणीभूतविभागवाचकत्वानपायात्तत्रापि पञ्चम्या असाधुत्वोपपत्तिः । प्राचाम्मते धातूनां फलावच्छिन्नव्यापारार्थकतया नव्यानाम्मते फलव्यापारोभयार्थकतया त्यजत्यर्थव्यापारे गमनादिव्यावर्त्तकतया विभागस्य विशेषणताया सर्वसिद्धत्वात् ।१३७।

**पञ्चम्यनुपपत्तिरि**ति । अपसरतेर्न्निरुक्तधातुत्वविरहादिति भावः । अपसरतेर्न्न विभागफलकव्यापारवाचकत्वम्, येनोक्तानुपपत्तिः स्यादित्याशयेन समाधत्ते—**ये देशान्तरे**ति । **निरेत्याद्याः** निःपूर्वकेण्धातुपर्य्याया निर्गच्छत्यपसरत्यादय इत्यर्थः । **व्यपेक्षते** इति । तन्निरूपिताकाङ्क्षावतीत्यर्थः ।

निर्गम्यपसरत्यादिर्धातुर्बहिरादिसंयोगफलकक्रियावाची धात्वर्थान्तर्भूतकर्म्मकत्वादकर्म्मकः । तेन विभागस्य फलविधयानुपादानात्पूर्वदेशस्यापादानत्वं निराबाधमित्यनभिहितविभागाभिधानाय गृहान्निर्गच्छति सदसोपसरतीत्यादौ [1]निर्गम्यादिः पञ्चम्यापेक्षते । एवमूद्र्ध्वसंयोगफलकक्रियावाचिन उद्धरतेर्य्योगेपि स्थाल्याः पुलाकमुद्धरतीत्यादौ पञ्चम्यवसेया । कुतो भवान् प्रतिष्ठानात्, घनाद्विद्योतते विधुरित्यादौ कुत इति प्रश्ने प्रतिष्ठानादित्युत्तरे चागत इति, [2]द्वितीये निस्सृत्येत्यध्याहृत्य च पञ्चम्युपपादनीया । १३८ ।

**तरोर्विभजते पत्रमस्थ्नो विभजते त्वचम् ।**
**इत्यादाववधित्वार्थो ङसिर्धातुमपेक्षते ॥१३९॥**

**बहिरादिसंयोगे**ति । सर्वावयवावच्छिन्नेत्यादिः । तेन बिलादर्द्धमायाते सर्पे बिलात्सर्पोपसृत इति न प्रयोगः । **फलविधयानुपादानादि**ति । संयोगस्यैव तत्र तथात्वाद्दर्शितस्य पञ्चम्यर्थानुयोगित्वान्वयप्रयोजकस्य तत्र सत्त्वादिति भावः । **पञ्चम्यवसेये**ति । तत्रापि विभागस्यातथात्वादित्यर्थः । **प्रश्ने** इति । **पञ्चम्युपपादनीये**त्यग्रिमेणान्वयः । तथा च "प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या" इति वार्त्तिकेन प्रश्नेर्थे कुत इति पञ्चमीत्यर्थः । **उत्तरे चे**ति । उत्तरवाक्ये त्वित्यर्थः । **प्रतिष्ठानात्** तन्नामनगरात् आगत इत्यध्याहृत्येत्यन्वयः । **द्वितीये घनादि**त्यत्र । **पञ्चम्युपपादनीया** धात्वर्थागमनादौ पञ्चम्यर्थविभागान्वयस्यायोग्यत्वाद्ध्रुवमित्यनेनापादानसंज्ञायाम् "अपादाने पञ्चमी" इत्यनेनैव तत्र पञ्चमीत्यर्थः । १३८ ।

**ङसि**रिति । भ्याम्भ्यसोरप्युपलक्षणम्, छन्दोनुरोधेन तन्मात्रोपादानात् ।

---

१ निर्गम्यादिः इत्यस्य स्थाने निरेत्यादिः इति मु० पु० पा० ।
२ द्वितीये इत्यस्य स्थाने घनाद्विद्योतते विधुरित्यत्र इति मु० पु० पा० ।

**विभजिर्द्विधा--केवलविभागवाची फलावाचकत्वादकर्म्मकः, विभागजनकविभागव्यधिकरणविदलनादिक्रियावाची सकर्म्मकः। तत्रोभयत्र पञ्चम्या विभागान्वितमवधित्वमवधिमत्त्वं वार्थः। तच्च स्वरूपसम्बन्धरूपोतिरिक्तो वेत्यन्यदेतत्। तथा च तरोः पत्रं विभजत इत्यत्र तर्ववधिकविभागाश्रयत्वं पत्रे, अस्थ्नो मांसं विभजते कौणप इत्यत्रास्थ्यवधिकमांससमवेतविभागानुकूलोत्कर्त्तनादिक्रियासमवायित्वं कौणपे वाक्यार्थः। "ध्रुवमपायेपादानम्" इति सूत्रमपाये विभागे ध्रुवमवधिभूतमपादानसंज्ञमिति व्याख्येयम्, योगविभागादिति वाक्यपदीये हरिचरणाः। १३९।**

**विदलनादी**ति। पार्थिवद्रव्यविभागानुकूलव्यापारानुकूलव्यापारवाचीत्यर्थः। तेन विभागफलवतः पार्थिवस्य कर्म्मणो धातुनाभिधानान्नास्य द्विकर्म्मकत्वम्। पार्थिवेत्युपादानाज्जलाद्विभजते इति न प्रयोगः। पार्थिवविभागानुकूलव्यापारस्वरूपफलवत्त्वान्मांसस्य कर्म्मत्वम्। **स्वरूपसम्बन्धरूपः** अनुयोगित्वस्वरूपमवधित्वमनुयोगितानिरूपकत्वस्वरूपमवधिमत्त्वं वेत्यर्थः। निरूपकत्वस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वे नञ्समभिव्याहारेनुपपत्तिवारणायावधिमत्त्वोपादानम्। पञ्चम्यर्थयोर्न्निरूपकतया स्वरूपेण वा धात्वर्थे विभागेन्वयादाह—**तर्ववधिके**ति। सकर्म्मकविभजियोगे पञ्चमीमुदाहरति—**अस्थ्नो मांसमि**ति। अवधेरपि "ध्रुवम्..." इत्यादिसूत्रेणेवापादानसंज्ञेत्याह—**ध्रुवमपाय** इति। **योगविभागादि**ति। एकत्र ध्रुवत्वं निरुक्तं तत्क्रियानाविष्टत्वं परत्रावधित्वमवधिमत्वं वेत्याशयः। न चैवमनेकविधार्थकल्पनापेक्षयैकमवधित्वमेव पञ्चम्यर्थोस्तु, दर्शितस्थलेष्ववधित्वस्य संयोगादिषु धात्वर्थेष्वन्वयोपगमादभीष्टसिद्धेरिति वाच्यम्, अपायस्य दर्शितरीत्या नानाविधस्य प्रतीयमानस्यापलापापत्तेः। अवधित्वस्यैकविधत्वे अयमस्मात्तार इत्यादौ नामार्था-

---

१ पदार्थः इत्यधिकः पा० मु० पु०। २ एकवचनान्त एव पा० मु० पु०।

**पापाद्विरमतीत्यादौ विषयत्वाभिधायिनी ।**
**व्याघ्राद्बिभेतीत्यादौ तु हेतुतामाह पञ्चमी ॥१४०॥**

पापाद्विरमति जुगुप्सति धर्म्मात्प्रमाद्यतीत्यत्र विरमेर्निवृत्तिः, गुपेर्गर्हानाम द्वेषविशेषः, प्रमाद्यतेरनुद्बुद्धसंस्कारोर्थः । पञ्चम्यर्थो विषयत्वम् । तथा च पापविषयकनिवृत्तिमानित्यादिर्वाक्यार्थबोधः ।

परे तु करणानन्तरमकरणं विरमतेः, गर्हाप्रयुक्तप्रवृत्त्यभावो गुपेः, कर्त्तव्यतास्मरणाभावप्रयुक्तप्रवृत्त्यभावः प्रमाद्यतेरर्थः । पञ्चम्यर्थविषयत्वञ्च व्युत्पत्तिवैचित्र्यात्करणगर्हयोरभावप्रतियोगिषु चान्वेति । तेन पापविषयककरणानन्तरितस्तदभावः पापविषयकगर्हाप्रयुक्तः पापविषयकप्रवृत्त्यभावः धर्म्मविषयककर्त्तव्यतास्मरणाभावप्रयुक्तो धर्म्मविषयकप्रवृत्त्यभावश्च वाक्यार्थ इत्याहुः ।

न्वयित्वादन्यत्रापि कारकत्वानुपपत्तेः । किञ्च वृक्षात्पचतीति प्रयोगवारणाय पञ्चम्यर्थावधित्वान्वयबोधं प्रति गमनाद्यर्थकधातुजन्योपस्थितेः कारणत्वे वृक्षाद्विभजत इत्यत्रानुपपत्तिः । यद्यद्धातुयोगे पञ्चमी, तत्तद्धातूनां पृथगुपादानेननुगम[1] इति । १३९ ।

**विरमतीत्यादा**वित्यत्रादिपदेन जुगुप्सतिप्रमाद्यत्योर्ग्रहणम् । **पञ्चमी** "जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्" इति वार्त्तिकानुशिष्टापादानसंज्ञोत्तर-जायमाना पञ्चमीत्यर्थः । **निवृत्तिः** त्रिविधकृतिमध्ये द्वितीया ।

**व्युत्पत्तिवैचित्र्याद्**िति । एकस्योभयत्रान्वयो व्युत्पत्तिविशेषमङ्गीकृत्यैव सम्भवतीति भावः । **अभावप्रतियोगिषु** करणाद्यभावप्रतियोगित्वेनोपस्थितेषु करणगर्हादिष्वित्यर्थः । **करणानन्तरित** इति । करणाव्यवहितोत्तरक्षण-वृत्तिरित्यर्थः । वस्तुतो बुद्ध्यादिविगमस्वरूपापायवतो जुगुप्साद्यपादानत्व-

१ नाननुगममात्रं दोषः, किन्तु वृक्षात् क्रीणातीति प्रयोगापत्तिश्च बोध्या ।

**चौराद्बिभेति त्रायत** इत्यादावनिष्टस्य भावित्वेन चिन्तनं भयम्, अनिष्टानुत्पत्त्यनुकूलो व्यापारस्त्राणम्। पञ्चम्यर्थो हेतुता हेतुमत्ता वानिष्टेन्वेति। तथा च चौरहेतुकमनिष्टं भावित्वेन चिन्तयति, चौरहेतुकानिष्टानुत्पत्त्यनुकूलव्यापारवानित्यन्वयबोधः।

ज्ञापनार्थं [1]दर्शितवार्त्तिकारम्भः, न तु पञ्चम्या विषयत्वार्थकत्वज्ञापनार्थम्। तथा सति तेषां योगे पञ्चम्येव विधीयेत, न त्वपादानसंज्ञेति कर्त्तव्यत्वप्रकारकज्ञानविशेष्यत्वाभावः पञ्चम्या अर्थः। स च प्रयोजकतया जुगुप्सायामन्वेति। जुगुप्सा च द्वेषविशेष अपकर्षप्रतिपत्त्यनुकूलो व्यापारो वा। तेन जुगुप्सतेः सकर्म्मकत्वात् कर्म्मणोपादानत्वविवक्षायां पञ्चमी, अन्यथा तु पापकर्म्माणि जुगुप्सत इति द्वितीयैव प्रमाणम्। तथा च पापवृत्तेः कर्त्तव्यत्वप्रकारकज्ञानविशेष्यत्वाभावस्य प्रयोजकोपकर्षप्रतिपत्त्यनुकूलो व्यापार इति वाक्यार्थः। पापस्यापकर्षप्रतिपत्तिविशेष्यत्वमर्थात्प्रतीयते, न ह्यन्यनिष्ठस्य कर्त्तव्यताबुद्धिविशेष्यत्वाभावस्य प्रयोजकोन्यनिष्ठापकर्षप्रतिपादकस्सम्भवति। देवदत्ताज्जुगुप्सत इत्यत्र पञ्चम्या गुणाभावोर्थः। गुणो धैर्य्यादिः। अपकर्षश्चात्र क्रोधलोभादिः। अन्वयः पूर्ववत्।

एतेन द्वेषरूपजुगुप्साविषयस्य क्रियाफलेन विषयत्वेनाभिप्रेततया सम्प्रदानत्वमेव। यथा—श्राद्धाय विगर्हत इति। तथा चात्रापादानत्वाभावात् [2]पञ्चम्यप्रसक्तिरिति समाहितम्, क्रियाफलेनापकर्षप्रतिपत्त्या पापादेरनभिप्रेतत्वात्।

**भावित्वेने**ति। भविष्यत्वप्रकारिका सम्भावनेत्यर्थः। **हेतुते**त्याद्युभयो-

---

१ निरुक्तापायवतो "ध्रुवमपायेपादानम्" इति सूत्रैकवाक्यतयैव 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्" इति वार्त्तिकेनापादानसज्ञा ज्ञापिता भवति, न तु "अपादाने पञ्चमी" इति सूत्रैकवाक्यतयापादानसज्ञा निरुक्तवार्त्तिकेन ज्ञापिता भवतीति तात्पर्य्यम्।

२ तेन पापाज्जुगुप्सत इति प्रयोगो न स्यादिति बोध्यम्।

यत्र च भयापादनस्यापि न हेतुत्वविवक्षा, तत्र सम्बन्ध-सामान्यार्थिका शेषे षष्ठ्येव प्रमाणम् । अतएव "कस्य विभ्यति देवाश्च" इति [1]रामायणे "कस्य संयुगे" इति सम्बन्ध इति प्राञ्चः ।

तच्चिन्त्यम्, नरकाद्बिभेति नरकात्त्रायत इत्यादौ नरकजन्या-निष्टान्तराभावात् ।

पादानप्रयोजनं [2]पूर्ववत् ।

**षष्ठ्येवे**ति । "भीत्रार्थानां भयहेतुः" इति सूत्रे भयहेतुत्वस्योपादानादि-त्याशयः । अत्र यस्य पुंसो व्याघ्राधीनमनिष्टमप्रसिद्धं व्याघ्रहेतुकत्वेन चानिष्टमसौ सम्भावयति, तत्पुरुषपरस्यायं व्याघ्राद्बिभेतीति प्रयोगस्योपपत्तये प्रयोज्यत्वप्रकारकत्वं पञ्चम्यर्थो वाच्यः, व्याघ्रप्रयोज्यत्वप्रकारिकाया अनिष्ट-सम्भावनायास्तस्यापि निराबाधत्वात् । **रामायणे** इति । वाल्मिकीये प्रथमसर्गे बालकाण्डे—जातरोषस्य सयुगे इत्युत्तरार्द्धम् ।

**नरकजन्ये**ति । नरकस्य दुःखरूपतया तज्जन्यदुःखान्तरस्याभावादित्यर्थः । इदञ्च दूषणं प्रयोज्यत्वमात्रस्य पञ्चम्यर्थत्वे । प्रयोज्यत्वप्रकारकत्वस्य तदर्थत्वे तु प्रयोज्यत्वस्यानिष्टेन्वयानुपगमे व्याघ्रप्रयोज्यो वृकनाशः वृकप्रयोज्यो बालनाशः बालश्च मम पुत्रः सम्भाव्यत इति ज्ञानदशायां बालपुत्रोयं व्याघ्राद्बिभेति वृकाद्बिभेतीत्यादिप्रयोगापत्तिः, व्याघ्रादिप्रयोज्यत्वप्रकारकोक्तसमूहा-ह्यालम्बनसम्भावनाविशेष्यत्वस्य बालपुत्रे निराबाधत्वात् । न च प्रयोज्यत्व-प्रकारताकत्वस्य स्वनिरूपितानिष्टनिष्ठविशेष्यतानिरूपकत्वेन संसर्गेण सम्भावना-यामन्वयो वाच्य इति नोक्तदोष इति वाच्यम्, तथा सति सम्भावनामात्र-स्यानन्यलभ्यतया बिभेत्यर्थत्वप्रसङ्गेन व्याघ्रप्रयोज्यं चैत्रस्य दुःखं सम्भाव्यत इति ज्ञाने चैत्रो व्याघ्राद्बिभेतीत्यापत्तेः । तत्तत्पुरुषीयदुःखविषयकतत्तत्पुरुषीय-सम्भावनाया धात्वर्थत्वोपगमेननुगमप्रसङ्गात् । समानाधिकरणदुःखविषयक-

---

१ रामायणम् इति मु० पु० पा० ।

२ चौरान्न बिभेतीत्यादावित्यर्थः ।

वस्तुतो भयत्वं द्वेषत्वावान्तरजातिः । सैव बिभेतेः प्रवृत्तिनिमित्तम् । फलावाचकत्वादेवासौ यतिवदकर्म्मकः । तत्र च दुःखगोचरे भये स्वस्मिन् भावित्वप्रतिसन्धानमेव कारणम् । तेन [1]रागान्धानामास्तिकानान्नरकात्, यक्ष्यमाणानां यागश्रमान्मुमुक्षूणां कुतोपि क्लेशाद्वा न [2]भयमित्यादयः प्रयोगा उपपद्यन्ते । उपायविषये भये च

सम्भावनायास्तथात्वे तु यत्र दुःखत्वेन शरीरनाशादिस्सम्भावितस्तत्र बिभेतीति प्रयोगा (–ना–) पत्तिरिति ।

**द्वेषत्वावान्तरे**ति । बिभेतीत्यादिप्रतीतिसाक्षिकेत्यादिः । भयहेतोरपादानसंज्ञाविधानात्तं निरूपयति—**तत्र चे**ति । दुःखविषयकं दुःखसाधनविषयकञ्चेति द्वयमेव द्वेषविशेषरूपं भयम्, तयोर्म्मध्य इत्यर्थः । **स्वस्मिन्नि**ति । दुखं मम भविष्यतीत्याकारकं ज्ञानं समवायेन दुःखविषयके भये कारणमित्यर्थः । **तेन** भयस्य द्वेषविशेषस्वरूपत्वेन । **रागान्धानामि**ति । नास्तिकैर्नरकादीनामनुपगमादेव तत्र तत्प्रयोगविरह इत्यत आह—**आस्तिकानामि**ति । अस्ति परलोक इति मतिर्य्येषां तेषाम् "अस्ति नास्ति दिष्टं मतिः" इति सूत्रेणोक्तार्थे ठग्विधानात् । **नरकात्** सुखासम्भिन्नदुःखात् । **न भय**मिति परेणान्वयः । **प्रयोगा उपपद्यन्त** इति । आस्तिकानां परस्त्रीरतिविषयकोत्कटेच्छया नरके स्ववृत्तित्वेन भविष्यत्वज्ञानप्रतिबन्धान्न भयम् । यागश्रमस्य दुःखस्वरूपत्वेपि यागजन्यस्वर्गस्य तदपेक्षया बलवत्त्वेन तद्विषयकोत्कटेच्छया तत्र द्वेषाभावात्तस्य स्ववृत्तित्वेन भावित्वप्रतिसन्धानेपि न तस्माद् भयम् । अतएव तत्त्वकौमुद्यां टीकाकारैरुक्तम्—"मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम् ।" इति । मुमुक्षूणाञ्च द्वेषसामान्याभावादेव तद्विशेषभयाभाव इति तेषामुपपत्तिः । अनिष्टसम्भावनाया भयत्वे तु दुःखस्य दुःखान्तराप्रयोजकत्वाद्दर्शितप्रयोगाणामनुपपत्तिरेव स्यादिति भावः । **उपायविषये चे**ति । दुःखसाधनचौरादिविषयके द्वेषविशेषे इत्यर्थः ।

---

१ आस्तिकानामित्यस्य स्थाने नास्तिकानाम् इति म० पु० पा० ।

२ इत्यादयः प्रयोगा उपपद्यन्ते इति पा० ना० मु० पु० ।

**भयहेतुकानिष्टानुत्पत्तेः प्रयोजको व्यापारो न प्रतीयते, परन्तु भाविनो भयादपि दुःखविशेषसाधनाद् भयान्तरसम्भवाद्भयगोचरभया-भावस्यैव । अतएव "द्वितीयाद्भयं भवति" इति श्रुत्या स्वस्मान्न भयमिति परिसङ्ख्यायते । द्वेषविषयस्वाभाव्येन स्वभिन्नज्ञानस्यापि द्वेषकारणतया स्वगोचरभयोत्पत्त्यसम्भवात् । भयस्य स्वहेतुकानिष्ट-चिन्तनस्वरूपता तु श्रुतिशतेनापि नापलपितुं शक्यत इति दिक् ।**

इत्यादिकमपि द्रष्टव्यम्। **अतएव** भयस्य द्वेषविशेषस्वरूपत्वादेव। **विषय-स्वाभाव्येने**ति। द्वेषस्यायं स्वभावो यत्स्वसमवायिविषयको न भवतीत्यतो विषयतया द्वेषं प्रति स्वसमवायिभेदस्य कारणत्वात् स्वस्मान्न भयमिति परि-सङ्ख्योपपत्तिः, स्वस्य स्वविषयकद्वेषकारणताविरहात्। अनिष्टसम्भावनाया-स्तथात्वे तु स्वहेतुकानिष्टसम्भावनायास्सम्भवेन तदनुपपत्तिरेव स्यादिति भावः।

वस्तुतस्तु अनिष्टोत्पत्तिसम्भावनाजन्यं दुःखं भयम्। अनिष्टञ्च दुःख-प्रयोजकतावच्छेदकधर्म्मविशिष्टस्मरणादि । तत्र यद्धर्म्मावच्छिन्नस्य येन सम्बन्धेन मरणादिसाधनत्वमवगतं स्वस्मिन् तद्धर्म्मावच्छिन्नस्य तत्सम्बन्धज्ञानं मरणाद्यनिष्टोत्पत्तिसम्भावनाया जनकम्। सा च दुःखं जनयति। तथा च मरणादिसाधनतयावगतस्य व्याघ्रस्य स्वस्मिन् सान्निध्यसम्बन्धज्ञानं मरणा-द्युत्पत्ति सम्भावयति, सम्भावना तु दुःखं जनयति। अनिष्टसाधनताभयहेतुकत्वे अनिष्टसाधनताज्ञानादिसहकृतसम्बन्धज्ञानप्रयोज्यत्वरूपे ईदृशप्रयोज्यताविशेषस्य लाभायैव सूत्रे भयपदम्। ईदृशप्रयोज्यताविशेषस्य हेतुतासामान्यविलक्षणस्य धात्वर्थे भय एवान्वयान्न कारकत्वहानिः। तथा च व्याघ्राद्बिभेतीत्यत्र पञ्चम्यर्थे दर्शितप्रयोज्यत्वे निरूपितत्वेन प्रकृत्यर्थस्यान्वयः। तस्यानिष्टसम्भावनाजन्यदुःखे भयेऽन्वयाद् व्याघ्रप्रयोज्यं भयं वाक्यार्थः। व्याघ्रादेः स्वविशेष्यकानिष्टसाधनता-ज्ञानादिसहकृतस्वसम्बन्धज्ञानादिद्वारानिष्टोत्पत्तिसम्भावनाजन्यदुःखप्रयोजकत्वं सान्निध्यस्वरूपस्य संसर्गातिशयस्वरूपप्रकर्षेण ज्ञानं सम्भावनाकोटेरनिष्टोत्पत्ते-

रुत्कटत्वं प्रयोजयति। अथवानिष्टोत्पत्तेरवधारणमेव जनयतीत्युभयथोत्कटं दुःखं प्रयोजयतीति सन्निधिप्रकर्षेण भयप्रकर्षः।

इत्थञ्च "द्वितीयाद्धि भयम्" इति श्रुतिर्भये द्वितीयहेतुकत्वपरिसङ्ख्यां बोधयति, इतरथा द्वितीयादित्यस्य वैयर्थ्यापत्तेः। परिसङ्ख्या तु प्रकृते द्वितीयान्यहेतुकत्वस्य स्वहेतुकत्वपर्य्यवसन्नस्य व्यवच्छेदः। भयस्य स्वहेतुकत्वं न सम्भवति, स्वसन्निधिज्ञानस्यानिष्टोत्पत्तिसम्भावनां प्रत्यप्रयोजकत्वात्, अन्यथा सोऽहमात्मना सम्बद्ध इत्याकारके सकलदुःखोच्छेदप्रयोजके ज्ञाने विद्यमाने भयापत्तेः। एवं नरकाद्बिभेतीत्यादौ नरकपदं कुम्भीपाकादिपरम्। कुम्भीपाकादिसम्बन्धज्ञानं शरीरतापाद्यनिष्टोत्पत्तिं सम्भावयति। सा च दुःखं जनयतीति नानुपपत्तिः। नरकपदस्य सुखासम्भिन्नदुःखपरता तु न युज्यते, तथा सति दुःखादव्यथाया वा बिभेतीति प्रयोगापत्तेः। "भयात् त्रातुम्..." इत्यादौ च भयपदस्य भयजनके व्याघ्रचौरादौ लक्षणेति नानुपपत्तिः। यदि च दुःखाद्बिभेतीति प्रयोगोऽभ्युपेयते, तदा दुःखस्य भोगस्वरूपानिष्टसाधनस्य सम्बन्धज्ञानं भोगस्वरूपानिष्टस्योत्पत्तिं सम्भावयति, सम्भावना दुःखं जनयतीति नानुपपत्तिः।

एतेन व्याघ्राद्बिभेतीत्यत्रापादानस्य भयस्य विषयित्वं धात्वर्थे भयेन्वेति, भयन्तु द्वेषविशेष इति न युज्यते, यतो हि व्याघ्रविषयकद्वेषविषयको द्वेषो न सम्भवति। तथाहि—व्याघ्रविषयकद्वेषस्यानिष्टसाधनत्वज्ञानं विना तद्विषयकद्वेषानुत्पादः। तच्च ज्ञानं तदैव सम्भवति, यदि व्याघ्रस्य बलवदनिष्टाननुबन्धीष्टसाधनत्वं स्यात्, तच्च बाधितमिति न तज्ज्ञानं सम्भवति। न चानिष्टसाधनत्वभ्रमाद् द्वेषविषयको द्वेष इति वाच्यम्, तथा सत्यभ्रान्तस्य व्याघ्राद्भयाद्बिभेमीत्यतः शाब्दानुदयप्रसङ्गादित्यपि परास्तम्, भयादिपदार्थस्य दर्शितत्वात्। व्याघ्रप्रयोज्यभयप्रयोज्यस्य भोगस्वरूपानिष्टसम्भावनाजन्यदुःखात्मकभयस्य कर्त्तरि सम्भवात्।

एवं चौरेभ्यो बिभेत्युद्विजते वेत्यत्र चौरप्रयोज्यमनिष्टं धनहरणादि, तदुत्पत्तिसम्भावनया दुःखमिति। उद्वेगोऽपि भयमेव। यत्र दर्शितभयप्रयोज्य-

त्वस्य तत्त्वेन न विवक्षा, तत्र षष्ठ्येव प्रमाणम्। अतएव "कस्य विभ्यति देवाश्च जातरोषस्य संयुगे।" "कुमार इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च।..." इत्यादयः प्रयोगा उपपद्यन्ते। एवं व्याघ्राद् गां त्रायते रक्षति वेत्यत्र भयस्वरूपदुःखप्रयोजकाभावप्रयोजको व्यापारो धात्वर्थः। भयाभावस्वरूपफलवत्तया गवादेः कर्म्मत्वम्। पञ्चम्यास्तथाविधप्रयोज्यत्वमर्थः फलैकदेशे भये व्युत्पत्तिवैचित्र्येणान्वेति। भयमभावश्च खण्डश एव धात्वर्थ इति वा। यस्या अहिकण्टकादिव्यक्तेः क्वापि न भयप्रयोजकत्वम्, तस्यास्तद्व्यक्तित्वेन त्राणापादानत्वस्यापि विरह एव, तद्व्यक्तेस्त्रायत इत्यप्रयोगात्। सर्पत्वादिना पुनरपादानत्वं तस्या अपीष्यत एव, यद्धर्म्मावच्छिन्नस्य सम्बन्धज्ञानमनिष्टोत्पत्ति सम्भावयति, तद्धर्म्मवतस्तथात्वोपगमादिति। भयात् त्रायत इत्यत्र भयप्रयोज्यस्य भयस्याभावप्रयोजकः व्यापारः प्रतीयते। भयस्य यथा भयप्रयोज्यत्वं तथा दर्शितमेव। भयन्तु दुःखं प्रत्यक्षसिद्धमेव, भयमतिदुःखमिति भयेनातिदुःखितोस्मीति चानुभवात्। बिभेत्याद्यर्थो भयं दुःखमेव, चेतनकर्त्तृकत्वस्य तत्र नियमात्। यत्र चेतनकर्म्मकं रक्षणम्, तत्र दुःखस्वरूपभयाभावप्रयोजको व्यापार एव धात्वर्थः। यत्राचेतनकर्म्मकं रक्षणम्, तत्र वह्नेः पटं रक्षति काकेभ्यो दधि रक्षतीत्यादौ नाशानुत्पादप्रयोजको व्यापारो रक्षतेरर्थः। नाशान्वयिप्रयोज्यत्वसामान्यं पञ्चम्यर्थः। आतपात्कुसुमं रक्षत्यवति वेत्यादावपकारानुत्पादप्रयोजको व्यापारो धात्वर्थः। पुष्पापकारः शोष एव, प्रयोज्यत्वसामान्यमपकारेन्वेतीति दिक्।

पराजेर्युद्धनिवृत्तिरर्थ इति केचिदाहुः। तत्र पञ्चम्या द्वेषोर्थः। प्रकृत्यर्थस्य तत्र विषयत्वेनान्वयः। द्वेषस्य जन्यतया धात्वर्थेन्वयाद्रणात् पराजयत इति वाक्याद्रणगोचरद्वेषजन्ययुद्धनिवृत्तिर्वाक्यार्थो यद्यपि सम्भवति, तथाप्यध्ययनात्पराजयत इत्यादावनुपपत्तिर्निवृत्तिमात्रस्य धात्वर्थत्वे विषात् पराजयत

---

१ अत्र पञ्चम्यर्थस्य प्रयोज्यत्वसामान्यस्य फलद्वारेण व्यापारेन्वयोपगात् नामार्थेन सहानन्वयाच्च कथमस्य कारकत्वमिति शङ्का नावतरितुमर्हतीति ध्येयम्।

एवं रणात् पराजयत इत्यत्र द्वेषाधीना निवृत्तिः पराजेरर्थः। पञ्चम्यर्थविषयता तु द्वेषनिवृत्त्योरुभयोरन्वेति। तथा च रणद्वेषाय-त्तरणनिवृत्तिमानित्यन्वयबोधः। अतएव "पराजेरसोढः" इत्यनुशासने पराजेर्य्योगेसहनस्य द्वेषस्य विषयोपादानत्वेन संज्ञायते। शत्रून् पराजयत इत्यत्राभिभवानुकूलो व्यापारोर्थः पराजेरिति शत्रुरभिव्या-प्यतया कर्म्मैव। १४०।

**क्रियानिवृत्तिजनकव्यापारान्तरवाचिनः।**
**धातवो वारयत्याद्याः प्रत्याकाङ्क्षन्ति पञ्चमीम्॥१४१॥**

वारयत्यादिधातुः [1]प्रवृत्तिनिमित्तत्वोपलक्षितपतनत्वाद्यवच्छिन्न-प्रतियोगिताकमभावं फलविधयाभिधत्ते, [2]तत्प्रयोजकमपि मा पतेति [3]वाक्यादिर्व्यापारः। प्रधानतया तज्जनितपदार्थोपस्थितिरुपलक्षण-

इत्यस्यापत्तिरित्यतः पराजेरर्थं स्वयमाह—**द्वेषाधीने**ति। पञ्चम्यर्थविषयताया द्वेषे निवृत्तौ च व्युत्पत्तिवैचित्र्येणान्वय इत्याह—**उभयोरन्वेती**ति। अतएव पराजेर्न्निरुक्तार्थकत्वादेव। **कर्म्मैवे**ति। तत्र कर्म्मसंज्ञयापादानसंज्ञाया बाधादित्यर्थः। १४०।

वारणार्थानां धातूनां योगे ईप्सितोर्थोपादानसंज्ञकं स्यादित्यर्थकं "वारणार्थानामीप्सितः" इति सूत्रम्। तदनुशिष्टपञ्चम्यर्थं वारणरूपधात्वर्थ-निरूपणद्वारा निरूपयति—**क्रियानिवृत्ती**त्यादिना। **प्रवृत्ती**ति। वारयत्यादि-धातुशक्यतावच्छेदकत्वोपलक्षितेत्यर्थः। इदञ्च पतनभक्षणादीनां प्रत्येका-भावस्यैव तत्र तत्र फलत्वाच्छुद्धपतनत्वादीनामेव प्रतियोगितावच्छेदकत्वा-दुक्तम्। **वाक्यादी**त्यादिपदेन लगुडाद्युद्यमनव्यापारपरिग्रहः। **प्रधानतये**ति।

१ धातु ० इत्यधिकः पा० मु० पु०।
२ तत्प्रयोजकमिति इति मु० पु० पा०।
३ वाक्यादिव्यापारम् इति मु० पु० पा०।

धर्म्ममोषेण पतनाभावत्वादिना फलमवगाहते । तत्राभावस्वरूपफलाधिकरणतया विवक्षिते कर्म्मसंज्ञा बलीयसीति ततो द्वितीया, फलीभूताभावप्रतियोगिक्रियाकारकाणि पुनरपादानसंज्ञकानीति तत्रत्या पञ्चमी तानि कारकाण्यभिधत्ते । कूपादन्धं वारयतीत्यत्र कूपाधिकरणकपतनप्रतियोगिकस्यान्धवृत्तेः, यवेभ्यो गां वारयतीत्यत्र यवकर्म्मकभक्षणप्रतियोगिकस्य गोवृत्तेः, परस्वेभ्यः पाणिं वारयतीत्यत्र परस्वकर्म्मकापादानप्रतियोगिकस्य पाणिवृत्तेः, शरेभ्यः शरीरं वारयतीत्यत्र शरकरणकव्याधप्रतियोगिकस्य शरीरवृत्तेः, पुष्पेभ्य आतपं वारयतीत्यत्र पुष्पकर्म्मकशोषणप्रतियोगिकस्यातपवृत्तेः, श्वपचेभ्यो दातारं वारयतीत्यत्र श्वपचसम्प्रदानकदानप्रतियोगिकस्य दातृवृत्तेरभावस्यानुकूलो व्यापारो वाक्यार्थः ।

यत्तु क्रियाविषयकनिवृत्त्यनुकूलो व्यापारो वारयतेरर्थः । तत्र निवृत्त्यन्वितमाधेयत्वं द्वितीयायाः प्रकारित्वं पञ्चम्याः शक्यम् ।

वारयत्यादिधातुजनिता पतनाद्यभावप्रयोजकव्यापारमुख्यविशेष्यकोपस्थितिरित्यर्थः । **उपलक्षणधर्म्ममोषेणे**ति । धातुशक्यतावच्छेदकत्वांशस्य परित्यागेनेत्यर्थः । **क्रियाकारकाणी**ति । तथाभूतपतनादिक्रियाया अधिकरणादिकारकीभूतकूपादिकानीमित्यर्थः । ईप्सितपदं सूत्रे नाप्तीच्छाविषयपरम्, किन्तु "कर्त्तुरीप्सित..." इत्यत्रेवाप्तिमत्परमेव । आप्तिश्च सम्बन्धः । स च स्वार्थफलप्रतियोग्यधिकरणत्वादिकमेवेत्याशयः । **तानि कारकाणी**ति । फलीभूताभावप्रतियोगिक्रियानिरूपितयादृशकारकोत्तरा पञ्चमी, तादृशमेवाधिकरणत्वादिकारकमभिधत्त इत्यर्थः । वारयत्यादिधातूनां पतनाद्यनेकक्रियाभावप्रयोजकव्यापारार्थकत्वाद्धात्वर्थतावच्छेदकत्वस्योपलक्षणतया तदनुगमकमुपात्तमित्याशयेनानेकविधं तादृशाभावप्रतियोगिनं दर्शयति— **कूपादन्धमि**त्यादिना । **अन्धवृत्ते**रित्यादिषष्ठ्यन्तानामग्रिमेणा**भावस्य** इत्यनेन सामानाधिकरण्यम् ।

तथा च कूपप्रकारिकाया अन्धवृत्तेः पतननिवृत्तेरनुकूलो व्यापारो भवति कूपादन्धं वारयतीतिवाक्यार्थः, कूपे मा पतेयमिति निवृत्तौ कूपप्रकारताया निराबाधादिति ।

तन्न, तथा सत्यचेतनकर्म्मके पुष्पेभ्य आतपं वारयतीत्यादौ कूपादन्धं वारयति न पुनरन्धो निवर्त्तत इत्यादौ च गतिश्चिन्तनीया । १४१ ।

**लीयतिर्दर्शनाभावजनिकां वदति क्रियाम् ।**
**मातुर्न्यलीयतेत्यादौ पञ्चमी चेष्यमाणताम् ॥ १४२ ॥**

मातुर्निलीयते बाल इत्यादौ स्वकर्म्मकदर्शनाभावानुकूलो व्यापारो लीयतेरर्थः । पञ्चमी तु वृत्तिमत्त्वेनेच्छाविषयत्वमभिधत्ते । तेन मातृवृत्तित्वेनेष्यमाणः स्वकर्म्मकदर्शनाभावो वाक्यार्थः । अतएव बालो मातुर्निलीयते माता पुनरेनं पश्यत्येवेत्यादयः प्रयोगाः सूपपादाः । तदर्थमेव "अन्तर्द्धौ येनादर्शनमिच्छति" इत्यत्रेच्छतिग्रहणमिति व्यक्तं तद्विदाम् । १४२ ।

**गतिश्चिन्तनीये**ति । पूर्वत्राचेतने निवृत्तेर्यत्नस्वरूपस्याभावः, उत्तरत्र व्यापारे निवृत्त्यनुकूलत्वाभाव इति तत्रानुपपत्तिरिति भावः । इदमुपलक्षणम् । कूपे मा पतेयमित्याकारकनिवृत्तिप्रकारितामादायोपपादने क्षेत्रे यवेभ्यो गां वारयतीत्यादौ क्षेत्रादिपदेभ्योऽपि पञ्चम्यापत्तेः, क्षेत्रे यवं मा भक्षेयमित्याकारकनिवृत्तिप्रकारितायाः क्षेत्रे सत्त्वादिति । १४१ ।

**वृत्तिमत्त्वेने**ति । वृत्तिमत्त्वप्रकारकेत्यर्थः । तादृशेच्छा च मत्कर्म्मकं दर्शनं मातुर्म्मा भवत्वित्याकारकम् । **अतएव** इच्छाया पञ्चम्यर्थघटकत्वादेव । १४२ ।

"भुवः प्रभवः" "आख्यातोपयोगे च" "जनिकर्त्तुः प्रकृतिः" इति

**प्रकाशनाधिकरणेधीयमानस्य वक्तरि ।**
**प्रकृतौ च जनेः कर्त्तुरपादानत्वमिष्यते ॥१४३॥**

हिमवतो गङ्गा प्रभवतीत्यत्र प्रभवतिः प्रकाशपर्य्यायः । प्रकाशस्तु दर्शनयोग्यत्वाभावावच्छेदकदेशाव्यवहितदेशावच्छेदेन दर्शनयोग्यत्वम् । द्वितीयदेशान्वयितादात्म्यं पञ्चम्यर्थः । तथा च हिमवदभिन्नो यो दर्शनयोग्यत्वाभावावच्छेदकदेशाव्यवहितदेशस्तद्दर्शन-योग्यतावती गङ्गेति वाक्यार्थः । उच्चारणानन्तरितमुच्चारणमधीङोर्थः । प्रथमोच्चारणान्वितं कर्त्तृत्वं पञ्चम्याः ।[1] ब्रह्मणः प्रजाः प्रजायन्त इत्यत्र जनेरुत्पत्तेः कर्त्रीणां प्रजानां प्रकृतित्वमुपादानत्वं वा ब्रह्मणः

सूत्रैर्विहितामपादानसंज्ञां निरूपयितुमाह—**प्रकाशने**त्यादि । सूत्रेषु **प्रभवः** प्रकाशनाधिकरणम्, **आख्याता** वक्ता। **प्रकृतित्वमुपादानत्वं वे**ति । प्रकृतित्वस्य विकारित्वरूपत्वे रघोरजोजायतेत्यादौ ब्रह्मणः प्रजाः प्रजायन्त इत्यादौ च पञ्चम्यनुपपत्तिप्रसङ्गः, सुतादिवपुषः पित्रादिशरीरविकृतित्वाभावा-त्तदीयशुक्रशोणितादिविकृतित्वस्यैव तत्र सत्त्वात् । शुक्रशोणितादीनां मल-मूत्रादेरिव शरीरावयवत्वाभावात्तदवयवारभ्यत्वस्यैव तद्विकारत्वरूपत्वात् । एवं ब्रह्मणो निमित्तकारणत्वादेव प्रकृतित्वविरहः । तस्मात्कारणत्वसामान्यमेव तदिति केचिदाहुः । तन्न सुन्दरम्, पुत्रस्य पितृविकृतित्वानपायात् । नहि मलमूत्रादिसदृशं शुक्रशोणितादि, पित्रोरारम्भकत्वात् । अतएव "षाट्कौशिकं शरीरं त्रीणि मातृतस्त्रीणि पितृतः । त्वङ्मांसरुधिराणि मातृतः, अस्थिस्नायु-मज्जानः पितृतः" इति श्रूयते । तस्माद्विद्यमाननाशप्रतियोगित्वं प्रकृतित्वम् । न च खण्डपटस्य महापटजन्यत्वान्महापटः खण्डपटस्य प्रकृतिरिति व्यवहार-स्स्यादिति वाच्यम्, समवायिकारणनिष्ठनष्टजातीयत्वस्य प्रकृतित्वात् । महापटस्य खण्डपटसमवायिकारणत्वविरहात् । तन्तुभ्यः पट इत्यादौ तु हेतुपञ्चमी ।

[1] तथा चोपाध्यायकर्त्तृकोच्चारणानन्तरितोच्चारणकर्त्तृत्वमर्थः इत्यधिकः पा० मु० पु० ।

प्रतीयते। धात्वन्तरोपात्तायामप्युत्पत्तावेवम्। अतएव "अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे। आत्मा वै पुत्रनामासि त्वञ्जीव शरदश्शतम् ॥" इति श्रुतिः। हेतुपञ्चम्या गतार्थमेतदिति केचित्। १४३।

**अध्याहृतल्यबन्तस्य कर्म्माधिकरणन्तथा।**
**प्रासादात्पश्यतीत्यादौ विभक्तिर्वक्ति पञ्चमी ॥१४४॥**

प्रासादात्पश्यति आसनात्प्रेक्षत इत्यादावारुह्योपविश्येत्यध्याहार्य्यम्। कर्म्मण्यधिकरणे च पञ्चमी। प्रासादमारुह्यासने उपविश्य पश्यतीति[1] पर्य्यवसितवाक्यशरीरम्। १४४।

अपादानपञ्चमी तु मृत्पिण्डाद् घटो जायत इत्यादौ। तत्र नष्टपिण्डजातीयाया मृदो घटसमवायिकारणत्वात्। साजात्यञ्च येन रूपेण प्रकृतित्वं तेन रूपेण बोध्यम्। अतो द्रव्यत्वादिना तन्त्वादेर्महापटादिसाजात्ये न प्रकृतित्वम्, द्रव्यत्वादेः प्रकृतितानवच्छेदकत्वादित्याशये**नोपादानत्वं** **वे**त्युक्तम्। सूत्रे जनिपदमुत्पत्तिपरन्न तु जनिधातुपरमित्याशयेनाह—**धात्वन्तरे**ति। उत्पत्त्यर्थकसम्भवत्यादियोग इत्यर्थः। **हेतुपञ्चम्ये**ति। "विभाषा गुणेऽस्त्रियाम्" इति विहितपञ्चम्येत्यर्थः। तथा च सूत्रे जनिपदं जनिधातुबोध्योत्पत्तिपरमेवेति भावः। १४३।

"ल्यब्लोपे कर्म्मण्यधिकरणे च" इति वार्त्तिकेन ल्यबन्तधातुलोपे सति कर्म्मवाचकादधिकरणवाचकाच्च पञ्चमी विधीयते। तदर्थमाह—**अध्याहृते**ति। **कर्म्मकर्म्मत्वमधिकरणमधिकरणत्वं पञ्चमीविभक्तिर्वक्ती**त्यन्वयः। १४४।

( इति सटीकपदवाक्यरत्नाकरे कारकपञ्चमीविवरणम्। )

---

१ पश्यति इति पा० मु० पु०।

## ( अथाकारकपञ्चमीविवरणम् । )

**यतोध्वकालनिर्माणं ततो भवति पञ्चमी ।**
**सप्तमी केवलं कालादध्वनः प्रथमापि च ॥१४५॥**

"यतश्चाध्वकालनिर्माणं ततः पञ्चमी" "तद्युक्तादध्वनः प्रथमासप्तम्यौ" "कालात्सप्तमी वक्तव्या" इति वार्त्तिकैः यतो यदवधिकम्, अध्वकालयोर्निर्माणं निर्गतं मानं परिमाणम्, तद्वाचकात् पञ्चमी, तथाविधपञ्चमीयुक्ताध्वावयववाचकात्प्रथमासप्तम्यौ, तथा कालावयववाचकात्सप्तमीमात्रं विधीयते। तदर्थं निरूपयति—**यतोध्वकाले**त्यादिना । **कालनिर्माण**मिति, कालस्य निर्गतं परिमाणं स्वावयवकालसङ्ख्या। **कालादध्वन** इत्युभयमपि कालत्वाध्वत्वावान्तरमासत्वयोजनत्वाद्यवच्छिन्नपरम् ।

अत्र केचित्—ग्रामाद्वनं योजनमित्यादौ योजनादिशब्दा योजनपरिमाणविशिष्टे लाक्षणिकाः । पञ्चम्यर्थोवधिमत्त्वम् । ग्रामपदार्थो लक्षणया ग्रामाधिकरणदेशः । तदवधित्वं तत्परिमाणारभ्यत्वं तत्परिमाणज्ञानसापेक्षज्ञानविषयत्वं वा योजनपदार्थैकदेशे परिमाणेन्वितम्। प्रथमासप्तम्योस्समानदेशावच्छिन्नस्संयुक्तदेशसंयोगोर्थः । तदेकदेशे प्रथमसंयोगे ग्रामावधिकयोजनपरिमाणवद्देशस्यान्वयात्तादृशसंयोगाश्रयदेशसंयोगवद्वनमिति बोधः । एवं कार्त्तिक्या आग्रहायणी मासे इत्यत्रापि पञ्चम्या अवधित्वमर्थः। तच्च त्रिंशद्दिनवर्त्तिनो लक्षणया मासपदार्थस्यैकदेशे त्रिशद्दिनेन्वेति। सप्तम्यास्त्रिंशद्दिननाशोत्पत्तिकालिकोत्पत्तिरर्थः। तथा च कार्त्तिक्यवधिकं त्रिशद्दिनवृत्तिमन्निष्ठत्रिंशद्दिननाशोत्पत्तिकालोत्पत्तिमती आग्रहायणीत्यन्वयबोध इत्याहुः ।

तत्र योजनमासादिपदानां लाक्षणिकत्वं प्रथमादीनाञ्च गुरुतरार्थवाचकत्व-

**योजनादिशब्दा मुख्यया वृत्त्या परत्वविशेषमभिदधति। गौण्या तु तदभिव्यञ्जकसंयुक्तसंयोगघटकान् परत्वप्रतियोगिकापरत्वाधिकरणदेशान्। मासादिपदमपि तावदादित्यपरिस्पन्दान्तरितजन्मनोर्वस्तुनोः सामयिकमपरत्वविशेषमभिदधत् तत्संसर्गगुणेन तदन्तरालकालावयवानभिधत्ते। स्वीक्रियते सङ्ख्याया इव परत्वादेरपि समवायान्येन केनापि संसर्गेण गुणकर्म्मणोरपि व्यवहारवशाद्वैशिष्ट्यम्। तथा च ग्रामाद्योजनं योजने वा वनमित्यादौ पञ्चम्या अवधिमत्त्वं**

मित्याशयेन योजनादिपदयोश्शक्यार्थमादायैव **ग्रामाद्योजन** इत्यादौ बोधमुपपादयितुमाह—**योजनेत्या**दि। आदिपदाद् गव्यूतिक्रोशादीनामध्ववाचकानां परिग्रहः। **परत्वविशेषमि**ति। बहुतरसंयोगान्तरितत्वज्ञाननिमित्तकारणकं दिक्पिण्डसंयोगासमवायिकारणकं दूरत्वाख्यं दैशिकपरत्वमित्यर्थः। **तदभिव्यञ्जकत्वं** दर्शितपरत्वज्ञानजनकत्वम्। **संयुक्तसंयोगघटकानि**ति। संयुक्तो यो देशस्तदनुयोगिकसंयोगघटकत्वं देशानामक्षतम्। अवधीभूतदेशसंयुक्तस्तदुत्तरो देशस्तत्संयोगस्तदुत्तरत्र देशे तत्संयुक्तोप्यपरो देश इत्यादिक्रमेण वनपर्य्यन्तं संयुक्तसंयोगज्ञानानामेव ग्रामावधिकयोजनाधिकरणवननिष्ठपरत्वाभिव्यञ्जकत्वं बोध्यम्। **परत्वप्रतियोगिके**ति। योजनपदार्थपरत्वावधिकेत्यर्थः। **देशानि**ति। **अभिदधती**ति पूर्वेणान्वयः। तथा च योजनपदस्य गुणे एव शक्तिर्द्रव्यबोधो लक्षणयैवेति भावः। एवं मासपक्षदिनादिपदमपि गुणविशेषवाचकमेव, द्रव्यबोधस्तु तत्रापि लक्षणयैवेत्याह—**मासादिपदमपी**ति। **तावदादित्यपरिस्पन्दे**ति। यावतीभिः सूर्य्यक्रियाभिर्घटितस्य मासपदार्थत्वमभिप्रेतं तावतीभिरन्तरितेत्यर्थः। **अपरत्वविशेषं** कनिष्ठत्वरूपम्। यस्य जन्मानन्तरसूर्य्यपरिस्पन्दापेक्षया यस्य जन्मानन्तरसूर्य्यपरिस्पन्दो न्यूनस्तस्य तदपेक्षयापरत्वमिति सूर्य्यपरिस्पन्दे तदपेक्षयाल्पत्वज्ञानजन्यत्वमेव विशेषः। **तत्संसर्गगुणेन** तादृशापरत्वरूपशक्यसम्बन्धलक्षणया। **तदन्तरालकालावयवान्** दिनादीन्। कालावयवानां क्रियात्मकत्वात्तेष्वपरत्वगुणस्य सम्बन्धः कथम्, येन लक्षणा स्यादित्याशङ्कायामाह—**स्वीक्रियत** इति। **सङ्ख्याया इवे**ति। षड् रूपाणीत्यादिव्यवहारात् षट्त्वसङ्ख्यादेः

प्रथमायास्सप्तम्या वाधिकरणत्वमर्थ इति ग्रामावधिकयोजनात्मक-परत्वाधिकरणं वनमिति बोधः । कार्त्तिक्या आग्रहायणी मास इत्यत्र कार्त्तिक्यादिपदं तदुत्पन्नस्थिरद्रव्ये लाक्षणिकम् । तथा च कार्त्तिक्युत्पन्नावधिकमासस्वरूपापरत्वाधिकरणमाग्रहायण्युत्पन्नवस्त्वि-त्यन्वयबोधः । १४५ ।

**दिक्शब्दाश्चूत्तरपदाजाह्यन्यैरितरेण च ।**
**आराद्दतेभ्याश्च योगे नाम्नो भवति पञ्चमी ॥१४६॥**

उदयाचलावधिकमपरत्वं तद्विशिष्टश्च देशमभिदधतः पूर्वादयो दिक्शब्दास्तथाविधाः प्रागादयोश्चूत्तरपदा आजन्ता दक्षिणाप्रभृतयः

स्वजनकापेक्षाबुद्धिविषयत्वेन यथा रूपादिवृत्तित्वमित्यर्थः । समवायेनैव गुणवृत्तित्वं गुणे नास्ति, न तु तदन्यसम्बन्धेनेति भावः । **येन केनापी**ति । लक्षणाप्रयोजकशक्यसम्बन्धानामनुगमाभावेन कालिकादिना साक्षात्परम्परया वान्यादृशेन सम्बन्धेनेत्यर्थः । **तथा च** योजनादिपदानां दर्शितपरत्वादि-वाचकत्वे च । **बोध** इति । एवञ्च योजनादिपदं प्रकृते मुख्यार्थकमेव, न लाक्षणिकमिति भावः । १४५ ।

"अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" इति सूत्रानुशिष्टपञ्चम्यर्थं निरूपयति—**दिक्शब्दे**त्यादिना । सूत्रे दिक्पदं दिक्त्वावान्तरधर्म्मावच्छिन्न-वाचकमित्याशयेनाह—**पूर्वादय** इति । न तु दिक्सामान्यार्थका दिगाशादि-शब्दा इत्यर्थः । **तथाविधा** इति । दिग्भेदवाचका इत्यर्थः । तेन सध्र्यङ्-देवद्र्याङादीनां व्युदासः । **तद्विशिष्टश्च देश**मिति । दिशि दृष्टः शब्दो दिक्शब्द इति व्याख्यानात्सम्प्रति देशादिवाचकस्यापि पूर्वादिशब्दस्य योगे पञ्चमी । निरुक्तरीत्या पूर्वादिशब्दानां द्रव्ये प्रयोगो लक्षणयैवेत्याशयेनेदम् । **आजन्ता** इति । "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्व-स्तातिः" इत्यधिकारे "दक्षिणादाच्" इति सूत्रेणास्तातिविषये विहिताच्-

आह्यन्ता दक्षिणाहिप्रभृतयः । अन्येतरशब्दौ पृथक्त्वविशिष्टवाचिनौ । प्रपञ्चार्थमितरग्रहणम् । तेन पृथक्त्वार्थकानामितरेषामपि लाभा- च्चैत्राद्भिन्नः पृथगित्यादिकमुपपद्यते । "इतरस्त्वन्यनीचयोः" इति [1]कोशसिद्धनीचवाचकस्त्वितरशब्दो नेह गृह्यते, अयमस्मात्तारो मन्द्रो ह्रस्व इत्यादाविवायमस्मान्नीच इत्यादावपि विभक्तपञ्चम्यैवार्थ- सिद्धेः । ऋतेयोगे द्वितीयापि "ततोन्यत्रापि दृश्यते" इत्यनुशासनेन "ऋते हि द्वितीया च" इति चान्द्रसूत्रेण चानुशिष्यते । तेन "पुरुषाराधनमृते" इति प्रयोगोपि प्रमाणम् । आरादिति दूरसमीपयो- र्वर्त्तते । पूर्वो ग्रामात्तडाग इत्यादौ पञ्चम्याः परत्वनिरूपकत्वमर्थः । तथा च ग्रामवृत्तिपरत्वनिरूपकमुदयाचलावधिकं यदपरत्वं तदाश्रयस्तडाग इति । माधवात्पूर्वो मधुरित्यत्र पूर्वपदेन प्रागभावा- धिकरणस्य पञ्चम्या प्रतियोगित्वस्याभिधानान्माधवप्रतियोगिक- प्रागभावस्याधिकरणं मधुरित्यन्वयबोधः । प्रागादिशब्दानां दिक्शब्दत्वेपि ग्रामस्य दक्षिणत· इत्यादाविव प्राप्तामतसर्थषष्ठीं

प्रत्ययान्ता इत्यर्थः । **प्रभृति**पदेनोत्तरादिशब्दानां परिग्रहः । **आह्यन्ता** इति । तत्रैव "आहि च दूरे" इति सूत्रेण दूरार्थे विहिताहिप्रत्ययान्ता इत्यर्थः । **पृथक्त्वे**ति । भिन्नादिपदानामपि न भेदविशिष्टवाचकत्वम्, किन्तु पृथक्त्व- स्वरूपगुणविशिष्टवाचकत्वमेवेत्याशयेनेदम् । एवञ्च भेदवाचकनञादिपदयोगे घटो नेत्यादौ न पञ्चमी । द्रव्यादन्यो गुण इत्यादौ तु "पञ्चमी विभक्ते" इत्यनेन पञ्चमी, नानेनेति भावः । **विभक्तपञ्चम्यैवे**ति । "पञ्चमी विभक्ते" इति सूत्रविहितपञ्चम्यैवेत्यर्थः । **पुरुषाराधनमृत** इति । "क्व कर्म्म प्रध्वस्तं फलति" इत्यस्य पूर्वम् । महिम्नस्तोत्रस्थमिदम् । मुख्यार्थकपूर्वशब्दयोगे पञ्चमीमुदाहरति—**माधवादि**ति । **अतसर्थषष्ठीमि**ति । "षष्ठ्यतसर्थप्रत्ययेन"

१ ० वाचकताकः इति मु० पु० पा० ।

बाधितुं पृथग्ग्रहणम्। (अतो) ग्रामात्प्राक् तडाग इत्यादौ ग्रामवृत्तिपरत्वनिरूपकोदयाचलावधिकापरत्ववति देशे तडाग इत्यवगम्यते। एवं ग्रामाद्दक्षिणा दक्षिणाहि वेत्यादौ बाडवानलावधिकापरत्ववद्देशो दक्षिणापदस्य पञ्चम्याः परत्वनिरूपकत्वम् आजादेर्दैशिकमधिकरणत्वमर्थः। तेन ग्रामवृत्तिपरत्वनिरूपकबडवानलावधिकापरत्ववति देशे तडाग इति वाक्यार्थः।

अवयववाचिपूर्वादिपदयोगे षष्ठ्येव प्रमाणम्। तेन पूर्वः कायस्य न तु कायात्। शरीरस्य दक्षिणाहि तिलः, न तु शरीरादिति। चैत्रादन्य इतर इत्यादौ चैत्रावधिकपृथक्त्ववानिति बोधः।

अत्रान्योन्याभाववानेवान्यादिपदार्थः। अर्थपरमन्यपदम्, न तु स्वरूपार्थमिति प्रपञ्चनाय पृथगितरपदोपादानम्। न च घटान्नेति प्रसज्येत, नञोभावसामान्यार्थकत्वात्; संसर्गमर्य्यादया तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताभानेन घटो नेत्यादौ घटान्योन्याभावस्यार्थतो लाभादन्योन्याभावत्वस्य प्रवृत्तिनिमित्तत्वाभावात्।

इति विहितां षष्ठीमित्यर्थः।

**षष्ठ्येवे**ति। "तस्य परमाम्रेडितम्" इति सूत्रेवयववाचकपरशब्दयोगे षष्ठीनिर्देशात्ततः षष्ठ्यास्साधुत्वज्ञापनादिति भावः।

अन्येतरपदयोरन्योन्याभावविशिष्टवाचकत्ववाद्येकदेशिमतमाह—**अत्रे**त्यादिना **एकदेशिन** इत्यन्तेन। नञ्पदस्याभावत्वावच्छिन्नार्थकत्वे घटो नेत्यादावन्योन्याभावत्वावच्छिन्नस्य बोधमुपपादयति—**संसर्गमर्य्यादये**ति। **अर्थतो लाभादि**ति। तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकत्वस्यात्यन्ताभावादावनभ्युपगमादन्योन्याभावमात्रे एव तस्योपगमाच्चेत्याशयः।

नञोभावत्वमात्रावच्छिन्नार्थकत्वे "तत्सादृश्यमभावश्च..." इत्यादिविरोध

**भवतु वान्योन्याभावो नञर्थः, निपातानामभेदान्वयं प्रतीव विभक्तिविशेषार्थान्वयं प्रत्ययोग्यत्वमेव कल्प्यत इत्येकदेशिनः ।**

**वनादारादित्यत्र वनावधिकं परत्वमपरत्वं वार्थः । ऋतेशब्द-स्यान्योन्याभावस्तद्वानत्यन्ताभावस्तद्वाँश्चार्थः । स्तोकादृते पचति जलादृते गन्धः गन्धादृते पाषाणो धूमादृते वह्निरिति चतुर्णा-न्निदर्शनम् । १४६ ।**

इत्यत आह—**भवतु वे**ति । **अभेदान्वयमि**ति । अभेदान्वयविवरणे "आद्यस्तत्रान्वयो नेष्टो निपातार्थेन कस्यचित् ।" इत्यनेन निपातानाम-भेदान्वयप्रयोजकत्वाभावो यथा दर्शितः, तथैव पञ्चम्यर्थान्वयप्रयोजकत्वा-भावोपि तेषामुपेयत इत्यर्थः । **इत्येकदेशिन** इति । "यल्लक्ष्मीरिव..." इत्यादौ निपातार्थेप्यन्वयबोधस्य दर्शितत्वादुक्तदृष्टान्तासिद्धिर्नञ्पदस्याभावत्वमात्रा-वच्छिन्नार्थकत्वेनुभवविरोधश्चास्वरसबीजम् ।

**चतुर्णान्निदर्शन**मिति । प्रथमे स्तोकभेदस्य पाके स्वरूपेण द्वितीये जलभेदवतो निष्ठत्वेन गन्धेन्वयः । भेदस्य तदर्थत्वे सामानाधिकरण्यलाभो न स्यादृतेपदस्य सप्तम्यन्तत्वस्मरणेपि सप्तम्याः सामानाधिकरण्यावाचकत्वादिति भेदवानेव ऋतेपदार्थः । आधेयत्वं सम्बन्धः लुप्तसप्तम्यर्थो वा । **गन्धादृते** इत्यत्रान्योन्याभावतद्वतोर्वाच्यत्वे गन्धादृते कुसुममित्यपि प्रमाणं स्यात्, गन्धभेदस्य कुसुमेपि सत्त्वादिति तत्रात्यन्ताभाव एव ऋतेपदार्थः । तस्य स्वरूपेण पाषाणेन्वयः । **धूमादृत** इति । अत्रान्योन्याभावतद्वतोरत्यन्ताभावस्य वा ऋतेपदार्थत्वे धूमादृते आर्द्रेन्धनप्रभववह्निरित्यपि प्रमाणं स्यादित्यतोत्यन्ता-भाववानेव ऋतेपदार्थः । तस्याधेयतया वह्नावन्वयाद्धूमात्यन्ताभाववत्यार्द्रेन्धन-प्रभववह्नेर्वृत्तित्वविरहेण नोक्तप्रयोगस्य प्रामाण्यमिति भावः ।

अत्र "अपादाने पञ्चमी" इति सूत्रविवेचने "कार्त्तिक्याः प्रभृति" इति भाष्यप्रयोगात् प्रभृतियोगेपि पञ्चमी साधुरिति विज्ञाप्यते । तदैतद्भाष्यं

**अपाङ्परिप्रति प्राप्तं कर्म्मप्रवचनीयताम् ।**
**बहिश्च स्वस्य योगेन पञ्चम्या यान्ति हेतुताम् ॥१४७॥**

**अपपरी वर्जनार्थौ मर्य्यादायामभिविधौ चाङ् प्रतिनिधिप्रतिदानयोः प्रतिश्च कर्म्मप्रवचनीयसंज्ञां भजमानो व्यपेक्षमाणस्य प्रातिपदिकस्य पञ्चम्या निमित्तम् । बहिश्शब्दोपि तथा ।**

**अप हरेः परि हरेर्वा संसार इत्यादावत्यन्ताभावः कर्म्मप्रवचनीययोः पञ्चम्या आधेयत्वमर्थः । हरिवृत्त्यन्ताभावप्रतियोगी संसार इति वाक्यार्थः ।**

विवृण्वता कैयटेन "तत आरभ्येत्यर्थः" इत्युक्तम् । तेनारभ्येतिल्यबन्तयोगेपि पञ्चमीति च विज्ञाप्यते । कार्त्तिक्याः प्रभृति आरभ्य वा सेव्यते गङ्गेत्यादौ प्रभृत्यारभ्यशब्दयोरधिकरणकालध्वंसाधिकरणसमयोर्थः । पञ्चम्या अधिकरणान्वयिनिरूपकत्वम् । प्रभृत्याद्यर्थः सेवने व्यापकतयाधेयतया वान्वेति । तथा च कार्त्तिक्यधिकरणसमयध्वंसाधिकरणं यस्समयस्तद्व्यापकस्य तद्वृत्तेर्वा सेवनस्य कर्म्म गङ्गेति बोधः । एवमेव भवात्प्रभृति आरभ्य वा सेव्यो हरिरित्यादावप्यन्वयो बोध्यः ।

"ततः प्रभृति सङ्क्रान्तावुपरागादिपर्वसु ।
त्रिपिण्डमाहरेच्छ्राद्धमेकोद्दिष्टं मृताहनि ॥..."

इत्यादौ प्रभृत्यर्थस्य निपातार्थतया सङ्क्रान्त्यादिकालेभेदान्वयो न युज्यते यदि, तदा सङ्क्रान्त्यादिवृत्तिश्राद्धप्रभृत्यर्थस्याधेयतयैवान्वयो बोध्यः । १४६ ।

**अपाङि**ति । **संज्ञां भजमान** इति । "अपपरी वर्जने" "आङ्मर्य्यादावचने" "प्रतिः प्रतिनिधिप्रतिदानयोः" इति सूत्रैः कर्म्मप्रवचनीयसंज्ञां प्राप्त इत्यर्थः । **बहिश्शब्दोपी**ति । बहिर्य्योगे पञ्चमीविधायकानुशासनविरहेपि "अपपरिबहिरञ्चवः पञ्चम्या" इति सूत्रेण बहिर्य्योगे पञ्चमीसमासविधानाज् ज्ञापकादेव तद्योगे पञ्चमी ।

**पञ्चम्या** इति । "पञ्चम्यपाङ्परिभिः" "प्रतिनिधिप्रतिदाने च यस्मात्" इति सूत्राभ्यां तत्तद्योगे विहिताया इत्यादिः ।

मर्य्यादायां वर्त्तमानस्याङोऽव्यवधानस्य संसर्गस्याभावोऽर्थः । अव्यवधानं क्वचित्कालिकं क्वचिद्दैशिकं क्वचित्पाठिकं क्वचिदन्यथापि, संसर्गस्य [1]तादात्म्यसंयोगसादेश्यसमानकालीनत्वादेरभावोऽपि यथायथं तात्पर्य्यवशादुपतिष्ठते । आमुक्तेस्संसार इत्यत्र संसारे मुक्तिनिरूपितं कालिकमव्यवधानं मुक्तिसमानकालिकत्वाभावः । आसमुद्रान्मृद् इत्यत्र मृदां समुद्रनिरूपितं दैशिकमव्यवधानं तादात्म्यस्य [2]सादेश्यस्य संयोगस्य [3]वाभावो भासते । "आकडारादेका संज्ञा" इत्यत्रैकसंज्ञाकशब्दविधीनां कडारसूत्रनिरूपितं पाठिकमव्यवधानं [4]तत्पठितत्वाभावश्च [5]बोध्यत इति ।

अभिविधौ वर्त्तमानस्याङो व्यापकत्वमितरसम्बन्धश्चार्थः । तत्र व्यापकताघटक इतरनिरूपितश्चैक एव संसर्गः प्रतीयते । आपरमाणोः पृथिवीत्यादौ पृथिवीत्वसामानाधिकरण्येन तादात्म्यसंसर्गावच्छिन्ना [6]पच्यमानपरमाणुव्यापकता तदितरतादात्म्यश्च भासते । आसमुद्राद्यश इत्यादौ यशसि समुद्राभिव्यापकत्वं समुद्रेतरसम्बन्धश्च भासत इत्येषा

**अव्यवधानस्य संसर्गस्ये**ति । प्रत्येकमेवाभावेन्वयात् क्वचिदव्यवधानाभावः क्वचित्संसर्गाभाव इत्यर्थः ।

[7]**एक एव संसर्ग** इति । तेन तादात्म्येन समुद्रव्यापकतायाः संयोगेन तदितरपृथिव्यादिसम्बन्धस्य गगने सत्त्वेपि आसमुद्राद् गगनमित्यादीनां न प्रामाण्यम् । परमाणोस्तादात्म्येन जलीयपरमाणावपि सत्त्वाद् व्यभिचारवारणाय

---

१ ० सादृश्य० इति मु० पु० पा० ।

२ सादृश्यस्य इति मु० पु० पा० । ३ च इत्यधिकः पा० मु० पु० ।

४ तत् इति ना० मु० पु० । ५ अवगम्यत इति मु० पु० पा० ।

६ पच्यमान० इति पद ना० मु० पु० ।

७ यादृशसम्बन्धस्याभावो भासते तादृश एव सम्बन्ध इतरसम्बन्धश्च भासत इत्यभिप्रायकमिदम् ।

दिक् । तत्सम्बन्धतदितरसम्बन्धावेवाभिविधिः, न तु व्यापकतापि, आपरमाणोरिति दर्शनादित्यपि ।

प्रतिनिधौ वर्त्तमानस्य प्रतेर्भेदस्तत्कार्य्यकारित्वञ्चार्थः । प्रद्युम्नः कृष्णात्प्रतीत्यादौ कृष्णभिन्नः कृष्णकार्य्यकारी प्रद्युम्न इति बोधः ।

प्रतिदाने वर्त्तमानस्य प्रतेः ऋणत्वध्वंसजनकत्वमर्थः । पञ्चम्यास्तु ऋणत्वान्वय्यादानजन्यत्वम् । ऋणत्वन्तु स्वत्वमिव पदार्थान्तरं पापविशेषो वा । तिलेभ्यः प्रतियच्छति माषानित्यत्र तिलादानजन्यर्णत्वध्वंसजनकमाषदानकर्त्तेत्यन्वयबोधः ।

बहिर्ग्रामादित्यत्र तदनधिकरणो देशो बहिःपदार्थः । ग्रामानधिकरणञ्च परिसरादिरेव देशो नान्तर्ग्रामीणः ।१४७।

**पच्यमाने**ति । पच्यमानत्वञ्च पार्थिवपरमाणावेव, नान्यत्र । **न तु व्यापकतापी**ति । तद्भाने मानाभावात् "आकडारादेका संज्ञा" इत्यत्र तद्भानस्यासम्भवाच्च । तथा ह्येप संज्ञाविधिर्न कडारसूत्रपूर्वसूत्रव्यापकः "इको गुणवृद्धी" "न धातुलोप आर्द्धधातुके..." इत्यादिपूर्वसूत्रेषु तद्विरहात् । नाप्यव्यवहितपूर्वसूत्रव्यापकः, तथाभूते "वाहिताग्न्यादिषु" इति सूत्रे तद्विरहात् । एवं प्रभासत आगङ्गासागरान्मृद इत्यादौ प्रभासपूर्वभूतगङ्गासागरपश्चिमदेशानां सरित्कासारदेवखातानां मृदन्यत्वान्मृदां तादृशदेशव्यापकत्वविरहेण तद्भानस्यासम्भवाच्च ।

**नान्तर्ग्रामीण** इति । ग्राममध्यस्थितदेशस्य ग्रामाधिकरणत्वात् । अत्र च काश्या बहिर्मिथिलेति [2]प्रयोगस्यासाधुत्वेवयवसंयुक्तोन्यावयवसंयुक्तो बहिःपदार्थो वाच्यः । पञ्चम्या अवयवान्वयिसमवायित्वमन्यत्वान्वयिप्रतियोगित्वञ्चार्थः । बहिःपदार्थस्याधेयतयारामादावन्वयः[3] । "ज्ञापकसिद्धं न सर्वत्र" इति परिभाषया करस्य करभो बहिरित्यत्र षष्ठी साधुः । पृष्ठावयवसंयुक्तोवयवो बहिरर्थः । तत्र षष्ठ्यर्थसम्बन्धस्यान्वयः । १४७ ।

---

१ यथाश्रुतपदमधिकं दृश्यते मु० पु० ।

२ केवलान्यावयवसंयुक्तस्य बहिःपदार्थत्वे तादृशप्रयोगस्य साधुत्वं स्यादिति तात्पर्य्यम् ।

३ तथा च नगराद्बहिराराम इत्यादौ नगरसमवाय्यवयवसंयुक्तो यो नगरप्रतियोगिताकभेदवत्सम्बन्ध्यवयवसंयुक्तस्तद्वृत्तिराराम इति बोध इति यावत् ।

**अकर्त्तरि ऋणे हेतौ पञ्चमी चास्त्रियां गुणे ।**
**प्रायेण ज्ञापके हेतौ स्त्रियामप्यगुणेष्वपि ॥१४८॥**

शताद्बद्ध इत्यादावृणत्वमृणं वा हेतुता हेतुमत्ता वा खण्डशः पञ्चम्यर्थः। ऋणाभिन्नशतहेतुकबन्धनकर्म्मेत्यादिरन्वयबोधः। ऋणकर्तृकबन्धनविवक्षायामृणेन बद्ध इत्येव प्रमाणम्। जाड्येन जाड्याद्वा बद्ध इत्यादौ गुणस्य हेतुतायां पञ्चमी तृतीया च युज्यते। बुद्ध्या मुक्त इत्यादौ तु तृतीयैव, न तु पञ्चमी, बुद्धिशब्दस्य स्त्रीत्वात्। स्त्रियामपि गुणेगुणे च ज्ञापके हेतौ पञ्चमी साधुः। नास्ति घटोनुपलब्धेरित्यत्रानुपलब्धिज्ञाप्यत्वस्य घटनास्तितायामन्वयस्यानुभवात्। अत्राज्ञातज्ञापकमनुपलब्ध्याद्येव पञ्चम्या सम्बद्ध्यते, न तु चक्षुरादि।

"अकर्त्तर्यृणे पञ्चमी" "विभाषा गुणेस्त्रियाम्" इति सूत्राभ्यां विहितां पञ्चमीं निरूपयति—**अकर्त्तरि ऋणे** इत्यादिना। अत्र "इकोसवर्णे साकल्यस्य ह्रस्वश्च" इति सूत्रेण प्रकृतिभावे स्वरसन्ध्यभावः। **अकर्त्तरी**त्यस्य व्यावर्त्त्यमाह—**ऋणकर्तृके**ति। द्वितीयस्योदाहरणमाह—**जाड्यादि**ति। जाड्यं मोहो मिथ्याज्ञानम्। तस्य गुणत्वं स्फुटमेव। **गुण** इत्युपादानाद्धनेन कुलमित्यादौ तृतीयैव, न पञ्चमी। **तृतीया चे**ति। सूत्रकारिकयो**र्विभाषा प्रायेणे**त्याभ्यां पञ्चम्या वैकल्पिकत्वबोधनात् "हेतौ" इति सूत्रेण तृतीयेत्यर्थः। **अस्त्रियामि**त्यस्य व्यावर्त्त्यमाह—**बुद्ध्ये**ति। सूत्रे विभाषेति योगविभागात्तस्य हेत्वर्थे सामान्यत एव विकल्पेन पञ्चमीविधायकत्वात् स्त्रियां गुणस्यागुणस्य वा विशेषतोनुपादानादुभयत्रैव पञ्चमीत्याह—**स्त्रियामपी**ति। "तदशिष्यं संज्ञाप्रमाणत्वात्" "लुब्योगे प्रत्याख्यानात्..." इत्यादौ ज्ञापके हेतौ पञ्चमीनिर्देशेन तत्रैव विभाषेति योगेन पञ्चमीत्याह—**ज्ञापके हेता**विति। **अनुपलब्धी**ति। ज्ञापकत्वस्य पञ्चम्यर्थस्याधेयतया प्रकृत्यर्थान्वितस्य निरूपकतया घटनास्तितायामन्वयादनुपलब्धिज्ञाप्यत्वं तत्र लभ्यत इति भावः।

तेनेन्द्रियाद् घट इति न प्रयोगः। ज्ञातज्ञापके सर्वत्र पञ्चमी, धूमाद्-ग्निमान् पर्वत इति जीवः कर्त्ता बुद्धेरिति च प्रयोगात्।

धूमादग्निमानित्यादौ धूमपदं धूमज्ञानेग्निपदमग्निपदज्ञाने ज्ञाय-मानाग्नौ वा लाक्षणिकं हेतुता हेतुमत्ता वा पञ्चम्यर्थो धूमज्ञानविशेषि-तोपरज्ञानेन्वेतीति प्राञ्चः।

ज्ञानजन्यत्वं पञ्चम्यर्थः। असौ धूमविशेषितोग्निपदार्थे तदेकदेशे वाग्निज्ञानेन्वेतीत्यपरे।

वह्निरेव जिज्ञासितो न तु वह्निज्ञानं ज्ञायमानो वह्निर्वेति पर्वतो

दर्शितसूत्रनिर्देशाज् ज्ञापकत्व एव पञ्चमी साधुः। तत्र ज्ञापकत्वमपि न सामान्यतः, किन्तु ज्ञातं सद्यज्ज्ञापकं तन्निष्ठमेवेत्याह—**ज्ञाते**ति। अनुपलब्धे-र्ज्ञानस्यैवाभावप्रत्यक्षकारणत्वम्, न तु स्वरूपसत्या इति तस्याः प्रमाणान्तर-त्ववादिनाम्मतम्। चक्षुरादि तु स्वरूपसदेव घटज्ञापकमित्याशयः।

चिन्तामणिकारमते धूमादग्निमानित्यादौ धूमादिपदानां तत्तज्ज्ञाने लक्षणेति तेषां गुणवाचकत्वादेव ततः पञ्चमीति तन्मतं दर्शयति—**धूमादग्निमानि**त्यादिना। अग्निपदस्याग्निज्ञाने लक्षणायां तस्य पर्वतादौ साक्षा-त्सम्बन्धविरहेण तदर्थं परम्पराविशेषस्य संसर्गत्वं स्वीकरणीयमतो गौरवादाह—**ज्ञायमानाग्नौ वे**ति। **हेतुता हेतुमत्ता वे**त्युभयोपादानं पूर्ववन्नञ्समभिव्याहारे वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेन्वयबोधोपपादनाय।

**असौ** ज्ञानजन्यत्वात्मकः पञ्चम्यर्थः। विधेयप्राधान्याद**सा**विति **पुँल्लिङ्ग**-निर्देशः। **अग्निपदार्थ** इति। ज्ञायमानत्वविशेषितेग्नावित्यर्थः। तत्र विशेष्येग्नौ धूमज्ञानजन्यत्वस्य बाधितत्वेपि "सविशेषणे हि" इति न्यायाद्वह्निज्ञाने तस्य निराबाधतया तत्रैव पर्य्यवसानम्। अतएवाह—**तदेकदेश** इति।

ज्ञानजन्यज्ञानविषयत्वमेव पञ्चम्यर्थो न तु ज्ञानजन्यत्वमिति नवीनमतं दर्शयति—**वह्निरेवे**त्यादिना। **मुख्यवृत्त्यैवे**ति। शक्त्यैवान्वयबोधं जनयन्ती-

वह्निमानिति प्रतिज्ञावाक्यघटकानि पदानि मुख्यवृत्त्यैव प्रवर्त्तन्ते। हेतावपि धूमादिपदं तथा, धूममधिकृत्यैवोदाहरणादिवाक्येन व्याप्त्या-देर्ज्ञापकताप्रयोजकधर्म्मस्योपपादनात्। धूमपदेन धूमज्ञानलक्षणे तु धूमज्ञानस्यैव वह्निज्ञानजनकताप्रयोजकं रूपमुदाहृतं स्यात्। अतो ज्ञानजन्यज्ञानविषयत्वं पञ्चम्यर्थो धूमादिविशेषितैकदेशो वह्नावन्वेतीति तु नवीनाः।

धूमवह्निपदाभ्यां भक्त्या ज्ञानमुपस्थाप्यते शक्त्या च स्वार्थः। पञ्चमी तु जाड्याद्बद्ध इत्यादाविव जनकतां जन्यतां वाभिधत्ते। स्वीक्रियते चैकप्रातिपदिकशक्यलक्ष्यार्थयोर्भेदेनान्वयः। तथा च धूमो ज्ञाने, तद्धेतुतायाम्, सा ज्ञाने, तद्वह्नावन्वेतीति धूमविषयकज्ञान-हेतुकज्ञानविषयवह्निमानयं पर्वत इति बोधः प्रतिज्ञाहेतुभ्यां सम्भूय जन्यते। केवलया प्रतिज्ञया पर्वतो वह्निमानित्येव बोध्यते, न तु ज्ञेयवह्निमानिति, हेतुसमभिव्याहारज्ञानान्तरितो हि वह्न्यादिपदस्य

त्यर्थः। एवकारेण लक्षणाव्यवच्छेदः। तथा च वह्निजिज्ञासाया वह्निज्ञानेनैव निवृ-त्तिर्न तु वह्निज्ञानज्ञानेनेति पर्वतो वह्निमानित्यादिवाक्येन वह्निज्ञानमेवैषणीयम्, न तु वह्निज्ञानम्। तच्च वह्निपदस्य मुख्यार्थकत्व एव सम्भवतीति न लाक्षणिकं वह्न्यादिपदं तत्रेत्याशयः। **तथे**ति। मुख्यार्थकमित्यर्थः। **धर्म्मस्योपपादनादि**ति। यो यो धूमवान् स स वह्निमानित्यादिवाक्येन वह्निव्याप्तिर्धूमे गृह्यते। ततश्च धूमस्य वह्निज्ञापकत्वं सिद्ध्यतीति तदुपपादकत्वमुदाहरणवाक्यस्येत्यर्थः। **उदाहृतं स्यादि**ति। तथा च यद्यद्धूमज्ञानं तद्वह्निज्ञानजनकमित्येवोदाहरणं स्यान्न च तदिष्यत इति भावः।

**हेतुसमभिव्याहारे**ति। धूमादिति वाक्यं पर्वतो वह्निमानिति वाक्य-समभिव्याहृतमिति ज्ञाने पञ्चम्यर्थस्य हेतुत्वस्य वह्निपदमुख्यार्थे वह्नौ बाधादन्वयासम्भवाल्लक्षणाप्रयोजकस्य मुख्यार्थबाधस्य सत्त्वाद् वह्निपदस्य

**( ज्ञाने ) लक्षणाग्रहो हेतुपञ्चम्यर्थान्वयबाधादिति [1]वस्तुगतिः ।**

**ननु घटः पृथिवी गन्धान्न रूपान्न पटत्वान्नापि स्नेहादित्यादौ घटरूपादिज्ञानज्ञाप्यपृथिवीत्वस्यात्यन्ताभावस्तद्वदन्योन्याभावो वा पृथिवीत्वे, पृथिव्यां [2]वा रूपादिज्ञानज्ञाप्यत्वस्य, पृथिवीज्ञानसामान्ये**

लक्षणायाः प्रयोजकस्याभावेनासम्भव एवेति भावः ।

अत्र साध्यहेतुपदयोर्ज्ञानलक्षणाभ्युपगमेपि नञ्समभिव्याहारस्थले पञ्चम्यर्थान्वयबोधानुपपत्तिमाशङ्कते—**ननु घट** इत्यादिना । घटः पृथिवी गन्धादित्यत्र निरुक्तरीत्या गन्धज्ञानज्ञाप्यपृथिवीत्ववान् घट इति बोधान्नञ्-समभिव्याहारे तादृशपृथिवीत्वस्याभाव एव घटे बोधनीयः, स चायोग्यत्वा-दसम्भवीत्याह—**घटरूपादी**त्यादिना । **ज्ञानज्ञाप्यत्व**मिति । रूपादिपदस्य मुख्यत्वं लाक्षणिकत्वं वा । पञ्चम्या ज्ञापकत्वार्थकताया दर्शितत्वेप्याधेयतया प्रकृत्यर्थान्वितस्य तस्य निरूपकतया पृथिवीत्वादिसाध्येन्वयः । वृत्त्यनियामक-सम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे ज्ञाप्यत्वं ज्ञानज्ञाप्यत्वं वा पञ्चम्यर्थ इत्याशयेनेदम् । नञात्यन्ताभावबोधनेनुयोगिवाचकपदोत्तरं सप्तम्या अपेक्षणीय-तया तदभावादत्र नञोत्यन्ताभावबोधकत्वं न सम्भवतीत्यत आह—**तद्वदन्योन्ये**ति । तादृशपृथिवीत्ववद्भेद इत्यर्थः । घटः पृथिवीत्यादिवाक्यानां क्रमेण समवायतादात्म्याभ्यां पृथिवीत्वपृथिवीसाध्यकप्रतिज्ञात्वसम्भवादाह—**पृथिवीत्वे पृथिव्यां वे**ति । **ज्ञाप्यत्वस्ये**ति । व्युत्पत्तिवैचित्र्येण प्रत्ययार्थ-स्यापि नञर्थेन्वय इति भावः । **पृथिवीज्ञानसामान्य** इति । पृथिवीज्ञानस्य पृथिवीत्वज्ञानत्वावश्यम्भावात् पृथक् तन्नोक्तम् । पृथिवीज्ञाने प्रत्यक्षाद्यात्मके गन्धज्ञानज्ञाप्यत्वाभावस्य सत्त्वान्न गन्धादित्यपि प्रमाणं स्यादित्यत**स्सामान्य**-पदम् । तथा च साध्यवाचकपदस्य लाक्षणिकत्वे नञर्थान्वितस्य पञ्चम्यर्थस्य

---

१ तु इत्यधिकः पा० मु० पु० ।

२ वा इति पा० ना० मु० पु० ।

**रूपादिज्ञानजन्यत्वस्य, पृथिवीज्ञानहेतुतामात्रे रूपादिज्ञानसम्बन्धस्य, पृथिवीज्ञानजनकेषु ज्ञानेषु रूपादिविषयकत्वस्य वाभावो न बोधयितुं शक्यते, बाधात्, पृथिवीत्वव्याप्यरूपवान् घट इत्यादिना भ्रान्त-परामर्शेन घटो गन्धवानित्याद्यनुमितिजननादिति चेत् ?**

तत्रान्वयः । तस्य मुख्यत्वे ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थत्वे तु तदेकदेशस्य ज्ञानजन्यत्वस्य नञर्थान्वितस्य तदेकदेश एव ज्ञानेऽन्वयो व्युत्पत्तिवैचित्र्यादित्याशयः। **हेतुतामात्र** इति । पञ्चम्यर्थो हेतुत्वम् । तत्र प्रकृत्यर्थस्य रूपादिज्ञानस्याधेयत्वसम्बन्धावच्छिन्नप्रतियोगितया नञर्थाभावान्वितस्यान्वयः । पञ्चम्यर्थस्य च निरूपकतया पृथिवीपदार्थे पृथिवीज्ञाने ज्ञायमानपृथिव्यास्तत्त्वे तदेकदेशे ज्ञानेऽन्वय इति भावः । **ज्ञानसम्बन्धस्ये**त्यस्य रूपादिज्ञाननिरूपिताधेयत्वस्य प्रतियोगितावच्छेदकसंसर्गविधयेत्यर्थः । तेन तादृशसम्बन्धस्य पदानुपस्थितत्वात् प्रकारतयान्वयासम्भवेपि नासङ्गतिः। **रूपादिविषयकत्वस्य वे**ति। रूपादिपदस्य ज्ञानलाक्षणिकत्वे तदेकदेशस्यापि रूपविषयकत्वस्य नञर्थाभावे, मुख्यत्वे तु ज्ञानज्ञाप्यत्वरूपपञ्चम्यर्थैकदेशे ज्ञाने विषयितासम्बन्धावच्छिन्नप्रतियोगितया नञर्थान्वितस्य रूपादिपदार्थस्यान्वय इत्याशयः। **बाधादि**ति। तथा च **रूपादि**त्यादिपञ्चम्यन्तार्थानाम्मध्ये व्युत्पत्तिवैचित्र्येण नञर्थान्वयस्याभ्युपगमनीयत्वेपि घटादौ तेषां बाधादेव नोक्तान्वयसम्भव इति भावः । तत्तदर्थाभावस्य घटादिषु बाधे बीजमेकमेवाह—**पृथिवीत्वव्याप्ये**ति । **भ्रान्तपरामर्शेने**ति। भावे निष्ठाप्रत्ययाद् भ्रमात्मकपरामर्शेनेत्यर्थः। **जननादि**ति । प्रथमद्वितीययोः पृथिवीत्वस्य विशेष्यमात्रस्य घटे स्वत एव सत्त्वम्, रूपादिज्ञानज्ञाप्यत्वस्य पृथिवीत्वे सत्त्वाद्विशिष्टस्यापि तत्र निराबाधत्वमेव । अतएव पृथिवीपृथिवीत्वयोर्न रूपादिज्ञानज्ञाप्यत्वाभावः । दर्शितानुमितौ पृथिवीज्ञानत्वस्य सत्त्वात्तत्र रूपादिज्ञानजन्यत्वस्य सत्त्वे पृथिवीज्ञानत्वावच्छेदेन तदभावस्यासत्त्वं पृथिवीज्ञाननिरूपितहेतुत्वस्य रूपादिज्ञाननिष्ठत्वान्न निष्ठत्वेन रूपादिज्ञाना-

अत्र प्रतिज्ञासमभिव्याहृतहेतुपञ्चम्या हेतौ पक्षसम्बन्धोपि प्रतिपाद्यते। अतएव हेत्ववयवेन गतार्थत्वादुपनयादिप्रयोगासम्भवादुदाहरणान्त एव न्यायः। एवञ्च घटः पृथिवी गन्धान्न पटत्वादित्यादौ पटत्वे गन्धसम्बन्धाभाव एव प्रतीयत इति गुरुमतानुसारिणः।

वस्तुतो भ्रमसामान्यभिन्नत्वविशिष्टकेवलविषयतासम्बन्धेन लिङ्गबोधकपदवाच्यस्य तल्लक्ष्यार्थे ज्ञाने, पञ्चम्यर्थहेतुतायास्तु प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वावच्छिन्ननिरूपकतासंसर्गेण साध्यवाचिपदलक्ष्यार्थे साध्यज्ञानेन्वय इति व्युत्पत्त्या घटः पृथिवी गन्धान्न पटत्वादित्यादौ केवलगन्धविषयकभ्रमसामान्यभिन्नज्ञानवृत्तिहेतुतायां 'घटे पृथिवीतादात्म्यसाध्यकानुमितित्वावच्छिन्न-

भावस्तत्र, पृथिवीज्ञानजनकोक्तपरामर्शस्य रूपादिविषयकत्वान्न तदभावस्तत्र शक्यते बोधयितुमिति शङ्कितुरभिप्रायः।

अत्र प्रभाकरमतानुसारेणोत्तरयति—**अत्र प्रतिज्ञे**ति। **अतएव** पक्षे हेतुसम्बन्धस्य प्रतिज्ञावाक्याल्लाभादेव। **उपनयादी**ति। उपनयनिगमनयोः पक्षे हेतुसम्बन्धस्य हेतुज्ञानज्ञाप्यसाध्यसम्बन्धस्य बोधकत्वमेव। तच्चोभयमपि धूमादिति हेतुप्रयोगादेव जातमिति तयोर्वैयर्थ्यात् प्रयोगाभाव इत्यर्थः।

अत्र मते **न पटत्वान्न स्नेहादि**त्यादीनामुपपत्तावपि **न रूपादि**त्यत्रानुपपत्तितादवस्थ्यम्, रूपस्य घटे सम्बद्धत्वादित्यत आह—**वस्तुतो भ्रमे**ति। **भ्रमसामान्यभिन्नत्व**मिति। अधस्तादेतन्निरूपितम्। **लिङ्गबोधकपदवाच्यस्ये**ति। धूमादेरित्यर्थः। **तल्लक्ष्यार्थे** धूमादिपदलक्ष्यार्थे। **अन्वय** इति परेणान्वयः। तथा च धूमपदस्य स्वशक्यनिष्ठविषताकत्वमात्रेण न ज्ञानलक्षकत्वम्, किन्तु विशिष्टविषयताकत्वसंसर्गेणैवेत्यर्थः। **साध्यज्ञानेन्वय** इति। तथा च हेतुत्वस्य निरूपकत्वमात्रं नाकाङ्क्षालभ्यम्, किन्तु विशिष्टनिरूपकत्व-

१ अत्र समस्त एव पा० मु० पु०।

निरूपकतास्वरूपः संसर्गः पृथिवीज्ञाने तत्संसर्गावच्छिन्नप्रतियोगिताकः पटत्वविषयकभ्रमसामान्यभिन्नज्ञानहेतुत्वाभावश्च भासते । विषयतायां कैवल्यन्तु विशेष्यताद्वयासंवलनम् । तेन पटो गन्धव्याप्यपटत्ववान् घटो गन्धव्याप्यघटत्ववानितिसमूहालम्बनहेतुकत्वस्य घटो गन्धवानित्यनुमितौ सत्त्वेपि न प्रकृतवाक्यार्थबाधः, समूहालम्बने विशेष्यताद्वयसत्त्वेन तद्विषयतायां कैवल्याभावादिति सङ्क्षेपः ।१४८।

**नानापृथग्विनायुक्ताद्विदूरान्तिकवाचकात् ।**
**पञ्चमी च तृतीया च द्वितीया वापि सप्तमी ॥१४९॥**

नानादिशब्दयोगे पञ्चमीतृतीयाद्वितीयाः, [1]दूरान्तिकार्थकात् पञ्चमीद्वितीयातृतीयासप्तम्य इति व्यवस्थितो विधिः । विनादिशब्दानामत्यन्ताभावस्तद्वानन्योन्याभावस्तद्वांश्च यथायथमर्थः । गन्धं

मेवेत्यर्थः । **निरूपकतास्वरूपस्संसर्ग** इति **हेतुताया** इति पूर्वेणान्वितस्य **घटे भासत** इत्यनेनान्वयः । **भासत** इति । तथा च निरुक्तपरामर्शस्य भ्रमत्वं प्रमात्मकपटविषयकज्ञानजन्यत्वञ्च पृथिवीज्ञाने नास्त्येवेति नानुपपत्तिरिति भावः । संवलनं निरूपकत्वघटितं सामानाधिकरण्यम् । कैवल्योपादानप्रयोजनमाह—**तेने**ति । १४८ ।

"पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" "दूरान्तिकार्थेभ्यो द्वितीया च" इति सूत्राभ्यां विहिता विभक्तीराह—**नानापृथगि**त्यादिना । **यथायथमर्थ** इति । न चैवं विनानानापृथक्शब्दानां पर्य्यायतया सूत्रे विनार्थैरित्येव लाघवाद्वक्तुमुचितमिति वाच्यम्, "[2]हिरुङ् नाना च वर्जने" इत्यमरेण हिरुक्शब्दस्यापि वर्जनार्थकत्वेन विनार्थकत्वात्तद्योगेपि हिरुग् देवदत्तस्येत्यत्र

---

१ दूरार्थकात् इत्येव मु० पु० पा० ।

२ पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने । इत्यमरः ।

**विना वायुर्धूमं विना वह्निर्जलं विना निस्स्नेहो गन्धो वेत्यादिवन्नाना-पृथक्पदयोरप्युदाहरणानि । ग्रामस्य [1]दूरं दूराद्दूरेणान्तिकमन्तिकादन्तिकेनेत्यादौ [2]दूरान्तिकार्थकपदानामितरासमानाधिकरणत्वे प्रातिपदिकार्थमात्रे प्रथमावचतस्रो विभक्तयः । समानाधिकरणत्वे तु दूरः पन्था इत्यादौ विशेष्यपरतन्त्रैव विभक्तिः । [3]"दूरादावसथान्मूत्रम्..." इत्यादावधिकरणे पञ्चम्यादयो दृश्यन्ते । १४९ ।**

तृतीयादीनां वारणाय पृथगादिशब्दोपादानस्य सार्थक्यात् । **नानापृथक्पदयोरि**ति । वह्निना वह्निं वह्नेर्वा [4]पृथगित्यादीन्युदाहरणानीत्यर्थः । **प्रातिपदिकार्थमात्रे प्रथमावचतस्रो विभक्तय** इति यदुक्तं तदुपपादयति—**दूरादावसथादि**ति । **इत्यादा**वित्यादिपदेन "दूरेण तं परिहरन्ति सदैव रोगाः ।" इत्यस्य **पञ्चम्यादय** इत्यादिपदेन तृतीयायाः परिग्रहः । तथा चोक्तप्रयोगदर्शनादेवावगम्यते—यत्र दूरादिपदार्थानामितरत्र विशेषणतयान्वयस्तत्र विभक्त्यर्थाधिकरणत्वाधेयत्वादिद्वारैव स, यत्र तु न तथान्वयस्तत्र प्रातिपदिकार्थमात्रे प्रथमेत्याशयः । १४९ ।

---

१ दूरशब्दस्य तदर्थकविप्रकृष्टशब्दस्य वा दैशिकपरत्वविशिष्टः तादृशपरत्वव्यञ्जकबहुतरसंयोगघटितपरम्पराश्रयो वार्थः । पञ्चम्यादीनामवधित्वमर्थः । स च परत्वे बहुतरसंयोगे वान्वेति । तथा च ग्रामावधिकपरत्ववानित्यन्वयबोधः । एवमन्तिकशब्दस्य तदर्थकसविधशब्दस्य वा दैशिकापरत्वविशिष्टस्तादृगापरत्वव्यञ्जकस्वल्पतरसंयोगघटितपरम्पराश्रयो वार्थः । स चापरत्वेऽल्पतरसयोगे वान्वेति । तथा च ग्रामावधिकापरत्ववानित्यन्वयबोध इति ध्येयम् ।

२ दूरार्थक० इत्येव पा० मु० पु० ।

३ दूरादावसथान्मूत्र दूरात्पादावनेजनम् इति भाष्यम् ।

४ पृथक्शब्दस्य स्वरूपेण विवक्षणात् पृथक्त्वगुणविशिष्टवाचिपृथक्शब्दयोगेप्येता विभक्तयो भवन्ति । यथा—घटेन घटात् घट वा पृथक् पट इत्यादौ । अतएवातिरिक्तपृथक्त्वगुणसिद्धिः । अत्र तृतीयादीनामवधिमत्त्वमर्थः । तच्च पृथक्पदार्थतावच्छेदके पृथक्त्वेऽन्वेति । अवधिमत्त्वं स्वरूपसम्बन्धविशेषोतिरिक्तो वेत्यन्यदेतत् । तथा च घटावधिकपृथक्त्ववान् पट इति बोधः ।

[1]अल्पकृच्छ्रौ कतिपयस्तोकावद्रव्यगा इमे ।
व्यपेक्षन्ते पञ्चमीञ्च तृतीयां करणार्थिकाम् ॥१५०॥

अल्पादयश्शब्दास्सामानाधिकरण्येन द्रव्यमविशेषयन्तः करणवाचिनीं पञ्चमीं तृतीयाञ्च व्यपेक्षन्ते । यथा—अल्पेनाल्पाद्वा मुक्त [2]इत्यादि । द्रव्यसमानाधिकरणे स्तोकेन विषेण हत इत्यादौ तृतीयैव । [3]क्रियासमानाधिकरणे कर्म्मणि द्वितीयैव । "वाजपेयेन

---

१ स्तोकाल्पकृच्छ्रकतिपयशब्दाना योगे करणार्थिका "करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य" इत्यनुशासनेन विहिता पञ्चमी तृतीयाञ्च निरूपयति—अल्पेत्यादिना । सूत्रेन्यतरस्यामित्यनुवर्त्तते पञ्चमीति च । तेन करणे प्राप्ताया तृतीयाया पक्षे पञ्चमी विधीयते । तदभावे तु तृतीया सिद्धैवेति लभ्यते ।

२ आदिपदेन स्तोकेन स्तोकाद्वा मुक्तः, कृच्छ्रेण कृच्छ्राद्वा मुक्तः, कतिपयेन कतिपयाद्वा मुक्त इत्येतेषा परिग्रहः । अत्र विभक्त्यर्थः करणत्वम् । स्तोकशब्दः स्वप्रवृत्तिनिमित्ताल्पत्वपरः । एवं कृच्छ्रकतिपयशब्दावपि कष्टत्वाकृत्स्नसाधनत्वपरौ । शुक्लादिवदेते केवलधर्म्मपरा अपि । अतएव सूत्रे "असत्त्ववचनस्य" इत्युपादानादेषामसत्त्ववचनता । सत्त्वत्वञ्च सर्वनामपरामर्शयोग्यत्वम् । एवञ्च स्तोकादीना सामानाधिकरण्येनाद्रव्यपरताया तृतीयापञ्चम्यौ भवत इति सिद्धम् । द्रव्ये वृत्तौ तु केवला तृतीयैव । अतएवाह—द्रव्यसमानाधिकरण इति । अत्र विषस्य द्रव्यत्वात् तत्समानाधिरणस्य स्तोकस्य योगे तृतीयैवेति भावः ।

३ सूत्रे "करणे" इत्यस्यानुपादाने स्तोकं पचतीत्यत्र क्रियाया अद्रव्यत्वात्तद्विशेषणस्य कर्म्मीभूतस्तोकशब्दस्यासत्त्ववचनत्वेन तृतीयापत्तिरतस्तदुपादानम् । तथा च क्रियाविशेषणककर्म्मीभूतस्तोकपदाद्द्वितीयैवेत्याह—क्रियासमानाधिकरण इति । धूमादिसामानाधिकरण्यमिवात्र न तदधिकरणवृत्तित्वरूप सामानाधिकरण्यम्, तस्य सर्वेषा शब्दाना सर्वैरेव शब्दैरविशेषात्, किन्तु तादात्म्यसंसर्गावच्छिन्नतत्प्रयोज्यविषयतानिरूपितस्वप्रयोज्यविषयताकबुद्धिजनकपदत्वरूपं बोध्यम् । न च क्रियाया विशेष्यत्वेन द्रव्यत्वावश्यम्भावा-

**यजेत...'' इत्यादौ करणानुवादे तृतीयैव प्रमाणम् । १५० ।**

---

त्कथमसत्त्वरूपतेति वाच्यम्, कर्त्तृकर्म्मेतरकारकलिङ्गानन्वयित्वमात्रेणासत्त्वरूपत्वोपपत्तेः । तदुक्त वाक्यपदीये—

"क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः ।
असत्त्वरूपता तस्या इयमेवावधार्य्यताम् ॥" इति ।

क्रियानाधारेति । धात्वर्थानाधारेत्यर्थः, करणत्वादिभिरिति यावत् । न युज्यत इति । स्वातिरिक्तपदान्तरवाच्यक्रियानिरूपितकरणत्वादिभिर्न्न सम्बध्यत इत्यर्थः । इयमेव करणत्वादिभिरसम्बन्धरूपैव । असत्त्वरूपतापेक्षोत्र स्त्रीलिङ्गनिर्द्देशो बोध्यः । एवञ्च फलं व्यापारश्च क्रिया फलाधारकारकं कर्म्म व्यापाराधारकारकं कर्त्तेत्यपि फलित बोध्यम् ।

ननु क्रियाविशेषणे यदि सर्वत्र द्वितीया, तर्हि वाजपेयेन यजेतेत्यत्रापि धातुवाच्यक्रियाया प्रातिपदिकार्थतादात्म्यबोधात्कथन्न द्वितीयेत्यत आह—वाजपेयेनेति । तथा च "सपर्य्यया पर्य्यपूपुजत्..." इत्यादाविव करणानुवादिका तृतीयेति भावः । अतएवास्य कर्म्मनामधेयत्वेन वाजपेयनामकयाग इष्टसाधनं करणञ्चेत्यन्वयबोधस्सञ्जायत इति ।

( इति सटीकपदवाक्यरत्नाकरे उपपदपञ्चमीविवरणम् । )

## ( अथ षष्ठीविवरणम् । )

**विभक्त्यन्तरबोध्येभ्यो भिन्नश्शेषोभिधीयते ।**
**सम्बन्धत्वनिमित्तेन षष्ठी तत्र प्रवर्त्तते ॥१५१॥**

**प्रथमादीनां यानि प्रवृत्तिनिमित्तानि सम्बुद्धित्वादीनि तदितरधर्म्मविशेषश्शेषः[1] । तश्च षष्ठी सम्बन्धत्वेन प्रवृत्तिनिमित्तेनाभिधत्ते ।**

**अस्ति हि संयोगसमवायस्वस्वामिभाववैशिष्ट्यकरणकर्म्मत्वादिष्वनुयुक्तत्वप्रतियुक्तत्वादि । यतस्समवाये वाय्वाद्यनुयोगिकत्वावच्छिन्न-**

"शेषे षष्ठी" इति सूत्रेण शेषेर्थे षष्ठी विधीयते। शेषश्चोक्तादन्य इति तत्पूर्वमुक्तेभ्यः प्रथमार्थसम्बुद्ध्यादिभ्यो भिन्न एवेत्याह—**विभक्त्यन्तरे**ति । षष्ठीभिन्नप्रथमादिषड्विभक्तय ( इत्यर्थः ) । **तद्बोध्येभ्यः** सम्बुद्ध्यादिभ्यो **भिन्नश्शेष** इत्यर्थः । तत्तद्भेदत्वस्य शक्यतावच्छेदकत्वेतिप्रसङ्गस्संयोगत्वादीना प्रत्येकं तथात्वेननुगम इत्यतस्संयोगादिसाधारणं घटादिव्यावृत्तं षष्ठीशक्यतावच्छेदकं दर्शयति—**सम्बन्धत्वेने**ति ।

सम्बन्धत्वं किमित्याकाङ्क्षायामाह—**अस्ति ही**ति। **अनुयुक्तत्वं** सानुयोगिकत्वम्, **प्रतियुक्तत्वं** सप्रतियोगिकत्वम्। एकमात्रस्य सम्बन्धत्वविरहादुभयनिष्ठस्यैव तथात्वेन च संयोगादीनामुभयोरेकं प्रतियोग्यपरञ्चानुयोगि। यत्सम्बन्धेन यस्य यस्मिन् बुद्धिः प्रमा, तत्सम्बन्धस्य तदनुयोगिकत्वमपरप्रतियोगिकत्वञ्च । अनुयोगित्वप्रतियोगित्वे स्वरूपसम्बन्धविशेषात्मके एवेति। अनुयुक्तत्वप्रतियुक्तत्वयोस्सम्बन्धेष्वावश्यकतां प्रतीत्यापत्तिवारणमुखेन दर्शयति—**यत** इति। **समवाये** इति। समवायस्य द्रव्यादिपञ्चपदार्थवृत्तितया स्पर्शसमवायवति वायौ रूपसमवायस्यापि सत्त्वेन वायौ रूपमिति प्रतीतेः

---

१ काशिकाकृतस्तु "यच्चाप्रधान तच्छेषशब्देनोच्यते, तदुभयत्र पर्य्यायेण वा षष्ठी भवति" इत्याहुः। तत्र शेषस्तावद्भिन्नत्वेनाप्रधानमपि अप्रधानत्वेन न षष्ठीवाच्यम्, किन्तु शेषत्वेनैव। शेषत्व सम्बन्धत्व प्रतियोगित्वानुयोगित्वनिरूपकतावच्छेदकधर्म्मवैशिष्ठ्य मिति यावदिति ध्येयम्।

रूपप्रतियोगिकत्वविरहान्न वायौ रूपमिति प्रतीतिव्यवहारौ। स एव चानुयुक्तत्वादिर्धर्म्मस्सम्बन्धत्वम्। "एकशतं षष्ठ्यर्थाः" इति महाभाष्यपरिभाषणमपि न प्रवृत्तिनिमित्तानामपरिमितत्वं ग्राहयति, किन्तु विशेष्यव्यक्तीनाम्।

राज्ञः पुरुषो घटस्य रूपमित्यादौ राजप्रतियोगिकत्वघटानुयोगिकत्वादिना स्वत्वसमवायादिः पुरुषरूपादौ भासते। [1]स्वत्वसमवायत्वादिना तथात्वोपगमे मातुः स्मरतीत्यादौ कर्म्मतायां ताद्रूप्येण षष्ठी न प्रवर्त्तते, द्वितीयाप्रवृत्तिनिमित्तत्वविशिष्टस्य तस्य शेषत्वाभावात्।

प्रामाण्यं स्यादिति समवायेनुयुक्तत्वादिकमावश्यकम्। तथा सत्यपि समवायस्यैकतया स्पर्शप्रतियोगिकत्ववाय्वनुयोगिकत्वयोस्तत्र सत्त्वात्तद्दोषतादवस्थ्यमिति वाय्वनुयोगिकत्वविशिष्टरूपप्रतियोगिकत्वत्वावच्छिन्नाधिकरणतायास्समवायेभावमभ्युपगम्यैव तादृशप्रयोगो वारणीय इत्याशयः। **अनुयुक्तत्वादिरि**ति। सानुयोगिकत्वविशिष्टं सप्रतियोगिकत्वं विपरीतं वा तदित्यर्थः। नन्वेवं शक्यतावच्छेदकस्यानुगमे महाभाष्योक्तं तस्यानन्तत्वं विरुद्ध्यत इत्यत आह—**एकशतमि**ति। शतपदमनन्तार्थकम्, तादृशस्यापि तस्यानेकत्र प्रयोगदर्शनात्। **किन्त्वि**ति। तथा च संसर्गादीनां षष्ठीशक्यानामनन्तत्वमादायैवोक्तभाष्याविरोध इति भावः।

ननु स्वत्वत्वादिमात्रेण स्वत्वादिः षष्ठ्यर्थोस्तु राजरूपयोरनुयोगिप्रतियोगिनो राजरूपपदाभ्यामेव लाभात्तयोर्वाच्यतावच्छेदकत्वस्यानौचित्यादित्यत आह—**ताद्रूप्येणे**ति। कर्म्मतात्वेनेत्यर्थः। तथा च राज्ञः पुरुष इत्यादाविव तत्रापि कर्म्मतात्वमेव वाच्यतावच्छेदकं स्यादिति तस्य द्वितीयावाच्यतावच्छेदकत्वादुक्तशेषत्वस्यानुपपत्त्या षष्ठी न स्यादित्यर्थः।

---

१ स्वत्वत्व ०—इति मु० पु० पा०।

न चेयम् "अधीगर्थदयेशां कर्म्मणि" इत्यनुशासनसिद्धा स्मरतेरधिपूर्वकेक्धातुतुल्यार्थकस्य योगे कारकषष्ठी, तत्रापि सूत्रे शेष इत्यनुवृत्तेः। अतएव शेषे षष्ठ्येव सिद्धेर्थे "ज्ञोविदर्थस्य करणे" इत्याद्यष्टसूत्रीविधानं सर्पिषो ज्ञानं मातुः स्मरणमित्यादौ शेषषष्ठी-प्रयोगनियमप्रतिपत्तिद्वारा लुक्प्रयोजकसमासनिषेधप्रतिपत्त्यर्थ-मित्यभियुक्ताः।

**इयं मातुः स्मरती**त्यत्र षष्ठी। **अधिपूर्वके**ति। उक्तसूत्रस्याधिपूर्व-केक्धात्वर्थकदयेशधातूनां योगे षष्ठीविधायकतयाधिपूर्वकेक्धातोः स्मरणार्थक-त्वात् स्मृधातोस्समानार्थकत्वात्तद्योगे तेनैव षष्ठीत्यर्थः। **षष्ठी**ति। **न चे**ति-पूर्वेणान्वितम्। **इत्यनुवृत्तेरि**ति। तथा च शेषत्वाभावे तत्सूत्रस्यापि प्रवृत्तिर्न स्यादिति भावः। **अतएव** तत्सूत्रेपि **शेषे** इत्यस्यानुवृत्तेरेव। **सिद्धेर्थे** इति। सूत्रप्रयोजनस्य षष्ठीविधानस्यान्यत एव सिद्धावित्यर्थः। **अष्टसूत्री** वक्ष्यमाणा "कृञः प्रतियत्ने" इत्यन्ता। **प्रयोगनियमः** मातुः स्मरणमित्याद्येव साधु, न तु मातृस्मरणमित्याद्यपीति नियमः। **लुक्प्रयोजके**ति। समासे सति तस्य "कृत्तद्धित..." इति सूत्रेण प्रातिपदिकसंज्ञाया "सुपो धातुप्रातिपदिकयोः" इत्यनेन धात्ववयवस्य प्रातिपदिकावयवस्य च सुपो लुग्विधानात्समासस्य सुपो लुग्विधानप्रयोजकत्वम्। **समासनिषेधप्रतिपत्त्यर्थमि**ति। "अधीगर्थ-दयेशाम्..." इत्यादिसूत्रैस्तत्तद्योगे षष्ठ्या विधाने "प्रतिपदविधाना षष्ठी न समस्यते" इति वार्त्तिकेन "षष्ठी" इति सूत्रप्राप्तस्य समासस्य निषेधः। "षष्ठी शेषे" इत्यनेन तत्र षष्ठीविधाने तु तस्याः प्रतिपदविहितत्वाभावा-दुक्तवार्त्तिकस्य तत्राप्रवृत्तिः, प्रतिपदविधानेत्यस्य पदयोगमपेक्ष्य विहितेत्यर्थक-त्वादिति भावः।

---

१ सिद्धेर्थम् इति मु० पु० पा०।

यदाह हरिः—

'कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।

प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥" इति।

"ज्ञोविदर्थस्य..." इत्यादिसूत्राष्टकेन पदमुपलक्ष्य विहिता षष्ठी समासनिषेधार्थेति तदर्थः।

हरिस्मरणमित्यादौ कृद्योगलक्षणकारकषष्ठ्या[2] समासः। शेषषष्ठी-

**कारकै**रिति। **कारकैः** कर्म्मादिभि**र्व्यपदिष्टे** व्यवहृते **श्रूयमाणा** प्रयुज्यमाणा **क्रिया** तद्वाचको धातुर्यत्र तथाभूते। "अधीगर्थदयेशाम्..." इत्यादिषु कर्म्मादिकारकाणां स्मरणाद्यर्थकधातूनामुपादानात्तेषामुभयविशेषणवत्त्वम्। **पद**मित्यत्र 'लक्षणेत्थम्भूताख्यान..." इत्यादिना प्रतियोगे द्वितीया, तदर्थ इत्थम्भाव उपलक्षणत्वम्। तथा च पदमुपलक्षणीकृत्य विहिता [3]पदसम्बन्धिनीति यावत्। **समासस्य निवृत्तये** निरुक्तवार्त्तिकेन समासनिषेधस्य प्राप्तये इति हरिकारिकार्थः।

एवं सति **हरिस्मरण**मित्यादिषु समासमुपपादयति—**हरी**ति। **कृद्योगे**ति। "कर्त्तृकर्म्मणोः कृति" इत्यनेन विहितेत्यर्थः। **कारकषष्ठी**ति। दर्शितवार्त्तिकेन शेषाधिकारीयषष्ठ्यैव समासनिषेधः क्रियते, न तु कृद्योगादिलक्षणया तदनधिकारीययेत्यर्थः। एतदेवाह—**शेषषष्ठी**ति। **तुकारो विषय** इत्यनन्तरं योजनीयः। तथा चाष्टसूत्रीज्ञाप्यस्य निषेधस्य विषयस्तु शेषषष्ठीसमास इत्यर्थः। तन्निषेधस्याष्टसूत्रीज्ञाप्यत्वञ्च—तत्तदुदाहरणे "षष्ठी शेषे" इत्यनेनैव षष्ठीनिर्वाहादष्टसूत्र्या वैयर्थ्यमतस्तद्वैयर्थ्यं तत्तत्सूत्रविहितषष्ठीसमासनिषेधं ज्ञापयति, दर्शितवार्त्तिकञ्च ज्ञापकसिद्धमेवेतिरीत्या बोध्यम्। अतएव

१ कारके व्यपदिष्टे इति मु॰ पु॰ पा॰।

२ ॰ षष्ठ्याः इति मु॰ पु॰ पा॰।

३ पदसम्बन्धस्तु कारकविशेषसम्बन्धेन धातुविशेषसम्बन्धो बोध्यः।

समासस्त्वष्टसूत्रीज्ञाप्यस्य निषेधस्य विषयः । हरिसम्बन्धिस्मरण-हरिकर्म्मकस्मरणयोस्समानार्थयोश्चरमे प्रतिपाद्ये समासः साधुर्न्न प्रथम इति, उत्तरपदप्रकृतिस्वर एवास्य समासस्य नान्तोदात्त इति वा नियम्यते। कारकपूर्वके समासे भवत्युत्तरप्रकृतिस्वरः, शेषषष्ठी-समासे त्वन्तोदात्तः ।

हरिस्तु अष्टसूत्र्या मातुः स्मृतमित्यादौ समासनिषेध एव प्रयोजनम्, न हि कृद्योगषष्ठी सम्भवति, क्तस्तु निष्ठायाः पर्य्युदा-

हरिकारिकायां "कारकैर्व्यपदिष्टे" इत्युक्तम्। "अधीगर्थदयेशाम्..." इत्यादि-विहितायाः षष्ठ्याः कारकव्यपदेशमात्रम्, न तु वस्तुतस्तथात्वमिति तद्व्यपदेशविषयषष्ठ्यैव समासप्रतिषेध इति तेन सूचनात् । ननु तर्हि **मातुः स्मरण**मित्यादावपि कृद्योगलक्षणषष्ठ्या सह समासे मातृस्मरण-मित्याद्यपि साध्वेव स्यादिति समासनिषेधो व्यर्थ इत्यत आह—**हरिसम्बन्धी**ति । तथा च तत्तत्सम्बन्धत्वेन कर्म्मत्वस्य विवक्षणे समासनिषेध एव वार्त्तिकफलमिति भावः। सम्बन्धत्वेन कर्म्मतात्वेन वा कर्म्मत्वस्य बोधे धर्म्ममात्रप्रयुक्तवैलक्षण्यमकिञ्चित्करमित्यत आह—**उत्तरपदे**ति। "गतिकार-कोपपदात् कृत्" इति सूत्रेण कारकोपपदकृदन्तसमासस्योत्तरपदे यः स्वरो मध्योदात्तस्तत्स्वरस्यैव विधानेन कारकषष्ठ्या समासे एव तस्य प्रवृत्तिः, शेषषष्ठ्या समासे त्वन्तोदात्तस्तत्पुरुषस्वर इति भावः ।

**मातुः स्मृतमित्यादा**वित्यादिपदेन सर्पिषो ज्ञातं चौरस्य रुग्णं सर्पिषो नाथितमित्यादीना परिग्रहः। तत्र कृद्योगषष्ठ्या अप्राप्ततया सर्व्वथैव समासस्या-सम्भव इत्याह—**न हि कृद्योगे**ति । **पर्य्युदासादि**ति । 'न लोकाव्ययनिष्ठा-खलर्थतृनाम्" इति सूत्रेण तत्र निष्ठायोगे कृद्योगलक्षणषष्ठ्याः प्रतिषेधादित्यर्थः। कारकषष्ठीमात्रस्य तेन निषेधाच्छेपाधिकारीयाया "अधीगर्थदयेशाम्..." इत्यादिना विहिताया अनिषेधान्मातुः स्मृतमित्यत्र न निषेध इति बोध्यम्।

सादित्यभिप्रायेण—

"निष्ठायां कर्म्मविषया षष्ठी च प्रतिषिध्यते।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते॥"

इत्यनुशशास।

यत्तु [1]"ज्ञोविदर्थस्य करणे" इति सूत्रे प्रवृत्त्यर्थके जानातौ सर्पिषो

इत्यभिप्रायेणेति अनुशशासेत्यनेनान्वयः। षष्ठी चेति चकारो लक्षणयेत्यस्यानन्तरं योजनीयः। तथा च कारकषष्ठ्या निषेधाच्छेषषष्ठ्या सह समासस्य "प्रतिपदविधान..." इत्यादिवार्त्तिकेन मातुः स्मृतमित्यादौ समासो नेष्ट इत्यर्थः।

अत्रेदं चिन्तनीयम्—हरिस्मरणमित्यादौ कृदुत्तरपदप्रकृतिस्वरो मध्योदात्तो नान्तोदात्तः शेषषष्ठीतत्पुरुषस्वर इति तदैव सङ्गच्छते, यदि "सुगन्धिं पुष्टिवर्द्धनम्..." इत्यादिवेदे पुष्टिवर्द्धनशब्दस्य कारकस्य शेषत्वविवक्षायां शेषषष्ठीतत्पुरुषसमासोपगमेन्तोदात्तस्वर उपलभ्येत, न चायं दृष्टचर इति न किञ्चिदेतत्। मातुः स्मृतमित्यादावपि न शेषषष्ठ्या निषेधः, "न लोक..." इति निषेधस्य "नपुंसके भावे उपसङ्ख्यानम्" इति वार्त्तिकेन प्रतिप्रसवात्। न च कर्म्मषष्ठ्या निष्ठायां निषेध इति वाच्यम्, निष्ठायां तस्याप्रामाणिकत्वात्। प्रामाणिकत्वेपि क्तवतुमात्रविषयत्वात्। अतएव ग्रामस्य गतमोदनस्य भुक्तमित्यादौ भावाधिकरणक्तान्ते कर्म्मविषयषष्ठीप्रयोगः सङ्गच्छते। किञ्चाष्टसूत्र्याः शेषषष्ठीसमासनिषेधफलकत्वाभ्युपगमे सुरेशिता जनेशिता नदीशितेत्यादिकः षष्ठीसमासो न स्यात्, कर्म्मषष्ठ्याः "न लोक..." इति निषेधादिति।

ननूक्तरीत्या "अधीगर्थदयेशाम्..." इत्याद्यष्टसूत्रीविहितायाः षष्ठ्याः समासनिषेधमात्रप्रयोजनकत्वे काशिकावृत्तौ तत्तदुदाहरणं तिङन्ततत्तद्धातुयोगे विरुद्धम्, तिङन्तेन सह समासस्यासम्भवादित्यत आह—यत्त्विति। अस्योदाहरणं

[1] ज्ञः अविदर्थस्येति छेदः। ज्ञ इति ज्ञाधातोरनुकरणात् षष्ठ्येकवचनम्। विद् ज्ञानम् अर्थः यस्य स विदर्थः, स न भवतीति अविदर्थः। तस्य ज्ञानार्थकभिन्नस्येति यावत्। अविदर्थस्येति लिङ्गादेव "ज्ञा अवबोधने" इति धातोः प्रवृत्तौ वृत्तिः। अतएव "प्रवृत्त्यर्थके जानातौ" इत्युक्तं विवरणकारेण।

**ज्ञानकरणत्वविवक्षायां सर्पिषो जानीत इति, [1]"अधीगर्थदयेशां कर्म्मणि" इति सूत्रे मातुः स्मरति दीनस्य दयते जनस्य ईष्ट इति,**

**प्रत्युदाहरणञ्चे**त्यग्रिमेणान्वयः। एवञ्च तत्तत्सूत्रे **सर्पिषो जानीत** इत्यादिकं यदुदाहरणमित्यर्थः। **प्रवृत्त्यर्थके जानाताविति**। उक्तसूत्रेणा**विदर्थस्ये**त्यनेन ज्ञानभिन्नार्थकस्य ज्ञाधातोर्योगे षष्ठीविधानात् "प्रवृत्तिवचनो जानातिरविदर्थो भवति" इति काशिकोक्तेश्च जानातेरत्र प्रवृत्तिरर्थो बोध्यः। षष्ठ्याः करणत्वम्। तच्च स्वजन्यस्वविषयकप्रत्यक्षस्वरूपव्यापारात्मकं प्रयोज्यतया धात्वर्थे प्रवृत्तावन्वेति। एवञ्च सर्पिःप्रत्यक्षप्रयोज्यप्रवृत्त्याश्रयत्वं [2]वाक्यार्थः। **अधीगर्थदयेशामिति**। अधिपूर्वकस्येक्धातोः [1]स्मरणमर्थः। तदर्थका ये धातवस्तेषां दयधातोरीशधातोश्च कर्म्मणि षष्ठी स्यादित्यर्थः। **मातुः स्मरती**त्यत्र षष्ठ्या आधेयत्वस्वरूपं कर्म्मत्वमर्थः फले विषयत्वेनान्वेति। (तथा च) मातृवृत्तिविषयतानिरूपकस्मरणाश्रयत्वं वाक्यार्थः। **दीनस्ये**ति। "दय दानगतिरक्षणेषु" इत्यनुशासनाद्दयतेस्त्रयोऽर्थाः। तत्रायं दयती रक्षणार्थकः। मधुनो दयते तीर्थस्य दयते इत्यनयोर्दानं गमनञ्च दयतेरर्थः। कर्म्मत्वं सर्वत्र षष्ठ्यर्थः। दीनादिकर्म्मकरक्षणाद्याश्रयत्वं वाक्यार्थः। **जनस्य ईष्ट** इति।

---

१ "इक् स्मरणे" नित्यमधिपूर्वः, तस्यार्थ इवार्थो यस्य स अधीगर्थः, स्मरणार्थक इति यावत्। तथा च स्मरणार्थका ये धातवस्तेषां दयेशधात्वोश्च कर्म्मणि षष्ठीति फलितम्।

२ "अथवा मिथ्याज्ञानवचनो जानातिरविदर्थो भवति" इति काशिकावचनादेव मिथ्याज्ञानमपि धात्वर्थः। षष्ठ्या लयो व्यापारोऽर्थः। लयस्तु तथाविध धारापन्नं प्रत्यक्ष तज्जन्यदृढसंस्कारजन्यस्मरणं वा। तस्य प्रयोज्यतया धात्वर्थेन्वयः। धात्वर्थस्याश्रयतया कर्त्तर्य्यन्वयः। तथा च 'यो यद्विषयकलयवान् भवति, स तन्मयं जगत्पश्यति' इत्यस्य सर्वत्र दृष्टचरत्वात् सर्पिर्लयप्रयोज्य सर्पिस्तादात्म्यावगाहिसकलवस्तुविषयकं यन्मिथ्याज्ञानं तदाश्रयत्वमित्यपि वाक्यार्थस्सङ्गत एव।

**"रुजार्थानां भाववचनानामज्वरेः" इति सूत्रे ज्वरसन्तापिवर्जितानां रोगार्थानां भावकर्त्तृकाणां धातूनां कर्म्मणि षष्ठी स्यादित्यर्थके रोगश्चौरस्य रुजति ज्वरिसन्ताप्यो रोगश्चौरं ज्वरयति [1]सन्तापयति वा सन्तापः, भावान्यकर्त्तृके नदी कूलं रुजतीति, "आशिषि नाथः" इति सूत्रे सर्पिषो नाथते, आशीर्भिन्नार्थके तु माणवकन्नाथतीति,**

"ईश ऐश्वर्य्ये" इत्यनुशासनादैश्वर्य्यं स्वत्वफलनिरूपकत्वं स्वामित्वस्वरूपमर्थः । षष्ठ्याः कर्म्मत्वम् । जनवृत्तिस्वत्वनिरूपकत्वाश्रयत्वं वाक्यार्थः । **रुजार्थानामि**ति । अत्राज्वरे**रि**त्यपहाय "अज्वरिसन्ताप्योरिति वक्तव्यम्" इति वार्त्तिकात् सन्तापेरपि भेदप्रतियोगित्वं ज्ञाप्यते, इत्याशयेनाह—**ज्वरिसन्तापिवर्जितानामि**ति । **भावकर्त्तृकाणामि**ति । भावार्थकघञादि-प्रत्ययान्तोपात्तकर्त्तृकाणामित्यर्थः । **रोगश्चौरस्ये**ति । दुःखानुकूलो व्यापारो रुजेरर्थः । तिङः प्रयोजकत्वं षष्ठ्या आधेयत्वात्मकं कर्म्मत्वम् । पित्तादिविकारो रोगः । (तथा च) चौरवृत्तिदुःखानुकूलधातुविकारस्वरूपव्यापारप्रयोजकः पित्तादिविकारो वाक्यार्थः । एवं चौरस्यामयत्यामय इत्यादावपि । **रुजार्थाना**मित्युपादानात् "[2]एति जीवन्तमानन्दो नरं वर्षशतादपि ।।..." इत्यादौ नरपदान्न षष्ठी । **भाववचनानामज्वरे**रित्यनयोर्व्यावृत्तिर्ग्रन्थकृतैवोक्ता । **सन्तापयती**ति । दुःखानुकूलमौष्ण्यानुभवः सन्तापेः । सन्तापशब्दस्य चोद्भूतस्पर्शवत्तेजस्संयोगोर्थः । एवं भोक्तू रुजति बहुभोजनं कामुकस्य क्षयिष्यत्यनवरतरतमित्यादिकमप्यस्योदाहरणं बोध्यम् । **आशिषि नाथ** इति । आशीरर्थे वर्त्तमानस्य नाथतेः कर्म्मणि षष्ठी भवतीत्यर्थकम् । आशीराशंसा, सा चेच्छा । सर्पिर्वृत्तिविषयताकेच्छाश्रयत्वं सर्पिषो नाथत

---

१ सन्तापयति सन्तापः इति पा० ना० मु० पु० ।

२ कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे । इति पूर्वार्द्धम् । अत्र परार्द्धवाक्ये एति जीवित्रमानन्दो ०—इत्यपि क्वचित् पाठो दृश्यते ।

**"जासिनिप्रहणनाटक्राथपिषां हिंसायाम्" इति सूत्रे चौरस्योज्जासयति निहन्ति उन्नाटयति क्राथयति पिनष्टीति, अहिंसायां धानाः पिनष्टीति, "व्यवहृपणोस्समर्थयोः" "दिवस्तदर्थस्य" इति सूत्रयोः क्रयव्यवहारार्थकानां व्यवहृपणदिवां कर्म्मणि षष्ठीत्यर्थकयोः शतस्य**

इति वाक्यार्थः। **नाथती**ति। [1]आत्मनेपदस्याप्याशीरर्थे एव विधानान्नात्र नाथते इत्यपीति बोध्यम्। अत्र नाथतेरुपतापोर्थः, "नाथृ नाधृ याञ्चोपतापैश्वर्य्याशीःषु" इत्यनुशासनात्। **चौरस्योज्जासयती**त्यादि। अत्र सर्वत्र धात्वर्थो हिंसा। सा च प्राणात्यन्तवियोगफलकव्यापारः। षष्ठ्याश्च पूर्ववदाधेयत्वस्वरूपं कर्म्मत्वमर्थः। तच्च प्राणात्यन्तवियोगे फलेन्वेतीति चौरवृत्तिप्राणात्यन्तवियोगफलकव्यापाराश्रयत्वं वाक्यार्थः। **हिंसायामि**त्यस्य प्रयोजनमाह— **अहिंसायामि**ति। **पिनष्टी**ति। आरम्भकसंयोगनाशफलिका आरम्भकसंयोगफलिका च विजातीया पार्थिवक्रिया पिनष्टेरर्थः। तत्राद्यं फलमादाय माषं पिनष्टीति प्रयोगः। द्वितीयमादाय धानाः पिनष्टीति। **व्यवहृपणोरि**ति। [2]समर्थौ समानार्थौ शकन्ध्वादित्वात्पररूपम्। व्यवहृपणोर्य्यते क्रयविक्रयव्यवहारे समानार्थकत्वात् तदर्थकयोर्योगे कर्म्मणि षष्ठीत्यर्थः। "दिवस्तदर्थस्य" इति सूत्रे तत्पदेन द्यूतक्रयविक्रयव्यवहारयोः परामर्शात्तदन्यतरार्थकस्य योगे कर्म्मणि षष्ठीत्यर्थः। **शतस्य व्यवहरते** इत्यादौ त्यागलाभान्यतरफलकाक्षपातनव्यापारस्वरूपं द्यूतम्। तत्र त्यागे स्वत्वनाशप्रकारतानिरूपितविशेष्यत्वस्य तत्सम्बन्धावच्छिन्नाधेयत्वस्य वा षष्ठ्यर्थकर्म्मत्वस्यान्वयः। लाभः स्वत्वेच्छा। तत्रापि स्वत्वप्रकारतानिरूपितविशेष्यत्वस्य तत्सम्बन्धावच्छिन्नाधेयत्वस्य वा

---

१ यद्यपि अनुदात्तेत्त्वादेवात्मनेपदस्य सिद्धे नाथते इत्येव स्यात्, तथापि आशिष्येवात्मनेपदस्य नियमार्थम् "आशिषि नाथ इति वाच्यम्" इति वार्त्तिकानुसरणादाशीर्भिन्ने नाथति इत्येव साधु, न तु नाथते इत्यभिप्रायः।

२ समौ तुल्यौ अर्थौ ययोरिति विग्रहः।

**[1]व्यवहरते [2]पणते दीव्यतीति, गणनार्थके व्यवहृतौ शलाकां व्यवहरति, स्तुत्यर्थके पणौ दीव्यतौ च ब्राह्मणं पणायति दीव्यतीति, "कृञः प्रतियत्ने" इति सूत्रे प्रतियत्नो गुणाधानम्, तत्र वर्त्तमानस्य**

कर्म्मत्वस्यान्वयः । क्रयो विक्रयश्च प्राङ्निरुक्त एवेति शतकर्म्मताकस्य त्यागस्य लाभस्य क्रयस्य विक्रयस्य च कर्त्तृत्वं वाक्यार्थः । **समर्थयो**रित्यस्य फलमाह—**गणनार्थक** इति । **पणायतीति** । [3]अत्र पणधातोः पनिसाहचर्य्यात् स्तुत्यर्थे एवायप्रत्ययादायप्रत्ययः । अनुबन्धस्य स्तुतौ केवले चरितार्थत्वादात्मनेपदाभावश्चेति बोध्यम् । **गुणाधानमिति** । **उपकरणं** सन्निधापनम् । तथा चैधोदककर्म्मकसन्निधापनप्रयत्नाश्रयत्वं वाक्यार्थः । तदनन्तरं सतः पाकस्य क्षिप्रसम्पत्तिरूपगुणाधायकमेधोदकसन्निधापनमिति वैयञ्जनिको बोधः ।

वस्तुतस्तु प्रतियत्नो द्वितीययत्नः । स चोपकारस्वरूप उपकरोतेरर्थः । तत्कर्म्मणि षष्ठी भवतीत्यर्थकमुक्तसूत्रम् । अतएव "उपात्प्रतियत्न..." इत्यादिसूत्रेण विहितस्य सुट आगमत्वान्निरर्थकस्य धात्वर्थप्रतियत्नद्योतकत्व-

---

१ व्यवहरति इति मु० पु० पा० ।

२ पणति इति मु० पु० पा ः

३ "पण व्यवहारे स्तुतौ च" "पन च" इति धातुपाठः । तत्र "पन च ' इत्यस्य स्तुतावेव सम्बन्धः, न तु व्यवहारेपि, अन्यथा "पण पन व्यवहारे स्तुतौ च" इत्येव निर्दिशेत् । एवञ्च पनधातोः स्तुतावेव सम्बन्धात् पनसाहचर्य्येण "गुपूधूपविच्छिपणिपनिभ्य आयः" इति सूत्रे स्वार्थे एभ्यो धातुभ्य आयप्रत्ययविधायके पणधातुरपि स्तुत्यर्थक एव गृह्यते, न तु व्यवहारार्थकः । अतः स्तुतावेव पणधातोरायायप्रत्ययः, न तु व्यवहारे, इत्यत्रेत्यारभ्य ० प्रत्यय इत्यन्तस्य तात्पर्य्यम् । ननु पणधातौ श्रुतस्यानुदात्तेत्त्वस्य आयप्रत्ययान्तेन्वयसम्भवादायप्रत्ययान्तस्यापि पणधातोरनुदात्तेत्त्वेनात्मनेपदापत्त्या स्तुतौ पणायतीति कथमित्याह—अनुबन्धस्येति । अनुबन्धस्य अनुदात्तात्मकस्य इतः आर्द्धधातुकविषये कदाचिदायप्रत्ययविनिर्मुक्ते चरितार्थत्वादायप्रत्ययान्तादात्मनेपदन्नेति भावार्थः ।

**एवं "कृत्वोर्थप्रयोगे कालेधिकरणे" इति सूत्रेण विहिता द्विरह्नो भुङ्क्ते द्विरह्नो भोजनमित्यादौ शेषषष्ठ्यपि समासप्रतिषेधार्थैव।**

इति **सूत्रेणे**ति। [1]कृत्वोर्थानां प्रत्ययानां प्रयोगे कालस्वरूपेधिकरणेर्थे षष्ठी भवतीत्यर्थकेनेत्यादिः। **द्विरह्नो भोजनमि**ति। क्रियाभ्यावृत्तिगणने विहितस्यासुचः पौनःपुन्यरूपमभ्यावृत्तिमात्रमर्थः, गणनस्य [2]द्व्यादिपदादेव लाभात्। तद्धितार्थे उत्पत्तिः। तत्र द्व्यादिपदार्थस्य द्वित्वादिविशिष्टस्य प्रतियोगितयान्वयः। तदन्वितोत्पत्तेर्धात्वर्थतावच्छेदकीभूतधर्म्मावच्छिन्नसमानाधिकरणभूते धात्वर्थे प्रतियोगितयान्वयः। तत एव क्रियाजन्मगणनालाभः। धात्वर्थतावच्छेदकैकधर्म्मावच्छिन्नत्वनिवेशाच्चैत्रस्य त्रिर्भोजने सति पञ्चकृत्वोह्नो भुङ्क्ते चैत्र इति न प्रयोगः। सामानाधिकरण्यनिवेशाच्चैत्रस्य त्रिर्भोजने मैत्रस्य द्विर्भोजने न तथाप्रयोगः। प्रकृत्यर्थविशेपितेनासुच्प्रत्ययार्थेन विशेषिते धात्वर्थे प्रकृत्यर्थ-

---

१ कृत्वसुच्प्रत्ययस्यार्थ एवार्थो येषा ते कृत्वोर्थाः, तेषा प्रयोग इति यावत्। "कृत्वोर्थप्रयोगे कालेधिकरणे" इति सूत्रे कालपद कालविशेषवाचिशब्दपरम्। तथा च 'कालेधिकरणे' इत्यस्य कालविशेषवाचिशब्दादधिकरणेर्थे इत्यत्र पर्य्यवसानात् भोजनाद्यधिकरणस्य कालरूपत्वमायातीति ध्येयम्। कृत्वोर्थप्रयोगोपादानफलन्तु कृत्वोर्थप्रयोगशून्ये अह्नि भुङ्क्ते शेते वेत्यादौ कालरूपेधिकरणे षष्ठीप्रसङ्गवारणायेत्यपि बोध्यम्।

२ क्रियाभ्यावृत्तिगणने "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" इत्यनेन विहितस्य कृत्वसुच्प्रत्ययस्य क्रियाया धातुना गणनस्य सङ्ख्यार्थकशब्देन लाभे सति "अनन्यलभ्यो हि शब्दार्थः" इति न्यायात् अभ्यावृत्तिमात्रमर्थः। अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्यते, तदा चतुर्वारं पाकप्रवृत्तौ त्रिः पचतीति स्यादत उपसर्गवशात् 'वृतु वर्त्तने" इति धातोरुत्पत्तौ वृत्त्या पौनःपुन्यमुत्पत्तिरेवाभ्यावृत्तिरिति टीकयितुरभिप्रायः। अतएव "एककर्त्तृकाणा तुल्यजातीयानां क्रियाणा जन्म संस्थानं क्रियाभ्यावृत्तिगणनम्" इति काशिकावचनमपि सङ्गच्छते। अत्रैककर्त्तृकत्वतुल्यजातीयत्वयोर्न्निवेशप्रकारः प्रयोजनञ्च स्वयमेव प्रदर्शितम्।

ताद्रूप्येणाधिकरणताविवक्षायान्तु द्विरहनि भोजनमित्येव विग्रहो द्विरहभोजनमिति समासश्चोत्तरप्रकृतिस्वरोपेतः प्रमाणम् । १५१ ।

**सर्वनामसमानाधिकरणे प्रथमादयः ।**
**अन्यत्र हेतुपर्य्याये तृतीयाद्या विभक्तयः ॥१५२॥**

हेतुकारणनिमित्तप्रयोजनार्थादिशब्दो यदि सर्वनामसमानाधिकरणस्तत्र को हेतुर्वसति कं हेतुं वसतीत्यादिक्रमेण सर्वा विभक्तयः । [1]धनेन निमित्तेन वसतीत्यादौ तृतीयाद्या एव साधवो न प्रथमाद्वितीये। [2]अत्र च यथायथं हेत्वादिशब्दो जनकं प्रयोजनञ्चाभिधत्त इत्यभिहितं प्राक् । विभक्तीनां तद्धेतुकत्वमर्थः शेषो वा । १५२ ।

कालविशेषविशेषितस्य षष्ठ्यर्थाधेयत्वस्यान्वयः । तथा च द्विप्रतियोगिताकोत्पत्तिप्रतियोग्यहर्वृत्तिभोजनमिति बोधः । **ताद्रूप्येणे**ति । अधिकरणतात्वेनेत्यर्थः । **इत्येव विग्रह** इति । एवकारेण षष्ठ्या सह विग्रहो व्यवच्छिन्नः, तत्र षष्ठीप्रसक्तेरभावात् । १५१ ।

**सर्वनामे**ति । **सर्वनामसमानाधिकरणे हेतुपर्य्याये** प्रथमाद्या विभक्तयः । **अन्यत्र** सर्वनामसमानाधिकरणहेतुपर्य्यायप्रयोगादन्यत्र **तृतीयाद्या विभक्तय** इत्यन्वयः । "निमित्तपर्य्यायप्रयोगे सर्वासां प्रायदर्शनम्" इति वार्त्तिकेन प्रथमादिसप्तानां विधानात् **प्रथमादय इत्यादि**पदेन षण्णां परिग्रह इत्याशयेनाह— **हेतुकारणे**त्यादि । दर्शितवार्त्तिके प्रायग्रहणात् सर्वनामभिन्नपदसमानाधिकरणनिमित्तपर्य्यायप्रयोगे प्रथमाद्वितीययोर्निषेधज्ञापनमित्याशयेनाह— **धनेने**ति । **प्रागि**ति । "हेतौ" इति सूत्रव्याख्यानावसर इत्यर्थः । **तद्धेतुकत्व-मि**ति । तज्जन्यत्वं तत्प्रयोज्यत्वं वेत्यर्थः । तत्सूत्रस्यापि शेषाधिकारीयत्वादाह— **शेषो वे**ति । १५२ ।

१ धनेन इत्यस्य स्थाने अनेन इति मु० पु० पा० ।
२ अत्र इत्यस्य स्थाने अतएव इति मु० पु० पा० ।

**अतसर्थयुतात् षष्ठी द्वितीयाप्येनपायुतात्।**
**दूरान्तिकार्थयुक्तात्तु षष्ठी पक्षे तु पञ्चमी ॥१५३॥**

ग्रामस्य दक्षिणतः पुरः पुरस्तात् उपर्य्युपरिष्टादित्यादौ षष्ठ्येव। विन्ध्याद्दक्षिणत इत्यादौ विन्ध्यमारभ्य दक्षिणत इति ल्यबन्ताध्याहारे कर्म्मणि पञ्चमी। एवं दक्षिणेन ग्रामं ग्रामस्य [1]वेत्यत्रैनबन्तेन योगे षष्ठी द्वितीया च प्रमाणम्, न तु पञ्चमी, "प्रकृतायाः पञ्चम्याः षष्ठी-

"षष्ठ्यतसर्थप्रत्ययेन" "एनपा द्वितीया" "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" इति सूत्रत्रयविहितां षष्ठीं निरूपयति—**अतसर्थे**ति। "दक्षिणोत्तराभ्यामतसुच्" इत्यनेनास्तातेर्विषये सप्तम्याद्यन्ताभ्यां दक्षिणोत्तरशब्दाभ्यां स्वार्थेतसुच्प्रत्ययो विधीयते, [2]तदर्थकप्रत्यययोग इत्यर्थः। **दक्षिणत** इति। दक्षिणस्यां दक्षिणस्याः दक्षिणा वा इत्यर्थः। **पुर** इति। "पूर्वाधरावराणामसि पुरधवश्चैषाम्" इत्यनेनास्तेर्विषये असिप्रत्ययः पूर्वस्य पुरादेशश्च। **पुरस्ता**दिति। "अस्ताति च" इत्यनेनास्तातिप्रत्यये परे पूर्वस्य पुरादेशः। **उपर्य्युपरिष्टा**दिति। अस्तातिविषये ऊर्ध्वशब्दस्य निपातावेतौ। षष्ठ्या अवधित्वमर्थो दक्षिणादावन्वेति। **कर्म्मणी**ति। ल्यबन्ताध्याहारे एतत्सूत्रस्य तत्राप्रवृत्तिः, विन्ध्यपदस्य दक्षिणत इत्यनेन योगाभावादित्याशयः। **एनबन्तेने**ति। "एनबन्यतरस्याम-

१ वेत्यत्र इत्यस्य स्थाने वेत्यनेन इति मु० पु० पा०।

२ "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" इत्यारभ्य "आहि च दूरे" "उत्तराच्च" इत्यन्तैः सूत्रैर्दिग्देशकालवृत्तिभ्यः शब्देभ्यः स्वार्थे प्रत्यया विहिताः। तत्र दक्षिणोत्तराभ्यामतसुच्" इति विहितो य अतसुच्प्रत्ययः, तस्यार्थः दिग्देशकालरूपः, स एवार्थो यस्य स अतसर्थप्रत्ययः, तद्योगे इत्यर्थः। यद्यतसर्थप्रत्ययेषु अस्तातिरेव प्रथमः, तथापि अस्तात्यर्थेत्युक्तौ संयुक्ताक्षरघटितत्वेन गौरवं स्यादतः कारिकायामपि लाघवादतसर्थेत्युक्तम्।

द्वितीये चाधिके भवतः" इति महाभाष्यात् । तथा "धनपतिगृहादुत्तरेणास्मदीयम्..." इत्यादावुत्तरेणेति पदं तृतीयान्तम् , तदपि तोरणेनेत्यस्य समानाधिकरणम् , अतो दिक्शब्दयोगे पञ्चमी । "ततः पश्चात् स्रंस्यते" इति भाष्यप्रयोगादतसर्थप्रत्ययान्तोपि पश्चाच्छब्दः पञ्चम्या निमित्तम् । लुप्तोप्यतसर्थप्रत्ययः षष्ठीनिमित्तमिति प्राग् ग्रामादित्यादौ प्राप्तां षष्ठीमपवदति । अञ्चूत्तरपदयोगे पञ्चम्याः प्रतिप्रसव इत्यभिहितमधस्तात् । दूरमन्तिकं ग्रामस्य ग्रामादित्युभयमपि प्रमाणम् । १५३ ।

दूरे पञ्चम्याः" इति विहितैनप्प्रत्ययान्तेनेत्यर्थः । **धनपतिगृहादि**ति । "तत्रागारम्..." इत्यादिः । **तृतीयान्तमि**ति । तथा चैनबन्तयोगाभावान्न गृहपदात षष्ठीद्वितीये इति भावः । तर्हि पञ्चमी ततः कथमित्यत आह—**तदपी**ति । **दिक्शब्दयोग** इति । "अन्यारादितरर्त्ते..." इत्यादिनेत्यर्थः । अतसर्थप्रत्ययान्तयोगेपि क्वचित्पञ्चमी महाभाष्यप्रयोगादवगम्यत इत्याह—**ततः पश्चादि**ति । **अतसर्थप्रत्ययान्तोपी**ति । अपरशब्दादातिप्रत्यययोपरस्य पश्चादेशश्च "पश्चात्" इति सूत्रेण निपातितः । स चातिप्रत्ययोस्तातिविषये विहितत्वादतसर्थक इति तदन्तः पश्चाच्छब्द इत्यर्थः । **लुप्तोपी**ति । अञ्चत्यन्ताद्दिक्छब्दादस्तातेर्लुक् स्यादित्यर्थकेन "अञ्चेर्लुक्" इत्यनेन लुप्तस्यास्तातेः प्रत्ययलक्षणेन प्रागादिपदानामतसर्थप्रत्ययान्तत्वात्तद्योगेपि षष्ठीप्रवृत्तिरिति भावः । **अधस्तादि**ति । "अन्यारादितरर्त्ते..." इत्यादिसूत्रविवरणे इत्यर्थः । १५३ ।

---

१ तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम् ।
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ॥
यस्योपान्ते कृतकतनयः कान्तया वर्द्धितो मे ।
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः ॥ इति पूर्णश्लोकः ।

अत्र उत्तरेणेत्यस्य तोरणेनेत्यस्य विशेषणत्वं तृतीयान्तत्वञ्च स्वीकृत्यैनबन्तस्यायोगात्पञ्चमीं गृहपदादुत्पादिता । वस्तुतस्तु दक्षिणेन याहीत्यादाविव "प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति वार्तिकेनाधेयत्वार्थिका उत्तरेणेति तृतीया, अतोपि धनपतिगृहादिति पञ्चम्या नानुपपत्तिरिति ध्येयम् ।

**कृदन्तधातुयोगेन भवेत्कर्त्तरि कर्म्मणि ।**
**प्रधाने नियता षष्ठी गुणे तूभयथा मता ॥१५४॥**

ओदनस्य पाकः कृष्णस्य कृतिरित्यादौ द्वितीयावत् कर्म्मत्वं कर्त्तृत्वञ्च षष्ठ्यर्थः । द्विकर्म्मकधातुयोगे प्रधानकर्म्मणि षष्ठ्येव, गुणकर्म्मणि द्वितीयापि प्रमाणम् । नेताश्वस्य ग्रामस्य ग्रामं वा । एतेन "कर्त्तृकर्म्मणोः कृति" इत्यनुशासनं व्याख्यातम् । १५४ ।

नन्वत्र सूत्रे कृतीति व्यर्थम्, "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इत्यनेन [1]लादेशतया तिङः पर्य्युदासेऽर्थादेव कृदन्तधातुयोगे कर्त्तृकर्म्मणोर्लाभादिति चेन्न, कृतपूर्वी कटमित्यादौ तद्धितयोगे कर्म्मषष्ठ्यपवादाय तदुपादानात् ।

अथ पूर्वं कृतमनेनेति विग्रहे "सपूर्वाच्च" इति सूत्रेण सोपपदात्पूर्वपदादिनिः कर्त्तरि विधीयते । तत्र कृतपदस्य कटसमानाधिकरणत्वे

"कर्त्तृकर्म्मणोः कृति" इति सूत्रविहितां षष्ठीं निरूपयति—**कृदन्ते**ति । **गुणे तूभयथे**ति । "गुणकर्म्मणि वेष्यते" इति वार्त्तिकेन तत्र विकल्पेन षष्ठीविधानाद् द्वितीयापि तत्र प्रमाणमित्यर्थः । १५४ ।

**कृदन्तधातुयोगेने**त्यनेनोक्तार्थकस्य सूत्रे कृतीत्यस्य वैयर्थ्यमाशङ्कते—**नन्वत्रे**ति । वैयर्थ्ये बीजं **न लोकाव्यये**त्यादि । **अर्थादेवे**ति । कर्त्तृत्वं कर्म्मत्वञ्च धात्वर्थनिरूपितमेव । तत्र धातुर्द्विधा तिङन्तः कृदन्तश्च । तत्र तिङन्तानां योगे षष्ठ्या निषेधे कृदन्त एव परिशिष्यत इति भावः । **तदुपादानादि**ति । तथा च तद्धितयोगे पर्य्युदासाभावेन तत्रैव षष्ठीव्यावृत्तिः कृतीत्युपादानफलमिति भावः ।

द्वितीयाविवरणे कृतपूर्वी कटमित्यत्र द्वितीयोपपादनप्रसङ्गाद् विवरणस्य कृतावपि तत्रादर्शितं तद्विचारमत्रारभते—**अथे**त्यादिना । **कटसमानाधिकरणत्वे** कटपदप्रयोज्यविषयतानिरूपिततादात्म्यसंसर्गावच्छिन्नविषयताप्रयोज-

१ लादेशतया तिङः पर्य्युदासे इत्यस्य स्थाने लादेशपर्य्युदासे इति मु० पु० पा० ।

वृत्तिरेवानुपपन्ना, ऋद्धस्य राज्ञः पुरुष इत्यादाविव "सविशेषणानां वृत्तिर्न्न" इति वार्त्तिकेन तन्निषेधात्। सूत्रे कृतीत्यस्यापि वैयर्थ्यम्, निष्ठाभिहिते कर्म्मणि अनभिहिताधिकारीयषष्ठ्यप्रसक्तेः, कटमिति तदपवादेन द्वितीयानुपपन्ना, तस्या अप्यनभिहिताधिकारीयत्वात्।

अत्र कृतमिति भावक्तान्तमविवक्षितकर्म्मकमेव पूर्वेण समासमासाद्य कर्त्तरि तद्धितं जनयित्वा कृतपूर्वीति शब्दं साधयति, स च प्राक्कालिककरणकर्त्तेति बोधसमर्थोऽवतिष्ठते, भावक्तान्तकृञर्थे च कटकर्म्मत्वान्वयं भाषमाणो भट्टोजिर्बभ्राम, कर्म्मान्वयिनः कृञो भावप्रत्ययदौर्लभ्यात्। अन्यथा भावप्रत्ययान्तगम्यर्थे ग्रामकर्म्मत्वस्यान्वयसम्भवेन गतं ग्रामं गम्यते वा ग्राममिति प्रयोगापत्तेः, अविवक्षितकर्म्मकत्वे कदापि कर्म्मान्वयस्य [1]विवक्षितकर्म्मकत्वे भावप्रत्ययस्य चानुप-

कत्वे इत्यर्थः। वृत्तिः समासरूपा। अनुपपन्नत्वे बीजम्—ऋद्धस्येति। इदमुपलक्षणम्। पूर्वं समासे कृतेपि कटपदेन तस्य सामानाधिकरण्यमनुपपन्नमेव, "वृत्तस्य विशेषणयोगो न" इति वार्त्तिकादित्यपि बोध्यम्। चैत्रस्य दासभार्य्येत्यादाविवात्रापि तद्वार्त्तिकद्वयस्य सङ्कोचे वृत्तेस्सम्भवे दोषान्तरमाह—सूत्रे कृतीत्यस्यापीति।

अत्र विषये शाब्दिकसमाधानं निरसितुमाह—अत्र कृतमितीति। भावक्तान्तमित्यत्र हेतुरविवक्षितकर्म्मकत्वम्। पूर्वेण पूर्वशब्देन। साधयतीत्यस्य भट्टोजिरित्यग्रिमेणान्वयः। कृञर्थे चेति चकारो भाषमाण इत्यनन्तरं योजनीयः। भ्रमे बीजमाह—कर्म्मान्वयिन इति। अन्यथा कर्म्मान्वयिनोपि धातोर्भावप्रत्ययस्य साधुत्वे। कदापीति। भावे क्तप्रत्ययदशायां कर्म्मणोऽविवक्षा—(यां) कृतपूर्वीति निष्पत्तौ तदेकदेशे कृतपदार्थे कटकर्म्मकत्वान्वय इति न सम्भवति, एकत्र प्रयोगे विवक्षाया अविवक्षायाश्च

१ विवक्षितकर्म्मके इति मु० पु० पा०।

पत्तेरवश्याभ्युपेयत्वात् । कर्म्मप्रत्ययान्तकृतपदस्य वृत्त्यभ्युपगमे तु कर्म्मणि षष्ठीप्रसक्तेर्द्वितीयोत्पत्तेरप्यसम्भव एव वर्त्तते । किञ्च कृदर्थे कर्म्मान्वयोपगमे कथञ्च कृतीत्यनेन न तद्वारणम् । निष्ठापर्य्युदासानुसरणैकशरण्यत्वे तु किं कृतीत्युपादानेन ।

यदपि कारकाणां सर्वत्र प्रत्ययार्थभावनायामेवान्वयः, न तु धात्वर्थे, "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" इति न्यायात् । कर्म्मभावप्रत्ययाव्ययकृतश्च भावनामभिदधति, अन्यथा कारकान्वयानुपपत्तेः । कर्म्मकर्त्तृकृतान्तु शक्त्या भक्त्या वा भावनाबोधकत्वमिति [1]ग्रामं गतवानित्यादौ कृदर्थभावनायां

विरोधादिति भावः । **असम्भव एवे**ति । "कर्त्तृकर्म्मणोः कृति" इत्यत्र "कर्म्मणि द्वितीया" इत्यत्र च "अनभिहिते" इत्यस्याधिकारादिति भावः । कालभेदेन कर्म्मणो विवक्षाया अविवक्षायाश्चाभ्युपगमेपि कृतीत्यस्य न तत्र षष्ठीवारकत्वमित्याह—**किञ्चे**ति । **कथं वारणमि**ति । कृदन्तयोगस्य तथा सति कटेनपायादिति भावः । **किं कृतीत्युपादानेने**ति । कृतीत्यस्याभावेपि निष्ठायोगे "न लोक..." इत्यादिना निषेधसम्भवादित्याशयः ।

अत्र षष्ठीप्रसङ्गोपपादकं भाट्टमतं निरसितुमाह—**यदपी**ति । **न तु धात्वर्थे** इति । तस्याप्याख्यातार्थे विशेषणतया गुणत्वात् । **कर्म्मभावप्रत्यये**ति । भावकर्म्मणोर्विहितास्तिङः कृतश्चेत्यर्थः । **अव्ययकृतश्चे**ति चकारेण तद्धितानामुपग्रहः । **अन्यथे**ति । कर्म्मप्रत्ययादीनां भावनावाचकत्वविरहे । **कारकान्वयानुपपत्तेरि**ति । कारकाणां भावनान्वयित्वस्यैव व्युत्पत्तिसिद्धत्वात् । कर्म्मकृतां भावनाशक्तत्वे चैत्रो गत इति सामानाधिकरण्यानुपपत्तिमाशङ्क्याह—**भक्त्या वे**ति । **तथा च** उक्तरीत्या तद्धितोपात्तभावनायां कर्म्मत्वस्यान्वये च ।

---

१ ग्रामे इति मु० पु० पा० ।

[1]ग्रामकर्म्मत्वस्येव [2]कृतपूर्वी कटमित्यादौ कर्त्तृवाचकतद्धितेनिप्रत्ययार्थभावनायां कटकर्म्मत्वस्यान्वयः, कृदर्थभावनाकर्म्मणो निष्ठयाभिधानेपि तद्धितार्थकर्म्मणोनभिधानान्न द्वितीयानुपपत्तिः। तथा च कृदुपात्ताया भावनायाः कर्म्मण्येव षष्ठी, न तु तद्धितोपात्ताया इत्यावेदयितुं कृतीति सूत्रे निर्दिष्टमिति।

यदाह हरिः—

"ततः क्रियावता कर्त्रा योगो भवति कर्म्मणाम्।
अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः॥
क्रिया सम्बद्ध्यते तद्वत् कृतपूर्व्यादिषु स्थिता।"

इति। क्रिया भावना। कर्त्रा योगः कर्त्रेकदेशे क्रियायामन्वयः। अविग्रहा [3]प्रधानकारकान्वयिनीति भाट्टैरुक्तम्।

तच्चिन्त्यम्, भावकृतां भावनाबोधकत्वस्यानुभवविरुद्धत्वात्।

भवतु तदौदनस्य पाक इत्यादौ शेषे षष्ठ्येव, कृद्योगषष्ठी तु कर्त्तृकर्म्मकृत्स्वैवोपपत्स्यत इति चेन्न, "उभयप्राप्तौ कर्म्मणि" इत्यस्य निर्विषयकत्वापत्तेः।

अत्र हरिसंवादमप्याह—**यदाह हरिरि**ति। **कर्त्रा** कर्त्तृसंज्ञकेन।

**अनुभवविरुद्धत्वादि**ति। तथा च ओदनस्य पाक इत्यादौ भावप्रत्ययान्तपाकपदयोगे षष्ठ्यर्थकर्म्मणोन्वयानुपपत्तिः, तत्र भावनाया अभावादिति भावः। अनुभवविरोधस्य सविवादत्वे कर्म्मकर्त्तृभावनाभ्यां कर्म्मकर्त्रोराक्षेपस्यावश्यकतयानभिहिताधिकारीययोः कर्म्मकर्त्तृषष्ठ्योरनुपपत्तिप्रसङ्गो दोषो बोध्यः।

ओदनस्य पाक इत्यादिभावकृदन्तयोगे षष्ठ्या न कर्म्मत्वमर्थः, येनोक्तानुपपत्तिः स्यादित्याशङ्कते—**भवत्वि**ति। **निर्विषयकत्वापत्तेरि**ति।

---

१ ग्रामकर्म्मकत्वस्येव इति मु० पु० पा०।

२ कृतपूर्वी कटमित्यादौ कर्त्तृ० इत्यस्य स्थाने कृतपूर्वीकर्त्तृ० इति मु० पु० पा०।

३ प्रधानकारकान्वयिनी इत्यस्य स्थाने प्रधानम् इति मु० पु० पा०।

**ननु [1]करणादिकृत्तद्विषयः, वस्तुतो गुणानाश्चेति न्यायेन भावनायां कारकत्वेनान्विते धात्वर्थे कारकानन्वयो निर्णीयते, न तु घञन्तेन प्रधानवदुपस्थापिते तस्मिन्, इति चेन्न, तथापि कृतपूर्वी कटमित्यादौ कृतपदार्थस्य तद्धितार्थभावनायामनन्वये-**

आश्चर्य्यो गवां दोहोगोपेनेत्यादौ दोहपदस्य भावकृदन्ततया तद्योगे कर्म्मणि गवि कर्त्तरि गोपे च "कर्त्तृकर्म्मणोः कृति" इत्यनेन प्राप्तां षष्ठीं कर्म्मणि नियमयितुं तत्सूत्रम् । तत्र भावप्रत्ययान्तयोगे "कर्त्तृकर्म्मणोः कृति" इत्यस्याप्रवृत्तौ कर्म्ममात्रे शेषत्वेन विवक्षायां शेषषष्ठ्याः साधुत्वादुभयत्र प्राप्त्यभावात् कस्य नियमनं तेन क्रियेतेत्याशयः ।

शङ्कते—**नन्विति । करणादिकृदिति ।** "करणाधिकरणयोश्च.." इत्यादिना विहितो ल्युडादिरित्यर्थः । **तद्विषयः** "उभयप्राप्तौ कर्म्मणि" इति सूत्रस्य विषयः । तत्र कृदर्थभावनायास्सत्त्वात्तत्रैव षष्ठ्यर्थकर्म्मत्वकर्त्तृत्वयोरन्वयसम्भवात् कर्म्मणि षष्ठीनियमनमुक्तसूत्रस्य प्रयोजनमित्याशयः । करणादिकृतामपि भावनाबोधकत्वस्यानुभवविरुद्धत्वादुक्तानुपपत्तितादवस्थ्यादाह—**वस्तुतो गुणानाश्चेति । कारकत्वेनान्विते** इति । पचतीत्यादौ पाकं करोतीत्यादिविवरणेन कर्म्मत्वेन धात्वर्थपाकस्याख्यातार्थभावनायामन्वयाद् गुणत्वमोदनादिकर्म्मणा सह कर्म्मत्वेन साम्यञ्चेति तत्रैवोदनादिकर्म्मकत्वस्यानन्वय इत्युक्तन्यायेन निश्चीयत इत्यर्थः । **न तु घञन्तेनेति ।** पाक इत्यादौ धात्वर्थपाकस्य कर्म्मत्वेन प्रत्ययार्थभावनायामनन्वयाद् गुणत्वाभावादोदनादिना समत्वाभावाच्च तत्रौदनादेरन्वयो निराबाध इति नोक्तानुपपत्तिरिति शङ्काभिप्रायः । ओदनस्य पाक इत्यादौ भावकृदन्तार्थे षष्ठ्यर्थकर्म्मत्वान्वयस्योपपादनेपि प्रकृते कृतपूर्वी कटमित्यादौ न कोप्युपयोग इत्याशयेनोत्तरति—**तथापीति । अनन्वयेसामर्थ्यमिति ।** व्यपेक्षारूपसामर्थ्यस्य तत्राभाव इत्यर्थः । तथा च कृतपूर्वीति समासानुपपत्तिरिति

---

[1] करणादिकृत्तद्विषयः इत्यस्य स्थाने करणादिवत् तद्विषयः इति मु० पु० पा० ।

सामर्थ्यम्, अन्वये तु तेनैवाकाङ्क्षाविच्छित्तेर्न्न कटादेः कर्म्मत्वेन तत्रान्वयः सम्भवति। अन्यथा धात्वर्थान्तर्भूतकर्म्मकपतत्यर्थ-भावनायामपि कर्म्मान्वयप्रसङ्गात्।

अथ कृतादिपदार्थपरित्यागेन [1]कृतपूर्वीत्यत्र तद्धितस्य प्राक्कालीनभावनावानर्थः, तदा पक्वपूर्वी सूपानधीतपूर्वी वेदानित्यादेः पर्य्यायताप्रसङ्गः। पक्वादिपदसमभिव्याहृतेन तद्धितेन पाकादि-भावनैव प्रतिपाद्यत इति न तद्धितानां पर्य्यायत्वमिति चेत्? एवं सति विग्रहावस्थायां समासावस्थायाञ्च विवक्षितस्यापि निष्ठार्थस्य

भावः। **तेनैवाकाङ्क्षाविच्छित्ते**रिति। कृतिकर्म्माकाङ्क्षायास्तद्धितार्थभावनान्वयादेव विच्छेदादेककर्म्मावरुद्धायां भावनायां कर्म्मान्तरान्वयस्यानाकाङ्क्षितत्वादिति भावः। **अन्यथा** एककर्म्मान्वितायामपि भावनायां कर्म्मान्तरान्वयस्योपगमे। **कर्म्मान्वयप्रसङ्गा**दिति। तथा च भूमिं पततीत्यस्यापि प्रामाण्यं स्यादिति भावः।

**तद्धितस्य** इनिप्रत्ययस्य। **भावनावानर्थ** इति। कृदादिपदं तात्पर्य्य-ग्राहकम्। एवञ्च तादृशभावनायां कटकर्म्मत्वान्वये प्रसक्तां षष्ठीं वारयितुमेव कृतीत्यस्योपादानमिति भावः। **पर्य्यायताप्रसङ्ग** इति। तत्रापि पक्वादिपदार्थ-परित्यागेन प्राक्कालिकभावनावत एव सूपादिकर्म्मत्वान्वयानुपपत्त्या तद्धितार्थताया वक्तव्यत्वादित्यर्थः। प्रसङ्गमेतं वारयति—**पक्वादिपदे**ति। तथा च कृतपूर्वीत्यत्र कृतिनिरूपितप्राक्कालिकभावनावतः पक्वपूर्वीत्यादौ पाकादिनिरूपितप्राक्कालिकभावनावतस्तथात्वान्न पर्य्यायता। तदेकदेशे पाकादौ षष्ठ्यर्थकर्म्मत्वान्वयवारणाय कृतीत्यस्योपादानमिति भावः। **एवं सती**ति। दर्शितरीत्या कृतीत्यस्य सार्थकत्वोपपादने इत्यर्थः। **विग्रहावस्थायां** कृतं पूर्वमनेनेति वाक्ये। **समासावस्थायां** कृतपूर्वेत्यत्र। **विवक्षितस्यापी**ति।

---

१ कृतपूर्वीत्यस्य इति मु० पु० पा०।

केवलं निरर्थकत्वं युज्यते, न तु धातोः। अतो धातोरर्थे धात्वर्थोपहिततद्धितार्थभावनायां वा कर्म्मान्वयस्सम्भवतीति किं तद्धितानां पाकादिभावनावाचकतया नानार्थताभ्युपगमेनेति चेत्? उच्यते—

**क्रियाक्तायां भावनायामिनिः क्तान्तो निरर्थकः।**
**सूत्रे कृतीत्युपादानसामर्थ्यादवसीयते ॥१५५॥**

तदुभयत्र तद्धितस्याभावाद् भावनायाः केनाप्यलाभादिति भावः। **निरर्थकत्वं युज्यत** इति। इनिप्रत्ययोत्पत्तौ भावनायास्तेनैव लाभान्निष्ठाया निरर्थकत्वं युक्तमित्यर्थः। **न तु धातोरि**ति। तदर्थस्य केनाप्यलाभादित्यर्थः। **अतः** धात्वर्थविवक्षाया आवश्यकत्वात्। **धात्वर्थे** इति। दर्शितप्रधानवदुपस्थितत्वं धात्वर्थस्येत्याशयेनेदम्। तस्य गुणत्वे त्वाह—**धात्वर्थोपहिते**ति। धात्वर्थान्वितेत्यर्थः। **किं तद्धितानामि**ति। दर्शितरीत्यैवान्वयसम्भवादिनिप्रत्ययस्याधिकधर्म्मघटितानेकार्थवाचकत्वमफलमिति भावः।

अत्र निष्ठाया निरर्थकत्वोपगमेपि धातोः कृदन्तत्वमक्षतमिति कृतीत्यस्योपादानेपि तत्र षष्ठीप्रसक्तिर्दुर्वारेति तदुपादानसामर्थ्यादेव क्तान्तं कृतादिपदं निरर्थकमिति ज्ञाप्यते। इनिप्रत्ययस्य नानार्थत्वमनन्यगतिकतयोपेयते। प्रकरणादिबलादेव कृतपूर्वीत्यत्र करणभावनावान् पक्वपूर्वीत्यत्र पाकभावनावानिति तद्धितेन ज्ञाप्यते। तदेकदेशे पाके भावनायां वा यथामतमोदनकर्म्मत्वस्य कृतौ भावनायां वा कटकर्म्मत्वस्य विवक्षायामोदनादिपदात् षष्ठीं वारयितुमेव सूत्रे कृतीति, द्वितीया तु सामान्यतो विहिता भवत्येवेति, ओदनं पक्वपूर्वी कृतपूर्वी कटमित्यादौ न कर्म्मणि षष्ठी, किन्तु द्वितीयैवेत्याशयेन समाधत्ते—**उच्यत** इत्यादिना। **क्रियाक्तायाम्** अनुकूलत्वसम्बन्धेन पाकादिक्रियाविशिष्टायामित्यर्थः। सप्तम्यर्थो वाचकत्वमिनिप्रत्ययेन्वितम्। **क्तान्तः** पक्वादिशब्दः। **अवसीयते** ज्ञाप्यते।

पक्वपूर्वी सूपानित्यादौ पाकानुकूलभावनावानिनिप्रत्ययस्यैवार्थः, न तु पाककर्म्म पाको वा क्तान्तस्य, पच्यादिपदजन्यपाकोपस्थितेः पाकानुकूलभावनावति तद्धितवृत्तिग्राहकतयैवोपयोगात् । तद्धितान्त-जन्यवाक्यार्थबोधे साक्षादजनकत्वादिदमादिपदजन्यबोधे प्रत्यक्षो-पस्थितवत् । यदि च पच्यर्थे कारकान्वयः स्यात्, तदास्य पचेः कृदन्तत्वेन शेषषष्ठ्येव प्रवर्त्तेत । निष्ठापर्य्युदासेन षष्ठीवारणे कृतीत्युपादानमनर्थकमापद्यते । तदुपादानसामर्थ्यमेव पक्वपूर्वीत्यादौ पूर्वपदोपपदवैयर्थ्यमर्थापयतीति दिक् । कृद्योगषष्ठीविधिरनित्यः,

साक्षादजनकत्वादित्यत्र दृष्टान्तमाह—इदमादिति । तथा चेदमेतदादि-शब्दानां प्रत्यक्षादिविषयेषु शक्तेरयं देवदत्त इत्यादौ चक्षुस्सन्निकर्षजन्यदेवदत्त-प्रत्यक्षस्य यथेदंपदजन्यबोधे न साक्षाज्जनकत्वम्, किन्त्विदंपदशक्तिग्रहो देवदत्तप्रत्यक्षं विना न सम्भवतीति तादृशप्रत्यक्षस्येदंपदशक्तिग्राहकतया तज्जन्यान्वयबोधप्रयोजकत्वम्, तथा प्रकृतेपीति नियमः । धात्वर्थस्य विचक्षणे कृतीत्युपादाने षष्ठीप्रसक्तिर्दुर्वारेत्याह—यदि चेति । षष्ठीविधिरनित्य इति । एतच्च शाब्दिकमतेनोक्तम् । वस्तुतस्तु "तदर्हम्" इत्यत्र तदित्यव्ययं लुप्तषष्ठीकमेव, साहचर्य्यात्, "तत्र तस्येव" इति पूर्वसूत्रेण सप्तम्यन्त-षष्ठ्यन्ताभ्यामिवार्थे वतेर्विधानात् । यच्च काशिकायां तदितिद्वितीयासमर्था-दर्हतीत्येतस्मिन्नर्थे वतिप्रत्ययो भवतीति व्याख्यातम्, तत्रार्हतीति तिङन्तानु-रोधेन द्वितीयासमर्थादित्युक्तम् । वस्तुतस्तस्येति षष्ठीसमर्थादर्हमित्यर्थे वतिप्रत्यय इत्येव तत्र व्याख्यानमुचितम् । "धायैरामोदम्" इत्यत्र च प्रकरणादिना भविष्यत्त्वावगमाण्णप्रत्ययाकारेण योगे "अकेनोर्भविष्यदा-धमर्ण्ययोः" इति सूत्रे अकश्च अश्च अकाः, अकाश्च इनश्च अकेनौ, तयोरिति व्युत्पत्त्याकारप्रत्ययस्यापि ग्रहणात्तेन सूत्रेण षष्ठीनिषेधः । अनित्यत्वे सूत्रं

---

१ एकवद्भावस्तु "सर्वो द्वन्द्वो विभाषैकवद्भवति" इत्यनुशासनात् ।

"[1]धायैरामोदमुत्तमम्" इति भट्टिप्रयोगात् "तदर्हम्" इति निर्देशात्। १५५।

**कर्म्मण्येवोभयप्राप्तौ तृतीया कर्त्तरीदृशी।**
**व्यवस्था प्रायिकी तेन क्वचित् षष्ठ्यपि कर्त्तरि॥१५६॥**

प्रमाणयति—**तदर्हमि**ति। "तद्धिते वतिः" इत्यधिकारे "तदर्हम्" इति सूत्रं तमर्हतीत्यर्थे वतिप्रत्ययविधायकम्। तत्रार्हतीत्यर्हे इति कर्त्रर्थकक्रृद्योगे तदिति-द्वितीयान्तनिर्देशोऽनुपपन्न इति स एवास्यानित्यत्व प्रमापयतीत्यर्थः। १५५।

"उभयप्राप्तौ कर्म्मणि" इत्यस्यार्थमाह—**कर्म्मण्येवोभये**ति। पूर्वसूत्रेणैव कर्म्मणि षष्ठ्याः सम्भवे कर्त्तृकर्म्मणोरुभयोरेव षष्ठीप्राप्तौ कर्म्मण्येव षष्ठी, न तु कर्त्तरीति नियमार्थं तत्सूत्रम्। "उभयप्राप्तौ" इत्यनेनैकस्योपादने कर्त्तर्य्यपि षष्ठीति ज्ञापनान्नलस्य पाको भीमस्य पाक इत्यादिप्रयोगाणामुपपत्तिः। गवादिपदासमभिव्याहारे गोपस्य दोह इत्यादिप्रयोगोपीष्ट एवेति बोध्यम्। **तृतीया कर्त्तरी**ति। अनुक्ते कर्त्तरि तृतीयाया विधानाद् भावप्रत्ययान्त-दोहादिपदसमभिव्याहारे कर्त्तुरनभिहितत्वाद**गोपेने**त्यादिकर्त्तृवाचकपदेभ्य-स्तृतीयैव साधुरित्यर्थः। **ईदृशी व्यवस्था** कर्त्तृकर्म्मणोरुभयोः समभिव्याहारे षष्ठीप्राप्तौ कर्म्मणः षष्ठी कर्त्तुस्तृतीयेति व्यवस्थेत्यर्थः। **प्रायिकी** न तु सर्वत्र।

---

१ ननु भट्टिकाव्ये—

"ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम्।
लिम्पैरिव तनोर्वातश्चेतयः स्याज्ज्वलो न कः॥"

इति श्रीरामस्य विरहार्त्तवर्णनरूप श्लोकवाक्यमस्ति। अत्र दुःखस्येति तनोरिति च कर्म्मणि षष्ठी। मादृग्भ्यो दुःख ददैर्ददद्भिः, पुष्पादीनाम् आमोद परिमल धायैः पोषकैः तनोः तनुं शरीरं लिम्पैः लिम्पद्भिः कः चेतयः प्राणी ज्वलः ज्वलन्निव न स्यात्, अपि तु स्यादेवेत्यर्थः। अत्रामोदस्योत्तमस्येति कर्म्मणि षष्ठ्या भाव्यम्, धायशब्दस्य पोषणार्थक-धाञ्धातोः "ददातिदधात्योः" इति णप्रत्ययात्मककृदन्तत्वादिति चेत्? न, उत्तममामोदं पुष्पादीना गृहीत्वा दुःखस्य पोषकैरित्येव गृहीत्वेत्यध्याहृत्य, तद्योगे द्वितीयाया उपपत्त्या कृद्योगषष्ठीविधेरनित्यत्वज्ञापनादिति ध्येयम्।

[1]आश्चर्यो गवां दोहोगोपेनेत्यादौ कर्त्तरि तृतीयावत् षष्ठ्यपि प्रमाणम्, "शब्दानामनुशासनमाचार्य्यस्य" इति निर्देशात्। यत्र [2]पुनरकाकारप्रत्ययान्तो भाववाची स्त्रीप्रत्ययान्तः, तत्र कर्त्तृकर्म्मणोरुभयोः षष्ठ्येव साधुः। भेदिका रुद्रस्य जगतो बिभित्सा वेत्यत्र रुद्रकर्त्तृको जगत्कर्म्मको भेदो भेदाभिलाषश्च वाक्यार्थः।१५६।

**उकारान्ता लडादेशा उकाव्ययखलर्थकाः।**
**षष्ठीविधौ पर्य्युदस्ताः कृत्सु निष्ठा तृनौ तथा ॥१५७॥**

**शब्दानामि**ति। [3]इदञ्चाविशेषेण तत्सूत्रस्य वैभाषिकत्वाभिप्रायेण। "स्त्रीप्रत्यययोरकाराकारयोर्न्नायं नियमः" इति वार्त्तिकानुसारेणाह—**यत्र पुनरि**ति।१५६।

"न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति [4]सूत्रे षष्ठीप्रतिषेधप्रयोजकत्वेनोक्तानाह—**उकारान्ता** इति। क्रमेणादाहरति—**हरिमि**ति। अत्र "सनाशं-

---

१ आश्चर्य्यम् इति मु० पु० पा०।

२ पुनरकाकारकस्य इति मु० पु० पा०।

३ 'शेषे विभाषा" इति वार्त्तिकेन अकाकारप्रत्ययव्यतिरिक्तप्रत्यययोगे 'उभयप्राप्तौ कर्म्मणि" इति नियमस्य यो विकल्पो निर्दिष्टः, स पक्षद्वये। तत्र स्त्रीप्रत्यययोगे सत्येवेति एकः पक्षः, अकाकारभिन्नस्त्रीप्रत्यये अस्त्रीप्रत्यये च कृतिप्रयुज्यमाने उक्तनियमस्य विकल्प इति द्वितीयः। तत्र द्वितीयपक्षमाश्रित्योक्तम्। अतएव शब्दानामनुशासनमाचार्य्येणाचार्य्यस्य वा इत्युभयथापि प्रयोगः। आचार्य्यकर्त्तृकं शब्दकर्म्मकमनुशासनमित्यर्थः। अनुशासनमसाधुभ्यो विवेचनम्।

४ ल, उ, उक, अव्यय, निष्ठा, खलर्थ, तृन्, इत्येतेषां योगे षष्ठी नेत्यर्थके इति यावत्। तत्र उ, उक, इत्यत्र सवर्णदीर्घे सति ऊकेति। ततश्च ल ऊकेत्यत्र "आद्गुणः" इत्यनेन गुणे लोकेति सूत्रे निर्द्देशः। सूत्रे ल इति लडादीनां सामान्येन ग्रहणम्। तेषाञ्च साक्षात्प्रयोगाभावाद् विवरणे तदादेशग्रहणं कृतमिति बोध्यम्।

हरिं [1]दिदृक्षुरलङ्करिष्णुरित्यादावुकारान्ताः, सृष्टिं कुर्वन् कुर्वाण इत्यादौ लादेशाः, शत्रून् [2]घातुक इत्यादावुकः, पाकं कर्त्तुमित्या-

सभिक्ष उः" इत्यनेन सन्नन्तादुप्रत्ययः। अलङ्करिष्णुरिति । करोतेः "अलं-कृञ्..." इत्यादिनेष्णुच्प्रत्ययः। कुर्वन्निति। "लटः शतृशानचौ..." इत्यादिना लटः स्थाने शतृशानचौ। तृच्प्रत्ययघटकतृकारेण तृन्प्रत्ययानुबन्धनकारेण च प्रत्याहारत्वे तदन्तर्गताः शानजादिप्रत्ययास्तृन्नित्यनेन [3]सङ्ग्राह्या इत्याशये-

१ व्यपदेशिवत्त्वेन उकारान्तोय कृत् । तथा च हरिकर्म्मकदर्शनेच्छावा-नित्यर्थो बोध्यः।

२ "आ क्वेस्तच्छीलतद्धर्म्मतत्साधुकारिषु" इत्यधिकारे "लषपतपदस्थाभूवृषहनकम-गमशृभ्य उकञ्" इति सूत्रेण तच्छीलादिषु हन्धातोः कर्त्तरि उकञ्प्रत्ययः, उपधावृद्धिः। "हो हन्तेः" इति हस्य घत्वम्। "हनस्तोचिण्णलोः" इति नकारस्य तकारः। तथा च शत्रुकर्म्मकघातनशीलो घातनधर्म्मा घातनसाधुकारी वेत्यर्थः फलितः।

३ अन्यथा सूत्रघटकतृन्नित्यनेन यदि तृनेव गृह्येत, तदा सोम पवमान इत्यादौ षष्ठीनिषेधाप्रसक्तिः स्यादिति भावः। तृन्नित्यस्य प्रत्याहारवाच्यत्वे "लटः शतृशानचौ" इत्यत्र शत्रादेशस्यैकदेशस्तृशब्दः, तत आरभ्य "तृन्" इति सूत्रस्थनपर्य्यन्तघटकाना ग्रहणे नानुपपत्तिः। "लटः शतृशानचावप्रथमासमानाधिकरणे" "सम्बोधने च" "तौ सत्" "पूङ्यजोश्शानन्" "ताच्छील्यवयोवचनशक्तिषु चानश्" "इङ्धार्य्योश्शत्रकृच्छ्रिणि" "द्विषेऽमित्रे" "सुञो यज्ञसंयोगे" "अर्हः प्रशंसायाम्" "आ क्वेस्तच्छीलतद्धर्म्मतत्साधु-कारिषु" "तृन्" इति सूत्रक्रमः। एवञ्च तृन्प्रत्याहारेण शानन्नादितृन्नन्तानामेव ग्रहणम, न तु शत्रादेशैकदेशस्य तृशब्दस्यापि, तस्य क्वापि पृथक् प्रयोगाभावात्। नापि शानचः, तस्य लादेशत्वादेव सिद्धेः। टीकाकृता तु "ण्वुल्तृचौ" इति सूत्रघटकतृशब्दादारभ्य "तृन्" इति सूत्रघटकनकारपर्य्यन्तस्याश्रयणेन तृन्प्रत्याहारः कृतः। एतन्मते सूत्राणा क्रमवैपर्य्यं प्रतिभाति, "ण्वुल्तृचौ" इत्यस्य तृतीयाध्यायप्रथमपादे पाठः, अन्येषा तद्द्वितीयपादे। प्रदर्शितसूत्रक्रमेण प्रत्याहारस्वीकारे तु सर्वेषामेकक्रमेण पाठान्न स दोष इति स्थितिरत्र बोध्या।

दावव्ययाः, ईषत्करो दुष्करो वा प्रयासो लोकेनेत्यादौ खलर्थाः, ग्रामं गतो घटं कृतवानित्यादौ क्तक्तवतुस्वरूपा निष्ठा, वेदमधीयन् सोमं पवमानः आत्मानं मण्डयमानः कर्त्ता लोकानित्यादौ शतृशानन्-चानश्तृन्प्रत्ययास्तृन्प्रत्याहारवाच्याः, एतेषामन्योन्याभावः [1]षष्ठी-प्रयोजके कृतिविशेषणतयोपतिष्ठते। लक्ष्म्याः [2]कामुक इत्यादौ कमिप्रकृतिकस्योकस्य नित्यम्, मुरं मुरस्य वा द्विषन्नित्यादौ द्विषिप्रकृतिकस्य शतुर्विभाषा षष्ठीनिमित्तता प्रतिप्रसूयते। "इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः।" इत्यत्रेक्ष्वाकूणां सिद्धय इति, "[3]अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्॥" इत्यत्र वागधिपस्य विस्मयमिति च योजना। तेनेक्ष्वाकुभिर्दुरापे वागधिपेन दुर्वचमित्यादिप्रयोगापादनं समाहितम्। १५७।

**भविष्यत्याधमर्ण्ये च नेनः षष्ठी निमित्तता।**
**भविष्यति न चाकस्य कृत्यानां वा तु कर्त्तरि ॥१५८॥**

नाह—**सोममि**ति। अत्र "पूङ्यजोः शानन्" इत्यनेन शानन्प्रत्ययः। **विशेषणतयोपतिष्ठत** इति। निषेधशास्त्रस्य विधिशास्त्रीयोद्देश्यांशे सङ्कोचकत्व-मित्याशयः। **प्रतिप्रसूयत** इति। "कमेरनिषेधः" "द्विषः शतुर्वा" इति वार्त्तिकाभ्यामित्यादिः। **इति च योजने**ति। तथा चेक्ष्वाकुवागधिपयोः खलर्थयोगाभावान्न षष्ठीप्रतिषेधस्तत्रेति भावः। १५७।

---

१ षष्ठीप्रयोजक ० इति मु० पु० पा०।

२ कम धातोः "लषपत..." इत्यादिना तच्छीलादिषु उकञ्प्रत्यये उपधावृद्धौ रूपमिदम्।

३ यदवोचत वीक्ष्य भामिनी परितः स्नेहमयेन चक्षुषा। इति पूर्वार्द्धम्।

**सज्जनं पालकोवतरतीत्यत्रार्थात्पालने भविष्यत्त्वावगमादक-प्रत्ययस्य न षष्ठीनिमित्तत्वम्। व्रजं गामीत्यत्र भविष्यद्व्रजगमन-कर्त्तरि शतं दायीत्यत्र शताधमर्ण्यप्रयुक्तदानकर्त्तरि च विवक्षिते नेन्प्रत्ययस्य तथात्वम्। कृत्यानां तव्यादीनां प्रत्ययानां योगे द्विकर्म्मकधातावनभिहिते कर्त्तरि गौणकर्म्मणि च यथायथं तृतीया-द्वितीये, न तु षष्ठी। गोविन्देन नेतव्या व्रजं गावो न तु गोविन्दस्य**

"[२]अकेनोर्भविष्यदाधमर्ण्ययोः" "कृत्यानां कर्त्तरि वा" इत्याभ्यां षष्ठी-निषेधात्तदर्थमाह—**भविष्यत्त्वे**ति। **अर्थादि**ति। "तुमुन्ण्वुलौ क्रियायाम् क्रियार्थायाम्" इत्यनेन विहितस्य ण्वुलोवतरणप्रयोजकेर्थे विधानात् प्रयोजकस्य प्रयोज्यपूर्वत्वमावश्यकमित्यवतरतीत्यनेन वर्त्तमानावतरणस्य बोधनेन तदुत्तरत्वस्य पालने आवश्यकतया भविष्यदर्थकत्वविरहेपि तत्र पालने भविष्यत्त्वं गम्यत इति भावः। **व्रजं गामी**त्यत्र तु "भविष्यति गम्यादयः" इत्यधिकारे गामीत्यस्य साधुतया तत्र शब्दादेव गमने भविष्यत्त्वं लभ्यते। "तुमुन्ण्वुलौ" इत्यत्रापि "भविष्यति" इत्यस्याधिकारात् तत्रापि शब्दादेव पालने भविष्यत्त्वलाभ [३]इत्यन्ये। **न तु षष्ठी**ति। "कृत्यानाम्" इति योग-विभागेन तत्र "उभयप्राप्तौ" इत्यस्य "न" इत्यस्य चानुवृत्त्या कृत्यानां योगे कर्त्तृकर्म्मणोः षष्ठी [४]नेत्यर्थादित्याशयः। **कर्त्तरी**त्युपादानप्रयोजनमाह—

१ पालनेपि इति मु० पु० पा०।

२ नेति द्वयोरनुवर्त्तते। अकश्च इन् च तयोरिति विग्रहः। भविष्यच्च आधमर्ण्यञ्च तयोरिति द्वन्द्वः। भविष्यति आधमर्ण्ये च वर्त्तमानयोः अकेनोः योगे षष्ठी नेति फलितम्। तत्र आधमर्ण्यांशः अकेन नान्वेति, "आवश्यकाधमर्ण्ययोरिनिः" इत्युक्तेः। अतो भविष्यदंश एवाकेन्वेति। इनेस्तु भविष्यदाधमर्ण्ययोरुभयोरप्यन्वयः सम्भवात्। अतएव "भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च" इत्युक्त सिद्धान्तकौमुद्याम्।

३ अत्रेद चिन्त्यम्। अतीताया वर्त्तमानाया वा क्रियायाः क्रियार्थकत्वासम्भवेन क्रियार्थ-क्रियाया ण्वुलो भविष्यदधिकारे विधानस्य प्रयोजनविरहात् कथ शब्दतो भविष्यत्त्वलाभ इत्यवधेयम्।

४ नेतव्या व्रजं गाव इत्यत्र योगविभागेन तथार्थसत्त्वेपि "गुणकर्म्मणि वेप्यते" इत्यनेन व्रजाद्विकल्पस्तु न भवति, नेताश्वस्य स्रुघ्नस्य स्रुघ्नं वेति उभयप्राप्तिरहिते कृत्यव्य-तिरिक्ते चरितार्थस्य दोग्धव्या गावः पयः कृष्णेन इत्यादौ गौणकर्म्मण उक्तत्वेन प्रधान-कर्म्मणि चरितार्थेनानेन परत्वात् बाधात्। तथा च "उभयप्राप्तौ षष्ठ्याः निषेधो वक्तव्यः" इत्यनुशासनमेव फलतीत्यवधेयम्।

व्रजस्येति। "गेयो माणवकस्साम्नाम्..." इत्यादौ कर्त्तरि कृत्प्रत्यये कर्म्मणि षष्ठ्यवसेया। मम मया वा सेव्यो हरिरित्यत्र कर्त्तरि षष्ठी तृतीया च प्रमाणम्। १५८।

**लिट्कार्य्यकारिणोः षष्ठी किकिनोः प्रतिषिध्यते।**
**प्रतिप्रसूयते तोसुन्कसुनोस्तन्निमित्तता ॥१५९॥**

"आदृगमहनजनः किकिनौ लिट् च" इत्यनुशासनेनादन्तादृदन्ताद् गमिहनिजनिभ्यश्च लिडर्थे किकिनौ विधीयेते, तत्रापि षष्ठीनिषेध', वज्रस्य परोक्षातीतभरणकर्त्तेत्यर्थे वज्रं बभ्रिरिति, तथा जलं पपिः, दण्डं दधिः, ग्रामं जग्मिः, शत्रुं जघ्निरित्यादिप्रयोगात्। वत्सानपाकर्त्तुमित्यर्थे पुरा वत्सानामपाकर्त्तेत्यत्र तोसुन्, क्रूरान् विसर्पितुमित्यर्थे पुरा क्रूरस्य विसृप इत्यत्र कसुन्। एवमव्ययावपि तोसुन्कसुनौ षष्ठ्यपवादकाविति तयोः कृत्त्वेन प्रसक्ताया अव्ययत्वेन प्रतिषिद्धाया षष्ठ्याः प्रतिप्रसवोयम्।१५९।

**गेयो माणवक** इति। **कर्त्तरि कृत्प्रत्यये** इति। "भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा" इति सूत्रेण कर्त्तरि कृत्प्रत्ययान्तस्य गेयशब्दस्य निपातने इत्यर्थः। **षष्ठ्यवसेये**ति। तथा च तत्र कर्म्मणोनभिधानात् सोमपदान्नित्यमेव षष्ठीत्याशयः। **षष्ठी तृतीया चे**ति। 'कर्त्तरि वा" इति योगे "कृत्यानाम्" इत्यस्यानुवृत्तेः कर्म्मणोभिधानात् षष्ठी, पक्षेनुक्ते कर्त्तरि तृतीयेति भावः। १५८।

**लिट्कार्य्यकारिणोरि**ति। **षष्ठीनिषेध** इति। "आदृगम..." इत्याद्यनुशासनेन लिट्कार्य्यद्विर्भावादिनिमित्तं किकिन्प्रत्ययद्वयं विधीयते। अतस्तयोरपि लकारादेशत्वातिदेशात्तद्योगेपि षष्ठी नेत्यर्थः। **प्रतिप्रसूयत** इति। "अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः" इति वार्त्तिकेन षष्ठी विधीयत इत्यर्थः। "आदृगम..." इत्यादिविहितौ किकिनौ छन्दस्येव, भाषायान्तु "धान्वृकृसृगमिजनिनमिभ्यश्च" इति पृथग् विधानात्॥ १५९॥

**शब्दैस्तुलोपमाभिन्नैर्य्योगे सादृश्यवाचिभिः।**
**प्रतियोगिनि षष्ठी च तृतीया चानुशिष्यते ॥१६०॥**

सादृश्यवाचिभिस्तुल्यसदृशादिशब्दैर्य्योगे चन्द्रेण चन्द्रस्य वा सदृश इत्यादौ तृतीया षष्ठी च प्रतियोगित्वमभिधत्ते। चन्द्रस्य [1]तुला चन्द्रस्योपमेत्यत्र षष्ठ्येव प्रमाणम्, न तृतीया। "[2]तुलां यदारोहति [3]दन्तवाससा।" इत्यत्र "स्फुटोपमं भूतिसितेन शम्भुना।" इत्यत्र च सहार्थे तृतीया, "समं चमर्य्येव तुलाभिलाषिणः।" इतिवत्। [4]चन्द्र इव मुखमित्यादाविवादिशब्दयोगे न तृतीया षष्ठी वा, "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इति सूत्रे बहुवचनेनैव कडारा इत्यादाविव [5]तुल्यप्रभृतिलाभेऽर्थग्रहणसामर्थ्येन यथेवादिशब्दानां पर्य्युदाससिद्धेः।

**तृतीया चानुशिष्यत** इति। "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" इति सूत्रेणेत्यर्थः। **प्रतियोगित्वमभिधत्त** इति। तथा चाधेयतया प्रकृत्यर्थेनान्वितस्य तस्य निरूपकतया सदृशपदार्थैकदेशे सादृश्येन्वयाच्चन्द्रनिष्ठप्रतियोगितानिरूपकसादृश्यवानिति वाक्यार्थः। **तुलोपमाभिन्नै**रित्यस्य प्रयोजनमाह—**चन्द्रस्य तुले**ति। **षष्ठ्येवे**ति। शेषषष्ठ्येवेत्यर्थः। यत्र तुलोपमाशब्दयोगे तृतीया दृश्यते, तत्र सहार्थकत्वेन सोपपादनीयेत्याह—**तुलां यदारोहती**ति। नन्विवयथादिशब्दानामपि तुल्यार्थकतया तद्योगेपि तृतीयाषष्ठ्योः साधुत्वं स्यात्। तथा च चन्द्र इवेत्यादीनामनुपपत्तिरापत्तिश्च चन्द्रेणेव चन्द्रस्येवेत्यनयोरित्यत आह—**चन्द्र इवे**ति। **कडारा इत्यादाविवे**ति।

---

१ तुलाम् इति मु० पु० पा०।
२ तुल्याम् इति मु० पु० पा०।
३ वाससा इत्येव पा० मु० मु०।
४ चन्द्र इव मुखम् इत्यत्र चन्द्रवन्मुखम् इति मु० पु० पा०।
५ अपिपदमधिकं ह० मु० पु०।

**वस्तुतोन्योन्याभावार्थकस्य नञः प्रतियोगित्वविशेषादावर्थे [1]पञ्चम्या इव षष्ठ्या अपीवादिनिपातानामपि विभक्तिविशेषनिर्व्य-[2]पेक्षत्वस्वाभाव्यादेवासाधुत्वम् ।**

**यत्तु निपातानां सर्वत्र दर्शनेन्विताभिधानमेव [3]व्याख्यातमिति नञः प्रतियोगित्वसांसर्गिकविषयताकान्योन्याभावादिविषयकबुद्धा-**

"कडाराः कर्म्मधारये" इति सूत्रे यथा प्रभृत्यर्थ(क)शब्दविरहेपि बहुवचनेन कडारप्रभृतीना लाभाद् खञ्जगडुलादिशब्दानामपि कर्म्मधारये पूर्वं प्रयोगः, तथात्रापि बहुवचनेनैव तुल्यप्रभृतिलाभः स्यादिति सदृशादिशब्दयोगेपि तृतीयाषष्ठ्योरुपपत्तावर्थग्रहणमप्रयोजकं सद्यथेवादिशब्दभिन्नतुल्यार्थकशब्दाना योगे एव तृतीया षष्ठी च साधु ज्ञापयति, इतीवयोगे न तयोः साधुत्वमिति भावः ।

इवादिशब्दानां तुल्यार्थकत्वेपि न तुल्यप्रभृतित्वम्, किन्तु सदृशादि-शब्दानामेवेत्यत्र नियामकं तथापि दुर्लभमेव, सादृश्यविशिष्टवाचकानां तथात्वमित्युक्ताविवादिशब्दाना सादृश्यार्थकतया वारणमित्यस्य चन्द्रेण सादृश्यमित्याद्यनुपपत्तेरशक्यपरिहारत्वमित्यत आह—**वस्तुत** इति । **पञ्चम्या इवे**ति । "अन्याराद्तिरर्त्ते..." इत्यादिसूत्रविहितायाः पञ्चम्या घटो नेत्यादाव-प्रसङ्ग इवेत्यर्थः । **विभक्तिविशेषः** षष्ठी तृतीया च ।

**सर्वत्र दर्शन** इति । मीमांसादर्शने प्रभाकरादिभिस्सर्वेषामेव पदानाम-न्विताभिधायकत्वमेव यथोक्तम्, तथेवादिनिपातानामन्विताभिधायकत्वं न्यायादिसर्वदर्शनसिद्धमित्यर्थः । **अन्विताभिधानमि**ति । इतरपदार्थसंसर्ग-विशिष्टस्वार्थाभिधायकत्वमित्यर्थः । तत्रेतरपदार्थस्य घटादेर्घटादिपदादेव लाभात् संसर्गविशिष्ट एव स्वार्थो नञादिबोध्य इत्याशयेनाह—**नञः प्रतियोगित्वे**ति ।

---

१ पञ्चम्या इव षष्ठ्याः इत्यस्य स्थाने पञ्चमीषष्ठ्यादेरिव इति मु० पु० पा० ।
२ ० निर्व्यपेक्षत्वस्वाभाव्यात् इत्येव पा० मु० पु० ।
३ व्याख्यातमिति इत्यत्र व्याग्यम् इति मु० पु० पा० ।

विवेवादिनिपातानामपि [1]प्रतियोगित्वसांसर्गिकविषयतानिरूपित-सादृश्यविषयताविशिष्टबुद्धौ सङ्केतस्य युक्तत्वात्। अतएव केवलादिवादिपदादनन्तरेण मुखादिपदेन तुल्यं मुखमित्यादाविव सादृश्यविशिष्टं मुखं न प्रत्याय्यते, निष्प्रतियोगिकसादृश्यबोधने इवादीनामसामर्थ्यात्। अतएवेवादिपदेन प्रतियोगित्वानुयोगित्वस्वरूपोपमानत्वोपमेयत्वयोः श्रुतिमात्रेणोपगमादिवादिशब्दयोगे श्रौतीमुपमा-

इदञ्च घटो नेत्यादावपि नञैव प्रतियोगित्वस्योक्तत्वान्न तदर्थे पञ्चमीति सूचयितुमुक्तम्। **युक्तत्वादि**ति। अन्यथा चन्द्र इवेत्यादौ षष्ठीतृतीययोर्घटो नेत्यादौ पञ्चम्या दुरुद्धरत्वादित्याशयः। **अतएव** निपातानामितरपदार्थनिष्ठत्वोपलक्षितप्रतियोगित्वसंसर्गकान्वयबोधजनकत्वादेव। **केवलादि**ति। चन्द्रादिपदासमभिव्याहृतादित्यर्थः। **न प्रत्याय्यत** इति। इव मुखमित्यत्र सादृश्यवन्मुखमिति बोधः सर्वानुभवविरोधान्न जायत इत्यर्थः। प्रतियोगिताया नित्यसाकाङ्क्षतया तदन्वयिनश्चन्द्रादेरनुपस्थितेरन्विताभिधाने तत्र तस्योत्पादासम्भवः। सादृश्यमात्रस्य तदर्थत्वे तु तत्रापि तादृशबोधो दुर्वार एव स्यादिति भावः। अत्रार्थे संवादमालङ्कारिकाणामाह—**अतएवे**ति। **श्रौतीमुपमामि**ति। षड्विधपूर्णोपमान्तर्गतां श्रौतीमुपमां यथेवादिशब्दानामुपादाने—

[2]"स्वप्नेपि समरेषु त्वां विजयश्रीर्न मुञ्चति।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा॥"

---

१ स्व० इत्यधिकः पा० मु० पु०।

२ हे राजन् स्वाधीनपतिका स्वाधीनः आकूताज्ञाकारी पतिर्यस्यास्तादृशी नायिका यथा प्रभावप्रभव प्रभावस्य प्रकृष्टानुरागस्य प्रभवमुत्पत्तिहेतु कान्त कमनीय नायकं न मुञ्चति, तथा विजयश्रीः जयलक्ष्मीः प्रभावप्रभव प्रभावस्य प्रभुत्वस्य प्रभवमुत्पत्तिहेतु यद्वा प्रभावात्तपोविशेषात् प्रभव उत्पत्तिर्यस्य तादृशं त्वा समरेषु सङ्ग्रामेषु ( न त्वेकस्मिन्समरे ) स्वप्नेपि स्वप्नावस्थायामपि न मुञ्चतीत्यर्थः। वैरिभिः स्वप्नेपि त्वत्कर्तृकविजयानुभवात् स्वप्नोत्र वैरिणामेवेति बोध्यम्। अत्र स्वाधीनपतिकाशब्देन काचन स्त्री अथवा "सुरताभिर-

[1]"अत्यायतैर्नियमकारिभिरुद्धतानाम् ।
दिव्यैः प्रभाभिरनपायमयैरुपायैः ॥
शौरिर्भुजैरिव चतुर्भिरदः सदा यो—
लक्ष्मीविलासभवनैर्भुवनं बभार ॥..."

---

तैर्बद्धो यस्याः पार्श्वगतः प्रियः । सा मोदगुणसयुक्ता भवेत्स्वाधीनभर्तृका ॥" इति भरतोक्तलक्षणलक्षिता अष्टविधनायिकान्तर्गता विवक्षितेति । तथा च स्वाधीनपतिका उपमान विजयश्रीरुपमेया "न मुञ्चति" इत्यपरित्यागः साधारणो धर्म्मः यथेत्युपमाप्रतिपादकम् । न चैतेषा मध्ये कयोरपि समास इति वाक्यगा श्रौती पूर्णेयमुपमेति बोध्यम् ।

नन्वत्र यथाशब्दस्य स्वाधीनपतिकाशब्देन सह "अव्यय विभक्ति०" इति सूत्रेण यथार्थकत्वात्साद्दश्यार्थकत्वाद्वा समासेनावश्य भवितव्यम् , अव्ययीभावसमासस्य नित्यत्वादिति चेन्न, "यथासाद्दश्ये" इति सूत्रेणासाद्दश्ये एव समासनियमनात्साद्दश्ये समासाप्राप्तेः । तथाहि— योग्यतावीप्सापदार्थानतिवृत्तिसाद्दश्यानीति चत्वारो यथाशब्दार्थाः । तत्र "अव्यय विभक्ति.. " इत्यादिसूत्रेण साद्दश्यार्थकत्वाद्यथार्थकत्वाद्वा साद्दश्येसाद्दश्ये चार्थेव्ययीभावसमासे सिद्धेसाद्दश्ये एवेति नियमार्थं ' यथासाद्दश्ये" इति सूत्रम् । तथा चासाद्दश्ये एव वर्त्तमानो यथाशब्दः समस्यत इति सूत्रार्थः । उदाहरणम्—"यथा हरिस्तथा हरः" इति । अत्र यथाशब्दस्य साद्दश्यार्थकत्वात् हरिशब्देन सह न समासः । योग्यतादिषु त्रिष्वर्थेषु समासो भवत्येव । तत्र योग्यताया यथा— यथाकाल वर्त्तते । कालस्य योग्यमित्यर्थः । वीप्साया यथा-यथोत्तर हेतुता । उत्तरमुत्तर प्रतीत्यर्थः । पदार्थानतिवृत्तौ यथा— यथाशक्ति भुङ्क्ते । शक्तिमनतिक्रम्येत्यर्थः । प्रकृते च यथाशब्दस्य साद्दश्यार्थकत्वान्न समास इत्यवधेयम् ।

१ अत्र भुजैरित्युपमानम् उपायैरित्युपमेयम् अत्यायत्वादिः साधारणो धर्म्मः इवशब्दः उपमाप्रतिपादकः भुजैरिवेत्यत्र "इवेन समासो विभक्त्यलोपश्च" इति वार्त्तिकेन समासपक्षे समासगा श्रौती पूर्णेयमुपमेति बोध्यम् । समासस्य वैकल्पिकतयैच्छिकत्वेन समासाभावे तु वाक्यगैव ।

ननु नेदमुदाहरण समासगाया भवितुमर्हति, समासे कृते "भुजैरिव" इत्यस्यैकपदार्थतया पदार्थैकदेशे भुजे "अत्यायतैः" इत्यादीना विशेषणानामन्वयानुपपत्तेः, "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति न्यायेनैकदेशान्वयस्य निषिद्धत्वात् । भुजेन्वयाभावे तु अत्यायतत्वादीनां धर्म्माणा साधारणत्वाभावेनोपमाया एवानिष्पत्तिप्रसङ्गः

**मुदाहरन्त्यालङ्कारिकाः । प्रतियोगित्वादिसंसृष्टसादृश्यानुभवं प्रतीवादिपदसामर्थ्यावधारणेपि सादृश्यत्वमात्रेण स्मरणन्नानुपपन्नम् । एवञ्च चन्द्र इव चन्द्रो नेत्यादौ संसर्गतया लभ्येर्थे न षष्ठ्यादि, उक्तार्थानामप्रयोगात् । पक्त्वा भुङ्क्ते इत्यादौ भावे क्त्वाप्रत्ययेन संसर्गीभूतसमानकर्त्तृकत्वलाभाच्चैत्रेण पक्त्वा भुङ्क्ते इत्यादयो न प्रयोगा इति ।**

इत्यादौ काव्यप्रकाशकारादय उदाहरन्तीत्यर्थः । नन्वेवमिवादिपदाना प्रतियोगित्वादिवाचकत्वमपि स्यान्नेष्यते च तदित्यत आह--**प्रतियोगित्वादी**ति । अयम्भावः--यथा कार्य्यान्वितस्वार्थे पदानां शक्तिरिति नये कार्य्यत्वविषयतानिरूपितघटादिविषयताशालिशाब्दबोधं प्रत्येव घटादिपदज्ञानस्य कारणत्वेपि घटपदस्य घटत्वमात्रप्रकारकस्मरणजनकतया ज्ञाने पदानां शक्तिस्वीकारेपि तद्विषयतानिष्ठावच्छेदकतायां निरूपितत्वनिष्ठावच्छेदकत्वानिरूपकत्वनिवेशात् कार्य्यतावाचकत्वं घटादिपदाना वार्य्यते, तथात्रापि प्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपितसादृश्यविषयताकान्वयबोधं प्रतीवादिशब्दज्ञानस्य कारणत्वेपि स्मरणनिष्ठजन्यतावच्छेदककुक्षौ निरूपितत्वनिष्ठविषयताया अनिवेशात् केवलसादृश्यत्वेनैव स्मरणं तेभ्यः स्यात् । तथा च तद्वाचकत्वमपीदृशरीत्यैव निर्वक्तव्यम् । अतो नेवादीना प्रतियोगित्वादिवाचकत्वमिति । उक्तार्थानामप्रयोगे दृष्टान्तमाह--**पक्त्वा भुङ्क्त** इति । **भावे क्त्वाप्रत्ययेने**ति । एतत्तत्त्वं प्रागेव निरूपितम् । **न प्रयोगा** इति । तत्रापि समानकर्त्तृकत्वस्य क्त्वाप्रत्ययेन लाभात् कर्त्रर्थे तृतीयाया असाधुत्व-

---

स्यात् । तस्माद्वाक्यगा एवोपमेति चेन्न, पदार्थैकदेशे भुजे विशेषणानामन्वयस्य शाब्दस्या-भावेप्यार्थिकस्य सत्त्वेनादोषत्वात् । यतः उपमेये एव शाब्दो विशेषणानामन्वयः, उपमाने तु आर्थिकोपीति सम्प्रदायः । अतएव

"एतस्मिन्नधिकपयःश्रियं वहन्त्यः सङ्क्षोभ पवनभुवा जवेन नीताः ।
वाल्मीकेररहितरामलक्ष्मणाना साधर्म्यं दधति गिरा महासरस्यः ॥"

इति माघकाव्ये विशेषणानामन्वयस्यार्थिकस्य सत्त्वेऽप्युपमा सङ्गच्छते तस्माद्यथोक्तोदाहरणमेवैतदित्यवधेयम् ।

तच्चिन्त्यम्, समानकर्तृकत्वसांसर्गिकविषयतानिरूपितधातुप्रयोज्य-विषयताविशिष्टानुभवे क्त्वासङ्केतोपगमे चैत्रः पक्त्वा चैत्रेण भुज्यत इति प्रयोगापत्तेः। अन्यलभ्ये संसर्गे घटो न चन्द्र इवेत्यादौ प्रातिपदिकार्थमात्रे प्रथमापत्तेरिति दिक्। १६०।

**आयुष्यमद्रकुशलसुखप्रभृतिभिर्हितैः।**
**योगे चतुर्थी षष्ठी वा तत्राशिष्यनुशिष्यते ॥१६१॥**

[1]आयुष्यं चिरजीवितम्, मद्रममङ्गलनिवृत्तिः, कुशलमनामयम्, सुखमेतदर्थैर्हितशब्देन च योगे तस्मै तस्य वायुष्यं भूयादित्यादावाशीरर्थकलकारयोगे षष्ठी चतुर्थी च साधुः। १६०।

मिति भावः। **इति प्रयोगापत्तेरि**ति। प्रथमायाः कर्तृत्वावाचकतया क्त्वाप्रत्ययेन समानकर्तृकत्वस्य दर्शितदिशैव लाभादित्याशयः। **प्रातिपदिकार्थमात्र** इति। तत्रापि प्रतियोगित्वस्य नञादिनैव लाभात् प्रथमायाः प्रतियोगित्वार्थकत्वं न स्यादिति भावः। १६०।

[2]"चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः" इति सूत्रानुशिष्टा चतुर्थी षष्ठीञ्च निरूपयति—**आयुष्येति**। १६१।

( इति सटीकपदवाक्यरत्नाकरे षष्ठीविवरणम्। )

---

१ आयुष्य चिरजीवितं वा तस्य तस्मै वा भूयादित्यत्र चतुर्थीषष्ठ्योः सम्बन्धोऽर्थः। तस्यायुष्यादावन्वयः लिङर्थ आशंसा। तस्य धात्वर्थे, तस्य चायुष्यादौ कर्तृतयान्वयः। तथा च तत्सम्बन्धिचिरजीवितमाशंसाविषयभवनकर्तृ इत्यन्वयबोधः।

२ सुख स्वतःकाम्यो गुणविशेषः। अर्थः प्रयोजनम्। तच्च प्रवृत्त्युद्देश्यम्। हितं कालान्तरभाविन इष्टस्य साधन तादृशमिष्टसाधनं वा। प्रयोगश्च सुखमानन्दो वा अर्थः प्रयोजनं वा हितं पथ्य वा तस्मै तस्य वा भूयात्। सूत्रे आशिषीत्युपादानात् मार्कण्डेयस्यायुष्यमस्तीत्यादौ न चतुर्थीति ध्येयम्।

## ( अथ कारकसप्तमीविवरणम् । )

**ङ्योस्सुपस्सप्तमी तत्रानुबन्धौ ङिसुपोर्ङपौ ।**
**तत्राधिकरणं सप्तम्यर्थो धात्वर्थसङ्गतम् ॥१६२॥**

अधिकरणमधिकरणत्वमाधेयत्वं वा सप्तम्यर्थः । तच्चाधेयत्वं स्थाल्यामोदनं पचतीत्यादौ कर्म्मघटितसामानाधिकरण्येन फले,

कारिकाया**मधिकरण**मित्यधिकरणत्वाधेयत्वयोरप्युपलक्षकमित्याह—**अधिकरणमि**ति । त्रितयोपादानाभिप्रायो द्वितीयावद्बोध्यः । [1]चरमोक्त एव स्वारस्यादाह—**तच्चे**ति । **धात्वर्थसङ्गतमि**त्यत्र धात्वर्थत्वं फलसाधारणमेवेत्याशयेनाह—**स्थाल्यामोदनमि**ति । **कर्म्मघटिते**ति । स्वाश्रयौदनवृत्तित्वरूपपरम्परयेत्यर्थः । एतच्च "आधारोधिकरणम्" इति सूत्रेण कर्त्तृकर्म्मद्वारा तन्निष्ठक्रियाया आधारस्याधिकरणत्वेन परिभाषितस्यैव "सप्तम्यधिकरणे" इति सूत्रानुशिष्टसप्तम्यर्थत्वमित्याशयेनोक्तम् । तत्र तन्निष्ठक्रियापदेन फलस्यापि ग्रहणात् । नन्वेवं पाकादिफलविक्लित्त्याद्यधिकरणौदनाद्यधिकरणस्थाल्याद्य-

---

१ ननु दर्शिततत्तत्ससर्गावच्छिन्ननानाविधाधेयत्वस्य सप्तम्यर्थत्वे गौरवाद् अधिकरणमेव लाघवात् सप्तम्यर्थो वाच्यः । तस्य स्वनिरूपिततत्तत्ससर्गावच्छिन्नाधेयत्वेन सम्बन्धेन फलव्यापारयोरन्वयाभ्युपगमान्नानुपपत्तिरिति शाब्दिकमतमेव सम्यगिति चेन्न, अधिकरणताविशिष्टस्याधिकरणस्य सप्तम्यर्थत्वे गौरवादाधेयत्वस्य तथात्वे लाघवादित्यादेर्द्वितीयाविवरणे दर्शितत्वात् । नचाधिकरणतात्वस्याखण्डोपाधितया शक्यतावच्छेदकलाघवादधिकरणत्वस्य सप्तम्यर्थत्वमस्त्विति वाच्यम्, परम्परान्वयिनोधिकरणत्वस्यापेक्षया साक्षादन्वयिन आधेयत्वस्यैव तथात्वौचित्यात् । नच नानाससर्गावच्छिन्नत्वस्याधेयत्वे प्रवेशाद्गौरवमिति वाच्यम्, अधिकरणत्वादावपि तुल्यत्वात् । यदि चाधिकरणत्वादेर्नानाससर्गावच्छिन्नाधेयत्वेन सम्बन्धेनान्वय इति मन्यते, तदाधेयत्वमेव सप्तम्यर्थः । तस्य कर्त्तृघटितपरम्परावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेनान्वय इति नानुपपत्तिः । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वमतेधिकरणत्वादेः सप्तम्यर्थत्व न युज्यते, गेहे न पचति पक्ता वेत्यादौ निषेधप्रतीत्यनुपपत्तेरित्यादिकस्य द्वितीयाविवरणे उक्तत्वात्तदभिप्रायेणाह टीकायाम्—चरमोक्तेति ।

गेहे चैत्रः पचतीत्यादौ कर्त्तृघटितसामानाधिकरण्येन व्यापारेन्वेति। "यस्मिन्नग्नौ पचेदन्नं तत्र होमो विधीयते ।..." इत्यादावग्निपदमग्न्यधिष्ठितस्थालीपरम्, तदाधेयत्वं सामानाधिकरण्येन पच्यर्थफलेन्वेति।

भवतु वा परम्परया वह्न्याधेयत्वमेव सप्तम्यर्थः। अतएव तच्छब्देन वह्नेः परामर्शोपि सङ्घटते। मिथिलास्थो राजा पाटलिपुत्रे ब्राह्मणेभ्यो ददातीत्यादौ सप्तम्यर्थो न सम्प्रदानघटितसामानाधिकरण्येन धात्वर्थेन्वेति, किन्तु साक्षादेव ब्राह्मणेषु। एवं गिरौ

धिकरणाग्न्यादीना कथं सप्तम्यन्तत्वं साध्वित्यत आह—**यस्मिन्नग्नावि**ति। **स्थालीपरमि**ति।' एवञ्च दर्शितसम्बन्धेनैव तत्रापि सप्तम्यर्थाधेयत्वस्य फलेन्वय इति भावः।

तात्पर्य्यस्यैव तत्तदाधेयत्वबोधनियामकत्वादतिप्रसङ्गाद्यभावात् स्वाश्रयवृत्त्योदनादिवृत्तित्वस्वरूपस्य सामानाधिकरण्यघटितसामानाधिकरण्यस्य सप्तम्यर्थत्वेपि नानुपपत्तिस्तत्रेत्याशयेनाह—**भवतु वे**ति। एतत्कल्पानुसरणे बीजमाह—**अतएवे**ति। परम्परया वह्न्याद्याधेयत्वस्यापि सप्तम्यर्थत्वादेव। **तच्छब्देन** दर्शितवाक्यस्थ-तत्रेतितच्छब्देनेत्यर्थः। **सङ्घटत** इति। पूर्वकल्पे तु वह्नेर्वृत्तिज्ञानीयमुख्यविशेष्यत्वाभावात्तत्पदेन परामर्शो दुर्घट एव स्यादिति भावः। ननु सम्प्रदानापादानघटितसामानाधिकरण्येनापि सप्तम्यर्थाधेयत्वस्य क्रियायामन्वयदर्शनात् कर्त्तृकर्म्मान्यतरद्वारैव तस्य क्रियान्वयोक्तिरसङ्गतेत्यत आह—**मिथिले**ति। **न धात्वर्थेन्वेती**ति। यथा "कर्म्मवत्कर्म्मणा तुल्यक्रियः" इति सूत्रेण निर्वर्त्त्यविकार्य्ययोरेव कर्म्मणोः कर्म्मवद्भाव आचार्य्यैरतिदिष्टः, तथा कर्त्तृकर्म्मघटितसामानाधिकरण्येन तन्निष्ठक्रियाधिकरणस्य क्रियान्वयोपि तैरतिदिष्ट इति सम्प्रदानादिघटितसामानाधिकरण्येन क्रियाधिकरणस्य तथात्वाननुशासनान्नोक्तस्थले क्रियायां सप्तम्यर्थान्वय इति भावः। तर्हि कुत्र तदन्वय इत्यत आह—**किन्त्वि**ति। तथा च तादृशस्थलीयसप्तम्या अकारकत्व-

वृक्षात्पर्णं पततीत्यत्रापि सप्तम्यर्थो वृक्षेन्वेति, न त्वपादानघटित-परम्परया पतने । यदाहुः—

"कर्त्तृकर्म्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥" इति ।

दैशिककालिकान्यतरसंसर्गावच्छिन्नमधिकरणत्वमाधेयत्वं वा सप्तम्यर्थः । तादृशश्च क्रियाधिकरणत्वं कर्त्तृकर्म्माधिकरण एव स्वीक्रियते, [1]नान्यत्रेत्यपि वदन्ति ।

अत्र च क्वचिदाख्यातोपस्थितकालावच्छिन्नमधिकरणत्वमेव सप्तम्या प्रत्याय्यते, गृहान्निर्गत्याङ्गणे पचमाने चैत्रे गेहे चैत्रः पचतीति न प्रयोगः । क्वचिदन्यकालावच्छिन्नमप्यधिकरणत्वं तथा, यथा—भाविनीं चैत्राधिकरणतामभिसन्धाय ग्रामे गच्छतीति प्रयुञ्जते । आतपे तिष्ठतीत्यादावातपपदं तत्संयुक्तप्रदेशपरमिति सङ्क्षेपः । १६२ ।

मिति भावः । अत्रार्थे प्राचां संवादमाह—**यदाहुरि**ति । **असाक्षादि**ति । परम्परयेत्यर्थः । **क्रियां धारयत्** क्रियाधिकरणम् । **क्रियासिद्धावुपकुर्वदि**ति । क्रियासहकारीत्यर्थः । अधिकरणस्य तत्त्वञ्च निरधिकरणयोः कर्त्तृकर्म्मणोः क्रियासिद्ध्यनुपार्जकत्वादवसेयम् । गगनमस्ति गगनं जानातीत्यादावपि कालाधिकरणस्यैव गगनादेः सत्तादिक्रियाकर्त्तृकर्म्मत्वान्वयित्वमुक्तम्, इदानीं गगनमस्ति इदानीं गगनं जानातीत्याद्याकारिकाया एव प्रतीतेस्तद्वाक्या-ज्जायमानत्वात् ।

**दैशिके**ति । भूतले घटोस्तीत्यादौ प्रथमम् । इदानीं घटोस्तीत्यादौ द्वितीयम् । **कर्त्तृकर्म्माधिकरण एवे**ति । सम्प्रदानादीनां फलव्यापारयोरेक-स्याप्यनधिकरणत्वात् । कर्त्तृव्यापाराधिकरणत्वात् कर्म्मणः फलाधिकरण-त्वादिति भावः । **आतपसंयुक्ते**ति । आतपपदस्य मुख्यार्थकत्वे स्थितिक्रिया-

१ एवम् इत्यधिकः पा० मु० पु० ।

समभिव्याहृता चेत्स्याद्विषयार्थकधातुभिः ।
वैज्ञानिकाधिकरणं तदा निर्वक्ति सप्तमी ॥१६३॥

सविषयार्थकधातुसंवलिता सप्तमी [२]विशेष्यतानिरूपकप्रकारतास्वरूपां वैज्ञानिकीमाधेयतामभिधत्ते । शुक्तौ रजतत्वं जानातीच्छति वेत्यादौ शुक्तिविशेष्यतानिरूपकप्रकारत्वादि रजतत्वात्मककर्म्मघटितपरम्परया ज्ञानादावन्वेति । १६३ ।

दूरान्तिकार्थकाच्छब्दादाधारे सप्तमीविधिः ।
विभक्त्यन्तरतो बाधे प्रतिप्रसवतां गतः ॥१६४॥

"सप्तम्यधिकरणे च" इति सूत्रे चकारेण दूरान्तिकार्थकशब्दादधिकरणे सप्तमीविधिर्यद्यपि नाप्राप्तप्रापकः, तथापि "दूरान्तिकार्थेभ्यो द्वितीया च" इति सूत्रेण प्राप्ताभिर्द्वितीयातृतीयापञ्चमीभिस्सप्तम्या बाधप्रसक्तौ प्रतिप्रसवविकल्पोयम् । तथा च ग्रामाद्दूरं दूरेण दूराद्दूरे वा वनमिति सर्वे प्रयोगास्साधवः । १६४ ।

सप्तमी स्यात्कर्म्मणि वा यदीष्टादिपदादिनिः ।
अन्ये तु नित्यमेवात्र सप्तमीत्याचचक्षिरे ॥१६५॥

इष्टादिगणादुत्पन्नस्य कर्त्तरीनिप्रत्ययस्य योगे कर्म्मणि सप्तम्यन्यतरस्यामनुशिष्यते । तेनाधीती वेदान् वेदेषु वेत्यादौ वेदकर्म्मका-

धिकरणतायाः कर्त्तृद्वाराऽपि तत्राभावात्तत्र सप्तम्यनुपपत्तिरेव स्यादिति भावः । १६२ ।

नाऽप्राप्तप्रापक इति । दूरे वनमित्यादावधिकरणे सामान्यत एव प्राप्तेरिति भावः । १६३ ।

२ विशेष्यनिरूपक० इति मु० पु० पा० ।

**ध्ययनकर्त्तेति बोधः । अत्र मुख्ये कर्म्मण्येव सप्तमी, न तु गौणे । तेन मासमधीतीत्यादयः प्रयोगाः सूपपादाः । १६५ ।**

**कर्त्तेति बोध** इति । [1]एवमिष्टी सुरान् सुरेषु वा परिगणिती याज्ञिके याज्ञिकं वा आम्नाती छन्दसि छन्दो वेत्यादौ यथायथमन्वयो बोध्यः । **प्रयोगाः सूपपादा** इति । तत्र मासपदात् "कालाध्वनोः..." इत्यादिना द्वितीयाविधानात्तदन्तत्वमात्रेण तत्र कर्म्मत्वव्यवहारः न तु निरुक्तं कर्म्मत्वं मुख्यं तस्येति भावः । १६५ ।

( इति सटीकपदवाक्यरत्नाकरे कारकसप्तमीविवरणम् । )

---

१ "इष्टादिभ्यश्च" इति सूत्रेण विहितस्य तद्धितेनिप्रत्ययस्य कर्त्तार्थः । "क्तस्येन्विषयस्य कर्म्मण्युपसङ्ख्यानम्" इति वार्त्तिकविहितायाः सप्तम्याः पक्षे द्वितीयायाश्च कर्म्मत्वमर्थः । तच्च सम्प्रदानत्वरूपम् । धात्वर्थो यजनम् । तथा च सुरसम्प्रदानताकयजनकर्त्त्रन्वयबोधः । एवं याज्ञिककर्म्मताकपरिगणनकर्त्ता, छन्दःकर्म्मताककथनकर्त्तेत्यन्वयबोधः क्रमेण बोध्यः ।

## ( अथाकारकसप्तमीविवरणम् । )

**निमित्तात्कर्म्मसंयोगे या सप्तम्यनुशिष्यते ।**
**चतुर्थ्या इव तादर्थ्यमर्थोस्या इति शाब्दिकाः ॥ १६६ ॥**

"चर्म्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥..."

इत्यादौ सप्तमी चतुर्थीवत्तादर्थ्यमथवा तृतीयावन्निमित्तत्वमभिधत्ते । चर्म्मार्थं द्वीपिहननमिति वाक्यार्थः । सीमाण्डकोशः । पुष्कलको गन्धमृगः ।

"सीमाघाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम् ।
अथ पुष्कलको गन्धमृगे क्षपणकीलयोः ॥"

इति मेदिनी । सीमाघाटः, तज्ज्ञानार्थं पुष्कलकः शङ्कुः, हतो निखात इत्यर्थ इति हरदत्तः । अत्र कर्म्मणा संयोगस्समवायो वा निमित्ते स्वरूपसन्नेव सप्तमी साधुतायां प्रयोजको न शाब्दबोधविषय इति शाब्दिकाः ।

**कर्म्मसंयोग** इति । **कर्म्म** धात्वर्थफलवत् । तेन संयोगः क्वचित्समवायः क्वचित्संयोगः । द्वीपिनः कर्म्मणश्चर्म्मणि समवायात्, कुञ्जरस्य दन्तयोः संयोगात् । **चतुर्थीवदि**ति । मुक्तये हरिं भजतीत्यादाविव निमित्तस्य फलस्वरूपत्वमित्यर्थः । **तृतीयावदि**ति । "हेतौ" इति सूत्रे हेतुपदस्य फलपरत्वेनापि व्याख्यानादध्ययनेन वसतीत्यादितृतीयावदित्यर्थः । **निमित्तत्वमि**ति । प्रयोजकत्वं प्रयोज्यत्वं वेत्यर्थः । प्रथमस्य निरूपितत्वेन द्वितीयस्याधेयत्वेन प्रकृत्यर्थान्वितस्य स्वरूपेण निरूपकतया च धात्वर्थेन्वयो बोध्यः । **न शाब्दबोधविषय** इति । निमित्तत्वमात्रस्यैव तथात्वमिति भावः । **शाब्दिका** इत्यस्वरससूचनाय ।

**कर्म्म क्रिया, तद्योगे तादर्थ्य सप्तम्यभिधत्त इति सूत्रार्थः (वार्त्तिकार्थः)। अतएव "अविद्यारजनीक्षये यदुदेति..." इत्यादौ निमित्तसप्तम्युपपद्यत इत्यपरे। १६६।**

स च चर्म्मणो हननात्प्रागेव सिद्धतया [1]द्वीपिहननफलत्वविरहः। अध्ययनेन वसति यूपाय दार्वित्यादौ वासात्प्रागध्ययनस्य दारुतः प्राग् यूपस्यासिद्धतया वासादिफलकत्वमध्ययनादेरिति।

दार्शनिकमते दर्शितवार्त्तिकार्थमाह—**कर्म्म क्रियेति** । **तद्योगे** क्रियासम्बन्धे निमित्तवाचकात्सप्तमीत्यर्थः। निमित्तन्तु यत्प्राप्तीच्छा-प्रयोज्या यत्प्रयोजिका च क्रिया, तदुभयम्। आद्ये **चर्म्मणी**ति। तत्र सप्तम्याः [2]प्राप्तीच्छैवार्थः। चर्म्मप्राप्तीच्छाप्रयोज्या द्वीपिकर्म्मकहननक्रियेति वाक्यार्थः। अन्त्ये त्वाह—**अतएवे**ति। अनुकूलत्वात्मकतादर्थ्यस्य सप्तम्यर्थत्वादेवेत्यर्थः। **अविद्ये**ति। "विद्या सूर्य्योदयोद्रेकात्" इत्यस्यादिः। **यदुदेतीत्यादावि**ति। "नमस्तस्मै कस्मैचिद्विश्वतस्त्विषे।" इति शेषम्। लक्षणावलीस्थं न्याया-चार्य्यस्येदं पद्यम्। **उपपद्यत** इति। अविद्यारजनीक्षयस्योदयक्रियाप्रयोजक-त्वात्। संयोगादीनां स्वरूपसतां सप्तमीप्रयोजकत्वे तु तदनुपपत्तिरेव स्यादिति भावः। इदमुपलक्षणम्। सहकारित्वं जनकत्वञ्च निमित्तत्वम्। तत्राद्यं यथा— उपरागे स्नानं विवाहे श्राद्धमित्यादौ। तत्र सप्तम्याः स्वजन्येष्टविशेषजनकत्वमर्थः स्नानादावन्वेति। एवं गृहरथादावारे भग्ने इन्द्रबाहुर्बद्धव्य इत्यादौ स्वजन्येष्ट-

१ निमित्तं फलम्, तादृशनिमित्तस्य प्रत्यासत्त्या स्वान्वयिकर्म्मणा कर्त्तुरीप्सिततममेव योग', तथा सति हेतुतृतीयावत् तादर्थ्यचतुर्थीवत् सप्तमी भवतीति शाब्दिकव्याख्यानाभि-प्रायेणेदम्। अतएव सिद्धान्तकौमुद्या "निमित्तमिह फलम्" इत्युक्त भट्टोजिदीक्षितैः। तत्र फलस्यापि हेतुत्वमिष्टसाधनताज्ञानप्रवर्त्तकत्वेन। "योगस्सयोगसमवायात्मकः" इत्यु-क्तया च जन्यजनकत्वादिसम्बन्धव्यावृत्तिर्बोध्या। तथा च "चर्म्मणि द्वीपिनं हन्ति..." इत्यादौ चर्म्मनिमित्तक द्वीपिकर्म्मक हननमित्यादिर्वाक्यार्थः चर्म्मादीना फलत्वञ्च हननादीनां तल्लाभेच्छाधीनत्वादित्यपि बोध्यम्।

२ एतेन द्वीपिन हन्तुर्न चर्म्मप्राप्तिः, किन्तु बलादाहर्त्तुरन्यस्य, तत्रापि कथमयं प्रयोगः स्यादिति शङ्का निराकृतेति ध्येयम्।

जनकत्वमारे इति सप्तम्यर्थे इन्द्रबाहुबन्धनादावन्वेति। द्वितीयं यथा—गोवधे प्रायश्चित्तमित्यादौ। तत्र प्रायश्चित्तशब्दार्थो दुरितनाशकः, सप्तम्या जन्यत्वं प्रायश्चित्तैकदेशेन्वेतीति।

भर्तृहरिस्तु—

"हन्तेः कर्म्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमीम्।
चतुर्थी [3]बाधिकामाहुश्चूर्णिभागुरिवाग्भटाः॥"

इति कारिकया हन्धातोः **कर्म्मणि उपष्टम्भात्** [4]संयोगविशेषाश्रयवाचकात् पदात् **प्राप्तु**मित्यर्थे "क्रियार्थोपपदस्य..." इत्यादिना प्राप्तचतुर्थीबाधिका सप्तमी भवतीत्याह। हन्तेरित्युपादानाच्चर्म्मणे द्वीपिनं बध्नाति हिनस्तीत्यादौ, उपष्टम्भादित्युपादानाद्वित्ताय विप्रं हन्तीत्यादौ चर्म्मादिपदान्न सप्तमी, दन्तकेशत्वगादिष्वेव प्राणिनामुपष्टम्भकसंयोगोपगमाद्वित्तस्य तदनाश्रयत्वात्। अतएव शृङ्गं प्राप्तुमित्यर्थे शृङ्गे हरिणं हन्तीत्यादिको न प्रयोगः, समवायिना समं द्रव्यस्य तदभावात्। प्राप्तुमित्युपादानात् "[1]मुक्ताफलाय हरिणं करिण फलाय..." इत्यादौ न सप्तमी, तत्र मुक्ताफलान्याहर्त्तुमित्यर्थात्। चतुर्थीबाधिकेत्यनेन "क्रियार्थोपपदस्य..." इति सूत्रस्यात्र चारितार्थ्यं सूचितम्।१६६।

---

३ शिलि० इति क्वचित्पाठः।

४ सयोगविशेषश्च "चर्म्मणि द्वीपिनं हन्ति..." इत्यादौ द्वीपिनि हननकर्म्मण्यवयवे आरम्भकसंयोगस्वरूपः। नचात्रयवे द्वीपित्वाभावात्कथमिति वाच्यम्, गोत्वादिवत् द्वीपित्वजातेरप्यवयवावयविवृत्तित्वादवयवस्यापि द्वीपित्ववत्त्वात्। कुञ्जरे हननकर्म्मणि दन्तयोरतिदृढस्वरूप इत्यवधेयम्।

१ सिंहं निहन्ति भुजविक्रमसूचनाय॥
का नीतिरीतिरियती [1]रघुवंशकेतो।
शाखामृगे जरति यस्तव वाणमोक्षः॥ इत्युत्तरम्।

१ रघुवंशवीर! इत्यपि पाठः।

**यत्कर्म्मकर्त्तृको भावः परतन्त्रतया स्थितः ।**
**लक्षकोऽन्यस्य भावस्य ततो भवति सप्तमी ॥१६७॥**

**गोषु दुह्यमानास्वागत इत्यादौ गवादिकर्म्मकदोहनम्,**

"यस्य च भावेन भावलक्षणम्" इति सूत्रानुशिष्टां सप्तमीं निरूपयति--**यत्कर्म्मे**त्यादिना । कर्म्म च कर्त्ता च कर्म्मकर्त्तारौ, यौ कर्म्मकर्त्तारौ यस्येति बहुव्रीहिणा यत्कर्म्मको यत्कर्त्तृकश्च भावः क्रियेत्यर्थो बोध्यः । **परतन्त्रतया** क्रियान्तरविशेषणतया । **स्थितः** प्रयुक्तः । **अन्यस्य भावस्य** यस्मिन् भावे विशेषणीभूतस्तस्य [1]लक्षक इत्यर्थः । **ततः** भाववतः । कालार्थकं **यत्पदं** [2]यद्वाचकपदसमभिव्याहृतकृदन्तपरम् । सप्तम्याः कालवृत्तित्वमर्थः । काले प्रकृत्यर्थस्य गवादेः स्वकर्म्मकदोहनाधिकरणतया दुह्यमानशब्दार्थस्य विद्यमान-दोहनकर्म्मणो गोषु तादात्म्येन सप्तम्यर्थस्य [3]क्रियान्तरे गमनादावन्वयाद् विद्यमानदोहनकर्म्माभिन्नगोनिष्ठकर्म्मताकदोहनाधिकरणं यः कालस्तद्वृत्त्यतीतं

---

१ सूत्रे लक्षणपदं व्यावर्त्तनपरम् । एवञ्च गोषु दुह्यमानासु गत इत्यादौ तादात्म्येन गोविशेषणीभूतकृदन्तार्थे दोहनकर्म्मरूपे विशेषणतापन्नापि दोहनादिक्रिया प्रधानीभूत-गमनादिक्रिया प्रति समानकालीनत्वादिसंसर्गेण विशेषणतामापन्ना व्यावर्त्तिकेति तस्या गमनादिक्रियायाः परम्परया विशेषणत्वरूपमुपलक्षकत्वं बोध्यम् ।

२ कालार्थकेत्यस्यानुपादाने पाचकादिपदस्य कृदन्तत्वात् चैत्रेषु पाचकेषु व्रजतीति प्रयोगापत्तिः स्यात् । निवेशे च कालार्थककृदन्तत्वाभावान्नापत्तिः । एवं कृत्पर्य्यन्तस्यानिवेशे दृष्टचरादिपदस्य कालार्थकप्रत्ययान्तत्वात् मैत्रेषु दृष्टचरेषु पश्यतीति प्रयोगापत्तिः । निवेशे च कालार्थकप्रत्ययान्तस्यापि दृष्टचरादेः तदर्थककृदन्तत्वाभावान्न दोषः । भवति च गोषु दुह्य-मानासु गत इत्यत्रोभयमिति बोध्यम् ।

३ "क्रियान्तरे गमनादावन्वयात्" इत्यस्य कालार्थवाचकपदसमभिव्याहृतकृदन्त प्रकृतिकसप्तम्या भावमात्रसाकाङ्क्षत्वात् क्रियान्तरे गमनादावेवान्वयात्, न तु नामाद्यर्थे, इत्यर्थो बोध्यः । तेन घटादेर्दुह्यमानगवाद्यधिकरणकालवृत्तित्वेपि गोषु दुह्यमानासु घट इत्यादेर्न प्रामाण्यम् ।

**गोष्वायातास्वागत इत्यादौ गवादिकर्त्तृकमागमनादि प्रधानभूतामागमनादिक्रियामुपलक्षयति, कर्म्मकर्त्तृपारतन्त्र्येण भासमाना क्रिया समानकालीनत्वादिसंसर्गेण विशेषणतामापद्यते। क्रियान्तरे सप्तमी तु**

गमनमिति वाक्यार्थे दोहने गवादिकर्म्मताकत्वस्य [४]भानमिति भावः। एवं गोष्वायातास्वागत इत्यादौ सप्तम्यर्थैकदेशे काले स्वकर्त्तृकागमनाशाधिकरणतया गवादीनामन्वयादागमने गोकर्त्तृकत्वलाभो बोध्यः। **आगमना**दीत्यादिना गोष्वागमिष्यन्तीष्वागतः गोषु धोक्ष्यमाणास्वागत इत्यादौ सप्तम्यर्थैकदेशे काले गवादेः स्वकर्त्तृकागमनप्रागभावाधिकरणतया स्वकर्म्मकदोहनप्रागभावाधिकरणतया चान्वयादागमनादौ गोकर्त्तृकत्वादिभानं बोध्यम्। **उपलक्षयती**त्यस्य **विशेषणतामापद्यत** इत्यनेन विवरणं बोध्यम्। तथा च दोहनादिक्रियाया आगमनादिक्रियायामपि समानकालीनत्वेनान्वयः। एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र साक्षादन्वयस्यैव व्युत्पत्तिविरुद्धत्वादिति भावः। अत्र च दोहनादीना विद्यमानत्वादिकं न प्रयोगाधिकरणकालघटितत्वात्मकम्, तथा सत्यागत इति निष्ठार्थातीतत्वस्यानन्वयप्रसङ्गात्, किन्तु क्रियान्तरागमनादिकालवर्त्तमानत्वादिकमेवेति बोध्यम्। **क्रियान्तरे** दोहनादि-

---

४ यत्तु गोषु दुह्यमानास्वागत इत्यादौ गोपदोत्तरसप्तम्याः कर्म्मत्वमर्थः। तच्च दोहनादौ धात्वर्थेऽन्वेति। कृदन्तोत्तरसप्तम्याः कालवृत्तित्वमर्थः। भावविहितशानजादिकृता वर्त्तमानत्वमर्थः। तथा च गोकर्म्मकवर्त्तमानदोहनकालवृत्त्यागमनवानिति वाक्यार्थे दोहने गवादिकर्म्मताकत्वस्य सप्तम्यैव भानमिति। तन्न सुन्दरम्, तथासति आनुभविकस्य तत्र गवादौ दुह्यमानाभेदान्वयबोधस्यापलापप्रसङ्गात्। किञ्च भावशानजादिकृदन्तस्य नपुंसकैकवचनान्तत्वनियमात् गोषु दुह्यमाने समागतः गोषु दुग्धासु समागत इत्यादेरापत्त्यनुपपत्तिप्रसङ्गात्, गोषु यान्तीषु गच्छतीत्यादौ कर्त्तृकृदन्ते एव सप्तमीप्रयोगात् भावे विधानाभावेन सप्तम्याः कर्म्मादिवाचकानुशासनविरहात् सप्तम्या कर्म्मत्वार्थबोधासम्भवाच्चेति बोध्यम्।

**साधुतामात्रार्थेत्येके । कालमात्रं सप्तम्यर्थः । दोहनादिविशिष्टा**

क्रियावाचकदुह्यमानशब्दोत्तरम्। **साधुतामात्रार्थे**ति । अभेदस्य संसर्गतामते विशेषणविभक्तीनां सर्वत्र तथात्वमेवोपेयत इति भावः । एवं ' नष्टेषु धार्त्तराष्ट्रेषु द्रौणिः सुप्तान् जघान ह ।'' "भुक्तवत्सु च विप्रेषु पिण्डान् दर्भेषु निर्वपेत् ।..." इत्यादौ सप्तम्यर्थैकदेशे काले स्वकर्तृकनाशाधिकरणतया स्वकर्तृकभोजननाशाधिकरणतया च प्रकृत्यर्थस्य धार्त्तराष्ट्रादेरन्वयः । निष्ठार्थातीतत्वञ्च विद्यमाननाशप्रतियोगिकालवृत्तित्वात्मकं नाशे, स्वनाशसमानकालिकतया निर्वापे तस्यान्वयः, [1]विशिष्टान्वयबलात् । क्वचित्समानकालिकतया स्वनाशकालिकतया च क्रिययोरन्वये प्रयोज्यप्रयोजकभावेनाप्यन्वयः । यथा—"[2]पठत्सु तेषु प्रतिभूपतीनलं विनिद्ररोमाजनि शृण्वती नलम् ।।..." इत्यादौ प्रतिभूपतिपाठनलश्रवणयोः, यथा वा—"गोविन्दे मथुरां याते व्यथन्ते गोपयोषितः ।... इत्यादौ गोविन्दगमनस्य गोपीव्यथायाम् । एवं सूत्रे "भावलक्षणम्" इत्यत्र भावः स्वरूपम् । तथा च स्वरूपस्य लक्षणं विशिष्टतया ज्ञापन-मिति (मित्यपि) सूत्रार्थः । तेन गुणान्यत्वे सति सत्त्वादित्यादौ न सप्तम्यनुपपत्तिः, गुणान्यत्वसामानाधिकरण्येन विशेषणेन सत्ताया विशिष्टतया ज्ञापनात् । अत्र शत्रन्तासुधात्वर्थवर्त्तमानकालवृत्तिसत्ताविशिष्टस्य तादात्म्येन गुणादावन्वयाद् गुणान्यत्वादिशब्दोत्तरसप्तम्या अधिकरणवृत्तित्वमेवार्थः, न तु कालवृत्तित्वम्, वर्त्तमानकालवृत्तिसत्त्वविशिष्टस्य तादात्म्यान्वयबलादेव गुणान्यत्वादिकालवृत्तित्वस्यार्थत एव लाभात् । तच्च सत्तायामन्वेति । सतीत्यस्योपादानमधिकरणवृत्तित्वस्य सप्तम्यर्थत्वलाभायैव, न तु तदर्थस्य हेतुतावच्छेदकेनुप्रवेशः, सामानाधिकरण्येन गुणान्यत्वविशिष्टसत्तात्वस्यैव तथात्वात् । **कालमात्रमि**ति । मात्रपदेन

---

१ तथा च विद्यमाननाशप्रतियोगिकालवृत्तिनाशप्रतियोग्यभिन्नानां धार्त्तराष्ट्राणां स्वकर्तृकनाशाधिकरण यः कालस्तद्वृत्तिसुप्तकर्म्मकं यदतीतं हननं तत्कर्त्ता द्रौणिः, विद्यमाननाशप्रतियोगिकालवृत्तिभोजनकर्त्रभिन्नाना विप्राणा स्वकर्तृकभोजननाशाधिकरणं यः कालस्तद्वृत्तिपिण्डकर्म्मकदर्भाधिकरणकनिर्वाप इष्टसाधनञ्चेति क्रमेणार्थो बोध्यः । अत्र च द्वितीये बोधे निर्वापे भोजननाशसमानकालिकत्वस्यापि फलतः भानमित्यवधेयम् ।

२ उपासनामेत्य पितुः स्म रज्यते दिने दिने सावसरेषु वन्दिनाम् । इति पूर्वार्द्धम् ।

गौर्दोहनाधिकरणताव्याप्यया विशिष्टाधिकरणतयान्वेति । १६७ ।

इति पदवाक्यरत्नाकरेकारकसप्तमीविवरणम् ।

इति महामहोपाध्यायश्रीगोकुलनाथोपाध्यायप्रणीतः

पदवाक्यरत्नाकरस्समाप्तः ।

॥ शुभं भूयात् ॥

वृत्तित्वस्य तत्ताव्यवच्छेदः, तस्य संसर्गमर्य्यादयैव लाभात् । **विशिष्टाधिकरणतये**ति । संसर्गमर्य्यादालभ्ययेत्यादिः । १६७ ।

इति श्रीयदुनाथमिश्रविरचिता गूढार्थदीपिकाभिधा

पदवाक्यरत्नाकरटीका समाप्ता ॥



# सटीकटिप्पणपदवाक्यरत्नाकरस्थविषयाणाम-
# कारादिक्रमेण सूची ।

अ०


१—अकर्म्मकत्वसकर्म्मकत्वयोः
द्वितीयासाकाङ्क्षत्वनिराकाङ्क्षत्वप्रयोज्यत्वम्—( वि० टी० )—पृ०—६११—६१२ ।

२—अकर्म्मकत्वस्य
पारिभाषितत्वम्—( वि० टी० )—पृ०—५९५—५९६ ।

३—अकर्म्मकधातूनाम्
आधेयताप्रयोजकव्यापारस्तत्समभिव्याहृतद्वितीयायाश्च निरूपितत्वमर्थः केचित्तुसम्मतः—( वि० टी० )—पृ०—६०९—६१० ।

४—अकर्म्मकधातूनाम्
व्यापारमात्रं तत्समभिव्याहृतद्वितीयायाश्चाधेयत्वादिकमर्थोपरेतु-सम्मतः—( वि० टी० )—पृ०—६१० ।

५—अकारकद्वितीयार्थस्य
नामार्थान्वयित्वम् ( वि० )—पृ०—६२३ ।

६—अकेनोः
षष्ठीनिमित्तत्वाभावः—( वि० टी० टि० )—पृ०—८१८—८१९ ।

७—अक्षिपदस्य
गोलकपरत्वम्—( वि० )—पृ०—६७६ ।

८—अखण्डस्फोटस्य
नैयायिकमते अवाचकत्वेनातिरिक्तत्वाभावः—( टी० )—पृ०—४०१—४०४ ।

९—अखण्डस्फोटस्य
नैयायिकासिद्धत्वम्—( वि० टी० )—पृ०—३९९ ।

१०—अखण्डस्फोटस्य
शाब्दिकमतेतिरिक्तत्वम्—( वि० टी० )—पृ०—३९९—४०० ।

११—अखण्डस्फोटस्य
शाब्दिकमते पदत्वादिजातिरूपत्वं ब्रह्मात्मकत्वं घटत्वादिजातिरूपत्वञ्च—( वि० )—पृ०—३८९—३९९ ।

१२—अखण्डोपाधित्वस्य
भावत्वादिघटितत्वम्—( टि० )—पृ०—२८२ ।

१३—अखिलशब्दस्य
यावत्त्वविशेषाश्रयोर्थः—( टी० )-पृ०-७ ।

१४—अङ्गुल्याद्यभिनयानाम्
अर्थबोधकत्वम्—( वि० टी० )-पृ०-५८ ।

१५—अचेतनस्य
चेतनतादात्म्यारोपात् सम्बोध्यत्वम्—( वि० टी० टि० )—पृ०-४५३-४५५ ।

१६—अचेतनस्य
ज्ञानसमवायित्वविरहेण सम्बोध्यत्वाभावः—( वि० )-पृ०-४५१ ।

१७—अचेतनस्य
देवतात्वं मीमांसकाभिप्रेतम्—( वि० टी० )-पृ०-७२९-७३१ ।

१८—अचेतनस्य
विसंवादिनीच्छया सम्बोध्यत्वम्—( टी० )-पृ०-४५५ ।

१९—अचेतनस्य
सम्बोध्यत्वं युक्तियुक्तम्—( वि० टी० टि० )-पृ०-४५२-४५३ ।

२०—अज्ञातज्ञापकस्य
पञ्चमीसम्बद्धत्वमसार्वत्रिकम्—( वि० टी० )-पृ०-७८२-७८३ ।

२१—अतसर्थप्रत्ययस्य
षष्ठीनिमित्तत्वं षष्ठ्याश्चाबाधितत्वमर्थः—( वि० टी० टि० )-पृ०-८०५ ।

२२—अद्रव्यपरस्तोकादेः
पञ्चमीनिमित्तत्वम्—( वि० टी० )-पृ०-७९० ।

२३—अधःपदस्य
विशिष्टापरत्वं तदधिकरणदेशो वा तन्निमित्तद्वितीयायाश्च निरूपकत्वमर्थः—( वि० )-पृ०-६२५-६२६ ।

२४—अधिकरणत्वस्य
द्वितीयापदप्रवृत्तिनिमित्तत्वाभावः—( वि० टी० )-पृ०-५३९ ।

२५—अधिकरणत्वस्य
द्वितीयावाच्यत्वं तार्किकसिद्धं—( वि० टी० )-पृ०-५४२ ।

२६—अधिकरणत्वस्य
शाब्दिकमते द्वितीयापदप्रवृत्तिनिमित्तत्वम्—( वि० टी० )-पृ०-५००-५०२।

२७—अधिकरणत्वस्य
स्वरूपतो भानाभावः—( वि० )-पृ०-५३९।

२८—अधिकरणत्वादेः
मासादिपदोत्तरद्वितीयार्थत्वम्—( वि० )-पृ०-६३३-६३६।

२९—अधिकरणवृत्तित्वस्य
सप्तम्यर्थत्वम्—( टी० )-पृ०-१७४-१७५।

३०—अधिकरणस्य
द्वितीयावाच्यत्वं यत्नुमतसिद्धम्—( वि० )-पृ०-५४१-५४२।

३१—अधिकरणस्य
शाब्दिकसिद्धद्वितीयार्थत्वम्—( वि० )-पृ०-४९४।

३२—अधिपूर्वकस्येकः
स्मरणमर्थः—( टी० )-पृ०-७९८।

३३—अधिशब्दस्य
आधेयत्वं तन्निमित्तद्वितीयायाश्च निरूपकत्वमर्थः—( वि० )-पृ०-६२६।

३४—अधीङः
उच्चारणानन्तरितमुच्चारणं तत्समभिव्याहृतपञ्चम्याश्च कर्तृत्वमर्थः—( वि० )-पृ०-७७१।

३५—अनभिहिताधिकारस्य
"उक्तार्थानामप्रयोगः" इति न्यायानुवादकत्वम्—( वि० टी० )-पृ०-६१३।

३६—अनादिनिधनशब्दस्य
नित्यत्वमर्थस्तस्यान्वयश्च—( टी० )-पृ०-३।

३७—अनुकार्य्यानुकरणयोः
भेदोभेदश्च—( वि० टी० )-पृ०-१४७-१५२।

३८—अनुबन्धचतुष्टयस्य
श्रोतृप्रवृत्तिकारणत्वम्—( टी० )-पृ०-१।

